सरस्वतीभवन-ग्रन्थमाला

[ ९१ ]

भर्तृहरिप्रणीतं

# वाक्यपदीयम्

[ वृत्तिसमुद्देशः ]

हेलाराजविरचितया

प्रकाशव्याख्यया

श्रीरघुनाथशर्मविरचितया

अम्बाकर्त्रीव्याख्यया च

संवलितम्




सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः

# SARASVATĪ BHAVANA GRANTHAMĀLĀ

( *Vol. 91* )

**Chief Editor**

**DR. BHĀGĪRATHA PRASĀDA TRIPĀṬHĪ 'VĀGĪŚA ŚĀSTRĪ'**

**Director, Research Institute**

**Sampurnanand Sanskrit Vishvavidyalaya,**

**Varanasi**




# VĀKYAPADĪYAM

[ *Part III* ]

( Padakāṇḍa )

( Vṛttisamuddeśa )

With the commentary

'*Prakāśa*'

by

Helārāja

&

AMBĀKARTRĪ

*By*

Pt. RAGHUNĀTHA ŚARMĀ

VARANASI

1977

सरस्वतीभवन-ग्रन्थमाला

( ९१ )

मुख्यसम्पादकः

डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'

अनुसन्धानसंस्थाननिदेशकः

सम्पूर्णानन्दसंस्कृतविश्वविद्यालये




भर्तृहरिप्रणीतं

# वाक्यपदीयम्

[ तृतीयकाण्डम् ]

( वृत्तिसमुद्देशात्मकम् )

## हेलाराजविरचितया

प्रकाशव्याख्यया

श्रीरघुनाथशर्मणा

विरचितया

## अम्बाकर्त्रीव्याख्यया

समलङ्कृतम्

वाराणस्याम्

२०३४ तमे वैक्रमाब्दे 		१८९९ तमे शकाब्दे 		१९७७ तमे खैस्ताब्दे

प्रकाशक :—
निदेशकः,
अनुसन्धानसंस्थानस्य
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी.

प्राप्तिस्थानम्—
प्रकाशनविभागः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः,
वाराणसी—२२१००२.

प्रथमसंस्करणम् : ११०० प्रतिरूपाणि
मूल्यम् : ६५·५० रूप्यकाणि

मुद्रकः
गौरीशङ्कर प्रेस
मध्यमेश्वरः, वाराणसी—१.

# प्रास्ताविकम्

जातिद्रव्यसम्बन्धेति समुद्देशत्रयात्मको वाक्यपदीयतृतीयकाण्डस्य प्रथमो भागः प्रकाशाम्बा-कर्त्रीविराजितः प्रकाशितो वाराणसेयसंस्कृतविश्वविद्यालयेन १९७४ तमे ख्रीस्ताब्दे । इदानीं तावद् वृत्तिसमुद्देशात्मकोऽयं तदीयस्तृतीयो भागश्चकास्ति व्याकरणदर्शनजिज्ञासुजनमनोमोदकरः । कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपा पञ्चप्रकारवृत्तिः प्रक्रियादृशा दर्शनरूपतया च महद् वैशिष्ट्यमातनोतीति विदन्ति विदितवेदितव्याः । अष्टाध्याय्यां कृत्तद्धितसमासादिविषयान् समाश्रित्य महामुनिना पाणिनिना संदृब्धानि विषयान्तरापेक्षया भूयांसि सूत्राणि । तादृशो वृत्ति-समुद्देशो दार्शनिकशिरोमणिना भर्तृहरिणापि समुद्देशान्तरापेक्षया भूरिकारिकान्तर्गर्भीकृतः पृथुलतामानीतश्चेत् किमत्र चित्रम् । सोऽयं चतुर्विंशत्युत्तरषट्शतसंख्याकाभिः कारिकाभिः पल्लवितो महाविदुषा तेन ।

महाभाष्याब्धिमन्थनरूपस्यास्यातिगभीरत्वाद् यद्यपि भूतिराजतनयहेलाराजेनेह प्रकाशो विस्तारितः, तथापि भूयांसः पदार्था अप्रकाशिता एवावस्थिताः । अम्बाकर्त्र्यां ग्रन्थग्रन्थिस्फोरण-निपुणायां विशदं ते व्याख्याताः पर्यालोचिताश्च । षोडशकारिकाव्याख्यानावसरे 'यदि त्विदं ज्ञानं विपर्ययः स्यात्, तदाऽस्य विकल्पप्रत्ययस्यापि बाधः स्यात्' इत्याख्याय निराकृतमम्बाकर्त्र्यां प्रकारान्तरेण प्रकाशमतम् । 'यत्तु गतादिस्था-इत्यादिपदेन ग्रामं गच्छतीति निर्दर्शितं हेलाराजेन, तन्न सम्यक् प्रतिभाति' इत्यभिधाय सूचिताऽर्थचिरम्बाकर्त्र्यां षट्षष्टितमकारिकायाः । अत्रैवाग्रे 'एतत् सर्वं वैयाकरणनयविपरीतम्, उदाहृतयास्कवचनविरुद्धं च' इति प्रकाशनिराकरणे स्वकीयो निर्णयस्तत्राविर्भावितोऽम्बाकर्त्र्यामम्बाकर्त्रीकारेण ।

'तद्धितो योगभेदेन' ( ८५ ) इति कारिकायां 'योगभेदेन' इत्यस्यार्थो निरूपितो योग-विभागेनेति प्रकाशे हेलाराजेन 'तदस्य परिमाणम्' ( पा० ५।१।५७ ) इति सूत्रमुपस्थापयता । अम्बाकर्त्र्यां तु 'तदस्य परिमाणम्' इत्यस्य 'सूत्रस्य प्रास्थिकशब्दसाधकस्यैकयोगत्वं प्रतिपाद्य तदर्थस्यापेशलत्वं प्रकटितम्' पुनश्च तस्य कथञ्चित् समाधेयताऽपि प्रदर्शिता । 'तद्भावाभ्युच्चये सति' ( ८८ ) इति कारिकायाः 'अभ्युच्चये' इत्यस्यार्थः कृतो हेलाराजेन 'अतिरेके' इति । तस्य शब्दाद् बहिर्भूतत्वमास्थाय साधिकारं हेयत्वमुक्तमम्बाकर्त्र्याम् ।

यत्र क्वचिदम्बाकर्त्र्यां हेलाराजेन सह मतभेद उपस्थाप्यते, तत्र स्वकीयमतमुपस्थाप्य 'हेलाराजस्तु' इत्युक्त्या तन्मतमुपबृंहणपूर्वकं विशदीक्रियते । 'आहुः परार्थवचने' ( ९४ ) इति कारिकायां परार्थशब्दव्याख्याने तद् द्रष्टव्यम् ।

'लुक्तद्धितलुकीति स्यात्' ( १८२ ) इति कारिकाव्याख्यानप्रसङ्गे हेलाराजोक्तस्य संस्त्यानलक्षणधर्ममात्रवचनस्य स्त्रीप्रत्ययान्तस्यासमीचीनत्वमाख्यातमम्बाकर्त्र्यामग्रिमतदीयग्रन्थ-विरोधरूपहेतुदर्शनपूर्वकम् । 'वर्तते गृहतुल्ये च प्रासादे मधुरा श्रुतिः' ( ५३० ) इति कारिका-

व्याख्यानप्रसङ्गे हेलाराजो निपुणं पर्यालोचितोऽम्बाकर्त्र्याम् । पर्यन्ते हेलाराजव्याख्यानस्यायुक्तत्वं प्रतिपादितम् । तदग्रवर्तिनि हेलाराजीये व्याख्यानेऽपि 'अत्रापि न मे मनसः सन्तोषः' इत्यभिहितम् । इत्थमम्बाकर्त्रीकारेण हेलाराजीयं व्याख्यानं समाश्रित्यापि तदालोचनपूर्वकं विचारसरणिरग्रेसारिता ।

अम्बाकर्त्र्यां दृश्यते महती सूक्ष्मेक्षिका । 'निमित्तानुविधायित्वात्' ( १५३ ) इत्यत्राव-तरणिकायां 'तथाहि' इत्युक्त्वा प्रकाशकारेण कारिकाया अस्याः सम्बन्धोऽव्यवहितपूर्ववर्तिन्या सह दर्शितः । अम्बाकर्त्र्यां पूर्वपद्योक्तार्थस्योपपादनाभावात् तस्यायुक्तत्वं साधितम् । एवमेव 'समासे श्रूयते स्वार्थः' ( ३१२ ) इत्यत्रावतरणिकायां 'तथाहि' इत्यस्यासङ्गतिकरत्वमभिहित-मम्बाकर्त्र्याम् । हेतुश्च समुपस्थापितः पक्षद्वयोपपाद्यार्थाद्योतकत्वरूपः ।

व्याकरणन्यायादिविषयग्रन्थेष्विवेहापि वाक्यपदीये दृश्यन्ते भूरिपाठभेदाः । अम्बाकर्त्र्यां तेषां निर्णयो यथास्थानं विहितः । 'संसर्ग ( गि ) रूपम्' ( ९९ ) इति कारिकायां पाठभेदो लभ्यते । अम्बाकर्त्रीकारेण तत्रैव कोष्ठके निर्णीतः पाठो निर्दिष्टः । 'तुल्यरूपं यथाख्यातम्' ( २९९ ) इत्यत्र मूले हेलाराजीये च व्याख्याने कङ्कटखर्जूरशब्दयोः सन्ति पाठभेदाः । एवमेव 'शास्त्री तत्र प्रवर्तते' ( ३६५ ); 'अन्या श्यामा तु तद्रूपा' ( ३८१ ), 'जातिभेदेऽपि पाकेन' ( ४४२ ) इत्यादिषु कारिकासु पाठभेदनिर्णयोऽनुष्ठितोऽम्बाकर्त्र्यां साधीयः । तत्र 'प्रसक्तानु-प्रसक्तस्तु' ( ५७८ ) इति कारिकायां 'पाठक्रमादर्थक्रमो बलीयान्' इति मीमांसानिर्धारित-न्यायमाश्रित्य कारिकाया उत्तरार्द्धं प्राक् पठनीयम्, पूर्वार्द्धं तु पश्चात्' इति पादव्यत्ययं प्रति साधीयो दृष्टिराकृष्टा सुधियामम्बाकर्त्रीकारैः । वाक्यपदीये सर्वत्र पाठभेदनिर्णयज्ञानाय तदीयः 'वाक्यपदीयपाठभेदनिर्णयः' इत्याख्यो ग्रन्थोऽचिरादेवाञ्चिरदमेष्यन् भृशमुपकारकः सेत्स्यति जिज्ञासूनाम् ।

आकरग्रन्थस्थलनिर्देशेन परिशिष्टादिसंयोजनेन च ग्रन्थसम्पादनसाहाय्येऽनुसन्धानसहाय-केष्वन्यतमस्य पण्डितश्रीरामगोविन्दशुक्लस्य प्रशंसनीययोगात् ग्रन्थरत्नमिदमतीवोपयोगि संवृत्तम् । सर्वतन्त्रस्वतन्त्राणां पण्डितप्रवराणां श्रीमद्रघुनाथशर्ममहोदयानामेतादृशमिदं सर्वव्याख्यातिशायि व्याख्यानं समेषां लब्धवर्णानां जिज्ञासूनां चोपकारको भविष्यतीति ध्रुवं विश्वसिति ।

संस्कृतदिवसे
२०३४ वै०
(२८-८-७७ खी०)

भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'
निदेशकः
अनुसन्धानसंस्थानस्य

# उपोद्घातरूपं किञ्चित्

१. अहो महत् सौभाग्यमिदं विद्यार्थिनां कृतविद्यानां च यद् विद्वन्मूर्धन्यरघुनाथशर्म-विरचिता हेलाराजकृतप्रकाशालङ्कृतवाक्यपदीयतृतीयकाण्डान्तर्गतवृत्तिसमुद्देशगताम्बाकर्त्रीनाम्नी व्याख्या सर्वैः सोत्कण्ठं चिरप्रतीक्षिताधुना प्रकाशं नीयत इति। महावैयाकरणेन तत्रभवता भर्तृहरिणा ब्रह्मकाण्ड-वाक्यकाण्ड-पदकाण्डेति काण्डत्रयात्मिका वाक्यपदीयापरनामधेया त्रिकाण्डी विरचितेति जानन्त्येव पाठकमहाभागाः। तत्र पदकाण्डस्य तृतीयस्य महत्त्वं—

"काण्डे तृतीये न्यक्षेण भविष्यति विचारणेति"

कथितवता तत्रभवता भर्तृहरिणा स्वयमेव प्रोद्घोषितं दृश्यते। तत्र च जातिद्रव्य-संबन्धगुणदिक्साधनक्रियाकालोपग्रहलिङ्गादीनां पदाश्रितानामर्थानां स्वरूपनिरूपणं कृतं दृश्यते। ब्रह्मकाण्डवाक्यकाण्डगताम्बाकर्त्र्योर्ये गुणा मया स्वोपोद्घाते पूर्वं वर्णितास्ते सर्वे पदकाण्डगताम्बाकर्त्र्यामपि सम्पूर्णया मात्रया दृश्यन्त इति ध्यानपूर्वकं पठतो विदुषः स्पष्टं भविष्यतीत्यत्रास्य जनस्य नास्ति सन्देहलेशोऽपि।

२. अम्बाकर्त्र्यां न केवलं वाक्यपदीयगतकारिकार्थो विशदं व्याख्यातः प्रकाशोऽपि हेलाराजकृतो यथायोगं स्पष्टीकृत इति विदुषां महानुपकारः कृतो व्याख्यातृवर्यैः। चतुर्दश-समुद्देशघटितं वाक्यपदीयतृतीयकाण्डमिति जानन्त्येव पाठकमहाभागाः। तेषु वृत्तिसमुद्देश एव परिमाणतो विपुलतम इत्यपि सुप्रसिद्धम्। तत्रासमस्तपदगतानर्थान् विचार्य समस्तपदविषयान् विचारयितुं पञ्चप्रकार-वृत्तिपदविचारः कृतो दृश्यते। तत्र च बहव उपविषयाः प्रसक्तानुप्रसक्ततया विचारणीया भवन्तीति समुद्देशस्यास्य कलेवरमितरापेक्षया वैपुल्यं प्राप्तमित्याश्चर्यकरं किञ्चिन्नास्ति। अत्र निरूपितानां सर्वेषां मुख्यविषयाणामुपविषयाणां चात्र निर्देशो दुष्कर इत्युदाहरणरूपेण केषाञ्चिद् विषयाणां निर्देशः क्रियते येषामम्बाकर्त्र्यां महता वैशद्येन वैदुष्येण च स्वरूपनिरूपणं कृतं दृश्यते। प्रथमं समानाधिकरणवृत्तिविचारः कृतः। ततो द्वन्द्वैकशेष-वृत्तिविचारः। तत्प्रसङ्गेन सह विवक्षास्वरूपनिरूपणं कृतम्। समाहारेतरेतरद्वन्द्वयोर्भेदो वैशद्येन प्रदर्शितम्। युगपदधिकरणवचनताया द्वन्द्ववृत्तिवैशिष्ट्यभूतायाः स्वरूपनिरूपणं महता वैशद्येन प्रदर्शितः। भाष्यकारमतेन च सा दुःखा दुरुपपादा चेति निर्दिष्टम्। 'समर्थः पदविधिः' इत्यत्र सामर्थ्यमविशेषेणोक्तमपि लक्ष्यज्ञैर्वस्तावेकार्थीभावो वाक्ये व्यपेक्षेति विभागः कृतः। वृत्तिविचार-प्रसङ्गेन जहत्स्वार्थाजहत्स्वार्थापक्षद्वयभेदः सोदाहरणं विशदीकृतः। वृत्तावुपसर्जनपदार्थस्य संख्यामधिकृत्य विचारे प्रवृत्ते उपसर्जनार्थो निवृत्तसंख्याभेद इत्येकीयं मतमन्ये तु तत्राभेदैकत्व-संख्यां मन्यन्त इति प्रतिपाद्याभेदैकत्वसंख्यां तत्रभवद्भर्तृहर्युक्तमधुदृष्टान्तेन सर्वसंख्याविशेषा-विभागापन्नां विदुरिति समर्थितम्। इहान्यपदार्थे बहुव्रीहिरन्वाख्यायते, ततश्च तेनैवान्यपदार्थ-स्योक्तत्वादभिधायिनश्चैत्रादेः प्रयोगो न प्राप्नोति। संबन्धसामान्ये बहुव्रीहिरिति तद्विशेषप्रति-पत्तिरतो न भवति। एवं चित्रगुश्चैत्रो मैत्रो वेति प्रयोगो विशेषप्रतिपत्तये न्याय्याः। चित्रगावो

यस्येति स्वामिमात्रस्य प्रतीतेः। यत्र वज्रपाणिरित्यादौ शब्दशक्तिस्वभावाद् बहुव्रीहिणैव विशेषोऽङ्गीकृतस्तत्र तदभिधायी न प्रयुज्यते वज्रपाण्यादिपदानां योगरूढत्वेन रूढ्यैव विशेषार्थ-प्रतिपादनात्। बहुव्रीहौ क्रियायोगोपपादनम्। बहुव्रीहौ द्रव्याभिधानपक्षो विभक्त्यर्थाभिधानपक्षो वेति विचारः। नञ्समासविचारः। तत्रापि नञो वाचकत्वं द्योतकत्वं वेति विचारः। तदित्थं वाचकत्वमभ्युपगम्य सर्वमुपपद्यत इति निर्णयः।

एवमपि नञोऽसत्सामान्याभिधायित्वे कथं पक्षत्रयोपपत्तिः, पूर्वोत्तरपदार्थयोर्गुणप्रधान-भावानियमे सति हि त्रयः पक्षा उपपद्येरन् इति शङ्कायाः समाधानरूपां—

"तत्रासति नञो वृत्तेर्ब्राह्मणक्षत्रियादिभिः"

इत्यादि कारिकां व्याख्यायायं निष्कर्षः समनुप्राप्तः—

"एवमसत्सामान्ये नञो वाचकत्वेन वर्तनात् तद्विशेषवचनैर्ब्राह्मणादिभिर्यथारुचि" विशेषणविशेष्यत्वं गुणप्रधानभावः पर्यायेण घटत इति।

तदेवं वृत्तिविचारप्रसङ्गागतं गुणवचनानां शब्दानामाश्रयतो लिङ्गवचनसिद्धिविचारं भाष्यप्रदेशानुवादेन यथायथं परिसमाप्योपमानसमासविचारः प्रस्तूयते। तत्र प्रथमं तावदुपमान-लक्षणोपयोगिभाष्यानुसारिणीं।

अनिर्ज्ञातस्य निर्ज्ञानं येन तन्मानमुच्यते।
प्रस्थादि तेन मेयात्मा साकल्येनावधार्यते॥

इति कारिकां विस्तरतो व्याख्याय

"अत्यन्तैकत्वे भेदाधिष्ठानस्य सादृश्यस्याभावान्नोपमानोपमेयभावः। न हि भवति गौरिव गौरिति। नात्यन्तभेदेऽन्वयिनो रूपस्याभावे हिमवानिव लोष्ट इत्युपमास्ति। तस्माद् भेदाभेदविमर्शेनोपमायामाधारभेदाद् भेदः। स्वालक्षण्येनान्वयिरूपवशेन चाभेदमाश्रित्य गुणोऽत्र सव्यापारः। एवंविध एव चार्थात्मा शब्दवाच्यः। न हि शब्दाः स्वालक्षण्येन भेदमर्थाना-मावेदयन्ते। सामान्य एव संबन्धग्रहणात्।

प्रतिनियतगुणवृत्त्यपरसामान्यमिति गुणानां प्रतिनियमः किंकृत इत्याह—

गुणानामाश्रयाद् भेदात् स्वतो वाप्यनुगम्यते।
अनिर्देशाद् विशेषाद् वा सङ्कराद् वा गुणान्तरैः॥

स्वकारणादासादितभेदात् द्रव्यलक्षणादाधारात् कश्चिद् गुणानां विशेषः। तद्यथा-उत्पलमालादिगतस्य श्यामत्वस्य तथा चात्र स्वभावसाम्यादुपमाप्रवृत्तिः—

रोलम्बकम्बलव्यालतमालश्यामलं नमः।
नमो निर्मलनिस्त्रिंशव्यप्रपाणय आहवे॥

एकजातीयाधारसमवायेऽपि क्वचित् स्वरूपादेवाचिन्त्यवैभवाद् गुणानां विशिष्टाना-मेवोत्पत्तेर्विशेषोध्यक्ष्यत एव धूसरत्वादिः। क्वचित् पुनरसंविज्ञानपदः कारणमात्रादनुत्पन्नः कालपरिवासहेतुको विशेषो गुणानाम्। तद्यथा सुरादीनां परिणामविशेषासादनेन रसगन्ध-वैचित्र्योत्पत्तिः। तथाहि तत्र सामग्र्याः खण्डशः कार्यानुत्पादात् सामग्र्यन्तर्गतात् कारणादय-मतिशय इति निर्देष्टुं न शक्यते। द्रव्यान्तरगतगुणसम्मिश्रणाद् वा विशेषो गुणानाम्। तद्यथा सहकारगन्धाधिवासस्यासवस्य मालतीकुसुमाधिवासितस्य च तैलस्य। तदेवमुपात्तभेदानां गुणानां कयाचित् प्रत्यासत्त्या केषांचिद् परसामान्यसद्भावे सामान्यवचनेनोपमानवचनस्य समाससिद्धिः।

न च नियोगतो गुणानां साम्यमेवोपमाहेतुः। अपितूत्कृष्टगुणमुपमानमित्याह—

उपमानं प्रसिद्धत्वात् सर्वत्र व्यतिरिच्यते।
उपमेयत्वमाधिक्ये साम्ये न विनिवर्तते॥ वृ. स. ३६३॥

व्यतिरेकोऽत्राधिक्यं विवक्षितम्। तेनाधिक्यगुणमुपमानमित्यर्थः। तच्चाधिक्यं वास्तवेन रूपेण भवतु मा वा भवतु। किन्तु प्रसिद्धत्वात् प्रतीतत्वात् ज्ञापकत्वेनोपमेयं प्रत्याश्रीयमाणं प्रसिद्धमेव न्याय्यमिति तद्गुणस्योत्कर्षः प्रसिद्धतैव। तथा च न्यूनगुणमपि शृङ्गाररसपरिपोषण-परतया नारीमुखं शशिबिम्बस्योपमानत्वेन निर्दिशन्ति।

कामिनां हि प्रेयसीमुखमुत्कृष्टगुणत्वेन प्रसिद्धम्।

यथा—

ईर्ष्यावशेन कलुषत्वमुपागतस्य,
दूरान्मुखस्य तव सुन्दरि साम्यमेत्य।
चेतः प्रहर्षभरपूरितपूर्णदेहः,
स्वाङ्गेष्वपि प्रसभमद्य न माति चन्द्रः॥

सादृश्यमात्रेण च परिच्छेदान्नात्यन्ताय मानमुपमानमिति लक्षणमवस्थापितम्। तत्र शस्त्रीदेवदत्तयोर्गुणः श्यामत्वमुपमानोपमेयभाव-निबन्धनं शस्त्रीश्यामेति प्रत्यभिज्ञाप्रत्ययसदृश-प्रत्यययोर्भेदः। केवलाया जातेः प्रत्यभिज्ञाप्रत्यये व्यापारो न सदृशप्रत्यये। अस्ति हि जातेः सादृश्यस्य भेदः। अभेदात्मिका हि जातिः। भेदाभेदसमन्वितं च सादृश्यम्। जातिर्ह्यन्यत्र नानात्वेन न गृह्यते। अपि त्वेकत्वेनैव। अत्र ह्युपमानसमासविचारः प्रकृतः। तत्र प्रथमं मानो-पमानयोर्भेदः कारिकाद्वयेन प्रदर्शितः—यथा

अनिर्ज्ञातस्य निर्ज्ञानं येन तन्मानमुच्यते।
प्रस्थादि तेन मेयात्मा साकल्येनावधार्यते॥
अनिर्ज्ञातं प्रसिद्धेन येन तद्धर्म गम्यते।
साकल्येनापरिज्ञानादुपमानं तदुच्यते॥ वृत्ति-स० ३५९-३६०॥

ततो भाष्यमवलम्ब्य बहु विचार्यान्ततोऽयं निष्कर्षः समनुप्राप्तः—अनेनोपमानोपमेययोर्व्यवस्थाभ्युपगतेति। अव्यवस्थेयं न केवलमुपमानोपमेयभावे, अपि त्वन्यत्रापि दृश्यत इत्युक्तम्—

गुरुशिष्यपितापुत्रक्रियाकालादयो मया।
व्यवहारास्तयौपम्यमप्यपेक्षानिबन्धनम् ॥ इति। वृ० स० ४०७ ॥

"आदिग्रहणाद् विशेषणविशेष्यभावादेरापेक्षिकस्य संग्रहः" इति हेलाराजः। एवं यस्य गवयः प्रसिद्धस्तस्यासावुपमानम्, वनेचरस्य गौरप्रसिद्ध उपमेयः, नागरकस्य तु विपर्ययः।

एवमुपरिनिर्दिष्टप्रकारेणाम्बाकर्त्र्यां वाक्यपदीयकारिकाणामर्थः स्पष्टीकृतो हेलाराजकृतप्रकाशस्यापि सत्यावश्यकत्वेऽभिप्रायो विशदीकृतः। एतावदेव न। यद् भाष्यमवलम्ब्य तत्रभवता भर्तृहरिणा कारिका विरचिता तस्य भाष्यस्यापि विवेचनं कुत्रचिदम्बाकर्त्र्यां क्रियते। तत्र निदर्शनरूपेण वृत्तिसमुद्देशगत ४३४ कारिकागताम्बाकर्त्री दृश्यताम्। तत्र "तेन तुल्यं क्रिया चेद्वतिः" (पा० ५-१-११५) इति सूत्रगतं "इदमयुक्तं वर्तते। किमत्रामुक्तम्। यत् तृतीयासमर्थं क्रिया चेत् स भवतीत्युच्यते। कथं च तृतीयासमर्थं नाम क्रिया स्यात्?" इति भाष्यं समुदाहृत्य भाष्यकाराभिप्रायो महता वैशद्येन प्रतिपादितः। एवमियमम्बाकर्त्री नैकस्य ग्रन्थस्य व्याख्या, अपि तु वाक्यपदीय-प्रकाश-महाभाष्यरूपग्रन्थत्रयस्य व्याख्यारूपतया पर्यवस्यतीति महदिदं सौभाग्यं सर्वेषां पाठकमहाभागानाम्।

एतादृशस्य ग्रन्थस्य महत्त्वं परप्रशंसाश्रवणमात्रेण नावगन्तुं शक्यते। अस्मिन् व्याख्यासमुद्रे स्वयं निमज्जनेनैव तस्य गाम्भीर्यं यथावत् परिच्छेत्तुं शक्यत इति पाठकमहाभागाः मयानुरुध्यन्ते यत् ते बद्धपरिकरा भूत्वास्य व्याख्यारत्नस्य परिशीलने सज्जा भवन्त्विति। शम् ॥

लखनऊ
१२-८-७७

को० अ० सुब्रह्मण्य अय्यरः

# विषयानुक्रमणिका

| विषयः | | | कारिका |
|---|---|---|---|

भर्तृहरिप्रणीतम्

# वाक्यपदीयम्

हेलाराजरचित 'प्रकाश-'
श्रीरघुनाथशर्मविरचित
'अम्बाकर्त्री' टीकाद्वयोपेतम्

---

## अथ तृतीयकाण्डे

### वृत्तिसमुद्देशः

---

#### प्रकाशः

असमस्तपदगतानर्थान् विचार्य समस्तपदविषयान् विचारयितुं पञ्चप्रकारवृत्तिपदविचारः प्रस्ताव्यते ।

---

#### अम्बाकर्त्री

कृत्तद्धितसमासाद्यैर्वृत्तिभेदैः परिष्कृताम् ।
जननीं शब्दजातानां जननीं समुपास्महे ॥ १ ॥
या देवी सर्वशब्देषु सर्वभूतेषु संस्थिता ।
भावेषु सकलेष्वेषा वृत्तिभेदैरुपास्यते ॥ २ ॥
मनोदुर्वृत्तिरोधेन सद्वृत्तौ संप्रवर्त्तिका ।
वृत्तिविग्रहिणी वैधगृहिणी संप्रसीदतु ॥ ३ ॥
वृत्तिसंवृत्तिसद्वृत्तिप्रवृत्तिप्रविभागतः ।
विवर्तमानाऽऽवृत्त्या सा प्रकृतिः संप्रसीदतु ॥ ४ ॥
हरिवाक्याम्बुधौ मग्नां भ्राम्यन्तीं भ्रमगह्वरे ।
समुद्धरतु तारा मे मनसो वृत्तिमाश्रिता ॥ ५ ॥

व्यस्तविषयान् अर्थान् विचार्य समस्तपदविषयान्=वृत्त्या संकुचितपदविषयान् तान् विचारयितुं पञ्चप्रकारवृत्तिपदविचारः=कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपपञ्चप्रकारं यद् वृत्तिसंज्ञकं पदं तद्विचारः प्रस्ताव्यते ।

तत्र प्रथमं समानाधिकरणतद्धितवृत्तिविचारः। तथाहि—कुत्सितादीनामर्थे चेल्लिङ्गवचनानुपपत्तिः। कुत्सितादिसमानाधिकरणादिति चेत्, अतिप्रसङ्गः, यथा टाबादिष्विति प्रत्ययार्थपक्षं समानाधिकरणपक्षं च दोषवन्तमुद्भाव्य 'सिद्धं तु येन कुत्सितादिवचनं तद्युक्तात् स्वार्थे प्रत्ययविधानात्" इति प्रकृत्यर्थविशेषणपक्षोऽवस्थापितः। येन धर्मेण कुत्सादयः प्रतिपाद्यन्ते तद्धर्मयुक्तार्थाभिधायिनः प्रातिपदिकात् तेनैव कुत्सादेरुपादा(ना)त् तद्द्योतनाय स्वार्थे कनादयः प्रत्यया विधेया इति वार्त्तिकार्थः।

एवञ्च प्रकृत्यर्थो विशिष्टः प्रत्ययार्थो न कुत्सादिधर्ममात्रमिति लिङ्गवचनोपपत्तिः। उपात्तकुत्सादेरेव चशब्दात् प्रत्यय इति तत्समानाधिकरणादिदमादेः स्वयमनुपात्तकुत्सादेस्तदभावः।

एवं स्थिते केन धर्मेण कुत्सादय इत्युक्तम्। 'स्वार्थमभिधाय शब्दो निरपेक्ष—'

---

तत्र प्रथमं समानाधिकरणतद्धितवृत्तिविचारः—कुत्सितोऽश्वोऽश्वक इत्यादौ प्रकृतिसमानाधिकरणा कुत्सा प्रशंसाद्यर्थककादितद्धितप्रत्ययरूपायां वृत्तिस्तस्या विचारः।

तथाहि—कुत्सितादीनामर्थे चेल्लिङ्गवचनानुपपत्तिरिति।

अस्यार्थः—कुत्सितप्रशंसाऽतिशयादीनामर्थे कन्नादयस्तद्धिताः प्रत्यया इति चेदुच्यते, तदा कन्नादिप्रत्ययान्तात् लिङ्गवचनयोरनुपपत्तिः, प्रत्ययार्थस्य प्राधान्यात् तत्र च लिङ्गसंख्ययोरभावात्, प्रकृत्यर्थेऽश्वादावेव तत्सत्त्वादिति। तद्यथा कुत्सिते अश्वे आश्विके इति।

अत्रैव द्वितीयं वार्त्तिकम् "कुत्सितादिसमानाधिकरणादिति चेत् अतिप्रसङ्गो यथा टाबादिषु"।

अस्यार्थः—कुत्सितादिसमानाधिकरणात् प्रातिपदिकात् कन्नादयः तद्धितप्रत्यया इति चेत् अतिप्रसङ्गः, कुत्सितोऽश्वकः इति प्रसङ्गः। किञ्चायमश्वक इत्यादौ कुत्सितादिसमानाधिकरणादिदमादेः कन्नादिप्रत्ययप्रसङ्गः। यथा स्त्रीसमानाधिकरणात् प्रातिपदिकात् टाबादय इत्यर्थे 'जानकी तस्य दारा.' इत्यादिवाक्ये दारादिशब्दात् दावादीनां प्रसङ्गो भवतीति।

तदेवं प्रथमवार्तिकेन कुत्सितादीनां प्रत्ययार्थत्वपक्षम्, द्वितीयवार्तिकेन च कुत्सितादीनां प्रकृतिसमानाधिकरणत्वपक्षञ्च दोषवन्तमुद्भाव्य, "सिद्धन्तु येन कुत्सितादिवचनं तद्युक्तात् स्वार्थे प्रत्ययविधानात्" इति कुत्सितादीनां प्रकृत्यर्थविशेषणत्वपक्षोऽवस्थापितो वार्तिके। येन धर्मेण कुत्सादयः प्रतिपाद्यन्ते तद्धर्मयुक्तस्वार्थाभिधायिनः प्रातिपतिकात् तेनैव = प्रातिपदिकेनैव कुत्सादेरुपादानाद् = अभिधानात् तद्योतनाय, नतु तदभिधानाय कन्नादयः प्रत्यया विधेया इत्येतद् वार्त्तिकार्थः।

एतच्च प्रकृत्यर्थो विशिष्टः = कुत्सितत्वतन्निमित्तधर्मविशिष्टः प्रत्ययार्थो न कुत्सादिधर्ममात्रमिति प्रकृत्यर्थप्राधान्यात् तद्गतलिङ्गवचनयोरुपपत्तिः। उपात्तकुत्सादेरेव च = अभिहितकुत्सादेरेव तु प्रकृतिभूतात् शब्दात् कुत्सादिद्योतनाय कन्नादयः प्रत्यया इति अयमश्वक इत्यादौ कुत्सितादिसमानाधिकरणादिदमादेः स्वयमनभिहितकुत्सादिकात् कन्नादिप्रत्ययाभावः।

एवं स्थिते केन धर्मेण कुत्सादयः प्रतिपाद्यन्ते इति शङ्कायां उक्तं तत्रैव भाष्ये—स्वार्थमभिधाय शब्दो निरपेक्ष इत्यादि।

इत्यादि । स्वार्थादिपञ्चकाभिधायिनः प्रातिपदिकात् स्वार्थादिनिमित्तकुत्सनादिद्योतनाय कनादयः प्रत्यया इति प्रकृत्यर्थविशेषणपक्षः । 'प्रियकुत्सनादिषु पुनः प्रवर्ततेऽसौ विभक्त्यन्तः' इति च न सुवन्तात् प्रत्ययविधानपरमेतद् वचनम्, अपि तु पञ्चकार्थ निमित्तत्वात् कुत्सनादेः 'देवदत्तकः' इत्यादौ कुत्सादिमात्रे प्रत्ययेन द्योतिते प्रकरणादेस्तद्धेतुर्लिङ्गादीनामन्यतमोऽवधार्यते । स च सुवन्तेन द्योत्यत इति विशिष्टकुत्साद्यर्थप्रतिपादनाय विभक्त्यन्तः प्रवर्तत इत्युच्यते ।

तदेतद् व्याचष्टे—

कुत्साप्रशंसातिशयैः समाप्तार्थं तु युज्यते ।
पदं स्वार्थादयः सर्वे यस्मात् कुत्सादिहेतवः ॥ १ ॥

स्वार्थद्रव्यलिङ्गसङ्ख्याकर्मादिलक्षणेनार्थेन परिपूर्णाभिधेयं पदं स्वार्थादिनिमित्तेन विशिष्टेन कुत्साद्यर्थेन युक्तमवधार्यते । स्वार्थादयश्चान्यत्र व्याख्याता नेह प्रपञ्च्यन्ते ।

---

अस्यार्थः—कुत्सादिनिमित्तभूतधर्मविशिष्टं स्वार्थमभिधाय निरपेक्षः=निराकाङ्क्षः शब्दः कुत्साद्यर्थद्योतनाय कन्नादिकं प्रत्ययं स्वाव्यवहितोत्तरं समुत्पादयति इति । स्वार्थादिपञ्चकाभिधायिनः प्रातिपदिकात् स्वार्थादिपञ्चकनिमित्तककुत्सनादिद्योतनाय कन्नादयः प्रत्यया इति कुत्सादीनां प्रकृत्यर्थविशेषणत्वपक्षः । "प्रियकुत्सनादिषु पुनः प्रवर्ततेऽसौ विभक्त्यन्तः" इति ।

अस्यार्थः—स्वार्थादिनिमित्तकेषु प्रियकुत्सनादिषु अर्थेषु प्रकृत्याऽभिहितेषु कन्नादिभिः प्रत्ययैर्द्योतितेषु सत्सु प्रकरणादितः स्वार्थद्रव्यलिङ्गाद्यन्यतमस्य प्रियकुत्सनादिहेतुत्वेऽवधारिते तस्य तद्धेतुत्वद्योतनद्वारा लिङ्गाद्यन्यतमनिमित्तकत्वविशिष्टकुत्साद्यर्थप्रतिपादनाय कन्नादिप्रत्ययानन्तरं पुनर्विभक्त्यन्तोऽसौ प्रवर्तत इति । इदञ्च वचनं न सुवन्तात् प्रत्ययविधानपरम्, अपितु कुत्सनादेः स्वार्थादिपञ्चकनिमित्तकत्वाद् 'देवदत्तकः' इत्यादौ कुत्सादिमात्रे कन्नादिना प्रत्ययेन द्योतिते प्रकरणादितः तद्धेतुतया लिङ्गादीनामन्यतमोऽववार्यते । स च=तद्धेतुभूतो लिङ्गादीनामन्यतमः सुबन्तेन द्योत्यत इति लिङ्गाद्यन्यतमनिमित्तकत्वविशिष्टकुत्साद्यर्थप्रतिपादनाय विभक्त्यन्तः प्रवर्तत इत्युच्यते एतद्वचनेन । तदेतद् भाष्यवार्तिकवचनजातं व्याचष्टे:—कुत्साप्रशंसाऽतिशयैरिति ।

अस्यार्थः—स्वार्थद्रव्यलिङ्गसंख्याकारकलक्षणेनार्थेन समाप्तार्थन्तु=परिपूर्णाऽभिधेयन्तु पदं कुत्साप्रशंसाऽतिशयैर्युज्यते, नतु स्वार्थाऽभिधानात् प्राक् । स्वार्थे परिपूर्णं पदं पदान्तरेणार्थान्तरेण वा सम्बध्यते इति न्यायात् । यस्मात् सर्वे स्वार्थादयः पञ्चापि कुत्सादिहेतव इति । हेतूनाञ्च कार्यात् प्राक् सत्त्वमावश्यकमिति विवक्षितप्रकृतार्थसिद्धिरिति । एवञ्च स्वार्थिकाः अपि कुत्साप्रशंसाऽतिशयार्थकाः प्रत्यया न विभक्त्यन्तात् समुत्पद्यन्त इति "प्रियकुत्सनादिषु पुनः प्रवर्ततेऽसौ विभक्त्यन्तः" इति भाष्यवचनं न सुबन्तात् कन्नादिप्रत्ययविधानपरमिति व्याख्यातं प्राग् इति ।

अयं भावः—स्वार्थद्रव्यसंख्याकर्मादिलक्षणेनार्थेन परिपूर्णाभिधेयं पदं सुबन्तलक्षणं स्वार्थादिनिमित्तकेन निमित्तभेदाद् विशिष्टेन=विलक्षणेन कुत्साद्यर्थेन युक्तमवधार्यते=तदयुक्तात् व्यावर्त्यते । कन्नादिप्रत्ययं करणीकृत्य प्रतिपन्ना स्वार्थादयश्चान्यत्र व्याख्याता नेह प्रपंच्यन्ते । तदत्र कुत्सादेः

तदत्र प्रातिपदिकार्थनिमित्तत्वात् कुत्सादेस्तद्विशिष्टार्थाभिधायिनः प्रातिपदिकादेवाधिकारात् प्रत्ययः। प्रत्ययान्ताद् विभक्तिपराच्च कुत्सादिहेतोर्विशिष्टस्याभिव्यक्तिरिति समाप्तार्थं तेन सम्बध्यत इत्युच्यते।

तत्र स्वार्थनिमित्ता कुत्सा यथा— पटुकः, पण्डितकः, मृदुक इति। पाटवादेरपरिपूर्णत्वाद् दुष्टत्वाद् वा कुत्स्यतेऽर्थः। एवं पटुरूपः पटुतर इत्यादिप्रशंसातिशययोः स्वार्थनिमित्तयोरुदाहार्यम्। द्रव्यस्य विशेष्यत्वेन प्राधान्याद् धर्मान्तरमुखेनैव तन्निमित्तः कुत्सादिर्बोद्धव्यः।

लिङ्गनिमित्ता कुत्सा यथा—पुरुषे क्लीबत्वप्रतिपादनार्था स्त्रीत्वारोपेण कुत्सा, निर्लज्जत्वाख्यानाय वा स्त्रियां पुंस्त्वारोपेण पुरुषोऽयं स्त्री, स्त्रीयं पुरुष इति च। परार्थे शब्दप्रयोगादेव कुत्सावगतेः कप्रत्ययस्यायमविषयः। एवमेकत्रैव दुर्भरत्वाद् बहुत्वसमारोपादिदमेव मे सहस्रमिति सङ्ख्यानिमित्ता कुत्सा। प्रत्ययोऽत्र पूर्ववन्न भवति। एवं प्रशंसादावपि यथायोगं प्रदर्शनीयम्॥ १॥

---

प्रातिपदिकार्थनिमित्तकत्वात् तद्विशिष्टार्थभिधायिनः=कुत्सादिविशिष्टस्वार्थाभिधायिनः प्रातिपदिकादेव कन्नादिकः प्रत्ययः; प्रातिपदिकाधिकारात्, सुबन्तात्। विभक्तिपरकात् कन्नादिप्रत्ययान्ताच्च=तु कुत्सादिहेतोर्विशिष्टस्य = विलक्षणस्य लिङ्गाद्यन्यतमस्याभिव्यक्तिरिति समाप्तार्थं= परिपूर्णमिवेयं पदं तेन = कुत्सादिना सम्बध्यत इत्युच्यते।

तत्र स्वार्थनिमित्ता कुत्सा यथा 'पटुकः, पण्डितकः, मृदुकः' इति। प्रकरणादितो गृहीतात् पाटवादेः स्वार्थस्य अपरिपूर्णत्वात् दुष्टत्वाद् वा कुत्सानिमित्तात् पट्वादिरूपोऽर्थः कुत्स्यते। एवं पटुरूपः पटुतर इत्यादिकं स्वार्थनिमित्तकयोः प्रशंसाऽतिशययोरुदाहार्यम्। द्रव्यस्य पट्वादिरूपस्य स्वार्थादिनिरूपितविशेष्यत्वेन प्राधान्यात् स्वार्थादिपञ्चकान्यतमरूपधर्मान्तरमुखेनैव तन्निमित्तः= द्रव्यनिमित्तकः कुत्सादिर्बोद्धव्यः। लिङ्गनिमित्ता कुत्सा यथा पुरुषे क्लीवत्वप्रतिपादनार्था स्त्रीत्वारोपेण कुत्सा, निर्लज्जत्वाख्यानाय वा स्त्रियां पुंस्त्वारोपेण पुरुषोऽयं स्त्री, स्त्रीयं पुरुष इति च। परार्थे शब्दप्रयोगादेव कुत्सावगतेरुक्तार्थत्वात् कप्रत्ययस्यायमविषयः।

'नाजानान्मे पिता राम स्त्रियं पुरुषरूपिणम्' इति रामायणे वनवासाय प्रस्थानावसरे रामं प्रति सीतावाक्यमप्यत्रोदाहार्यम्। यदि तु अत्र पुंसि स्त्रीत्वारोपः; स्त्रियां वा पुंस्त्वारोपः स्त्र्यादिपदासंनिधाने प्रकरणादितो विज्ञायते, तदा भवत्येव कुत्साविद्योतनाय कप्रत्ययप्रयोगः। पुरुषकोऽयमिति, स्त्रिकेयमिति वा। एवं एकत्रैव दुर्भरत्वाद् बहुत्वसमारोपाद्=एकमेव मे सहस्रमिति कुत्सा। प्रत्ययोऽत्र पूर्ववन्न भवति। परार्थे परशब्दप्रयोगात्। एकपदप्रयोगाभावे तु प्रकरणादितः सहस्रत्वारोपेऽवगते भवत्येव कप्रत्ययः। इदमेव मे सहस्रकमिति। एवं प्रशंसादावपि यथायोगं प्रदर्शनीयम् 'चैत्रो बृहस्पतिः' इति। परार्थे परशब्दप्रयोगात् प्रशंसावगतेः प्रशंसार्थककप्रत्ययस्यायमविषयः। चैत्रादिपदप्रयोगे तु 'अयं बृहस्पतिकः' इति भवति॥ १॥

तदत्र 'कुत्सितकः, अनुकम्पितकः' इति को न प्राप्नोति, स्वशब्देनाभिहितत्वादिति । तद्भाष्ये चोदितं परिहर्तुमाह—

देवदत्तादिकुत्सायां वर्तते कुत्सितश्रुतिः ।
कुत्सितस्था तु या कुत्सा तदर्थः को विधीयते ॥ २ ॥

कुत्सां प्रवृत्तिनिमित्तामाश्रित्य देवदत्ते कुत्सितशब्दो वर्तते । स च कुत्सासम्बन्धोपलक्षितं लिङ्गसङ्ख्याकर्माद्युपाधिकं द्रव्यमभिधत्त इति स्वार्थमात्रे विश्रान्त्यभावादर्थान्तरे लिङ्गादावपि तात्पर्याद् बाह्यकुत्साप्रतिपादने सामर्थ्याभावात् तत्र प्रत्यय उत्पद्यते । स्वार्थभूता हि प्रातिपदिकवाच्या देवदत्तादेः कुत्सा, तद्व्यतिरिक्ता तु बाह्या स्वार्थादिनिमित्ता प्रत्ययवाच्या । तद् यथा देवदत्तशब्दात् प्रियकुत्सनादिसाधारणार्थाभिधायिनः कप्रत्ययः कुत्सासम्बन्धं प्रकाशयति, तथा कुत्सितशब्दादर्थान्तरनिमित्तप्रवृत्तिनिमित्तभूतकुत्साभिधायिनः स्वार्थगतां बाह्यां कुत्सां प्रकाशयितुं कप्रत्यय इत्यर्थः ॥ २ ॥

---

"तदत्र 'कुत्सितकः, अनुकम्पितकः' इति को न प्राप्नोति, स्वशब्देनाभिहितत्वाद्" इति भाष्ये=कप्रत्ययविधायकसूत्रभाष्ये चोदितं परिहर्तुमाह—देवदत्तादिकुत्सायामिति ।

अस्यार्थः—कुत्सितो देवदत्त इत्यत्र कुत्सितश्रुतिः=कुत्सितशब्दो देवदत्तादिकुत्सायाम्, देवदत्तादिपदवाच्यस्वार्थादिपञ्चकान्यतमनिमित्तिकायां कुत्सितपदप्रवृत्तिनिमित्तभूतायां कुत्सायां वर्तते । या तु कुत्सितस्था कुत्सा कुत्सितपदप्रवृत्तिनिमित्तभूतप्रागुक्तकुत्सातो व्यतिरिक्ता कुत्सितपदार्थलिङ्गाद्यन्यतमनिमित्तका कुत्सा, तदर्थः कप्रत्ययः 'कुत्सितकः' इत्यत्र विधीयत इति ।

अयं भावः—कुत्सारूपं स्वप्रवृत्तिनिमित्तमादाय कुत्सितशब्दो देवदत्ते वर्तते, 'देवदत्तः कुत्सितः' इति !

स च=कुत्सितशब्दश्च व्यक्तिपदार्थवादिनां मते कुत्सासम्बन्धोपलक्षितं लिङ्गसंख्याकर्माद्युपाधिकं द्रव्यमभिधत्ते इति कुत्सारूपस्वार्थमात्रे विश्रान्त्यभावादर्थान्तरे=स्वार्थभूतकुत्सातो व्यतिरिक्ते लिङ्गादावपि तात्पर्यात् स्वार्थलिङ्गाद्यन्यतमनिमित्तककुत्साप्रतिपादनेऽपि बाह्यकुत्साप्रतिपादने=स्वार्थलिङ्गाद्यतिरिक्तार्थनिमित्तककुत्साप्रतिपादने सामर्थ्याभावात्तत्र कादिप्रत्यय उत्पद्यते । स्वार्थभूता हि कुत्सितशब्दरूपप्रातिपदिकवाच्या देवदत्तादेः कुत्सा । तद्व्यतिरिक्ता तु बाह्याऽस्वार्थादिनिमित्ता=कुत्सितपदस्वार्थादिनिमित्तकत्वाभाववती प्रकरणादितोऽवधृता देवदत्तादिपदस्वार्थादिव्यतिरिक्तार्थान्तरनिमित्तिका प्रत्ययवाच्या । तद् यथा देवदत्तशब्दात् प्रियकुत्सनादिसाधारणार्थाभिधायिनो जायमानः कप्रत्ययो देवदत्ते कुत्सासम्बन्धं प्रकाशयति, देवदत्तक इति ।

तथा कुत्सितशब्दार्थान्तरनिमित्तकस्वप्रवृत्तिनिमित्तभूतकुत्साभिधायिनः स्वार्थद्रव्यगतां बाह्यां कुत्सां प्रकाशयितुं=द्योतयितुम् कप्रत्यय इति ।

तदयं निष्कर्षः—कुत्सितो देवदत्त इत्यत्र देवदत्तपदार्थस्वार्थाद्यन्यतमनिमित्तिका कुत्सा कुत्सितपदेनाभिधीयते, ततोऽर्थान्तरनिमित्तिका प्रकरणादितोऽवधृता कप्रत्ययवाच्या इति ॥ २ ॥

एवमतिशायनेऽपि स्वशब्देनाभिहिते तत्प्रत्ययाप्रसङ्ग इति समानन्यायत्वात् चोदितं भवतीति तदपि प्रकृतसमाधानाय प्रतिविधत्ते—

**प्रकृष्ट इति शुक्लादिप्रकर्षस्याभिधायकः ।**
**प्रकृष्टस्य प्रकर्षे तु तरबादिर्विधीयते ॥ ३ ॥**

योऽतिशयेन शुक्लः शुक्लतरः, स प्रकृष्टः शुक्ल इत्युच्यते । निरतिशयापेक्षया हि सातिशयः शुक्लस्तरबन्तेन वा शुक्लशब्देनोच्यते, केवलेन वा प्रकृष्टशब्देन । तथा च शुक्लादिगतस्य प्रकर्षस्य प्रकृष्टशब्दोऽभिधायक इति न तत्रैव ततस्तरप्प्रत्ययः । यस्त्वपरः प्रकृष्टेभ्योऽपि तस्य प्रकर्षः, स नाभिहित इति तदभिधानाय तरप् क्रियते, प्रकृष्टतर इति । यथा ज्येष्ठतमायेत्यतिशायनप्रत्ययान्तरम् । आदिग्रहणात् प्रशस्तरूपमिति प्रशंसोपाधेः प्रत्ययान्तरमुदाहार्यम् । एवं कुत्सितक इति कुत्सितस्थे कुत्सान्तरे कः ॥ ३ ॥

---

एवं प्रकृष्टतर इत्याद्यौ अतिशायनेऽपि स्वशब्देनाभिहिते तत्प्रत्ययाप्रसङ्गः=अतिशायनार्थकतरबादिप्रत्ययाप्रसङ्ग इति समानन्यायत्वात्=समानयुक्तिकत्वात् चोदितं भवतीति तदपि चोद्यं प्रकृतसमाधानाय = प्रकृतसमाधानमुपपादयितुं प्रतिविधत्ते=प्रकृतसमाधानेनैव निरस्यति प्रकृष्ट इति ।

अस्यार्थः—'प्रकृष्टः शुक्लः' इत्यादौ प्रकृष्ट इति शब्दः शुक्लादिगतस्य प्रकर्षस्याभिधायकः । अन्येभ्यः प्रकृष्टेभ्यस्तस्य प्रकृष्टस्य प्रकर्षे तु प्रकृष्टतरः प्रकृष्टतम इति तरबादि विधीयत इति ।

अयं भावः—योऽतिशयेन शुक्लः स शुक्लतर इति, स एव प्रकृष्टः शुक्ल इत्युच्यते । निरतिशयशुक्लापेक्षया हि यः सातिशयः शुक्लः स तरबन्तेन वा शुक्लशब्देनोच्यते, केवलेन वा प्रकृष्टशब्देन ।

तथा च शुक्लादिगतस्य प्रकर्षस्य प्रकृष्टशब्दोऽभिधायक इति न तत्रैवार्थे ततः=प्रकृष्टशब्दात् तरप् प्रत्ययः । यस्त्वपरः प्रकृष्टेभ्योऽपि तस्य प्रकृष्टस्य प्रकर्षः स नाभिहित इति तदभिधानाय तरप् क्रियते, प्रकृष्टतर इति । यथा ज्येष्ठतमाय इत्यत्र अतिशायनप्रत्ययान्तरम् । अत्रातिशायनार्थके इष्टन्प्रत्यये कृते पुनस्तदर्थक एव तमप् प्रत्ययः । अज्येष्ठेभ्योऽयं प्रकृष्ट इति ज्येष्ठः, ज्येष्ठेभ्योऽपि यः प्रकृष्टः स ज्येष्ठतम इति । तरबादिरित्यत्रादिग्रहणात् प्रशस्तरूपमित्यत्र प्रशंसोपाधिकात् प्रशस्तशब्दात् प्रत्ययान्तरं रूपप्प्रत्ययरूपमुदाहार्यम् । प्रशस्तपदार्थे हि प्रशंसा, स्वार्थभूता प्रशस्तपदार्थलिङ्गाद्यन्यतमनिमित्तिका इतरपदस्वार्थादिनिमित्तिका वा प्रशस्तशब्दरूपप्रातिपदिकवाच्या । तदन्या तु प्रशस्तपदार्थगता इतरपदस्वार्थादिनिमित्तिका रूपप्प्रत्ययवाच्या इति । एवं कुत्सितक इत्यत्र कुत्सितस्थे कुत्सान्तरे कप्रत्ययः । उपपादितं चेदं प्रागिति नेह पुनः प्रपञ्च्यते इति ॥ ३ ॥

किं पुनः कुत्सितस्य कुत्सान्तरमित्यत आह—

**कुत्सितत्वेन कुत्स्यो वा न सम्यग् वापि कुत्सितः।**
**स्वशब्दाभिहिते केन विशिष्टोऽर्थः प्रतीयते ॥ ४ ॥**

स्वशब्देन कुत्सित इत्यनेन सामान्यशब्देनाभिहितेऽर्थे विशेषो नावधार्यते—किमस्याकार्यकरणान्निन्दार्हत्वेनैव कुत्सितत्वम्, उत युक्तकार्यपि शत्रुणा दुष्टत्वारोपेण गर्ह्यत इति। उत्पन्ने तु प्रत्यये विशेषावधारणम्। तथा हि—कुत्सितमस्य कुत्सितत्वम्, न सम्यगिदं कुत्सितत्वम्, शत्रुणा तु द्वेषेणाध्यारोपितमिति प्रत्ययान्तादवगम्यते कुत्सितशब्दात्।

सा हि कुत्सितस्य कुत्सायां निर्दोषस्यैव क्रियते। यद्वा कुत्साया अपि निन्द्यतरत्वेन कुत्साविशेषः। तथा चानिर्धारितधर्मविशेषनिबन्धना कुत्सा कुत्सितशब्दप्रवृत्तिनिमित्तम्, ब्रह्महत्यादिविशेषनिबन्धना तु कप्रत्ययहेतुरिति विशेषः। तदेवं कुत्सितार्थसमवेतां द्वितीयां कुत्सामाश्रित्य समर्थितम् ॥ ४ ॥

---

किं पुनः कुत्सितस्य कुत्सान्तरमित्याशङ्क्याह—कुत्सितत्वेन कुत्स्यो वा इति।

अस्यार्थः—कुत्सिको देवदत्त इत्यत्र आरोपितानारोपितसाधारणं कुत्सितत्वसामान्यं कुत्सितशब्देनाभिधीयते। स्वशब्दाभिहिते=स्वशब्देन कुत्सितत्ववाचककुत्सितशब्देनाभिहिते च कुत्सितत्वसामान्ये वस्तुभूतेन कुत्सितत्वेन अनारोपितेन कुत्स्यो वा, न सम्यग् वाऽपि कुत्सितः=न सम्यक् समीचीनकुत्सितत्ववान्, किन्तु आरोपितकुत्सितत्ववान् इत्यपि वा विशिष्टः=कुत्सितत्वसामान्याद् विलक्षणः=विशेषभूतः कुत्सितत्वपदार्थोऽनारोपित आरोपितो वा केन=कप्रत्ययेन प्रतीयते।

तदयं निर्गलितार्थः—कुत्सितक इत्यत्र कुत्सितत्वसामान्यं कुत्सितशब्देनोच्यते। ब्रह्महत्यादिविशेषनिबन्धनो निन्द्यतरः कुत्साविशेषः, आरोपितत्वानारोपितत्वान्यतरप्रयुक्तो वा कुत्साविशेषः कप्रत्ययेनोच्यत इति।

अयं भावः—स्वशब्देन=कुत्सितत्ववाचकेन कुत्सित इत्यनेन सामान्यशब्देन कुत्सितत्वसामान्यरूपेऽर्थेऽभिहिते सति कुत्सितत्वरूपस्यार्थस्यानारोपितत्वारोपितत्वलक्षणो विशेषो नावधार्यते, किमस्य ब्रह्महत्यादिरूपा कार्यकारणान्निन्दार्हत्वेनैव कुत्सितत्वम्, उत युक्तकार्यपि=समुचितकार्यपि, अयं शत्रुणा दुष्टत्वारोपेण गर्ह्यत इति। उत्पन्ने तु कप्रत्यये अस्य विशेषस्यावधारणम्। तथाहि कुत्सितमस्य कुत्सितत्वम्, न सम्यगिदं कुत्सितत्वम्, शत्रुणा तु द्वेषेणाध्यारोपितमिति प्रकरणादिसहकृतात् कप्रत्ययान्तात् कुत्सितशब्दावगम्यते।

सा हि=कुत्सा हि कुत्सितत्वस्य कुत्सायां निर्दोषस्यैव क्रियते। यद्वा कुत्साया अपि ब्रह्महत्यादिविशेषनिबन्धनत्वाद् निन्द्यतरत्वेन कुत्साविशेषः।

तथा चानिर्धारितधर्मविशेषनिबन्धना सामान्यभूता कुत्सा कुत्सितशब्दप्रवृत्तिनिमित्तम्, ब्रह्महत्यादिरूपा कार्यविशेषनिबन्धना तु विशेषरूपा कप्रत्ययोत्पत्तिहेतुरिति विशेषः। तदेवं कुत्सितार्थसमवेतां द्वितीयां कुत्सां विशेषरूपामाश्रित्य कुत्सितक इत्यभिधानं समर्थितमिति ॥ ४ ॥

यद्वा नास्त्येवात्र द्वितीया कुत्सा। यैव तु प्रातिपदिकेनोपात्ता, तत्रैव प्रत्यय इत्याह—

**न च साम्प्रतिकी कुत्सा भेदाभावात् प्रतीयते।**
**पूज्यते कुत्सितत्वेन प्रशस्तत्वेन कुत्स्यते॥ ५॥**

कुत्सोपलक्षितस्य द्रव्यस्य कुत्सितशब्देन प्रियकुत्सनादिसाधारणस्याभिधानाद् वर्तमानकुत्साभिसम्बन्धो नावधार्यतेऽस्मात्। तथाहि—तत् कुत्सयोपलक्षितं द्रव्यं कदाचित् पूज्यते प्रशस्यतेऽपि कुत्सितरूप इति। यथा वृषलरूपो, दस्युरूप इति। तद्यथा प्रशस्तत्वेनोपलक्षितं निन्द्यते प्रशस्तक इति अपरिपूर्णप्रशंसोऽध्यारोपितप्रशंसो वा।

---

यद् वा नास्त्येवात्र=कुत्सितक इत्यत्र द्वितीया कुत्सा, यैव तु कुत्सितेति प्रातिपदिकेनोपलक्षणतयोपात्ता कुत्सा, तत्रैव सांप्रतिक्यां कप्रत्ययोऽपि वर्तते इत्याह—न च सांप्रतिकी इति।

अस्यार्थः—कुत्सिक इत्यत्र कुत्सितशब्दः कुत्सोपलक्षितं द्रव्यमभिधत्ते, न तु कुत्साविशिष्टं द्रव्यम्। साम्प्रतिकस्यैव=वर्तमानस्यैव विशेषणत्वदर्शनाद् विशेषणत्वापत्तेर्विशेषणत्वसम्भवाच्च। न च कुत्सितरूप इत्यादौ कुत्साया विशेषणत्वं संभवति, प्रत्ययार्थभूतया प्रशंसया सह सामानाधिकरण्यासंभवात्, अतः कुत्सितरूप इत्यादौ कुत्सितशब्दः कुत्सोपलक्षितं द्रव्यमभिधत्ते। एवञ्च कुत्सितक इत्यत्रापि कुत्सितशब्दः कुत्सितरूपघटककुत्सितशब्दात् भेदाभावात् कुत्सोपलक्षितं द्रव्यमेवाभिधत्ते।

तथा च कुत्सितक इत्यत्र उपलक्षणीभूताऽवर्तमाना कुत्सा प्रकृत्यर्थः, सांप्रतिकीं कुत्सामभिधातुं तु कप्रत्यय इति विशेष इति। प्रकृतपद्ये पदयोजनात्वेवम्—कुत्सितक इत्यत्र कुत्सितशब्दात् सांप्रतिकी=वर्तमाना, कुत्सा प्रवृत्तिनिमित्तत्वविशेषणत्वाभ्यां न च प्रतीयते, कुत्सितरूप इत्येतद्घटककुत्सितपदात् कुत्सितरूप इत्येतद्घटकस्य कुत्सितपदस्य भेदाभावात्। कुत्सितरूप इत्येतद्घटककुत्सितपदेन चोपलक्षणतयैव कुत्साया बोधनात्। कुत्साप्रशंसयोर्यौगपद्यविरोधात्। पूर्वार्धमुपपादयितुमुत्तरार्धमाह—पूज्यते इत्यादि।

कुत्सितरूप इत्यादौ कुत्सितत्वेन उपलक्षणीभूतेन पूज्यते। कुत्साप्रशंसयोरुभयोर्विशेषणत्वे विरोधात्। प्रकृत्यर्थत्वेनाप्रधानीभूतायाः कुत्साया एव उपलक्षणत्वकल्पनाया औचित्यात्। गुणे त्वन्याय्यकल्पनेति न्यायात्। तद्यथा प्रशस्तत्वेनोपलक्षणीभूतेन अपरिसमाप्तेनाध्यारोपितेन वा शत्रुणा प्रशस्तक इत्यादौ कुत्स्यते देवदत्तादिरिति। एवञ्च प्रशस्तक इत्यत्र यथा प्रशंसा उपलक्षणं प्रकृत्यर्थः, कुत्सा तु कप्रत्ययार्थं इति, तथा कुत्सितक इत्यत्र कुत्सा उपलक्षणीभूता प्रकृत्यर्थः, सांप्रतिकी कुत्सा तु कप्रत्ययार्थ इति।

अयं भावः—कुत्सोपलक्षितस्य प्रियकुत्सनादिसाधारणस्य द्रव्यस्य कुत्सितशब्देनाभिधानात् कुत्सितक इत्यत्र कुत्सितशब्दाद् विशेषणतया वर्तमानकुत्साऽभिसम्बन्धो द्रव्यस्य नावधार्यते।

तथाहि तत्कुत्सोपलक्षितं द्रव्यं कदाचित् पूज्यते=प्रशस्यते अपि 'कुत्सितरूपः' इति। यथा वृषलरूपः, दस्युरूप इति। तद्यथा प्रशस्तत्वेनोपलक्षितं निन्द्यते प्रशस्तक इति, अपरिपूर्णप्रशंसोऽरि-

कस्यचिद्धि प्रशंसा न परिसमाप्ता, अंशेन खण्डितत्वात्। कस्यचित् प्रशंसा न विद्यते, अरिणाध्यारोपितत्वात्। कस्यचित्तु अरिणा प्रशस्तस्याप्यप्रशस्तत्वमारोप्यते। एवं कुत्साव्यभिचारसम्भवात् कुत्सितशब्दाद् वर्तमानकुत्सासम्बन्धमनवगतं द्योतयितुमुपपद्यते कप्रत्ययः। एवम् अनुकम्पितक इत्यनेनैव न्यायेनानुकम्पायां कप्रत्ययः समर्थनीय इति समानाधिकरणतद्धितवृत्तौ किञ्चिद् विचारितम् ॥ ५ ॥

यथा कुत्सादिभिः समाप्तार्थं पदं सम्बध्यते, तथा अवच्छेद्यावच्छेदकभावेनापीति समानाधिकरणसुब्वृत्तिं विचारयितुमाह—

**विशेषणविशेष्यत्वं पदयोरुपजायते।**
**न प्रातिपदिकार्थश्च तत्रैवं व्यतिरिच्यते ॥ ६ ॥**

---

णाध्यारोपितप्रशंसो वा। कस्यचिद् हि प्रशंसा न परिसमाप्ता, अशंतोऽपूर्णत्वात्। कस्यचित् प्रशंसा न विद्यते, शत्रुणाऽध्यारोपितत्वात्। कस्यचित् तु प्रशस्तस्यापि अरिणाऽप्रशस्तत्वमारोप्यते। तत्र यथा प्रशस्तक इत्यादौ प्रशंसाकुत्सयोर्विरोधात् प्रशंसोपलक्षितस्य कुत्साबोधे प्रशंसाया व्यभिचारः, एवं कुत्सितरूप इत्यादौ कुत्साप्रशंसयोर्विरोधे उपलक्षणत्वेन प्रकृत्यर्थभूतायाः कुत्साया व्यभिचारसंभवात् कुत्सितशब्दादनवगतं वर्तमानकुत्सासम्बन्धं द्योतयितुं कुत्सितक इत्यत्र कप्रत्यय उपद्यते।

एवम् अनुकम्पितक इत्यत्र अनेनैव न्यायेनानुकम्पायां कप्रत्ययः समर्थनीयः। तथाहि विद्याविभवादिहीनो दीनोऽनुकम्पितो भवति, विद्याविभवादिभिः समृद्धस्तु प्रशस्यते इत्येवमनुकम्पाप्रशंसयोर्विरोधेऽनुकम्पितक इत्यत्रानुकम्पितपदार्थेऽनुकम्पा उपलक्षणम् इति कप्रत्ययेन सांप्रतिकी अनुकम्पा बोध्यते इति न काप्यनुपपत्तिरित्येवं समानाधिकरणतद्धितवृत्तौ किञ्चिद विचारितमिति ॥ ५ ॥

यथा समाप्तार्थपदम्=स्वार्थे परिपूर्णं पदं कुत्सादिभिः सम्बध्यते, तथा तादृशमेवावच्छेद्यावच्छेदकभावेनापि इति अवच्छेद्यावच्छेदकभावसंबन्धविषयिणीम्=विशेषणविशेष्यभावविषयां कर्मधारयसमासरूपां समानाधिकरणसुब्वृत्तिम्=समानाधिकरणसुबन्तपदसम्बन्धिनीं वृत्तिं विचारयितुमाह—विशेषणविशेष्यत्वमिति—

अस्यार्थः—'वीरः पुरुषः' इत्यादौ पादयोः परस्परं समन्वितयोः सतस्तदर्थयोर्विशेषणविशेष्यत्वं वाक्यार्थरूपं पदार्थादधिकमुपजायते। तत्र 'वीरः पुरुषः' इत्यादौ प्रातिपदिकार्थश्च तु=एवम्=वाक्यार्थवत् न व्यतिरिच्यते। पदार्थदधिको न भवति, किन्तु पदार्थान्तर्गत एव=स्वनिष्ठ एव भवति। यद्वा एवम्=पदार्थवद्, न व्यतिरिच्यते, न अर्थान्तररूपेण विपरिणमते इत्यर्थः। पदार्थो यथा वाक्यार्थरूपेण परिणमते तथा प्रातिपदिकार्थो नार्थान्तररूपेण=विशेष्यविशेणान्यतररूपेण परिणमते इति पर्यवसितम्। एवञ्च "प्रातिपदिकार्थमात्रे प्रथमाविधाने पदसमानाधिकरण उपसंख्यानम्" इति वार्त्तिकं न कर्तव्यम्। विशेष्यविशेषणभावस्य वाक्यार्थत्वेन प्रातिपदिकार्थत्वाभावात्। प्रातिपदिकार्थमात्रे प्रथमायाः 'वीरः पुरुषः' इत्यादावबाधादिति।

इह 'वीरः पुरुषः' इति वीरादिशब्दोऽनपेक्षितेतरेतरपदसमन्वयोऽव्यतिरिक्तस्वार्थमात्रवचनः। तथा च पदान्तरसंनिधानेऽपि तस्य तावत्येवाभिधा निश्चीयते, तत्र च सम्बन्धे गुणप्रधानभावस्यावश्यंभावाद् विशेषणविशेष्यभावो वाक्यार्थः पदयोः समन्वितयोरधिको जायते, न प्रातिपदिकार्थयोः। यथा 'राज्ञः पुरुषः' इत्यत्र व्यधिकरणपदविषये राजप्रातिपदिकार्थस्यैव विशेषणत्वमिति ततः षष्ठी न विशेष्यादुपकार्यत्वेन स्वनिष्ठात्। तथा च "षष्ठी शेषे" (पा० २।३।५०) इत्यत्रोक्तम्—'अर्थरूपमेवैवंजातीयकम्' इति। विशेष्यलक्षणरूपमव्यतिरिक्तस्वार्थं स्वनिष्ठमित्यर्थः।

यदा च समानाधिकरणविषये विशेषणविशेष्यभावे पदार्थपृष्ठपातित्वेन वाक्यार्थता, तदा तत्र प्रातिपदिकार्थो न व्यतिरिच्यते रूपान्तरेण न विपरिणमत इति प्रथमा नोपसङ्ख्येया। तथा चोक्तं 'न वा वाक्यार्थवद् यदत्राधिक्यं वाक्यार्थः सः' इति। व्यधिकरणविषये तु विशेषणस्य रूपान्तरापत्तिमवसाय भेदमबुद्ध्वा चोदितम्—'प्राति-

---

अयं भावः—इह 'वीरः पुरुषः' इत्यत्र वीरादिशब्दोऽनपेक्षितेतरेतरपदसमन्वय एक एवावस्थितोऽव्यतिरिक्तस्वार्थमात्रवचनः। तथा च पदान्तरसन्निधानेऽपि तस्य तावत्येवार्थेऽभिधा निश्चीयते। तत्र च पदार्थयोः सम्बन्धे गुणप्रधानभावस्यावश्यंभावात् पदयोः समन्वितयोः सतोः पदार्थयोर्विशेषणविशेष्यभावो वाक्यार्थरूपोऽधिको जायते, न प्रातिपदिकार्थयोर्विशेषणविशेष्यभावः, पदार्थबोधपृष्ठपातित्वाद् वाक्यार्थबोधस्य। यथा विभक्त्यर्थस्य संसर्गत्ववादिनां मते 'राज्ञः पुरुषः' इत्यत्र व्यधिकरणपदविषये=असमानार्थकपदविषये राजप्रातिपदिकार्थस्यैव विभक्त्यर्थसंसर्गेण पुरुषे विशेषणत्वमिति ततः=विशेषणरूपार्थबोधकाद् राजेति प्रातिपदिकात् षष्ठी, न तु प्रथमा; विशेषणत्वरूपप्रातिपदिकार्थातिरिक्तार्थबोधकत्वेन प्रातिपदिकार्थमात्रे प्रथमा इत्यस्याप्रवृत्तेः, विशेष्यवाचकात्तु पुरुषपदादुपकार्यत्वेन स्वनिष्ठात्=उपकार्यत्वप्रयुक्तेन प्रधानत्वेन स्वार्थमात्रपर्यवसितात् प्रथमैव, न षष्ठी; प्रथमाया अविषये षष्ठयाश्चरितार्थत्वात्। तथा च "षष्ठी शेषे" (पा० २।३।५०) इत्यत्रोक्तम् "अर्थरूपमेवैवं जातीयकम्" इति।

अस्यार्थः—एवं जातीयकम्=अव्यतिरिक्तस्वार्थम्=प्रातिपदिकार्थातिरिक्तविशेष्यविशेषणभावादिरूपस्वार्थरहितम्, स्वनिष्ठम् = स्वार्थमात्रनिष्ठम्=प्रातिपदिकार्थमात्रपर्यवसितमेवैतद् विशेष्यलक्षणयुक्तं रूपम्, पुरुषे उपकार्यत्वविशेष्यत्वयोः राजसम्बन्धनियम्यत्वेन प्रातिपदिकार्थत्ववाक्यार्थत्वयोरभावेन पुरुषपदस्य प्रातिपदिकार्थमात्रवृत्तितया प्रथमोपपत्तेरिति। यदा च 'वीरः पुरुषः' इत्यादौ समानाधिकरणपदविषये विशेषणविशेष्यभावे पदार्थपृष्ठपातित्वेन=पदार्थबोधानन्तरं जायमानशाब्दबोधविषयत्वेन वाक्यार्थता, तदा तत्र='वीरः पुरुषः' इत्यादौ समानाधिकरणपदविषये प्रातिपदिकार्थो न व्यतिरिच्यते=रूपान्तरेण प्रातिपदिकार्थातिरिक्तेन विशेषणत्वेन रूपेण न विपरिणमते इति 'वीरः पुरुषः' इत्यादौ विशेषणे विशेष्ये वा प्रथमा स्वतः सिद्धेति सा नोपसंख्येया। तथा चोक्तम्—"न वा वाक्यार्थत्वाद्, यदत्राधिक्यं वाक्यार्थः सः" इति।

अस्यार्थः—'वीरः पुरुषः' इत्यादौ प्रथमा न वा नैवोपसंख्येया, विशेषणविशेष्यभावस्य वाक्यार्थत्वात्, =वाक्यार्थत्वेन प्रातिपदिकार्थत्वाभावाद्, यदत्राधिक्यं विशेषणविशेष्यभावरूपं

पदिकार्थमात्रे प्रथमाविधाने पदसमानाधिकरण उपसङ्ख्यानमधिकत्वाद्' इति ।

अवच्छेद्यावच्छेदकभावस्य चानियमश्चोदितः । 'विशेषणविशेष्ययोरुभय-विशेषणत्वादुभय विशेष्यत्वाच्चोपसर्जनाप्रसिद्धिः' इति ।

विशेष्याभिमतेनापि विशेषणाभिमतस्य स्वात्मनि नियमनात् तस्यापि तं प्रति विशेषणत्वमिति द्वयोरपि विशेषणत्वमिति समासशास्त्रे प्रथमानिर्देशादुपसर्जनसंज्ञायां पूर्वनिपातः पर्यायेण स्यात् । अत्र समाधिरुक्तः 'न वान्यतरस्य प्रधानभावात् तद्विशेषणत्वाच्चेतरस्योपसर्जनस्य प्रसिद्धिः' इति ॥ ६ ॥

तत्र नियमेन गुणप्रधानभावः किङ्कृत इति व्याचष्टे—

---

वाक्यार्थः स इति । 'राजः पुरुष' इत्यादौ व्यधिकरणपदविषये तु विशेषणस्य राजप्रातिपदिकार्थस्य रूपान्तरापत्तिम्=विशेषणत्वेन रूपेण विपरिणतिम् अवसाय=अवधार्य भेदमबुद्ध्वा='राज्ञः पुरुषः' इत्यादौ व्यधिकरणपदविषये राजप्रातिपदिकार्थस्य विशेषणत्वेन विपरिणाम इति प्रातिपदिकार्था-दधिकार्थवृत्तित्वेन ततः प्रथमाया अप्राप्तिः, 'वीरःपुरुषः'इत्यादौ समानाधिकरणपदविषये तु विशेषण-विशेष्यभावस्य पदार्थपृष्ठपातित्वेन वाक्यार्थत्वाद् वीरपुरुषप्रातिपदिकयोः प्रातिपदिकार्थमात्रवृत्ति-त्वेन प्रथमायाः प्राप्तिरिति भेदमविज्ञाय चोदितं वार्त्तिककृता—"प्रातिपदिकार्थमात्रे प्रथमाविधाने पदसमानाधिकरणे उपसंख्यानमधिकत्वाद्" इति ।

अस्यार्थः—प्रातिपदिकार्थमात्रे प्रथमाविधाने सति 'वीरः पुरुषः' इत्यादौ पदसमानाधि-करणे=पदयोः सामानाधिकरण्ये प्रथमाया उपसंख्यानं कर्तव्यम्, अधिकत्वात्, विशेषणविशेष्य-भावरूपस्यार्थस्य प्रातिपदिकार्थादधिकत्वेन प्रातिपदिकार्थमात्रवृत्तित्वाभावेन प्रथमाया अप्राप्ते-रिति । अवच्छेद्यावच्छेदकभावस्य च=विशेषणविशेष्यभावस्य च अनियमः=नियतत्वाभावः चोदितो भाष्ये—"विशेषणविशेष्ययोरुभयविशेषणत्वादुभयविशेष्यत्वाच्चोपसर्जनाप्रसिद्धिः" इति ।

अस्यार्थः—'नीलमुत्पलम्' इत्यादौ विशेषणविशेष्ययोः तत्त्वाभ्यामभिमतयोरुभयोर्विशे-षणत्वादुभयोर्विशेष्यत्वाच्चोपसर्जनाप्रसिद्धिः,विशेषणस्यैव प्रधानत्वेनोपसर्जनत्वात् । एकस्मिन् विशेषण-त्वस्य चानियमात् । एवञ्च 'नीलमुत्पलम्' इत्यादौ समासे पर्यायेण द्वयोः पूर्वनिपातः स्यादित्यनिष्ट-मापद्येत । विशेष्यत्वेनाभिमतेनापि विशेषणत्वेनाभिमतस्य स्वात्मनि=स्वस्वरूपे नियमनाद् विशेष्यस्यापि तं प्रति विशेषणत्वमिति "विशेषणं विशेष्येण बहुलम्" (पा० २।१।५७) इति समासशास्त्रे उभयोरपि विशेषणत्वेन प्रथमानिर्देशादुपसर्जनसंज्ञायां द्वयोरपि पर्यायेण पूर्वनिपातः स्यात् । नीलोत्पलम्, उत्पलनीलमिति । अत्र समाधानमुक्तम् "न वान्यतरस्य प्रधानभावात् तद्विशेषणत्वाच्चेतरस्योपसर्जनस्य प्रसिद्धिः" इति ।

अस्यार्थः—न वा एष दोषः; अन्यतरस्य द्रव्यस्य प्रधानत्वात्, इतरस्य च गुणादेस्तद्विशे-षणत्वादुपसर्जनस्य भवत्येव नियता प्रसिद्धिरिति । यत्र तूभयोरपि क्रियापरत्वम्, तत्र तु विशेषणत्वविशेष्यत्वयोरनियमेन भवत्येव पूर्वनिपातानियमः, खञ्जकुब्जः कुब्जखञ्ज इति ॥ ६ ॥

तत्र=अन्यतरस्य प्रधानत्वमेव, इतरस्य तद्विशेषणत्वमेवेति स्थिते नियमेन गुणप्रधान-भावः किङ्कृत इति व्याचष्टे-विशेष्यं स्यादिति ।

विशेष्यं स्यादनिर्ज्ञातं निर्ज्ञातार्थो विशेषणम् ।
परार्थत्वेन शेषत्वं सर्वेषामुपकारिणाम् ॥ ७ ॥

इह विशेषणविशेष्ययोर्लक्षणमन्वर्थेन नाम्नैवावेदितम्, भेद्यं विशेष्यम्, भेदकम् विशेषणमिति । इदं तु गुणप्रधानताज्ञापनार्थम् । तत्रोच्यते—सम्बन्धान्यथानुपपत्त्या च सिद्धो गुणप्रधानभावः, द्वयोः समयोः सम्बन्धायोगादिति कुतः सङ्करः ? प्रसिद्ध्यप्रसिद्धिभ्यां व्यवस्थापनात् ।

तथाहि—सामान्यात्मना क्रियासम्बन्धितायामुपक्रान्तं विशेष्यं ज्ञातमपि स्वगतेनात्मभूतेन विशेषणानिश्चितमिति तन्निश्चयाय ज्ञापकत्वादेव निश्चितोऽर्थो गुणादिः प्रवर्तमानो विशेषणम् । ततश्च ज्ञाप्यं प्रधानं विशेष्यम्, ज्ञापकं परोपकारायोपादीयमानं शेषभूतमप्रधानं विशेषणम् । द्रव्यस्य च साक्षात्क्रियासम्बन्धात् तदेव तत्र प्रधानम् ।

---

अस्यार्थः—अनिर्ज्ञातम् इतरव्यावृत्ततयाऽविज्ञातं द्रव्यं विशेष्यं स्यात् । निर्ज्ञातार्थः निर्ज्ञातश्च गुणक्रियादिरूपोऽर्थो विशेषणम् । निर्ज्ञातार्थ इत्यत्र कर्मधारयसमासः, पुंस्त्वेन निर्देशात् । निर्ज्ञातत्वं भ्रमप्रमासाधारणनिश्चयविषयत्वम्, आरोपप्रकारीभूते अपि मरुमरीचितोयगतोत्तुङ्गतरङ्गत्वादौ विशेषणत्वदर्शनात् । इदञ्च विशेषणविशेष्ययोर्लक्षणद्वयमन्वर्थेन नाम्नैव ज्ञापितम् । भेद्यम् इतरव्यावृत्ततया ज्ञाप्यं विशेष्यम् । विशिष्यते इतरव्यावृत्ततया ज्ञाप्यते इति विशेष्यम् 'ऋहलोर्ण्यत्' (पा० ३।१।१२४) भेदकम् । स्वाश्रयस्य इतरव्यावृत्ततया ज्ञापकं विशेषणम् । विशिष्यते इतरव्यावृत्ततया ज्ञाप्यते स्वाश्रयो येन तद् विशेषणम् । करणे ल्युट् । एवञ्च सर्वेषां गुणक्रियादिरूपाणामज्ञातज्ञापकत्वेन स्वाश्रयोपकारिणां परार्थत्वेन = विशेष्यरूपस्वाश्रयोपकारकत्वेन शेषत्वम्, अप्रधानत्वरूपं गुणत्वमेव । एञ्चोपकार्यस्य विशेष्यस्य शेषित्वरूपं प्रधानत्वमर्थादुक्तं भवति इति ।

अयं भावः—इह विशेषणविशेष्ययोरन्वर्थेन नाम्नैव लक्षणमावेदितम्, भेद्यम् = व्यावर्त्यं विशेष्यम्, भेदकम् = व्यावर्तकं विशेषणमिति । इदं तु स्वस्वनामलभ्यं विशेषणविशेष्ययोर्लक्षणं तयोर्गुणप्रधानभावप्रज्ञापनार्थं कारिकायामुच्यते । तत्रोच्यते = तस्मिन् तत्तन्नामलभ्ये तत्तल्लक्षणे स्थितेऽन्यदपि गुणप्रधानभावज्ञापकं निमित्तं समयोः पदार्थयोः सम्बन्धान्यथाऽनुपपत्तिलभ्यं प्रसिद्ध्यप्रसिद्धिरूपं कारिकयैवोच्यते पूर्वार्धेन । समयोः द्वयोः पदार्थयोः परस्परं सम्बन्धान्यथानुपपत्त्या च सिद्धस्तयोर्गुणप्रधानभावः, द्वयोः समयोः सम्बन्धायोगादिति कुतो विशेषणत्वविशेष्यत्वयोः संकरः, प्रसिद्ध्यप्रसिद्धिभ्यां तयोर्विवेकेन व्यवस्थापनात् ।

तथाहि—घटादि द्रव्यं स्वस्य क्रियासम्बन्धितायां क्रियमाणायां सामान्यात्मना = द्रव्यत्वेदन्त्वादिरूपेण उपक्रान्तम् = उपक्रमे स्थितम्, एवं सामान्यात्मना ज्ञातमपि विशेष्यं स्वगतेनात्मभूतेन = तादात्म्यापन्नेन विशेषेण असाधारणधर्मेण जात्यादिरूपेणानिश्चितमिति तन्निश्चयाय प्रवर्तमानो ज्ञापकत्वादेव पूर्वं निश्चितोऽर्थो गुणादिर्विशेषणम् ।

ततश्चाविज्ञातं ज्ञाप्यं ज्ञाप्यत्वादेवोपकार्यं तत्त्वादेव प्रधानं विशेष्यम् । ज्ञापकम् परोपकाराय = परस्य विशेष्यस्याज्ञातस्य ज्ञापनरूपोपकारायोपादीयमानम् स्वयं तु विज्ञातमुपकार-

गुणस्तु तद्द्वारेण क्रियासम्बन्धमनुभवन् द्रव्यावच्छेदकोऽप्रधानभूतः। सर्वत्रैव सगुणस्य द्रव्यस्य क्रियासम्बन्धितया विधीयमानत्वम्। आधारद्वारको वा गुणानां क्रियासम्बन्धः। न तु द्रव्यमनूद्य गुणस्य पृथक् क्रियायां विधानमिति व्यवस्थितो गुणप्रधानभावः। तेन 'कृष्णाजिनमुलूखलस्याधस्तादवस्तृणाति', 'कृष्णाजिनेन दीक्षयति'। 'कृष्णविषाणया कण्डूयति' इत्यादौ सर्वत्र गुणविशिष्टस्य द्रव्यस्य विधानात् तस्यैव प्राधान्ये सति विशेष्यत्वमितरस्य तु कृष्णगुणस्य विशेषणत्वमित्युपसर्जनप्रसिद्ध्यर्थमवस्थितो गुणप्रधानयोर्नियमः। स च समानाधिकरणसमासे षष्ठीसमासे च ॥ ७ ॥

तथाहि—

**विभक्तिभेदो नियमाद् गुणगुण्यभिधायिनोः।**
**सामानाधिकरण्यस्य प्रसिद्धिर्द्रव्यशब्दयोः ॥ ८ ॥**

---

कत्वादेव शेषभूतम्=विशेष्यस्याङ्गभूतम्, तत्त्वादेवाप्रधानं विशेषणम्। द्रव्यस्य च साक्षात् क्रियासम्बन्धाद् द्रव्यमेव। तत्र=सक्षात् परम्परया वा क्रियान्वयिषु बहुषु द्रव्यगुणादिषु प्रधानम्। गुणस्तु तद्द्वारेण=द्रव्यद्वारेण क्रियासम्बन्धमनुभवन् द्रव्यावच्छेदकः=द्रव्यस्य व्यावर्तकः अप्रधानभूतः। सर्वत्रैव हि वाक्ये सगुणस्य द्रव्यस्य क्रियासम्बन्धितया विधीयमानत्वम्। स्वाधारद्रव्यद्वारको वा=स्वाधारनिष्ठतत्तत्कारकशक्तिनिरूपकत्वसम्बन्धेन वा गुणानां क्रियासम्बन्धः, न तु द्रव्यमनूद्य गुणस्य क्रियायां पृथग्विधानमिति व्यवस्थितो गुणप्रधानभावः=गुणविशिष्टस्य द्रव्यस्य क्रियासम्बन्धितया विधाने गुणे गुणत्वम्, द्रव्ये तु प्रधानत्वमिति गुणप्रधानभावो नियत इति। तेन "कृष्णाजिनमुलूखलस्याधस्तादवस्तृणाति, कृष्णाजिनेन दीक्षयति, कृष्णविषाणया कण्डूयति" इत्यादौ सर्वत्र गुणविशिष्टस्य द्रव्यस्य विधानात् तस्यैव प्राधान्ये सति विशेष्यत्वम्, इतरस्य तु=कृष्णगुणस्य विशेषणत्वमित्युपसर्जनसंज्ञा प्रसिद्धचर्थमवस्थितो गुणप्रधानयोर्नियमः। स च उपसर्जनत्वप्रसिद्धचर्थो गुणप्रधानभावः 'वीरपुरुषः' इत्यादौ समानाधिकरणसमासे 'राजपुरुषः' इत्यादौ व्यधिकरणपदघटिते षष्ठीसमासे च। तत्र 'राज्ञः पुरुषः' इत्यादौ विभक्तिभेदेन शाब्दो गुणप्रधानभावः, 'वीरपुरुषः' इत्यादौ समानाधिकरणे तु विभक्तिभेदाभावादार्थ इति ॥ ७ ॥

तदाह-विभक्तिभेद इति।

अस्यार्थः—'राज्ञः पुरुषः' इत्यादौ व्यधिकरणे विषये यथायथं गुणगुण्यभिधायिनो राजपुरुषशब्दयोर्गुणगुण्यभिधाननियमाद् विभक्तिभेदः। तत्र गुणाभिधायिनो राजपदात् षष्ठी, न तु प्रथमा, स्वार्थातिरिक्तस्य विशेषणत्वस्याभिधानात्, पुरुषपदात् तु प्रथमा, तस्य स्वार्थमात्रनिष्ठत्वात्। 'वीरः पुरुषः' इत्यादौ द्रव्यवाचकयोर्द्वयोः शब्दयोस्तु सामानाधिकरण्यस्य प्रकारभेदेऽपि विशेष्यभूतैकार्थनिष्ठत्वस्य प्रसिद्धिः, अतः स्वार्थमात्रनिष्ठत्वाद् द्वयोरपि वीरपुरुषपदयोः प्रथमा। तत्र 'राज्ञः पुरुषः' इत्यादौ व्यधिकरणविषये गुणप्रधानभावः शाब्दः, षष्ठ्या स्वस्वामिभावरूपस्य सम्बन्धस्य बोधनेन तन्मूलकस्य विशेष्यविशेषणभावस्य गुणप्रधानभावरूपस्य तत्र बोधात्। 'वीरः पुरुषः'

पटस्य शुक्ल इति द्रव्यगुणाभिधायिपदप्रयोगे शाब्दो गुणप्रधानभावः। तथा ह्यत्रोपसर्जनं प्रधानोपकारपरिणतं स्वार्थमाचष्ट इति गुणविभक्तिं षष्ठीमुपादत्ते। प्रधानं तु स्वात्मन्यवस्थितमपरोपकारीति प्रथमया युज्यत इति नियतो विभक्तिभेदो व्यधिकरणे विषये। 'वीरः पुरुषः' इत्यादौ तु समानाधिकरणे विषये द्वावपि द्रव्यशब्दौ स्वनिष्ठं स्वार्थमाचक्षाते। तथा च तत्र प्रथमैव। सामर्थ्यनिबन्धनस्तु गुणप्रधानभाव उक्तः 'विशेष्यं स्यादनिर्ज्ञातम्' (का० ७) इत्यादिना। एवञ्च सत्यपि गुणप्रधानभावे शब्दाशब्दत्वकृतो विशेषः सामानाधिकरण्यवैयधिकरण्ययोरिति षष्ठीसमानाधिकरणयोः समासयोर्भेदः ॥ ८ ॥

यदि तर्हि समानाधिकरणे विषये द्वावपि द्रव्यशब्दौ परस्परानुपकारकप्रधानार्थवाचकौ, विशेषणविशेष्यभावात्मकः, तदा कथमनयोः परस्परसम्बन्ध इत्यत आह—

**द्रव्येऽनिर्ज्ञातजातीये कृष्णशब्दः प्रयुज्यते।**
**अनिर्ज्ञातगुणे चैव तिलशब्दः प्रवर्तते ॥ ९ ॥**

---

इत्यादौ समानाधिकरणविषये तु गुणप्रधानभाव आर्थः। अर्थसामर्थ्यात् प्राप्ताभ्यामनिर्ज्ञातत्वनिर्ज्ञातत्वाभ्यां तदाक्षेपादिति।

अयं भावः—'पटस्य शुक्लः' इति द्रव्यगुणाभिधायिनोः पदयोः प्रयोगे शाब्दो गुणप्रधानभावः।

तथा हि—अत्र शुक्लपदार्थे उपसर्जनीभूतार्थबोधकं पटपदं प्रधानस्य शुक्लपदार्थस्य उपकाराय तदुपकारयोग्याकारेण परिणतं स्वार्थमाचष्टे इति स्वार्थातिरिक्तस्य प्रधानोपकारित्वस्याप्यभिधानात् प्रथमायाः प्रातिपदिकार्थमात्रे विधीयमानाया अप्राप्तौ गुणविभक्तिम्=पटे अप्रधानत्वरूपस्य गुणत्वस्य बोधिकां षष्ठीमुपादत्ते। प्रधानं तु शुक्लपदार्थः स्वात्मनि इतराविशेषणतया प्राधान्येनावस्थितमपरोपकारि=परोपकारित्वाभाववदिति प्रथमया युज्यते इत्येवं नियतो व्यधिकरणविषये विभक्तिभेदः। 'वीरः पुरुषः' इत्यादौ तु समानाधिकरणविषये द्वावपि द्रव्याभिधायिनौ शब्दौ स्वनिष्ठम्=स्वस्मिन् परिसमाप्तं परपदार्थाविशेषणीभूतं स्वार्थमाचक्षाते।

तथा च स्वार्थमात्राभिधायित्वात् तत्र उभयोरपि प्रथमैव। अर्थस्वभावसामर्थ्यनिबन्धनस्तु तयोर्गुणप्रधानभावः कारिकायामुक्तो विशेष्यं स्यादनिर्ज्ञातमित्यादिना। एवञ्च समानाधिकरणविषये व्यधिकरणविषये च उभयत्रापि सत्यपि गुणप्रधानभावे शाब्दाशाब्दत्वकृतो विशेषः सामानाधिकरण्यवैयधिकरण्ययोरिति षष्ठीसमाससमानाधिकरणसमासयोर्भेद इति ॥ ८ ॥

यदि तर्हि समानाधिकरणे विषये 'कृष्णास्तिलाः' इत्यादौ द्वावपि द्रव्यशब्दौ परस्परानुपकारकप्रधानार्थवाचकौ, तदा विशेषणविशेष्यभावात्मकः कथमनयोः परस्परं सम्बन्ध इत्याशङ्क्याह—द्रव्येऽनिर्ज्ञातजातीये इति।

अस्यार्थः—'कृष्णास्तिलाः' इत्यादौ अनिर्ज्ञातजातीये द्रव्ये अभेदोपचारान्मतुब्लोपाद् वा कृष्णशब्दो द्रव्ये वर्तते इति कृष्णद्रव्ये तिलत्वजातिज्ञापनाय तिलशब्दो विशेषणवाची प्रयुज्यते।

अभेदोपचारान्मतुब्लोपाद्वा कृष्णशब्दो द्रव्ये वर्तते। स च गुणनिमित्तक इति तत्र नियतजातीयतया निश्चयस्ततो नास्ति। अविनाभावात् तु जातिमात्रमवधार्यत एव। एवं तिलशब्दोऽपि जातिनिमित्तोऽनिश्चितनियतगुणसम्बद्धे द्रव्ये वर्तते। तथा च द्वयोरपि विशेषाकाङ्क्षित्वम् ॥ ९ ॥

एवमपि कथं परस्परेण सम्बन्ध इत्याह—

**सामान्यानामसम्बन्धात् तौ विशेषे व्यवस्थितौ ।**
**रूपाभेदाद् विशेषं तमभिव्यङ्क्तुं न शक्नुतः ॥१०॥**

अनिश्चितनियतजातिगुणानि कृष्णतिलशब्दाभिधेयानि द्रव्याणि सामान्यान्यत्र विवक्षितानि। तेषामत्र स्वात्मव्यवस्थितानां परस्परोपकाराभावात् सम्बन्धो न

---

अनिर्ज्ञातगुणे चैव तिले तिलशब्दः प्रवर्तते इति तिलेऽज्ञातकृष्णगुणज्ञापनाय कृष्णशब्दो विशेषणवाची प्रयुज्यते। एवञ्च यद्यपि परस्परं सम्बन्धात् प्राक् तयोर्द्वयोरपि द्रव्यसामान्यवाचित्वम्, तथापि परस्परं सम्बन्धे सति तयोर्द्वयोरपि पर्यायेण विशेषणवाचित्वेन विशेषणविशेष्यभावसम्भव इति।

अयं भावः—गुणतदाधारद्रव्ययोरभेदोपचारान्मतुब्लोपाद् वा=कृष्णशब्दाद् गुणवचनाद्-विहितस्य मतुपः "गुणवचनेभ्यो मतुपो लुविष्टः" इति वार्त्तिकेन लोपाद् वा कृष्णशब्दो द्रव्ये वर्तते। स च गुणनिमित्तकः=गुणप्रवृत्तिनिमित्तक इति तत्र नियतगुणतया निश्चयसत्त्वेऽपि नियत-जातीयतया निश्चयस्ततो नास्ति। गुणस्य जातिसामानाधिकरण्याविनाभावात् तु जातिमात्रम्=जातिसामान्यम् अवधार्यत एव। एवं तिलशब्दोऽपि जातिनिमित्तोऽनिश्चितनियतगुणसम्बद्धे=अनिश्चितो यो नियतो गुणस्तेन सम्बद्धे निश्चितनियतजातीये द्रव्ये वर्तते।

तथा च पर्यायेण द्वयोरपि सामान्यरूपत्वम्, विशेषरूपत्वम्, विशेषाकांक्षित्वञ्चेति ॥ ९ ॥

एवमपि=द्वयोरपि पर्यायेण विशेषाकाङ्क्षत्वेऽपि कथं परस्परेण सम्बन्ध इत्या-शङ्क्याह—सामान्यानामसम्बन्धादिति—

अस्यार्थः—सामान्यानां स्वस्वरूपव्यवस्थितानां निराकाङ्क्षतया परस्परोपकाराभावेना-सम्बन्धात्=सम्बन्धासम्भवात् तौ द्वावपि कृष्णतिलपदार्थौ परस्परसम्बन्धात् प्रागेव वक्तुर्बुद्धौ विशेषे व्यवस्थितौ। कृष्णशब्दस्तिलशब्दश्चेति इमौ द्वावपि तिलरूपे कृष्णे कृष्णशब्दः कृष्णरूपे तिले च तिलशब्दो विशेषे एव व्यवस्थितौ वक्तृबुद्धौ स्थितौ। किन्तु रूपाभेदाद् द्वयोरपि सामान्याभिधा-यित्वेन रूपभेदाभावात् तं विशेषम् वक्तृबुद्धौ स्थितं विशेषं परस्परसम्बन्धात् प्राक् प्रतिपत्तॄन् प्रति अभिव्यङ्क्तुं न शक्नुतः, अतः प्रतिपत्तॄन् प्रति तस्य विशेषस्याभिव्यक्तये तयोः परस्परं सम्बन्ध आवश्यक इति।

अयं भावः—अनिश्चितनियतजातीनि द्रव्याणि कृष्णशब्दाभिधेयानि, अनिश्चितनियत-गुणानि च द्रव्याणि तिलशब्दाभिधेयानि अत्र सामान्यानि विवक्षितानि। तेषामत्र सामान्यभूतानां तत्त्वादेव निराकाङ्क्षत्वेन स्वात्मव्यवस्थितानां स्वस्वरूपमात्रनिष्ठानां परस्परोपकाराभावात्=

स्यादित्येकवाक्यतावशात् सम्बन्धान्यथानुपपत्त्या प्रथममेवात्र विशेषे कृष्णतिलशब्दौ व्यवस्थितौ। कृष्णशब्देन ह्यत्र तिलजातीयमेवाभिधित्सितम्, तिलशब्देन च कृष्णगुणं द्रव्यम्। स च विशेषः प्रतिपत्तृभिः परस्परसम्बन्धात् प्रागवधारयितुं न शक्यते। अन्यजातीयेऽपि कृष्णशब्दस्य प्रवृत्तेरन्यगुणेऽपि तिलशब्दस्यैवंविधस्येति प्रतिपत्त्रपेक्षया विशेषानभिव्यक्तिरुच्यते। तदपेक्षयैव चान्विताभिधानपक्षे पदान्तरस्य विशिष्टार्थाभिव्यक्तिहेतुत्वं कथ्यते। वक्त्रभिप्रायात् तु विशिष्ट एवोपक्रान्तोऽर्थः सम्बन्धः ॥ १० ॥

स एव वाक्यैकतावशादभिव्यज्यत इत्याह—

**तावेवं सन्निपतितौ भेदेन प्रतिपादने।**
**अवच्छेदमिवाधाय संशयं व्यपकर्षतः ॥११॥**

एवमिति रूपाभेदाद् विवक्षितविशेषप्रतिपादने प्रतिपत्तारं प्रत्यशक्तत्वेन प्रवृत्तौ कृष्णतिलशब्दौ विशेषोपलक्षितस्य द्रव्यस्य प्रत्यायने प्रतिपत्तृगतं तिलातिल-

---

परस्परमज्ञातज्ञापनरूपोपकाराभावात् परस्परं सम्बन्धो न स्यादित्येकवाक्यतावशात्=निरूप्य-निरूपकभावापन्नविषयताप्रयोजकपदघटितत्वरूपपदैकवाक्यतावशात् प्रतिपत्तृबुद्धौ जायमानस्य तयोः परस्परं सम्बन्धस्य अन्यथानुपपत्त्या परस्परसम्बन्धात् प्रथममेवात्र कृष्णतिलशब्दौ वक्तृबुद्धौ विशेषे व्यवस्थितौ। कृष्णशब्देन हि तिलजातीयमेवात्राभिधित्सितम्, तिलशब्देन च कृष्णगुणं द्रव्यम्। स च विशेषः प्रतिपत्तृभिः परस्परसम्बन्धात् प्रागवधारयितुं न शक्यते। अन्यजातीयेऽपि कृष्णशब्दस्य प्रवृत्ते, कृष्णः पट इति, अन्यगुणकेऽपि च द्रव्ये तिलशब्दस्यैवंविधस्य प्रवृत्तेः, शुक्लः पट इति प्रतिपत्त्रपेक्षया अत्र विशेषानभिव्यक्तिरुच्यते, न तु वक्त्रपेक्षया। तदपेक्षयैव च=प्रति-पत्त्रपेक्षयैव च एकेन पदेन विशिष्टार्थाभिधाने पदान्तरस्य विशिष्टार्थाभिव्यक्तिहेतुत्वं कथ्यते। वक्त्रभिप्रायात् तु विशिष्ट एव उपक्रान्तः=उपक्रम एवावबुद्धोऽर्थः परस्परं सम्बद्ध इति ॥१०॥

यो वक्तृबुद्धौ उपक्रान्तो विशिष्टोऽर्थः स एव प्रतिपत्तारं प्रति वाक्यैकवाक्यतावशादभि-व्यज्यत इत्याह—तावेवं सन्निपतिताविति।

अस्यार्थः—एवं रूपाभेदाद्=सामान्यरूपेणाभिधीयमानस्य स्वरूपस्याभेदादुभयोः सामान्यवाचित्वात् परस्परोपकाराभावेन परस्परं निराकाङ्क्षत्वाद् भेदेन विशेषेणोपलक्षितस्य द्रव्यस्य प्रतिपादने कर्तव्ये सन्निपतितौ सम्बद्धौ तौ अवच्छेदम्=कृष्णस्य अकृष्णात्, तिलस्य अतिलाद् व्यावृत्तिमाधाय इव संशयं=कृष्णाकृष्णविषयकं सन्देहं, तिलातिलविषयकञ्च सन्देहं व्यपकर्षतः=अपनयत इति। पूर्वमेव वक्तृबुद्धौ विशिष्टस्य व्यवस्थितत्वेन अवच्छेदमाधाय इवेति शब्दप्रयोगः।

अयं भावः—एवमिति=अनेन प्रकारेण रूपाभेदात्=कृष्णतिलशब्दयोरसंबद्धयोः अभिन्नसामान्यरूपाभिधायित्वात् प्रतिपत्तारं प्रति विवक्षितकृष्णविशेषतिलविशेषप्रतिपादने अशक्तत्वेन विशेषोपलक्षितस्य द्रव्यस्य प्रत्यायने प्रवृत्तौ कृष्णतिलशब्दौ प्रतिपत्तृगतं तिलातिल-

विषयम्, कृष्णाकृष्णविषयं च सन्देहं निवारयतः, कृष्णशब्देऽन्यजातीयाद् व्यावृत्तिं तिलशब्दे चान्यगुणादाधाय। कृष्णशब्दो हि तिलजातीयमेव तिलशब्दसन्निधानेऽर्थमाहेत्यन्यजातीयात् तस्य निवृत्तिः। एवं तिलशब्दः कृष्णगुणमेवेत्यन्यगुणादस्यावच्छेदः। स चात्र पूर्वमेव स्वीकृत इतीवशब्दः। प्रतिपत्ता हि सति सम्बन्धेऽवच्छेदमेवैति।

तदुक्तं भाष्ये—"कृष्णशब्दस्तिलशब्देनाभिसम्बध्यमानो विशेषवचनः सम्पद्यते। तथा तिलशब्दः कृष्णशब्देनाभिसम्बध्यमानो विशेषवचनः सम्पद्यते" इति। तदानीं विशेषवचनत्वस्याभिव्यक्तिरित्यर्थः॥ ११॥

तदेवं सम्बन्धः समर्थितः। स चात्र सामानाधिकरण्यस्वभावः। सामानाधिकरण्यं च शब्दयोर्भिन्ननिमित्तप्रयुक्तयोरेकस्मिन्नर्थे वृत्तिरिति। यदि समानाभिधेयत्वलक्षणम्, तदा विशेषणविशेष्यभावोऽर्थद्वारकस्तयोर्नोपपन्नः, भेदाश्रयत्वात्। तस्यार्थैक्ये तदभावात्।

अथार्थयोः समानाश्रयत्वं सामानाधिकरण्यम्, तदा गुणद्रव्ययोरधिकरणान्तराभावात् कथमत्र तदुपपत्तिः? विशेषणविशेष्यभावस्तु स्याद् द्रव्यगुणयोः।

---

विषयकम्, कृष्णाकृष्णविषयकं च सन्देहं निवारयतः। तत्र कृष्णशब्दः तिलेऽन्यजातीयाद् व्यावृत्ति तिलशब्दश्च कृष्णे अन्यगुणाद् व्यावृत्तिमाधाय। कृष्णशब्दो हि तिलजातीयमेव तिलशब्दसन्निधानेऽर्थमाहेत्यन्यजातीयात् तस्य निवृत्तिः। एवं तिलशब्दः कृष्णगुणमेवेत्यन्यगुणादस्यावच्छेदः। स चात्र परस्परसम्बन्धात् पूर्वमेव वक्तृबुद्धौ स्वीकृत इतीवशब्दः। प्रतिपत्ता हि कृष्णतिलशब्दयोः परस्परं सति सम्बन्धे द्वयोरन्यस्मादवच्छेदमवैति।

तदुक्तं भाष्ये—"कृष्णशब्दस्तिलशब्देनाभिसम्बध्यमानो विशेषवचनः सम्पद्यते। तथा तिलशब्दः कृष्णशब्देनाभिसम्बध्यमानो विशेषवचनः सम्पद्यते" इति।

अस्यार्थः—तदानीम्=कृष्णतिलशब्दयोः परस्परं सम्बन्धोत्तरं द्वयोर्विशेषवचनत्वस्याभिव्यक्तिः, न तु निष्पत्तिः, वक्तृबुद्धौ प्रागेव निष्पन्नत्वादिति॥ ११॥

तदेवं 'कृष्णास्तिलाः' इत्यादौ सामानाधिकरण्ये कृष्णतिलयोर्विशेषणविशेष्यभावरूपः सम्बन्धः समर्थितः। स चात्र सामानाधिकरण्यस्वरूपः। सामानाधिकरण्यञ्च भिन्नप्रवृत्तिनिमित्तप्रयुक्तयोः शब्दयोरेकस्मिन्नर्थे वृत्तिः=अभिधादिरूपो व्यापार इति। यदि समानाभिधेयत्वलक्षणं तयोः सामानाधिकरण्यम्, तदार्थद्वारकस्तयोः=भिन्नप्रवृत्तिनिमित्तप्रयुक्तयोः शब्दयोर्विशेषणविशेष्यभावो नोपपन्नः, भेदाश्रयत्वात् तस्य=विशेषणविशेष्यभावरूपस्य सम्बन्धस्य, अर्थैक्ये तदभावात्=भेदाभावात्।

अथार्थयोः समानाश्रयत्वम्=एकाधिकरणवृत्तित्वम्, सामानाधिकरण्यम्, तदा गुणद्रव्ययोः=कृष्णतिलयोः एकस्याधिकरणान्तरस्याभावात् कथमत्र='कृष्णाः तिलाः' इत्यादौ तदुपपत्तिः=सामानाधिकरण्योपपत्तिः। द्रव्यगुणयोर्विशेषणविशेष्यभावस्तु 'राज्ञः पुरुषः' इत्यादौ वैयधिकरण्ये इव 'कृष्णास्तिलाः' इत्यादौ सामानाधिकरण्येऽपि स्यात्=सम्भवति, अतो न विशेषणविशेष्यभावः सामानाधिकरण्यस्वभावः, सामानाधिकरण्यानिरुक्त्या सामानाधिकरण्यसमनैयत्याभावात्।

अथ गुणस्य द्रव्यजातेश्चैकाधिकरण्यमाश्रीयते, तदा विशेषणविशेष्यभावो न स्यात्। तयोर्द्रव्यावच्छेदप्रवृत्तयोरन्योन्येनानभिसम्बन्धादित्येतदाशङ्क्य समर्थयितुमाह—

**द्रव्यात्मा गुणसंसर्गभेदादाश्रीयते पृथक्।**
**जातिसम्बन्धभेदाच्च द्वितीय इव गृह्यते ॥१२॥**

इह द्रव्यात्मा निरंशवस्तु तत्तदुपाधिभेदारूषितरूपं व्यवहारयोग्यमिति कृष्णगुणसमवायोपहितभेदमन्यदिव कृष्णतिलाभिधेयमाश्रीयते। एकैकव्यावृत्तिनिष्ठत्वाच्छब्दानां तदभिधेयं भागशः खण्डरूपमेव नियतं प्रतीयते। ततश्च जातिसमवायोपलक्षितं तिलशब्देन द्वितीयमिव द्रव्यं प्रत्याय्यते। एकस्यैव जातिगुणावच्छिन्नस्य प्रतिपादनादेकैकशब्दव्यापारापेक्षया विच्छिद्येव सम्प्रत्ययादिवशब्दः ॥१२॥

एतदेव समर्थयितुमाह—

**निमित्तैरभिसम्बन्धाद् या निमित्तसरूपता।**
**तयैकस्यापि नानात्वं रूपाभेदात् प्रकल्पते ॥१३॥**

---

अथ गुणस्य द्रव्यगतजातेश्च द्रव्ये ऐकाधिकरण्यम्=एकाधिकरणवृत्तित्वम् आश्रीयते, तदा गुणजात्योर्विशेषणविशेष्यभावो न स्यात्, तयोः=गुणजात्योर्द्रव्यावच्छेदप्रवृत्तयोरन्योऽन्येन=परस्परमनभिसम्बन्धादित्येतत् सर्वमाशङ्क्य समर्थयितुमाह—द्रव्यात्मागुणसंसर्गभेदादिति।

अस्यार्थः—'कृष्णास्तिलाः' इत्यादौ सामानाधिकरण्ये एकोऽपि द्रव्यात्मा कृष्णगुणसंसर्गभेदात् पृथक् पृथक्त्वेन भेदेनाश्रीयते। तिलत्वजातेः सम्बन्धभेदाच्च हेतोरारोपिताद् द्वितीय इव गृह्यते वस्तुतोऽद्वितीयोऽपि। गुणगतस्य जातिगतस्य च भेदस्य द्रव्ये आरोपादिवशब्दप्रयोग इति।

अयं भावः—इह यद्यपि द्रव्यात्मा वस्तुतो निरंशम्=निर्भागं वस्तु, तथापि 'कृष्णास्तिलाः' इत्यादौ बुद्धया तस्य भागद्वयं कल्प्यते। तस्य च कृष्णद्रव्यरूपस्य तिलद्रव्यरूपस्य च भागद्वयस्यैकं कृष्णतिलरूपं तृतीयं वस्तु अधिकरणमिति कृष्णतिलशब्दयोरर्थद्वारकं सामानाधिकरण्यमुपपद्यते। तच्च निरंशं कृष्णतिलशब्दाभिधेयं वस्तु कृष्णरूपतिलत्वजात्यादिरूपतत्तदुपाधिभेदारूषितरूपमेव व्यवहारयोग्यमिति कृष्णगुणतिलत्वजातिसमवायोपहितभेदमन्यदिव कृष्णतिलशब्दाभिधेयमाश्रीयते। शब्दानामेकैकव्यावृत्तिनिष्ठत्वात् तदभिधेयम्=कृष्णतिलशब्दाभिधेयं भागशः खण्डरूपमेव=कृष्णद्रव्यरूपं तिलद्रव्यरूपञ्च नियतं प्रतीयते। ततश्च तिलत्वजातिसमवायोपलक्षितं कृष्णगुणवद् द्रव्याद् द्वितीयमिव द्रव्यं तिलशब्देन प्रत्याय्यते। एकस्यैव जातिगुणावच्छिन्नस्य द्रव्यस्य कृष्णतिलशब्देन प्रतिपादनादेकैकशब्दव्यापारापेक्षया विच्छेद्येव=जातिगुणावच्छिन्ने प्रत्यये वस्तुतो विरामाभावेऽपि प्रत्ययस्य भिन्नविषयत्वेन विरम्येव संप्रत्ययादिवशब्द इति ॥ १२ ॥

एतदेव समर्थयितुमाह—निमित्तैरिति।

अस्यार्थः—भिन्नैर्गुणजात्यादिभिः प्रत्ययनिमित्तैः प्रत्ययस्याभिसम्बन्धाद् या प्रत्ययस्यैक-

निमित्ताद् गुणजात्यादेर्निमित्तवत्यर्थे द्रव्ये निमित्तसरूपप्रत्ययो जायमानः स्वप्रत्ययं विभक्तमेव दर्शयति ॥ १३ ॥

तथा च जातिगुणोपरागाद् भिन्नं द्रव्यद्वयमाधेयम्। तस्य त्वाधारभूतं तृतीयं द्रव्यमभिसम्बन्धकाले बुद्ध्या निर्भज्यत इत्याह—

**द्रव्यावस्था तृतीया तु यस्यां संसृज्यते द्वयम्।**
**तयोरवस्थयोर्भेदादाश्रयत्वे नियुज्यते ॥१४॥**

जातिगुणोपाधिसंसर्गप्रविभक्तशरीरद्वयमाधेयं यत्र संसृज्यते सम्भेदमापद्यते, तत् तृतीयं द्रव्यरूपमाधारभूतमवच्छेद्यम्। अवच्छेदकात् तस्माद् द्वयादन्यदाश्रयत्वे तयोर्द्वयोर्नियुज्यते कल्प्यते ॥ १४ ॥

कथमेकस्य वस्तुतो द्रव्यस्य भेदकल्पनेत्याह—

**बुद्ध्यैकं भिद्यते भिन्नमेकत्वं चोपगच्छति।**
**बुद्ध्यावस्था विभज्यन्ते सा ह्यर्थस्य विधायिका ॥१५॥**

---

द्रव्यविषयकस्यापि निमित्तसरूपता निमित्ताकारता तया रूपाभेदाद् = स्वरूपाभेदादेकस्यापि द्रव्यस्य नानात्वं प्रकल्पते प्रसिद्ध्यति।

अयं भावः—प्रत्ययनिमित्ताद् गुणजात्यादितो निमित्तवत्यर्थे = गुणजात्यादिरूपप्रत्ययनिमित्तवत्यर्थे द्रव्ये द्रव्यनिमित्तसरूपप्रत्ययः = गुणजात्याद्याकारकः प्रत्ययो जायमानः स्वप्रत्ययम् = द्रव्यप्रत्ययम् अविभक्तमविभक्तविषयकञ्च विभक्तमिव दर्शयति, गुणजात्यादिरूपनिमित्तभेदादिति ॥ १३ ॥

तथा च 'कृष्णास्तिलाः' इत्यादौ सामानाधिकरण्ये तिलत्वजातिकृष्णगुणसम्बन्धाद् भिन्नं द्रव्यद्वयमाधेयम्। तस्य तु द्रव्यद्वयस्यावयवभूतस्याधारभूतं तृतीयं द्रव्यं पदद्वयस्याभिसम्बन्धकालेऽपोद्धारबुद्ध्या द्विधा विभज्यते इत्याह—द्रव्यावस्था तृतीया इति।

अस्यार्थः—कृष्णरूपाश्रयतिलत्वजात्याश्रयद्रव्यद्वयापेक्षया तृतीया तु सा द्रव्यावस्था, यस्यां प्रागुक्तं द्वयं संसृज्यते। सा तु तृतीयावस्था स्वभागभूतप्रागुक्तद्रव्यद्वयप्रतियोगिकभेदात् तयोर्द्रव्यावस्थयोराश्रयत्वे नियुज्यते = कल्प्यते इति।

अयं भावः—'कृष्णास्तिलाः' इत्यादौ सामाधिकरण्ये तिलत्वादिजातिकृष्णरूपादिगुणोपाधिसंसर्गप्रविभक्तशरीरं द्रव्यद्वयमाधेयं यत्र संसृज्यते तादात्म्यरूपं संभेदम् = सम्बन्धम् आपद्यते, तत्तृतीयं द्रव्यरूपमाधारभूतमवच्छेद्यम् अवच्छेदकात् तस्माद् द्रव्यद्वयादन्यत् तृतीयं तयोर्द्वयोराश्रयत्वे नियुज्यते नियुक्तं क्रियते, कल्प्यते इति तु फलितार्थ इति ॥ १४ ॥

ननु कथं कृष्णास्तिलाः कृष्णतिला इत्यादौ सामानाधिकरण्ये वस्तुत एकस्य द्रव्यस्य भेदकल्पना इत्याशङ्क्याह—बुद्ध्यैकमिति।

अस्यार्थः—एकं कृष्णास्तिलाः कृष्णतिला इत्यादिवाक्यवृत्त्यन्यतरजन्यबुद्ध्यारूढं वाक्यार्थरूपं वृत्त्यर्थरूपं वा विशिष्टं वस्तु अपोद्धारबुद्ध्या विशेषणविषयया विशेष्यविषयया च भिद्यते = विभज्यते = भिन्नञ्च पदद्वयजन्यपदार्थद्वयविषयकबुद्धिद्वयारूढं वस्तु वाक्यजन्यया वाक्यार्थ-

इह प्रत्ययरूढार्थाभिधायिनः शब्दा यथाप्रत्ययं भेदाभेदाभ्यां व्यवहारं वर्तयन्ति। प्रत्ययश्च स्वनिमित्तानुविधानेनार्थाकारान् बहिर्निर्मिमीत इव।

तथा च प्राक् समासादुपाधिभेदाच्छुरितस्य द्रव्यद्वयस्याभिधानम्। समासे तु भेदस्तिरोहितः। सोऽर्थोऽन्तर्भूत इति पदसमुदायात्मकमेकं पदमभेदेन कृष्णतिला इत्यर्थमभिधत्ते।

तथा च 'नीलमञ्जरी, मत्तमधुकरी' इति पुंवद्भावः समानाधिकरणलक्षणः सिद्धः ॥१५॥

बुद्धिप्रकल्पितश्च भेदाभेदव्यवहारः कात्यायनाचार्यस्याप्यभिमत इत्याह—

**व्यपदेशिवदेकस्मिन् बुद्धया नानार्थकल्पना।**
**तयां कल्पितभेदः सन्नर्थात्मा व्यपदिश्यते ॥१६॥**

तत्र 'व्यपदेशिवयद्वचनम्, एकाचो द्वे प्रथमार्थम्' इति व्यपदेशिवद्भाववचनम् 'अवचनाल्लोकविज्ञानात् सिद्धम्' इति प्रत्याचक्षाणो वार्त्तिककारो बुद्धिप्रतिभासिनं शब्दार्थमभ्युपगच्छति। तथा हि बुद्धिसमारोपितभेदाश्रयेण मुख्यवदेकस्मिन्नपि

---

विषयया बुद्धया वृत्तिजन्यया च वृत्त्यर्थविषयया तदारूढं सदेकत्वमुपगच्छति। बुद्धया = पदजन्यया पदार्थविषयया, वाक्यजन्यया वृत्तिजन्यया च वाक्यार्थविषयया, वृत्त्यर्थविषयया च द्रव्यस्यावस्था एकत्वद्वित्वाभ्यां भिद्यमानास्तिस्रो विभज्यन्ते = विभक्ता भवन्ति, सा हि = बुद्धिर्हि अर्थस्य स्वाकारस्य स्वारूढस्य विधायिका इति।

अयं भावः—इह प्रत्ययारूढार्थाभिधायिनः = बौद्धार्थाभिधायिनः सर्वे शब्दा यथाप्रत्ययम् = यथाबुद्धि पदपदार्थयोर्वाक्यवाक्यार्थयोर्वृत्तिवृत्त्यर्थयोश्च भेदाभेदाभ्यां व्यवहारं वर्तयन्ति। प्रत्ययश्च स्वनिमित्तभूतपदवाक्यवृत्त्यन्यतमानुविधानेन तत्तदर्थाकारान् बहिर्निर्मिमीत इव।

तथा च प्राक् समासादुपाधिभेदरूषितस्य द्रव्यद्वयस्याभिधानम्। 'कृष्णतिलाः' इत्यादौ समासे तु भेदस्तिरोहितः। सोऽर्थोऽन्तर्भूतः = पदार्थवृत्त्यर्थेऽन्तर्भूत इति पदसमुदायात्मकमेकं पदं वृत्तिरूपमभेदेन कृष्णतिला इत्यर्थमभिधत्ते।

तथा च 'नीलमञ्जरी, मत्तमधुकरी' इत्यत्र पूर्वपदे पुंवद्भावः समानाधिकरणलक्षणः = सामानाधिकरण्यनिमित्तकः सिद्धो वृत्तौ पदद्वयस्यैकार्थाभिधायित्वादिति ॥ १५ ॥

'कृष्णास्तिला कृष्णतिलाः' इत्यादौ सामानाधिकरण्ये प्रागुक्तरीत्या बुद्धिप्रकल्पितश्च पदार्थस्य भेदाभेदव्यवहार. कात्यायनाचार्यस्याप्यभिमत इत्याह—व्यपदेशिवदेकस्मिन् इति।

अस्यार्थः—"व्यपदेशिवदेकस्मिन्" इति वार्त्तिके एकस्मिन् इण्धात्वादौ धातुतदर्थोभयात्मकसमुदायरूपान्यपदार्थविषयिण्या बुद्धया नानार्थत्वकल्पना = भेदकल्पना, एकोऽपि अर्थात्मा इण्धात्वादिरूपः, तया बुद्धया कल्पितभेदः सन् नानात्वेन व्यपदिश्यत इति।

अयं भावः—"तत्र व्यपदेशिवद् वचनम् एकाचो द्वे प्रथमार्थम्" इति व्यपदेशिवत् कार्यातिदेशपरं वार्त्तिकवचनम् 'अवचनाल्लोकविज्ञानात् सिद्धम्' इति प्रत्याचक्षाणो वार्त्तिककारो बुद्धिप्रतिभासिनं शब्दार्थमभ्युपगच्छति। अन्यथा इण्धातौ अन्यपदार्थाप्रसिद्धया एकाच्त्वानुपपत्तेर्द्विवचनं

द्विर्वचनादिकार्यं सिद्धम् । शब्दप्रयोगाच्च प्रत्ययस्य गौणमुख्ययोरविशेषः, साधकानुदयात् । अत एव 'प्रमाणविपर्ययविकल्पनिद्रास्मृतयः' इत्यत्र विकल्पाद् विपर्ययो भेदेनोक्तः । विकल्पो हि पुरुषस्य चैतन्यं स्वरूपमित्यत्राभिन्नस्यापि भेदप्रदर्शने 'राज्ञः पुरुषः' इतिवत् प्रतीतिसाम्यम् ॥ १६ ॥

शिलापुत्रकस्य शरीरमित्यभेदेऽपि भेदो लौकिको व्यपदेशिवद्भावे दृष्टान्तितः, तं व्याचष्टे—

**क्रियाभेदेन दृष्टानामश्मादीनां पुनः पुनः ।**
**किञ्चिद् दर्शनमन्येन दर्शनेनापदिश्यते ॥१७॥**

अनेकशः प्रेषणादिक्रियाभेदोपधारितभेदानां शिलापुत्रकादीनां विवक्षितैक-

---

न स्यात् । तथा हि—बुद्धिसमारोपितभेदाश्रयेण=बुद्ध्या इण्धात्वादौ समारोपितो यः पच्धात्वादौ प्रसिद्धो वर्णभेदस्तस्येण्धात्वादौ समाश्रयेण; मुख्यवत्=मुख्ये एकाचि पच्धात्वादाविव एकस्मिन्नपि इण्धात्वादौ द्विर्वचनादिकार्यं सिद्धम् । शब्दप्रयोगाच्च=इण्धातोर्यः प्रयोगभेदस्तमादाय इण्धातावपि भेदसत्वाच्च । इण्धातौ भेदप्रत्ययस्य गौणत्वमुख्यत्वयोरविशेषः, तत्र तत्प्रत्यये गौणत्वमुख्यत्वसाधकानुदयात् । अत एव "प्रमाणविपर्ययविकल्पनिद्रास्मृतयः" इत्यत्र विपर्ययो विकल्पाद् भेदेनोक्तः । विकल्पो हि पुरुषस्य चैतन्यं स्वरूपमित्यत्राभिन्नस्यापि भेदप्रदर्शने 'राज्ञः पुरुषः' इतिवद् प्रतीतिसाम्यम्=अबाधितत्वेन अबाधितविषयकत्वेन वा समा प्रतीतिरिति ।

यदि त्विदं ज्ञानं विपर्ययः स्यात्, तदाऽस्य विकल्पप्रत्ययस्यापि बाधः स्यादिति । वस्तुतस्तु इदं सर्वं हेलाराजमतमनुसृत्योक्तम् । दृश्यते हि—

एष वन्ध्यासुतो याति खपुष्पकृतशेखरः ।
कूर्मक्षीरचये स्नातः शशशृङ्गधनुर्धरः ॥

इत्यादिवाक्यार्थविषयकेऽपि विकल्पप्रत्यये प्रमात्वबाधः । तस्मान्नाबाधितत्वबाधितत्वाभ्यां विकल्पविपर्यययोर्भेदः, किन्तु अलीकार्थविषयकत्वमिथ्यार्थविषयकत्वाभ्यां भेदस्तयोरिति ॥ १६ ॥

शिलापुत्रकस्य शरीरमिति अभेदेऽपि भेदो लौकिकः=लौकिकव्यवहारगोचरो व्यपदेशिवद्भावे दृष्टान्तितः, तं व्याचष्टे—क्रियाभेदेन दृष्टानामिति ।

अस्यार्थः—पुनः पुनः क्रियाभेदेन उपलक्षितानां विशिष्टानाञ्च दृष्टानामश्मादीनां सम्बधि किञ्चिद् दर्शनम्, किञ्चित् क्रियाविशिष्टविषयकं दर्शनमन्येन दर्शनेन अन्यक्रियोपलक्षिताश्मविषयकेण दर्शनेन तादृशाश्मसम्बन्धितया अपदिश्यते । नानाक्रियासम्बन्धिनः शिलापुत्रकस्येदमेकक्रियासंबन्धिप्रतिनियतं शरीरमिति ।

अयं भावः—अनेकशः पेषणादिक्रियोपधारितभेदानाम्=अनेकशो दृष्टायाः पेषणादिक्रियायास्ताभिरुपधारितभेदानाम्, शिलापुत्रकादीनां विवक्षितैकक्रियासम्बन्धित्वेन ज्ञानमनेकक्रियाविषयकेण ज्ञानेन विवक्षितैकक्रियासम्बन्धितयाऽवच्छिद्यते । विषयविशिष्टयोर्ज्ञानयोश्चावच्छेद्यावच्छेदकभावे विषययोरपि अवच्छेद्यावच्छेदकभावः समायात्येव, सविषयकयोरेव ज्ञानयोरवच्छेद्यावच्छेदकभावाभ्युपगमात् ।

क्रियासम्बन्धित्वेन ज्ञानमनेकक्रियागतेन ज्ञानेन सम्बन्धितयावच्छिद्यते । नानाक्रिया-सम्बन्धिनः शिलापुत्रकस्येदमेकक्रियासम्बन्धि प्रतिनियतं शरीरमिति ॥ १७ ॥

एवमिणादिधातुविषयेऽप्येकाच्त्वं भेदकल्पनया भवतीत्याह—

**प्रयोगभेदाद् धातूनां प्रकल्प्य बहुरूपताम् ।**
**भेदाभेदावुपादाय क्वचिदेकाच्त्वमुच्यते ॥१८॥**

एकोऽच् यस्य सोऽयमेकाजिति बहुव्रीहावाश्रिते एकवर्णेष्वन्यपदार्थस्य वर्तिपदार्थभिन्नस्याभावाद् द्विर्वचनाप्रसक्तावेकवर्णेषु च व्यपदेशिवद्वचनादित्युक्तम् । ततः 'एति, अयनम्, इतः, एता, एतव्यम्, आयन्' इत्यादिबहुभेदप्रभिन्नप्रयोगगत-नानारूपाश्रयेणान्यपदार्थं प्रति नियतप्रयोगगताभेदाश्रयेण वर्त्तिपदार्थं च परिकल्प्य 'इयाय' इत्यादौ द्विर्वचनसिद्धिरुक्ता ॥ १८ ॥

यद्वा,

**अन्वयव्यतिरेकाभ्यामर्थवान् परिकल्पितः ।**
**एको धात्वर्थविगमाद् वर्णत्वेनोपचर्यते ॥१९॥**

---

तथा चानुभवः—नानाक्रियासम्बन्धिनः शिलापुत्रकस्येदमेकक्रियासम्बन्धिप्रतिनियतं शरीरमिति ॥ १७ ॥

एवमिणादिधातुविषयेऽपि प्रयोगभेदप्रयुक्तभेदकल्पनया एकाच्त्वमुपपद्यते वस्तुतो भेदा-भावेऽपि इत्याह = प्रयोगभेदादिति ।

अस्यार्थः—धातूनामिणप्रभृतीनामेकवर्णानां प्रयोगभेदाद् 'एति, इतः, आयन्' इत्यादिप्रयोग-भेदमादाय एकस्यापि बहुरूपतां नानात्वं प्रकल्प्य भेदाभेदौ कल्पितं भेदं स्वाभाविकं चाभेदं गृहीत्वा क्वचिद् लिडादिविषये एकाच्त्वमुच्यते ।

तथा च 'इयाय' इत्यादौ भेदमादाय समुदास्यान्यपदार्थत्वेनैकाच्त्वोपपत्त्या द्विर्वचनोपपत्तिः । स्वतस्तु अभेदोऽस्त्येवेति ।

अयं भावः—एकोऽच् यस्य सोऽयमेकाजिति बहुव्रीहावाश्रिते एकवर्णरूपेऽपि इण्धातौ अन्यपदार्थस्य वर्तिपदार्थभिन्नस्याभावादेकाच्त्वाभावेन द्विर्वचनाप्रसक्तौ "एकवर्णेषु च व्यपदेशिवद् वचनाद्" इति समाधानमुक्तं भाष्ये । ततश्च 'एति, अयनम्, इतः, एता, एतव्यम्, आयन्' इत्यादयो ये बहुभेदप्रभिन्नाः प्रयोगभेदास्तद्गतानि यानि गुणादिविधिप्रयुक्तानि नानारूपाणि तेषामाश्रयेणान्य-पदार्थसमुदायरूपं प्रतिनियतप्रयोगगताभेदाश्रयेण वर्तिपदार्थञ्च = वृत्त्यन्तर्वर्तिपदार्थञ्च परिकल्प्य 'इयाय' इत्यादौ एकवर्णधातौ द्विर्वचनप्रसिद्धिरुक्तेति ॥ १८ ॥

यद्वा अर्थविशिष्टं धातुशब्दमन्यपदार्थं केवलञ्च धातुं वर्तिपदार्थं परिकल्प्य समाधानान्तर-माह—अन्वयव्यतिरेकाभ्यामिति ।

अस्यार्थः—एकवर्णरूपोऽपि इण्धातुरन्वयव्यतिरेकाभ्यामर्थवान् परिकल्प्यते यः सोऽर्थविशिष्टोऽ-न्यपदार्थः । बुद्धया धात्वर्थविगमाद् = धात्वर्थविगमं कृत्वा वर्णत्वेन उपचर्यते व्यवह्रियते यः स वर्तिपदार्थ इति ।

इणो धातोरित्यादौ पदे प्रत्ययरूपभिन्नेऽप्यनुगमाद् योऽनुगतोऽर्थः स वाच्यः। अन्यत्र तस्मिन्नेव प्रत्यये धात्वन्तरप्रयोगे तदप्रतीतेरित्यर्थवतोऽस्य निरर्थकमिदं वर्णरूपमेकोऽजिति कल्पनया व्यवह्रियते। धातुशब्दो हि क्रियावचनस्य संज्ञेति तेनार्थवानसावुच्यते। अजिति त्वनपेक्षितार्थसम्बन्धवर्णविशेषात्मकं रूपमभिधत्ते।

तथा च कल्पते व्यपदेशः, एकोऽज् यस्य सोऽयमेकाजिति। प्रथमत्वमप्यसत्यप्रथमेऽपेक्षणीयेऽपूर्वत्वात् समारोपितं यथा प्रथमगर्भेण हतेति निर्णीतम्॥ १९॥

तदेवं यथा बुद्धिप्रकल्पितभेदाश्रयेणात्र व्यपदेशसमर्थनम्, तथा सामानाधिकरण्यमपि बौद्धभेदाश्रयमिति प्रकृतं निगमयति—

**द्रव्यात्मानस्त्रयस्तस्माद् बुद्धौ नाना व्यवस्थिताः।**
**आश्रयाश्रयिधर्मेणेत्ययं पूर्वेभ्य आगमः॥२०॥**

---

अयं भावः—इणो धातोरित्यादौ इण्पदे प्रत्ययरूपभिन्नोऽपि='तत्तत्प्रत्ययप्रयुक्तरूपभेदवत्यपि एकस्यैवार्थस्यानुगमाद् योऽनुगतोऽर्थः स इण्धातुवाच्यः' इत्यन्वयेन, अन्यत्र तस्मिन्नेव प्रत्यये धात्वन्तरप्रयोगे तस्यार्थस्याप्रतीतेरिति व्यतिरेकेण चार्थवतोऽस्य=इण्धातोः निरर्थकमिदं वर्णरूपमेकोऽजिति कल्पनया व्यवह्रियते। धातुशब्दो हि क्रियावचनस्य संज्ञेति तेन=क्रियावचनत्वेन अर्थवान् इणादिधातुरुच्यते। अजिति तु अनपेक्षितार्थसम्बन्धम्=अर्थसम्बन्धविषयकापेक्षाशून्यं वर्णविशेषात्मकं रूपमभिधत्ते।

तथा च=तेन प्रकारेण च एकोऽज् यस्य सोऽयमेकाज् इति अन्यपदार्थविषयको वर्तिपदार्थविषयकश्च व्यपदेशः=व्यवहारः कल्पते। किञ्चात्रेण्धात्वादौ प्रथमेनापेक्षणीयेऽप्रथमेऽसत्यपि अपूर्वत्वात्=पूर्ववर्णराहित्यात् प्रथमत्वं समारोपितम्। 'यथा प्रथमगर्भेण हता' इत्यत्र न प्रथमेऽप्रथमापेक्षा, द्वितीयादेर्गर्भस्यात्र स्त्रिया मृत्युनाऽसम्भवात्। किन्त्वत्रापूर्वत्वात् प्रथमत्वारोप इति निर्णीतमन्यत्रेति॥१९॥

तदेवं यथा एकस्मिन् अपि इण्धात्वादौ बुद्धिप्रकल्पितभेदाश्रयेणान्यपदार्थत्ववर्तिपदार्थत्वव्यपदेशसमर्थनम्, तथा 'कृष्णास्तिलाः' इत्यादौ पदार्थयोः सामानाधिकरण्यमपि बौद्धभेदनिबन्धनमिति प्रकृतं निगमयति—द्रव्यात्मानस्त्रय इति।

अस्यार्थः—तस्माद् अनुपपद्यमानस्य सर्वस्य व्यपदेशस्य बुद्धया समर्थनसंभवात् 'कृष्णास्तिलाः' इत्यादौ सामानाधिकरण्ये त्रयो द्रव्यात्मनो नानाधर्मप्रकारेण आश्रयाश्रयिधर्मेण आधाराधेयभावेन बुद्धौ व्यवस्थिता इत्ययं पूर्वेभ्य आचार्येभ्यः आगमः=समागतः सम्प्रदायः। तत्र 'कृष्णास्तिलाः' इत्यादौ यथाक्रमं गुणोपरक्तं जात्युपरक्तं च द्रव्यद्वयमाधेयम्, कृष्णरूपात्मकगुणतिलत्वजातिविशिष्टैकद्रव्यविषयकबुद्धिभेदाद् भिन्नं द्रव्यम्, तृतीयं तु तस्य द्रव्यद्वयस्यैतद् द्रव्यभागभूतस्याधारभूतं बुद्धौ व्यवस्थितमिति विवेक इति।

अयं भावः—'कृष्णास्तिलाः' इत्यादौ तिलत्वजातिकृष्णरूपगुणोपरक्तमाधेयं द्रव्यद्वयम्, तयोराधारभूतं तु तृतीयं पूर्वोक्तगुणजातिविशिष्टविषयकबुद्धिभेदाद् भिन्नमिति विभक्तमात्रग्रहणम्=

जातिगुणाच्छुरितमाधेयं द्रव्यद्वयम्, तदाधारभूतं तु तृतीयं गुणजातिविशिष्ट-बुद्धिभेदाद् भिन्नमिति विभक्तमात्मग्रहणं सर्वत्र निरंशवस्तुवाचकमित्युपाधिभेदेनापि प्रतीतौ निरंशवस्तुविश्रान्तिः सूचिता, यया सामानाधिकरण्यं वाक्येऽपि सिध्यति। तथा च तत्र पुंवद्भावोपपत्तिः। एष च वृद्धानामाम्नाय आदरणीयः, न स्वमनीषिकाचर्चितः।

तदेवम् 'समानाधिकरणेषूपसङ्ख्यानमसमर्थत्वाद् द्रव्यं पदार्थ इति चेत्' इति द्रव्य-पदार्थपक्षे वीरपुरुषशब्दाभ्यां द्वाभ्यामप्येकस्य द्रव्यस्य प्रतिपादनाद् भिन्नाभिधेयाभावे भेदाधिष्ठानस्य संसर्गस्याभावात् समासाभावो यश्चोदितः, स द्रव्येऽपि पदार्थे प्रतीय-मानवीरत्वादिगुणभेदकृतं द्रव्यस्य भेदमाश्रित्य समर्थितः। जातावपि हि पदार्थे प्रतीय-मानैकद्रव्याश्रयं सामानाधिकरण्यं वीरत्वपुरुषत्वयोराश्रयणीयम्, अन्यथानुपपत्तेः।

एवमर्थयोः सामानाधिकरण्यमधिकरणान्तरविभजनात् समर्थितम्। अत एव विशेषणविशेष्यभावोऽपि सिद्धः। यो हि यमभेदेनोपश्लिष्यति स स्वरूपेण नियोगतः तदुपरञ्जयतीति दृष्टम्॥ २०॥

---

सर्वोऽपि विभक्तपदार्थवाचकः शब्दः सर्वत्र निरंशवस्तुवाचकमिति जातिगुणरूपोपाधिभेदेनापि भिन्नयोः कृष्णद्रव्यतिलद्रव्ययोः प्रतीतौ कृष्णतिलरूपनिरंशवस्तुविश्रान्तिः सूचिता। यया वृत्ताविव वाक्येऽपि सामानाधिकरण्यं सिध्यति।

तथा च तत्र=वृत्तौ 'मत्तमधुकरी' इत्यादौ पूर्वपदे पुंवद्भावोपपत्तिः। एष च प्रकृत-कारिकार्थरूपो वृद्धानामाम्नायः=सम्प्रदायः, इत्यादरणीये न स्वमनीषिकाचर्चितः=न स्वबुद्धि-परिकल्पितः। "समानाधिकरणेषूपसंख्यानमसमर्थत्वाद् द्रव्यं पदार्थ इति चेत्"।

अस्यार्थः—द्रव्यं पदार्थ इति पक्षश्चेदभ्युपगम्यते, तदा समानाधिकरणेषु=समानार्थ-वाचकेषु पदेषु 'वीरः पुरुषः' इत्यादौ समासस्योपसंख्यानं कर्तव्यम्, असमर्थत्वाद्, 'वीरः पुरुषः' इति पदद्वयस्य निरंशद्रव्यवाचकत्वेन भिन्नाभिधेयाभावे भेदाधिष्ठानकस्य संसर्गस्याभावेन सामर्थ्याभावे समासाभावापत्तेरिति। तदेवमनेन वार्त्तिकेन द्रव्यपदार्थपक्षे वीरपुरुषशब्दाभ्यां द्वाभ्यामपि एकस्य द्रव्यस्य प्रतिपादनाद् भिन्नाभिधेयाभावे भेदाधिष्ठानकस्य संसर्गस्याभावात् सामर्थ्याभावेन समासाभावो यश्चोदितः, स द्रव्येऽपि पदार्थे प्रतीयमानवीरत्वादिगुणभेदकृतं द्रव्यस्य भेदमाश्रित्य समर्थितः। यतो जातावपि हि पदार्थे प्रतीयमानैकद्रव्याश्रयकं वीरत्वपुरुषत्वयोः सामाना-धिकरण्यमाश्रयणीयम्, अन्यथा=सामानाधिकरण्याभावे समासानुपपत्तेः।

एवमर्थयोः=वीरपुरुषपदार्थयोः सामानाधिकरण्यमेकाश्रयवृत्तित्वरूपम् अधिकरणान्तर-विभजनात्=वीरपुरुषरूपस्य विशिष्टस्य निरंशस्य द्रव्यस्य वीरपुरुषपदार्थद्वयतः पृथक्करणात् समर्थितम्। अत एव='वीरः पुरुषः' इत्यादौ सामानाधिकरण्ये सर्वत्र प्रागुक्तरीत्या द्रव्यत्रय-स्वीकारादेव सामानाधिकरण्यमिव विशेषणविशेष्यभावोऽपि सिद्धः। यो हि यमभेदेनोपश्लिष्यति, स नियोगतः=नियमतः स्वरूपेण तदुपरञ्जयति इति दृष्टम्। तत्र स्वरूपेण तदुपरञ्जने च समागतोऽवारितप्रसरो विशेषणविशेष्यभाव इति॥ २०॥

तदित्थमर्थयोः सामानाधिकरण्यमुपपाद्य शब्दयोरप्युपपादयितुमाह—

**सामानाधिकरण्यं च शब्दयोः कैश्चिदिष्यते।**
**विशेषणविशेष्यत्वं संज्ञासंज्ञित्वमेव वा ॥२१॥**

कृष्णतिलशब्दयोर्भिन्ननिमित्तप्रयुक्तयोरेकस्मिन् जातिगुणविशिष्टे द्रव्ये प्रवर्तमानयोः समानाभिधेयत्वं सामानाधिकरण्यमुच्यते। एवं विशेषणविशेष्यभावोऽपि तयोरेव। कृष्णशब्दो हि तिलशब्दं स्वार्थविशिष्टेऽर्थेऽवस्थापयति। तिलशब्दोऽप्यन्यविशेषप्रतिपादनादपावर्तमानोऽवच्छेद्यः। संज्ञासंज्ञिभावोऽपि प्रत्यस्तयोस्तयोरेव।

तथाहि—प्रदेशस्थो वृद्धिशब्दः संज्ञासंज्ञिवाक्यस्थेन वृद्धिशब्देन प्रत्यायितः स्वरूपोपधानेन संज्ञिनं प्रतिपादयति 'आदैच्' इत्यादैच्छब्दोपहितरूपम्। अतश्च

---

तदेवमर्थयोः सामानाधिकरण्यमुपपाद्य शब्दयोरप्युपपादयितुमाह—सामानाधिकरण्यञ्चेति।

अस्यार्थः—समानाधिकरणं द्रव्यमभिधेयं ययोः शब्दयोस्तौ समानाधिकरणौ शब्दौ तयोर्भावः सामानाधिकरण्यं शब्दधर्मः। अनया व्युत्पत्त्या शब्दयोश्च शब्दयोरपि अर्थयोरेकाश्रयवृत्तित्वरूपं सामानाधिकरण्यमिव समानाभिधेयत्वरूपं सामानाधिकरण्यं कैश्चिदिष्यते। किञ्च, तयोः समानाधिकरणयोः शब्दयोर्विशेषणविशेष्यभावः संज्ञासंज्ञिभावश्चैवेष्यते। अत्र वाशब्दश्चार्थे। तत्र शब्दयोर्विशेषणविशेष्यभावस्योदाहरणम् = कृष्णास्तिला इति। अत्र कृष्णशब्दः स्वार्थविशिष्टे तिलपदार्थे तिलशब्दस्य व्यवस्थापनपूर्वकमन्यपदार्थवाचकत्वाद् व्यावर्तनेन विशेषणम्। तिलशब्दोऽपि कृष्णान्यतिलप्रतिपादनाद् व्यावर्तमानोऽवच्छेद्यो विशेष्य इति। अत्र विशेषणविशेष्यशब्दयोः समानाभिधेयत्वलक्षणं सामानाधिकरण्यमपि वर्तते, अविरोधात्। किञ्च "वृद्धिरादैच्" इत्यादौ सूत्रवाक्ये आदैजभिन्नो वृद्धिशब्द इति बोधेन वृद्धिशब्दस्य संज्ञात्वम्, आदैचोश्च संज्ञित्वम्। किञ्च, आदैच्छब्दस्य विशेषणत्वम्, वृद्धिशब्दस्य तु विशेष्यत्वम्। किञ्च, समानविभक्तिकत्वस्य समानाधिकरण्यसमनियतत्वेन सामानाधिकरण्यरूपत्वमिति समानविभक्तिकत्वरूपं समानाधिकरण्यमप्यत्रेति त्रितयमत्रावसेयमिति।

अयं भावः—'कृष्णास्तिलाः' इत्यादौ कृष्णतिलशब्दयोर्भिन्नं प्रवृत्तिनिमित्तं गुणरूपं जातिरूपञ्चादाय प्रयुक्तयोरपि एकस्मिन् गुणजातिविशिष्टे द्रव्ये प्रवर्तमानयोः समानाभिधेयत्वम्=एकाभिधेयत्वं सामानाधिकरण्यमुच्यते। एवं सामानाधिकरण्यमिव विशेषणविशेष्यभावोऽपि तयोरेव कृष्णतिलशब्दयोः। कृष्णशब्दो हि तिलशब्दं स्वार्थविशिष्टेऽर्थेऽवस्थापयन् श्वेततिलप्रतिपादनाद् व्यावर्तयति इति विशेषणम्। तिलशब्दोऽपि अन्यविशेषप्रतिपादनात् = कृष्णशब्दसन्निधानेन श्वेततिलरूपविशेषप्रतिपादनाद् अपावर्तमानः=निवर्तमानोऽवच्छेद्यः = विशेष्यः। 'वृद्धिरादैच्' (पा० १।१।१) इत्यत्र संज्ञासंज्ञिभावोऽपि प्रत्यस्तयोस्तयोरेव = पौर्वापर्येण परिवर्तितस्थानयोर्वृद्ध्यादैच्छब्दयोरेव।

तथा हि आदैज्वृद्धिरित्येवं वक्तव्ये मङ्गलार्थं वृद्धिरादैजिति पाठः। प्रदेशस्थः = 'वृद्धिरेचि' (पा० ६।१।८८) इत्यादिविधिदेशस्थो वृद्धिशब्दः संज्ञासंज्ञिवाक्यस्थेन = वृद्धिरादैजिति वाक्यस्थेन वृद्धिशब्देन प्रत्यायितस्वरूपोपधानेन = प्रत्यायितं यत् स्वस्य रूपं तदुपधानेन आदैच्छब्दोपहितरूपमादैच्

४

स्वरूपोपधानेन प्रत्यायनात् सोऽयमित्यभिसम्बन्धात् सामानाधिकरण्यमेकविभक्तित्वं च विशेषणविशेष्ययोः संज्ञासंज्ञिनोश्च वृद्धिवाक्ये वर्णितम्। तदिह निदर्शनत्वमन्तर्भाव्य निर्दिष्टम् ॥ २१ ॥

प्रकारान्तरेणार्थयोः सामानाधिकरण्यमाह—

**केषाञ्चिज्जातिगुणयोरेकार्थसमवेतयोः ।**
**वृत्तिः कृष्णतिलेष्विष्टा शब्दे द्रव्याभिधायिनि ॥२२॥**

कृष्णतिलेषु प्रतिपाद्येषु वृत्तिरेकार्थीभाव इष्टः। तथाहि—सति विशेषण-विशेष्यभावे सा भवति। अस्ति चात्र सा, जातिगुणयोरेकत्राश्रये वृत्तेः। यदेव द्रव्यं जातिनिष्ठं तिलशब्देन साकाङ्क्षमवगमितम्, तदेव कृष्णशब्देनावच्छिद्यते। अतस्तद्वाच्यो गुणो विशेषणम्। गुणनिमित्तो हि कृष्णशब्दो द्रव्य इति तस्य तात्पर्यार्थो गुणः, द्रव्यस्य तिलशब्देनाप्याक्षेपात्। शब्दे द्रव्याभिधायिनीति सामानाधिकरण्यार्थमाह—

---

इति शब्दाभिधेयमाकारैकारौकाररूपं संज्ञिनं प्रतिपादयति। अतश्चादैच्छब्दोपहितरूपाणामाकारैकारौकाररूपाणां संज्ञिनां 'वृद्धिरेचि' (पा० ६।१।८८)इत्यादिप्रदेशस्थेन वृद्धिशब्देन स्वरूपोपधानेन = वृद्धिशब्दोपधानेन प्रत्यायनात् = प्रतिपादनात् सोऽयमित्यभिसम्बन्धात् = वृद्धिरादैजयमित्यभिसम्बन्धाद् वृद्धिवाक्ये = वृद्धिविधायकशास्त्रीयवृत्तिवाक्ये विशेषणविशेष्ययोः संज्ञासंज्ञिनोश्च सामानाधिकरण्यमेकविभक्तिकत्वञ्च अवर्णादेचि परे पूर्वपरयोरादैज्रूपा वृद्धिः स्यादित्येवं रूपेण वर्णितम्। तदिह निदर्शनत्वमन्तर्भाव्य = दृष्टान्तत्वं मनसि संपाद्य भावतो निर्दिष्टं कारिकायामिति ॥ २१ ॥

पूर्वं विशेषणविशेष्ययोर्द्रव्ययोस्तृतीये द्रव्ये स्वाधारभूते सामानाधिकरण्यमुक्त्वा इदानीं तद्धर्मयोरेकस्मिन् द्रव्ये सामानाधिकरण्यमाह = केषाञ्चिदिति।

अस्यार्थः—केषाञ्चिन्मते कृष्णशब्दे द्रव्याभिधायिनि सति द्रव्यं पदार्थ इति पक्षे 'कृष्णास्तिलाः' इत्यादौ एकार्थसमवेतयोः तिलत्वजातिकृष्णरूपात्मकगुणयोः कृष्णतिलेषु वृत्तिः स्थितिः सामानाधिकरण्यरूपत्वेन इष्टा। तेनैतन्मते तिलत्वजातिकृष्णगुणयोरेव कृष्णतिलरूपे द्रव्ये सामानाधिकरण्यम्, न तु तदाश्रयद्रव्ययोः कल्पितयोर्द्वयोः स्वाधारभूते तृतीये द्रव्ये सामानाधिकरण्यमिति।

अयं भावः—कृष्णतिलेषु प्रतिपाद्येषु तत्प्रतिपादके कृष्णतिलशब्दे एकार्थीभावरूपा वृत्तिरिष्टा। तथा हि—सति पदयोः पदार्थयोश्च विशेषणविशेष्यभावे सा वृत्तिर्भवति। अस्ति चात्र वृत्तिः। तिलत्वजातिकृष्णगुणयोरेकत्राश्रये द्रव्ये वृत्तेः। यदेव द्रव्यं तिलत्वजातिविशिष्टं निर्विशेषतया कृष्णादिविशेषणसाकाङ्क्षं तिलशब्देनावगमितम् तदेव द्रव्यं कृष्णशब्देनावच्छिद्यते = श्वेततिलाद् व्यावर्त्यते। अतस्तद्वाच्यो गुणो विशेषणम्, विशेषणकृष्णशब्दवाच्यत्वात्। गुणप्रवृत्तिनिमित्तको हि कृष्णशब्दो द्रव्ये इति कृष्णशब्दस्य तात्पर्यार्थो गुणो द्रव्यं पदार्थ इति पक्षे शक्यार्थस्तु तत्र द्रव्यमेव, द्रव्यं तु न तत्र तात्पर्यार्थः, तस्य तिलशब्देनाप्यभिधानात्, जातिशक्तिवादे कृष्णशब्दस्य गुणमात्राभिधायित्वे द्रव्यस्य तिलशब्देनाप्याक्षेपात्। "शब्दे द्रव्याभिधायिनि" इति कृष्णतिलयोः सामानाधि-

कृष्णशब्देन हि गुणमात्राभिधाने तिलस्य कृष्णः इति वैयधिकरण्यं स्यात्। तथा च वृत्तिर्न भवेत्, षष्ठीसमासस्यापि गुणेन नेति निषेधात्।

एवं तिलशब्देन जातिमात्राभिधान इति जातिविशिष्टद्रव्याभिधानमत्रापि पक्षे। गुणप्रधानभावकृतस्तु पक्षभेदः। तथा च प्राधान्येन वाच्यस्य द्रव्यस्य वस्तुतोऽधिकरणान्तराभावाद् द्रव्यपदार्थपक्षे पूर्वं बौद्धभेदाश्रयेण समर्थितम्।

इदं तु जातिपदार्थपक्षे कथ्यते। न च जातिगुणौ निराश्रयावत्र तिलकृष्णशब्दाभ्यां प्रत्याय्यौ, येन तयोरेकाधिकरणत्वं सामानाधिकरण्यं न स्यात्। नापि तयोः स्वतो विशेषणविशेष्यत्वम्, द्रव्यावच्छेदे प्रवृत्तयोरन्योन्यसमन्वयाभावात्।

तस्माद् द्रव्यद्वारेणैवात्र विशेषणविशेष्यभावो विवक्षितः। तिलशब्देन जातिनिष्ठस्य द्रव्यस्याभिधानात् कृष्णशब्दः प्रवृत्तिनिमित्तद्वारेण तत्र विशेषणमित्येव युक्तम्॥ २२॥

यत्र तु द्रव्याभिधानं नास्ति, केवलगुणाभिधानम्, तत्र नान्तरीयकद्रव्याक्षेपेऽपि विशेषणविशेष्यभावाभावात् समानाधिकरणसमासाभाव इत्याह—

**संस्तु रूपरसादीनामाश्रयो नाभिधीयते।**
**द्रव्याभिधानेन विना ततस्ते द्वन्द्वभाविनः॥२३॥**

---

करण्योपपत्त्यर्थमाह—कृष्णशब्देन हि गुणमात्राभिधाने 'तिलस्य कृष्णः' इति वैयधिकरण्यं स्यात्। तथा च पदयोः सामानाधिकरण्ये सम्पद्यमाना वृत्तिर्न भवेत्। षष्ठीसमासोऽपि न भवेत्। षष्ठीसमासस्यापि "गुणेन न" इति निषेधात्।

एवं तिलशब्देनापि जातिमात्राभिधाने वृत्तिर्न स्यादिति जातिविशिष्टद्रव्याभिधानमत्रापि पक्षे=द्रव्यं पदार्थं इति पक्षवद्जातिः पदार्थ इति पक्षेऽपि। द्रव्यं पदार्थः, जातिः पदार्थ इति पक्षभेदस्तु तयोर्गुणप्रधानभावकृतः। पक्षद्वयेऽपि पदार्थद्वयस्य गुणतया प्राधान्येन वा वाच्यत्वात्, तथा च द्रव्यं पदार्थ इति पक्षे प्राधान्येन वाच्यस्य द्रव्यस्य वस्तुतोऽधिकरणान्तराभावाद् द्रव्यं पदार्थ इति पक्षे पूर्वं बौद्धभेदाश्रयेण=बौद्धं द्रव्यत्रयं परिकल्प्य अर्थयोः सामानाधिकरण्यं समर्थितम्।

इदं तु=जातिगुणयोः सामानाधिकरण्यं तु जातिपदार्थपक्षे अनया कारिकया कथ्यते। न च जातिगुणौ निराश्रयावत्र तिलकृष्णशब्दाभ्यां प्रत्याय्यौ, येन तयोरेकाधिकरणत्वरूपं सामानाधिकरण्यं न स्यात्। नापि तयोः स्वतो विशेषणविशेष्यभावः, द्रव्यावच्छेदे=स्वाश्रयस्य द्रव्यस्यान्यतो व्यावृत्तौ प्रवृत्तयोरन्योऽन्यसमन्वयाभावात्।

तस्मात् स्वस्ववाच्यद्रव्यद्वारेणैवात्र तिलकृष्णशब्दयोर्विशेषणविशेष्यभावो विवक्षितः। तथा हि—तिलशब्देन जातिनिष्ठस्य=जातिपदार्थपक्षे जातिप्रधानकस्य द्रव्यस्याभिधानात् कृष्णशब्दः स्वप्रवृत्तिनिमित्तद्वारेण स्ववाच्यकृष्णगुणरूपप्रवृत्तिनिमित्तसमानाधिकरणतिलत्वजातिरूपप्रवृत्तिनिमित्तवत्त्वसम्बन्धेन तत्र=तिलशब्दे विशेषणमित्येव युक्तमिति॥ २२॥

यत्र तु द्रव्याभिधानं नास्ति, किन्तु केवलगुणाभिधानम्, यथा रूपरसावित्यत्र, तत्र गुणस्य द्रव्यनान्तरीयकतया तेन द्रव्याक्षेपेऽपि गुणयोः सामानाधिकरण्याभावेन विशेषणविशेष्यभावाभावात् समानाधिकरणसमासाभाव इत्याह=संस्तु रूपरसादीनामिति।

रूपरसादिशब्दाः स्वभावत एव द्रव्यान्निष्कृष्टरूपं स्वार्थमाचक्षते। निराश्रयस्य तु गुणस्याभावात् सामर्थ्याक्षिप्तमत्र द्रव्यम्। तथा चाभिधाद्वारेण द्रव्यस्याविषयीकरणाद् रूपरसयोः परस्परमसम्बन्धाद् विशेषणविशेष्यभावाभाव इति समानाधिकरणसमासो न भवत्यत्र। अपि तु द्वन्द्वं भावयन्ते प्राप्नुवन्ति, द्वन्द्वो वा भावी एषामिति। द्वन्द्वपदवाच्या रूपरसादयः। ते वा रूपरसादिशब्दा द्वन्द्वभाजः। तदेवं सामाधिकरण्यं विशेषणविशेष्यभावश्चेत्युभयं विचारितम्॥ २३॥

इदं तु वक्तव्यम्—कृष्णतिलशब्दयोर्द्वन्द्वयोरपि द्रव्यशब्दत्वाद् गुणजातिनिमित्ताश्रयेण द्रव्ये प्रवृत्तेः समवायतिरोहितभेदत्वस्य समानत्वेन द्रव्यव्यवधिना क्रियायोगस्य तुल्यत्वाद् विशेषणविशेष्यत्वानियम इत्युपसर्जनाप्रसिद्धौ चोदितायां द्रव्यं प्रधानमिति परिहृतं भाष्ये। तत् कथं जातिनिमित्तस्यैव द्रव्यशब्दत्वात् प्राधान्यम्, न गुणनिमित्तस्यापीत्याह—

**द्रव्याभिधायी कृष्णादिराकाङ्क्षावान् प्रवर्तते।**
**निमित्तानुविधायित्वात् तत् तिलादौ न विद्यते॥२४॥**

---

अस्यार्थः—समानाधिकरणानाम्=एकफलाधिकरणानामपि रूपरसादीनां संस्तु=सन्नपि आश्रयो रूपरसादिपदानां स्वभावतो गुणाभिधायित्वेन द्रव्याभिधानेन विना=द्रव्याभिधायित्वाभावाद् आश्रयो नाभिधीयते। तत आश्रयाभिधानाभावाद् रूपरसयोः सामानाधिकरण्याभावेन समानाधिकरणसमासाभावात्ते रूपरसादिशब्दाः समप्राधान्येन द्वन्द्वभागिन इति।

अयं भावः—रूपरसादिशब्दाः स्वभावत एव द्रव्यान्निष्कृष्टस्वरूपं स्वार्थं गुणमाचक्षते, न तु कृष्णादिशब्दवद् द्रव्यमपि। निराश्रयस्य तु गुणस्याभावात् सामर्थ्याक्षिप्तम्=अर्थापत्तिलभ्यम् अत्र=रूपरसावित्यत्र द्रव्यम्। न तु शब्दस्याभिधाव्यापारलभ्यम्। रूपरसशब्दयोः स्वभावतः प्राधान्येन गुणाभिधानात्। तथा चाभिधाद्वारेण रूपरसशब्दाभ्यां द्रव्यस्याविषयीकरणाद् रूपरसयोः परस्परं द्रव्यद्वारा साक्षाद्वाऽसम्बन्धाद् विशेषणविशेष्यभावाभाव इति समानाधिकरणसमासो न भवत्यत्र=रूपरसावित्यत्र, अपि तु द्वन्द्वं भावयन्ते प्राप्नुवन्ति, द्वन्द्वो वा भावी एषामिति द्वन्द्वभाविनो द्वन्द्वपदवाच्या रूपरसादिशब्दाः। द्वन्द्वभागिन इति पाठे तु ते रूपरसादिशब्दा द्वन्द्वभाजः। तदेवं सामानाधिकरण्यं विशेषणविशेष्यभावश्चेत्युभयं विचारितमिति॥ २३॥

अत्रेदं वक्तव्यम्—'कृष्णतिलाः' इत्यादौ कृष्णतिलशब्दयोर्द्वयोरपि गुणजातिरूपप्रवृत्तिनिमित्ताश्रयेण द्रव्ये प्रवृत्तेर्द्वयोरपि द्रव्यशब्दत्वात्, समवायतिरोहितभेदत्वस्य द्रव्यव्यवधानेन क्रियायोगस्य च द्वयोरपि तद्वाच्ययोस्तुल्यत्वाद् विशेषणविशेष्यभावानियम इति उपसर्जनाप्रसिद्ध्या पूर्वनिपातानियमे चोदिते द्रव्यं प्रधानमिति परिहृतं भाष्ये। तत्कथं द्वयोर्द्रव्यशब्दत्वाविशेषेऽपि जातिप्रवृत्तिनिमित्तकस्यैव शब्दस्य प्राधान्यप्रयुक्तं विशेष्यत्वम्, न गुणप्रवृत्तिनिमित्तकस्यापि इत्याशङ्क्य समाधिमाह=द्रव्याभिधायी कृष्णादिरिति।

अस्यार्थः—'कृष्णतिलाः' इत्यादौ गुणगुणिनोरभेदोपचारेण द्रव्याभिधाय्यपि कृष्णादिर्गुणप्रवृत्तिनिमित्तकः शब्दः, निमित्तानुविधायित्वात्=उपजनापायधर्मकस्य व्यभिचारिणः, स्वप्रवृत्ति-

इह गुणगुणिनोरभेदोपचारात् कृष्णशब्दो द्रव्यमभिधत्ते। क्रियया गुणो न साक्षात्सम्बन्धमुपैति, अपि तु द्रव्यद्वारेण द्रव्यस्यैव शक्त्यधिकरणत्वादिति द्रव्याकाङ्क्षो गुणः क्रियायां प्रवर्तते। द्रव्येण च नित्यमपि योगाभावात् ततो भिन्नः स्वयमनर्ह एव सम्बन्धे।

तथाहि—कदाचिद् द्रव्यान्निकृष्यापि गुणो व्यवह्रियते। उपजनापायौ हि गुणस्य द्रव्ये। अत एव मतुप् षष्ठी च भवति। 'अव्यतिरेकात् सिद्धमिति चेद् दृष्टो व्यतिरेकः' इति चोक्तम्। जातिस्तूत्पत्तिप्रभृत्याविनाशाद् द्रव्येणाव्यभिचरितसम्बन्धा, अरूपकत्वात्। अतश्च निमित्तं जातिमुत्पत्तिकाल एव प्राप्तसम्बन्धामलक्षितविवेकामनुवर्तते, योऽभिधेयमुखेन तिलादिशब्दः, तत्र तत्साकाङ्क्षप्रवृत्तित्वं नास्ति।

यथा हि गुणो द्रव्याकाङ्क्षो भवन् क्रियया द्रव्यव्यवधिना समन्वयमेति, नैवं जातिः, तद्रहितस्य द्रव्यस्याभावात्। आत्मकल्पैव हि सा तस्येति साक्षादेव जातिमद्

---

निमित्तस्य गुणस्यानुसरणाद् द्रव्यविषयकाकाङ्क्षावान् सन् द्रव्यद्वारेण क्रियायां प्रवर्तते=क्रियायोगमनुभवति, न साक्षात्, द्रव्यस्यैव कारकशक्तिमत्त्वात्। तत्=द्रव्याकाङ्क्षापूर्वकं द्रव्यद्वारेण क्रियायोगित्वं तिलादौ तिलादिशब्दे=तिलादिशब्दाभिधेयायां तिलत्वादिजातौ न विद्यते, जातेर्द्रव्यतादात्म्यापन्नतया द्रव्यायमाणत्वाद् द्रव्यान्तराभावाच्चेति।

अयं भावः—इह='कृष्णास्तिलाः' इत्यादौ गुणगुणिनोरभेदोपचारात् कृष्णशब्दो द्रव्यमभिधत्ते। गुणश्च क्रियया न साक्षात् सम्बन्धमुपैति, अपि तु द्रव्यद्वारेण द्रव्यस्यैव कारकशक्त्याधारत्वादिति द्रव्याकाङ्क्षो गुणः क्रियायां प्रवर्तते। द्रव्येण च सह गुणस्योपजनापायधर्मत्वेन नित्यमवियोगाभावात् ततो भिन्नः=द्रव्याद् भिन्नः स्वयमनर्हं एव गुणः क्रियया सह सम्बन्धे। तथा हि=कदाचिद् द्रव्यान्निष्कृष्यापि केवलो गुणो व्यवह्रियते। उपजनापायौ हि गुणस्य द्रव्ये। अत एव=इदानीं कृष्णरूपवन्तस्तिला इति मतुप्। यद्वा कृष्णास्तिला इत्यत्रैव गुणवाचिनः कृष्णशब्दाज्जातस्य मतुपो लुप्, 'गुणवचनेभ्यो मतुपो लुविष्टः' इति वचनेन तिलस्य कृष्णं रूपमिति षष्ठी च भवति।

तत्र द्वितीयं केवलगुणव्यवहारस्योदाहरणम्, प्रथमं तु गुणे उपजनापायधर्मवत्त्वस्य। "अव्यतिरेकात् सिद्धमिति चेद्, दृष्टो व्यतिरेकः" इति चोक्तम्।

अस्यार्थः—गुणद्रव्ययोरव्यतिरेकात्=अभेदात्, 'कृष्णास्तिलाः' इत्यत्र गुणद्रव्ययोः सामानाधिकरण्यं सिद्धमिति चेत्, तिलस्य कृष्णं रूपमित्यत्र तयोर्व्यतिरेको दृष्ट इति। अनेन वाक्येन गुणद्रव्ययोर्वैयधिकरण्यं केवलगुणव्यवहारश्च दर्शितं भवति। जातिस्तु द्रव्यस्योत्पत्तिप्रभृति आतद्विनाशाद् द्रव्येणाव्यभिचरितसम्बन्धा, अरूपकत्वात्=द्रव्यात् पृथग्रूपराहित्याज्जातेः। अतश्च स्वप्रवृत्तिनिमित्तं तिलत्वादिजातिमुत्पत्तिकाले एव द्रव्येण सह प्राप्तसम्बन्धां द्रव्यादलक्षितविवेकामभिधेयमुखेन यस्तिलादिशब्दो अनुवर्तते=अनुसरति बोधयति, तत्र तिलादिशब्दे द्रव्यसाकाङ्क्षप्रवृत्तित्वं नास्ति। यथा हि गुणो द्रव्याकाङ्क्षो भवन् द्रव्यव्यवधानेन क्रियया सह समन्वयमेति, नैवं जातिः, जातिरहितस्य द्रव्यस्याभावात्। आत्मकल्पैव हि=आत्मसदृश्येव हि

द्रव्यं क्रियायोगि । अतश्च जातिमद् द्रव्यं विशेष्यं प्रधानमुक्तम्, गुणो विशेषणमिति तदभिधायिनोरपि शब्दयोः परस्परावच्छेदकत्वेऽपि नियतो विशेषणविशेष्यभाव इत्यर्थः ॥ २४ ॥

तदेतदाह—

**एवं जातिमति द्रव्ये प्रत्यासन्ने क्रियां प्रति ।**
**गुणधर्म गुणाविष्टं द्रव्यं भेदाय कल्पते ॥२५॥**

एवमिति । यथोदितान्निमित्तानुविधानात् तिलशब्देन जात्याच्छुरितस्य द्रव्यस्य प्रतिपादनात् तस्यैव साक्षात् क्रियायोगः । कृष्णशब्देन तु गुणाच्छुरितं द्रव्यं न जात्याविष्टमिव, अपि तु गुणस्येव स्वभावो यस्य तद् व्यवहितक्रियासम्बन्धं गुणभूतमुच्यत इति तद्विशेषणं विशेष्यावच्छेदादत्रेत्यर्थः । 'नीलोत्पलं पश्यति, स्वादु फलमास्वादयति, सुरभि कुसुममाजिघ्रति, कर्कशशिलामामृशति' इति साक्षाद्योग्या अपि रूपादयो न दर्शनादिक्रियाभिः सम्बध्यन्ते, समुदायार्थस्य द्रव्यस्यैव विशेषणविशिष्टस्य श्रुत्यावेदितकर्मभावस्य क्रियासमन्वयावगमात् । 'उत्पलस्य रूपं पश्यति' त्यादावपि

---

सा तस्य=जातिर्द्रव्यस्य इति साक्षादेव जातिमद् द्रव्यं क्रियायोगि । अतश्च = जातिमद्द्रव्यस्य साक्षात् क्रियायोगित्वाच्च जातिमद्द्रव्यं विशेष्यं प्रधानमुक्तम् । गुणो विशेषणमिति तद्भिधायिनोरपि शब्दयोः प्रागुक्तरीत्या परस्परावच्छेदकत्वेऽपि नियतस्तयोर्विशेषणविशेष्यभावः । द्रव्यस्य विशेष्यत्वं गुणादेश्च विशेषणत्वं नियतमित्युपसर्जनत्वप्रसिद्धौ नियतापूर्वनिपातसिद्धिरिति ॥ २४ ॥

तदेतत्=कृष्णादिगुणशब्दस्य द्रव्याभिधायित्वेऽपि विशेषणत्वं निगमयन्नाह=एवं जातिमतीति ।

अस्यार्थः—एवम्=प्रागुक्तरीत्या, जातिमति द्रव्ये क्रियां प्रति अव्यवधानेन प्रत्यासन्ने सम्बद्धे सति गुणधर्मः=गुणस्येव धर्मः स्वभावो द्रव्यव्यवधानेन क्रियान्वयित्वरूपो यस्य तद्गुणधर्मगुणाविष्टं द्रव्यं गुणस्वभावं जातिमद्द्रव्यस्य भेदाय व्यवच्छेदाय कल्पते प्रभवति इति कृष्णादेर्गुणशब्दस्य विशेषणत्वमुपपादितं भवतीति ।

अयं भावः—तिलशब्देन तिलत्वजात्याच्छुरितस्य=तिलत्वजात्याविष्टस्य द्रव्यस्य प्रतिपादनाद् यथोदितान्निमित्तानुविधानात्=द्रव्यसाक्षाङ्क्षप्रवृत्तिकत्वाभावरूपात् तस्यैव=तिलत्वजात्याविष्टस्य द्रव्यस्यैव साक्षात् क्रियायोगः । कृष्णशब्देन तु कृष्णगुणाच्छुरितं द्रव्यं न जात्याविष्टमिव साक्षात् क्रियान्वयि, अपि तु गुणस्येव स्वभावो यस्य, तद् द्रव्यसम्बन्धव्यवहितक्रियासम्बन्धं गुणभूतम्=अप्रधानभूतम् उच्यत इति तत्=कृष्णरूपम् अत्र विशेषणम्, विशेष्यस्य तिलत्वजात्याविष्टस्य द्रव्यस्यावच्छेदादिति । 'नीलोत्पलं पश्यति, स्वादु फलमास्वादयति, सुरभि कुसुममाजिघ्रति, कर्कशशिलामामृशति' इत्यत्र साक्षात् क्रियासम्बन्धयोग्या अपि रूपादयो न दर्शनादिक्रियाभिः साक्षात् सम्बध्यन्ते, विशेषणविशेष्यवाचकपदसमुदायार्थस्य विशेषणविशिष्टस्य द्रव्यस्येव द्वितीयाश्रुत्यावेदितकर्मभावस्य क्रियासम्बन्धावगमात् । 'उत्पलस्य रूपं पश्यति' इत्यादावपि

वास्तवेन रूपेण गुणस्य द्रव्यद्वारेणैव क्रियायोगः संयुक्तसमवायात्। श्रौतेन तु रूपेण रूपादिभिरिदं तदिति सर्वनाम(प्र,योगयोग्यस्य द्रव्यस्यैव प्रतिपादनम्।

एवं 'पटस्य रूपं जायते' इत्यादावपि शाब्देन रूपेण द्रव्यमेव क्रियायोगीति गुणस्य द्रव्यव्यवधानेन क्रियासमन्वये नास्ति व्यभिचारः। एवं द्रव्याभिधायित्वेऽपि कृष्णादेर्गुणशब्दस्य विशेषणत्वमुपपादितम्॥ २५॥

सम्प्रति तदभावेऽपि तत् प्रतिपादयितुमाह—

**गुणमात्राभिधायित्वं केचिदिच्छन्ति वृत्तिषु।**
**अजाश्वादिषु सम्बन्धाद् रूढीनामिव रूढिभिः॥२६॥**

वाक्ये कृष्णशब्दो गुणावच्छिन्नद्रव्यवचनः। वृत्तौ तु तिलशब्देनैव द्रव्यस्याभिधानाद् गुणमात्रं तद्विशेषणभूतमाहेति युक्तम्। गुणविशिष्टस्य द्रव्यस्य प्रतीतेर्गुणो विशेषको व्यवस्थाप्यते। यथा 'राजपुरुषः' इत्यत्र षष्ठ्यभावेऽपि राजार्थः।

---

वास्तवेन रूपेण गुणस्य द्रव्यद्वारेणैव क्रियायोगः, संयुक्तसमवायात्। श्रौतेन=शाब्देन तु रूपेण रूपादिभिरिदं तदिति सर्वनामप्रयोगयोग्यस्य द्रव्यस्यैव प्रतिपादनम्।

एवं पटस्य रूपं जायते इत्यादावपि शाब्देन रूपेण इदं तदिति सर्वनामप्रयोगयोग्यं द्रव्यमेव रूपं साक्षात् क्रियायोगीति गुणस्य द्रव्यव्यवधानेन क्रियासमन्वये व्यभिचारो नास्ति। एवं द्रव्यपदार्थं इति पक्षे गुणप्रवृत्तिनिमित्तकस्य कृष्णादिशब्दस्य द्रव्याभिधायित्वेऽपि विशेषणत्वमुपपादितमिति॥ २५॥

सम्प्रति तदभावेऽपि=कृष्णादिगुणशब्दानां द्रव्याभिधायित्वाभावेऽपि, तत्=कृष्णादेर्गुणस्य विशेषणत्वं प्रतिपादयितुमाह—गुणमात्राभिधायित्वमिति।

अस्यार्थः—केचित् 'कृष्णतिलाः' इत्यादिवृत्तिषु कृष्णादिकानां शब्दानां गुणमात्राभिधायित्वमिच्छन्ति। तत्र दृष्टान्तः, अजाश्वादिषु वृत्तिषु रूढिभिरश्वादिशब्दैः सम्बन्धाद् रूढीनामजादिशब्दानां गुणभूतयौगिकार्थमात्राभिधायित्वमिव। यथाऽजाश्वो देवदत्त इत्यत्राजाश्वशब्दयो रूढ्या वर्कराश्वाभिधायित्वे सामानाधिकरण्यविरोधात् तयोः परस्परं सम्बन्धो न स्यादिति अजशब्दस्य गृहेऽजन्मानोऽश्वा यस्येत्यजन्मलक्षणधर्ममात्रवचनत्वे अश्वशब्देन सह सम्बन्धोपपत्तिः। एवं धर्मभेदभिन्नयोः कृष्णतिलद्रव्ययोः सम्बन्धाभावाद् जातिनिमित्तकतिलशब्देनैव द्रव्यस्याख्यानात् तस्यैव पुनरभिधाने प्रयोजनाभावाद् गुणमात्राभिधायी कृष्णशब्दः सामर्थ्याद् वृत्तौ व्यवतिष्ठते इति।

अयं भावः—इह 'कृष्णास्तिलाः' इत्यादौ वाक्ये कृष्णशब्दो गुणावच्छिन्नद्रव्यवचनः। पृथगर्थानां पृथगवस्थितानां पदानां समभिव्याह्रियमाणानां कदम्बकं वाक्यमिति वाक्यलक्षणात्। पदानि संस्कृत्य संस्कृत्य मिथः संयोज्यन्ते इति च पदान्वाख्यानपक्षेऽभ्युपगमात्। 'कृष्णतिलाः' इत्यादिवृत्तौ तु तिलशब्देनैव द्रव्यस्याभिधानाद् गुणमात्रं द्रव्यविशेषणभूतमाह कृष्णशब्द इति युक्तम्। वृत्तौ गुणविशिष्टस्य द्रव्यस्य प्रतीतेर्गुणो विशेषको व्यवस्थाप्यते। वाक्ये तु प्रागुक्तरीतिमेव तेऽपि रोचयन्ते, अत एव केचिदिच्छन्ति वृत्तिषु इत्युक्तम्। यथा 'राजपुरुषः' इति वृत्तौ षष्ठ्यभावेऽपि स्वस्वामिभावसम्बन्धेन राजविशिष्टस्य पुरुषस्य प्रतीतेः राजपदार्थः पुरुषपदार्थस्य विशेषकः।

दृष्टं च द्रव्यशब्दस्यापि वृत्तौ गुणमात्राभिधायित्वम्, यथा 'अजाश्वो देवदत्तः' इत्यत्राजाश्वशब्दयो रूढ्या नियतजातीयद्रव्याभिधायित्वे विरोधात् सम्बन्धो न स्यादित्यविद्यमानजन्मानोऽश्वा यस्येत्यजन्मलक्षणधर्ममात्रवचनत्वेऽजशब्दस्य सम्बन्धोपपत्तिः। एवमिहापि भिन्नयोः कृष्णतिलद्रव्ययोः सम्बन्धाभावाज्जातिशब्देनैव द्रव्यस्याख्यानात् तस्यैव पुनरभिधाने प्रयोजनाभावाद् गुणमात्रवचनः कृष्णशब्दः सामर्थ्याद् वृत्तौ व्यवतिष्ठते।

एकार्थीभावकृतश्चायं वृत्तौ विशेष इति वृत्तिष्वित्याह। तथा च व्यतिरेकविभक्त्यभावेऽप्यव्यतिरिच्यमानशरीर एव गुणो द्रव्यमत्र विशिनष्टि, यथा 'राजपुरुषः' इत्यत्र पुरुषार्थैकीभावमापन्नो राजार्थः पुरुषम्।

मीमांसकास्तु—राजशब्दो वृत्तौ लक्षणया पुरुषार्थमभिदधातीत्याहुः, तच्चायुक्तम्; मुख्यस्यैव राजार्थस्यैकार्थीभावाद् विशेषकत्वेन पुरुषार्थोपादानोपपत्तौ लक्षणाया अभावात्। मुख्यासम्भवे हि साभ्युपगमनीया। लक्षणायां च 'राजानं पुरुषमुपास्ते' इत्यत्र वाक्येऽपि राजशब्दः पुरुषं लक्षयेत्। स्वस्वामिसम्बन्धश्च नियोगतो न प्रतीयेत। लक्षणायाः सामीप्यादिनिमित्ताया अपि भावात्, पुरुषशब्देनैव च पुरुषार्थस्य प्रतीतत्वान्न लक्षणा।

---

दृष्टश्च द्रव्यशब्दस्यापि वृत्तौ गुणमात्राभिधायित्वम्, यथा 'अजाश्वो देवदत्तः' इत्यत्राजाश्वशब्दयो रूढ्या नियतजातीयद्रव्याभिधायित्वे विरोधात् सम्बन्धो न स्यादिति गृहेऽविद्यमानजन्मानो अश्वा यस्येति व्युत्पत्त्याऽजशब्दस्याजन्मलक्षणधर्ममात्रवचनत्वे तदर्थस्याश्वे सम्बन्धोपपत्तिः। एवं निहापि भिन्नयोः कृष्णतिलद्रव्ययोः सम्बन्धाभावाज्जातिशब्देनैव = जातिप्रवृत्तिनिमित्तकतिलशब्देनैव द्रव्यस्याख्यानात् तस्यैव पुनरभिधाने प्रयोजनाभावाद् गुणमात्रवचनः कृष्णशब्दः सामर्थ्याद् वृत्तौ व्यवतिष्ठते।

एकार्थीभावरूपसामर्थ्यकृतश्चायं वृत्तौ वाक्याद् विशेष इति वेदयितुम् 'वृत्तिषु' इत्युक्तं कारिकायाम्। तथा च व्यतिरेकबोधकषष्ठीविभक्त्यभावेऽपि द्रव्यादव्यतिरिच्यमानशरीर एव गुणो द्रव्यमत्र = कृष्णतिला इत्यत्र वृत्तौ विशिनष्टि, यथा 'राजपुरुषः' इत्यत्र पुरुषपदार्थैकीभावमापन्नो राजपदार्थः पुरुषं विशिनष्टि।

मीमांसकास्तु—राजपुरुष इति वृत्तौ राजशब्दो लक्षणया पुरुषपदार्थमभिदधातीत्याहुः, तच्चायुक्तम्; मुख्यस्यैव राजपदार्थस्यैकार्थीभावात् पुरुषविशेषकत्वेन पुरुषपदार्थोपादानोपपत्तौ लक्षणाया अभावात्। मुख्यार्थासम्भवे हि लक्षणाभ्युपगमनीया। मुख्यार्थसंभवेऽपि लक्षणायां च 'राजानं पुरुषमुपास्ते' इत्यत्र वाक्येऽपि राजशब्दः पुरुषं लक्षयेत्। किञ्च, राजपुरुष इति वृत्तौ राजशब्दस्य पुरुषे लक्षणायां राजपुरुषयोः स्वस्वामिभावरूपः सम्बन्धश्च नियोगतः = नियमतो न प्रतीयेत। लक्षणायाः सामीप्यादिनिमित्ताया अपि भावाद् नियतोऽत्र स्वस्वामिभावरूपस्य सम्बन्धस्य लक्षणानिमित्तत्वे मानाभावात्। किञ्च, पुरुषशब्देनैव पुरुषपदार्थस्य प्रतीतत्वान्न राजपदस्य वृत्तौ पुरुषे लक्षणा।

कार्ष्णोत्तरासङ्गमाकर्षतीति च श्रुत्यर्थसम्भवे कथं लक्षणा ?

न चेदं नोपसर्जनमिति शक्यते वक्तुम्, पूर्वपदप्रकृतिस्वरावधारणाद् बहुव्रीहित्वावसायात् ॥ २६ ॥

प्रकारान्तरेणापि गुणवचनस्य कृष्णादेर्विशेषणत्वे नियममाह—

**तिले पूर्वमुपात्ते वा तत्रैव मतुबिष्यते ।**
**स च धर्मः समासेषु गुणस्तस्माद् विशेषणम् ॥२७॥**

तिलजात्यवच्छिन्ने प्रथममुपात्ते विशेष्ये सामान्यस्वभावेनावसिते विशिष्टगुणतयावसायार्थं कृष्णशब्दः प्रवर्तमानो गुणवचनो मतुब्लोपात् तत्रैव वर्तते। अत्र हि कृष्णोऽस्यास्तीति मतुप् तिलद्रव्य एव हि सम्बन्धिनि सामर्थ्याद् गुणशब्दात् कृतः। तस्य "गुणवचनेभ्यो लुक्" ( वा० ५।२।९४ ) इति लुक् सामर्थ्यलभ्यो नोक्तः।

स च सम्बन्धाख्यो धर्मो मतुपः प्रक्रमात् तदर्थत्वेन प्रत्यासत्तेरवगम्यमानः समासेष्वन्तर्भवति। अभिहितः सोऽर्थोऽन्तर्भूतः प्रातिपदिकार्थः सम्पन्न इति तस्मात्

---

किञ्च, 'राजपुरुषः' इति वृत्तावुपसर्जनस्य राजपदस्य गुणे त्वन्याय्यकल्पनेति न्यायेन पुरुषे लक्षणास्वीकारे तद्दृष्टान्तेन=कार्ष्णोत्तरासङ्गमाकर्षति इति बहुव्रीहौ उपसर्जनस्य उत्तरासङ्गपदस्य अन्यपदार्थे सम्बन्धिनि लक्षणा भवन्मते स्यात्, सा च श्रुत्यर्थसम्भवे=मुख्यार्थसम्भवे कथमुपपद्यते, लक्षणाया मुख्यार्थबाधमूलकत्वात्।

न चेदमुत्तरासङ्गपदं नोपसर्जनमिति शक्यते वक्तुम्, पूर्वपदप्रकृतिस्वरावधारणेन बहुव्रीहित्वनिश्चयात् तत्रोपसर्जनत्वस्य वक्तुं शक्यत्वादिति ॥ २६ ॥

गुणवचनस्य कृष्णादिशब्दस्य विशेषणत्वे नियमं कृष्णशब्दप्रकृतिकस्य मतुपो लोपरूपेण प्रकारान्तरेणापि आह—तिले पूर्वमुपात्ते वा इति।

अस्यार्थः—वा इति पक्षान्तरे—अथवा, कृष्णशब्दप्रयोगात् पूर्वमुपात्ते विशेष्ये सामान्यरूपतया निश्चिते तिलत्वजात्यवच्छिन्ने तिले पश्चाद् विशेषगुणवत्तया तस्य निश्चयार्थं तत्रैव तिलरूपे द्रव्ये सम्बन्धिनि कृष्णशब्दाद् मतुबिष्यते, तस्य च मतुपः 'गुणवचनेभ्यो मतुपो लुबिष्यते' इति वचनाल्लुप्। स च मतुवर्थो धर्मः सम्बन्धरूपः समासेषु अन्तर्भूतो वृत्तिलभ्यः, तस्मात् परिशिष्यमाणो गुणः पश्चात् सम्बध्यमानस्तिलत्वजात्यवच्छिन्नस्य द्रव्यस्य विशेषणमिति।

अयं भावः—तिलत्वजात्यवच्छिन्ने वशेष्ये प्रथममुपात्ते सामान्यरूपतयाऽवसिते=निश्चिते विशेषगुणवत्तयाऽवसायार्थम्=निश्चयार्थं कृष्णशब्दः प्रवर्तमानो गुणवचनो मतुब्लोपात् तत्रैव=गुण एव वर्तते। अत्र हि 'कृष्णोऽस्यास्ति' इत्यर्थे मतुप् तिलद्रव्य एव हि सम्बन्धिनि सामर्थ्याद् एकार्थीभावलक्षणाद् हेतोर्गुणशब्दात् कृतः। तस्य "गुणवचनेभ्यो लुप्" इति लुप् वृत्तिसामर्थ्यलभ्यः, अत एव नोक्तः।

स च मतुवर्थः सम्बन्धाख्यो धर्मो मतुपः प्रक्रमात्=उपक्रमे 'मतुबिष्यते' इति मतुपः पाठात् प्रत्यासत्तेस्तदर्थत्वेन=तत्पदार्थत्वेन अवगम्यमानः समासेष्वन्तर्भवति। "अभिहितः

समासविषयात् सम्बन्धाख्याद् धर्माद्धेतोर्गुण एवावच्छेदकः, सम्बन्धेन द्रव्ये स्वरूपसमर्पणात् ।

जातिस्तु न गुणशब्देन पूर्वमुपात्तं द्रव्यमवच्छिनत्ति, गुणापेक्षया जातेरत्यासन्नत्वात् पूर्वं तदात्मनैव द्रव्यस्य निरूपणौचित्यात् । गतमेतत् ।। २७ ।।

एवं समानाधिकरणवृत्तिं विचार्य द्वन्द्वैकशेषवृत्तिं विचारयितुमाह—

**अनुस्यूतेव भेदाभ्यामेका प्रख्योपजायते ।**
**यदा सहविवक्षां तामाहुर्द्वन्द्वैकशेषयोः ।।२८।।**

इहैकक्रियागुणनिवेशार्थमर्था बुद्ध्या निरूप्यमाणाः क्रियागुणद्वारेणेतरेतरस्यापेक्षया समुदायभावमापद्यमानाः साहभाव्येन वक्तुमभिप्रेता द्वन्द्वैकशेषलक्षणसमासपदवाच्या भवन्ति । समुदायश्चात्र नावयवव्यतिरिक्तः, अपि तु त एवावयवाः संहन्यन्ते । तथा चात्रावयवभेदाभासानुविद्धा प्रतीतिर्नैयमिकी । अवयवाभासाच्च द्विवचनबहुवचने न विरुध्येते ।

---

सोऽर्थोऽन्तर्भूतः प्रातिपदिकार्थः सम्पन्नः'' इति भाष्योक्तेः । तस्मात् समासविषयात् सम्बन्धाख्याद् धर्माद् हेतोर्गुण एवावच्छेदको द्रव्यस्य, न तु सम्बन्धः, सम्बन्धेन द्रव्ये स्वरूपसमर्पणात् तस्यावच्छेद्यकोटौ द्रव्येऽन्तर्भावात् । गुणशब्देन पूर्वमुपात्तं द्रव्यं जातिरवच्छिनत्ति इत्येतत्तु न, गुणापेक्षया जातेरत्यासन्नत्वेन=जातेर्गुणापेक्षया द्रव्यस्यातिसन्निहितत्वेन पूर्वं जात्यात्मनैव द्रव्यस्य निरूपणौचित्यात् ।

जातिर्हि द्रव्यस्य जन्मकाल एव तेन सम्बध्यते, नित्यत्वेन तदानीं तस्याः सत्त्वात् । गुणस्तु जाते द्रव्ये समुत्पद्यमानो द्रव्यजन्मान्तरं द्रव्यस्य स्थितिकाले तेन सम्बध्यते, 'उत्पन्नं द्रव्यं क्षणमगुणमक्रियञ्च तिष्ठति' इत्यभ्युपगमात् ।

गतमेतत्=द्रव्यगुणयोर्विशेषणविशेष्यभावनियमविषयको विचारो गतः । हेलाराजीये गतमेतदिति नपुंसकनिर्देशः सामान्ये इत्यवसेयमिति ।। २७ ।।

एवं समानाधिकरणवृत्तिं तद्धितरूपां समासरूपञ्च विचार्य द्वन्द्वैकशेषवृत्तिं विचारयितुमाह=अनुस्यूते वेति ।

अस्यार्थः—यदा 'धवखदिरौ धवौ' इत्यादावितरेतरयोगद्वन्द्वैकशेषयोरेकार्थीभावरूपवृत्तिरूपयोरुद्भूताभ्यां भेदाभ्यां समुदायेऽप्राधान्येनानुगताभ्यामनुस्यूतेवानुविद्धेव एका प्रख्या=समुदायविषयक एकत्वेन व्यपदेशो ज्ञानञ्चोपजायते, ताम्=एकां प्रख्याम्, सहविवक्षामाहुः ।

इह 'धवखदिरौ छिन्धि, धवौ छिन्धि, धवखदिरौ धवौ वा रुचिरौ इत्यादावेकक्रियागुणनिवेशार्थम्=एकस्यां क्रियायाम्, एकस्मिन् गुणे वा' धवखदिरयोर्द्वयोरपि समन्वयार्थम् अर्था धवखदिरादयो वक्त्रा बुद्ध्या निरूप्यमाणाः साक्षात्परम्परापेक्षाशून्यत्वेऽपि क्रियागुणद्वारा इतरेतरस्यापेक्षया समुदायभावमापद्यमानाः साहभाव्येन=साहित्येन वक्तुमभिप्रेता द्वन्द्वैकशेषलक्षणवृत्तिपदवाच्या भवन्ति । समुदायश्चात्र=द्वन्द्वैकशेषयोर्नावयवव्यतिरिक्तः, अपितु त एवावयवाः संहन्यन्ते=संघातभावमापद्यन्ते, तथा चात्र=द्वन्द्वैकशेषयोः अवयवभेदाभासानुविद्धा प्रतीतिर्नैयमिकी=नियता । अवयवाभासाच्च द्विवचनबहुवचने न विरुद्ध्येते ।

न हि यथा समासान्तरेष्वेक एवान्यावच्छिन्नोऽर्थः प्रधानम्, तथात्र सर्वेषां पदार्थानां समकक्ष्यत्वादवयवभेदानुगतैकप्रख्यावशाच्चोद्भूतावयवभेदः समुदायो वृत्तिपदवाच्यः। स चावयवाव्यतिरिक्त इत्यवयवशब्दैरेव व्यपदिश्यते धवखदिरपलाशा इति। यस्त्ववयव्यतिरिक्तः स शब्दान्तरेणोच्यते, समुदायो वनं यूथमित्यादि।

एकप्रख्यान्यथानुपपत्तेश्चायं समुदायः परस्परापेक्षैः प्रत्येकमेव पदैरुच्यते। तत्रावधार्यमाणेन समुदायेन भेदरूपस्य तिरोधानादिवशब्दः। एकसमुदायाभिधायित्वेऽपि च द्वन्द्वस्य पट्वीमृद्व्याविति समानाधिकरणलक्षणः पुंवद्भावो न भवति, वाक्ये व्यभिचारसम्भवात् तद्गतस्य समानाधिकरणत्वस्याश्रयणात्। वृत्तौ त्वेकार्थीभावात् तदव्यभिचारः। पट्वी च मृद्वी चेति तु वाक्ये भेदप्रतीतिप्राधान्यम्। अत एव भेदाधिष्ठानेन समुच्चयेन योग इति समानाभिधेयत्वाभावः॥ २८॥

भेदानुवेधस्य सहविवक्षायामविशेषात् समाहारेतरेतरयोः को भेद इत्यत आह—

**इतरेतरयोगस्तु भिन्नसङ्घाभिधायिनाम्।**
**प्रत्येकं च समूहोऽसौ समूहिषु समाप्यते॥२९॥**

---

नहि यथा समासान्तरेषु 'राजपुरुषः' इत्यादिषु एक एवान्यावच्छिन्नोऽर्थः=राजविशिष्टः पुरुषरूपोऽर्थः प्रधानं तथात्र, सर्वेषां पदार्थानां द्वन्द्वैकशेषार्थघटकानां समकक्ष्यत्वात्, अवयवभेदानुगतैकप्रख्यावशाच्चोद्भूतावयवभेदः समुदायो वृत्तिपदवाच्यः। स चावयवाव्यतिरिक्त इति अवयवशब्दैरेव व्यपदिश्यते=धवखदिरपलाशा इति समुदायस्यैकत्वेऽपि बहुवचनोपपत्तिः। यस्तु समुदायोऽवयवव्यतिरिक्तः स शब्दान्तरेण=अवयवशब्दातिरिक्तशब्देन उच्यते, वनं यूथम् इत्यादि।

एकप्रख्याऽन्यथानुपपत्तेश्चायं समुदायः=अवयवाव्यतिरिक्तोद्भूतावयवभेदः समुदायः, धवखदिरपलाशा इत्यादौ परस्परापेक्षैः प्रत्येकमेव पदैरुच्यते। तत्रावयवैरवधार्यमाणेन समुदायेन भेदरूपस्यातिरोधानादिवशब्दः। द्वन्द्वस्यैकसमुदायाभिधायित्वेऽपि च पट्वीमृद्व्यावित्यत्र समानाधिकरणलक्षणः पुंवद्भावो न भवति, वाक्ये पदार्थद्वयस्याश्रयव्यभिचारसम्भवात्। वाक्यगतस्य सामानाधिकरण्यस्य वृत्तौ समानार्थत्वेनाश्रयणात्। वृत्तौ त्वेकार्थीभावात् सामानाधिकरण्याव्यभिचारः। पट्वी च मृद्वी चेति तु वाक्ये भेदप्रतीत्या उभयोः प्राधान्यम्।

अत एव भेदाधिष्ठानेन समुच्चयेनोभयोर्योग इति समानाभिधेयत्वलक्षणस्य सामानाधिकरण्यस्याभाव इति॥ २८॥

समाहारेतरेतरयोगयोर्द्वन्द्वयोर्मूलभूतायां सहविवक्षायां भेदानुवेधस्याविशेषात् तयोर्द्वन्द्वयोः को भेदः=को विशेष इत्याशङ्क्याह—इतरेतरयोगस्तु इति।

अस्यार्थः—भिन्नसंघाभिधायिनाम्=भिन्न उद्भूतावयवभेदो यः संघस्तदभिधायिनां तु पदानामितरेतरयोगः समासो भवति।

सहविवक्षायामनेकानुस्यूतैकप्रख्यारूपायां द्वैतमवयवप्राधान्यं सङ्घप्राधान्यं च। तत्रावयवप्राधान्यमितरेतरयोगस्य विषयः।

तथाहि—भिन्नमुद्भूतभेदं सङ्घं समूहं येऽभिदधति, तेषामयं वाच्यो द्वन्द्वपदानां प्रतिभागं ह्यसौ समूहः पर्यवस्यति। तत एकैकस्यापि वाच्यः। प्रत्यवयवपरिसमाप्तो हि समुदाय एकावयवदृष्टावपि गृह्यते। एवमेकावयववाचकेनाप्यभिधीयते। यथा च भूयोऽवयवदृष्टौ स्फुटमवधार्यते, तथा समुदायादपि स्पष्टार्थाभिधायिनः स्फुटा प्रतीतिः। तथा च प्रत्यवयवं प्रतिपत्तावपि न शब्दान्तरवैयर्थ्यम्। सङ्घप्राधान्ये तु समाहार इत्यर्थादुक्तम्।

इत्थमनुस्यूतभेदत्वे समानेऽपि अयं विशेषस्तु शब्दद्योत्योऽवयवप्राधान्यलक्षणः। अयमेव चैकशेषस्यापि द्वन्द्वापवादस्य विषयः॥ २९॥

---

असौ च समूहः = उद्भूतावयवभेद इतरेतरयोगसमासवाच्यश्च समूहः प्रत्येकं समूहिषु अवयवेषु जातिवत् समाप्यते। अभिन्नसंघाभिधायिनाम् = तिरोहितावयवभेदसमूहाभिधायिनां तु पदानां समाहारद्वन्द्वः समासो भवति, असौ च समूहो न प्रत्येकं परिसमाप्यते, अवयवभेदस्य तिरोहितत्वादित्ययं चेतरेतरयोगात् समाहारद्वन्द्वे विशेषोऽर्थादुक्तो भवतीति।

अयं भावः—अनेकत्वानुस्यूतैकप्रख्यारूपायां सहविवक्षायां द्वैतम् = द्वैविध्यम्, अवयवप्राधान्यम्, संघप्राधान्यञ्चेति। तत्र अवयवप्राधान्यमितरेतरयोगस्य विषयः।

तथा हि—भिन्नमुद्भूतभेदं संघं समूहं येऽभिदधति, तेषां द्वन्द्वपदानामयम् = इतरेतरयोगस्य विषयः समूहः वाच्यः, प्रतिभागं हि असौ समूहः पर्यवस्यति, ततो हेतोरेकैकस्यापि वाच्यः। प्रत्यवयवपरिसमाप्तो हि समुदाय एकावयवदृष्टावपि गृह्यते। अवयवसमूहो द्रव्यम्, नास्ति समूहातिरिक्तोऽवयवी इति सांख्यदर्शने मुखदर्शने यथा 'चैत्रो गृह्यते' इत्युदाहरणम्। एवमेकावयववाचकेनापि = एको योऽवयवस्तद्रूपो यो वाचकस्तेनापि अभिधीयते। तद्यथा घटशब्दैकदेशे घ इति वर्णेऽभिहिते सति घटपदार्थोऽस्फुटमभिधीयते, एवं धवेत्युक्ते धवखदिरौ अस्फुटमभिधीयेते। यथा च भूयोऽवयवदृष्टौ स्फुटमवधार्यते चैत्र इति, वनमिति, तथा घट इति। धवखदिरावितिसमुदायादपि स्फुटार्थाभिधायिनः स्फुटा प्रतीतिः। तथा च प्रत्यवयवं समुदायार्थप्रतिपत्तावपि न शब्दान्तरवैयर्थ्यम्, स्फुटार्थप्रतिपत्तये तदावश्यकत्वात्। अवयवप्राधान्ये इतरेतरयोग इत्युक्तौ संघप्राधान्ये तु समाहार इत्यर्थादुक्तं भवति।

इत्थमितरेतरयोगसमहारयोरनुस्यूतभेदत्वे समानेऽपि, अयं तु इतरेतरयोगे विशेषः शब्दद्योत्योऽवयवप्राधान्यलक्षणः।

अयमेव च = अवयवप्राधान्यलक्षणो विशेष एव च द्वन्द्वापवादस्यैकशेषस्यापि विषयः, उत्सर्गापवादयोः समानविषयकत्वात्।

यद्यपि प्रातिपदिकानामेकशेष इति सिद्धान्तभूते पक्षे न द्वन्द्वापवादत्वमेकशेषस्य संभवति, प्रातिपदिकानां द्वन्द्वाप्राप्तेः, तथापि यद्यत्रैकशेषो न स्यात्, तदा द्वन्द्वः स्यादिति सांभावनिकं द्वन्द्वापवादत्वमेकशेषस्य द्रष्टव्यमिति॥ २९॥

उद्भूतावयवभेदः समुदायः प्रत्यवयवसमाप्तोऽभिधीयत इत्यत्र सदृशं निदर्शनमाह—

**व्यापारसमुदायस्य यथाधिश्रयणादिषु ।**
**प्रत्येकं जातिवद् वृत्तिस्तथा द्वन्द्वपदेष्वपि ॥३०॥**

क्रमिकस्य पूर्वापरीभूतस्य क्रियाकलापस्य पच्याद्यर्थस्य यथास्वमधिश्रयणादिव्यापाररूपे भावे जातेरिवाध्यासाद् वृत्तेः स एको दृश्यमानो वर्तमानः क्रियावयवः पचतीति वर्तमानकालाभिधायिप्रत्ययान्तपदवाच्यो यथा समर्थितः प्राक्, एवं द्वन्द्वपदवाच्योऽपि समुदायः प्रत्यवयववृत्तिरिति प्रतिपदमाभिधेयकमापद्यते। द्वन्द्वपदार्थेष्वेकैकस्यान्यापेक्षाप्रतीतिरवयवान्तरश्रवणे परिसमाप्यते।

इयमेव चात्रावयवानुविद्धसमुदायप्रतीतिः। जातिरपि प्रतिव्यक्ति परिसमाप्तेत्येकैकव्यक्त्यभिधायिनापि गवादिशब्देन प्रत्याय्यते। प्रथमव्यक्तिदर्शने स्पष्टावभासा व्यक्त्यन्तरग्रहणे स्फुटीभवति। एवमन्योन्यापेक्षिणामधिश्रयणादीनां पचिप्रत्ययः स्फुटः ॥ ३० ॥

स्यादेतत्। तादर्थ्यादधिश्रयणादिरपि पचिरिति युक्तं तत्राभिधानं जातावपि जातिशब्देन। इह पुनर्धवखदिरादिशब्दः पृथगर्थतया वाक्येषु ज्ञातः कथमेकार्थाभिधायी वृत्तौ स्यादित्याशङ्क्य दृष्टान्तेन व्युत्पादयति—

---

उद्भूतावयवभेदः समुदायः प्रत्यवयवपरिसमाप्तोऽभिधीयत इत्यत्र सदृशं निदर्शनमाह—व्यापारसमुदायस्येति।

अस्यार्थः - क्रमिकस्य पूर्वापरीभूतस्य व्यापारसमुदायस्य अधिश्रयणाद्यधःश्रयणान्तस्य पच्याद्यर्थस्य यथाधिश्रयणादिषु व्यापारेषु प्रत्येकं जातिवद्वृत्तिः स्तथा द्वन्द्वपदेष्वपि वाच्यो यः समुदायस्तस्य प्रत्यवयवं वृत्तिरिति।

अयं भावः—क्रमिकस्य पूर्वापरीभूतस्य व्यापारसमुदायस्य पच्यादिधात्वर्थस्य यथास्वम्= यथायथम् अधिश्रयणादिव्यापाररूपे भावे जातेरिव प्रत्येकमध्यासात्= तादात्म्याध्यासाद् वृत्तेः स एको दृश्यमानो वर्तमानः क्रियारूपोऽवयवः पचतीति वर्तमानकालाभिधायिलट्प्रत्ययान्तपदवाच्यो यथा समर्थित प्राक्, एवं द्वन्द्वपदवाच्योऽपि समुदायः प्रत्यवयववृत्तिरिति प्रतिपदमाभिधेयकम्= प्रत्येकपदवाच्यत्वम् आपद्यते। द्वन्द्वपदार्थेषु एकैकस्यान्यापेक्षया प्रतीतिरवयवान्तरश्रवणे परिसमाप्यते=परिसमाप्ता भवति, अन्यानपेक्षा भवति। इयमेव चात्रावयवानुविद्धसमुदायप्रतीतिः। जातिरपि प्रतिव्यक्ति परिसमाप्तेति एकैकव्यक्त्यभिधायिनाऽपि गवादिशब्देन प्रत्याय्यते। प्रथमव्यक्तिदर्शनेऽस्पष्टावभासा व्यक्त्यन्तरग्रहणे स्फुटीभवति।

एवमन्यानपेक्षिणामधिश्रयणादीनां पचिप्रत्ययोऽस्फुटः, अन्योन्यापेक्षिणां तु तेषां पचिप्रत्ययः स्फुट इति ॥ ३० ॥

स्यादेतद्। तादर्थ्यात्=पच्यर्थपाकार्थत्वादअधिश्रयणादिरपि पचिरिति युक्तं तत्राभिधानम्=अधिश्रयणादौ पच्यर्थत्वाभिधानम्, जातावपि प्रत्येकवाचिना गवादिना जातिशब्देनाभिधानं

**शौण्डार्धर्चपुरोडाशच्छत्रिणोऽत्र निदर्शनम् ।**
**ते विष्णुमित्रा इति च भिन्नेषु सहचारिषु ॥३१॥**

"सप्तमी शौण्डैः" ( २।१।४० ), "अर्धर्चाः पुंसि च" ( २।४।३१ ) इत्यत्र गणपठितधूर्तादिशब्दभेदाश्रयं बहुवचनम् । तच्चैवमुपपद्यते, यदि धूर्तादयोऽपि शौण्डादिशब्दवाच्याः, कथं च ते तथा भवन्ति, यदि साहचर्याद्ध्यारोपित-शौण्डादिभावाः ?

एवं पुरोडाशा इति बहुवचनान्यथानुपपत्तेः सहचरिता अपि करम्भपरि-वापधानापयस्या अभिधीयन्ते । तथा 'छत्रिणो यान्ति, ध्वजिनो यान्ति, ते विष्णुमित्राः' इति साहचर्यादध्यारोपितान्यथारूपास्तच्छब्दवाच्या दृष्टाः ।

एवं द्वन्द्वैकशेषयोर्द्विवचनबहुवचनान्यथानुपपत्त्या प्रतिपदमनेकार्थत्वमवस्था-प्यते, एकक्रियागुणविषयत्वेन साहचर्यात् परस्पररूपापत्तेः ॥ ३१ ॥

---

युक्तम्, इह पुनर्धवखदिरादिशब्दो भिन्नार्थतया वाक्येषु ज्ञातः. कथं वृत्तावेकार्थाभिधायी स्यादित्याशङ्क्य दृष्टान्तेन व्युत्पादयति=वाक्ये भिन्नार्थस्यापि वृत्तौ एकार्थत्वं ग्राहयति= शौण्डार्धर्चेति ।

अस्यार्थः—भिन्नेषु सहचारिषु सहचरितेषु पदार्थेषु वाचकत्वेन वर्तमानाः "सप्तमी शौण्डैः", ( पा० २।१।४० ) "अर्धर्चाः पुंसि च" (पा० २।४।११), 'पञ्चभिः पुरोडाशैः प्रचरन्ति, छत्रिणो यान्ति' इत्येतद्वाक्यघटकाः 'शौण्डार्धर्चपुरोडाशच्छत्रिणः, ते त्रिष्णुमित्राः' इति वाक्यघटको विष्णु-मित्रशब्दश्चात्र वाक्ये भिन्नार्थतया ज्ञातानां वृत्तावेकार्थाभिधायित्वे निदर्शनम् ।

तथा हि "सप्तमी शौण्डैः" ( पा० २।४।४० ) इत्यत्रैकशेषवृत्तौ शौण्डसहचरिता-नामन्येषामपि शब्दानां ग्राहकः ।

एवम् 'अर्धर्चाः पुंसि च (पा० २।४।२१) इत्यत्रापि ऊह्यम् । एवं 'पुरोडाशैः प्रचरन्ति' इत्यत्र बहुवचनान्तः पुरोडाशशब्दः स्वार्थसदृशानां करम्भपरिवापधानापयस्यानामभिधायकः । एवं 'ते विष्णुमित्रा' इत्यत्रापि बोध्यमिति ।

अयं भावः—"सप्तमी शौण्डैः" ( पा० २।१।४० ) "अर्धर्चाः पुंसि च" ( पा० २।४।२१ ) इत्यत्र गणपठितधूर्तादिशब्दभेदनिमित्तकं शौण्डैरिति, अर्धर्चा इति चैकशेषवृत्तौ बहुवचनम् । तच्चै-वमुपपद्यते, यदि धूर्तादयोऽपि शौण्डादिशब्दाच्याः । कथं च ते तादृशा भवन्ति, यदि साहचर्यात्= सहपाठाद् अध्यारोपितशौण्डादिभावाः । एवं वस्तुतः पुरोडाशस्यैकत्वेन पुरोडाशैरिति बहुवचना-न्यथानुपपत्तेः सहचरिता अपि = यागोपकारकत्वेन पुरोडाशसदृशा अपि करम्भपरिवापधानापयस्या अभिधीयन्ते । तथा 'छत्रिणो यान्ति, ध्वजिनो यान्ति, ते विष्णुमित्राः' इति वाक्येषु साहचर्यात्= सहगामित्वादन्येऽपि अध्यारोपितच्छत्रित्वादिरूपाश्छत्र्यादिशब्दवाच्या दृष्टाः ।

एवं द्वन्द्वैकशेषयोर्द्विवचनबहुवचनाऽन्यथाऽनुपपत्त्या प्रतिपदमनेकार्थाभिधायित्वमवस्थाप्यते । द्वन्द्वघटकपदार्थयोर्द्वयोश्चैकक्रियागुणविषयत्वेन=एकक्रियागुणान्वयित्वेन साहचर्याद् द्वयोः परस्पर-रूपापत्तेश्चैकार्थाभिधायित्वमपीति ॥ ३१ ॥

तदाह—

**अर्थान्तराभिधायित्वं तथार्थान्तरवर्त्तिनाम् ।**
**याभ्यां चैकमनेकार्थं ताभ्यामेवापरं पदम् ॥३२॥**

यथा शौण्डादिषु साहचर्यादर्थान्तराभिधानम्, तथात्रेति दार्ष्टान्तिके योजितम् । सहचरितयोरेव परस्पररूपाध्यासेनाभिधानेऽन्यस्यासहचरितस्याभिधानाभावादुपात्ता-भ्यामेव 'धवखदिरौ' इत्यत्र प्रत्येकमनेकार्थता । तथा च बहुवचनाभाव इत्याशयः ।

क्रिया चार्थान्तरेऽध्यासहेतुरत्रोक्ता, यदि प्रक्षरतीति प्लक्षोः न्यग्रोधेऽप्येतत् तुल्यमिति । तदेवं वार्त्तिककारोक्ता युगपदधिकरणता व्याख्याता ।

स हि 'चार्थे द्वन्द्ववचने असमासेऽपि चार्थसम्प्रत्ययादनिष्टप्रसङ्गः' इति चोदयित्वा 'सिद्धं तु युगपदधिकरणे द्वन्द्ववचनाद्' इति न्यासान्तरं पपाठ । युगपदेकेन

---

तदाह—द्वन्द्वघटकपदयोः प्रत्येकमनेकार्थाभिधायित्वे बहुवचनापत्तिं मनसि निधाय तां परिहर्तुं पूर्वोक्तार्थमनूद्योपपत्तिमाह—अर्थान्तराभिधायित्वमिति ।

अस्यार्थः—यथा शौण्डार्धर्चपुरोडाशादिशब्दानां यत्किञ्चित् सादृश्यरूपात् साहचर्यादर्थान्त-राभिधायित्वम्, तथा धवखदिरावित्यादिके द्वन्द्वेऽर्थान्तरवर्तिनां धवादिपदानामेकगुणक्रियाविषयत्व-रूपात् सादृश्यादर्थान्तराभिधायित्वम्, खदिरादिरूपार्थाभिधायित्वमपि इत्येवं प्रत्येकं द्वन्द्वघटकपदयो-रनेकार्थता ।

एवं सति धवखदिरावित्यत्र पदार्थचतुष्टयाभिधानेन बहुवचनापत्तिं मनसि निधाय समाधत्ते—याभ्यां चेति ।

अस्यार्थः—धवखदिरावित्यत्रोपात्ताभ्यां याभ्यां च धवखदिरपदार्थाभ्यामेकं धवपदं खदिरपदं वाऽनेकार्थम्, ताभ्यामेव पदार्थाभ्यामपरमपि पदं धवपदं खदिरपदं वाऽनेकार्थमित्येवं धवखदिररूप-पदार्थद्वयातिरिक्तपदार्थाभिधानाभावाद् धवखदिरावित्यत्र न बहुवचनमिति ।

अयं भावः—यथा शौण्डादिषु साहचर्यात् = यत्किञ्चित् सादृश्यादर्थान्तराभिधानम्, तथात्र = धवखदिरावित्यादिके द्वन्द्वे इति दृष्टान्तसिद्धं वस्तु दार्ष्टान्तिके योजितम् । सहचरितयो-रेव = एकगुणक्रियाविषयत्वेन सदृशयोरेव परस्परस्वरूपाध्यासेनाभिधानेऽन्यस्यासहचरितस्या-भिधानाभावादुपात्ताभ्यामेव धवखदिरपदार्थाभ्यां धवखदिरावित्यत्र धवखदिरपदयोः प्रत्येकमने-कार्थता । तथा च बहुवचनाभाव इत्याशयः ।

'धवखदिरौ छिन्धि' इत्यत्र पदार्थद्वयान्वयिनी क्रिया चात्रार्थान्तरेऽर्थान्तरस्याध्यासहेतुरुक्ता, एकक्रियान्वयित्वरूपसादृश्यसंपादकत्वात् । प्लक्षन्यग्रोधावित्यत्र तु यदि प्रक्षरति छिन्ने सति क्षीरमिति व्युत्पत्त्या प्लक्षो न्यग्रोधेऽप्येतत्तुल्यमिति । तदेवं वार्त्तिककारोक्ता युगपदधिकरणवचनता व्याख्याता ।

स हि चार्थे द्वन्द्ववचने असमासेऽपि = समासाभाववत्यपि समुच्चयबोधकेऽन्वाचयबोधके वा वाक्ये चार्थसंप्रत्ययात् = चार्थस्य समुच्चयस्यान्वाचयस्य वा संप्रत्ययाद् अनिष्टप्रसङ्गः = ईश्वरं गुरुञ्च भजस्वेति समुच्चये, भिक्षामट गाञ्चानयेत्यन्वाचये च द्वन्द्वसमासापत्तिरूपानिष्टप्रसङ्ग इति चोदयित्वा 'सिद्धं तु युगपदधिकरणे द्वन्द्ववचनादि'ति 'चार्थे द्वन्द्वः' (पा० २।२।२९) इत्यस्य स्थाने

शब्देन यदाधिकरणमभिधेयं द्वन्द्वपदवाच्यमभिधीयते, समुदायरूपं परस्परारोपित-स्वार्थम्, तदा द्वन्द्वो वक्तव्य इत्यर्थः। एवं सहविवक्षायां द्वन्द्व इत्युक्तं भवति। तत्रैव युगपदधिकरणवचनतायाः समर्थितत्वात्।

ननु चाभिधानक्रमादभिधेयक्रमोऽवश्यम्भावीति कथं हि युगपदधिकरण-वचनता? नैतत्, प्लक्षन्यग्रोधौ, धवखदिरपलाशा इत्यत्र यदि न्यग्रोधार्थप्रतिपत्तिकाले प्लक्षार्थस्य नावगतिः, पलाशार्थप्रतिपत्तिकाले च यदि धवाद्यर्थस्य नावगतिः, तदा न्यग्रोधपलाशशब्दयोरेकार्थत्वादेकवचनमेव स्याद्, न द्विवचनबहुवचने, अतो द्विवचन बहुवचनान्यथानुपपत्त्यात्रैकैकोऽपि शब्दोऽनेकार्थाभिधायीत्यनुमानाद् युगपद्वाचिता निश्चीयते।

तदुक्तम्—'शब्दपौर्वापर्यादर्थपौर्वापर्याभिधानमिति चेद्, द्विवचनबहुवचनानु-पपत्तिरित्युद्भूतावयवभेदश्च समुदाय इति समुदायाश्रयमेकवचनं न चोदनीयम्। साहचर्यं चार्थान्तराभिधाने हेतुर्लोकप्रसिद्ध्यार्थान्तरत्वात् कथ्यते। प्रक्षरणं तु विस्तारेणावस्थानं न्यग्रोधेऽप्यस्तीति तस्यासौ स्वार्थ एव। तदुक्तम् 'कारणाद् द्रव्ये शब्द-निवेश इति चेत्, तुल्यकारणत्वात् सिद्धम्' इति।

---

न्यासान्तरं पपाठ। युगपदेकेन शब्देन यदाधिकरणमभिधेयं द्वन्द्वपदवाच्यमभिधीयते समुदायरूपं परस्परारोपितस्वार्थम्, तदा द्वन्द्वो वक्तव्य इत्यर्थः।

एवं सहविवक्षायाम्=धवखदिरावित्यादौ द्वन्द्वघटकपदार्थयोर्द्वयोरेकरूपेण युगपदेकक्रिया-द्यन्वयित्वविवक्षायां द्वन्द्व इत्युक्तं भवति। समुच्चयेऽन्वाचये वा तु नैतादृशी सहविवक्षा, इति न तत्र द्वन्द्वः। तत्रैव=सहविवक्षायामेव युगपदधिकरणवचनतायाः समर्थितत्वात्।

ननु चाभिधानक्रमादभिधेयक्रमोऽवश्यंभावी इति कथं हि युगपदधिकरणवचनता? नैतत्, 'प्लक्षन्यग्रोधौ, धवखदिरपलाशाः, इत्यत्र यदि न्यग्रोधार्थप्रतिपत्तिकाले प्लक्षार्थस्य नावगतिः, पला-शार्थप्रतिपत्तिकाले च यदि धवाद्यर्थस्य नावगतिः, तदा न्यग्रोधपलाशशब्दयोरेकार्थत्वादेकवचनमेव स्यात्, न द्विवचनबहुवचने। अतो द्विवचनबहुवचनान्यथानुपपत्त्याऽत्रैकैकोऽपि शब्दोऽनेकार्थाभि-धायीत्यनुमानाद् युगपद् वाचिता निश्चीयते। तदुक्तम्—शब्दपौर्वापर्यादर्थपौर्वापर्याभिधानमिति चेद्, द्विवचववहुवचनानुपपत्तिरिति।

अस्यार्थः—शब्दपौर्वापर्यादर्थपौर्वापर्याभिधानमिति युगपद् वाचिता न सिद्ध्यतीति चेद्, युगपद्वचित्वाभावे द्विवचनबहुवचनानुपपत्तिर्द्वन्द्वे इति। इतरेतरयोगे समुदायश्चोद्भूतावयवभेद इति समुदायाश्रयम्=समुदायगतैकत्वनिमित्तकमेकवचनमितरेतरयोगेन चोदनीयम्। साह-चर्यञ्च=द्वन्द्वघटकपदार्थयोः परस्परं सादृश्यञ्च अर्थान्तराभिधाने=एकपदस्यापरपदार्थाभिधाने तादृरूप्याध्यासद्वारा हेतुः। वृत्तावपरपदार्थस्य शास्त्रदृष्ट्या स्वार्थत्वेऽपि लोकप्रसिद्ध्याऽर्थान्तरत्वं कथ्यते। प्लक्षशब्दस्य योगलभ्योऽर्थः, प्रक्षरणं तु छेदे सति दुग्धस्यन्दनरूपं विस्तारेणावस्थानं वा प्लक्ष इव न्यग्रोधेऽप्यस्तीति तस्यासौ=प्लक्षशब्दस्य न्यग्रोधः स्वार्थ एव। तदुक्तम्—"कार-णात्=प्रवृत्तिनिमित्ताद् द्रव्ये शब्दनिवेश इति चेत्, तुल्यकारणत्वात्=प्रवृत्तिनिमित्तस्य प्रक्षरण-रूपस्य प्लक्ष इव न्यग्रोधेऽपि तुल्यत्वात् सिद्धम्" इति।

न चैवमतिप्रसङ्गः, वाक्येऽपि न्यग्रोधशब्देन प्लक्षार्थस्य प्रतिपादनप्रसङ्गाद् । 'यतस्तद्विषयं च' इत्युक्तम् ।

वृत्तिविषये शब्दानां शक्तिवैचित्र्यादर्थान्तराभिधानम्, न तु सर्वत्रेत्यर्थः । अत एव तत्र साहचर्यादेतदितीतरस्याप्रयोगे तदभाव उक्तः । एकेनोक्तत्वादपरस्य प्रयोगोऽनुपपन्न इति चेद्, अनुक्तत्वात् प्लक्षेण न्यग्रोधस्य न्यग्रोधप्रयोग इति ।

एवं चेतरेतरसंनिधाने भारोद्यन्तृवत् परस्परशक्त्याविर्भावनाद् नियतविषयमेव परस्पराभिधानं शब्दानामित्युक्तम् । अभिधानं पुनः स्वाभाविकमिति । तदेवं समर्थिता युगपदधिकरणवचनता ।

भाष्यकारेण तु 'दुःखा, दुरुपपादा चेयम्' ( म० भा० २।२।२९ ) इत्युक्त्वा पाणिनीय एव सूत्रन्यासः समर्थितः किल । नेयं प्रतीतावुपारोहतीति दुःखा, प्रमाणाभावाच्च दुरुपपादा ॥ ३२ ॥

तद् व्याचष्टे—

**समुदायान्तरत्वाच्च तादृशोऽर्थो न लौकिकः ।**
**अन्वयव्यतिरेकाभ्यां शास्त्रार्थोऽपि न दृश्यते ॥३३॥**

---

न चैवमतिप्रसङ्गः, वाक्येऽपि प्लक्षशब्देन न्यग्रोधस्य प्रतिपादनप्रसङ्गाद् । यतस्तद्विषयश्च=वृत्तिविषयश्चेत्युक्तम् ।

वृत्तिविषये शब्दानां शक्तिवैचित्र्यादर्थान्तराभिधानम्, न तु सर्वत्र इत्यर्थः ।अत एव= वृत्तिविषयकत्वादेव तत्र साहचर्यादेतद्=पदान्तरसाहचर्यादर्थान्तराभिधानमित्युक्त्या इतरस्य पदस्याप्रयोगे तदभावः=अर्थान्तराभिधानाभावः उक्तः । "एकेनोक्तत्वादपरस्य प्रयोगोऽनुपपन्न इति चेत्, प्लक्षेण न्यग्रोधस्यानुक्तत्वाद् न्यग्रोधप्रयोगः" इति च तत्रोक्तम् ।

एवञ्चेतरेतरसन्निधाने भारोद्यन्तृवत् परस्परशक्त्याविर्भावनाद् नियतविषयमेव=वृत्तिविषयकमेव परस्परस्यार्थाभिधानं शब्दानामित्युक्तम् । वाक्ये स्वार्थाभिधानं पुनः स्वाभाविकम् इति । तदेवं समर्थिता युगपदधिकरणवचनता ।

भाष्यकारेण तु "दुःखा, दुरुपपादा चेयम्" इत्युक्त्वा "चार्थे द्वन्द्वः" ( पा० २।२।२९ ) इति पाणिनीय एव सूत्रन्यासः समर्थितः किल । नेयं युगपदधिकरणवचनता प्रतीतावुपारोहति इति दुःखा, प्रमाणाभावाच्च दुरुपपादा इति भाष्यकाराशय इति ॥ ३२ ॥

युगपदधिकरणतायाः दुःखत्वं दुरुपपादत्वञ्च व्याचष्टे—समुदायान्तरत्वाच्चेति ।

अस्यार्थः—समुदायान्तरत्वाच्च= द्वन्द्वलक्षणेन पदसमुदायेनाभिधीयमानस्यार्थसमुदायस्य द्वन्द्वघटकप्रत्येकपदवाच्यादर्थसमुदायादन्यत्वाच्च, तादृशोऽर्थः = द्वन्द्वघटकप्रत्येकपदवाच्योऽर्थो न लौकिकः, द्वन्द्ववाच्यस्यार्थसमुदायस्य लौकिकत्वेऽपि द्वन्द्वघटकप्रत्येकपदवाच्योऽर्थसमुदायो न लौकिकः, लोके ततस्तदप्रतीतेरिति निष्कर्षः । पचतीत्यादिपदार्थेषु अखण्डेषु यथा प्रकृतिप्रत्ययार्थौ शास्त्रीयापोद्धारबुद्ध्यान्वयव्यतिरेकाभ्यां कल्पितौ, तथा द्वन्द्वघटकप्रत्येकपदवाच्योऽर्थसमुदायोऽन्वयव्यतिरेकाभ्यां शास्त्रार्थोऽपि = आपोद्धारिकः शास्त्रीयार्थोऽपि न दृश्यते = नानुभूयते, द्वन्द्वादपोद्धृतैस्तत्तत्पदैः स्वार्थस्यैवाभिधानात्, अर्थान्तराभिधानाभावाच्चेति ।

इह लोकाच्छब्दार्थावसायः। न चात्र स्थितलक्षणोऽलौकिको व्यवहारोपयोगी प्रत्येकं पदवाच्योऽर्थो नैकोऽवधार्यते। न हि शब्दान्तरस्य शब्दान्तरार्थाभिधानं लोके दृश्यते। रूढत्वाच्च लौकिकस्यार्थस्य प्रक्षरणमात्रान्न्यग्रोधः प्लक्षो नोच्यते। न हि गमनाद् गौरिति पुरुषोऽपि गच्छन् गौरित्यभिधीयते। तस्माद् द्वन्द्वलक्षणेन समुदायेनायमन्य एवावयववाच्यात् समुदायादभिधीयमानः समुदायो विज्ञेयोऽलौकिकः।

अथ प्रकृतिप्रत्ययार्थवदापोद्धारिकोऽयमन्वयव्यतिरेकलभ्यः शास्त्रीयोऽत्र प्रत्येकं द्वन्द्वपदवाच्योऽर्थः। तदपि न; यस्मादन्वयव्यतिरेकाभ्यामत्र स्वार्थ एव प्रसिद्धः प्रत्येकं पदानामवधार्यते, न त्वर्थान्तराभिधानशक्तिरवधारयितुं पार्यते। प्लक्षशब्दसन्निधाने हि न्यग्रोधस्य प्लक्षोऽप्यर्थ इत्युच्यते, प्रतीतेः। सा च प्रतीतिस्तस्य स्वशब्दादेव सिद्धेति न स्तोऽन्वयव्यतिरेकौ। काममेकशेषे शब्दान्तरस्याप्रयोगाद् भारोद्यन्तृन्यायेन परस्परं शक्त्याविर्भावनादेकस्यानेकार्थप्रत्यायनशक्तत्वमनेन न्यायेन व्युत्पाद्यते स्ववाचकस्यैवानुपहतशक्तेस्तु द्वन्द्वेसम्भवात् कुतोऽप्रतीता शब्दान्तरस्य तत्र शक्तिः कल्प्येत? उद्भूतावयवभेदस्य तु समुदायस्य समासवाच्यत्वाद् द्विवचनबहुवचनोपपत्तिः। समासाद्धि द्विवचनबहुवचने जायेते। नोत्तरपद-

---

अयं भावः—इह लोकाच्छब्दार्थावसायः=इह लोके प्रयोज्यप्रयोजकवृ[illegible]व्यवहाराद् शक्तिग्रहपूर्वकं तत्तच्छब्दार्थनिश्चयः। न चात्र प्रत्येकं द्वन्द्वघटकपदवाच्यो नैकोऽर्थः=अनेकोऽर्थः स्थितलक्षणः=अनपोद्धृतस्वरूपो लौकिको व्यवहारोपयोगी अवधार्यते। नहि शब्दान्तरस्य शब्दान्तरार्थाभिधानं लोके दृश्यते। किञ्च लौकिकस्यार्थस्य रूढत्वेन तत्र योगाभावात्, प्लक्षन्यग्रोधावित्यत्र प्रक्षरणमात्राद् न्यग्रोधः प्लक्षो नोच्यते। प्लक्षत्वजातेरेव तत्र प्लक्षशब्दप्रवृत्तिनिमित्तत्वात्, तस्याश्च न्यग्रोधेऽभावात्। नहि गमनाद् गौरिति व्युत्पत्त्या पुरुषोऽपि गच्छन् गौरित्यभिधीयते। तस्माद् द्वन्द्वलक्षणेन पदसमुदायेनाभिधीयमानोऽयमर्थसमुदायो द्वन्द्वघटकप्रत्येकपदवाच्यादर्थसमुदायाऽन्य एव विज्ञेयो लौकिकः।

अथ प्रकृत्यर्थप्रत्ययार्थवदापोद्धारिकोऽयमन्वयव्यतिरेकलभ्यः शास्त्रीयोऽत्र=द्वन्द्वे प्रत्येकं द्वन्द्वपदवाच्योऽर्थसमुदायः। तदपि न; यस्मादन्वयव्यतिरेकाभ्यामत्र=लोके प्रत्येकं द्वन्द्वघटकपदानां स्वार्थं एव प्रसिद्धोऽवधार्यते, न तु तेषामर्थान्तराभिधानशक्तिरवधारयितुं पार्यते, लोकव्यवहारे तेभ्योऽर्थन्तराप्रतीतेः। प्लक्षशब्दसन्निधाने हि न्यग्रोधशब्दस्य प्लक्षोऽप्यर्थ इत्युच्यते, प्रतीतेः। सा च प्रतीतिस्तस्य तत्र स्वशब्दादेव सिद्धेत्येन्वयव्यतिरेकौ न स्तः। एकशेषे तु द्वन्द्ववत् शब्दान्तरस्याप्रयोगाद् भारोद्यन्तृन्यायेनैकशेषात् प्रागवस्थायामेकशेषगोचरपदानां परस्परं शक्त्याविर्भावनादेकस्यानेकार्थप्रत्यायनशक्तत्वमनेन न्यायेन=भारोद्यन्तृन्यायेन कामं व्युत्पाद्यते। द्वन्द्वे तु स्ववाचकस्यैव=स्वार्थवाचकस्यैव संनिहितस्य शब्दान्तरस्य संभवात् कुतोऽप्रतीता शब्दान्तरस्य तत्र शक्तिः कल्प्येत? उद्भूतावयवभेदस्य तु समुदायस्य द्वन्द्वसमासवाच्यत्वाद् द्विवचनबहुवचनोपपत्तिः, समासाद्धि द्विवचन-

मात्राद्, येन तदर्थस्य द्वित्वादियोगसमर्थने प्रयस्येत। एकक्रियागुणनिवेशापेक्षया चानेकोऽर्थः प्रख्ययैकया विषयीक्रियमाणोऽशक्योऽभिधातुमेकेन शब्देनेति पदसमूहाख्येन समासेनाभिधीयते। स च समासशब्दोऽन्वाख्येयो निरंशोऽपि भागकल्पनेन व्युत्पाद्यते। ते च भागाः पृथक् पदान्तरसदृशा इति तदर्था एवानुगम्यन्ते।

तथा च प्रविभागेनानुशासने साकाङ्क्षमपि पदं स्वार्थ एव पर्यवस्यति। अपेक्षामात्रप्रभावितश्चायं समुदायः क्रमवतामर्थानामात्मभूतः। स कथं पदार्थमात्र प्रतीतौ प्रतिभासेत, येनोत्तरपदार्थप्रतीतावेव वचनं शक्येत ? सङ्कलनाप्रत्ययविषयत्वात् समुदायस्य भूयोऽवयवावधारणकालेऽवधारणात्।

न च विशेषणविशेष्यभावायोगाद् द्वन्द्वपदार्था न संहन्यन्त इति शङ्कनीयम्, सर्वस्य नामपदार्थस्य क्रिययैव संसर्गः, कस्यचित् तु साक्षात्क्रियया सम्बन्धः, अन्यस्य तु तद्विशेषणत्वेनेत्येतावान् समासान्तरेषु भेदः।

द्वन्द्वे तु समुदायविभक्त्या समुदायार्थस्य क्रियासम्बन्धद्योतनादवयवार्थाः क्रियार्थिनः समुदायात्मतामापद्यन्ते। एतच्च परस्यापि मतम्।

कथमन्यथैकैकोऽपि द्व्यर्थः स्यात् ? द्वयोरेवार्थयोरपेक्षावतोः समुदायत्वात्।

---

बहुवचने जायेते, समासस्यैव प्रातिपदिकत्वाद् नोत्तरपदमात्रात्, येन द्विवचनाद्युपपत्तये उत्तरपदार्थस्य द्वित्वादियोगसमर्थने प्रयस्येत। एकक्रियागुणसम्बन्धापेक्षया च प्रख्यया एकया विषयीक्रियमाणोऽनेकोऽर्थोऽशक्योऽभिधातुमेकेन शब्देनेति पदसमूहात्मकेन समासेनाभिधीयते। स चान्वाख्येयः समासशब्दो निरंशोऽपि भागकल्पनेन व्युत्पाद्यते। ते च कल्पिता भागाः पृथगवस्थितपदान्तरसदृशा इति तदर्थका एव शास्त्रेणानुगम्यन्ते।

तथा च समासात् प्रविभागेनानुशासने पदान्तरसाकाङ्क्षमपि पदं स्वार्थे एव पर्यवस्यति। पदार्थान्तरापेक्षामात्रप्रभावितश्चायमर्थसमुदायः क्रमवतामर्थानाम्=अभिधानक्रमेण प्रतीयमानानामर्थानामात्मभूतः=स्वरूपभावमापन्नः, स कथमुत्तरपदार्थमात्रप्रतीतौ प्रतिभासेत, येनोत्तरपदार्थप्रतीतौ सत्यां तन्निमित्तकमेकवचनमापादयितुं शक्येत ? समुदायस्य संकलनाप्रत्ययविषयत्वात्=गणनात्मकप्रत्ययविषयत्वाद् भूयोऽवयवावधारणकालेऽवधारणात्।

न च द्वन्द्वपदार्थानां विशेषणविशेष्यभावाभावाद् द्वन्द्वपदार्था न संहन्यन्त इति शङ्कनीयम्, सर्वस्य नामपदार्थस्य क्रिययैव सम्बन्धः। तत्र कस्यचित्तु साक्षात् क्रियया सम्बन्धः, अन्यस्य तु तद्विशेषणत्वेनेत्येतावान् समासान्तरेषु=द्वन्द्वातिरिक्तसमासेषु भेदः।

द्वन्द्वे तु पदसमुदायरूपसमासोत्तरजातविभक्त्या अर्थसमुदायरूपस्य समासार्थस्य क्रियासम्बन्धद्योतनात् क्रियासम्बन्धार्थिनोऽवयवार्थाः समुदायरूपतामापद्यन्ते। एतच्च परस्यापि=द्वन्द्वे एकैक एव प्रत्येकं पदस्यार्थ इति वादिनोऽपि मतम्।

कथमन्यथैकैकोऽपि द्व्यर्थः=पदार्थद्वयरूपः स्यात् ? द्वयोरेवार्थयोः परस्परापेक्षावतोः

अत एवान्योन्यापेक्षायाः समुदायादेवार्थानामवगतेश्चरितार्थत्वाच्चशब्दो निवर्तते। वाक्ये त्वर्थानां विच्छेदप्रति भासात् समुच्चयद्योतने चशब्दोऽपेक्ष्यते। तस्मात् समुदायादेवान्योन्यापेक्षाप्रभावितद्वित्वादियोगिनो द्विवचनबहुवचनयोरुपपत्तौ न काचिद् विप्रतिपत्तिः ॥ ३३ ॥

यत एवं—

**दुःखा दुरुपपादा च तस्माद् भाष्येऽप्युदाहृता।**
**युगपद्वाचिता सा तु व्यवहारार्थमाश्रिता ॥३४॥**

'दुःखयति, न चेतः परितोषयति' इति दुःखा, प्रतीतावनुपारोहात्, प्रयोजनस्य चान्यथासिद्धेः, अत एव प्रमाणाभावात् परस्य सुखेन प्रतिपादयितुं न पार्यत इति दुरुपपादा। सङ्कलनाविषयाश्चार्थाः समासान्तरेऽपि समुदायभावमापद्यन्त इत्यस्ति सहविवक्षा। एकजातीयविषयाश्चार्था भवन्त्येकशब्दवाच्या एकशेष इति सहविवक्षायामियं व्याहृता युगपदधिकरणवचनता वदता भाष्यकारेण कृच्छ्रोपपादनाय गर्भीकृता, ततश्चेयमङ्गीकृतैवेति ॥ ३४ ॥

---

समुदायरूपत्वात्। अत एव द्वन्द्वेऽर्थानामन्योऽन्यापेक्षायाः पदसमुदायादेवावगतेश्चरितार्थत्वात्=समुदायरूपत्वात्। अत एव द्वन्द्वेऽर्थानामन्योऽन्यापेक्षायाः पदसमुदायादेवावगतेश्चरितार्थत्वात्= कृतार्थत्वात्। तत्र चशब्दो निवर्तते। वाक्ये त्वर्थानां विच्छेदप्रतिभासात्=विच्छेदेन= विभागेन=पार्थक्येन प्रतिभासात् समुच्चयद्योतने कार्ये चशब्दोऽपेक्ष्यते। तस्माद् अन्योन्यापेक्षाप्रभावित=संपादितद्वित्वादियोगिनः=द्वित्वादिवाचकात् पदसमुदायादेव द्विवचनबहुवचनयोरुपपत्तौ न काचिद् विप्रतिपत्तिरिति ॥ ३३ ॥

युगपद्वाचितायाः दुःखत्वदुरुपपादत्वे पूर्वं प्रसाधिते अनूद्य व्यवहारार्थमाश्रिता इति फलनिर्देशपूर्वं तां निगमयति—दुःखा दुरुपपादा चेति।

अस्यार्थः—तस्मात्=प्रतीतावनुपारोहित्वात् प्रमाणाभावाच्च युगपद्वाचिता=युगपदधिकरणवचनता भाष्येऽपि दुःखा, दुरुपपादा च उदाहृता।

एवमपि सा तु विभक्त्यन्तानामेकशेष इति पक्षे एकशेषव्यवहारार्थम्, धवखदिरपलाशा इत्यादिद्वन्द्वेऽपि सहविवक्षाप्रयुक्तद्वन्द्वव्यवहारनिर्वाहार्थमाश्रिता इति।

अयं भावः—दुःखयति, न चेतः परितोषयति इति दुःखा, प्रतीतावनुपारोहाद् युगपद्वाचितायाः। प्रयोजनस्य तु अन्यथासिद्धेः=एकशेषे द्वन्द्वे वा सहविवक्षयैव सिद्धेः, अत एव प्रमाणाभावात् परस्य सुखेन प्रतिपादयितुं न पार्यत इति दुरुपपादा।

तथा हि—संकलनाविषयाश्चार्थाः समासान्तरेऽपि=द्वन्द्वसमासमध्येऽपि समुदायभावमापद्यन्त इत्यस्ति सहविवक्षा, सहविवक्षायां च सत्यामस्ति युगपदधिकरणवचनता। एकजातीयाश्चार्था भवन्त्येकशब्दवाच्या एकशेषे इति सहविवक्षायामियम्=युगपदधिकरणवचनता व्यवहृता। युगपदधिकरणवचनता दुरुपपादा इति वदता भाष्यकारेण कृच्छ्रोपपादनाया सगर्भीकृता=कृच्छ्रेण यदुपपादनं तत्र य आयासः स गर्भीकृतो यस्याः सा तथाभूता। ततश्चेयमङ्गीकृतैवेति ॥ ३४ ॥

तत्सम्भावनाबीजमाह्—

**समुदायमुपक्रम्य पदं तस्यां प्रयुज्यते ।**
**विभागेन समाख्याने ततस्तद् द्व्यर्थमुच्यते ॥३५॥**

इह 'प्लक्षन्यग्रोधौ, धवखदिरपलाशाः' इत्यादिः समुदायो लौकिकोऽन्वाख्येयः शब्दोऽवयवविभागकल्पनया व्युत्पाद्यते । तत्र च यावानर्थस्तावानेव विभज्यमानस्यावयवस्यावस्थाप्यते ।

अत्र हि विषये यः प्लक्षादिशब्दोऽवयवः, स स्वार्थमात्रे न विश्रान्तः, अपि तु परिसमाप्तार्थवचनः ।

तथा च समुदायोपक्रमे परस्परसंवन्धादन्विताभिधाननयेन प्रत्येकं पदमितरपदार्थानुगतार्थाभिधानादनेकार्थमेव ।

---

युगपदधिकरणवचनतायाः प्रतीतावानुपारोहेण प्रमाणाभावेन च दुःखत्वदुरुपपादत्वयोः सतोरपि तस्या नासत्त्वम्, तस्याः सम्भावनाबीजस्य सत्त्वादित्याह—समुदायमुपक्रम्येति ।

अस्यार्थः—तस्यां युगपद्विवक्षायां तत्प्रयुक्तायां युगपदधिकरणवचनतायां च सत्यां द्वन्द्वसमासस्य लौकिकस्यान्वाख्येयस्य पदविभागेन समाख्याने साधुत्वान्वाख्याने कर्तव्ये समुदायम्, पदार्थद्वयसमुदायमभिधेयमुपक्रम्योद्दिश्य द्वन्द्वघटकं प्रत्येकं पदं प्रयुज्यते, न तु तद्घटकं प्रत्येकं पदं स्वार्थमात्रवोधकम्; तथात्वे हि=स्वार्थमात्रवोधकत्वे हि द्विवचनवहुवचनयोरनुपपत्तिः ।

तथा हि—यथा 'राजपुरुषः' इत्यत्र राजपदार्थस्य उपसर्जनस्य पुरुषपदार्थे प्रधानेऽन्वयद्वारैव क्रियान्वयः, तथा द्वन्द्वे न भवति, द्वन्द्वे उभयोः पदार्थयोः समप्राधान्यात् ।

यदि तु समुदायेऽन्वयद्वारा तयोः क्रियान्वयः, तदा समुदायस्यैकत्वेन द्वन्द्वादेकवचनमेव स्यात् । तस्माद् धवखदिरावित्यस्य धवौ च खदिरौ चेत्येव लौकिको विग्रह इति सहविवक्षा तत्प्रयुक्ता युगपदधिकरणवचनता च सिद्धयत्येव । ततो द्वन्द्वघटकस्य प्रत्येकं पदस्य सहविवक्षया पदार्थद्वयसमुदायाभिधायित्वात्, तत्=द्वन्द्वघटकं प्रत्येकं पदं द्व्यर्थम् = उद्भूतावयवभेदपदार्थद्वयसमुदायबोधकमुच्यत इति ।

अयं भावः—इह प्लक्षन्यग्रोधौ, धवखदिरपलाशा इत्यादिः पदसमुदायो लौकिकः शास्त्रेणान्वाख्येयोऽवयवविभागकल्पनया व्युत्पाद्यते । तत्र च पदसमुदाये द्वन्द्वरूपे यावानर्थस्तावानेव विभज्यमानस्यावयवस्यार्थोऽवस्थाप्यते ।

अत्र हि द्वन्द्वरूपवृत्तिविषये यः प्लक्षादिशब्दोऽवयवः, स स्वार्थमात्रे न विश्रान्तः, अपि तु समुदायपरिसमाप्तार्थद्वयादिवचनः ।

तथा च समुदायोपक्रमे=पदद्वयसमुदायजन्यस्य पदार्थद्वयादिसमुदायबोधस्यादौ पदार्थद्वयस्य परस्परं सम्बन्धादन्विताभिधानरीत्या प्रत्येकं पदमितरपदार्थानुगतार्थाभिधानाद्=इतरपदार्थसहितस्वार्थाभिधानादनेकार्थमेव । अन्विताभिधाने हि यथा पदानां परस्परान्वितस्वार्थाभिधायित्वम्, तथा द्वन्द्वे पदयोरितरार्थसहितस्वार्थाभिधायित्वमिति ।

तस्यां युगपद्विवक्षायां समुदायमभिधेयमुद्दिश्य प्रयुज्यत इति, तथैव प्रक्रियायां प्लक्षौ च न्यग्रोधौ चेति द्व्यर्थस्यैवापोद्धारवाक्यम्। एवं धवखदिरपलाशा इत्यत्र बह्वर्थस्यापीति बोद्धव्यम्।

विवक्षोपारूढो ह्यर्थः शब्दानाम्। अत्र चैतावती विवक्षा। परमार्थतस्त्वभिन्न एव समासोऽर्थसमुदायार्थाभिधायीति न वाक्येऽनेकार्थत्वं लौकिकेऽस्ति। प्रक्रियावाक्ये त्ववयवधर्मेण समुदायाभिधानात् प्लक्षावयवत्वादुद्भूतावयवभेदोऽयं समुदायः प्लक्षौ न्यग्रोधावयवत्वाच्च न्यग्रोधावित्युच्यते। तद्यथा समावयवत्वात् समं चूर्णमिति। वृत्तौ त्वेकार्थीभावाद् भेदस्य विगलनात् तदधिष्ठानसमुच्चयद्योतनचशब्दाप्रयोगात् समुदाये समप्राधान्येनावयवशब्दो वर्तते। अन्यथा समप्राधान्याद् द्वन्द्वपदानां तदर्थस्य साक्षात्क्रियासंबन्धसंभवादितरेतरोपश्लेषाभावे वाक्य इव विभक्तार्थाभिधायित्वाद् द्विवचनाद्यनुपपत्तिरेव स्यात्। समासान्तरेषु हि प्रधानमुखेनोपसर्जनं क्रियया युज्यत इति तेन संसृज्येत, न तु द्वन्द्वे, सर्वेषां समप्रधानत्वात्।

तस्मात् तत्रैकैकेन पदेन समुदायार्थाभिधानमवश्यमभ्युपगन्तव्यम्, येन परस्परार्थसमन्वयोपपत्तावुद्भूतभेदस्य समुदायस्याभिधानाद् द्विवचनबहुवचनोपपत्तिः।

---

तथा च तस्यां युगपद्विवक्षायां पदार्थद्वयादिसमुदायमभिधेयमुद्दिश्य द्वन्द्वघटकं प्रत्येकं पदं प्रयुज्यत इति, तथैव = तदनुसारेणैव लौकिकप्रक्रियायां प्लक्षौ च न्यग्रोधौ चेति द्व्यर्थकस्यैव पदस्यापोद्धारवाक्यम्। एवं धवखदिरपलाशा इत्यत्र धवाश्च खदिराश्च पलाशाश्चेति बह्वर्थकस्यापि पदस्यापोद्धारवाक्यमिति बोद्धव्यम्।

विवक्षोपारूढो हि शब्दानामर्थः। अत्र चैतावती विवक्षा = द्वन्द्वरूपायां वृत्तौ च प्रत्येकं पदानामर्थसमुदायविषया विवक्षा। परमार्थतस्त्वभिन्न एव समासोऽर्थसमुदायरूपार्थाभिधायीति न लौकिके वाक्ये पदानामनेकार्थकत्वमस्तीति। अलौकिके प्रक्रियावाक्ये तु अवयवधर्मेण प्लक्षत्वादिना प्लक्षन्यग्रोधादिसमुदायाभिधानात् प्लक्षावयवकत्वादुद्भूतावयवभेदोऽयं प्लक्षन्यग्रोधसमुदायः प्लक्षौ, न्यग्रोधावयवकत्वाच्च न्यग्रोधावित्युच्यते। तद् यथा समावयवकत्वाच्च समं चूर्णमिति। द्वन्द्वरूपायां वृत्तौ तु एकार्थीभावात् पदार्थभेदस्य विगलनाद् भेदाधिष्ठानकसमुच्चयद्योतकचशब्दाप्रयोगात् पदार्थद्वयादिसमुदाये समप्राधान्येनोपलक्षितार्थबोधकोऽवयवशब्दो वर्तते। अन्यथा समप्राधान्यात् प्रत्येकं द्वन्द्वपदार्थस्य साक्षात् क्रियासम्बन्धसम्भवाद् द्वन्द्वपदानां परस्परोपश्लेषाभावे वाक्य इव विभक्तार्थाभिधायित्वाद् द्विवचनाद्यनुपपत्तिरेव स्यात्। 'राजपुरुष आयाति' इत्यादिषु समासान्तरेषु हि प्रधानमुखेनोपसर्जनं क्रियया युज्यत इति तेन = प्रधानेन संसृज्येत, न तु द्वन्द्वे, सर्वेषां समप्रधानत्वात्।

तस्माद् द्वन्द्वे एकैकेन पदेन पदार्थद्वयादिसमुदायार्थाभिधानमवश्याभ्युपगन्तव्यम्, येन परस्परार्थसमन्वयोपपत्तौ उद्भूतावयवभेदस्य समुदायस्याभिधानाद् द्विवचनबहुवचनोपपत्तिः।

आश्रयतो हि लिङ्गवचनान्यत्र प्रतिपादयिष्यन्ते। वृत्तिवाक्ययोश्च शब्दशक्तिवैचित्र्यं सुप्रसिद्धमिति वाक्ये लौकिके दृष्टार्थान्तराभिधानशक्तिरपि शब्दो वृत्तौ तदभिधायी युज्यते। अत एवोक्तम् 'तद्विषयम् च' ( भा० वा० २।२।२९ ) इति। इति सिद्धा युगपदधिकरणवचनता द्वन्द्वैकशेषयोः ॥ ३५ ॥

एकमेव शब्दशक्तिवैचित्र्यकृतं विशेषं वृत्तिवाक्ययोः प्रतिपादयति—

**वाक्येऽपि नियता धर्माः केचिद् वृत्तौ द्वयोस्तथा।**
**ते त्वभेदेन सामर्थ्यमात्र एवोपवर्णिताः ॥३६॥**

वाक्ये व्यपेक्षायां केचिदर्थभेदा नियताः, केचिद् वृत्तावेकार्थीभावे, केचिद् वृत्तिवाक्ययोर्द्वयोः साधारणा इति यद्यपि भेदः, तथापि नासाविदन्तया विषयभेदेन शास्त्रे निर्दिष्टः, अपि तु 'समर्थः पदविधिः" (पा० २।१।१) इति सामर्थ्यसामान्य एव

---

आयश्रतो हि=लिङ्गवचनाश्रयीभूतशब्दद्वरूपप्रकृतितो हि लिङ्गवचनान्यत्र=व्याकरणशास्त्रे प्रतिपादयिष्यन्ते। वृत्तिवाक्ययोश्च शब्दशक्तिवैचित्र्यं सुप्रसिद्धमिति लौकिके वाक्येऽदृष्टार्थान्तराभिधानशक्तिरपि शब्दो वृत्तौ तदभिधायी=अर्थान्तराभिधायी युज्यते। अत एवोक्तम्—तद्विषयश्चेति। वृत्तिविषयकमेव द्वन्द्वघटकपदानामर्थान्तराभिधायकत्वम्, न तु वाक्यविषयकम्, शब्दशक्तिवैचित्र्यादित्यर्थः। इत्येवं द्वन्द्वैकशेषयोर्युगपदधिकरणवचनता सिद्धेति ॥ ३५ ॥

'राजपुरुषः' इत्यादिवृत्तौ 'राज्ञः पुरुषः' इत्यादिवाक्ये च शब्दशक्तिवैचित्र्यकृतम्=वाक्यवृत्तिलक्षणयोः शब्दार्थयोर्यच्छक्तिवैचित्र्यं व्यपेक्षालक्षणं वाक्ये, एकार्थीभावलक्षणञ्च वृत्तौ तत्कृतं तत्कारिणमेव शब्दविशेषकत्वाद् विशेषं सामर्थ्यसामान्यलक्षणं प्रतिपादयति—वाक्येऽपि नियता धर्मा इति।

अस्यार्थः—यद्यपि वाक्येऽपि 'राज्ञः पुरुषः' इत्यादौ व्यपेक्षायां सत्यां धर्मा अर्थभेदा नियताः। वाक्ये हि पदशक्त्या पृथक्पृथगुपस्थितानामर्थानामाकाङ्क्षावशात् परस्परं संसर्ग इत्यस्ति वृत्त्यपेक्षयाऽर्थभेदः। वृत्तौ हि वृत्तिलक्षणपदशक्त्या एकदैव विशिष्टार्थोपस्थितिरित्यस्ति अर्थभेदः। तदाह—केचिद् वृत्तौ नियतधर्मा अर्थभेदा इति।

तथा द्वयोर्वृत्तिवाक्ययोर्नियता धर्मा अर्थभेदाः—देवानां प्रिय इत्याद्यलुग्वृत्तौ धर्मा अर्थभेदा नियता वृत्तौ वाक्ये च। तत्र हि वृत्तौ वाक्ये च व्यपेक्षालक्षणमेकमेव सामर्थ्यम्। तत्र व्यपेक्षालक्षणसामर्थ्यजन्य एव च वृत्तौ वाक्ये च बोधः। तथापि तु=वृत्तौ वाक्ये च अर्थभेदसत्त्वेऽपि तु तेऽर्थभेदा अभेदेन=आहार्येण अभेदारोपेण सामर्थ्यमात्रे=सामर्थ्यसामान्य एव "समर्थः पदविधिः" ( २।१।१ ) इति शास्त्रेणोपवर्णिता इति।

अयं भावः—वाक्ये व्यपेक्षायाम्=पदयोः पदार्थयोश्च परस्पराकाङ्क्षारूपायां सत्यां केचिदर्थभेदा नियताः, केचिद् वृत्तावेकार्थीभावे पदानां विशिष्टार्थोपस्थितिजनकत्वरूपेऽर्थभेदा नियताः, केचिद् 'देवानां प्रियः' इत्यादयो वृत्तिवाक्ययोर्द्वयोः साधारण इति यद्यपि अस्ति वृत्तिवाक्ययोर्द्वयोरर्थभेदः सामर्थ्यभेदश्च, तथापि नासौ अर्थभेदः सामर्थ्यभेदश्च, वृत्तौ वाक्ये च इदन्तया=इदं—

निरूपिता भिन्ना धर्माः। अनाश्रितविशेषे सामर्थ्ये निर्दिष्टे सति यथायथं ते विभक्ताः। सामर्थ्यमात्रमेतन्नियतरूपमुक्तमित्यर्थः ॥ ३६ ॥

एवं सामान्येनाभिधाय विशेषेण निर्णेतुमाह—

**वृत्तौ विशेषवृत्तित्वाद् भेदे सामान्यवाचिता।**
**उपमानसमासादौ श्यामादीनामुदाहृता ॥३७॥**

"उपमानानि सामान्यवचनैः" (पा० २।१।५५) इत्यत्र 'शस्त्री श्यामा' इत्युदाहृतम्। तत्र च श्यामाशब्दो विशिष्टायां शस्त्र्यामुपमानभूतायां तदुपमितायां वा देवदत्तायां वर्तत इति विशेषवृत्तित्वात् कथं सामान्यवचन इति चोद्ये 'प्रागभिसंबन्धाद्यः सामान्यवचनः' (म० भा० २।१।५५) इति भाष्ये समर्थितम्। आभिमुख्येन स्वभावसंभेदेन यत्र पदार्थाः संबध्यन्ते, असौ समासोऽभिसंबन्धशब्देनात्रोक्तः। तस्मात् प्राग्भेदे वाक्ये पृथगर्थत्वात् सामान्यवचनाः श्यामादयः। 'शस्त्री इव श्यामा' इत्यत्र हि श्यामत्वसामान्यमुपमा-

---

शब्देन विषयभेदेन प्रयोगभूमिभेदेन शास्त्रनिर्दिष्टः, अपि तु "समर्थः पदविधिः" (२।१।१) इति शास्त्रेण सामर्थ्यसामान्य एव निरूपिता वृत्तिवाक्ययोर्भिन्ना धर्माः। अनाश्रितविशेषे सामर्थ्यसामान्ये निर्दिष्टे सति यथायथं ते=व्यपेक्षागोचरा एकार्थीभावगोचराश्चार्थभेदा विभक्ताः। सामर्थ्यमात्रम्=सामर्थ्यसामान्यम् एतद्=व्यपेक्षागोचरमेकार्थीभावगोचरश्च वृत्तिवाक्ययोर्यथायथं नियतरूपमनया कारिकया उक्तमिति तु बोध्यमिति ॥ ३६ ॥

एवं वृत्तिवाक्ययोः सामान्येन सामर्थ्यमविशेषमभिधाय तत्रोदाहरणविशेषेण तन्निर्णेतुमाह— वृत्तौ विशेषवृत्तित्वादिति।

अस्यार्थः—'शस्त्री श्यामा' इत्यादिके उपमानसमासादौ तद्घटकानां श्यामादीनां श्यामादिपदानां वृत्तौ=समासे विशेषवृत्तित्वात्=शस्त्रीरूपे देवदत्तारूपे वा अर्थविशेषे वृत्तित्वात्=अर्थविशेषवाचित्वाद्, भेदे=वृत्तितः श्यामापदस्य विभागे, वाक्ये इति यावत्। सामान्यवाचिता=श्यामरूपवत् पदार्थसामान्यवाचिता उदाहृता।

तथा च 'शस्त्री श्यामा' इत्यादौ "उपमानानि सामान्यवचनैः" (२।१।५) इति समासः सिद्धः। श्यामाशब्दस्य प्रागभिसम्बन्धात्=प्राक् समासात् लौकिके प्रक्रियावाक्ये उपमानोपमेयगतश्यामत्वरूपसामान्यार्थवचनत्वादिति।

अयं भावः—"उपमानानि सामान्यार्थवचनैः" इत्यत्र 'शस्त्री श्यामा' इत्युदाहृतम्। तत्र च श्यामाशब्दो विशिष्टायाम्=श्यामारूपविशिष्टायां शस्त्र्यामुपमानभूतायां तदुपमितायां वा=च देवदत्तायां वर्तत इति विशेषवृत्तित्वाद्=विशेषवाचित्वात् कथं सामान्यवचन इति प्रश्ने "प्रागभिसम्बन्धाद् यः सामान्यवचनः" इति भाष्ये समाहितम्। आभिमुख्येन युक्ताः=परस्पराकाङ्क्षया परस्पराभिमुखीभूताः पदार्था यत्र स्वभावसंभेदेन=स्वरूपाभेदेन सम्बध्यन्ते, असौ समासोऽभिसम्बन्धशब्देनात्रोक्तः। तस्मात्=समासात् प्राग् भेदे=विभागे वाक्ये पृथगर्थकत्वात् सामान्यवचनाः श्यामादयः। शस्त्री इव श्यामा इत्यत्र हि श्यामत्वसामान्यमुपमा-

नोपमेयगतमाश्रित्य श्यामशब्दः प्रवृत्तः। वृत्तावेकार्थीभावादस्य [विशेषावरोधः। एवमन्यत्रापि बोद्धव्यमुपमितसमासादौ ।।३७।।

उदाहरणान्तरमाह—

**वृत्तिरन्यपदार्थे या तस्या वाक्येष्वसंभवः।**
**चार्थे द्वन्द्वपदानां च भेदे वृत्तिर्न विद्यते ।।३८।।**

'स्निग्धानि किसलयान्यस्य' इति वाक्ये पदानामन्यपदार्थे 'स्निग्धकिसलयो वनस्पतिः' इति वृत्तिवद् वृत्तिर्नास्ति, अस्येत्यन्यपदार्थस्य स्वशब्देनैव वाक्ये गमितत्वात्। वृत्तौ तु मत्वर्थस्य संबन्धस्यान्तर्भावात् पदान्येकार्थीभूय संबन्धिनं प्रतिपादयन्ति। तथा द्वन्द्वपदानां भेदे वाक्ये चार्थे समाहारेतरेतरयोगलक्षणे वृत्तिर्नास्तीति तत्र चशब्दो वाचकः प्रयुज्यते। वृत्तौ त्वेकक्रियावशात् समुदितार्थाभिधायीनि पदानीति तत्र समुच्चितप्रधाने चो न प्रयुज्यते ।। ३८ ।।

अन्यदप्याह—

---

नोपमेयगतमाश्रित्य श्यामशब्दः प्रवृत्तः। वृत्तावेकार्थीभावादस्य = श्यामत्वसामान्यस्य विशेषावरोधः = विशेषेण-श्यामविशेषेण शस्त्रीपदार्थे देवदत्तादिपदार्थेन वा अवरोधः = तिरस्कारः। एवमन्यत्रापि पुरुषो व्याघ्र इव 'पुरुषव्याघ्रः' इत्युपमितसमासादौ सामान्याप्रयोगेऽपि सामान्यस्य आर्थिकस्यार्थिकेन विशेषणावरोधो बोद्धव्य इति ।। ३७ ।।

वृत्तिवाक्ययोः सामर्थ्यविशेषम् = सामर्थ्यभेदं बुद्धौ दृढयितुमुदाहरणान्तरमाह—वृत्तिरन्यपदार्थे इति।

अस्यार्थः—'चित्रगुर्देवदत्तः' इत्यादिवहुव्रीहिवृत्तेः = बहुव्रीहिसमासस्य याऽन्यपदार्थेऽभिधा शक्तिरूपा वृत्तिः तस्याः चित्रा गावो यस्येत्यादि तद्विग्रहवाक्येषु असंभवः, अस्येति स्वशब्देनैवान्यपदार्थस्य प्रतिपादितत्वात्। धवखदिरपलाशा इत्यादीनां द्वन्द्वपदानां = द्वन्द्वघटकपदानां च = अपि चार्थे वर्तमानानां भेदे वृत्तेर्विभागे = पृथक्करणे सति वाक्ये तेषामेव पदानां चार्थे वृत्तिः = शक्तिर्न विद्यत इति।

अयं भावः—स्निग्धानि किसलयानि अस्येति वाक्यघटकपदानामन्यपदार्थे 'स्निग्धकिसलयो वनस्पतिः' इति बहुव्रीहिवृत्तिवत् = बहुव्रीहिसमासवद् वृत्तिः = शक्तिर्नास्ति, अस्येति स्वशब्देनैवान्यपदार्थस्य वाक्ये गमितत्वात् = प्रतिपादितत्वात्। बहुव्रीहिवृत्तौ तु मत्त्वर्थस्य संबन्धस्यान्तर्भावात् पदानि एकार्थकीभूय सम्बन्धिनं प्रतिपादयन्ति। तथा द्वन्द्वघटकपदानां भेदे = वृत्तेर्विभागे सति वाक्ये चार्थे समाहारेतरेतरयोगलक्षणे वृत्तिः = शक्तिर्नास्ति इति तत्र = वाक्ये चशब्दो वाचकः प्रयुज्यते। द्वन्द्वरूपायां वृत्तौ तु एकक्रियान्वयवशात् समुदितार्थाभिधायीनि पदानि इति तत्र = द्वन्द्वे समुच्चितार्थप्रधाने = समुदितार्थप्रधाने समाहारे इतरेतरयोगे वा = चशब्दो न प्रयुज्यते। उद्भूतावयवभेदस्य, अनुद्भूतावयवभेदस्य वा समुदायस्य द्वन्द्वघटकपदैरेवाविशेषेणोक्तत्वादिति ।।३८।।

वृत्तिवाक्ययोस्तमेव विशेषं दृढयितुमन्यदप्युदाहरणमाह = भेदे सति निरादीनामिति।

७

**भेदे सति निरादीनां क्रान्ताद्यर्थेष्वसंभवः ।**
**प्राग्वृत्तेर्जातिवाचित्वं न च गौरखरादिषु ॥२९॥**

भिद्यन्तेऽस्मिन्नर्था इति भेदो वाक्यं तत्र निरादीनां निष्क्रान्तः कौशाम्ब्या इत्यादौ क्रान्ताद्यर्थवाचित्वं नास्तीति क्रान्तादेः साक्षात् तत्र प्रयोगः। वृत्तौ तु निष्कौशाम्बिरित्यादावस्ति क्रान्ताद्यर्थाभिधानम्। वाक्ये हि निरादीनामसत्त्ववाचिनां क्रियायोगिनि क्रान्तादौ द्रव्ये वृत्तिर्न संभवति। समासे तु पूर्वपदार्थस्य प्राधान्यादनेकक्रियायोगी द्रव्यभूतस्तदर्थोऽभिधीयते। सोऽयमेकार्थीभावकृतो विशेषः। तथा गौरखरः, कृष्णसर्पो, लोहितशालिरित्यादिवृत्तिपदात् प्राग्वाक्ये जातिविशेषप्रत्यायनसामर्थ्यं नास्ति।

न हि 'गौरः खरः, कृष्णः सर्पो, लोहितः शालिः' इत्यत्र जातिविशेषप्रतीतिः पदसमुदायानभिधेयत्वाज्जातेर्वर्णविशेषावच्छिन्नस्यार्थस्य प्रतीतेः। जातिविशेषे तु वर्ण-

---

अस्यार्थः—भिद्यन्तेऽस्मिन् अर्था इति भेदो वाक्यम्, तस्मिन् सति। इदञ्च व्याख्यानं श्रीहेलाराजानुरोधेन। वस्तुतस्तु भेदे सति, बुद्ध्या निरादीनां वृत्तितोऽपोद्धारे सति इत्यर्थो हृदयग्राही। 'निष्क्रान्तः कौशाम्ब्याः' इत्यादौ निरादीनां क्रान्ताद्यर्थेषु असंभवः, निरादीनां क्रान्ताद्यर्थवाचित्वं न सम्भवति इति वाक्यो क्रान्तादिपदस्य साक्षात् प्रयोगः। वाक्ये हि निरादीनामसत्त्ववाचिनो क्रियायोगित्वेन द्रव्यरूपे क्रान्ताद्यर्थे वृत्तिर्न सम्भवति। समासे तु पूर्वपदभूतस्य निरादेरर्थः प्राधान्यादनेकक्रियायोगित्वेन द्रव्यभूत इति निरादेस्तदभिधायित्वेन, न तु तत्र क्रान्तादिपदप्रयोगस्यावश्यकता। तदेवम् 'निष्कौशाम्बिः, निष्क्रान्तः कौशाम्ब्याः' इति वृत्तिवाक्ययोर्निरादीनां क्रान्ताद्यर्थाभिधानानभिधानरूपो विशेषः। तथा गौरखरादिषु वृत्तेः समासात् प्राग् वाक्ये वृत्तिघटकत्वेन परिचीयमानस्य पदकदम्बकस्य जातिवाचित्वं न च सम्भवति, अप्रतीतेरिति वृत्तिवाक्ययोर्जातिवाचित्वावाचित्वरूपो विशेष इति।

अयं भावः—वृत्त्यर्थाद् भिद्यन्तेऽस्मिन्नर्था इति भेदो वाक्यम् तस्मिन् सति तद्गतानाम् 'निष्क्रान्तः कौशाम्ब्याः' इत्यादौ क्रान्ताद्यर्थवाचकत्वं नास्ति इति क्रान्तादेः साक्षात् तत्र प्रयोगः। 'निष्कौशाम्बिः' इत्यादौ वृत्तौ तु अस्ति क्रान्ताद्यर्थाभिधायित्वं निरादीनाम्। वाक्ये हि शब्दशक्तिवैचित्र्यादसत्त्ववाचिनां निरादीनां क्रियायोगिनि क्रान्तादौ द्रव्ये वृत्तिर्न सम्भवति। निष्कौशाम्बिरित्यादिवृत्तौ तु पूर्वपदार्थस्य प्राधान्यादनेकक्रियायोगी=निष्कौशाम्बिं पश्य, निष्कौशाम्बिना कृतमित्यादौ अनेकक्रियायोगी द्रव्यभूतो निराद्यर्थोऽभिधीयते। सोऽयम्=वृत्तौ निरादेः सत्त्वभूतार्थाभिधायित्वम् एकार्थीभावकृतो विशेषः। तथा 'गौरखरः, कृष्णसर्पः, लोहितशालिः' इत्यादिकाद् वृत्तिपदात् प्राग् गौरः खर इत्यादि वाक्ये जातिविशेषप्रत्यायनसामर्थ्यं नास्ति। नहि 'गौरः खरः, कृष्णः सर्पः, लोहितः शालिः' इत्यत्र जातिविशेषप्रतीतिः, जातेस्तादृशपदसमुदायादनभिधेयत्वाद्

विशेषानादरः। ऐकार्थ्यात् तु समासेनैकपदत्वाद् विशिष्टा जातिरुच्यते। तथा च जात्यभिसंबन्धे विवक्षिते कर्मधारयान्मत्वर्थीयो भवति गौरखरवदरण्यं, कृष्णसर्पवान् वल्मीकः, लोहितशालिमान् ग्राम इति। तेनात्र कर्मधारयमत्वर्थीयाभ्यां बहुव्रीहिर्लघुत्वात् प्रक्रमस्येत्येतन्नावतरति। लोहितशालिर्ग्राम इत्युक्ते विशिष्टजातीयशालिसंबन्धो विवक्षितो न गम्येत। एवमुदाहरणान्तरेऽपि योज्यम्। तथा च भाष्यम्—'अस्त्यत्र विशेषो जात्यात्र संबन्धः क्रियत' ( म० भा० २।१।५५ ) इति ॥ ३९ ॥

तदेकस्मिन् वृत्तिवाक्ययोः स्वाभाविके विशेषे संवादकमाचार्यमतमाह—

**क्रीडायां जीविकायां च वाक्येनावचनात् तथा।**
**न नित्यग्रहणं युक्तं कौटिल्ये यङ्विधौ यथा ॥४०॥**

---

वर्णविशेषावच्छिन्नस्य खरस्यैव ततः प्रतीतेः। जातिविशेषे तु वर्णविशेषानादरः, वर्णविशेषस्य जातिविशेषानभिव्यञ्जकत्वात्। गौरखरादिसमासेन तु एकपदत्वादैकार्थ्याद् विशिष्टा जातिः= जातिविशेष उच्यते।

तथा च जात्यभिसम्बन्धे=तत्तज्जातीयाभिसम्बन्धे विवक्षिते कर्मधारयात् मत्वर्थीयो भवति। 'गौरखरवदरण्यम्, कृष्णसर्पवान् वल्मीकः, लोहितशालिमान् ग्रामः' इति। तेनात्र=गौरखरवदरण्यमित्यादौ कर्मधारयमत्वर्थीयाभ्यां बहुव्रीहिर्लघुत्वात् प्रक्रमस्य इत्येतन्न्यायवाक्यं नावतरति। 'चित्रगुर्देवदत्तः' इत्यादौ 'कर्मधारयमत्वर्थीयौ प्रबाध्य' बहुव्रीहिर्भवति, प्रक्रमस्य= शब्दव्यापारस्य वृत्तिरूपस्य लघुत्वात्। कर्मधारयाद् मत्वर्थीये कृते हि वृत्तिद्वयम्, बहुव्रीहौ तु एका वृत्तिरिति प्रकृतन्यायवाक्यार्थः। लोहितशालिग्राम इत्युक्ते हि विवक्षितो विशिष्टजातीयशालिसम्बन्धो न गम्यते, कर्मधारयस्यैव विशिष्टजातिप्रत्यायनसामर्थ्यदर्शनात्। तेन 'लोहितशालिमान् ग्रामः' इत्येव प्रयोगो युक्तः। 'न कर्मधारयाद् मत्वर्थीयो बहुव्रीहिश्चेत्, तदर्थप्रतिपत्तिकरः' इत्याकारकन्यायवाक्यस्यापि प्रागुक्त एवाशयः।

एवमुदाहरणान्तरेऽपि 'गौरखरवदरण्यम्' इत्यादौ योज्यम्। तथा च भाष्यम् "अस्त्यत्र विशेषो जात्याऽत्र सम्बन्धः क्रियते" ( म० भा० २।१।५५ ) इति। अत्र 'लोहितशालिमान् ग्रामः' इत्यादौ 'लोहितशालिर्ग्रामः' इति बहुव्रीहितो विशेषोऽस्ति, यतोऽत्र = 'लोहितशालिमान् ग्रामः' इत्यत्र ग्रामस्य जात्या सह = लोहितशालित्वरूपजातिमता शालिना सह सम्बन्धः क्रियते इति तद्भाष्यार्थ इति ॥ ३९ ॥

तदेकस्मिन् वृत्तिवाक्ययोः स्वाभाविके सामर्थ्यरूपे विशेषे संवादकमाचार्यमतमाह—क्रीडाया जीविकायाश्चेति।

अस्यार्थ.—यथा "नित्यं कौटिल्ये गतौ" (३।१।२३) इति सूत्रेण कौटिल्ये यङ्विधौ एतत्सूत्रे नित्यग्रहणम् 'कुटिलं क्रामति' इति वाक्ये यङ्निवृत्त्यर्थं न कार्यम्, वाक्येन गतिकौटिल्यस्य नियोगतोऽवचनात्, 'कुटिलं क्रामति' इति वाक्यात् चेतःकौटिल्येनासदाचारस्यापि प्रतीतेः, तथा "नित्यं क्रीडाजीविकयोः" (२।१।१७) इति सूत्रेऽपि नित्यग्रहणं न युक्तम्, 'उद्दालकपुष्पाणां भञ्जिका, दन्तानां लेखकः' इत्यादिवाक्येन क्रीडाया जीविकायाश्च अवचनात्, इत्येवमेष कात्यायनसम्मतो वृत्तिवाक्ययोर्विशेष इति।

वार्त्तिककारः पपाठ—'उत्तरयोर्विग्रहेण विशेषासम्प्रत्ययान्नित्यग्रहणानर्थक्यमि'ति ( भा० वा० ३।१।२२ ) 'नित्यं कौटिल्ये गतौ' ( पा० ३-१-२३ ) 'लुपसद—' ( पा० ३-१-२४ ) इत्यनयोर्योगयोर्वाक्यनिवृत्त्यर्थं नित्यग्रहणं न कार्यम्, वाक्येन गतिकौटिल्यस्य भावगर्हायाश्चाभिहितत्वात्। कुटिलं क्रामतीति चेतः कौटिल्येनासदाचारस्यापि प्रतीतेः। चङ्क्रम्यत इति तु गतप्रत्यागतोपाधिः क्रियाविशेषः प्रतीयते।

एवं गर्हितं लुम्पतीति धात्वर्थगर्हा नियोगतो न प्रतीयते। साधनगर्हाया अपि प्रतिपत्तेः। लोलुप्यत इति तु वृत्तौ भावगर्हाप्रतिपत्तिः।

अनेनैव न्यायेन 'नित्यं क्रीडाजीविकयोः' (पा०२-२-१७) इत्यत्र नित्यग्रहणं प्रत्याख्येयमिति निदर्शनव्याजेन तदप्युदाहृतम्। यदि वा यथा 'नित्यं कौटिल्ये—' ( ३-१-२३ ) इत्यत्र साक्षान्नित्यग्रहणस्य वार्त्तिके प्रत्याख्यानम्, तथा 'नित्यं क्रीडाजीविकयोः' (पा० २-२-१७) इत्यस्येति। साध्यतयोपन्यासः। तदितरस्य निदर्शनत्वेन, सिद्धस्य च निदर्शनत्वात्। तदेवाचार्यमतं संवादकमुपपद्यते। उद्दालपुष्पस्य भञ्जिका,

---

अयं भावः—"उत्तरयोर्विग्रहेण विशेषासम्प्रत्ययाद् नित्यग्रहणानर्थक्यम्" (भा० वा० ३।१।२२) इति वार्त्तिकं वार्तिककारः कात्यायनः पपाठ। 'नित्यं कौटिल्ये गतौ, लुपसदचरः' इत्यनयोः सूत्रयोर्वाक्ये यङ्निवृत्त्यर्थं नित्यग्रहणं न कार्यम्, वाक्येन गतिकौटिल्यस्य भावगर्हायाश्च=धात्वर्थगर्हायाश्च नियोगतः अनभिहितत्वात्। कुटिलं क्रामति=चेतःकौटिल्यानुरूपमाचरति इति चेतःकौटिल्येनासदाचारस्यापि प्रतीतेः। 'चङ्क्रम्यते' इति तु गतप्रत्यागतोपाधिः= गतप्रत्यागतरूपं यद् गतिकौटिल्यं तदुपाधिको बहुव्रीहौ मत्वर्थवद् यङ्समभिव्याहारे अवाच्योऽपि प्रतीयमानः क्रियाविशेषः प्रतीयते।

एवम् 'गर्हितं लुम्पति' इत्यत्र वाक्ये धात्वर्थगर्हा नियमतो न प्रतीयते, कर्मरूपसाधनगर्हाया अपि प्रतिपत्तेः, लोलुप्यते' इति वृत्तौ तु भावगर्हाया एव नियोगतः प्रतिपत्तिः। अनेनैव न्यायेन ='नित्यं कौटिल्ये गतौ' इत्यत्र वार्तिकोक्तरीत्या 'नित्यं क्रीडाजीविकयोः' इत्यत्र नित्यग्रहणं प्रत्याख्येयमिति तदपि=नित्यं क्रीडा जीविकयोरित्यत्रत्यनित्यग्रहणप्रत्याख्यानमपि निदर्शनन्यायेन =निदर्शनत्वेन उदाहृतम्। अत्र साध्यं तु भावगर्हायामित्यस्य प्रत्याख्यानम्।

तथा चायमनुप्रयोगः—लुपसदचर इत्यत्रत्यं भावगर्हाग्रहणं, न कर्तव्यम्, वाक्यतोऽप्रतीयमानत्वात्, 'नित्यं कौटिल्ये गतौ, नित्यं क्रीडाजीविकयोः' इति सूत्रद्वयस्थनित्यग्रहणवदिति।

यदि वा यथा 'नित्यं कौटिल्ये—' इत्यत्र साक्षान्नित्यग्रहणस्य वार्त्तिके प्रत्याख्यानम्, तथा 'नित्यं क्रीडाजीविकयोः' इत्यस्यापि कर्तुं शक्यत इति अत्रत्यनित्यग्रहणप्रत्याख्यानस्य साध्यतयाऽत्रोपन्यासः। तदितरस्य='नित्यं कौटिल्ये गतौ' इत्यत्र वार्त्तिककृत्कृतस्य नित्यग्रहणप्रत्याख्यानस्य निदर्शनत्वेन सिद्धस्य च निदर्शनत्वात्। तथा चानुमानप्रयोगः। नित्यं क्रीडाजीविकयोरित्यत्रत्यं नित्यग्रहणम्, लुपसदचर इत्यत्रत्यं भावगर्हाग्रहणञ्च न कर्तव्यम्, धात्वर्थगतस्य विशेषस्य वाक्यतोऽप्रतीयमानत्वात् = वाक्यजन्यधात्वर्थगतविशेषप्रतिपत्तिप्रयुक्तकर्तव्यत्वप्रसक्तिगोचरत्वाभावात्, 'नित्यं कौटिल्ये गतौ' इत्यत्रत्यनित्यग्रहणवदिति। पूर्वानुमानेऽपि हेतुरेवमेव परिष्कर्तव्यः। तदेवाचार्यमतं संवादकमुपपद्यते=एतदेव वार्त्तिककारमतं वृत्तिवाक्ययोर्भिन्नार्थत्व-

दन्तानां लेखकः' इति वाक्यात् क्रीडाजीविकयोरप्रतिपत्तिः। क्रीडानङ्गीभूतस्य जीवनानुपायरूपस्याप्यर्थस्य प्रतीतेः।

एवं क्रियासमभिहारस्यापि चङ्क्रम्यते, लोलुप्यते इत्यतोऽप्रतीतेर्नैतेभ्यस्तत्र यङ् भवति। तथाचोक्तं—'क्रियासमभिहारे नैतेभ्यः' इति (भा० वा० ३।१।२२)। एतदर्थं केचिन्नित्यग्रहणं व्याचक्षते—'कुटिलायां गतौ नित्यं, भावगर्हायां नित्यं, न क्रियासमभिहारे' इति।

यथा च वाक्याद् विवक्षितार्थानवगमात् प्रत्याख्यातं नित्यग्रहणम्, तथा क्रियासमभिहारानवगमादेव तत्र प्रत्ययाभावादेतदर्थमपि न नित्यग्रहणम्। वचनानुसारिणं तु प्रति वाक्यनिवृत्त्यर्थमपि तद् भवितुमर्हति। यथा चैते वृत्तिविषया विशेषाः, तथा संख्याविशेष उपसर्जनविशेषणं च योगो व्यक्ताभिधानमिति वाक्यैकनियता विशेषाः प्रोक्ताः। विशेषणविशेष्यभावादयस्तु द्वयोरप्यनुसर्तव्याः ॥ ४० ॥

---

रूपं प्रकृतहरिमतस्य संवादकमुपपद्यते। 'उद्दालकपुष्पाणां भञ्जिका, दन्तानां लेखकः' इति वाक्यात् क्रीडाजीविकयोरप्रतीतिः। क्रीडानङ्गीभूतस्य जीवनानुपायरूपस्याप्यर्थस्य प्रतीतेः।

एवं क्रियासमभिहारस्यापि 'चङ्क्रम्यते, लोलुप्यते' इत्यतोऽप्रतीतेर्नैतेभ्यस्तत्र यङ् भवति। तथा चोक्तम्=क्रियासमभिव्याहारे नैतेभ्यः (भा०वा०३।१।२२) इति। एतदर्थम्='चङ्क्रम्यते' लोलुप्यते' इत्यादौ क्रियासमभिहारे यङ्निवृत्त्यर्थं केचिन्नित्यग्रहणं व्याचक्षते। कुटिलायां गतौ नित्यम्, भावगर्हायां नित्यम्, न क्रियासमभिहारे इति।

यथा च वाक्याद् विवक्षितार्थानवगमात्=विवक्षितस्यार्थस्य गतिकौटिल्यस्य भावगर्हायाश्च वाक्यादनवगमात् प्रत्याख्यातं नित्यग्रहणम्, तथा, 'चङ्क्रम्यते, लोलुप्यते' इत्यादौ क्रियासमभिहारानवगमादेव तत्र प्रत्ययाभावादेतदर्थमपि न नित्यग्रहणम्। वचनानुसारिणम्=सूत्रानुसारिणं तु प्रति वाक्यनिवृत्त्यर्थमपि तद्भवितुमर्हति। यथा चैते=प्रागुक्ताः वृत्तिविषया विशेषाः, तथा संख्याविशेषः, उपसर्जनविशेषणम्, च योगः, व्यक्ताभिधानमिति चत्वारो वाक्यैकनियता विशेषाः प्रोक्ताः। यत एते वृत्तौ न सन्ति।

तथाहि 'राजपुरुषः' इति वृत्तौ उपसर्जनपदार्थे एकत्वादिकस्य संख्याविशेषस्य भानं न भवति। 'राज्ञः पुरुषः' इत्यादिके वाक्ये तु भवति। वाक्ये उपसर्जनस्य राजादेर्विशेषणम् ऋद्धादपि पदार्थो भवति। 'ऋद्धस्य राज्ञः पुरुषः' इति। वृत्तौ तु न भवति, 'ऋद्धस्य राजपुरुषः' इति।

तदुक्तं वार्त्तिककृता='सविशेषणानां वृत्तिर्न, वृत्तस्य च विशेषणयोगो न' इति। धवश्च खदिरश्च इति लौकिके प्रक्रियावाक्ये च योगो दृश्यते। 'धवखदिरौ' इति वृत्तौ तु च योगो न दृश्यते। 'राज्ञः पुरुषः' इति वाक्ये व्यक्तयोः पृथक्पृथगुपस्थितयो राजपदार्थपुरुषपदार्थयोरभिधानं भवति। वृत्तौ त्वेकार्थीभाव इति न तयोः पृथगुपस्थितिरूपं व्यक्ताभिधानम्।

वस्तुतस्तु वाक्ये उद्देश्यत्वविधेयत्वे, अनुवाद्यत्वविधेयत्वे इत्यादयोऽपि विशेषा दृश्यन्ते, वृत्तौ तु न दृश्यन्ते। अत एव विधेयाविमर्शरूपो दोष उक्तः साहित्यदर्पणे='क्षुद्रग्रामटिका विलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः' इत्यादौ। विशेषणविशेष्यभावादयः=गुणप्रधानभावादयस्तु द्वयोरप्यनुसर्तव्या इति ॥ ४० ॥

एवं वृत्तिवाक्यवैधर्म्ये सति—

**निर्धारणादिविषये व्यपेक्षैव यतः स्थिता ।**
**समासप्रतिषेधानां ततो नास्ति प्रयोजनम् ॥४१॥**

व्यपेक्षालक्षणसामर्थ्यं वाक्यैकनियतनिर्धारणविषये व्यवस्थितं स्वभावतो नियतमिति गवां कृष्णा सम्पन्नक्षीरतमेति 'न निर्धारणे' (पा० २-२-१०) इति समासप्रतिषेधो नारम्भणीयः। न ह्यत्रैकार्थीभावे समासे कृते गोकृष्णा सम्पन्नक्षीरतमेति निर्धारणं प्रतीयते निर्धारणहेतोर्बाह्यस्यापेक्षणीयस्य भावादसामर्थ्यादत्र समासाभाव इति तात्पर्यम्। एवं 'पूरण–' (पा० २-२-११) इत्यादिरपि प्रतिषेधोऽशिष्य इत्यनुसरणीयम् ॥ ४१ ॥

ज्ञापकत्वात् शास्त्रस्य स्वभावसिद्धमेव शक्तिवैचित्र्यं शब्दानामनुगन्तुं शास्त्रारम्भ इत्याह––

---

एवं वृत्तिवाक्ययोर्वैधर्म्ये सति सर्वेषां समासनिषेधानां प्रयोजनं नास्ति, तद्विषये नियोगतो व्यपेक्षालक्षणसामर्थ्यस्यैव सत्त्वेनैकार्थीभावाभावेन समासाप्रसक्तेरित्याह—निर्धारणादिविषये इति।

अस्यार्थः—यतः='गवां कृष्णा सम्पन्नक्षीरतमा' इत्यादौ निर्धारणादिविषये व्यपेक्षैव = व्यपेक्षालक्षणमेव सामर्थ्यं स्थितम्, न त्वेकार्थिभावः, ततः—'न निर्धारणे' (पा० २।२।१०) इत्यादीनां समासप्रतिषेधानां प्रयोजनं नास्तीति समासप्रतिषेधसूत्राणि नारम्भणीयानीति।

अयं भावः––व्यपेक्षालक्षणं सामर्थ्यं वाक्यैकनियतनिर्धारणविषये=वाक्यमात्रवृत्तिनिर्धारणविषये व्यवस्थितं स्वभावतो निर्धारणविषयके वाक्ये नियतमिति 'गवां कृष्णा सम्पन्नक्षीरतमा' इत्यत्र "न निर्धारणे" (पा० २।२।१०) इति समासप्रतिषेधो नारम्भणीयः। न ह्यत्रैकार्थीभावे सति समासे कृते 'गोकृष्णा सम्पन्नक्षीरतमा' इति निर्धारणं प्रतीयते।

अत्र हि निर्धारणहेतोः सम्पन्नक्षीतमत्वस्य वृत्तिवाह्यपदार्थस्यापेक्षणीयस्य भावात् "सापेक्षमसमर्थवत्" इत्यसामर्थ्यादत्र समासाभाव इत्येत्कारिकातात्पर्यम्।

एवं 'पूरण' इत्यादिरपि प्रतिषेधोऽशिष्यः, 'ब्राह्मणस्य शुक्लाः' इत्यादौ न समासः, 'दन्ताः' इत्यादिविशेष्यसापेक्षत्वेनासामर्थ्यादित्यादिकमनुसरणीयमिति ॥ ४१ ॥

शब्दानां शक्तिवैचित्र्यस्य स्वभावसिद्धस्यैव ज्ञापकं शास्त्रम्, न तु कारकमित्यभिप्रेत्य समासप्रतिषेधविषये शब्दानां व्यपेक्षालक्षणमेव सामर्थ्यम्, न त्वेकार्थीभावः। तेन वाक्यमेव तत्र न समासः। नित्यसमासविधिविषये चैकार्थीभावलक्षणमेव शब्दानां सामर्थ्यम्, न तु व्यपेक्षालक्षणम्, तेन तत्र वाक्याभावः। विभाषासमासविधिविषये चोभयलक्षणं सामर्थ्यमिति तद्विषये समासो वाक्यञ्चेत्युभयमित्यनुगन्तुम्=अनुगतीकृत्य बोधयितुं समासविधिप्रतिषेधशास्त्राणामारम्भ इत्याह—विधिभिः प्रतिषेधैश्चेति।

**विधिभिः प्रतिषेधैश्च भेदाभेदनिदर्शनम् ।**
**कृतं द्वन्द्वैकवद्भावे सङ्घवृत्त्युपदेशवत् ॥४२॥**

समासविधिना अभेदः संसर्ग एकार्थीभावः स्वभावसिद्धो ज्ञाप्यते, प्रतिषेधेन तु भेदोऽसंसर्गो व्यपेक्षालक्षणो मन्दमतीन् प्रति । तद् यथा--द्वन्द्वस्य प्राणितूर्याङ्गादौ स्वाभाविकी सङ्घे समाहारे तिरोहितावयवभेदे वृत्तिः, 'प्राणितूर्यसेनाङ्गानाम्(पा०२।४।२) इत्येकवद्भावशास्त्रेण समाहार एवेति नियमेनान्वाख्यायते । दधिपयःप्रभृतीनां तु स्वाभाविकी प्रोद्भूतावयवभेदे इतरेतरयोगे प्रवृत्तिः प्रतिषेधेन । विभाषावचनेन वृक्षमृगादीनामुभयत्रेति शास्त्रमनुवादकम् । न ह्यसती शब्दानां शक्तिर्वचनशतेनापि कर्तुं पार्यते । 'न वा समाहारैकत्वात्'-(भा० वा० २।४।१) इत्येकवद्भावप्रत्याख्यानस्य साक्षादुक्तत्वात् सिद्धत्वे सति निदर्शनत्वेनात्रोपन्यासः । न्यायस्तु समानः ॥ ४२ ॥

---

अस्यार्थः—समासविधिभिरभेदनिदर्शनम्, अभेदः = भेदस्य पदार्थानां पृथक्त्वस्य विभागस्य अभावः, संसर्गः, एकार्थीभावः समासे स्वभावसिद्धस्तस्य निदर्शनं कृतम् । समासप्रतिषेधैश्च भेदस्य = पदार्थानां विभागस्य = असंसर्गस्य व्यपेक्षालक्षणस्य वाक्ये स्वाभाविकस्य निदर्शनं कृतम् । द्वन्द्वैकवद्भावे प्राणितूर्यसेनाङ्गादीनां द्वन्द्वस्यैकवद्भावे 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्' इत्यनेन क्रियमाणे सङ्घवृत्त्युपदेशवत् = संघे समाहारे तिरोहितावयवभेदे या प्राण्यङ्गादिबोधकपदानां वृत्तिस्तस्या यो नियमस्योपदेशः प्राण्यङ्गादीनां द्वन्द्वः समाहार एव तद्वत् । तथा दधिपयःप्रभृतीनां संघे प्रोद्भूतावयवभेदे इतरेतरयोगात्मके या वृत्तिस्तस्या य उपदेशः = 'न दधिपय आदीनि (पा० २।४।१४) इत्यादिभिः एकवद्भावप्रतिषेधकैः शास्त्रैः क्रियते तद्वदिति ।

अयं भावः—सर्वेणापि समासविधिना अभेदः = पृथक्त्वाभावः समनियतत्वात् संसर्गरूपः एकार्थीभावः स्वभावसिद्धो ज्ञाप्यते, समासप्रतिषेधशास्त्रेण तु भेदः = पृथक्त्वमसंसर्गो व्यपेक्षालक्षणः = पृथगुपस्थितानां पदानां परस्पराकाङ्क्षालक्षणः, विशिष्टा विलक्षणा अपेक्षा आकाङ्क्षा इति व्यपेक्षापदव्युत्पत्तेर्वाक्ये स्वाभाविको लक्ष्यैकचक्षुष्कान् मन्दमतीन् प्रति ज्ञाप्यते । तद्यथा = प्राणितूर्यसेनाङ्गादौ विधीयमानस्य द्वन्द्वस्य तिरोहितावयवभेदे संघे समाहारे स्वाभाविकी वृत्तिः "द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्" ( पा० २।४।२ ) इत्येकवद्भावविधायकेन शास्त्रेण समाहार एवेति नियमरूपेणान्वाख्यायते । दधिपयःप्रभृतीनां तु प्रोद्भूतावयवभेदे इतरेतरयोगात्मके संघे स्वाभाविकी प्रवृत्तिः = प्रकृष्टा वृत्तिरेकवद्भावप्रतिषेधशास्त्रेणान्वाख्यायते । 'विभाषावृक्षमृग' ( पा० २।४।१२ ) इत्यादिविभाषैकवद्भाववचनेन वृक्षमृगादीनामुभयत्र = समाहारे इतरेतरयोगे च वृत्तिरन्वाख्यायत इति रीत्या प्रागुक्तं सर्वं शास्त्रं लोकसिद्धार्थानुवादकम् । नह्यसती शब्दानां शक्तिर्वचनशतेनापि कर्तुं पार्यते । 'न वा समाहारैकत्वाद्' इत्येकवद्भावप्रत्याख्यानस्य भाष्ये साक्षादुक्तत्वेन सिद्धत्वे सति अत्र संघवृत्त्युपदेशवदिति निदर्शनत्वेन = दृष्टान्तत्वेनोपन्यासः ।

तथा चायमत्र प्रयोगः = समासविधिप्रतिषेधशास्त्रम्, लोकसिद्धार्थानुवादकम्, असत्याः शक्तेर्विधातुमशक्तत्वात्, संघवृत्त्युपदेशवदिति । न्यायस्तु समानः = असत्याः शक्तेर्विधातुमशक्तत्वादिति लोकन्यायसिद्धो हेतुस्तु पक्षदृष्टान्तयोरुभयोः समान इति ॥ ४२ ॥

तदेवं वृत्तिवाक्ययोः 'समर्थः पदविधिः' ( पा० २-१-१ ) इत्यत्र सामान्येन यत् सामर्थ्यं निर्दिष्टम्, तदेव व्यपेक्षैकार्थीभावलक्षणभेदेन शब्दशक्त्यनुसारिभिर्विभक्तमित्याह—

**सामर्थ्यमविशेषोक्तमपि लोकव्यवस्थया ।**
**वृत्त्यवृत्त्योः प्रयोगज्ञैर्विभक्तं प्रतिपत्तृभिः ॥४३॥**

समर्थपदेन सामान्यवाचिना सङ्गतार्थत्वं वृत्तिवाक्यगतमविशिष्टमुक्तम् । लक्ष्यज्ञैस्तु लक्ष्यमूलत्वात् स्मृतेः सूत्रकाराशयमनुसृत्य वृत्तावेकार्थीभावो वाक्ये व्यपेक्षेति विभागः कृतः । तथाच परिभाषापक्षे षत्वादिविधावपि व्यपेक्षासामर्थ्यसम्भवादस्यैव व्यापारः । नियतविषयत्वाच्च सामर्थ्यभेदस्य 'वा वचनानर्थक्यं च स्वभावसिद्धत्वात्' (भा०बा०२।२।१) इत्युक्तम् । एकार्थीभावकृताश्च वृत्तौ क्रान्ताद्यर्थप्रतीत्यादयो विशेषा उक्ताः । वाक्ये त्वेकार्थीभावाभावकृताः सङ्ख्याविशेषादयः ॥४३॥

---

तदेवम् "समर्थः पदविधिः" (पा० २।१।१) इत्यत्र सूत्रे वृत्तिवाक्ययोः सामान्येन यत् सामर्थ्यं निर्दिष्टम्, तदेव व्यपेक्षैकार्थीभावलक्षणभेदेन शब्दशक्त्यनुसारिभिर्वृत्तिवाक्यप्रयोगज्ञैर्विभक्तमित्याह—सामर्थ्यमविशेषोक्तमिति ।

अस्यार्थः—'समर्थः पदविधिः' इत्यत्र वृत्तिवाक्ययोरविशेषेण सामान्येनोक्तमपि सामर्थ्यं वृत्त्यवृत्त्योः=वृत्तिवाक्ययोः, प्रयोगज्ञैर्लक्ष्यैकचक्षुष्कैराचार्यैर्लोकव्यवस्थया व्यपेक्षैकार्थीभावभेदेन विभक्तमिति । तदिदमत्रावधेयम्='समर्थः पदविधिः' (पा० २।१।१)इति परिभाषासूत्रमधिकारसूत्रं वा भवतु, किन्त्वत्र सामर्थ्यं शब्दशक्तिसामान्यरूपम् । 'इसुसोः सामर्थ्ये, (पा० ८।३।४४) इत्यादिके षत्वादिविधायके व्यपेक्षालक्षणं सामर्थ्यम् ।

वस्तुतस्तु सामर्थ्यसामान्यस्य तृतीयोऽपि भेदः परिनिष्ठितत्वलक्षणः संभवति='समर्थानां प्रथमाद्वा, ( पा० ४।१।८२ ) इत्यत्रेति ।

अयं भावः—परस्परं संगतार्थौ यस्मिन् तत्समर्थम्, वृत्तिर्वाक्यं वेति व्युत्पत्त्या संसगतार्थवाचिना=परस्परं सम्बद्धार्थवाचिना समर्थपदेन वृत्तिवाक्योभयगतं संगतार्थत्वमविशिष्टमुक्तम् । लक्ष्यज्ञैस्तु=लक्ष्यैकचक्षुष्कैस्तु आचार्यैर्व्याकरणस्मृतेर्लक्ष्यमूलकत्वात् सूत्रकाराशयमनुसृत्य वृत्तावेकार्थीभावः, वाक्ये व्यपेक्षेति सामर्थ्यस्य विभागः कृतः ।

तथा च "समर्थः पदविधि" ( पा०२।१।१ ) इत्यस्य परिभाषत्वपक्षे "इसुसोः सामर्थ्ये" (पा०८।३।४४) इत्यादिके षत्वादिविधावपि व्यपेक्षारूपस्य सामर्थ्यस्य सम्भवादस्यैव = "समर्थः पदविधि" (पा०२।१।१) इति सूत्रस्यैव व्यापारः । सामर्थ्यभेदस्यैकार्थीभावस्य व्यपेक्षारूपस्य वा वृत्तिवाक्ययोर्नियतविषयकत्वाच्च "वा वचनानर्थक्यञ्च स्वभावसिद्धत्वात्" ( भा० वा० २।२।१) इत्युक्तं भाष्ये ।

अस्यार्थः—वृत्तिविषये वा वचनानर्थक्यञ्च वृत्तिवाक्ययोर्व्यपेक्षैकार्थीभावयोः स्वभावसिद्धत्वादिति । वृत्तौ 'निष्कौशाम्बिः' इत्यादावेकार्थीभावकृताश्च विशेषा निरादितः क्रान्ताद्यर्थप्रतीत्यादय उक्ताः । वाक्ये तु व्यपेक्षायाः सत्त्वेनैकार्थीभावाभावकृताः 'राज्ञः पुरुषः' इत्यादिषूपसर्जनं संख्याविशेषैकत्वादयो विशेषा उक्ता इति ॥ ४३ ॥

कथमविशेषोक्तावयं प्रविभागः, विपर्ययोऽप्यत्र कस्मान्न सम्भाव्यत इत्याशङ्क्याह—

**अर्थस्य विनिवृत्तत्वाल्लुगादि न विरुध्यते ।**
**एकार्थीभाव एवातः समासाख्या विधीयते ॥४४॥**

इह द्विविधा वृत्तिः, जहत्स्वार्था अजहत्स्वार्था च । जहन्ति स्वार्थमुपसर्जनपदानि यस्यां सा जहत्स्वार्था, तद्विपरीता अजहत्स्वार्थेति मतभेदाश्रयो विकल्पः । तत्र जहत्स्वार्थायामसन्नेवोपसर्जनार्थः । अजहत्स्वार्थायामपि प्रधानेन सम्भेदापत्तेः पृथगसन्निति भेदाधिष्ठानस्य सम्बन्धस्य निवृत्तत्वात् सङ्ख्याविशेषतिरोधानाच्च विभक्तेः स्वाभाविकमर्थाभावाददर्शनमन्वाख्यायमानमुपपद्यते । तथाच समास एकार्थीभावे युक्तः ।

व्यपेक्षायां तु भेदस्य संख्याविशेषाणां च संभवाद् विभक्तिश्रवणे वाक्यमवतिष्ठते । लुगादीत्यादिग्रहणात् 'स्तोकान्मुक्त' इत्यलुक एकवद्भाववचनं गृह्यते । भेद-

---

ननु "समर्थः पदविधिः" ( पा० २।१।१ ) इत्यत्र सामर्थ्यस्य अविशेषेण=सामान्येनोक्तौ प्रविभागः, कथमयं विपर्ययोऽप्यत्र कस्मान्न भवति, वाक्ये एकार्थीभावो वृत्तौ व्यपेक्षेतीत्याशङ्क्याह=अर्थस्य विनिवृत्तत्वादिति ।

अस्यार्थः—अर्थस्य=विभक्त्यर्थस्य भेदाधिष्ठानकस्य सम्बन्धस्य वृत्तावेकार्थीभावे सति विनिवृत्तत्वात्, तत्राभेदैकत्वसंख्याया भानेऽपि संख्याविशेषस्य तिरोधानाच्च वृत्तौ=लुगादिवृत्तौ विभक्तेः स्वाभाविकमदर्शनं शास्त्रेणान्वाख्यायमानं न विरुद्धयते । स्वाभाविकस्यैव लुगादेः शास्त्रेणान्वाख्यानात् । अत एकार्थीभावे एव सति समासाख्या समाससंज्ञा विधीयते, न तु व्यपेक्षायां सत्यां वाक्ये इति ।

अयं भावः—इह=शास्त्रीये व्यवहारे द्विविधा वृत्तिः—जहत्स्वार्था, अजहत्स्वार्था च । जहति=त्यजन्ति स्वार्थमुपसर्जनीभूतानि पदानि यस्यां सा जहत्स्वार्था, तद्भिन्ना अजहत्स्वार्था इति मतभेदाश्रयः=इति मतनिमित्तकः समासविकल्पः । तत्र जहत्स्वार्थायामसन्नेवोपसर्जनार्थः । अजहत्स्वार्थायामपि वृत्तौ प्रधानेन सहोपसर्जनस्य सम्भेदापत्तेः=एकार्थीभावापत्तेः उपसर्जनार्थः पृथगसन्निति भेदाधिष्ठानकस्य=प्रतियोग्यनुयोगिभेदनिमित्तकस्य विभक्त्यर्थस्य सम्बन्धस्य निवृत्तत्वात् संख्याविशेषस्य तत्र तिरोधानाच्चार्थाभावात् स्वाभाविकं विभक्तेरदर्शनं शास्त्रेणान्वाख्यायमानमुपपद्यते ।

तथा चैकार्थीभावे एव समासो युक्तः । व्यपेक्षायां तु पदभेदपदार्थोपस्थितिभेदप्रयुक्तस्य गुणगुणिभावापन्नपदार्थद्वयभेदस्य संख्याविशेषाणाञ्च सम्भवात् तद्बोधनाय जातविभक्तिश्रवणे सति वाक्यमवतिष्ठते ।

कारिकायां लुगादि इत्यादिग्रहणात् 'स्तोकान्मुक्तः' इत्यादावलुक एकवद्भाववचनं गृह्यते ।

तिरोधानाद्धि समासेऽभेदैकत्वसंख्याप्रादुर्भावात् स्वाभाविकमेवैकार्थाभिधानमनुगम्यते। तथाचोक्तम् । 'एकवद्वचनग्रहणमनर्थकम्' द्विबहुष्वसमास' ( भा० वा० ६।३।१ ) इति ।

तदेवमेकार्थीभावे समासविधानस्य लुगाद्यन्वाख्यानं लिङ्गमुक्तम् । तथाच वाक्यसमासयोर्नियतविषयत्वात् परस्परविषयावरोधासामर्थ्याद् विकल्पशासन-मनुपपन्नम् ॥ ४४ ॥

केचित् तु वाचनिकमेव विषयनियममाहुः, तद् दर्शयति—

**व्यवस्थितविभाषा च सामान्ये कैश्चिदिष्यते ।**
**तथा वाक्यं व्यपेक्षायां समासोऽन्यत्र शिष्यते ॥४५॥**

व्यपेक्षैकार्थीभावयोर्यत् सामान्यं संवन्जमात्रं सामर्थ्यमित्यविशेषेणोक्तम्, तत्र विभाषया वाक्यसमासावभ्यनुज्ञायेते । व्यवस्थितविभाषाविज्ञानाच्च व्यपेक्षायां

---

तेन 'स्तोकाभ्यां मुक्तः, स्तोकेभ्यो मुक्तः' इत्यादि न भवति । समासे भेदतिरोधानाद्धि अभेदैकत्व-संख्याप्रादुर्भावात् स्वाभाविकमेवैकार्थाभिधानं शास्त्रेणानुगम्यते । तथा चोक्तम्—"एकवद्वचन-ग्रहणमनर्थकम्, द्विबहुष्वसमासः" इति ।

अस्यार्थः—'स्तोकाभ्यां मुक्तः' इत्याद्यर्थे 'स्तोकान्मुक्तः' इत्यादेः प्रयोगस्य सिद्धये एकवद्वचन-ग्रहणमनर्थकम्, यतो द्विबहुषु = द्वित्वबहुत्वसंख्याविशिष्टार्थबोधकेषु द्विवचनान्तबहुवचनान्तपदेषु असमासः = समासाभावो दृश्यते । 'स्तोकाभ्यां मुक्तः, स्तोकेभ्यो मुक्तः' इत्यर्थे 'स्तोकान्मुक्तः' इति समासस्तु समासेऽभेदैकत्वसंख्यामाश्रित्योपपादनीयः ।

वस्तुतस्तु 'स्तोकान् मुक्तः' इत्यखण्डमेकमेव पदम् । अपोद्धारबुद्धया तु तत्र पदपदार्थद्वय-कल्पना । तदेवमेकार्थीभावे समासविधानस्य शास्त्रेण लुगाद्यन्वाख्यानं लिङ्गमुक्तम् । तदयमत्रानु-मानप्रयोगः = इमे पदे, समस्ते, लुगाद्यन्वाख्यानगोचरत्वात्, यन्नैवं तन्नैवं यथा वाक्यमिति । तथा च वाक्यसमासयोर्व्यपेक्षैकार्थीभावरूपनियतविषयत्वात् परस्परविषयावरोधासामर्थ्यात् समास-विकल्पशासनमनुपपन्नमिति समासविधिषु विभाषाधिकारो न कर्तव्य इति वार्त्तिककारस्य पक्ष इति ॥ ४४ ॥

केचित्तु = सूत्रानुसारिणो वाचनिकमेव = विभाषावचनसिद्धमेव विषयनियमम् = वृत्ति-वाक्ययोः प्रयोगभूमिनियममाहुः, तद् ददर्शयति - व्यवस्थितविभाषा चेति ।

अस्यार्थः—कैश्चित् = समासविकल्पविधिसूत्रानुसारिभिः, सामान्ये = वृत्तिवाक्यसाधारण्ये पदानां सम्बन्धसामान्यरूपे सामर्थ्यसामान्ये, व्यवस्थितविभाषा च = व्यवस्थितविभाषा तु दृश्यते । तया = व्यवस्थितविभाषया व्यपेक्षायाम् = पदानां पृथक् पृथगर्थोपस्थापकानां परस्पराकाङ्क्षाप्रयुक्ते आकाङ्क्षाभास्ये सम्बन्धविशेषे वाक्यमनुज्ञायते । अन्यत्र = प्रागुक्तरूपव्यपेक्षातोऽन्यत्र वृत्तिरूपैक-पदवृत्तिभास्ये एकार्थीभावरूपे संसर्गविशेषे समासः शास्त्रेण शिष्यत इति ।

अयं भावः । व्यपेक्षैकार्थीभावयोर्यत्सामान्यं पदानां मिथः सम्बन्धसामान्यम् "समर्थः पदविधिः" इत्यत्राविशेषेण = वृत्तिवाक्यसाधारण्येन सामर्थ्यमित्युक्तम् । तत्र विभाषया वाक्य-

सामर्थ्यभेदे वाक्यमेव, एकार्थीभावे तु वृत्तिरेवेति शब्दशक्त्यनुसारी विषयनियमः सूत्रकाराभिप्रायमनुसरद्भिरुक्तः। वाक्यकारो वावचनं प्रत्याचख्याविति पूर्वोक्तनयेन व्यवस्थामाह। सूत्रकारस्य तु सामान्ये व्यवस्थितविभाषा स्थिता ॥ ४५ ॥

तथाच सामान्यार्थाश्रये समानशब्दत्वेऽप्येकार्थीभावकृतोऽयमपरो विशेष इत्याह—

तुल्यश्रुतित्वात् तत्त्वेऽपि राजादीनामुपाश्रिते।
वृत्तौ विशेषणाकाङ्क्षाऽगमकत्वान्निवर्तते ॥४६॥

य एव राजादिशब्दा वाक्ये, त एव वृत्ताविति रूपसादृश्यादभेदे वृत्तिवाक्ययोः समाश्रितेऽपि 'ऋद्धस्य राज्ञः पुरुषः' इति वाक्यवद् 'ऋद्धस्य राजपुरुषः' इति वृत्तावपि विशेषणेनोपसर्जनार्थो न युज्यते गमकत्वाभावात्, प्रधानसंसृष्टेन ह्यस्वतन्त्रेण राज्ञा ऋद्धादेरभिसंबन्धायोगात्। एकार्थीभावाद्धि संबन्धस्यान्तर्भावे सति कथमुद्भूतव्यति-

---

समासौ लोकसिद्धौ शास्त्रेणाभ्यनुज्ञायेते। व्यवस्थितविभाषाविज्ञानाच्च व्यपेक्षारूपे सामर्थ्यविशेषे वाक्यमेव, एकार्थीभावे तु वृत्तिरेवेति शब्दशक्त्यनुसारी विषयनियमः=वृत्तिवाक्ययोः प्रयोगभूमिनियमः समासविकल्पविधायकसूत्रकाराभिप्रायमनुसरद्भिरुक्तः। वाक्यकारः=वार्तिककारः वा वचनं समासविकल्पविधायकं प्रत्याचख्याविति पूर्वोक्तनयेन=पूर्वकारिकोक्तरीत्या वृत्तिवाक्ययोर्व्यवस्थामाह। सूत्रकारस्य तु मते सामर्थ्ये सामान्ये एतत्कारिकोक्ता व्यवस्थितविभाषा स्थितेति ॥ ४५ ॥

तथा च 'राजपुरुषः' इत्यादिवृत्तिघटकराजादिपदे सामर्थ्यसामान्यरूपार्थाश्रये तत्त्वादानुपूर्व्यैक्याच्च समानशब्दत्वेऽपि एकार्थीभावकृतोऽयमपरो विशेषो विशेषणयोगादिभ्य इत्याह—तुल्यश्रुतित्वादिति।

अस्यार्थः—'राजपुरुषः' इत्यादिवृत्तौ घटकानां राजादीनाम्=राजादिपदानाम्, 'राज्ञः पुरुषः' इत्यादिवाक्यघटकराजादिपदैस्तुल्यश्रुतित्वात् तुल्यश्रवणत्वात्=तुल्यानुपूर्वीकत्वात् रूपसादृश्यात् तत्त्वेऽपि तयोरभेदेऽपि उपाश्रिते वृत्तौ राजादिपदानामुपसर्जनार्थबोधकानां समृद्धादिरूपविशेषणाकाङ्क्षा अगमकत्वात्=विशेषणयोगाप्रत्यायकत्वाद् निवर्तते। तेन समृद्धस्य 'राज्ञः पुरुषः' इतिवत् समृद्धस्य 'राजपुरुषः' इति न भवतीति।

अयं भावः—य एव राजादिशब्दा वाक्ये, त एव वृत्ताविति रूपसादृश्यादानुपूर्वीसाम्याद् वृत्तिवाक्ययोरभेदे समाश्रितेऽपि 'ऋद्धस्य राज्ञः पुरुषः' इति वाक्यवद् 'ऋद्धस्य राजपुरुषः' इति वृत्तावप्युपसर्जनार्थो विशेषणेन ऋद्धादिना सह पुरुषे उपसर्जनीभूतो राजपदार्थोः न युज्यते, गमकत्वाभावात्=विशेषणयोगस्य प्रत्यायकत्वाभावात्। प्रधानसृष्टेन हि, अत एवास्वतन्त्रेण राज्ञा ऋद्धादेरभिसम्बन्धायोगात्।

यथाऽऽहुः शब्दसंप्रदायविदः—"नह्युपाधेरुपाधिर्भवति विशेषणस्य च विशेषणम्" इति।

एकार्थीभावाद्धि राजसम्बन्धस्य समस्यमानपदार्थान्तर्भावे सति पुरुषेण सहाव्यतिरेकमापद्यमानस्य

रेकेण विशेषणेन योगः स्यादिति 'सविशेषणानां वृत्तिर्न वृत्तस्य वा विशेषणं न' इति वक्तव्यम्। कृते हि समासे विशेषणयोगो न प्रतीयते उपसर्जनार्थस्येत्यगमकत्वात् प्रत्यायकत्वाभावात् तत्र विशेषणाकाङ्क्षा नास्ति। वाक्ये त्वस्ति गमकत्वात्।

अतश्च शब्दशक्तिभेदादर्थभेदे वृत्तिवाक्ययोरत्यन्तमेव भेदः। सारूप्यनिमित्तं त्वभेदावसानं भ्रान्तम्। येनापि वृत्तावेकार्थीभावादुपसर्जनार्थस्य विवेकाभावात् सविशेषणयोगो न भवतीत्यादिरत्र युक्तिरुपन्यस्यते तेनाप्येकार्थीभावकृताद्विशेषणाद्भेद एव शब्दशक्तिनिमित्तो वृत्तिवाक्ययोरुक्तो नापूर्वः कश्चित्॥ ४६॥

तथाच यत्रास्ति गमकत्वं, तत्रैकार्थीभावेऽपि भवति विशेषणयोग इत्याह—

**संबन्धिशब्दः सापेक्षो नित्यं सर्वः प्रयुज्यते।**
**स्वार्थवत् सा व्यपेक्षास्य वृत्तावपि न हीयते॥४७॥**

इह केचिच्छब्दाः स्वार्थमितरापेक्षं नान्तरीयकमभिदधानाः संबन्धिशब्दाः

---

राज्ञः कथमुद्भूतव्यतिरेकेण ऋद्धादिना विशेषणेन सह योगः स्यादिति "स विशेषणानां वृत्तिर्न, वृत्तस्य वा विशेषणयोगो न" इति न वक्तव्यम्, कृते हि समासे उपसर्जनार्थस्य विशेषणयोगो न प्रतीयत इत्यगमकत्वात्, उपसर्जनपदस्य स्वार्थविशेषणयौगाप्रत्यायकत्वाभावात्। तत्र विशेषणाकाङ्क्षा नास्ति, वाक्ये तु तस्य सोऽस्ति तस्य तद्गमकत्वात्। अतश्च शब्दशक्तिभेदा-दर्थभेदे सति वृत्तिवाक्ययोरत्यन्तमेव भेदः। वृत्तिवाक्यघटकपदयोः सारूप्यनिमित्तकं त्वभेदा-वसानं भ्रान्तम्=अभेदनिश्चयो भ्रमः। येनापि वृत्तावेकार्थीभावादुपसर्जनार्थस्य प्रधानाद् विवेकाभावात् सविशेषणानां योगेन भवतीत्यादिरत्र युक्तिरुपन्यस्यते, तेनापि एकार्थीभावकृताद् विशेषाद् वृत्तिवाक्ययोः शब्दशक्तिनिमित्तको भेद एवोक्तो नापूर्वः कश्चिदिति॥ ४६॥

तथा च 'चैत्रस्य गुरुकुलम्, मैत्रस्य दासभार्या' इत्यादौ नियमेन निरूपकसाकाङ्क्षे यत्रास्ति गमकत्वम्, तत्रैकार्थीभावेऽपि भवति विशेषणयोग इत्याह—सम्बन्धिशब्द इति।

अस्यार्थः—नित्यं सापेक्षः=नित्यं निरूपकसाकाङ्क्षः सर्वः सम्बन्धिशब्दः सनिरूपकार्थ-वाचकः शब्दः समस्तः प्रयुज्यते। समस्यते इति पाठस्तूपलभ्यते युज्यते च। अस्य नित्यं सापेक्षस्य सम्बन्धिशब्दस्य सा=वाक्ये स्थिता व्यपेक्षा स्वार्थनिरूपकार्थान्तराकाङ्क्षा स्वार्थवत्= स्वार्थ इव, अत्रेवार्थे वत् इत्यव्ययम्। सह सुपेति समासः। वृत्तावपि=समासेऽपि न हीयते= न निवर्तत इति सम्बन्धिशब्दस्य वृत्तावप्यर्थान्तरापेक्षायोगिस्वार्थप्रतिपादकत्वेन गमकत्वात् तत्र सविशेषणानामपि वृत्तिर्भवत्येवेति "सविशेषणानां वृत्तिर्न" इत्यत्र 'अगुरुपुत्रादीनाम्' इत्यपि वक्तव्यं न भवतीति।

अयं भावः—इह केचिच्छब्दाः स्वार्थमितरपदार्थापेक्षं नान्तरीयकम्=स्वाभाविकमभि-

कथ्यन्ते। तद्यथा—गुरुशिष्यपितृपुत्रमातृभ्रात्रादयः। अतश्च ते वृत्तावपि स्वार्थमर्थान्तरापेक्षायोगिनमेव प्रतिपादयन्तीति गमकत्वात् तत्र सविशेषणानामपि वृत्तिर्भवतीति 'सविशेषणानां वृत्तिर्न' इत्यत्र 'अगुरुपुत्रादीनाम्' इत्यपि न वक्तव्यम्। देवदत्तस्य गुरुकुलं, देवदत्तस्य गुरुपुत्र इत्यादि।

अत्र हि प्रातिपदिकमात्रेणापेक्षितं विशेषणं नोद्भूतव्यतिरेकेणेत्येकार्थीभावाद् व्यतिरेकस्यान्तर्भावेऽप्युपसर्जनेन संबध्यते। गुर्वादेर्हि वाच्यं शिष्याद्यपेक्षमित्येकार्थीभावेऽपि तदाकाङ्क्षा न निवर्तते स्वार्थस्य निवृत्त्यभावात्॥ ४७॥

अत्रैव प्रकारान्तरमाह—

**समुदायेन संबन्धो येषां गुरुकुलादिना।**
**संस्पृश्यावयवांस्ते च युज्यन्ते तद्वता सह॥४८॥**

दासीगृहवत् प्रसिद्धमेव गुरुकुलं देवदत्तेन प्रधानं विशेष्यते, न त्वत्रोपसर्जनार्थस्य गुरोर्देवदत्तापेक्षेत्यपि समर्थने किं देवदत्तस्य समीपं गुरुकुलमुतान्यथेति

---

दधानाः सम्बन्धिशब्दाः कथ्यन्ते। तद् यथा गुरुशिष्यपितृपुत्रमातृभ्रात्रादयः। एते शब्दा एकैके नित्यं सनिरूपकार्थवाचका इति सम्बन्धिशब्दा उच्यन्ते। अतश्च ते वृत्तावपि अर्थान्तरापेक्षायोगिनमेव स्वार्थं प्रतिपादयन्तीति गमकत्वात् तत्र सविशेषणानामपि वृत्तिर्भवतीति 'सविशेषणानां वृत्तिर्न' इत्यत्र 'अगुरुपुत्रादीनाम्' इत्यपि न वक्तव्यं भवति। 'देवदत्तस्य गुरुकुलम्, 'देवदत्तस्य गुरुपुत्रः' इत्यादि।

अत्र हि प्रातिपदिकमात्रेण गुर्वादिनाऽपेक्षितं विशेषणं देवदत्तादि, नोद्भूतव्यतिरेकेण विभक्त्यन्तेन गुर्वादिपदेनेत्येकार्थीभावाद् व्यतिरेकस्यान्तर्भावेऽप्युपसर्जनेन सम्बध्यते। गुर्वादेर्हि वाच्यं नित्यं शिष्याद्यपेक्षमित्येकार्थीभावेऽपि तदाकाङ्क्षा न निवर्तते, स्वार्थस्य=गुर्वादिपदार्थस्य निवृत्त्यभावादिति॥ ४७॥

अत्रैव='देवदत्तस्य गुरुकुलम्' इत्यादावेव देवदत्तस्य गुरुकुलेन सम्बन्धः, न गुरुणेति प्रकारान्तरमाह—समुदायेन सम्बन्ध इति।

अस्यार्थः—येषां देवदत्तादीनां गुरुकुलादिना समुदायेन सम्बन्धः, तेऽवयवान् गुर्वादीन् संस्पृश्य च=संस्पृश्यैव तद्वताऽवयविना सह युज्यन्ते, न त्वन्यथेति नास्त्येतन्मतेऽपि प्रकारान्तरत्वमिति तात्पर्यम्।

यदि तु देवदत्तादेर्गुर्वादिनाऽवयवेन सम्बन्धो न स्यात्, तदा किं देवदत्तस्य समीपं गुरुकुलम्, यद्वा तस्यानन्तरमित्यादिकः सन्देहः स्यात्, अत एतद्व्यावृत्त्यर्थमवयवसम्बन्ध आवश्यक इति।

अयं भावः—दासीगृहं यथा प्रसिद्धम्, न तु तत्र कस्य दास्या गृहमिति निरूपकाकाङ्क्षा भवति, तथा प्रसिद्धमेव निरूपकाकाङ्क्षं प्रधानं गुरुकुलं देवदत्तेन विशेष्यते, न त्वत्रोपसर्जनार्थस्य गुरोर्देवदत्तापेक्षा इत्येवं 'देवदत्तस्य गुरुकुलम्' इत्यत्र वृत्तिसमर्थनेऽपि किं देवदत्तस्य समीपं गुरुकुलम्,

सन्देहे अवश्यमिदं वक्तव्यं देवदत्तस्य यो गुरुस्तस्य कुलमित्येवमवयवान् गुर्वादीन् संबन्धेन स्वीकृत्य ते देवदत्तादयस्तद्वतावयविना समुदायेन संबध्यन्त इत्यवयवद्वारेणैव समुदायसंबन्धो 'द्विमयमुदश्विद् यवानाम्' इत्यादिवत्।

एवञ्च य एव देवदत्तेन साक्षाद् गुरोर्योगेऽर्थः, स एव संपन्न इति, नास्ति प्रकारान्तरत्वमित्यत्र तात्पर्यम् ॥ ४८ ॥

प्रक्रियायां वाक्योपमर्देन वृत्तेरन्वाख्यानात् कथमत्यन्तभेद इत्याशङ्क्याह—

**अबुधान् प्रत्युपायाश्च विचित्राः प्रतिपत्तये।**
**शब्दान्तरत्वादत्यन्तभेदो वाक्यसमासयोः ॥४९॥**

इह राजपुरुषादयो विशिष्टार्थवृत्तयः सङ्घाताः परमार्थतो निरंशा एव

---

उतान्यथेति सन्देहे अवश्यमिदं वक्तव्यं देवदत्तस्य यो गुरुस्तस्य कुलमित्येवमवयवान् गुर्वादीन् मौखसम्बन्धेन विशेष्यतया स्वीकृत्य ते देवदत्तादयस्तद्वताऽवयविना समुदायेन गुरुकुलादिना सम्बध्यन्ते इत्यवयवद्वारेणैव समुदायेन सम्बन्धो देवदत्तादेः, द्विमयमुदश्विद्यवानामित्यादिवत्।

अत्र हि यवानां पूर्वं भागद्वयरूपेण निमानेन सम्बन्धः, तद्द्वारा तु पश्चान्निमेयेन उदश्विता, तथैवात्र 'देवदत्तस्य गुरुकुलम्' इत्यत्रवयवसम्बन्धद्वारैव समुदायसम्बन्धो देवदत्तस्य।

एवं च य एव देवदत्तेन साक्षाद् गुरोर्योगोऽर्थः स एव समुदायस्यापि योगे सम्पन्न इति नास्ति प्रकारान्तरत्वमत्रापि मते इत्यत्रास्याः कारिकायातात्पर्यमिति ॥ ४८ ॥

प्रक्रियायाम्=लौकिकेऽलौकिके वा प्रक्रियावाक्ये वाक्योपमर्देन शास्त्रेण वृत्तेरन्वाख्यानात् कथमत्यन्तभेदो वृत्तिवाक्ययोरित्याशङ्क्याह—अबुधान् प्रत्युपायाश्चेति।

अस्यार्थः—इह यद्यपि राजपुरुषादयः समासरूपाः संघाता वस्तुतो निरंशाः, तत्रापोद्धारबुद्ध्या तु पूर्वोत्तरभागकल्पनारूपया पदान्यपोद्धृत्य शास्त्रेण वृत्तिर्व्युत्पाद्यत इति रीत्या अबुधान् प्रति राजपुरुषादिरूपवृत्तिप्रतिपत्तये विचित्राः=विविधा उपायाश्च = उपाया एव शास्त्रेण दर्शिताः, ते तु रेखागवयन्यायेन परमार्थाः।

तथा हि क्वचिदुक्तम्—वाक्यप्रकृतिर्वृत्तिरिति।

अस्यार्थः—वाक्यं प्रकृतिर्यस्याः सा तथाभूता वृत्तिरिति, न तु परमार्थतो वृत्तिवाक्ययोः प्रकृतिविकृतिभावोऽस्ति, शब्दनित्यत्वसिद्धान्तस्याबाधसिद्धत्वात्। तदुक्तं पस्पशाभाष्यवार्तिके—"सिद्धे शब्दार्थसम्बन्धे लोकतोऽर्थप्रयुक्ते शास्त्रेण धर्मनियमः क्रियते" इति।

क्वचिच्चोक्तम्=वाक्यार्थे पदरचनमिति।

अस्यार्थः—'राज्ञः पुरुषः' इति वाक्यस्यार्थे 'राजपुरुषः' इति समासपदरचनं शास्त्रेण क्रियत इति। एषोऽपि समासप्रतिपत्तयेऽभ्युपाय एवान्वाख्यातः, न तु वस्तुतो वाक्यार्थसमासपदार्थयोर्वाक्यसमासयोर्वा ऐक्यमिति।

तथा च वाक्यसमासयोः प्रकृतिविकृत्यभावेन शब्दान्तरत्वादत्यन्तभेद इति सिद्धमिति।

अयं भावः—इह राजपुरुषादयो विशिष्टार्थवृत्तयः=एकार्थीभावापन्नवृत्तयः समासरूपाः

परिकल्पितपूर्वोत्तरावयवप्रविभागेन व्युत्पाद्यन्त इति मन्दमतयः श्रुतिसारूप्यादुपायोपेययोरैक्यमध्यवस्यन्ति ।

भावतस्तु यथा रेखागवयेन सत्यगवयप्रतिपत्तावन्य एव रेखागवयोऽन्यश्च सत्यगवयः, तथा धूलिप्रक्षेपगतं प्रक्रियावाक्यमन्यदेव समासात्। प्रयोगसमवायि किल वाक्यमनेनोपायेन प्रदर्श्यते । तच्च व्यपेक्षैकनियतमेकार्थीभावविषयात् समासादन्यदेव। अर्थभेदेन शब्दानां भेदात्। संख्याविशेषादिश्चार्थभेदः प्रदर्शितः ।

क्वचित् समासान्तादेश्च संभवाद् रूपभेदोऽप्यस्ति। भेदसंसर्गलक्षणस्य प्रधानस्यार्थस्याभेदाद् दूरविप्रकर्षेण वाक्यप्रकृतिर्वृत्तिर्व्युत्पाद्यते। तथा क्वचिद् वाक्यार्थे पदवचनमित्येवं विचित्रा व्युत्पादनोपायाः प्रक्रियायाम्। तत्र च वाक्यविभक्तीनां दर्शनात् समासे लुगन्वाख्यानं नलोपादिप्रत्ययलक्षणकार्यसिद्ध्यर्थम्॥ ४९ ॥

---

परिकल्पिताः पदसंघाताः परमार्थतो निरंशा एव परिकल्पितपूर्वोत्तरावयवप्रविभागाः शास्त्रेण व्युत्पाद्यन्त इति मन्दमतयः श्रुतिसारूप्यात्=श्रूयमाणानुपूर्वीसाम्यात् परिकल्पितस्य प्रक्रियावाक्यरूपस्योपायस्य, वृत्तिरूपस्योपेयस्य चैक्यमध्यवस्यन्ति=भ्रमतो निश्चिन्वन्ति ।

भावतस्तु=वस्तुतस्तु यथा रेखागवयेन सत्यगवयप्रतिपत्तावन्य एव रेखागवयोऽन्यश्च सत्यगवयः, तथा धूलिप्रक्षेपगतम्=धूलिप्रक्षेपेण तत्सदृशेन व्यामोहसम्पादनेन गतम्=वृत्तिप्रकृतितया ज्ञातम्, प्रक्रियावाक्यमन्यदेव समासात्। प्रक्रियावाक्यं वृत्तिप्रयोगासंवद्धमप्यनेनोपायेन=वृत्तिसाधनरूपेणोपायेन वृत्तिप्रयोगसमवायि किल प्रदर्श्यते । तच्च=प्रक्रियावाक्यञ्च व्यपेक्षानियतम्=व्यपेक्षामात्रविषयम् एकार्थीभावविषयात् समासादन्य एव, अर्थभेदेन शब्दानां भेदात् । वाक्ये हि सम्बन्धस्य संसर्गतया भानम्, समासे तु तस्य विशेषणतया भानमित्यस्त्यर्थभेदः। संख्याविशेषादिश्च=अपि अर्थभेदः प्राक् प्रदर्शितः। वाक्ये हि विभक्तिसत्त्वेन तदर्थभूतस्य संख्याविशेषस्य, द्वित्वबहुत्वादेर्मानं भवति। वृत्तौ तु विभक्तिलुकि सत्यभेदैकत्वसंख्याया एव मानं भवति, न तु संख्याविशेषस्य द्वित्वबहुत्वादेः, विभक्तेर्लुका लुप्तत्वात् ।

क्वचित् समासान्तादेश्च संभवाद् रूपभेदोऽप्यस्ति। यथा वाक् च, त्वक् च, दृषच्चेति वाक्यस्वरूपम्। 'वृत्तौ तु वाक्-त्वक्-दृषदम्' इति भवति वृत्तिवाक्ययोः स्वरूपभेदः।

तथा राज्ञः पुरुषः राजपुरुष इति वृत्तिवाक्यघटकपदार्थयोरभेदेऽपि भेदसंसर्गलक्षणस्य=वाक्ये पदार्थयोर्भेदः पृथक्त्वम्, वृत्तौ तु पदार्थयोः संसर्गः एतद्रूपस्य प्रधानस्य=वृत्तिवाक्ययोर्मुख्यस्यार्थस्य भेदाद् दूरविप्रकर्षेण=वृत्तिवाक्ययोरत्यन्तभेदसत्त्वेन वाक्यप्रकृतिर्वृत्तिरिति लक्षणेन वृत्तिर्व्युत्पाद्यते, रेखागवयन्यायेन ज्ञाप्यत एवावस्तुभूतेन, न तु वस्तुस्थितिरुच्यते। तथा क्वचिद् वाक्यार्थे पदवचनमित्येवं विचित्रा व्युत्पादनोपायाः समासान्वाख्यानप्रक्रियायाम् ।

तत्र च वाक्ये विभक्तीनां दर्शनात् समासे लुगन्वाख्यानं राजपुरुष इत्यादौ पदान्तत्वप्रयुक्तनलोपादिरूपप्रत्ययलक्षण(प्रत्ययनिमित्तककार्य) सिद्ध्यर्थमिति विचित्रा वृत्तिव्युत्पादनोपायाः परस्परस्माद् विलक्षणाः कल्पिता एव, न तु वस्तुभूता इति ॥ ४९ ॥

यद्येवं गोरथादिवृत्तिविषयेऽपि युक्तादीनां वाक्ये दृष्टानां कथं न लोपाख्यान-मित्यत आह—

**असमासे समासे च गोरथादिष्वदर्शनात् ।**
**युक्तादीनां न शास्त्रेण निवृत्त्यनुगमः कृतः ॥५०॥**

विभक्तयोऽसमासे वाक्ये दृष्टप्रयोगा इति प्रक्रियायां तद्भेदेन वृत्त्यनुशासने तासां प्रसङ्गाद्युक्तं यदाचार्योऽर्थाभावात् स्वाभाविकीं निवृत्तिं प्रत्ययलक्षणं प्रार्थयमानोऽन्वाचक्षीत। 'गोरथः, दधिघटः' इत्यादौ तु युक्तादयः प्रक्रियावाक्यगता न दृश्यन्ते,नापि तल्लोपलभ्यं किञ्चनापि कार्यमिति न तेषां लुगन्वाख्यानम् । तथाच दध्ना ओदनो दध्योदनः,गवां रथो गोरथ इति द्रव्याणां क्रियामन्तरेणासामर्थ्यात् समासाभावे चोदिते, "सिद्धं तु समानाधिकरणाधिकारे क्तस्तृतीयापूर्वपदोत्तरपदलोपश्च"। (भा०वा०२।१।३५)

---

ननु यदि 'राजपुरुषः' इत्यादिवृत्तौ नलोपादिरूपप्रत्ययलक्षणकार्यसिद्धयर्थं विभक्तेर्लुगन्वाख्यानं क्रियते, तदा गोरथघृतघटादिवृत्तिविषयेऽपि युक्तपूर्णादीनां वाक्ये दृष्टानां लोपाख्यानं 'शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम्' (वा० १८०) इति वाक्यकारेण कृतमपि सूत्रकारेण कथं न क्रियत इत्याशङ्क्याह असमासे समासे चेति ।

अस्यार्थः—असमासे गवां रथः, दध्ना आदेनः, दध्नो घटः, इत्यादौ, समासे च गोरथादिषु गोरथदध्योदनदधिघटादौ, युक्तादीनाम्=युक्तोपसिक्तपूर्णादीनां पादानामदर्शनात् शास्त्रेण निवृत्यनुगमः=युक्तादिपदनिवृत्त्यनुशासनं न कृतम् । असमासे लक्षणया गवादिपदस्यैव गोयुक्तबोधकत्वात् । समासे चैकार्थीभावाभिधया शक्त्या समासस्य गोयुक्तरथादिबोधकत्वात् ।

अत एव "शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम्" (वा० १८०) इति वार्त्तिकं न कर्तव्यम् । शाकपदस्यैव लक्षणया शाकप्रियबोधकत्वात् । अत एव मुखपदस्य सुखसहिते लक्षणया "मुखनासिकावचनोऽनुनासिकः" ( पा०१।१।८ ) इति सूत्रे उच्यते—लक्षणाया अभावे तु—मुखसहितनासिकयेति वृत्तिरिति ।

अयं भावः—'राज्ञः पुरुषः' इत्यादावसमासे वाक्ये विभक्तयो दृष्टप्रयोगा इति प्रक्रियायां तद्भेदेन वृत्त्यनुशासने च=प्रक्रियावाक्ये तदभेदेन अनुशिष्यमाणायां वृत्तौ च तासां विभक्तीनां प्रसङ्गाद् युक्तं यदाचार्योऽर्थाभावात्=विभक्तिप्रयोजनाभावात् स्वाभाविकीं विभक्तिनिवृत्तिं प्रत्ययलक्षणं कार्यम्=विभक्तिनिमित्तकं पदत्वं तत्प्रयुक्तं नलोपादिकञ्च कार्यं प्रार्थयमानोऽन्वाचक्षीत । गोरथः, दधिघट इत्यादौ तु युक्तादयः प्रक्रियावाक्यगता वृत्तिगता वा न दृश्यन्ते, नापि तल्लोपलभ्यम्=युक्तादिलोपलभ्यं किञ्चनापि कार्यं दृश्यत इति न तेषां लुगन्वाख्यानम् ।

तथा च 'दध्ना ओदनो दध्योदनः, गवां रथो गोरथः' इत्यादावुपसिक्तयुक्तादिपदरहिते विग्रहे द्रव्याणामुपसिक्तयुक्तादिक्रियावाचकपदमन्तरेण परस्परमसामर्थ्यादत्र समासाभावे चोदिते

"षष्ठीसमासश्च युक्तपूर्णान्तः" ( भा० वा० २।१।३५ ) इत्युक्ते दध्ना उपसिक्तो दध्युपसिक्तः, दध्युपसिक्त ओदनो दध्योदनः, दध्नः पूर्णो दधिपूर्णः, दधिपूर्णो घटः दधिघटः, गवां युक्तो गोयुक्तः गोयुक्तो रथो गोरथ इत्येवं समासे उत्तरपदलोपस्य वचने चोदिते "न वा असमासेऽदर्शनाद्" "युक्तार्थसम्प्रत्ययाच्च सामर्थ्यम्" "सम्प्रत्ययाच्च तदर्थाध्यवसानन्" ( भा० वा० २।१।३५ ), इति प्रत्याख्यातं लोपवचनम्। दध्योदनः, गुडधाना इत्यन्नव्यञ्जनभावावगतेस्तद्धेतुभूतोपसेकमिश्रणक्रियासामर्थ्यात् प्रतीयत इति तेन दध्ना ओदन इत्याद्येव वाक्यं क्रियते। नास्त्येवोपसिक्तादिरत्र शब्दः।

एवं गवां रथः, दध्नो घट इत्येव वाक्यम्। सम्बन्धिसामर्थ्यात् तु युक्ताद्यर्थप्रतीतिः। तथाहि—गवां रथस्य वाह्यवाहनसम्बन्धो युक्तार्थमन्तर्भावयति। एवं दधिघटयोराधाराधेयसम्बन्धः पूर्णार्थमिति यथायोगमनुसरणीयम्॥ ५०॥

---

"सिद्धं तु समानाधिकरणाधिकारे क्तस्तृतीया पूर्वपदोत्तरपदलोपश्च, षष्ठी समासश्च युक्तपूर्णान्तः" ( म० भा० २।१।३५ ) इत्युक्तम्।

अस्यार्थः—समानाधिकरणाधिकारे = तत्पुरुषः समानाधिकरणः कर्मधारयः इत्यधिकारे क्तः = क्तान्त उपसिक्तादिः समस्यते, तृतीयापूर्वपदोत्तरपदलोपश्च = तृतीयान्तं यत्पूर्वपदं दध्यादि तदुत्तरपदमुपसिक्तादि तस्य लोपोऽपि वक्तव्य इति। षष्ठीसमासश्च युक्तपूर्णान्तो वक्तव्यः। 'गवां युक्तो गोयुक्तः, दध्नः पूर्णो दधिपूर्णः, अत्रापि समानाधिकरणाधिकारे समासः षष्ठीपूर्वपदोत्तरपदलोपश्च वक्तव्यः, तेन गोयुक्तो रथो गोरथ इति, दधिपूर्णो घटो दधिघट इति सिद्धं भवति इति। इत्येतद् वार्त्तिकद्वये उक्ते सति दध्ना उपसिक्तो दध्युपसिक्तः, दध्युपसिक्त ओदनो दध्योदन इति, दध्नः पूर्णो दधिपूर्णो दधिपूर्णो घटो दधिघट इति, गवां युक्तो गोयुक्तो, गोयुक्तो रथो गोरथ इत्येवं समासे उत्तरपदलोपस्य वचने चोदिते "न वा असमासेऽदर्शनाद्", "युक्तार्थसंप्रत्ययाच्च सामर्थ्यम्"इति वार्त्तिकत्रयमाश्रित्य प्रत्याख्यातमुत्तरपदलोपवचनम्।

अस्य वार्त्तिकत्रयस्यार्थः—न वा उत्तरपदलोपवचनं कार्यम्, असमासे वाक्ये 'गवां रथः, दध्ना ओदनः, दध्नो घट, इत्यादौ युक्तोपसिक्तपूर्णादिपदानां वचनं विना स्वभावत एवादर्शनात्। गवां रथ इत्यादौ षष्ठ्यन्तेनैव सम्बन्धान्यथानुपपत्त्या युक्तार्थसंप्रत्ययाच्च गोरथयोः परस्परं सामर्थ्यम्। 'गवां रथः' इति वाक्ये युक्तार्थसंप्रत्ययाच्च 'गोरथ' इति वृत्तावपि तदर्थिकायां तदर्थाध्यवसानम् = युक्तार्थाध्यवसाय इति नोत्तरपदलोपवचनं कार्यमिति। 'दध्योदनः, गुडधानाः' इत्यत्र दधिगुडयोर्व्यञ्जनभावावगतेस्तद्धेतुभूता = दधिगुडयोर्व्यञ्जनत्वस्य हेतुभूता उपसेकक्रिया मिश्रणक्रिया च सामर्थ्यात् प्रतीयत इति। तेन दध्ना ओदनः 'इत्याद्येव' दध्योदन इति समासस्य विग्रहवाक्यं क्रियते।

अतो नास्त्येवोपसिक्तादिरत्र = वृत्तौ वाक्ये वा शब्दः। एवं गवां रथः, दध्नो घट इत्येव वाक्यम्। षष्ठ्यर्थसम्बन्धसामर्थ्यात्तु युक्ताद्यर्थप्रतीतिः।

तथा हि—गवां रथस्य च बाह्यवाहनभावरूपः सम्बन्धो वृत्त्यर्थे युक्तार्थमन्तर्भावयति। एवं दधिघटयोराधाराधेयभावरूपः सम्बन्धः पूर्णपदार्थं वृत्त्यर्थेऽन्तर्भावयतीति यथासंभवमनुसरणीयमिति॥ ५०॥

९

ननु च गोयुक्तो रथो दध्युपसिक्त ओदनः दधिपूर्णो घट इति वाक्ये दृश्यन्त एव युक्तादयः, तथा प्रगतपर्णः प्रपतितपर्णः इत्यादौ प्रपर्णादिवृत्तिविषये वाक्ये गतादिशब्दः श्रूयत इति लोपोऽन्वाख्येय एवेत्यत आह—

**शब्दान्तरत्वाद् युक्तादिः क्वचिद् वाक्ये प्रयुज्यते ।**
**प्रपर्णप्रपलाशादौ गतशब्दश्च वृत्तिषु ॥५१॥**

इह द्विविधं वाक्यम् । प्रयोगसमवायि लौकिकं नित्यं, प्रक्रियावाक्यं चानित्यम-लौकिकं समासप्रकृतिरेखागवयस्थानीयम् । तत्र च युक्तादिर्न दृश्यते । लौकिके दृश्यते । तच्चान्यदेव गोरथादेः समासस्य पर्यायरूपमिति न पर्यायाणां गजो मतङ्गजो वृषो वृषभ इत्यादीनां गुरुलाघवादरेण लोपान्वाख्यानमुपपद्यते । प्रपर्णादिविषये वृत्तिष्वेकार्थीभावेषु सत्सु कचिल्लौकिके वाक्ये प्रगतपर्ण इत्यादौ गतशब्दः प्रयुज्यते शब्दान्तरभूत इति समन्वयः ॥ ५१ ॥

प्रयोगसमवायिना च लौकिकेन वाक्येन सत्यप्यवान्तरार्थभेदे प्रधानार्थापेक्षया वृत्तिरभिन्नार्थेत्याह—

---

ननु 'गोयुक्तो रथः, दध्युपसिक्तः ओदनः, दधिपूर्णो घटः' इति वाक्ये दृश्यन्त एव युक्तोप-सिक्तादयः शब्दाः, प्रगतः पर्णो यस्य प्रपतितः पर्णो यस्य, इत्यादौ प्रपर्णादिवृत्तिविषये वाक्ये गत-पतितादिशब्दः श्रूयत इत्येषां लोपस्य वृत्तावन्वाख्यानमावश्यकमेवेत्याशङ्क्याह—शब्दान्त-रत्वादिति ।

अस्यार्थः—क्वचिद् = गोरथ इत्यादिवृत्तेर्लौकिके विग्रहवाक्ये गोयुक्तो रथ इत्यादौ युक्तादिः शब्दः, शब्दान्तरत्वाद् वृत्त्यपेक्षया विग्रहवाक्यस्य शब्दान्तरत्वात् प्रयुज्यते । क्वचित्तु अलौकिके विग्रहवाक्ये न प्रयुज्यते, शब्दान्तरत्वादेव । प्रपर्णप्रपलाशादौ वृत्तिषु = वृत्तिविषये वाक्ये प्रगतः पर्णो यस्य, प्रपतितः पर्णो यस्य इत्यादिलौकिकविग्रहवाक्ये गतशब्दश्च = गतपतितादिशब्दश्च प्रयुज्यते, शब्दान्तरत्वादेव । अलौकिकविग्रहवाक्ये च न प्रयुज्यते, तत एवेति ।

अयं भावः—इह द्विविधं वाक्यम्, लौकिकमलौकिकञ्च । प्रयोगसमवायि = लोके प्रयु-ज्यमानं लौकिकम्, तच्च प्रयोगानादित्वान्नित्यम्, वृत्तेः प्रक्रियावाक्यञ्च शास्त्रकृत्कल्पितत्वादनित्यम् शास्त्रीयव्यवहारमात्रोपयोगित्वादलौकिकं समासप्रकृतित्वेन कल्पितम्, रेखागवयतुल्यमपरमार्थम् ।

तत्र च = अलौकिके प्रक्रियावाक्ये युक्तादिः शब्दो न दृश्यते, लौकिके विग्रहवाक्ये तु दृश्यते । तच्च = लौकिकं विग्रहवाक्यमन्यदेव गोरथादेः समासस्य पर्यायभूतमिति न पर्यायाणां 'गजो मतङ्गजो वृषो वृषभः' इत्यादीनां गौरवलाघवविचारादरेण लोपान्वाख्यानमापाद्यमानमुपपद्यते । प्रपर्णादिसमासविषये वृत्तिष्वेकार्थीभावेषु सत्सु क्वचिल्लौकिके वाक्ये शब्दान्तरभूते प्रगतः पर्ण इत्यादौ गतशब्दः प्रयुज्यत इति कारिकार्थानां समन्वयः = संगतिरिति ॥ ५१ ॥

प्रयोगसमवायिना लौकिकविग्रहवाक्येन सह वृत्तेः सत्यपि उक्तोपसिक्ताद्यवान्तरार्थभेदे प्रधानीभूतरथौदनघटाद्यर्थापेक्षया वृत्तिरभिन्नार्था इति व्यपेक्षारूपसामर्थ्यवादिमतमाह—विशेषण-विशेष्यत्वमिति ।

**विशेषणविशेष्यत्वं कैश्चिदेकस्तथाश्रयः ।**
**उपाये तत्त्वदर्शित्वादिष्यते वृत्तिवाक्ययोः ॥५२॥**

निरंशस्य समासस्यान्वाख्यातुमशक्यत्वाल्लौकिकवाक्यसदृशं प्रक्रियावाक्यमुपायः कल्प्यते । यत्र चान्वयव्यतिरेकाभ्यां प्रकृतिप्रत्ययवदर्थापोद्धारः । अबुधास्तूपायोपेययोरैक्यमध्यवस्यन्तोऽर्थाभेदमत्रावयन्ति ।

तथाहि—य एव विशेषणविशेष्यभावो नीलमुत्पलमित्यत्र वाक्ये, (अ)भेदनिष्ठं च सामानाधिकरण्यं तदविलक्षणमेव नीलोत्पलमित्यत्र वृत्तौ ।

एवं व्यधिकरणविषयेऽपि राज्ञः पुरुष इत्यादौ विशेषणविशेष्यभावः संसर्गात्मको राजपुरुष इति वृत्त्या समान इति वृत्तिवाक्ये अभिन्ने च। तथा च 'परस्परव्यपेक्षां सामर्थ्यमेके, (म० भा० २।१।१ ) इत्येकीयं मतम् । समासेऽप्यत्र व्यपेक्षैव सामर्थ्यं, वाक्योपमर्देन कार्यशब्ददर्शने समासप्रादुर्भावादर्थभेदायोगात् प्रातिपदिकेनैव च पञ्चकदर्शनाश्रयेण विभक्त्यर्थाभिधानात् तल्लुगन्वाख्यानम्, न त्वर्थस्याभावात् । तथा च तावकीनादौ विशेषणप्रतिपत्तिनिबन्धने सति सङ्ख्याविशेषोऽवधार्यत एव । सर्वथा त्वेकार्थीभावा-

---

अस्यार्थः—कैश्चिद् व्यपेक्षासामर्थ्यवादिभिर्वृत्तेरुपायेऽलौकिकप्रक्रियावाक्यरूपे वृत्त्या सह तत्त्वदर्शित्वात्=अभेददर्शित्वाद् वृत्तिवाक्ययोर्विशेषणविशेष्यत्वमेकम्, तथा विशेषणविशेष्यत्वस्याश्रयः प्रधानीभूतो वृत्त्यर्थो वाक्यार्थश्चैक इष्यते । अतो विग्रहवाक्ये श्रूयमाणस्य युक्तोपसिक्तादिपदस्यवृत्तौ लोपार्थं लोपान्वाख्यानं कर्तव्यमिति ।

अयं भावः—शब्दनित्यत्ववादे निरंशस्य समासस्य पदापोद्धारेणान्वाख्यातुमशक्यत्वाद् लौकिकविग्रहवाक्यसदृशमलौकिकं प्रक्रियावाक्यं समासान्वाख्यानस्योपायभूतं बुद्ध्या परिकल्प्यते । तत्र चान्वयव्यतिरेकाभ्यां प्रकृतिप्रत्ययापोद्धारवत्तत्तऽर्थापोद्धारः । अबुधास्तु उपायोपेययोः समासालौकिकप्रक्रियावाक्ययोरैक्यमध्यवस्यन्तस्तयोरर्थाभेदमत्रावयन्ति=जानन्ति ।

तथा हि—य एव विशेषणविशेष्यभावो नीलमुत्पलमित्यत्र वाक्ये, अभेदनिष्ठञ्च=पदार्थद्वयाभेदपरिसमाप्तञ्च पदद्वयस्य सामानाधिकरण्यं तदविलक्षणमेव नीलोत्पलमित्यत्र वृत्तौ ।

एवं व्यधिकरणविषयेऽपि 'राज्ञः पुरुषः' इत्यादौ संसर्गात्मको विशेषणविशेष्यभावो राजपुरुष इति वृत्त्या समान इति वृत्तिवाक्येऽर्थतोऽभिन्ने च ।

तथा च 'परस्परव्यपेक्षां सामर्थ्यमेके' इत्येकीयं मतम् । समासेऽप्यत्रमते व्यपेक्षैव सामर्थ्यम् । कार्यशब्ददर्शने वाक्योपमर्देन समासप्रादुर्भावादर्थभेदायोगात्, पञ्चकं प्रातिपदिकार्थ इति दर्शनाश्रयेण प्रातिपदिकेनैव च विभक्त्यर्थाभिधानाद् विभक्तिलुगन्वाख्यानम्, न तु विभक्त्यर्थस्याभावात् ।

तथा च तावकीनादौ एकार्थीभावविषये तवकादेशरूपे एकत्वरूपसंख्याविशेषप्रतिपत्तिनिबन्धने सति एकत्वरूपः संख्याविशेषोऽवधार्यत एव । सर्वथा तु एकार्थीभावे=व्यपेक्षारहिते

भावेन स्यादत्र प्रतीतिः। उपसर्जनविशेषणायोगस्तु 'सविशेषणानां वृत्तिर्ने'ति वाचनिकः। द्वन्द्वे चशब्दस्याप्रयोगश्च तदर्थ एव। तस्यानुशासनात्, न तु भेदविगमनात्, तन्निष्ठसमुच्चयाभावादिति कार्यशब्दवादिनो वृत्तिवाक्ययोः प्रधानार्थाभेदेन पर्याययोः सर्वथैक्यं भ्रान्त्याध्यवस्यन्ति।

नैकार्थीभावो नाम विशेषकरः कश्चिद्, व्यपेक्षैव, षत्वादिविषयेऽपि सम्भवात् सर्वत्र सामर्थ्यमिति प्रतिपन्नाः।

इत्थं च भिन्ननिमित्ताभ्यां शब्दाभ्यामेकस्यैवार्थस्य प्रत्यायनात् सामानाधिकरण्यमवच्छेद्यावच्छेदकभावश्च भेदाश्रयो वृत्तावपि युज्यत इति न तत् प्रयत्नसाध्यम्। एषां च मते वा वचनेन विकल्पो भिन्नविषये क्रियत इति नानर्थकं तत्॥ ५२॥

एतदपदर्शनं निराकर्तुमाह—

**पदं यथैव वृक्षादि विशिष्टेऽर्थे व्यवस्थितम्।**
**नीलोत्पलाद्यपि तथा भागाभ्यां वर्तते विना॥५३॥**

---

एकार्थीभावे न स्यादत्र संख्याविशेषप्रतीतिः। उपसर्जनविशेषणायोगस्तु=ऋद्धस्य राजपुरुषः इत्येवंरूपेण वृत्तावुपसर्जनीभूते राजादौ ऋद्धादिविशेषणायोगस्तु सविशेषणानां वृत्तिर्नेति वाचनिकः, न तु वृत्तिस्वभावसिद्धः, वृत्तावपि व्यपेक्षायाः सत्त्वात्। द्वन्द्वे च शब्दस्याप्रयोगश्च, तदर्थे एव तस्य=चार्थे एव द्वन्द्वस्य अनुशासनात्, न तु एकार्थीभावेन पदार्थभेदविगमनात् तन्निष्ठसमुच्चयाभावात्=एकार्थीभावार्थनिष्ठसमुच्चयाभावादित्येवं कार्यशब्दवादिनो वृत्तिवाक्ययोः प्रधानार्थाभेदेन पर्याययोः सर्वथैक्यं भ्रान्त्या अध्यवस्यन्ति, शब्दनित्यत्वस्यैव भाष्यादौ सिद्धान्तितत्वात्। नैकार्थीभावो नाम वृत्तौ वाक्याद् विशेषकरः कश्चित्, किन्तु वृत्तावपि व्यपेक्षैव, वाक्ये षत्वादिविषये अपि संभवात् सर्वत्र व्यपेक्षैव सामर्थ्यमिति प्रतिपन्नाः=निश्चिताः।

इत्थञ्च नीलोत्पलमित्यादौ भिन्नप्रवृत्तिनिमित्ताभ्यां शब्दाभ्यामेकस्यैवार्थस्य प्रत्यायनात् सामानाधिकरण्यमवच्छेद्यावच्छेदकभावश्च=विशेष्यविशेषणभावश्च पदार्थभेदाश्रयो वृत्तावपि युज्यत इति न तत्=चित्रगुरित्यादौ सामानाधिकरण्यम्, चैत्रस्य गुरुकुलमित्यादौ विशेष्यविशेषणभावश्च प्रयत्नसाध्यम्। एषाञ्च मते समासाधिकारे तद्धिताधिकारे च वा वचनेन वृत्तिविकल्पोऽभिन्नविषये क्रियत इति नानर्थकं तदिति॥ ५२॥

एतदपदर्शनं=दुष्टं दर्शनम् निराकर्तुमाह—पदं यथैवेति।

अस्यार्थः—यथैव वृक्षादिपदं पदस्फोटरूपं निरंशं विशिष्टेऽर्थेऽखण्डे प्रातिपदिकार्थे व्यवस्थितम्, तत्र प्रकृतिप्रत्ययविभागकल्पना=तत्तदर्थविभागकल्पना तु अन्वाख्यानार्था, न तु परमार्था। तथा नीलोत्पलाद्यपि समासपदमविभक्तावयवमनुभवसिद्धैकार्थप्रत्यायकं पदे प्रकृतिप्रत्ययकल्पनावत् सदृशभागकल्पनया व्युत्पाद्यमानं भागाभ्यां विना वर्तते।

वर्णानामानर्थक्यस्य वृक्षादौ प्रतिपादितत्वान्निरंशमविभक्तार्थप्रत्यायकं स्फोटस्वभावं पदं स्वशक्त्या नियतार्थं यथा, एवं नीलोत्पलं सदृशभागप्रकल्पनया प्रकृतिप्रत्ययादिवद् व्युत्पाद्यतेऽदूरविप्रकर्षेण वाक्येन। यथा वृक्षादावसन्नपि प्रकृतिप्रत्ययार्थविभागोऽन्वाख्यानार्थं कल्पितः, तथा वृत्तावप्यवयवार्थभेदः। वाक्ये हि भेदोऽर्थस्येति सम्बन्धविभक्तिः। वृत्तौ त्वविभागेन पांसूदकवदर्थस्याभेदापत्त्या सम्बन्धविगलनात् स्वाभाविकी निवृत्तिर्विभक्तेः, सङ्ख्याविशेषोऽपि नास्ति। पञ्चके प्रातिपदिकार्थे द्योतकाभावादप्रतीतेः। पयः पयो जरयतीत्यत्र क्रियासम्बन्धान्यथानुपपत्त्या शक्तिप्रतीतिः।

अभेदैकत्वसङ्ख्या च सर्वसङ्ख्याविशेषसामान्यभूता वृत्तावस्त्युपसर्जनार्थस्य द्रव्यस्य निस्सङ्ख्यत्वाभावादिति यथायोगं सति विशेषद्योतके तदवगमो न विरुध्यते। प्रधानार्थसम्भेदादेव च स्वविशेषणेन न युज्यते उपसर्जनार्थः। वचनेन तु शब्दानां शक्त्याधानायोगाद् विषयविवेको दुरवसानः।

द्वन्द्वेऽपि समुच्चितप्राधान्याच्च शब्दनिवृत्तिर्न तु चार्थेऽनुशासनात्। नह्यत्रार्था विधेयतया शब्देषु निर्दिश्यन्ते, आनन्त्येनाशक्यत्वात्।

---

अयं भावः—वृक्षादौ वर्णानामानर्थक्यस्य प्रतिवर्णमर्थवृत्त्यापत्तिभिया प्रतिपादितत्वात् निरंशमविभक्तार्थप्रत्यायकं स्फोटस्वरूपं पदं स्वशक्त्या यथा तत्तन्नियतार्थबोधकम्, तथा नीलोत्पलं राजपुरुष इत्याद्यपि समासपदत्रिभक्तावयवमेकसंवेदनसिद्धैकार्थप्रत्यायकं पदे प्रकृतिप्रत्ययादिवत् सदृशपदभागकल्पनयाऽलौकिकप्रक्रियावाक्येन अदूरविप्रकर्षेण व्युत्पाद्यते। यथा वृक्षादावसन्नपि प्रकृतिप्रत्ययार्थविभागोऽन्वाख्यानार्थं कल्पितः, तथा वृत्तावपि अवयवार्थभेदोऽन्वाख्यानार्थं कल्पितः। वाक्ये हि भेदोऽर्थस्येति भेदनिबन्धनस्य सम्बन्धस्य बोधिका विभक्तिः। वृत्तौ तु पांसूदकवदविभागेनार्थयुगस्याभेदापत्त्या भेदमूलकस्य संबन्धस्य विगलनात् तद्बोधकविभक्तेः स्वाभाविकी निवृत्तिः। अर्थयुगस्याभेदापत्त्यैव संख्याविशेषोऽपि नास्ति, पञ्चके प्रातिपदिकार्थेऽपि द्योतकाभावप्रतीतेः। 'पयः पयो जरयति' इत्यत्र क्रियासम्बन्धान्यथाऽनुपपत्त्या कर्तृत्वकर्मत्वशक्तिद्वयप्रतीतिः।

अभेदैकत्वसंख्या च सर्वेषां संख्याविशेषाणां सामान्यभूता वृत्तावस्ति, उपसर्जनार्थस्य द्रव्यस्य निःसंख्यत्वाभावादिति यथायोगम्=यथासंभवं सति विशेषद्योतके तदवगमः=संख्याविशेषावगमो न विरुद्ध्यते। ऋद्धस्य राजपुरुष इत्यादावुपसर्जनार्थस्य राज्ञः प्रधानार्थसंभेदादेव च=प्रधानार्थसंमिश्रणादेव च स्वविशेषणेन ऋद्धादिना न युज्यते सः। वचनेन तु शब्दानां शक्त्याधानायोगाद् वृत्तिवाक्ययोर्विषय विवेकः=विषयविभागः दुरवसानः=दुर्ज्ञेयः।

द्वन्द्वेऽपि समुच्चितार्थप्राधान्याच्च चशब्दनिवृत्तिर्न तु चार्थेऽनुशासनात्। नह्यत्रार्थाविधेयत्वेन समासशब्देषु निर्दिश्यन्ते, आनन्त्येन तेषां तथा निर्देष्टुमशक्यत्वात्। तदुक्तम्—"अर्थानादेशनात्, तच्च लब्ध्वर्थम्" इति।

तदुक्तम्—'अर्थानादेशानात्, तच्च लध्वर्थमि'ति (मा० भा० ३।३।१)। सिद्धस्य तु लौकिकस्यार्थस्यानुवादः सर्वत्र। परस्परव्यपेक्षा सामर्थ्यमिति त्वेकीयमतम्। एकार्थीभावः सामर्थ्यं परिभाषा चेत्येवं सूत्रमभिन्नतरकं भवतीति सिद्धान्तव्यवस्थापनात्। तदेवमेकार्थीभावकृतविशेषदर्शनादत्यन्तमेव वृत्तिवाक्ययोर्भेदः। केनचिदंशेन तु सादृश्याध्यवसायो भ्रमः॥ ५३॥

न चापि सर्वत्र वृत्तिवाक्ययोः सादृश्यानुगम इत्याह—

**श्रोत्रियक्षेत्रियादीनां न च वासिष्ठगार्ग्यवत्।**
**भेदेन प्रत्ययो लोके तुल्यरूपासमन्वयात्॥५४॥**

वासिष्ठगार्ग्यादौ तद्धितवृत्तिविषये यथान्वाख्यानाय प्रकृतिप्रत्ययविभागेन

---

अस्यार्थः—अर्थानादेशनात् अर्थानामनुपदेशात्—अविधानात्, नह्यात्रार्था विधीयन्ते किन्तु लोकसिद्धा अनूद्यन्ते। शब्दानां तूपदेशः क्रियते। तच्च लध्वर्थम्, लाघवेन शब्दप्रतिपत्त्यर्थम्। लोकतः शब्दप्रतिपत्तौ तु गौरवम्, शब्दानाम्-आनन्त्यात्। गुर्वादिकृतपारायणेनापि शब्दप्रतिपत्तौ गौरवात्। तदुक्तं भाष्ये—"इन्द्रश्चाध्येता, बृहस्पतिश्च प्रवक्ता, दिव्यं वर्षसहस्रमध्ययनकालो नान्तं जगाम" इति।

लौकिकस्य तु लोकसिद्धस्यार्थस्यानुवादः सर्वत्र शास्त्रे। वैदिकानामप्यर्थानां वेदसिद्धानामत्रानुवाद एव। परस्परव्यपेक्षासामर्थ्यमिति तु एकीयमतम्। एकार्थीभावः सामर्थ्यम्, 'समर्थः पदविधिः' (पा० २।१।१) इति सूत्रञ्च परिभाषा इत्येवं कृते 'समर्थः पदविधिः' इति सूत्रमभिन्नतरकम्=अत्यन्तमभिन्नं भवति, सर्वेषु वृत्तिविधायकसूत्रेषु एकरूपेणैव संसृज्यमानत्वात् इति सिद्धान्तव्यवस्थापनात्। तदेवमेकार्थीभावकृतानामुपसर्जनविशेषणायोगासंख्याविशेषाप्रतीत्यादीनां विशेषणानां दर्शनादत्यन्तमेव वृत्तिवाक्ययोर्भेदः। पदसादृश्यरूपेण प्रधानार्थसादृश्यरूपेण च केनचिदंशेन तु तयोः सादृश्याध्यवसायो भ्रमः। वृत्तेरखण्डपदरूपाया अखण्डार्थवाचकत्वादिति॥ ५३॥

वृत्तिवाक्ययोः क्वचित् सादृश्यसत्त्वेऽपि न तयोः सर्वत्र सादृश्यानुगम इत्याह—श्रोत्रियक्षेत्रियादीनामिति।

अस्यार्थः—श्रोत्रियक्षेत्रियादीनां श्रोत्रियक्षेत्रियपारशवादीनां शब्दानां वासिष्ठगार्ग्यवत् वासिष्ठगार्ग्यादिशब्दानामिव भेदेन = प्रकृतिप्रत्ययविभागेन न च प्रत्ययः, न च ज्ञानम्। वसिष्ठशब्दे हि वसिष्ठशब्दः प्रकृतिः, अण् प्रत्ययः, गार्ग्यशब्दे च गर्गशब्दः प्रकृतिः, यञ् इति प्रत्यय इति प्रत्ययो भवति। श्रोत्रियशब्दे तु छन्दःशब्दः प्रकृतिर्घन् प्रत्ययः, क्षेत्रियशब्दे परक्षेत्रशब्दः प्रकृतिर्यञ् प्रत्ययः पारशवशब्दे परस्त्रीशब्दः प्रकृतिस्तस्याः परशुरादेशोऽण् प्रत्ययश्च इति ज्ञानं न भवति। लोके तुल्यरूपाणां प्रकृतीनां श्रोत्रियक्षेत्रियादिषु असमन्वयात्=अनुगमाभावात्। श्रोत्रियादिषु प्रकृतिविकृत्योस्तुल्यरूपत्वाभावादिति।

अयं भावः—तद्धितवृत्तिविषये वासिष्ठगार्ग्यादिशब्दे यथान्वाख्यानाय प्रकृतिप्रत्ययविभागेन

प्रतिपत्तिः, नैवं श्रोत्रियक्षेत्रियपारशवादेः। न ह्यत्र प्रकृतिरूपानुगमो दृश्यते, छन्दः-शब्दपरक्षेत्रशब्दपरस्त्रीशब्दानामननुगमात्। तथाच वाक्यादन्यदेव वृत्तिपदम्। तथा सर्वत्रैव बोद्धव्यम्। एतदेव हि सामान्यतो दृष्टमत्र लिङ्गमुपोद्बलकमर्थ-भेदादेव सिद्धेः ॥ ५४ ॥

वृत्तिवाक्ययोः शब्दभेदेऽर्थानुगमोऽपि क्वचिन्नास्तीत्याह--

**सप्तपर्णादिवद् भेदो न वृत्तौ विद्यते क्वचित्।**
**रूढ्यरूढिविभागोऽपि क्रियते प्रतिपत्तये ॥५५॥**

पर्वणि पर्वणि सप्त पर्णान्यस्येत्येवं सप्तपर्णशब्दो व्युत्पाद्यते। न च सर्व एवंविधो वृक्षः, अपि तु कश्चिदेव शीर्णपर्णोऽपि विशिष्टजातीयोऽभिधीयते। यद्येवं कथं सप्तपर्णादयो रूढिशब्दा इति प्रसिद्धाः न राजपुरुषादय इत्यत आह— रूढ्यरूढीति।

---

प्रतिपत्तिः, नैवं श्रोत्रियक्षेत्रियपारशवादेः, नह्यत्र यथायथं छन्दःशब्दपरक्षेत्रशब्दपरस्त्रीशब्दानां प्रकृतिरूपाणामनुगमो दृश्यत्ते।

तथा चालौकिकाद् लौकिकाद्वा वाक्यादन्यदेव वृत्तिपदम्। तथा सर्वत्रैव बोद्धव्यम् = श्रोत्रियक्षेत्रियादिवत् सर्वेष्वपि वृत्तिपदेषु वाक्याद् भेदो बोद्धव्यः। एतदेव हि=वृत्तौ प्रकृति-रूपानुगमाभावरूपमेव हि सामान्यतो दृष्टमत्र=श्रोत्रियक्षेत्रियादिषु लिङ्गं सर्वत्रैव वृत्तिवाक्ययोरर्थ-भेदादेवसिद्धः। अर्थभेदादेव भेदसिद्धेरपि लिङ्गमिति ॥ ५४ ॥

क्वचित् शब्दभेदे=शब्दविशेषे सप्तपर्णादौ वृत्तिवाक्ययोरर्थानुगमोऽपि नास्तीत्याह—सप्त-पर्णादिवदिति।

अस्यार्थः--क्वचिदपि वृत्तौ सप्तपर्णादिवद् भेदः=शब्दभेदोऽर्थभेदो वा न विद्यते। सप्तपर्णो यथा रूढिशब्दत्वादखण्डस्फोटरूपत्वं पदत्वम्, तत्त्वादेवाखण्डार्थत्वञ्च तथा सर्वत्रापि वृत्तौ बोद्धव्यम्, न तु क्वचिदपि वृत्तौ पदभेदः प्रकृतिप्रत्ययभेदो वा।

ननु तर्हि राजपुरुषादयोऽरूढिशब्दा यौगिकाः, सप्तपर्णादयस्तु रूढिशब्दा अयौगिका इति रूढ्यरूढिविभागः कथं क्रियते इत्याशङ्क्य समाधिमाहोत्तरार्धेन रूढ्यरूढिविभागोऽपीति। रूढ्यरूढि-विभागोऽपि प्रतिपत्तये=न्यायसिद्धस्य वृत्तौ अर्थभेदस्य या प्रतिपत्तिस्तां स्थिरीकर्तुं क्रियते। राजपुरुषादौ सर्वत्रैव प्रधानार्थानुगमाद् यौगिकत्वम्, सप्तपर्णादौ तु क्वचिद् वाक्यार्थानुगमः, क्वचित्तु वाक्यार्थव्यभिचार इति रूढित्वमिति रूढ्यरूढिविभागोपपत्तिरिति।

अयं भावः—पर्वणि पर्वणि सप्तसप्त पर्णानि अस्य इत्येवं सप्तपर्णशब्दो वीप्साविषयार्थगर्भेण बहुव्रीहिणा व्युत्पाद्यते। न च सर्वः सप्तपर्णवृक्ष एवंविधः=पर्वणि पर्वणि सप्तपर्णयुक्तः, अपि तु कश्चिदेव तथा, तथा च शीर्णपर्णोऽपि=पर्णाभाववानपि विशिष्टजातीयः=सप्तपर्णत्वजातीयः सप्त-पर्णपदेन जातिविशेषप्रवृत्तिनिमित्तकेनाभिधीयते।

यदि एवं सर्वेषामेव वृत्तिशब्दानामखण्डार्थत्वम् तदा कथं सप्तपर्णादय एव रूढिशब्दा इति प्रसिद्धाः, न राजपुरुषादयोऽपि इत्यत आह—रूढ्यरूढीति।

प्रतिपत्तये न्यायसिद्धार्थभेदसम्प्रत्ययस्थिरीकरणार्थमयं विभागः। प्रतिपादनोपायः। प्रधानार्थानुगमाद् राजपुरुषादौ यौगिकत्वम्, सप्तपर्णादौ तु वाक्यगतार्थानुगमव्यभिचाराद् रूढित्वमिति विभागेन व्यवहारः। क्रमेण हि परोऽवबोद्ध्यते।

न चार्थानुगममात्रां विना रूढित्वम्, सप्तपर्णादावपि रूढिविषये क्वचित् तत्सम्भवात्। तथाहि रूढीनामपि कचित् सप्तपर्णादावर्थानुगमोऽस्ति।

न चैतावता यौगिकत्वम्, अतिप्रसङ्गात्। तदेवमनङ्गीकृतावयवार्था एव नीलोत्पलादयः समासाः प्रकल्पितावयवभेदेन व्युत्पाद्यमाना भिन्ना एव तत्त्वतो वाक्येभ्य इत्यत्यन्तभेदो वृत्तिवाक्ययोः सिद्धः॥ ५५॥

यद्येकार्थीभावकृतो भेदो वृत्तिवाक्ययोः, तदा बहुव्रीहावनेकवर्त्तिपदसम्भवादन्यपदार्थे तेषामेकार्थीभावान्यथानुपपत्त्या परस्परसमन्वये समासान्तरमन्तरा कस्मान्न भवतीत्याह—

---

कारिकायां प्रतिपत्तये—न्यायसिद्धार्थभेदसंप्रत्ययस्य स्थिरीकरणार्थमयं विभागः=रूढ्यरूढिविभागः, अर्थप्रतिपादनोपायः। प्रधानार्थानुगमाद्=वाक्ये यः प्रधानीभूतोऽर्थःतस्य वृत्तावनुगमाद् राजपुरुषादौ यौगिकत्वम्। सप्तपर्णादौ तु वाक्यगतार्थानुगमव्यभिचाराद् रूढित्वमिति रूढ्यरूढिविभागेन व्यवहारः। योगक्रमेण हि परः पुरुषः प्रतिपत्ता शब्दद्वारा प्रयोक्ताऽर्थमवबोध्यते। न च शब्देऽर्थानुगममात्रां विना=अर्थानुगमलेशं विना रूढित्वम्, गवादयोऽपि हि रूढिशब्दा गमनादिकाः क्रियाः निमित्तीकृत्य व्युत्पादिता अपि योत्रादिका जातीः प्रवृत्तिनिमीत्तीकृत्य शयनादिक्रियाश्रयेष्वपि प्रयुज्यन्ते।

अत एवोच्यते 'अन्यद्धि शब्दानां व्युत्पत्तिनिमित्तमन्यच्च प्रवृत्तिनिमित्तम्' इति। सप्तपर्णादावपि रूढिविषये क्वचित्तत् संभवः—सप्तसप्त पर्णानि पर्वणि पर्वणि अस्येति व्युत्पत्तिवाक्यार्थसंभवः।

तथा हि—सप्तपर्णादिरूपाणां रूढिशब्दानामपि क्वचित् प्रयुक्ते सप्तपर्णादिशब्दे अर्थानुगमोऽस्ति। नचैतावता—क्वचिदर्थानुगमेन सप्तपर्णादिशब्दानां यौगिकत्वम्। व्युत्पाद्यमानार्थवति वृक्षान्तरे सप्तपर्णपदप्रयोगप्रसङ्गरूपादतिप्रसङ्गात्। व्युत्पद्यमानार्थरहिते सप्तपर्णत्वजातीयेऽर्थे वृक्षरूपेऽप्रसङ्गाच्च। तदेवमनङ्गीकृतावयवार्था एव=अवयवार्थरहिता एव, नीलोत्पलादयः समासाः प्रकल्पितावयवभेदेन व्युत्पाद्यमानाः तत्त्वतो वाक्यस्य=वाक्यस्य स्वरूपाद् भिन्ना एव इत्येवमत्यन्तभेदो वृत्तिवाक्ययोः सिद्ध इति॥ ५५॥

ननु यदि एकार्थीभावकृतो वृत्तिवाक्ययोर्भेदस्तदा जरती चित्रा गौर्यस्येति विग्रहे जरच्चित्रगुरित्यादिबहुव्रीहौ समासेऽन्तर्वर्त्यनेकपदसंभवाद्=अन्तर्वर्त्तिबहुपदसंभवात् तेषामन्यपदार्थे एकार्थीभावान्यथानुपपत्त्या=तेषां परस्परसमन्वयं विना अन्यपदार्थे एकार्थीभावस्यानुपपत्त्या परस्परसमन्वये सति अन्तरा=अलौकिकप्रक्रियावाक्यबहुव्रीहिसमासयोर्मध्ये, समासान्तरं=पदद्वयस्य कर्मधारयसमासः कस्मान्न भवतीत्याशङ्क्य समाधिमाह युग्मेन=या सामान्याश्रयेति। सुसूक्ष्मजटकेशादाविति च।

**या सामान्याश्रया संज्ञा विशेषविषया च या ।**
**बहुलग्रहणान्नास्ति प्रवृत्तिरुभयोस्तयोः ॥५६॥**
**सुसूक्ष्मजटकेशादौ समासोऽवयवे यदि ।**
**स्यात्, स्यात् तन्त्रान्तरङ्गत्वात् बाधकोऽवयवस्वरः ॥५७॥**

अतिशयेन सूक्ष्मा जटारूपाः केशा यस्य सोऽयं सुसूक्ष्मजटकेशः । अत्र सूक्ष्म-जटशब्दयोः सति सम्बन्धे विशेषणसमासे समासान्तोदात्तत्वं स्यात् । बहुव्रीहिस्वरेण हि त्रिपदसमासगतं समासान्तोदात्तत्वं बाधितमेकविषयत्वात् । अवयवयोस्तु बहुव्रीह्य-भावादप्रतिषिद्धं समासान्तोदात्तत्वमेव स्यात् ।

---

अस्य पदद्वयस्यार्थः—

सुसूक्ष्मजटकेशेन, मलिनाजिनवाससा ।
पुत्री पर्वतराजस्य कस्माद्धेतोर्विवाहिता ॥

इति क्वाचित्कं पद्यम् । अत्र सुसूक्ष्मा जटा येषां ते सुसूक्ष्मजटाः तादृशाः केशा यस्य 'सुसूक्ष्मजटकेशः' इति द्विपदो बहुव्रीहिः, मलिनमजिनं मलिनाजिनं मलिनाजिनं वासो यस्य स 'मलिनाजिनवासा' इति च द्विपदो बहुव्रीहिः । किन्तु यदि उभयत्रापि त्रिपदो बहुव्रीहिः क्रियते—सुसूक्ष्मा जटारूपाः केशा यस्य स 'सुसूक्ष्मजटाकेश' इति, मलिनमजिनं वासो यस्य समलिना-जिनवासा' इति, तदा उभयत्रापि पूर्वस्मिन् पदद्वये या सामान्याश्रया सुबन्तसामान्याश्रिता या 'सह सुपा' ( पा० २।१।४ ) इति समाससंज्ञा प्राप्ता, या च विशेषविषया—'विशेषणं विशेष्येण बहुलम्', (पा० २।१।५७) इति सूत्रेण विशेषणविशेष्यरूपसुबन्तविशेषविषया समाससंज्ञा प्राप्ता तयोरुभयोः समाससंज्ञयोः प्रवृत्तिः प्रागनुपदोक्तसूत्रे बहुलग्रहणान्नास्ति । बहुलग्रहणेन हि चत्वारोऽर्थाः साध्यन्ते । तदुक्तम्—

क्वचित् प्रवृत्तिः क्वचिदप्रवृत्तिः,
क्वचिद् विभाषा क्वचिदन्यदेव ।
विधेर्विधानं बहुधा समीक्ष्य,
चतुर्विधं बाहुलकं वदन्ति ॥ इति

किञ्च सुसूक्ष्मजटकेशादिरूपपदद्वयबहुव्रीहिस्मारिते सुसूक्ष्मजटाकेशादिरूपत्रिपदबहुव्रीहौ अव-यवपदद्वये यदि सामान्यसूत्रेण विशेषसूत्रेण वा समासः स्यात्तदा तत्रावयवस्वरः समासान्तोदात्त-त्वरूपोऽन्तरङ्गत्वात् पूर्वपदप्रकृतिस्वरस्य बहुव्रीहिप्रयुक्तस्य बाधकः स्यादिति इष्टः पूर्वपदप्रकृति-स्वरः, शेषनिघातश्च न स्यादिति ।

अयं भावः—अतिशयेन सूक्ष्माजटारूपाः केशा यस्य सोऽयं 'सुसूक्ष्मजटाकेशः' । अत्र सुसूक्ष्मजटाशब्दयोः सति सम्बन्धे विशेषणसमासे समासान्तोदात्तत्वं स्यात् । बहुव्रीहिस्वरेण हि = पूर्वपदप्रकृतिस्वरेण हि त्रिपदसमासगतं समासान्तोदात्तत्वं बाधितमेकविषयत्वात् । न तु द्विपद-समासगतं समासान्तोदात्तत्वं बाध्यते, भिन्नविषयत्वात् । अवयवयोस्तु बहुव्रीह्यभावादप्रतिषिद्धं

नच परत्वाद् बहुव्रीहिस्वरः अन्तरङ्गत्वादवयवस्वरश्च पूर्वशाला प्रिय इतिवत् ।

तस्मादत्रावयवस्वरनिवृत्त्यर्थं विशेषणं विशेष्येणे'—( पा० २-१-५७ ) इति या कर्मधारयसमाससंज्ञा, या च 'सुप् सुपा' (पा० २।१।४) इति योगविभागात् सामान्येन समाससंज्ञा, सा बहुलग्रहणान्न प्रवर्तत इति वाच्यम् ॥ ५६, ५७ ॥

ननु च प्रकृतयैव महाविभाषयात्रावयवयोः समाससंज्ञा द्विविधापि न प्रवर्तत इति कस्मान्नोच्यते, किं बहुलग्रहणात् तदभावः कथ्यत इत्याशङ्क्याह—

**समुदायस्य वृत्तौ च नैकदेशो विभाष्यते ।**
**भेद एव विभाषायां नियतो विषयो यतः ॥५८॥**

व्यवस्थितविभाषाविज्ञानादेकार्थीभावप्रक्रमे विकल्पो नास्ति । तस्य व्यपेक्षैक-नियतत्वादित्यन्यपदार्थे वृत्तिमनुभवतामवयवानामन्योन्यसंसर्गस्याविनाभावादेकार्थी-

---

समासान्तोदात्तत्वमेव स्यात् । न चात्र परत्वाद् बहुव्रीहिस्वरः, अवयवस्वरस्यान्तरङ्गत्वात्, 'पूर्वशालाप्रियः' इतिवत् । 'पूर्वशालाप्रियः' इति त्रिपदबहुव्रीहौ हि पूर्वस्मिन् पदद्वये 'तद्धितार्थोत्तरपद-समाहारे च' ( पा० २।१।५१ ) इति सूत्रेण उत्तरपदे परतस्तत्पुरुष इति बहुव्रीहिप्रयुक्तं पूर्वपद-प्रकृतिस्वरं बाधित्वा अन्तरङ्गत्वादन्तोदात्तत्वरूपोऽवयवस्वरः । तस्मादत्रापि प्राप्तस्य अवयव-स्वरस्य निवृत्यर्थम्, 'विशेषणं विशेष्येण बहुलम्', ( पा० २।१।५७ ) इति सूत्रेण प्राप्ताया कर्म-धारयसमाससंज्ञाया च 'सह सुपा' ( पा० २।१।४ ) इति योगविभागात् सामान्येन समाससंज्ञा प्राप्ता सा पूर्वोक्तसूत्रे बहुलग्रहणान्न प्रवर्तते इति अवश्यं वाच्यमिति ॥ ५६-५७ ॥

ननु समासाधिकारे प्रकृतया महाविभाषयैव 'सुसूक्ष्मजटाकेशः' इत्यादौ त्रिपदे बहुव्रीहौ अवयवयोः प्रागुक्ता द्विविधाऽपि समाससंज्ञां न प्रवर्तते इति कस्मान्नोच्यते, बहुलग्रहणात्तदभावः कुतः कथ्यते इत्याशङ्क्याह—समुदायस्य वृत्तौ चेति ।

अस्यार्थः—'सुसूक्ष्मजटाकेशः' इत्यादौ सामुदायस्य पदत्रयरूपस्य वृत्तौ च जातायामेक-देशः = एकदेशे पदद्वयरूपे सामान्याश्रया विशेषविषया या च समासरूपा वृत्तिः, न विभाष्यते—न विभाषया विधिनिषेधोभयरूपया निषिध्यते । यतः भेद एव भिद्यते भेदेन प्रतीतिविषयो भवति पदं पदार्थश्च यत्रासौ भेदो वाक्यम्, तदेव वृत्तिविभाषायां निषेध्यत्वेन नियतो विषयः, एकार्थीभावे समासविधाने हि व्यपेक्षाविषयो वाक्यम्, तत्र विभाषया निषिध्यते, न तु अवयवयोः समासरूपा वृत्तिः, भिन्नविषयत्वादिति ।

अयं भावः—एकार्थीभावे वृत्तिरेव, व्यपेक्षायां वाक्यमेवेत्येवं व्यवस्थितविभाषाज्ञानादे-कार्थीभावप्रक्रमे = एकार्थीभावविषये, विकल्पो नास्ति । समासविकल्पस्य विधिनिषेधोभयरूपस्य निषेधभागो नास्ति । तस्य = समासविकल्पस्य यो निषेधभागस्तस्य व्यपेक्षैकनियतत्वात् = व्यपेक्षाविषयवाक्यमात्रविषयकत्वादिति अन्यपदार्थे वृत्तिं = समासमनुभवतामवयवपदानामन्योऽन्य-

भाव एव न्याय्य इति प्राप्ता समाससंज्ञा बहुलग्रहणेन निवार्यते। यदा हि वृत्तिस्तदा-वयवयोर्वृत्तिरेव। तद्यथा 'पञ्चगवधनः, वाक्त्वचप्रियः' इत्यन्तरा तत्पुरुषो द्वन्द्वश्च प्रवर्तत इति तदाश्रयटच्समासान्तसिद्धिः।

तदेतद् भाष्ये—'द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम्' ( भा० वा० २।१।५१ ) इत्येतद्वार्तिककारवचनसमाधानार्थमुक्तम्—'यदा वृत्तिः, सर्वेषां तदा प्रवृत्तिः' ( म० भा० २।१।५१ ) इति ॥ ५८ ॥

ननु चैकस्मिन् प्रयोगे बहुव्रीहिसंज्ञाया भावोऽवयवे तत्पुरुषसंज्ञायाश्चाभावो विभाषयानया प्रतिपाद्यताम्। अयमेव ह्यस्या मुख्यो विषय इत्यत्राप्रवृत्तावचरितार्थेयं स्यादित्याशङ्क्याह—

**यतश्चाविषयः सोऽस्यास्तस्मान्नास्त्यकृतार्थता।**
**अभेदप्रक्रमेऽत्यन्तं भेदानामपसारणात् ॥५९॥**

---

सम्बन्धस्याविनाभावात् = नियमेन सत्त्वाद्, एकार्थीभाव एव पदत्रय इव पदद्वयेऽपि न्याय्य इति प्राप्ता द्विविधाऽपि समाससंज्ञा बहुलग्रहणेन निवर्त्यते।

यदा हि पदत्रये वृत्तिस्तदा पदद्वयेऽपि तदन्तर्गते वृत्तिरेव। तद्यथा पञ्चगावो धनं यस्येति विग्रहे 'पञ्चगवधनः', वाक् च त्वक् च अनयोः समाहारः वाक्त्वचम् प्रियो यस्येति विग्रहे च वाक्त्वचप्रियः इत्यत्रान्तरा बहुव्रीहेर्मध्ये तत्पुरुषो द्वन्द्वश्च प्रवर्तते इति तन्निमित्तकटज्रूपसमासान्तसिद्धिः। "द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम्" ( भा० पा० २।१।५१ ) इत्यादौ उत्तरपदे परतो जायमानयोर्द्वन्द्वतत्पुरुषयोर्नित्यसमासत्वं वक्तव्यमिति। एतद्वार्तिककारवचनसमाधानार्थं तदेतदुक्तं भाष्ये "यदा वृत्तिः, सर्वेषां तदा प्रवृत्तिः" ( म० भा० २।१।५१ ) इति।

अस्यार्थः—'पञ्चागवधनः', वाक्त्वचप्रियः, इत्यादौ यदा पदत्रये वृत्तिरेकार्थीभावस्तदा सर्वेषां = द्वन्द्वतत्पुरुषसमासान्तटज्बहुव्रीहीणां प्रवृत्तिरिति ॥ ५८ ॥

ननु 'सुसूक्ष्मजटाकेशः' इत्यादौ त्रिपदे बहुव्रीहौ एकस्मिन् प्रयोगे बहुव्रीहिसंज्ञाया भावः, अवयवे च तत्पुरुषसंज्ञाया अभावोऽनया समासविषयया विभाषया प्रतिपाद्यताम्, अयमेव हि = त्रिपदे बहुव्रीहौ अवयवे तत्पुरुषसंज्ञाया अभाव एव हि अस्या विभाषाया मुख्यो विषयः, न तु वाक्यनिषेध इत्यत्राप्रवृत्तावियमचरितार्था स्यादित्याशङ्क्याह—यतश्चाविषय इति।

अस्यार्थः—यतश्चाभेदप्रक्रमे = एकार्थीभावरूपार्थभेदविषये समासविषया व्यवस्थित-विभाषयाऽत्यन्तं भेदानां वाक्यानां व्यपेक्षाविषयाणामपसारणात् सः त्रिपदे बहुव्रीहौ अवयवे तत्पुरुषसंज्ञाया अभावोऽस्याः समासविभाषाया अविषयस्तस्मादस्या विभाषाया अप्रकृतार्थता = अचरितार्थता अनवकाशत्वरूपा नास्तीति।

एकार्थीभावविषये पृथगर्थताभावाद् विविधभाषणरूपाया व्यपेक्षानियताया विभाषाया नास्ति प्रवृत्तिरित्यविषयेऽप्रवृत्तावस्याः कथमचरितार्थत्वम्। अत्यन्तमिति। न केवलं समुदायगतो भेदो नास्ति, यावदवयवगतोऽपि। प्रधानार्थपरवशत्वेन पांसूदकवद् विभागापत्तेरवयवार्थानाम्।

तदेवमत्र प्राप्तः समासो बहुलग्रहणेन निवार्यते अवयवयोरिष्टस्वरसिद्ध्यर्थं। सुसूक्ष्मजटकेशः, सुनताजिनवासा इत्येवमादौ हि बहुव्रीहिस्वर एवेष्यते ॥ ५९ ॥

क्वचित् त्ववयवस्वरेण समुदायस्वरो न भिद्यत इति भवत्येव तत्रावयवयोः समास इत्याह—

**महाकष्टश्रितेत्येवं न स्याद् भेदः पदत्रये।**
**वृत्तावयवयस्यात्त्वं यस्मान्न प्रतिषिध्यते ॥६०॥**

एवमिति। समुदायस्य वृत्तावयवयोरप्येकार्थीभावाभ्युपगमे सति महत् कष्टं

---

अयं भावः—एकार्थीभावविषये पृथगर्थताया अभावाद् व्यपेक्षाया अभावे व्यपेक्षानियतायाः = नियमेन व्यपेक्षाविषयिण्याः विविधभाषणरूपाया विभाषाया नास्ति प्रवृत्तिरिति अविषये अवयवे तत्पुरुषसंज्ञाया अभावबोधनेऽस्या अप्रवृत्तौ कथमचरितार्थत्वम्। विभाषयाऽनया अत्यन्तं पदभेदानां पदार्थभेदानाञ्चापसारणात् न केवलं समुदायगतो भेदो नास्ति, यावदवयवगतोऽपि भेदो नास्ति। अवयवार्थानां समुदायार्थरूपप्रधानार्थपरवशत्वेन पांसूदकवदविभागापत्तेरिति अभेदविषयेनेयं निषेद्धुं प्रवर्तते, किन्तु भेदविषये वाक्य एवेति।

तदेवमत्र सुसूक्ष्मजटाकेश इत्यादौ त्रिपदे बहुव्रीहौ अवयवे प्राप्तः समासो 'अवयवयोरिष्टस्वरसिद्ध्यर्थम्' बहुलग्रहणेन निवर्त्यते। 'सुसूक्ष्मजटाकेशः', सुनताजिनवासा इत्येवमादौ हि बहुव्रीहिस्वर एवेष्यते ॥ ५९ ॥

क्वचित्तु अवयवस्वरेण समुदायस्वरो न भिद्यते इति भवत्येव तत्रावयवयोः समासः, यथा 'महत्कष्टं श्रित' इत्यत्र पदत्रये समासप्रक्रमे न स्वरभेद इत्यत्रावयवसमासोऽवश्यमेव भवति, अन्यथा कष्टशब्दस्य मध्यमपदत्वेनोत्तरपदत्वाभावे महत आत्वं न स्यादिति 'महाकष्टश्रितः' न सिद्ध्येदित्येतत् सर्वं मनसि निधायाह—महाकष्टश्रितेत्येवमिति।

अस्यार्थः—एवं सति पदत्रये वृत्तौ महत्कष्टं श्रिता इत्यत्र स्वरभेदाभावादवयवस्यापि समासाभ्युपगमे महाकष्टश्रिता इत्यत्र रूपं भेदो न स्यात्। अवयवसमासाभावे तु कष्टशब्दस्य मध्यमपदत्वेनोत्तरपदत्वाभावे महत आत्वं न स्यादिति पदत्रयसमासे अवयवसमासाभावे रूपभेदः स्यात्। यस्मात् पदत्रये वृत्तौ क्रियमाणायामवयवस्यापि वृत्तावात्वं महतो न प्रतिषिद्ध्यते, नाभावमनुभवति अतो महाकष्टश्रिता इत्यत्र न रूपभेद एकवृत्त्यभ्युपगमे वृत्तिद्वयाभ्युपगमे वा जायमान इति।

अयं भावः—समुदायस्य वृत्तावयवयोरपि एकार्थीभावाभ्युपगमे सति 'महत्कष्टं श्रितः'

श्रित इति त्रिपदसमासप्रक्रमेऽवयवयोः 'सन्महत्—' (पा० २-१-६१) इति समासे विहिते भवत्यात्त्वमुत्तरपदे विधीयमानम्। त्रिपदे चात्र समासे न स्यादात्त्वमुत्तरपदत्वस्य सर्वान्त्ये लोकविज्ञानान्मध्यपदे तदभावादित्यवयवसमास आश्रयितव्यः। स्वरे त्वत्र भेदो नास्ति। द्विपदे समासे समासान्तोदात्तत्वस्य बाधकस्थाथादिस्वरः, तस्यापि बाधकः 'अहीने द्वितीया' (पा० ६-२-४७) इति पूर्वपदप्रकृतिस्वरः, स एवावयवसमासान्तोदात्तः ॥ ६० ॥

क्वचित् तु स्वरेऽत्र भेद इत्याह—

**महारण्यमतीते तु त्रिपदाद् भिद्यते स्वरः।**
**यस्मात् तत्रान्तरङ्गत्वाद् बाधकोऽवयवस्वरः ॥६१॥**

महदरण्यमतीत इति त्रिपदे द्वितीयातत्पुरुषे समासान्तोदात्तत्वस्य बाधकं

---

इति त्रिपदसमासविषये पूर्वयोरवयवयोः "सन् महत्" (पा० २।१।६१) इति समासे विहिते सति उत्तरपदे परतो विधीयमानं महत आत्वं भवति महाकष्टश्रित इति। त्रिपदे चात्र समासे आत्वं न स्यात्, उत्तरपदत्वस्य सर्वान्त्ये लोकविज्ञानसिद्धत्वात्, कष्टशब्दे च मध्यमपदत्वेन उत्तरपदत्वाभावादिति अत्रावयवसमास आवश्यक आश्रयितव्यः। अत्र तु अवयवसमासेऽभ्युपगम्यमाने स्वरे भेदो नास्ति।

तथाहि—द्विपदे समासे समासान्तोदात्तत्वस्य बाधकः थाथादिस्वरः तस्यापि बाधकः "अहीने द्वितीया" (पा० ६।२।४७) इति पूर्वपदप्रकृतिस्वरः, स एवावयवसमासान्तोदात्तत्वरूप इति नास्ति अत्र द्विपदसमासाभ्युपगमेऽपि स्वरभेद इति ॥ ६० ॥

क्वचित्तु पदत्रये वृत्तिप्रक्रमे पदद्वये तदभ्युपगमेऽस्ति स्वरभेद इति तत्र पदत्रये युगपत्समासो न भवति इत्याह—महाऽरण्यमतीते तु इति।

अस्यार्थः—महारण्यमतीते तु द्विपदतत्पुरुषे महारण्यमतीत इति त्रिपदात् तत्पुरुषात् त्रिपदतत्पुरुषमपेक्ष्य स्वरो भिद्यते। यस्मात् तत्र त्रिपदतत्पुरुषे अवयवस्वरः=द्विपदसमासरूपावयवप्रयुक्तः स्वरोऽन्तरङ्गत्वाद् द्वितीयातत्पुरुषे त्रिपदे समासान्तोदात्तत्वस्य बाधको यः थाथादिस्वरस्तस्य बाधक इति द्विपदे द्वितीयातत्पुरुषे त्रिपदाद् द्वितीयातत्पुरुषात् स्वरे भेदोऽस्ति, तेन युगपत् त्रितयं न तत्र समस्यते इति वक्ष्यते। एव चात्र फलितार्थः—'महारण्यमतीतः' इति द्विपदे द्वितीयातत्पुरुषे सति विशिष्टस्वरस्य बलीयस्त्वात् थाथादिस्वर एव भवति इति महारण्यातीत इति समासोन्तोदात्तः। 'महदरण्यमतीतः' इति त्रिपदे तु समासे 'सह सुपा' (पा० २।१।४।) इत्यत्र संख्याया अविवक्षया क्रियमाणेऽवयवस्वरोऽन्तरङ्गत्वात् थाथादिस्वरं बाधते मध्योदात्तत्वमिति अस्ति स्वरभेद इति न युगपत् पदत्रयस्य समास इति।

अयं भावः—'महदरण्यमतीतः' इति विग्रहे त्रिपदे द्वितीयातत्पुरुषे समासान्तोदात्तत्वस्य

थाथादिस्वरमवयवाश्रयोऽन्तरङ्गः समासान्तोदात्तो बाधेतेत्यत्र त्रिपदाद् द्विपदे तत्पुरुषे भिद्यते स्वरः ॥ ६१ ॥

तथाहि--

**सतिशिष्टबलीयस्त्वात् थाथादिस्वर एव तु ।**
**द्विपदे तेन युगपत् त्रितयं न समस्यते ॥६२॥**

महदरण्यं महारण्यमिति पूर्वं 'सन्महत्--' (पा० २-१-६१) इति समासे पश्चान्महारण्यशब्दस्यातीतशब्देन द्वितीयासमासे सतिशिष्टस्वरबलीयस्त्वात् 'थाथादि--' (पा० ६-२-१४४) स्वरोऽन्तोदात्तो भवति। सत्यवयवान्तोदात्तत्वे शिष्टत्वात् कक्ष्यान्तरप्राप्त्योत्कृष्टबलत्वेन बाधकत्वात्। तदेवमत्र त्रिपदे समासे मध्योदात्तत्वम्, द्विपदे त्वन्तोदात्तत्वमिति भेदः। तथाच सुप् सुपेति संख्याविवक्षायां त्रिपदसमासो न भवति। महाकष्टश्रिते तु स्वरभेदाभावात् सत्यपि त्रिपदे समासे नास्ति कश्चिद् दोषः ॥ ६२ ॥

---

अपवादत्वाद् बाधकं थाथादिस्वरं द्विपदसमासरूपावयवाश्रयोऽन्तरङ्गः समासान्तोदात्तत्वरूपस्वरः बाधते, इत्येवं त्रिपदाद् द्विपदे तत्पुरुषे स्वरो भिद्यते इति ॥ ६१ ॥

तथा हि=तदेव दर्शयति—सति शिष्टबलीयस्त्वादिति ।

अस्यार्थः—महदरण्यं महारण्यमिति पूर्वं "सन्महत्" (पा० २।१।६१) इति सूत्रेण समासे पश्चान्महारण्यशब्दस्य अतीतशब्देन द्वितीयासमासे सति शिष्टस्वरस्य बलीयस्त्वात् द्विपदे तु समासे थाथादिस्वर एव भवति इति समासान्तोदात्तत्वम्। त्रिपदे तु समासे मध्योदात्तत्वम्, अवयवस्वरस्यान्तरङ्गत्वेन थाथादिस्वरबाधकत्वात् तेन स्वरभेदेन हेतुना 'सुप्सुपा' इत्यत्र संख्याया अविवक्षया त्रितयं न समस्यते, किन्तु 'महारण्यातीतः' इत्यत्र द्विपदसमास एव। किञ्चात्र त्रिपदसमासे महत आत्वानुपपत्तिरूपः प्रागुक्तो दोषोऽपि न विस्मर्तव्य इति ।

अयं भावः—महदरण्यं महारण्यमिति पूर्वं 'सन्महत्' (पा० २।१।६१) इति समासे पश्चान्महारण्यशब्दस्यातीत शब्देन द्वितीयासमासे सति शिष्टस्वरस्य बलीयस्त्वात् थाथादिस्वरोऽन्तोदात्तो भवति। सति अवयवसमासान्तोदात्तत्वे शिष्टत्वात्, कक्ष्यान्तरप्राप्त्या=कोट्यन्तरप्राप्त्या उत्कृष्टबलत्वेन बाधकत्वात्। तदेवमत्र 'सुप् सुपा' इत्यत्र संख्याया अविवक्षया त्रिपदे समासेऽवयवसमासस्वरस्यान्तरङ्गत्वेन थाथादिस्वरबाधकत्वान्मध्योदात्तत्वम्, अत्रैव प्रागुक्तरीत्या द्विपदे तु समासे थाथादिस्वरस्य सति शिष्टत्वाद् बलीयस्त्वेनान्तोदात्तत्वमिति स्वरे भेदः।

तथा च 'सुप् सुपा' इत्यत्रैकत्वसंख्याया विवक्षया त्रिपदसमासो न भवति। महाकष्टश्रिते तु सत्यपि त्रिपदे समासे 'अहीने द्वितीया' (पा० ६।२।४७) इति पूर्वपदप्रकृतिस्वरस्य थाथादिस्वरबाधकत्वेन स्वरभेदाभावात् नास्ति कश्चित् स्वरदोषः। त्रिपदे समासे महत आत्वानुपपत्तिरूपो दोषस्तु वर्तत एवानुद्धर इति ॥ ६२ ॥

ननु च श्रितार्थे समन्वयात् परस्परसंसर्गाभावे महत्कष्टशब्दयोः कथं समासः। तथाचोत्तरपदे विधीयमानमात्वं न स्यादित्यत आह—

येषामपूज्यमानत्वं परार्थानुगमार्थके।
विशेषणविशेष्यत्वमपि तेषां न कल्पते ॥६३॥

कष्टार्थस्य श्रितार्थानुगमे महता सम्बन्धाभावात् पूज्यमानत्वं नास्तीति वदतामवयवानां विशेषणविशेष्यभावोऽपि न स्यादसम्बन्धात्। तथाच पञ्चगवधन इत्यादाववयवयोः समासाभावात् समासान्तोदात्तत्वं न स्यात्। पूर्वशालाप्रिय इत्यादौ चावयवाश्रयोऽन्तरङ्गस्वरो न स्यात्। स च सिद्धान्तितः—'नवावयवतत्पुरुषत्वात्, तस्यान्तोदात्तत्वं विप्रतिषेधादि'ति। 'खादिरेतरशम्यः' इत्यत्र चावयवसमासाश्रयः पुंवद्भावः। प्रधानानुग्रहाय चावयवाः परस्परेण सम्बध्यन्त एव। सगुणस्य हि द्रव्यस्य क्रिया-

---

ननु च 'महत् कष्टं श्रितः' इत्यत्र महत्कष्टशब्दयोरुभयोः श्रितार्थे समन्वयात् परस्परसंसर्गाभावे महत्कष्टशब्दयोः कथं समासः, तथा-चोत्तरपदे परतो विधीयमानं महत आत्वं न स्यात्, कष्टशब्दस्य तदानीं मध्यपदत्वात् इत्यत आह—येषामपूज्यमानत्वमिति।

अस्यार्थः—येषां वादिनां मते 'महत् कष्टं श्रितः' इत्यत्र त्रिपदसमासप्रक्रमे महत् कष्टपदार्थयोर्द्वयोरपि श्रितपदार्थेऽन्वये परस्परं संबन्धाभावे परार्थानुगतार्थके = परस्मिन्नार्थे श्रितपदार्थेऽनुगतार्थरूपे कष्टपदार्थे महता सम्बन्धाभावेनापूज्यमानत्वमिति 'सन् महत्' (पा०२।१।६१) इति समासाभावः, तेषां वादिनां मते महत्कष्टपदार्थयोः परस्परं सम्बन्धाभावेन विशेषणविशेष्यत्वमपि न कल्पते।

तथा च तद्वदेव 'पञ्चगवधनः' इत्यादावत्रयवयोः समासाभावात् समासान्तष्टच् न स्यात्।

अयं भावः—महत्पदार्थस्य कष्टार्थस्य च युगपत् साक्षात् श्रितार्थानुगमे कष्टार्थस्य महता सह सम्बन्धाभावात् कष्टार्थस्य पूज्यमानत्वं नास्ति इति न 'सन् महत्' (पा०२।१।६१) इति समास इति वदतां वादिनां मतेऽत्र = त्रिपदसमासे अवयवानां विशेषणविशेष्यभावोऽपि न स्यात्, परस्परमसंबन्धात्।

तथा चात्रैव 'पञ्चगवधनः' इत्यादावत्रयवयोः समासाभावात् समासान्तष्टज् न स्यात्, पूर्वा-शाला प्रिया यस्येति विग्रहे 'पूर्वशालाप्रियः' इत्यादौ चावयवाश्रयः = अवयवसमासाश्रयः अन्तरङ्गस्वरः समासान्तोदात्तत्वरूपो न स्यात्। स च = 'पूर्वशालाप्रियः' इत्यादौ अवयवसमासाश्रयोऽन्तरङ्गस्वरः सिद्धान्तितो भाष्ये "न वाऽवयवतत्पुरुषत्वात् तस्यान्तोदात्तत्वं विप्रतिषेधात्" इति।

अस्यार्थः—'पूर्वशालाप्रियः' इत्यत्र बहुव्रीहौ पूर्वपदप्रकृतिस्वरापत्तिरूपो दोषो न वा = नैव, यतस्तत्र अवयवस्य 'पूर्वशाला' इत्यस्य "तद्धितार्थोत्तरपदसमाहारे च" (पा०२।१।५१) इति तत्पुरुषत्वात् तस्य 'पूर्वशाला' इत्यस्यान्तोदात्तत्वं पूर्वपदप्रकृतिस्वरापेक्षया विप्रतिषेधादिति। खादिरी इतरा शम्या यस्य इति विग्रहे 'खादिरेतरशम्यः' इति समासे चावयवसमासः कर्मधारयाश्रयः पुंवद्भावः सिद्धः। शमः क्षेत्रस्य प्रमाणविशेषः तस्मै हिता खादिरी दारुविकृतिः शम्या।

यद्यपि चावयवाः प्रधाने संसृज्यमानाः परस्परं निराकाङ्क्षा एव संभाव्यन्ते, तथापि ते प्रधानानुग्रहाय परस्परेणापि सम्बध्यन्त एव। अन्यथा प्रधानानुग्रहणेऽसामर्थ्यात्। सगुणस्यैव

समन्वयः। श्रौतेऽपि समन्वये द्रव्याश्रयत्वात् तद्विशेषणद्वारेणैव क्रियायोगाद् गुणस्य।

तस्मादस्त्येव समुदायप्रक्रमेऽप्यवयवयोः परस्परसमन्वय इति महाकष्टश्रिते रूपस्वरविशेषाभावादभ्युपगम्यापि त्रिपदः समास उक्तः।

सुप् सुपेति संख्याविशेषविवक्षैव तु सिद्धान्त इति त्रिपदो द्वितीयासमासो नास्ति। तथाच 'महारण्यातीतः' इत्यत्र द्विपदे समासे सिध्यतीष्टस्वरः। बहुव्रीहौ द्वन्द्वे चानेकग्रहणादविशेषेण समासः सिद्धान्तितः। तत्र च दिक्संख्यापूर्व एवावयवतत्पुरुषः 'तद्धितार्थोत्तरपद—'(पा०२-१-५१) इत्युत्तरपदे विहितो भवति। तथाच तत्रैव तदाश्रयोऽन्तरङ्गस्वरः। सुसूक्ष्मजटकेशादौ तु बहुलग्रहणादवयवयोर्विशेषणसमासाभावः। समुदायपारतन्त्र्ये चावयवानां पृथक् स्वकार्यप्रयोजकत्वात् समुदायसमासेनैवैकपद्यस्य सिद्धत्वात्। तद्यथा समुदायद्विर्वचने त्ववयवद्विर्वचनं न भवति पपाचेति।

'पूर्वशालाप्रियः' इत्यादौ तु उत्तरपदे स्वरसमासान्तसिद्ध्यर्थं द्विगुर्वाचनिको

---

हि द्रव्यस्य क्रियायां समन्वयो न निर्गुणस्येत्येवं गुणैर्द्रव्यस्यानुग्रहः क्रियासमन्वयसंपत्तियोग्यता प्रापणरूपः। गुणानां परस्परं श्रौतेऽपि समन्वयेऽभ्युपगम्यमाने तेषां द्रव्याश्रयत्वाद्=द्रव्याश्रितत्वाद् द्रव्यविशेषणद्वारेणैव गुणानां क्रियायोगाद् द्रव्यपारतन्त्र्यं द्रव्यानुग्राहकत्वञ्च गुणानाम्। तस्मादस्त्येव समुदायप्रक्रमेऽपि=त्रिपदसमासोपक्रमेऽपि अवयवयोः परस्परसमन्वय इति महाकष्टश्रिते द्विपदसमासे त्रिपदसमासे वा रूपभेदाभावात् स्वरभेदाभावाच्च 'सुप्सुपा' इत्यत्र संख्याया विवक्षयाऽनुपपद्यमानोऽपि त्रिपदः समासोऽभ्युपगम्योक्तः। 'पशुना यजेत' इत्यादिविधौ संख्याविशेषविवक्षाया दृष्टत्वेन 'सुप् सुपा' इत्यत्र संख्याविशेषविवक्षैव तु सिद्धान्त इति त्रिपदो द्वितीयासमासो नास्ति।

तथा च 'महारण्यातीतः' इत्यत्र द्विपदे समासे इष्टस्वरः=थाथादिस्वरः सिध्यति। बहुव्रीहौ द्वन्द्वे च सूत्रेऽनेकग्रहणादविशेषेण=सामान्येन त्रिपदो द्विपदश्च समासः सिद्धान्तितः। तत्र च 'पूर्वशालाप्रियः' इत्यादौ दिक्संख्यापूर्व एवावयवतत्पुरुषः "तद्धितार्थोत्तरपदसमाहारे च"(पा०२।१।५१) इत्युत्तरपदे परतो विहितो भवति।

तथा च तत्रैव=दिक्संख्यापूर्वेऽवयवतत्पुरुष एव तदाश्रयोऽन्तरङ्गस्वरः। सुसूक्ष्मजटकेशादौ तु "विशेषणं विशेष्येण बहुलम्" (पा० २।१।५७) इत्यत्र बहुलग्रहणादवयवयोर्विशेषणसमासाभाव इति सुसूक्ष्माजटा येषां तादृशाः केशा यस्येति बहुव्रीहिगर्भबहुव्रीहिर्द्विपद इति 'सुसूक्ष्मजटकेशः' इति भवति। सुसूक्ष्मा जटारूपाः केशा यस्येति त्रिपदे बहुव्रीहौ तु 'सुसूक्ष्मजटाकेशः' इति भवति। जटाशब्दस्य नित्यस्त्रीत्वेन पुंवद्भावाभावात्। अवयवानाञ्च समुदायपारतन्त्र्येण पृथक् स्वकार्याप्रयोजकत्वात्, समुदायसमासेनैवैकपद्यस्य सिद्धत्वात्, न भिन्नपदत्वं भिन्नस्वरत्वं वा।

तद्यथा समुदायद्विर्वचने तु अवयवद्विर्वचनं न भवति, पपाचेति। 'पूर्वशालाप्रियः', 'पञ्चगवधनः' इत्यादौ तु उत्तरपदे स्वरसिद्ध्यर्थं समासान्तसिद्ध्यर्थञ्च द्विगुसमासो वाचनिको

भवति। 'खादिरेतरशम्यः' इति इतरा शम्या इतरशम्येति पूर्वं विशेषणसमासे कृते खादिरी इतरशम्या यस्येति द्विपदो बहुव्रीहिरित्युत्तरपदे पुंवद्भावः सिध्यतीति सर्वेष्ट-सिद्धिः ॥ ६३ ॥

प्रस्तुतमेव वृत्तिवाक्ययोर्वैधर्म्यं विचारान्तरार्थं प्रतिपादयति—

**विशेषः श्रूयमाणोऽपि प्रधानेषु गुणेषु वा।**
**शब्दान्तरत्वाद् वाक्ये तु वृत्तौ नित्यं न विद्यते ॥६४॥**

ऋद्धस्य राज्ञः पुरुष इति वाक्ये गुणस्य राज्ञो विशेषः श्रूयते समृद्धतालक्षणः। वृत्तौ तु 'राजपुरुषः' इत्यत्र ऋद्धस्येति विशेषणं राज्ञो नास्ति, प्रधानार्थसंभिन्नस्य स्वविशेषणायोगात्। एतच्च वृत्तिवाक्ययोः शब्दान्तरत्वे सत्युपपद्यते। वाक्यप्रकृतौ तु वृत्तौ वाक्यगतधर्मानुषङ्गः।

एवं चित्रा गावो यस्य देवदत्तस्येति प्रधानस्यान्यपदार्थस्य देवदत्तादिविशेषो वाक्ये श्रुतेऽपि विवक्षितोऽपि वृत्तौ चित्रगुरित्यत्र नान्तर्भवतीति पदार्थाभिधानादनु-

---

भवति। 'खादिरेतरशम्यः' इत्यत्र तु इतरा शम्या इतरशम्या इति पूर्वं विशेषणसमासे कृते खादिरी-तरशम्या यस्येति द्विपदो बहुव्रीहिरित्युत्तरपदे पुंवद्भावः सिध्यतीति सर्वेष्टसिद्धिरिति ॥ ६३ ॥

प्रस्तुतमेव वृत्तिवाक्ययोर्वैधर्म्यं विचारान्तरमवतारयितुं प्रतिपादयति—विशेषः श्रूय-माणोऽपीति।

अस्यार्थः—वाक्ये तु प्रधानेषु गुणेषु वा श्रूयमाणोऽपि विशेषो वृत्तौ नित्यं न विद्यते, वृत्तेर्वाक्यापेक्षया शब्दान्तरत्वात्। तद् यथा चित्रा गावो यस्य देवदत्तस्य चित्रगुर्देवदत्तः। अत्र वाक्ये यद्यप्यन्यपदार्थस्य प्रधानस्य सामान्यस्य विशेषो देवदत्तः श्रूयते, तथापि स वृत्तौ नान्तर्भवति, वृत्तेर्वाक्यापेक्षया शब्दान्तरत्वादिति वृत्तौ देवदत्तादिरूपो विशेषोऽनुप्रयुज्यते, वृत्त्या तदनभिधानात्। एवं ऋद्धस्य राज्ञः पुरुष इति वाक्ये पुरुषे गुणस्य राज्ञः ऋद्धत्वरूपो विशेषः श्रूयमाणोऽपि वृत्तौ नान्तर्भवति, अनुप्रयोगोऽपि च तस्य न भवति "सविशेषणानां वृत्तिर्न, वृत्तस्य च विशेषणयोगो न" इति वचनेन निषेधात्।

अयं भावः—ऋद्धस्य राज्ञः पुरुष इति वाक्ये पुरुषे गुणस्य राज्ञो विशेषऋद्धत्वरूपः श्रूयते। राजपुरुष इति वृत्तौ तु ऋद्धस्येति राज्ञो विशेषणं न भवति, प्रधानार्थसंभिन्नस्य = प्रधानार्थेन पुरुषेण सहैकार्थीभावापन्नस्य राज्ञः स्वविशेषणेन ऋद्धत्वादिना सह संबन्धासंभवात्। भेदेनोपस्थितौ हि वाक्ये विशेषणे विशेषणसम्बन्धो दृश्यते, 'ऋद्धस्य राज्ञः पुरुषः' इति। तदुक्तं "नहि उपाधेरुपाधिर्भवति विशेषणस्य च विशेषणमिति"। एतच्च = वृत्तौ गुणे विशेषणा-सम्बन्धरूपं वस्तु वृत्तिवाक्ययोः शब्दान्तरत्वे सत्युपपद्यते। वाक्यप्रकृतौ = बहुव्रीहिणा वाक्यविकृतौ तु वृत्तौ अभ्युपगतायां सत्यां प्रकृतिभूतवाक्यगतधर्मस्य विशेषणे विशेषणयोगादेः प्रसङ्गः। एवं चित्रा गावो यस्य देवदत्तस्येति विग्रहवाक्ये उद्देश्यत्वेन प्रधानस्यान्यपदर्थस्य देवदत्तादिरूपो विशेषोऽत्र श्रुतोऽपि = वृत्तौ विवक्षितोऽपि चित्रगुरिति वृत्तौ नान्तर्भवतीति।

प्रयोगानुपपत्तौ चोदितायां, 'न वा अनभिहितत्वात्' (भा० वा० २।२।१९) इति त्यनुप्रयोगः समर्थितः। अन्यपदार्थसामान्यं ह्यन्तर्भवति, न तु तद्विशेषः ॥ ६४ ॥

ननु च वृत्तौ गुणस्य स्वविशेषणेनासम्बन्धात् कृतपूर्वी कटमित्यत्र कृतेन कटस्य सामानाधिकरण्याभावादसति क्रियासम्बन्धे कर्मता न स्यादित्याशङ्क्याह—

**विशेषकर्मसम्बन्धे निर्मुक्तेऽपि कृतादिभिः।**
**विशेषनिरपेक्षोऽन्यः कृतशब्दः प्रवर्तते ॥६५॥**

कृतः पूर्वं कटोऽनेन, भुक्तः पूर्वमोदनोऽनेनेति वाक्ये कटादीनां विशिष्टेन कर्मणा समन्वय इति निष्ठया तस्य विशिष्टस्य कर्मणो निर्मुक्तत्वादभिहितत्वाद् द्वितीया न भवति। वृत्तौ तु कृतपूर्वी कटमित्यत्र कृतार्थस्य प्रधानार्थानुगामित्वादसति स्वातन्त्र्ये स्वकर्मणा कटादिना सामानाधिकरण्यं न स्यात् ॥ ६५ ॥

---

अत एव चित्रगुरिति वृत्या अन्यपदार्थविशेषस्य देवदत्तस्याभिधानात् चित्रगुर्देवदत्त इत्यनुप्रयोगानुपपत्तौ चोदितायां "न वाऽनभिहितत्वात्" (भा० वा० २।२।२९) इत्यनुप्रयोगः समर्थितः। अन्यपदार्थसामान्यं हि वृत्तौ अन्तर्भवति, 'अनेकमन्यपदार्थे' ( पा० वा० २।२।२९ ) इति वृत्तिविधायकवचनात् तु न तद्विशेषो देवदत्तादिर्वृत्तावन्तर्भवति, मानाभावाद् भानाभावाच्चेति ॥ ६४ ॥

ननु च वृत्तौ गुणस्य स्वविशेषणेनासंवन्धात् 'कृतपूर्वी कटम्' इत्यत्र कृतेन कटस्य सामान्याधिकरण्याभावादसति क्रियासंवन्धे तस्य कर्मता न स्यात्, किञ्च कृतशब्दस्य क्रियावाचकस्य नित्यं कर्मसापेक्षत्वेन स्वविशेषणकटसंवन्धसंभवेऽपि कृता कर्मत्वस्याभिहितत्वेन कटे द्वितीया न स्यादित्याशङ्क्याह = विशेषधर्मसम्वन्धे इति।

अस्यार्थः—कृतः पूर्वं कटो ऽनेन इति वाक्ये कटरूपविशेषकर्मसंवन्धे कृतादिभिर्निर्मुक्तेऽपि अभिहितेऽपि वृत्तिवाक्ययोः शब्दान्तरत्वाद् वृत्तौ 'कृतपूर्वी कटम्' इत्यत्र कर्मविशेषस्य कटादेर्वृत्तिबाह्येन पदेनाभिधानसंभवाद् नान्तरीयकत्वादविवक्षितं सामान्यकर्मैव वृत्तावत्र प्रतीयत इति कर्मविशेषनिरपेक्षोऽविवक्षितकर्मकत्वादकर्मको वाक्यस्थात् कृतशब्दादन्यः क्रियासामान्याभिधायी अकर्मकत्वाद् भावे क्तान्तः कृतशब्दः प्रधानार्थानुगामित्वात् पूर्वं वृत्तौ कर्त्रा संबध्यमानः प्रवर्तते, पश्चात्तु वृत्तिबाह्येन कटादिना कर्मविशेषेण संबध्यते इत्येवं कृतशब्दस्य क्रियारूप-सनिरूपकार्थवाचकत्वेन वृत्तावपि स्वविशेषणेन वृत्तिबाह्येन कटरूपेण कर्मविशेषणसंबन्धः, भावक्तान्तत्वेन च कृता कर्मणोऽनभिधानात् कटपदे द्वितीया चोपपद्यत इति।

अयं भावः—'कृतः पूर्वं कटोऽनेन, भुक्तः पूर्वमोदनोऽनेन' इति वाक्ये कृतादीनां विशिष्टेन कर्मणा = कर्मविशेषेण कटौदनादिना संबन्ध इति निष्ठया तस्य कर्मविशेषस्य निर्मुक्तत्वादभिहितत्वाद् द्वितीया तत्र न भवति। वृत्तौ तु 'कृतपूर्वी कटम्' इत्यत्र कृतपदार्थस्य प्रधानार्थानुगामित्वात् = कर्तृविशेषणत्वात् असति अन्यत्रान्वेतुं स्वातन्त्र्ये स्वकर्मणा वृत्तिबाह्येन कटादिना सामानाधिकरण्यं न स्यादिति कृतशब्दस्य प्रागुक्तरीत्याऽविवक्षिकर्मकत्वेनाकर्मकत्वं च स्वीकृत्य पश्चात् क्रियारूप-सनिरूपकार्थवाचकत्वेन वृत्तिबाह्येन कटादिना कर्मणा संवन्धः, कटपदस्य द्वितीयान्तत्वाच्चोपपद्यमानमभ्युपेयत इति ॥ ६५ ॥

तस्मादन्य एव वाक्यस्थात् सकर्मकात् कृतशब्दात् वृत्तौ कृतशब्दोऽयमकर्मक इति बाह्येन कर्मणा कटादिना सम्बध्यत इत्याह—

**अकर्मकत्वे सत्येवं क्तान्तं भावाभिधायि यत् ।**
**ततः क्रियावता कर्त्रा योगो भवति कर्मणाम् ॥६६॥**

वृत्तिवाक्ययोरत्यन्तभेदाद् वाक्ये विशिष्टकर्मसमन्वययोग्योऽपि कृतशब्दो वृत्तौ विशेषस्याभिधानसम्भवात् सामान्यकर्मैव प्रतीयते। तच्च नान्तरीयकत्वाद-विवक्षितमित्यकर्मकोऽयं कृतशब्दो भावाभिधायी सम्पद्यते। प्रसिद्धं हि नान्तरीयकं सामान्यकर्मेति। यथा दीक्षितो न ददातीति प्रसिद्धेरकर्मिका क्रिया, तथेयमपीति भावेऽत्र निष्ठा कथ्यते। तथाच क्रिययावच्छिन्नः तद्धितवाच्यः कर्ता 'कृतपूर्वी देवदत्तः' इति। तस्य च बाह्येन कटादिना सम्बन्धो दृश्यते, कटमिति।

---

तस्मात् = 'कृतपूर्वीकटम्' इत्यत्र वृत्तिबाह्ये कटपदे द्वितीयान्तत्वस्य कृतपदसंबन्धस्य चानु-पपद्यमानत्वात् वक्यस्थात् सकर्मकात् कृतशब्दादन्य एव वृत्तौ प्रागुक्तरीत्या अकर्मकोऽयं कृतशब्द इति वृत्तिबाह्येन कटादिना कर्मणा संबध्यते इत्याह—अकर्मकत्वे सत्येवमिति।

अस्यार्थः—एवम् = कर्मणोऽविवक्षया कृतशब्दस्याकर्मकत्वे सति तत् क्तान्तम् 'कृतपूर्वी' इत्यत्र वृत्तिगतं क्तान्तं भावाभिधायि, ततः = भावाभिधायित्वात् क्रियायाः कर्तर्यन्वये क्रियावता कर्त्रा सह कर्मणां कटादीनां योगो भवति।

तथा च 'कृतपूर्वीकटम्' इत्यतः कटकर्मकः पूर्वकालिक क्रिया कर्ता इति बोधः। तत्र क्रियाविशिष्टे कर्तरि द्रव्यरूपे कटनिष्ठकर्मता निरूपकत्वासंभवाद् विशेषणीभूतायां क्रियायां तत्पर्य-वसानमिति।

अयं भावः—पूर्वोक्तरीत्या वृत्तिवाक्ययोरत्यन्तभेदाद् वाक्ये विशिष्टकर्म समन्वय-योग्योऽपि = कर्मविशेषसंबन्धयोग्योऽपि कृतशब्दो वृत्तौ कर्मविशेषस्य पदान्तरेण वृत्तिबाह्येनाभि-धानसंभवात् सामान्यकर्मक एव प्रतीयते।

तच्च = सामान्यं कर्म नान्तरीयकत्वाद् = क्रियायामवश्यस्थितिकत्वाविवक्षितमित्यकर्म-कोऽयं वृत्तिघटकः कृतशब्दो भावाभिधायी संपद्यते। प्रसिद्धं हि नान्तरीयकञ्च सामान्यं कर्म इत्यविवक्षितमत्र।

यथा 'दीक्षितो न ददाति' इत्यत्र दानकर्मणो गोभूमिहिरण्यादेः प्रसिद्धेरकर्मिकात्रा-दानक्रिया, तथेयमपि कृतप्रकृत्याऽभिधेया क्रिया इति वृत्तिघटके कृतशब्दे भावे निष्ठा कथ्यते।

तथा च क्रिययाऽविच्छिन्नः=क्रियाविशिष्टः तद्धितवाच्यः कर्ता 'कृतपूर्वी देवदत्तः' इति। तस्य च = क्रियाविशिष्टस्य तद्धितवाच्यस्य कर्तुः वृत्तिबाह्येन कटादिना सम्बन्धो दृश्यते कटमिति।

कारकाणां च क्रियाव्यपेतः सम्बन्ध इत्यन्यस्या अत्र क्रियाया अभावात् तद्धितार्थविशेषणभूतयैव क्रियया सम्बन्धो युक्त इति तदपेक्षमेव कटादेः कर्मत्वम् कृतपूर्वी कटम्, भुक्तपूर्वी ओदनमित्यादि। भावेऽत्र निष्ठेति क्रियैव तदन्तवाच्या।

तदेतदुक्तं भाष्ये—"योऽसौ कृतकटयोरभिसम्बन्धः, स उत्पन्ने प्रत्यये निवर्तते। अस्ति च करोतेः कटेन सामर्थ्यमिति द्वितीया भविष्यती"ति। वाक्यो यो विशिष्टेन कटादिना कृतस्याभिसम्बन्धः, स उत्पन्ने तद्धिते वृत्तौ निवर्तते। शब्दशक्तिस्वाभाव्याद् विशेषाभिधानं नास्ति वृत्तौ, सामान्यकर्मणैव सम्बन्धप्रतीतेः। तथाच प्रसिद्धेः कर्मणोऽकर्मिकेयं क्रियेति भावाभिधायी क्त इति तत्रत्यया क्रियया व्याप्यमानं कटादि कर्म भवतीति समन्वयोपपत्तिरित्यर्थः॥ ६६॥

ननु च तद्धितार्थे कर्तरि गुणीभूता क्रिया वृत्तावभेदेन प्रतीयते, न तु कर्तुर्भेदेन स्वरूपप्राधान्येनेति कथं तया कटादेः कर्मणो योग इत्याशङ्क्य निदर्शनेनैतद् व्युत्पादयति—

---

कारकाणाञ्च क्रियाव्यपेतः = क्रियाव्यवहितः-क्रियाद्वारकः परस्परं सम्बन्ध इति अन्यस्याः क्रियाया अत्राभावात् तद्धितार्थकर्तृविशेषणीभूतयैव क्रियया वृत्तिबाह्यपदाभिधेयस्य कटादेः कर्मणः सम्बन्धो युक्त इति तदपेक्षमेव=वृत्तिघटककृतशब्द वाच्य क्रियापेक्षमेव कटादेः कर्मत्वम्। 'कृतपूर्वी कटम्, भुक्तपूर्वी ओदनम्' इत्यादि।

अत्र भावे निष्ठेति क्रियैव क्तान्तवाच्या। तदेतदुक्तं भाष्ये—"योऽसौ कृतकटयोरभिसंवन्धः, स उत्पन्ने प्रत्यये निवर्तते। अस्ति च करोतेः कटेन सामर्थ्यमिति द्वितीया भविष्यति" इति।

अस्यार्थः—वाक्ये यो विशिष्टेन कटादिना कर्मणा=कर्मविशेषेण कटादिना कृतशब्दस्याभिसम्बन्धः स उत्पन्ने तद्धिते वृत्तौ निवर्तते। शब्दशक्तिस्वाभाव्यात् कर्मविशेषाभिधानं वृत्तौ नास्ति, सामान्यकर्मणैव सह कृतशब्दस्य तत्र सम्वन्धप्रतीतेः।

एवमपि चास्ति कृतशब्दाभिधेयस्य करोतेः=कृधात्वर्थक्रियायाः वृत्तिबाह्येन कटादिना कर्मणा सह सामर्थ्यं प्रागुक्तरीत्या इति तत्र द्वितीया भविष्यति।

तथा च सामान्यकर्मणो नान्तरीयकत्वेन प्रसिद्धेरकर्मिकेयं वृत्तिघटककृतशब्दाभिधेया क्रिया इति तत्र भावाभिधायी क्त इति तत्रत्यया=वृत्तिघटककृतपदवाच्यया क्रियया व्याप्यमानं=संवध्यमानं वृत्तिबाह्यं कटादिकर्म भवति इति रीत्या वृत्तिबाह्यस्यापि कटादेर्वृत्तिघटकभावाभिधायिकृतशब्दाभिधेयक्रियायां समन्वयस्य=संबन्धस्य उपपत्तिरिति॥ ६६॥

ननु 'कृतपूर्वीकटम्' इत्यादौ तद्धितार्थे कर्तरि गुणीभूता भावक्तान्तकृतशब्दाभिधेया क्रिया वृत्तौ कर्तुरभेदेन प्रतीयते, न तु तदभेदेन स्वरूपप्राधान्येनेति कथं तया तथाभूतया सह कटादेः कर्मणो योग इत्यशङ्क्य निदर्शनेन=दृष्टान्तेन एतद् भेदेनाप्रतीयमानाया अपि क्रियायाः कर्मणा सम्बन्ध इत्येतद् वस्तु व्युत्पादयति—अविग्रहा इति।

**अविग्रहा गतादिस्था यथा ग्रामादिकर्मभिः।**
**सम्बध्यते क्रिया तद्वत् कृतपूर्व्यादिषु स्थिता ॥६७॥**

ग्रामं गतो देवदत्तो, ग्रामं गच्छति चेत्यादौ गतादिशब्देन गमिक्रियाकर्तुर-भिधानाद् गमिक्रियायास्ततः कर्तुर्विविधं पृथक्त्वेन ग्रहणं नास्तीत्यविग्रहा सा। प्रत्ययार्थे हि सर्वत्र गुणभूतः प्रकृत्यर्थः, व्यापाराविष्टस्य साधनस्याख्यातात् प्रतीतेः कारकमुखेनैव क्रिया प्राधान्यं भजते, न तु स्वतः, सर्वत्र प्रकृत्यर्थस्य गुणत्वात्। एवञ्च क्रिया सर्वत्र कारकाद् भेदेन नावगृह्यते। कारकाणां हि प्रवृत्तिविशेषरूपासौ तत्समवेतैव तदभिधायिप्रत्ययानुगतप्रकृतिवाच्या न्याय्या। न च केवलस्य क्रिया-

---

अस्यार्थः – अविग्रहा = न कर्तृग्रहणात्। विभक्तौ विभिन्नो ग्रहो ग्रहणं यस्याः सा अविग्रहा। कर्त्रा सहैव तद्विशेषणतया गृह्यमाणा इति यावत्। यत्तुः अविग्रहा = न विविधं ग्रहो ग्रहणं यस्या इति हेलाराजो व्याख्यानमभिप्रैति, तत्तु फलितार्थपरम्, न तु विग्रहः।

तत्र हि विविधमिति द्वितीयान्तं ग्रहणक्रियाविशेषणं कर्मपदम्। ग्रह इति प्रथमान्तमिति—'अनेकमन्यपदार्थे' (पा० २।२।२४) इत्यस्याप्रवृत्तेः। यत्तु नवीनाः—न विविच्य ग्रहो ग्रहणं यस्या इति तदपि फलितार्थकथनपरमेव।

अत्राप्यनेकप्रथमान्तपदानां सामानाधिकरण्याभावेन बहुव्रीह्यसंभवात्। गतादिस्था = गतादिपदार्थेषु कर्तृविशेषणतया स्थिता गम्यादिक्रिया कर्तुरपृथग्भूतत्वेन प्रतीयमानाऽपि यथा ग्रामादिकर्मभिः संबध्यते, क्रियायाः कारकादपृथग्भावेन प्रतीतेः स्वभावसिद्धत्वात्। तद्वत् कृत-पूर्व्यादिषु कर्तृविशेषणतया स्थिता क्रियाऽपि कटादिकर्मभिः संबध्यते।

अत्रापि तादृशः स्वभाव एव प्रयोजको हेतुरिति।

अयं भावः—'ग्रामं गतो देवदत्तः' इत्यादौ गतादिशब्देन गमिक्रियाकर्तुरभिधानाद् गमि-क्रियायास्ततः = तस्मात् कर्तुर्विविधं पृथक्त्वेन ग्रहणं नास्तीति अविग्रहा सा इति हेलाराजः।

अत्र यद् वक्तव्यं तत् प्रागुक्तम्। यत्तु गतादिस्था इत्यादि पदेन 'ग्रामं गच्छति' इति निदर्शितं हेलाराजेन तन्न सम्यक् प्रतिभाति।

'भावप्रधानमाख्यातम्, सत्त्वप्रधानानि नामानि' इति यास्कवचनमनुसृत्य वैयाकरणनये व्यापारमुख्यविशेष्यकबोधस्यैवाभ्युपगमात्। क्रियायाः कर्तृविशेषणत्वाभावेन दृष्टान्तदार्ष्टान्तिकयोर्वै-धर्म्यात्।

यत्तु अग्रेऽप्युक्तं तेन—"प्रत्ययार्थे हि सर्वत्र गुणभूतः प्रकृत्यर्थः। व्यापाराविशिष्टस्य साधनस्याख्यातात् प्रतीतेः कारकमुखेनैव क्रियाप्राधान्यं भजते, न तु स्वतः, सर्वत्र प्रकृत्यर्थस्य गुणत्वात्" इति।

एतत् सर्वं वैयाकरणनयविपरीतम्। उदाहृतयास्कवचनविरुद्धञ्च। तदलं प्रसक्तानुप्रस-क्त्या, प्रकृतमनुसरामः।

एवञ्च क्रिया सर्वत्र कारकाद् भेदेन नावगृह्यते। कारकाणां हि प्रवृत्तिविशेषरूपाऽसौ तत्समवेतैव = कारकसंबद्धैव तदभिधायि प्रत्ययानुगतप्रकृतिवाच्या न्याय्या। न च केवलस्य क्रिया-

वाचिनो धातोः प्रयोगोऽस्ति। इक्श्तिवादिना च सिद्धतया प्रत्याख्यते, न तु साध्यमानावस्थेन स्वरूपेण।

तस्मात् कारकसंसृष्टैव सर्वा क्रिया कर्मणा सम्बध्यत इति कृतपूर्व्यादावपि तादृश्या एव समन्वयोपपत्तिः॥ ६७॥

यदि कृतशब्दो वृत्तौ विशेषकर्मान्तर्भावयितुमसमर्थः, मुण्डं करोति मुण्डयति, सूत्रयति, मिश्रयतीत्यादावपि वृत्तौ माणवकादेर्विशेषस्यानभिव्यक्तिः स्यात्। न च कृतशब्दवद् मुण्ड्यादिशब्दः क्रियावाचीति तस्य क्रियाविशेषेऽन्तर्भावात् कथमत्र बाह्येन माणवकादिकर्मणा योग इत्यत आह—

**मुण्डिसूत्र्यादयोऽसद्भिर्भागैरनुगता इव।**
**विभक्ताः कल्पितात्मानो धातवः कुट्टिचर्चिवत्॥६८॥**

मुण्डं करोतीत्यादि वाक्यं प्रकृतिप्रत्ययपरिकल्पनेनान्वाख्यानोपायमात्रमिति तद्गतभेदवासनया भागानुगम इवात्र। सत्यतः पुनर्निरस्तोद्देशविभागा विशिष्टक्रिया-

---

वाचिनो धातोः प्रयोगोऽस्ति। इक्श्तिवादिना च क्रिया सिद्धतया प्रत्याख्यते, न तु साध्यमानावस्थेन स्वरूपेण। तस्माद् विशेष्यतया विशेषणतया वा कारकसंसृष्टैव सर्वा क्रिया कर्मणा संबध्यत इति कृतपूर्व्यादावपि तादृश्या एव=विशेषणतया कारक संसृष्टाया एव कटादिकर्मणा सह संबन्धोपपत्तिरिति॥ ६७॥

ननु यदि कृतशब्दो भावक्तान्तत्वेन वृत्तौ विशेषकर्मान्तर्भावयितुमसमर्थः, तदा मुण्डं करोति मुण्डयति, सूत्रं करोति सूत्रयति, मिश्रं करोति मिश्रयति इत्यादावपि वृत्तौ माणवकादेर्विशेष्यकर्मणोऽनभिव्यक्तिः=अनन्तर्भावः स्यात्।

किञ्च न च=नहि कृतशब्दवद् मुण्ड्यादिशब्दः क्रियासामान्यवाचीति तस्य क्रियाविशेषेऽन्तर्भावाद् कथमत्र वृत्तिबाह्येन माणवकादिकर्मणा तस्य योग इत्याशङ्क्याह—मुण्डिसूत्र्यादय इति।

अस्यार्थः—मुण्डिसूत्र्यादयो धातवः, असद्भिर्भागैर्मुण्डसूत्रादिभिरनुगता इव, वस्तुतस्तु कुट्टिचर्चिवत् अनंशाः। किञ्च कल्पितात्मानः=प्रकृतिप्रत्ययाभ्यां कल्पितस्वरूपा इति विभक्ता इव=प्रकृतिप्रत्ययाभ्यां विभागवन्त इव। अत्रेवशब्दः काकाक्षिगोलकन्यायेन पूर्वत्र परत्र च उभयोरन्वेति।

तथा च मुण्डिसूत्र्यादिरनंश इति केशच्छेदनार्थकस्य मुण्डेर्वृत्तिबाह्यो माणवकः कर्म संभवति, न तु मुण्डिसूत्र्यादौ मुण्डसूत्रादिकं वृत्तावन्तर्भूतं प्रकृतिभूतं कर्म, मुण्डिसूत्र्यादीनामनंशत्वात्। प्रकृतिप्रत्ययविभागकल्पना तु अन्वाख्यानोपाय इति।

अयं भावः—'मुण्डं करोति' इत्यादि वाक्यं द्वितीयान्तमुण्डादिप्रकृतिकणिच्प्रत्ययपरिकल्पनेन अन्वाख्यानोपायमात्रमिति तद्गतभेदवासनया=प्रकृतिप्रत्ययगतपरिकल्पितभेदसंस्कारेण भागानुगम

वचना एते धातव इत्थं व्युत्पाद्यन्ते, समुदायप्रतीत्यावयवप्रतीतेर्बाधनात्। ततश्च यथायथं स्वकर्मणा सम्बन्धो न विरुध्यते। प्रकृतिवाच्यं हि मुण्डादि गुणकर्म, प्रत्ययवाच्यस्तु करोत्यर्थ इत्यन्वाख्यानाय विभागः कल्पितः। केशच्छेदनवचनो हि मुण्डयतिः। तस्य साक्षादेव माणवकः कर्म।

एवं सूत्रयत्यादौ व्याकरणादिः। गुणत्वेन नित्यसापेक्षा वा मुण्डादयो बाह्येन गुणिना माणवकादिना युज्यन्ते। केशच्छेदनं वा क्रियाविशेषरूपं करोतेः कर्म। तद्विशिष्टस्य तु माणवकादि कर्म। कुट्टिचर्चिवदिति। साक्षाद् धातुषु पाठादनयोर्निरंशत्वस्य प्रसिद्धेर्निदर्शनत्वं न्याय्यम्॥ ६८॥

एवमन्यत्रापि प्रकृतिप्रत्ययभेदोऽन्वाख्यानोपाय इत्याह—

---

इव मुण्डिसूत्र्यादौ वस्तुगत्याऽनंशेऽपि। तत्त्वतस्तु निरस्तप्रदेशविभागा विशिष्टक्रियावचनाः= क्रियाविशेषवचनाः एते मुण्डिसूत्र्यादयो धातवः इत्थं=प्रकृतिप्रत्ययविभागपरिकल्पनया व्युत्पाद्यन्ते। न त्वेषा वस्तुभूता व्युत्पादना, समुदायप्रयुक्तप्रतीत्याऽवयवप्रयुक्तप्रतीतेर्बाधनात्।

ततश्च मुण्डिसूत्र्यादीनां धातूनां यथायथं स्वकर्मणा माणवकव्याकरणादिना संबन्धो न विरुद्धयते। प्रकृतिवाच्यं हि मुण्डादिगुणकर्म, प्रकृतेः प्रत्ययार्थे गुणत्वात्। णिच्प्रत्ययवाच्यस्तु करोत्यर्थः प्रधानमित्यन्वाख्यानोपायः प्रकृतिप्रत्ययविभागः कल्पितः।

वस्तुतस्तु अनंशो हि मुण्डयतिः=मुण्डिधातुः केशच्छेदनरूपक्रियावचनः। तस्य साक्षादेव माणवकः कर्म। केशच्छेदनं हि मुण्डकेशविभागानुकूलो व्यापारः। तत्र च मुण्डकेशविभागरूपफलाश्रयत्वात् माणवकः कर्म।

एवं सूत्रयत्यादौ व्याकरणादि साक्षादेव कर्म, 'व्याकरणं सूत्रयति' इति। अष्टकं हि व्याकरणम्, तदवयवसूत्रकरणञ्च तस्यावयविनो निर्माणं सूत्रयतेरर्थः। निर्माणञ्चोत्पत्त्यनुकूलो व्यापारः, उत्पत्तिरूपफलाश्रयत्वाच्च व्याकरणं सूत्रयतेः कर्म।

अथवा मुण्डत्वं देवदत्तादेर्गुणः, सूत्राण्यपि च शास्त्रस्यावयवभूतानि, शास्त्रस्य गुणभूतानि इति वृत्तौ अन्तर्भूतो मुण्डो निरूपकांशे नित्यसाकाङ्क्षः 'कं मुण्डं करोति' इति, सूत्राण्यपि च शास्त्रस्यावयवभूतानि निरूपकांशे नित्यसाकाङ्क्षाणि कस्य सूत्राणि इति। एवं गुणत्वेन नित्यसापेक्षा मुण्डादयो वृत्तिबाह्येन गुणिना माणवकादिना युज्यन्ते देवदत्तस्य गुरुकुलमितिवत्।

अथवा केशच्छेदनं क्रिया विशेषरूपं करोतेः कर्म, तद्विशिष्टस्य तु करोतेर्माणवकादि कर्म, केशच्छेदनरूपस्य फलस्य स्वजन्यविभागाश्रयत्वरूपपरम्परासंबन्धेनाश्रयत्वात्।

कारिकायां कुट्टिचर्चिवदिति निदर्शनन्तु अनयोर्धात्वोः साक्षाद् धातुगणे पाठान्निरंशत्वस्य प्रसिद्धेः, मुण्ड्यादीनान्तु व्युत्पाद्यत्वात्तदभावेन निरंशत्वं संदिग्धमिति साध्यम्।

तथाचायं प्रयोगः—मुण्ड्यादयो धातवो निरंशाः, धातुत्वात् कुट्टिचर्चिवदिति॥ ६८॥

एवमन्यत्रापि सनक्यजादिवृत्तौ प्रकृतिप्रत्ययविभागोऽन्वाख्यानोपाय इत्याह—पुत्रीयतौ न पुत्रोऽस्तीति।

**पुत्रीयतो न पुत्रोऽस्ति विशेषेच्छा तु तादृशी ।**
**विनैव पुत्रानुगमाद् या पुत्रे व्यवतिष्ठते ॥६९॥**

पुत्रशब्दोऽत्रासत्यः कल्पितोऽवयवः । तथाच पुत्रविशिष्टेच्छा पुत्रीयतिनाभिधीयते ॥ ६९ ॥

यदि तर्हि पुत्रे व्यवतिष्ठते, तदा बाह्यैः पुत्रविशेषैः सम्बध्येतेयमिच्छेत्याशङ्क्याह—

**प्राणैर्विना यथा धारिर्जीवतौ प्राणकर्मकः ।**
**न चात्र धारिर्न प्राणा जीवतिस्तु क्रियान्तरम् ॥७०॥**

जीवतीत्यस्यार्थः प्राणान् धारयतीति । न चात्र जीवतौ प्राणशब्दोऽस्ति । नापि धारयतिर्धातुः । अथ च विशिष्टकर्मिकैवंरूपा क्रिया प्रतीयत इत्यन्तर्भूतत्वात् कर्मणोऽकर्मव्यपदेशमासादयति यथा ॥ ७० ॥

---

अस्यार्थः—पुत्रीयतौ धातौ पुत्रः = पुत्रशब्दो नास्ति । तथापि पुत्रशब्दानुगमात् = पुत्रीयतौ पुत्रशब्दसंवन्धाद् विनैव तु पुत्रीयतिना धातुना तादृशी एव विशेषेच्छा तादृश एव इच्छाविशेषोऽभिधीयते, या विशेषेच्छा पुत्र एव विषयतासंबन्धेन व्यवतिष्ठते व्यवस्थिता भवति । एवञ्चात्रापि मुण्डयत्यादाविव प्रागुक्तरीत्या वृत्तिवाह्यविशेषणसंवन्ध उपपद्यत एवेति ध्येयम् ।

अयं भावः—पुत्रीयतौ पुत्रशब्दोऽसत्यः कल्पितः क्यचः प्रकृतिरूपोऽवयवः । तथा च पुत्रविशिष्टेच्छा = पुत्रविषयकत्वोपहित इच्छाविशेषः पुत्रीयतिनाऽभिधीयते ।

एवञ्च पुत्रीयतौ इच्छाविशेषः क्यजन्तार्थः, पुत्रविषयकत्वन्तु तत्रोपाधिः । अबाध्यत्वे सति प्रतीयमानत्वमुपाधेर्लक्षणमिति ॥ ६९ ॥

ननु यदि पुत्रीयतौ क्यजन्तधातुवाच्य इच्छाविशेषः पुत्रे व्यवतिष्ठते, तदा वृत्तिवाह्यैः पुत्रविशेषैः देवदत्तादिभिरियमिच्छा संबद्ध्येतेत्याशङ्क्याह—प्राणैर्विनेति ।

अस्यार्थः—यथा जीवतौ जीवनरूपे जीवत्यर्थे उपाधितया स्थितः धारिः धारिधात्वर्थरूपा धारणक्रिया स्वशब्दवाच्यैः प्राणैर्विना प्राणकर्मकः च हेतौ । यतोऽत्र जीवतौ वाच्यतया स्थितो धारिर्धारणरूपा क्रिया न, प्राणाश्चापि तत्कर्मभूता न, किन्तु जीवतिः जीवनरूपा क्रिया, क्रियान्तरम् = प्राणधारणक्रियातोऽन्या क्रिया । अस्य कारिकार्थस्य "तथा विनैषि पुत्राभ्याम्" ( वा० प० ३ वृ० ७१ ) इति वक्ष्यमाणेन कारिकार्थेन सम्बन्धः ।

अयं भावः—जीवतीत्यस्यार्थः = प्राणान् धारयतीति । न चात्र जीवतौ = जीवतिप्रयोगे प्राणशब्दोऽस्ति, नापि धारिर्धातुर्ण्यन्तोऽस्ति ।

अथ च = तथापि विशिष्टकर्मिका, द्रव्यविशेषकर्मिका—प्राणकर्मिका, एवंरूपा क्रिया = धारणक्रिया प्रतीयते इति प्राणरूपस्य कर्मणः स्वार्थे प्राणधारणक्रियारूपे अन्तर्भूतत्वाद् जीवतिरकर्मकत्वव्यपदेशं यथा आसादयति इति ॥ ७० ॥

**तथा विनेषिपुत्राभ्यां पुत्रीयायां क्रियान्तरम् ।
अन्वाख्यानाय भेदास्तु सदृशाः प्रतिपादकाः ॥७१॥**

इषिपुत्रानुगम उपायमात्रम्, परमार्थतस्तु पुत्रीयायां पुत्रीयाशब्दे क्रियान्तरमन्या विशिष्टा क्रिया प्रतीयते । पुत्रीयायां वा क्रियायां क्रियान्तरमिति भावप्रधानो निर्देशः । तेन क्रियान्तरत्वमित्यर्थः ।

एवञ्च यथा जीवतेर्बाह्येन कर्मणाऽयोगः, तथा पुत्रीयतावित्यकर्मिकेयं क्रिया ।

तथा च भाष्यम्—'अथ क्यजन्तस्य कानि साधनानि ? भावः कर्ता च । अथ कर्म ? नास्ति कर्म' इति । सुबन्तात् कर्मण इच्छायां क्यजिति तु प्रतिपादनोपायोऽन्वाख्यानं भेदेनेति पृथग्भूतपुत्रादिशब्दसादृश्याद् विभागभ्रान्तिरत्र ॥ ७१ ॥

---

तथा विनेषिपुत्राभ्यामिति ।

अस्यार्थः—तथा विनेषिपुत्राभ्याम् = इषिधातुपुत्रशब्दाभ्यां विना, पुत्रीयायाम् = पुत्रीयाशब्दे क्यजन्तधातुरूपे, अथवा पुत्रीयायामिच्छाविशेषरूपायां क्रियायाम्, क्रियान्तरम् = आद्यव्याख्याने पुत्रीविषयकेच्छारूपक्रियातोऽन्या क्रिया = इच्छाविशेषरूपा, द्वितीयव्याख्याने भावप्रधाननिर्देशाभ्युपगमेन क्रियान्तरत्वम् = पुत्रकर्मकेच्छारूपक्रियातोऽन्यक्रियारूपत्वमिच्छाविशेषरूपत्वं प्रतीयते । पुत्रीयायां वाक्यघटकपुत्रादिसदृशा भेदास्तु पुत्रादिरूपाः, प्रकृतिविशेषास्तु पुत्रीयतीत्यादेरन्वाख्यानाय प्रतिपादकाः प्रतिपादनोपायभूताः, न तु वस्तुभूताः, सर्वासां वृत्तीनामखण्डत्वादिति ।

अयं भावः = पुत्रीयतीत्यत्रेषिपुत्रानुगमः = इच्छारूपस्य इष्यर्थस्य पुत्रशब्दस्य च सम्बन्धोऽन्वाख्यानोपायमात्रम् । परमार्थतस्तु पुत्रीयायां पुत्रीयाशब्दे क्रियान्तरमन्याक्रियान्तरमन्या विशिष्टा क्रिया इच्छाविशेषरूपा प्रतीयते ।

अथवा पुत्रीयायां क्रियायां क्रियान्तरमिति भावप्रधानो निर्देशः । तेन क्रियान्तरत्वं पुत्रकर्मकेच्छारूपक्रियाभिन्नत्वमित्यर्थः ।

एवं च यथा जीवतेर्बाह्येन कर्मणाऽयोगः, तथा पुत्रीयतौ बाह्येन कर्मणा अयोग इत्यकर्मकेयं क्रिया पुत्रीयारूपा ।

तथा च भाष्यम्—"अथ क्यजन्तस्य कानि साधनानि ? भावः कर्ता च । अथ कर्म ? नास्ति कर्म" इति ।

अत्र भावस्य साधनत्वमन्वाख्यानसाधनत्वेन । अथेति प्रश्ने । पुत्ररूपस्य कर्मणो धात्वर्थेऽन्तरभावान्नास्ति कर्म इत्यर्थः ।

एवं पुत्रीयादिधातोरखण्डत्वेऽपि 'सुबन्तात् कर्मण इच्छायां क्यच्' इति तु भेदेन = प्रकृतिप्रत्ययविभागेनान्वाख्यानं शब्दतदर्थप्रतिपादनोपाय इति वाक्ये पृथग्भूतपुत्रादिशब्दसादृश्यात् प्रकृतिप्रत्ययविभागभ्रान्तिरत्र पुत्रीयादिनामधातुष्विति ॥ ७१ ॥

ननु 'मुण्डयति माणवकम्' इतिवत् 'पुत्रीयति माणवकम्' इति बाह्येन कर्मणा क्रियान्तरत्वेऽपि योगः कस्मान्न भवतीत्याशङ्क्याह—

आक्षेपाच्च प्रयोगेण विषयान्तरवर्तिना ।
सदपीच्छाक्यचः कर्म वाक्य एव प्रयुज्यते ॥७२॥

पुत्रविशेषलक्षणं माणवकादिकर्म पुत्रेषणायां विद्यमानमपि वृत्तावर्थान्तरप्रतीतेर्न प्रयुज्यते । 'पुत्रीयति माणवकम्' इति ह्युक्ते विषयान्तरमाचारलक्षणम्, तद्वाचिनोपमानक्यचः प्रयोगेणेच्छाविषया क्यजपह्रियते, आचारार्थप्रतीतेः । तस्मात् 'पुत्रमिच्छति माणवकम्' इति वाक्य एव विशेषकर्मप्रयोगः ॥ ७२ ॥

अनेन न्यायेनैतत्सदृशं प्रसङ्गेनान्यदप्युपपादयति—

प्रसिद्धेन कृतः शब्दो भावगर्हाभिधायिना ।
अभ्यासे तुल्यरूपत्वान्न यङन्तः प्रयुज्यते ॥७३॥

---

ननु क्रियान्तरत्वेऽपि पुत्रीयाक्रियायाः पुत्रैषणाक्रियातोऽन्यत्वेऽपि 'मुण्डयति माणवकम्' इतिवद् 'पुत्रीयति माणवकम्' इति वृत्तिवाह्येन कर्मणा माणवकेन पुत्रीयाक्रियाया योगः कस्मान्न भवतीत्याशङ्क्याह—आक्षेपाच्च प्रयोगेणेति ।

अस्यार्थः—इच्छाविशेषरूपा या पुत्रीया क्रिया, ततोऽन्यद् यद् विषयान्तरमाचारलक्षणं तद्वर्तिना तद्वाचिना उपमानक्यचः प्रयोगेण इच्छाक्यचः कर्मणः पुत्रस्य इच्छाक्रियातः आचारलक्षणायां क्रियायामाक्षेपाच्चापहारात्तु पुत्रैषणारूपायां क्रियायां सदपि इच्छाक्यचः कर्ममाणवकादिर्वाक्य एव प्रयुज्यते 'पुत्रमिच्छति माणवकम्' इति, वृत्तौ तु न प्रयुज्यते—'पुत्रीयति माणवकम्' इति । वृत्तौ—'पुत्रमिवाचरति माणवकम्' इति, अर्थान्तरस्य प्रतीतेरिति ।

अयं भावः—पुत्रविशेषलक्षणं माणवकादिकर्मपुत्रैषणारूपायां क्यजन्तवाच्यक्रियायां सदपि विद्यमानमपि पुत्रीयति माणवकमिति वृत्तौ अर्थान्तरप्रतीतेः=पुत्रैषणाक्रियातोऽर्थान्तरस्याऽचारलक्षणस्य 'पुत्रमिवाचरति माणवकम्' इत्येवं प्रतीतेर्न प्रयुज्यते । 'पुत्रीयति माणवकम्' इति ह्युक्ते विषयान्तरमिच्छाक्रियतो भिन्नमाचारलणं तद्वाचिना उपमानक्यचः प्रयोगेण इच्छारूपात् स्वविषयात् क्यज् आचाररूपे विषयेऽपह्रियते । 'पुत्रीयति माणवकम्' इति वृत्तौ आचारार्थप्रतीतेः । तस्मात् 'पुत्रमिच्छति माणवकम्' इति वाक्य एव माणवकरूपकर्मविशेषप्रयोग इति ॥ ७२ ॥

अनेन न्यायेन=विषयान्तराभिधानप्रसक्तिरूपया युक्त्या विषयान्तरवाचित्वेनैतत्सदृशमन्यदपि प्रसङ्गेनोपपादयति—प्रसिद्धेन कृतः शब्द इति ।

अस्यार्थः—भावगर्हा कौटिल्यार्थाभिधायिभ्यो धातुभ्योऽभ्यासे क्रियासमभिहारे कृतो यो यङन्तः शब्दः—'लोलुप्यते, चङ्क्रम्यते, जङ्गम्यते' इति, स भावगर्हाकौटिल्यार्थाभिधायिना प्रसिद्धेन यङन्तेन शब्देन तुल्यरूपत्वाद् न प्रयुज्यते । तत्प्रयोगे हि ततो भावगर्हाकौटिल्ययोरेवार्थयोः प्रसिद्धया प्रतीतेः, अभ्यासार्थस्याप्रसिद्धया ततोऽप्रतीतेरिति ।

'लोलुप्यते, चङ्क्रम्यते, जङ्गम्यते' इति यङि कृते गतिकौटिल्यस्य भावगर्हायाश्च प्रतीतेः क्रियासमभिहारे यङन्तोऽयं सदृशोऽपि न प्रयुज्यते, यङन्ताद्, अस्तदप्रतीतेः। भावगर्हाभिधायिनेत्यस्योपलक्षार्थत्वात् कौटिल्याभिधायिनेत्यपि द्रष्टव्यम्।

तदुक्तम्—"क्रियासमभिहारे च नैतेभ्यः" (भा० वा० ३।१।२२) इति। एतदर्थं च नित्यग्रहणं केचिद् व्याचक्षते। अभ्यासः पौनःपुन्यं क्रियासमभिहारः। इत्थं च वाक्यवाच्य एव क्रियासमभिहारोऽत्र। भृशं क्रामति, पुनः पुनः क्रामतीत्यादि ॥ ७३ ॥

तदेवमन्वाख्यानोपायमात्रमवयवविभागपरिकल्पना समुदायार्थप्रतीत्या त्ववयवार्थसंविदां वाधादसत्या अवयवाः। तथाहि—

**शब्दा यथा विभज्यन्ते भागैरिव विकल्पितैः।**
**अन्वाख्येयास्तथा शास्त्रमतिदूरे व्यवस्थितम् ॥७४॥**

---

अयं भावः—'लोलुप्यते, चङ्क्रम्यते, जङ्गम्यते' इति यङि कृते भावगर्हाया गतिकौटिल्यस्य च लोकप्रसिद्धचा प्रतीतेर्यङन्तोऽयं क्रियासमभिहारे सदृशोऽपि=योग्योऽपि न प्रयुज्यते। यङन्तादतः=अस्माद् यङन्तात् तदप्रतीतेः=क्रियासमभिहाराप्रतीतेः। कारिकायाम्=भावगर्हाऽभिधायिना इत्यस्य गतिकौटिल्यस्याप्युपलक्षणार्थत्वात् तत्र गतिकौटिल्याभिधायिना इत्यपि द्रष्टव्यम्।

तदुक्तम्—"क्रियासमभिहारे च नैतेभ्यः" इति। एतेभ्यो भावगर्हागतिकौटिल्याभिधायिभ्यो धातुभ्यः क्रियासमभिहारे च=तु यङ् न भवति, एतेभ्यो यङन्तेभ्यो भावगर्हागतिकौटिल्ययोरेव प्रतीतेः, क्रियासमभिहारस्य चाप्रतीतेरिति। एतदर्थञ्च=भावगर्हाद्यभिधायिभ्यो धातुभ्यः क्रियासमभिहारे यङ्निवृत्त्यर्थञ्च नित्यं गतिकौटिल्ययोरित्यत्र नित्यग्रहणं केचिद् व्याचक्षते, तन्न सम्यक्; तेभ्यस्तत्रार्थे यङि कृतेऽपि तदर्थस्याप्रतीतेस्तत्रार्थयङोऽप्रयोगस्य स्वतःसिद्धत्वात्। तस्मादेतदर्थं तत्र नित्यग्रहणं न कर्तव्यम्। विग्रहवाक्यनिवृत्त्यर्थमपि तत्र नित्यग्रहणं न कर्तव्यम्, 'कुटिलं गच्छति' इति प्रयोगस्य शिष्टैरबाधितस्य लोकव्यवहारे दर्शनात्।

कारिकायाम्—अभ्यासः पौनः पुन्यम्, क्रियासमभिहार इत्येकार्थकाः। इत्थञ्च वाक्यवाच्य एव क्रियासमभिहारोऽत्र। 'भृशं क्रामति, पुनः पुनः क्रामति' इत्यादि, न त्वत्र यङन्तवृत्तिप्रयोग इति ॥ ७३ ॥

तदेवमवयवविभागपरिकल्पना वृत्यन्वाख्यानोपायमात्रम्, समुदायार्थप्रतीत्या तु त्वयवार्थसंविदाम्=अवयवार्थप्रतीतीनाम्, वाधादसत्या एवावयवाः। तथाहि=शब्दा यथेति।

अस्यार्थः—विकल्पितैर्विविधकल्पनागोचरैः, भागैरिव=अवयवैरिव सत्यस्याखण्डस्य पदस्य दृश्यमानैः प्रकृतिप्रत्ययादिभिर्यथा यथा शब्दा विभज्यन्ते, तथा तथा शिष्टैरन्वाख्येयाः। परमार्थतस्तु अवयवविभागप्रकल्पनारूपं शास्त्रं नित्यान्निरंशादन्वाख्येयात् शब्दतत्त्वादतिदूरे व्यवस्थितमिति।

यथेति वीप्साप्रधानम्। यथा यथा विभज्यन्ते भागैरिव कल्पनाकल्पितैर्निरंशत्वात् सत्यत इत्यन्वाख्येयाः, तथा अन्वाख्यानोपायो भागकल्पनेति यावत्। परमार्थतस्तु शास्त्रमवयवविभागप्रकल्पनारूपमतिदूरे नित्यादन्वाख्येयान्निरंशाच्छब्दतत्त्वादवस्थितम्। प्रतिपादकशब्दनिष्ठं ह्यन्वाख्यानम्। तेन च रेखागवयस्थानीयेन सत्यगवयवदवस्थितशब्दप्रतिपत्तिः। अत एव चोपायानां प्रक्रियाभेदः।

केचित् किल भवतिशब्दम् 'भवात् तिः' इति व्युत्पादयन्ति, केचिद् भूशब्दादतिप्रत्ययेन, अन्ये मध्ये विकरणेन। एवमेकशब्दाञ्ञागारिकट्, एकागारशब्दाञ्ञिकट्। छन्दसः श्रोत्रभावो घश्च, तदधीते वाक्यार्थे पदवचनमित्यादिप्रक्रियाभेद उक्तः। एवं पुत्रीयादिशब्देऽपि प्रक्रियाभेदोऽभ्यूह्यः। पुतो रीयेण वा पोस्त्रीयेण वा पुत्राड्ड्रीयेण वा व्युत्पत्तिः।

इत्थं च व्युत्पत्तावपि पुत्रीयशब्दो विशिष्टक्रियावचन इत्यकर्मकत्वम्। यदा च व्युत्पत्तौ नियमाभावः, तदौणादिका अपि केचिदष्टाध्याय्यां व्युत्पाद्यन्ते ॥ ७४ ॥

---

अयं भावः—अत्र कारिकायां यथाशब्दो वीप्साप्रधानम्। सत्ये निरंशे शब्देऽवयवविभागपरिकल्पनायामतिभेदेन बहुत्वात्। सत्यतः पदस्य निरंशत्वात् कल्पनाकल्पितैर्भागैरिव प्रकृतिप्रत्ययादिभिर्यथा यथा शब्दा विभज्यन्ते, तथाऽन्वाख्येया इति। अत्र तथाशब्दे वीप्साप्रयुक्तद्वित्वाभावेऽपि न क्षतिः, एकेनैव तथापदेन सर्वस्य यथापदार्थस्य पूर्वनिर्दिष्टस्य परामर्शसंभवात्। अत्र पदे भागकल्पना तदन्वाख्यानोपाय इति यावत्।

परमार्थतस्तु अवयवविभागप्रकल्पनारूपं शास्त्रं नित्यान्निरंशादन्वाख्येयात् शब्दतत्त्वादतिदूरेऽवस्थितम्। प्रतिपादकशब्दनिष्ठं हि=लोकेऽर्थप्रतिपादको यः शब्दस्तत्र निष्ठा पर्यवसानं यस्य तत् तथाभूतं हि अन्वाख्यानम्। तेन चान्वाख्यानेन रेखागवयस्थानीयेन सत्यगवयवदवस्थितस्य प्रतिपादकशब्दस्य प्रतिपत्तिः। अत एव चान्वाख्यानरूपाणामुपायानां प्रक्रियाभेदः।

केचित् किल भवतिशब्दं भवात् तिः=भवशब्दात् तिप्रत्यय इति व्युत्पादयन्ति। केचिद् भूशब्दाद् अतिप्रत्ययेन, अन्ये मध्ये विकरणेन=भूधातोरितप्प्रत्ययः, मध्ये च शब्रूपो विकरण इत्येवंरूपेण। एवमेकशब्दाञ्आगारिकट् प्रत्ययः, एकागारशब्दाञ्ञिकट् प्रत्ययः। एकशब्दाञ्आगारिकट्प्रत्यये ञकारटकारयोरित्संज्ञायां लोपे च आदिवृद्धौ यस्येति लोपे ऐकागारिक इति। एवमेकागारशब्दाञ्ञिकट्प्रत्यये ऊह्यम्। छन्दसः श्रोत्रभावो घश्च प्रत्यय इत्येका विधा। तदधीते इति वाक्यार्थे पदवचनम्=श्रोत्रियपदस्योक्तिः, इत्यादिः प्रक्रियाभेद उक्तः।

एवं पुत्रीयादिशब्देऽपि प्रक्रियाभेदोऽभ्यूह्यः। पुतो=नरकवाचिनः 'पुत्' शब्दाद् रीयेण वा, पोः त्रीयेण वा, पुत्राड् ड्रीयेण वा पुत्रशब्दः सिद्ध्यतीति व्युत्पत्तिः।

इत्थञ्च व्युत्पत्तावपि पुत्रीयशब्दो विशिष्टक्रियावचनः=पुत्रकर्मकेच्छारूपक्रियावचन इत्यकर्मकत्वम्, धात्वर्थे कर्मणोऽन्तर्भावाद् जीवतिवत्। यदा चैवं व्युत्पत्तौ नियमाभावः, तदौणादिका अपि केचिदष्टाध्याय्यां व्युत्पाद्यन्ते, व्युत्पत्तिवैचित्र्यादिति ॥ ७४ ॥

इत्थमवयवानामसत्यत्वं सार्वत्रिकं निगमयति—

**अर्थस्यानुगमं कश्चिद् दृष्ट्यैव परिकल्पितम् ।**
**पदं वाक्ये पदे धातुर्धातौ भागश्च मुण्डिवत् ॥७५॥**

वाक्यार्थ एव स्थितलक्षणः, वाक्यस्यैवाखण्डस्य वाचकत्वात् । तथा चापोद्धारबुद्ध्यार्थसामान्यं वाक्यार्थे विशेषेऽनुगतरूपमुद्धृत्य तावदर्थं पदं नाम पृथगन्वाख्यातुमपोद्ध्रियते, निरंशस्य वाक्यस्यानेकरूपस्यान्वाख्यातुमशक्यत्वात् । पदं हि सर्ववाक्येषु समानरूपमित्यर्थसामान्यवाचि शक्यते व्युत्पादयितुम् । तच्च व्युत्पादितं यथायथं वाक्येषु सन्निपतितं तत्तद्वाक्यगतविशेषस्वीकाराद् विशिष्टार्थव्यवहारसाधनं जायते ।

न च पूर्वं सामान्यार्थं भूत्वा विशेषं स्वीकर्तुं समर्थम्,

---

इत्थमवयवानामसत्यत्वं सार्वत्रिकम्=पदे वाक्ये धातौ च, निगमयति=उपसंहरति—अर्थस्यानुगममिति ।

अस्यार्थः—वाक्यार्थ एव स्थितिलक्षणोऽविक्रियस्वरूपोऽखण्डः, अखण्डस्य वाक्यस्यैव लोके व्यवहारसाधनत्वात् । तत्र चापोद्धारबुद्ध्या कश्चिदर्थस्यानुगमम्=किञ्चिदर्थसामान्यं सर्वत्र पदेऽनुगतम्, दृष्ट्वा एव वाक्ये पदमन्वाख्यानार्थं परिकल्पितम्, वाक्यस्यानेकरूपस्यान्वाख्यातुमशक्यत्वात् । पदस्य तु सर्वत्र वाक्ये एकरूपस्यान्वाख्यातुं शक्यत्वात् । पदे च धातुः परिकल्पितोऽन्वाख्यानार्थमेव, 'भूतः, भूतिः, भवनम्' इत्यादौ भूधातोः सर्वत्रानुगमात् । पदस्य च कस्यापि सर्वत्राननुगमात् । पदे च धातुः परिकल्पितः, धातौ च भागः=वर्णरूपो भागः परिकल्पितः । एवं तत्र तत्रापि भागकल्पनायामनवस्थाभियाऽसत्यैव भागकल्पना इत्यायातमिति । मुण्डिवदिति दृष्टान्तः । 'मुण्डि' धातौ यथा मुण्डरूपा प्रकृतिः, णिच् प्रत्ययश्च प्रकल्पित इति ।

अयं भावः—वाक्यार्थ एव स्थितलक्षणः=स्थिरस्वभावोऽखण्डोऽविक्रियः, वाक्यस्यैवाखण्डस्य वाचकत्वात् । पदार्थस्तु न स्थितलक्षणः, तस्य वाक्यार्थादपोद्धृतस्य प्रकृत्यर्थप्रत्ययार्थापोद्धारावधित्वेनाव्यवस्थितत्वात् । तथा चापोद्धारबुद्ध्या पदरयार्थसामान्यं वाक्यार्थे विशेषेऽनुगतरूपमुद्धृत्य तावदर्थम्=पदार्थसामान्यवाचकम्, पदं नाम अन्वाख्यातुं वाक्यात् पृथग् अपोद्ध्रियते । निरंशस्य वाक्यस्य 'द्वारं पिधेहि, द्वारमुद्घाटय, द्वारं विवृणु' इत्यादिप्रकारैरनेकरूपस्यान्वाख्यातुमशक्यत्वात् । पदं हि सर्ववाक्येषु समानरूपमित्यर्थसामान्यवाचि शक्यते व्युत्पादयितुम् । यथा प्रागुक्तेषु त्रिषु वाक्येषु द्वारमिति समानरूपं पदम् । तच्च=पदञ्च व्युत्पादितं सद् यथायथम्=यथासंभवं वाक्येषु सन्निपतितम्, तत्तद्वाक्यगतविशेषस्वीकारात्=तत्तद्वाक्यगतपदविशेषसंबन्धस्वीकाराद् विशिष्टार्थव्यवहारसाधनम्=वाक्यार्थविशेषसंबन्धिव्यवहारसाधनं जायते ।

न च=न हि पूर्वं सामान्यार्थकं भूत्वा विशेषम्=वाक्यघटकपदार्थविशेषसंबन्धविशेषं स्वीकर्तुं समर्थम्,

"सामान्यार्थस्तिरोभूतो न विशेषेऽवतिष्ठते।
उपात्तस्य कुतस्त्यागो निवृत्तः क्वावतिष्ठताम्॥"

इत्यादिदोषापातादिति सामान्यभूतमर्थरूपं परिकल्पितमुच्यते।

यथैव हि पदेन व्यवहाराभावात् परिकल्पितरूपं तद्, एवं तदर्थोऽपि। तदपि च पदं प्रकृतिप्रत्ययपरिकल्पनया व्युत्पाद्यत इति तत्राप्यपोद्धाराश्रयेण परिकल्पितान्वय-व्यतिरेकवशेनार्थमात्रा प्रविभज्यते प्रकृतिप्रत्यययोः।

धातुरित्युपलक्षणं प्रकृतिरूपस्य। प्रत्ययोऽपि च गृह्यते। तत्रापि च प्रकृतिरूपं मुण्डिसूत्रिपुत्रीयाद्यवयवविभागेन प्रकृतिप्रत्ययकल्पनया व्युत्पाद्यते। एवमस्तिं सकारमातिष्ठन्ते। अकारस्त्वागमोऽत्रेति केचित्। तथा अतिप्रत्ययस्तिप्रत्ययो विकरणश्चेति वा।

एवं 'स्यति, स्यतः, स्यन्ति' प्रत्ययाः, स्यो वा विकरण इत्येवमन्यदप्यूह्यम्।

---

सामान्यार्थस्तिरोभूतो न विशेषेऽवतिष्ठते।
उपात्तस्य कुतस्त्यागो निवृत्तः क्वावतिष्ठताम्॥

(वा० प० २।०५)

इत्यादिदोषापातात्।

अस्यार्थः—वाक्यार्थबोधसमये यदि पदस्य सामान्यार्थस्तिरोभूतस्तिष्ठति, तदा=तदानीं तिरोहितरूपेणापि विद्यमानत्वान्न विशेषे=न वाक्यार्थविशेषघटकपदार्थविशेषरूपे स्वस्वभावेऽवतिष्ठते, एकस्य युगपत्सामान्यविशेषरूपत्वयोर्विरोधात्।

यदि तु वाक्यार्थबोधदशायां पदसामान्यार्थस्य निवृत्तिरुच्यते, तदा पूर्वमुपात्तस्य सामान्यार्थस्य कुतः कस्मात् कारणात् त्यागो निवृत्तिः, किञ्च निवृत्तः पदसामान्यार्थः क्व=कस्मिन् पदार्थ-विशेषेऽवतिष्ठताम्, निवृत्तत्वादेवेति। इतिहेतोरत्र सामान्यभूतमर्थरूपं परिकल्पितमुच्यते।

यथैव हि पदेन व्यवहाराभावात् परिकल्पितरूपं तत्, एवं तदर्थोऽपि परिकल्पितरूपः। तदपि च पदं प्रकृतिप्रत्ययपरिकल्पनया व्युत्पाद्यत इति तत्रापि=पदेऽपि प्रकृतिप्रत्ययापोद्धारा-श्रयेण परिकल्पितान्वयव्यतिरेकवशेन प्रकृतिप्रत्यययोरर्थमात्रा=प्रकृतिप्रत्ययार्थमात्रा प्रविभज्यते।

कारिकायां धातुरिति प्रकृतिरूपस्योपलक्षणम्। धातुपदस्योपलक्षणत्वेन प्रत्ययोऽपि च गृह्यते। तत्रापि च=प्रकृतिप्रत्यययोरपि च प्रकृतिरूपं मुण्डिसूत्रिपुत्रीयाद्यवयवविभागेन प्रकृति-प्रत्ययकल्पनया व्युत्पाद्यते। एवमस्ति धातुं सकारमातिष्ठन्ते=सकारं प्रतिजानते। अकारस्त्वा-गमोऽत्रेति केचित्। तथा 'भवति' इत्यत्र भूधातोः अतिप्रत्ययः; तत एव 'ति'प्रत्ययः 'शप्'-रूपो विकरणश्च इति वा।

एवम् 'भविष्यति, भविष्यतः, भविष्यन्ति' इत्यादौ 'स्यति, स्यतः, स्यन्ति' इति प्रत्ययाः, 'तिप्, तस्, झि' प्रत्ययाः स्यो विकरणो वा। इत्येवमन्यदप्यूह्यम्।

एवञ्च भागपरिकल्पने वर्णेष्वेवावस्थानम् तेषां तुरीयादिभागानामव्यवहार्यत्वात्। तत्रापि वा परमाणुपर्यन्तभागपरिकल्पने न कश्चित् शब्दः स्यादित्यवश्यं भेदवादिना वर्णेष्वभिन्नत्वमभ्युपगन्तव्यम्, अभिन्नत्वप्रतीतेः।

इत्थं च प्रथममेव वाक्यगतया अभिन्नसंविदा भेदस्य बाधनाद् वितथत्वं कस्मान्नोच्यते ? व्यवहारेऽपि वाक्यमेव प्रथमप्रतीतम्। तथा च तदेवाभिन्नबुद्धिप्रत्यायितमस्तु सत्यम्। एतच्च वाक्यकाण्डान्निश्चेतव्यम् ॥ ७५ ॥

तदेवं प्रक्रियाभेदेऽपि—

**अविप्रयोगः साधुत्वे व्युत्पत्तिरनवस्थिता।**
**उपायान् प्रतिपत्तॄणां नाभिमन्येत सत्यतः ॥७६॥**

साधुत्वे विषये विविधप्रयोगो नानाविधं प्रतिपादनं नास्ति, स्थितलक्षणस्य शब्दस्योपेयस्योपायभेदेऽप्येकरूपत्वात्। उपाया हि प्रतिपादनाङ्गभूताः प्राप्तावुपेयस्य चरितार्थत्वात् तिरोभवन्तीति न तेषु सत्यताभिमानः कार्यः। विचित्रत्वाच्च प्रतिपाद्यप्रतिपादकयोर्यथारुचि प्रवृत्तौ व्युत्पत्तिः परं भिद्यते। सर्वत्रैव चायमेव क्रमः।

---

एवं भागपरिकल्पने च वर्णेष्वेवावस्थानम्, तेषां वाक्यतुरीयादिभागानां व्यवहार्यत्वात्। तत्रापि वा = तत्रापि च परमाणुपर्यन्तभागपरिकल्पने, न कश्चित् शब्दो व्यवहार्यः स्यादित्यवश्यं शब्दभेदवादिना अवयववर्णेष्वभिन्नत्वम् = अवयवविभागराहित्यमभ्युपगन्तव्यम्, वर्णेष्वभिन्नत्वप्रतीतेः = विभागराहित्यप्रतीतेः।

इत्थञ्च प्रथममेव वाक्यगतया अभिन्नत्वसंविदाभेदस्य = वाक्येऽवयवविभागस्य बाधनाद् भेदस्य वितथत्वं कस्मान्नोच्यते ? लोकव्यवहारेऽपि वाक्यमेव प्रथमप्रतीतिकम्। तथा च तदेवाभिन्नत्वबुद्धिप्रत्यायितमस्तु, सत्यम्; वाक्यसत्यत्वञ्च वाक्यकाण्डान्निश्चेतव्यमिति ॥ ७५ ॥

तदेवं प्रक्रियाभेदेऽपि साधुत्वेऽविप्रतिपत्तिः, उपायभेदेऽप्युपेयस्यैकत्वादित्याशयेनाह— अविप्रयोगः साधुत्वे इति।

अस्यार्थः—यद्यपि शब्दस्य व्युत्पत्तिरनवस्थिता, तथापि तस्य साधुत्वेन विप्रयोगः = विविधः प्रयोगः, विविधं प्रतिपादनं विप्रतिपत्तिप्रयोजकं नास्ति। अतः शब्दप्रतिपत्तॄणां शब्दप्रतिपत्तावुपायान् शिष्टैः कृतान् सत्यतः = सत्यत्वेन नाभिमन्येत, उपायानामनवस्थितत्वेन कल्पनामात्रशरीरत्वादिति।

अयं भावः—साधुत्वे शब्दसाधुत्वविषये विप्रयोगः = विविधप्रयोगो नानाविधं प्रतिपादनम् (अस्वशब्दो निर्धने साधुः, तत्रैवासाधुरित्येवंविधं विप्रतिपत्तिप्रयोजकम्) नास्ति, प्रक्रियारूपोपायभेदेऽपि स्थितलक्षणस्य शब्दस्योपेयस्यैकरूपत्वात्। नानाविधाः प्रक्रियारूपा उपाया शब्दप्रतिपादनाङ्गभूता उपेयस्य हि शब्दस्य प्रतिपत्तिरूपायां प्राप्तौ सत्यां चरितार्थत्वात् = कृतकृत्यत्वात् तिरोभवन्तीति। तेषु न सत्यताभिमानः कार्यः। प्रतिपाद्यस्य शब्दस्य प्रतिपादिकायाः प्रक्रियायाश्च विचित्रत्वाच्च शब्दप्रतिपादनाङ्गभूतप्रक्रियाप्रकल्पने शिष्टानां यथारुचि प्रवृत्तौ प्रकृतिप्रत्ययादिरूपावयवविभागरूपा शब्दानां व्युत्पत्तिः परम् = केवलं भिद्यते, साधुत्वेन प्रतिपाद्यः शब्दस्तु न भिद्यते, तदैकरूप्यस्य प्रागुक्तत्वात्। सर्वत्रैव च शब्देष्वयमेव क्रमः, शब्दस्य साधुत्वेऽविप्रतिपत्तिः, प्रक्रिया तु शिष्टैर्यथारुचि प्रदर्शिता अनवस्थिता इति।

अविद्यैव हि विद्योपायः। प्रतिपत्तिकाले गत्यन्तराभावाद् यथाकथञ्चित् प्रतिपादनसम्भवादुपेयप्राप्तिश्च तया भवन्ती दृश्यते। तदुक्तम्—

"शास्त्रेषु प्रक्रियाभेदैरविद्यैवोपवर्ण्यते।
अनागमविकल्पा तु स्वयं विद्योपवर्तते॥"
(वा० प० २।२३३)

इति॥ ७६॥

सर्वत्रैव चोपायानामसत्यत्वे यदृच्छाशब्दवन्नैमित्तिकोऽपि शब्दो निरस्तावयवविभाग इति नास्ति तत्त्वतो भेदः शब्दानामित्याह—

**यथैव डित्थे डयतिः पाचके पचतिस्तथा।**
**डयतिश्च पचिश्चैव द्वावप्येतावलौकिकौ॥७७॥**

---

नानाविधप्रक्रियाकल्पनारूपाविद्यैव हि शब्दसाधुत्वप्रमारूपाया विद्याया उपाय इति हेलाराजीयं वाक्यं प्रकृते योज्यम्। नानाविधोपासना निष्कामकर्मादिका अविद्यैव हि चित्तशुद्धिद्वारा अद्वितीयात्मसाक्षात्काररूपाया विद्याया उपायः, इत्यन्यत्र पक्षे योजनीयम्। शब्दप्रतिपत्तिकाले हि नानाविधप्रक्रिया कल्पनारूपा विद्यातो गत्यन्तराभावात् तया यथाकथञ्चित् शब्दप्रतिपादनसंभवादुपेयरूपस्य शब्दस्य प्राप्तिश्च तया=प्रागुक्तयाऽविद्यया भवन्ती दृश्यते शास्त्रे। तदुक्तम्—

शास्त्रेषु प्रक्रियाभेदैरविद्यैवोपवर्ण्यते।
अनागमविकल्पा तु स्वयं विद्योपवर्तते॥ इति।
(वा प० २।२३३)

अस्यार्थः—शास्त्रेषु प्रक्रियाभेदैः=भिन्नाभिः प्रक्रियाभिः शिष्टैर्यथारुचि कृताभिः, अविद्यैव=नानाविधाऽवयवविभागादिकल्पनारूपाऽविद्यैवोपवर्ण्यते। अनागमविकल्पा=आगमः शिष्टसंप्रदाय, तत्र कृता स्याः शब्दप्रतिपत्त्यर्थं विविधाः प्रक्रियाकल्पनातद्रहिता, विद्या तु स्वयमुपवर्तते=प्राप्ता भवति। नानाविधप्रक्रियाकल्पनारूपयाऽविद्यया कतकरजोन्यायेन, 'विषस्य विषमौषधम्' इति न्यायेन वा शब्दावरकाविद्याविनिवृत्तौ शब्दविद्या=स्फोटात्मकशब्दविषयको मानसः साक्षात्कारः स्वयं प्राप्तो भवतीति॥ ७६॥

सर्वत्रैव च शब्देषूपायानामसत्यत्वे डित्थादि-यदृच्छा-शब्दवद् नैमित्तिकोऽपि=क्रियारूपं प्रवृत्तिनिमित्तमादाय प्रवृत्तोऽपि पाचकादिः शब्दो निरस्तावयवविभाग इति नास्ति तत्त्वतो योगरूढ्यादिभेदः शब्दानामित्येतदाह—यथैव डित्थे इति।

अस्यार्थः—यथैव डित्थे यदृच्छाशब्दे डयतिः='डीङ् धातुरलौकिकः', तथा यौगिके पाचकशब्दे पचतिः पच् धातुरप्यलौकिकः।

तदेवाह—

"डयतिश्च पचिश्चैव द्वावप्येतावलौकिकौ।" इति।

यथैवेति । अस्यैव स्पष्टीकरणम्—द्वावप्येतावलौकिकौ लोकव्यवहारेऽप्रसिद्धौ । प्रकृत्यादिविभागस्य लोकेऽसंप्रत्ययान्निरंशस्य डित्थपचतिरूपस्य समुदायस्य लोके प्रयोगादुभयत्रापि समानैवार्थगतिरभिन्नार्थसमुदायात् । कल्पनया तु डयतिधातुरसंभवदर्थो डित्थस्यान्वाख्यानायापोद्ध्रियते । पचतिस्तु सम्भवदर्थः पचतिशब्दस्येत्येतावान् भेदः । तथा च चतुष्टयी शब्दानां प्रवृत्तिरुद्घोष्यते साधुत्वस्य सत्यत्वे ॥ ७७ ॥

तस्मादभिन्नादभेदपूर्वका भेदाः कल्पिताः शिष्टैरबुधान् प्रति व्युत्पत्त्यर्थमित्याह—

**प्रकृतिप्रत्ययावूह्यौ पदात् ताभ्यां पदं तथा ।**
**अनुबन्धस्वरादिभ्यः शिष्टैः शास्त्रं न तान् प्रति ॥७८॥**

शब्दानां शिष्टाः प्रमाणम् । ते हि भावतत्त्वदृशो यद्यद् धर्मेऽङ्गतामेति तत्तत् साधुत्वेनाभ्युपयन्तः प्रकृतिप्रत्ययावनुगुणावूहित्वा लौकिकं पदं तावद् वाक्यादपोद्धृतं

---

अयं भावः—यथैव डित्थे डयतिरिति पूर्वार्धस्यैव स्पष्टीकरणम्, द्वावप्येतावलौकिकौ = लोकव्यवहारेऽप्रसिद्धौ । डित्थादौ वा यदृच्छाशब्दे, पाचकादौ वा नैमित्तिके शब्दे प्रकृत्यादिविभागस्य लोकेऽसंप्रत्ययाद् निरंशस्य डित्थपचतिरूपस्य समुदायस्य लोके प्रयोगादुभयत्राप्यभिन्नार्थकवर्णसमुदायात् समानैवार्थगतिः = अभिन्नार्थविषयैवार्थगतिः, न तु पाचकादौ प्रकृत्यर्थप्रत्ययार्थरूपभिन्नार्थविषया । कल्पनया तु डित्थे डयतिधातुरसंभवदर्थो डित्थस्यान्वाख्यानायापोद्ध्रियते । पचतिस्तु पाचके पचतौ वा संभवदर्थः पाचकशब्दस्य पचतिशब्दस्य वाऽन्वाख्यानायापोध्रियते इत्येतावान् भेदः संभवदर्थत्वासंभवदर्थत्वाभ्यां यदृच्छाशब्दनैमित्तिकशब्दयोः । तथा च चतुष्टयी शब्दानां प्रवृत्तिः, जातिर्गुणः क्रिया यदृच्छाशब्दश्चेति उद्घोष्यते साधुत्वस्य सत्यत्वे बोधनीये । तत्र प्रवृत्तित्रयेऽर्थत्रयस्य यथायथं प्रवृत्तिनिमित्तस्य संभवः । यदृच्छाशब्दे तु प्रवृत्तिनिमित्ते सति नार्थसंभव इति ॥ ७७ ॥

यतोऽभेदपूर्वकाभेदास्तस्मादभिन्नात् पदात् = अभिन्नं पदमार्षचक्षुषा साक्षात्कृत्य तत्र शिष्टैरबुधान् प्रति साधुशब्दव्युत्पत्तये = साधुशब्दपरिज्ञानाय प्रकृतिप्रत्ययभेदाः कल्पिता इत्याह—प्रकृतिप्रत्ययावूह्याविति ।

अस्यार्थः—शिष्टैर्लक्ष्यैकचक्षुष्कैः पदात् निपातितम् "पङ्क्तिविंशति०" (पा०५।१।५९) इत्यादिकं पदमार्षचक्षुषा साक्षात्कृत्य तत्र पदसिद्ध्यनुकूलौ प्रकृतिप्रत्ययावूह्यौ । तथा यत्र "ण्वुल्तृचौ" ( पा० ३।१।१३३ ) इत्यादिर्विधिः, तत्र ताभ्याम् = प्रकृतिप्रत्ययाभ्यां तथा अनुबन्धस्वरादिभ्यः पदमूह्यम् । तान् प्रति = लक्ष्यैकचक्षुष्कान् शिष्टान् प्रति व्याकरणशास्त्रं न प्रवर्तते । तत्रानुबन्धेन पदस्योहः, 'औपगवः' इति ।

अत्र हि 'अण्'प्रत्यये णकाररूपेणानुबन्धेन आदिवृद्धिमत्पदमूह्यते 'औपगवः' इति । स्वरेण पदस्योहः 'गार्ग्यः' इति । अत्र हि ञिदन्तत्वप्रयुक्तेनाद्युदात्तस्वरेण पदस्योहः 'गार्ग्यः' इति ।

अयं भावः—शब्दानां शिष्टाः प्रमाणम् = साधुशब्देषु लक्ष्यैकचक्षुष्का आर्षचक्षुषः शिष्टा एव प्रमाणम् । ते हि आर्षचक्षुषा भावतत्त्वदृशः शब्दतत्त्वं तेनैव चक्षुषा पश्यन्तः = यद् यत् पदं

व्युत्पादयन्ति। तथा च ताभ्यां प्रतिपाद्यं पदमूहितमवयन्ति। डित्थादिवा पदं प्रत्यक्षकल्पेनोपदिष्टमित्यनुगुणप्रकृतिप्रत्ययोहे कारणम्। पचत्यादि तु प्रकृतिप्रत्ययोपदेशेनानुमानकल्पेन, शब्दानुशासने सङ्घातस्योहात्।

द्विविधं हि शिष्टैरनुशासनं प्रारब्धम्—साक्षादुपेयनिर्देशेन, यथा निपातनम्। उपायनिर्देशानुसारेण वा, यथा विधिः। तत्र च प्रकृतीनामनुबन्धो ञकारादिरुपग्रहदर्शनान्नियतः कल्पितः, प्रत्ययानां तु स्वरवृद्ध्यादिदर्शनात् तथैवानुबन्धप्रक्लृप्तिः। शिष्टानां तु निरावरणख्यातित्वात् प्रतिभात्मनि विवृत्तानामेव यथावत् सर्वभावगतत्वप्रख्यानात् संप्रत्युपदेशेन न कृत्यम्, अनादिशास्त्राभ्यासादेव सिद्धेः। तथा च क्वचिदुपायानपेक्षापीत्यसत्या एव ते। अत एवोद्घुष्यते—'शिष्टपरिज्ञानार्थाऽष्टाध्यायी' इति ॥ ७८ ॥

यस्तु शिष्टस्मरणमनादृत्य शास्त्रमात्रशरणः, सः—

**शास्त्रदृष्टिस्तु शास्त्रस्य प्राप्तिमात्रेऽप्यनिश्चिते।**
**युज्यते प्रत्यवायेन शास्त्रं चक्षुरपश्यताम् ॥७९॥**

---

धर्मेऽङ्गतामेति तत्तत्साधुत्वेनाभ्युपयन्तः=स्वीकुर्वन्तः प्रकृतिप्रत्ययौ तत्पदानुगुणावूहित्वालौकिकं पदं तावद् वाक्यादपोद्धृतं प्रकृतिप्रत्ययाभ्यां व्युत्पादयन्ति। तथा च = तेन प्रकारेण च ताभ्याम्= प्रकृतिप्रत्ययाभ्याम्, प्रतिपाद्यं पदमूहितमवयन्ति=अवगच्छन्ति जानन्ति। डित्थादि वा पदं प्रत्यक्षकल्पेनोपदिष्टम्=प्रत्यक्षसदृशेन प्रकारेणोपदिष्टम् इत्यनुगुणप्रकृतिप्रत्ययोहे=अनुगुणप्रकृतिप्रत्ययपरिकल्पने कारणम्। पचत्यादि तु प्रकृतिप्रत्ययोपदेशेनानुमानकल्पेनोपदिष्टमित्यनुगुणपदोहे कारणम्, शब्दानुशासने प्रकृतिप्रत्ययसंघातरूपस्य पदस्योहात्।

द्विविधं हि शिष्टैरनुशासनं प्रारब्धम्—साक्षादुपेयशब्दनिर्देशेन, यथा "पङ्क्तिविंशति०" (पा० ५।१।५९) इत्यादिनिपातनम्। प्रकृतिप्रत्ययरूपोपायनिर्देशानुसारेण वा, यथा विधिसूत्रम्। तत्र च=विधिषु च 'हृञ्, डुकृञ्' इत्यादिरूपाणां प्रकृतीनां ञकारादिरनुबन्ध उपग्रहदर्शनात्=परस्मैपदात्मनेपददर्शनाद् नियतः = कल्पितः। प्रत्ययानां तु अण्-अञादीनामनुबन्धः, आद्युदात्तादिस्वराणां वृद्ध्यादीनाञ्चौपगवादिषु दर्शनात्। तथैव=उपग्रहवदेव अनुबन्धप्रक्लृप्तिः। शिष्टानां तु निरावरणज्ञानत्वात् प्रतिभात्मनि विवृत्तानामेव=प्रतिभास्वरूपे विशेषरूपेण वर्तमानानामेव शब्दानां यथावद् वाच्यत्वसंबन्धेन सर्वभावगतत्वप्रख्यानात् शिष्टान् प्रति शब्दानां संप्रत्युपदेशेन न कृत्यम्, अनादिशास्त्राभ्यासादेव तेषां शब्दसिद्धेः। तथा च क्वचित् - शिष्टेषु शब्दव्युत्पत्तये प्रकृतिप्रत्ययादिरूपोपायानपेक्षापि इत्यसत्या एव ते=उपायाः। अत एव=शब्देषु शिष्टानां प्रमाणत्वादेवोद्घुष्यते शाकल्यसाकटायनादिरूपोक्तानुक्तपूर्वपूर्वशिष्टपरिज्ञानार्थाऽष्टाध्यायी इति ॥ ७८ ॥

यस्तु शब्दविषयकं शिष्टस्मरणमनादृत्य शास्त्रमात्रशरणः, स प्रत्यवायेन युज्यत इत्याह—शास्त्रदृष्टिस्त्विति।

'बहुलमन्यतरस्यामेकेषाम्' इत्यादिसामान्यलक्षणात् प्राप्तिमात्रे कस्यचिद् विधेर्विषयविभागेनानिश्चिते शिष्टप्रयोगमननुसृत्य स्वेच्छयैव शब्दान् प्रयुञ्जानोऽसाधु-शब्दप्रयोगादधर्मेण सम्बध्यते। प्रयोगमूलौ हि धर्माधर्मौ। तस्माच्छिष्टप्रयोगानुसारेण लक्षणं विषयविभागेनावस्थापयितव्यम्।

यद्येवम्, अस्तु शिष्टप्रयोग एव, किमनर्थकेन शास्त्रेणेत्याह—अपश्यतां शिष्टप्रयोगं साक्षादकुर्वतां शास्त्रमेव चक्षुरिव चक्षुः, शब्दतत्त्वनिदर्शननिबन्धनत्वात्।

एवञ्च शास्त्रेण लक्षितान् शब्दान् ज्ञात्वा लक्षणनिरपेक्षमेव साधून् प्रयुञ्जानान् शिष्टाननुमिमते। तेभ्यश्च सामान्यलक्षणे भ्रान्तिमपनयन्तीति शास्त्रमपि सफलम्।

---

अस्यार्थः—शास्त्रदृष्टिस्तु=शास्त्रमात्रदृष्टिस्तु पुरुषः शास्त्रस्य=सामान्यशास्त्रस्यानिश्चिते विषयविभागेनानिश्चिते प्राप्तिमात्रेऽपि शिष्टप्रयोगमननुसृत्य स्वेच्छयैव शब्दान् प्रयुञ्जानोऽपशब्द-प्रयोगाद् याज्ञे कर्मणि प्रत्यवायेन युज्यते।

नन्वेवं शिष्टप्रयोगेणैव शब्दसिद्धौ शास्त्रमनर्थकमित्याशङ्क्याह—शास्त्रं चक्षुरपश्यतामिति।

अस्यार्थः—शिष्टप्रयोगमपश्यताम्=साक्षादकुर्वतां पुंसाम्, शास्त्रमेव साधुशब्ददर्शने चक्षुः, शब्दतत्त्वदर्शने कारणत्वात्। एवञ्च शिष्टप्रयोगमपश्यतां लक्षणैकचक्षुष्काणां कृते शास्त्रं सार्थकमिति।

अयं भावः—"बहुलमन्यतरस्यामेकेषाम्" इत्यादिसामान्यशास्त्रात् कस्यचिद् विधेः प्राप्तिमात्रे विषयविभागेनानिश्चिते शिष्टप्रयोगमननुसृत्य स्वेच्छयैव शब्दान् प्रयुञ्जानोऽसाधुशब्द-प्रयोगादधर्मेण युज्यते।

तद् यथा—"कृत्यल्युटो बहुलम्" इति सामान्येनोच्यते। तत्र यथा='दीयतेऽस्मै दानीयो विप्रः' इति शिष्टप्रयोगमनुसृत्य संप्रदानेऽनीयर्प्रत्ययो भवति। तथा बहुलग्रहणात् 'दीयतेऽनेन इति दानीयः' इति करणेऽनीयरं शिष्टप्रयोगमनुसृत्य प्रयुञ्जानोऽधर्मेण युज्यत इति। शिष्टप्रयोग-मूलकौ हि धर्माधर्मौ। तस्माच्छिष्टप्रयोगानुसारेण लक्षणम्=सामान्यशास्त्रं विषयविभागेनाव-स्थापयितव्यम्।

यद्येवम्, अस्तु शिष्टप्रयोग एव शब्दसाधुत्वनियामकः, किमनर्थकेन शास्त्रेणेत्याशङ्क्याह—अपश्यतां शिष्टप्रयोगं साक्षादकुर्वतां शास्त्रमेव चक्षुरिव चक्षुः, शब्दतत्त्वनिदर्शने निबन्धनत्वात्= कारणत्वात्।

एवञ्च शास्त्रेण लक्षितान्=विहितान् शब्दान् ज्ञात्वा लक्षणनिरपेक्षमेव साधून् शब्दान् प्रयुञ्जानान् शिष्टान् अनुमिमते। तथा चायमनुमानप्रयोगः—एतल्लक्षणनिर्माणकारुपूर्वकालिकाः शिष्टाः, लक्षणनिरपेक्षमेव साधून् शब्दान् प्रयुञ्जते, लक्षणनिर्माणपूर्वकालिकत्वे सति निरावरण-ख्यातित्वात्, एतल्लक्षणनिर्मातृवदीति।

न च पक्षभूतेषु शिष्टेषु हेतुसत्त्वेऽपि पूर्वपूर्वलक्षणापेक्षासत्त्वेन हेतोरप्रयोजकत्वाशङ्का कार्या, आर्षचक्षुषा शब्दप्रत्यक्षे लक्षणापेक्षायाः सर्वथाऽप्रसक्तेः। प्रकृतमनुसरामः। तेभ्यश्च= शिष्टप्रयोगेभ्यश्च सामान्यलक्षणे विषयविभागविषयां भ्रान्तिमपनयन्तीति शास्त्रमपि सार्थकम्।

तथा च 'लक्ष्यलक्षणे व्याकरणम्' इत्युक्तम्। 'सैषा शिष्टपरिज्ञानार्थाष्टाध्यायी' इति च॥ ७९॥

यदि तर्हि शास्त्रं चक्षुः, किमिति तत् क्वचिद् 'न वानिष्टादर्शनात्'(भा०वा०२।२।३०) इति प्रत्याख्यायत इत्याशङ्क्याह—

**अर्थान्तराभिधानाच्च पौर्वापर्यं न भिद्यते।**
**राजदन्ताहिताग्न्यादिराजाश्वादिषु सर्वथा॥८०॥**

राजदन्तादौ लौकिकं यन्नियतं पौर्वापर्यम्, तन्न भिद्यते नान्यथा कदाचिदपि भवतीति विप्रयोगादर्शनाच्छास्त्रमत्र प्रत्याख्यायते। प्रयोगो विप्रयोगश्च द्वयं यत्रैक-

---

तथा च भाष्ये—"लक्ष्यलक्षणे व्याकरणम्" इत्युक्तं पस्पशायाम्। लक्ष्यं शिष्टप्रयोगः, लक्षणं सूत्रम्, ते उभे व्याकरणमित्यर्थः। सैषा शिष्टपरिज्ञानार्थाऽष्टाध्यायी इत्यपि तत्रैवोक्तम्। अत्र शिष्टपरिज्ञानं प्रागुक्तरीत्या शिष्टानुमानं बोध्यमिति॥ ७९॥

ननु यदि शिष्टप्रयोगमपश्यतां लक्षणैकचक्षुष्काणां शास्त्रं चक्षुः, तर्हि किमिति तत्=शास्त्रम् "न वाऽनिष्टादर्शनात्" इति क्वचित् प्रत्याख्यायत इत्याशङ्क्याह=अर्थान्तराभिधानाच्चेति।

अस्यार्थः—राजदन्ताहिताग्न्यादिराजाश्वादिषु="राजदन्तः, दन्तराजः, आहिताग्निः, अग्न्याहितः, राजाश्वः, अश्वराजः" इत्यादिषु शब्देषु यत् तत्तदर्थे नियतं लौकिकं पौर्वापर्यम्, तदर्थान्तराभिधानाच्च=भिन्नार्थाभिधानात्तु, सर्वथा न भिद्यते, किन्तु तत्तदर्थवाचिनि तत्तच्छब्दे नियतमेव 'दन्तानां राजा राजदन्तः' इति, 'राज्ञो दन्तो राजदन्तः' इति। किन्त्वेकस्मिन्नर्थे एकमेव पौर्वापर्यं नियमेन भवति। अस्ति हि राजदन्त इति राज्ञो दन्त इति, दन्तराज इति, दन्तानां राजा इति, एकस्मिन्नर्थे एकमेव पौर्वापर्यम्। राजाश्व इत्यत्र राज्ञोऽश्व इति, अश्वराज इत्यत्राश्वानां राजा इति, अर्थभेदेऽपि एकस्मिन्नर्थे एकमेव पौर्वापर्यम्। आहिताग्निरिति, अग्न्याहित इति चोभयत्रापि नास्ति अर्थभेदः। 'समाने चार्थे शास्त्रान्वितोऽशास्त्रान्वितस्य निवर्तको भवति' इति दन्तानां राजा इत्यर्थे राजदन्त इति दन्तराज इत्यस्य निवर्तको भवतीति।

किञ्च, राज्ञो दन्त इत्यर्थे राजदन्त इति दन्तराज इत्यस्य निवर्तको भवतीति 'राजदन्तादिषु परम्' इत्यावश्यकमिति वक्तुं न शक्यते, समानेऽर्थे प्रयोगविप्रयोगयोरदर्शनादिति। अग्निराहितो येन इत्यर्थे 'अग्न्याहितः, आहिताग्निः' इत्युभयमपि भवतीति 'वाऽऽहिताग्न्यादिषु' इति प्रत्याख्यायते— 'न वाऽनिष्टादर्शनाद्' इति।

अयं भावः—राजदन्तादौ लौकिकं यन्नियतं पौर्वापर्यं तन्न भिद्यते, कदाचिदपि नान्यथा भवतीति विप्रयोगादर्शनात्=विरुद्धप्रयोगादर्शनात् शास्त्रमत्र प्रत्याख्यायते "राजदन्तादिषु परम्" (पा० २।२।३१) इति।

स्मिन्नर्थे दृश्यते, तत्र शास्त्रारम्भो विप्रयोगनिवारणेन सफलः। इह तु 'दन्तराजः, अश्वराजः' इति प्रयोगविपर्यासे विवक्षितविपरीतोऽर्थो गम्यते, न तु य एव राजदन्त इत्यादौ। समाने चार्थे शास्त्रान्वितोऽशास्त्रान्वितस्य निवर्तकः। आहिताग्न्यादौ तु प्रयोगानियमेऽप्यर्थाभेदो दृश्यत इति प्रत्याख्यानमेव युक्तम्।

क्वचित् तु पाठः 'पौर्वापर्यं न विद्यते' इति। पौर्वापर्यमुपेदश्यत्वेन नास्तीत्यर्थः॥ ८०॥

यदि तर्हि विप्रयोगादर्शनाच्छास्त्रमत्र प्रत्याख्यायते, तदा 'गर्गाः' इत्यादावपि लुकुच्छास्त्रेण किं कार्यमित्यत आह—

**विनैव प्रत्ययैर्वृत्तौ ये भिन्नार्थाभिधायिनः।**
**गर्गादयो लुका तेषां साधुत्वमनुगम्यते॥८१॥**

शब्दानां स्वाभाविकमर्थाभिधानमिति वृत्तावेकार्थीभावे गर्गा वत्सा इत्यादयोऽपत्यप्रत्ययमन्तरेण प्रकृत्यर्थभिन्नं प्रत्ययार्थमपत्यलक्षणमाचक्षते। गार्ग्य इत्यादि च प्रत्ययसहितं तदभिधानं दृष्टम्। 'न केवला प्रकृतिः प्रयोक्तव्या' इति "परश्च" (पा० ३।१।२)

---

यत्रैकस्मिन्नर्थे प्रयोगो विप्रयोगश्चेतिद्वयं दृश्यते, तत्र शास्त्रारम्भो विप्रयोगनिवारणेन सफलः। इह तु 'दन्तराजः, अश्वराजः' इति राजदन्तादिप्रयोगविपर्यासे विवक्षितविपरीतोऽर्थो गम्यते। न तु य एव राजदन्तादौ गम्यते स एव। 'समाने चार्थे शास्त्रान्वितोऽशास्त्रान्वितस्य निवर्तको भवति'। आहिताग्न्यादौ तु पौर्वापर्येण प्रयोगस्यानियमेऽप्यर्थाभेद उभयत्रापि दृश्यत इति 'वा आहिताग्न्यादिषु' इत्यस्य प्रत्याख्यानमेव युक्तम्।

क्वचित्तु पाठः—'पौर्वापर्यं न विद्यते' इति। पौर्वापर्यमुपदेश्यत्वेन नास्तीति तदर्थः। शास्त्रेण पौर्वापर्योपदेशो न कर्तव्य इति यावत् पौर्वापर्यस्य लोके नियतत्वात्, विप्रयोगादर्शनाच्चेति॥ ८०॥

यदि तर्हि विप्रयोगादर्शनात् = विरुद्धप्रयोगादर्शनात् शास्त्रमत्र = राजदन्तादिषु प्रत्याख्यायते, तदा गर्गा इत्यादावपि विप्रयोगादर्शनाद् रूपसिद्धे 'यञो लुक्' शास्त्रेण किं कार्यमित्याशङ्क्याह = विनैव प्रत्ययैरिति।

अस्यार्थः—येऽपत्यप्रत्ययैर्विनैव तद्धितवृत्तौ प्रकृत्यर्थभिन्नापत्यप्रत्ययार्थाभिधायिनो बहुवचनान्ता गर्गादयः शब्दाः, तेषां प्रत्ययरहितानाम् "परश्च" इति नियमेनासाधुत्वे प्राप्ते परत्रोत्पन्नस्य यञो लुका साधुत्वमनुगम्यते = अनुस्त्रियते। 'न केवला प्रकृतिः प्रयोक्तव्या' इति नियमस्य 'परश्च' (पा० ३।१।२) इति शास्त्रावेदितस्य लुगतिरिक्तविषयकत्वादिति।

अयं भावः—शब्दानां स्वाभाविकम् = स्वभावकृतमर्थाभिधानम्, न तु कृत्रिममिति, एकार्थीभावरूपायां वृत्तौ गर्गा वत्सा इत्यादयोऽपत्यप्रत्ययमन्तरेण प्रकृत्यर्थभिन्नं प्रत्ययार्थमपत्यलक्षणमाचक्षते स्वभावेन। गार्ग्य इत्यादिकञ्च प्रत्ययसहितं तदभिधानम् = अपत्यप्रत्ययार्थाभिधायकं

इति नियमेनावेदितम् । अतः शास्त्रप्रक्रियानुसारेण केवलस्य प्रकृतिरूपस्यासाधुत्वे प्राप्ते लुगन्वाख्यानमुपपद्यते ।। ८१ ।।

न चैवमपि सोऽयमित्यभिसंबन्धादपत्ये गर्गादीनां प्रयोगः सिध्यति । तद् यथा भृगुश्चरति, अङ्गिराश्चरतीत्यपत्यवतोऽपत्ये प्रयोग इति किं लुगन्वाख्यानेनेत्यत आह—

**सोऽयमित्यभिसंबन्धात् प्रत्ययेन विना यदि ।**
**बभ्र्वादयः प्रयुज्येरन्नपत्ये नियमो भवेत् ॥८२॥**

अपत्यापत्यवत्सम्बन्धपूर्वः ( पूर्वकात् ) सोऽयमित्यभेदेनोपचारादपत्यवताऽपत्यमित्युच्यते गर्गा इति । सोऽयमित्यभेदसंबन्धः कथ्यते । बहुवचनानुपपत्त्या हि गर्गापत्यान्युच्यन्ते, मूलप्रकृतेरेकत्वाद् बहुवचनानुपपत्तेः । तत्र चाभेदसंबन्धे भेदसंबन्धस्याविवक्षितत्वाद् अपत्यप्रत्ययो नास्तीति शक्यते लुगवक्तुम्, किन्तु अभेदसम्वन्धस्योपचरितस्य नियतभेद( संबन्ध )पूर्वकत्वाभावादन्तेवासिनोऽपि गर्गस्य समारोपितगर्गरूपा बहुवचनेन प्रत्याख्यन्त इत्यपि शक्यते वक्तुमिति नियमेनापत्या-

---

दृष्टम् । न केवला प्रकृतिः प्रत्ययार्थे प्रयोक्तव्या इति "परश्च" ( पा० ३।१।२ ) इति नियमेनावेदितम् । अतः शास्त्रप्रक्रियानुसारेण केवलस्य=अपत्यप्रत्ययरहितस्य प्रकृतिरूपस्यासाधुत्वे प्राप्ते तत्साधुत्वोपपत्तये 'गर्गाः' इत्यादौ बहुवचने यञो लुगन्वाख्यानमुपपद्यत इति ।। ८१ ।।

न चैवमपि जन्यजनकभावसंबन्धमूलकतत्त्वारोपमूलकात् 'सोऽयम्' इत्यभिसंबन्धात्=गर्गापत्ययोरभेदप्रत्ययाद् गर्गादीनामपत्ये गर्गा विदा उर्वा इत्यादयः प्रयोगाः सिद्धचन्ति ।

तद् यथा—भृग्वपत्ये भृगुश्चरति इति, अङ्गिरसोऽपत्येऽङ्गिराश्चरति इति अपत्यवतः पितामहादेरपत्ये प्रयोग इति 'किं गर्गाः' इत्यादौ यञादेरपत्यप्रत्ययस्य लुगन्वाख्यानेन इत्यत आह—सोऽयमित्यभिसंबन्धादिति ।

अस्यार्थः—यदि अपत्यप्रत्ययेन विना 'सोऽयम्' इत्यभिसंबन्धात्=जन्यजनकभावमूलकतत्त्वारोपमूलकाभेदारोपविषयादभेदसंबन्धाद् बभ्र्वादयः=बभ्रुगर्गादयोऽपत्ये प्रयुज्येरन् 'बभ्रवः, गर्गाः' इति, तदाऽपत्यप्रत्ययस्य लुकाऽपत्ये नियमो भवेत् । अपत्ये एव केवला प्रकृतिः प्रयोक्तव्या, न तु अन्तेवास्यादिष्विति अन्तेवास्यादिषु गर्गा इति प्रयोगो न भवतीति ।

अयं भावः—अपत्यापत्यवत्संबन्धपूर्वकात्=जन्यजनकभावसंबन्धपूर्वकात् सोऽयमित्यभेदेनोपचारात्=व्यवहारादपत्यवता पितामहादिनाऽपत्यमित्युच्यते 'गर्गाः' इति । 'सोऽयम्' इति अभेदसंबन्धः कथ्यते । मूलप्रकृतौ बहुवचनानुपपत्त्या हि गर्गापत्यानि गर्गा इत्युच्यन्ते, मूलप्रकृतेरेकत्वाद् बहुवचनानुपपत्तेः । तत्र चाभेदसंबन्धे आरोपिते भेदसंबन्धस्य जन्यजनकभावस्याविवक्षितत्वादपत्यप्रत्ययो नास्तीति शक्यते लुगवक्तुमपत्यप्रत्ययस्य, किन्तूपचरितस्य=आरोपितस्याभेदसंबन्धस्य नियतभेदसंबन्धपूर्वकत्वाभावाद् गर्गस्यान्तेवासिनोऽपि समारोपितगर्गरूपा बहुवचनेन

दीनामभिधानं न प्रतीयेत। तस्मादपत्ये नियमार्थमपत्यप्रत्ययस्य लुगुच्यते। स्वभावादेव तु प्रत्ययरहिता प्रकृतिस्तदर्थं ब्रूते। अन्यत्र प्रत्ययलक्षणार्थं लुक्, इह त्वर्थनियमार्थम् ॥ ८२ ॥

'प्रष्ठस्येयम्'इतीदमर्थप्रत्ययस्य तर्हि लुगारम्भणीयोः, अन्यथा नियमेन भार्या न प्रतीयेतेत्याशङ्क्याह—

**सोऽयमित्यभिसंबन्धे लिङ्गोपव्यञ्जनादृते।**
**प्रष्ठादिषु न जायैव नियमेन प्रतीयते ॥८३॥**

सत्यमत्रापि यत्नं विना भार्यायामभेदोपचारान्नियमो न स्यात्। अस्ति ह्यत्रापि यत्नः, "पुंयोगादाख्यायाम्" (पा० ४-१-४८) इति स्त्रीप्रत्ययो लिङ्गोपव्यञ्जनो यतः। आख्याग्रहणाद्धि यादृशः पुंसि दृष्टप्रयोगः शब्दः, तद्रूपादेव स्त्रीप्रत्ययोऽन्वाख्यायत इति तद्धितान्तस्याख्यारूपत्वाभावात् तदनुत्पत्तावनुमितायां सत्यप्यभेदसंबन्धे स्त्रीप्रत्ययसहायात् प्रष्ठादिशब्दाद् भार्यावगतिः।

---

प्रत्याय्यन्त इत्यपि वक्तुं शक्यत इति नियमेनापत्यादीनामभिधानं न प्रतीयते। तस्मादपत्ये नियमार्थमपत्यप्रत्ययस्य लुगुच्यते।

वस्तुतस्तु स्वभावादेव प्रत्ययरहिता प्रकृतिस्तदर्थम्=प्रत्ययार्थं ब्रूते। अन्यत्र=राजपुरुष इत्यादौ समासे प्रत्ययलक्षणार्थम्="प्रत्ययलोपे प्रत्ययलक्षणम्" (पा०१।१।६२)इति शास्त्रप्रवृत्त्यर्थं लुक्, इह तु='गर्गाः' इत्यादौ तु अर्थनियमार्थम्=अपत्य एव लुगिति नियमार्थमिति ॥ ८२ ॥

ननु 'प्रष्ठी' इत्यत्र प्रष्ठस्य=अग्रगामिनः इयमिति इदमर्थप्रत्ययस्य अणः तर्हि लुगारम्भणीयः, अन्यथा अभेदोपचारे नियमेन ततः 'भार्या न प्रतीयेत' लुकि तु सति भार्यायामेव लुगिति प्रतीयेतेत्याशङ्क्याह=सोऽयमित्यभिसंबन्ध इति।

अस्यार्थः—सोऽयमित्यभिसंबन्धे प्रष्ठभार्यायां प्रष्ठोऽयमित्यभेदोपचारे लिङ्गोपव्यञ्जनादृते लिङ्गोपव्यञ्जनं लिङ्गव्यञ्जकं स्त्रीप्रत्ययरूपं यत्नं विना, प्रष्ठादिषु प्रष्ठादिशब्देषु अभेदोपचारेण प्रयुक्तेषु सत्सु ततो जायैव नियमेन न प्रतीयते, प्रष्ठशब्दात् स्त्रीप्रत्यये तु कृते नियमेन भार्यैव प्रतीयते। "पुंयोगादाख्यायाम्" (पा० ४।१।४८) इति आख्याग्रहणात्। प्रष्ठीशब्दे हि प्रष्ठभार्यावाचिनि प्रस्थानकर्तृत्वरूपस्यार्थस्याख्यानसंभवः, प्रष्ठभार्यायामपि पत्युः प्रस्थाने संविधानं संपादयन्त्यां प्रस्थानकर्तृत्वरूपप्रवृत्तिनिमित्तकस्य प्रष्ठशब्दस्य प्रवृत्तिसंभवादिति।

अयं भावः—सत्यमत्रापि=षष्ठीशब्देऽपि यत्नं विना भार्यायां प्रष्ठाभेदोपचारान्नियमः=नियमेन भार्याभानं न स्यात्, किन्तु अस्ति हि अत्रापि यत्नः। यतोऽत्र "पुंयोगादाख्यायाम्" (पा० ४।१।४८) इति स्त्रीप्रत्ययो ङीष्रूपो लिङ्गोपव्यञ्जनः=स्त्रीत्वरूपलिङ्गव्यञ्जको वर्तते। सूत्रे आख्याग्रहणाद्धि यादृशः पुंसि दृष्टप्रयोगः शब्दः, तद्रूपादेव स्त्रीप्रत्ययोऽन्वाख्यायते। स्त्रियामिति तद्धितान्तस्य प्रष्ठशब्दार्थाख्यानकर्तृत्वाभावेनाख्यारूपत्वाभावात् तदनुत्पत्तौ=तद्धितानुत्पत्तावनुमितायां सत्यपि प्रष्ठभार्ययोरभेदसंबन्धे स्त्रीप्रत्ययसहायादेव प्रष्ठादिशब्दाद् भार्यावगतिः।

ननु भगिन्यादावपि कथं न संप्रत्ययः? मैवम्, प्रस्थानकर्तृत्वासङ्गाद्धि स्त्रियामपि प्रस्थाने संविधानं संपादयन्त्यां पुंशब्दः प्रवर्तते। संविधातृत्वं च भार्याया एवोपपद्यते, नान्यस्याः ॥ ८३ ॥

'प्रस्थो व्रीहिः' इत्यादौ तर्हि प्रस्थेन प्रमित इति नियमप्रतिपत्त्यर्थं प्रत्ययस्य लुगन्वाख्येय इत्याशङ्क्याह—

**मानमेयाभिसंबन्धविशेषेऽङ्गीकृते तथा।**
**प्रस्थादीनामसाधुत्वं तद्धितेन विना भवेत् ॥८४॥**
**तद्धितो योगभेदेन वाक्यं वा स्याद् विभाषितम्।**
**परिमाणाधिके तत्र प्रथमा शिष्यते पुनः ॥८५॥**

अत्राप्यध्यारोपेणाभेदसंबन्धे मानमेययोगो नियमेन न प्रतीयेत, सामीप्यादेरपि संभवादिति "तदस्य परिमाणम्" ( पा०५।१।५७ ) इति योगविभागेन तद्धितः स्यात्। वाक्यं वा महाविभाषया, प्रस्थः परिमाणमेषां व्रीहीणामिति। यत्नान्तरं परिमाणाधिके

---

ननु भगिन्यादावपि कथं न प्रष्ठीशब्दात् संप्रत्ययः। मैवम्, प्रस्थानकर्तृत्वासङ्गाद्धि स्त्रियामपि पत्युः प्रस्थाने संविधानं सम्पादयन्त्यां पुंशब्दः प्रवर्तते, प्रस्थाने संविधातृत्वञ्च पाथेयादिरूपमार्गोपकरणसंवादनेन भार्याया एवोपपद्यते गृहे सन्निधानात् स्वाम्याच्च; नान्यस्याः= भगिन्यादेरिति ॥ ८३ ॥

नन्वेवं तर्हि 'प्रस्थो व्रीहिः' इत्यादौ प्रस्थेन प्रमित इत्यर्थस्य नियमेन प्रतिपत्त्यर्थं परिमाणप्रत्ययस्य लुगन्वाख्येय इत्याह = मानमेयाभिसंबन्धेति। तद्धितो योगभेदेनेति च।

अस्य पद्यद्वयस्यार्थः—तथा अध्यारोपेण, मानमेययोः सोऽयमित्यभिसंबन्धेऽङ्गीकृते सति तद्धितेन विना प्रस्थादीनामसाधुत्वं भवेत्, 'प्रस्थो व्रीहिः' इति, मानमेयसंबन्धस्य सोऽयमित्यभिसंबन्धप्रयोजकस्य नियमेनाप्रत्ययात्, सामीप्यादेरपि अभेदाध्यारोपप्रयोजकस्य संभवादिति 'तदस्य परिमाणम्' (पा० ५।१।५७) इति योगभेदेन योगविशेषणतद्धितो वा स्यात् 'प्रास्थिकः' इति।

यत्तु हेलाराजेन व्याख्यातम्—योगविभागेनेति, तदपेशलम्; अस्य सूत्रस्य प्रास्थिकशब्दसाधकस्यैकयोगत्वात्। यद्वाऽष्टाध्याय्याः संहितापाठमभिप्रेत्य योगविभाग उक्त इति कथञ्चित् समाधेयम्। तद्धिताधिकारे प्रवृत्तया महाविभाषया विभाषितं वाक्यं वा स्यात्, प्रस्थः परिमाणमस्येति। परिमाणाधिके = परिमाणातिरिक्ते तत्र = प्रमेये पुनः प्रथमा शिष्यते उपदिश्यते = प्रातिपदिकार्थे प्रथमा इत्युपदेशे कृतेऽपि प्रस्थो व्रीहिरिति।

अयं भावः—'प्रस्थो व्रीहिः' इत्यत्रापि व्रीहौ प्रस्थत्वस्याध्यारोपेण प्रस्थोऽयमित्यभेदसंबन्धे प्रस्थव्रीह्योः प्रतिपद्यमाने तयोर्मानमेयसंबन्धोऽभेदप्रयोजको न प्रतीयेत, सामीप्यादेरपि तयोरभेदप्रयोजकस्य संभवात्। 'प्रस्थो व्रीहिः' इत्यतः 'प्रस्थसमीपो व्रीहिः' इत्यप्यनर्थः प्रतीयेत इति 'तदस्य परिमाणम्' (पा० ५।१।५७) इति योगेन तद्धितः स्यात् 'प्रास्थिक' इति। तद्धिताधिकारे प्रवृत्तया महाविभाषया वाक्यं वा स्यात्, प्रस्थः परिमाणमेषां व्रीहीणामिति। 'प्रस्थो व्रीहिः' इति प्रयोग-

प्रातिपदिकार्थे प्रथमालक्षणमारब्धम् । निमित्तरूपेण निमित्तिनः प्रस्थप्रमितस्य व्रीह्यादेर्गौणस्याभिधाने प्रातिपदिकार्थग्रहणादेव सोऽयमिति संबन्धे सिद्धा प्रथमा । प्रस्थः परिमाणमेषां व्रीहीणामिति ( प्रस्थो व्रीहिरिति ) ।

परिमाणातिरिक्ते प्रमेये भूयः परिमाणग्रहणेनोपदिश्यते। तेन प्रथमान्तात् परिमाणशब्दान्मुख्यत एव प्रमेयं प्रतीयते। तद्धितोऽपि विभाषितो वचनसामर्थ्यान्न बाध्यते 'प्रास्थिकः' इति । वाक्यमपि भवति ।। ८४,८५ ।।

ननु च परिमाणवाचि प्रातिपदिकं कथं परिमेये वर्तत इत्याह—

**व्यतिरिक्तस्य साधुत्वे तदेव च निदर्शनम् ।**
**युज्यतेऽङ्गीकृताधिक्यं तत् सर्वाभिर्विभक्तिभिः ।।८६।।**

---

सिद्धयर्थं यत्नान्तरं परिमाणाधिके प्रातिपदिकार्थे प्रथमालक्षणमारब्धं सूत्रकारेण । व्रीहीणां परिच्छेदे निमित्तरूपेण प्रस्थेन निमित्तिनः प्रस्थप्रमितस्य व्रीह्यादेर्गौणस्य प्रस्थपदार्थस्य सोऽयमित्यभिसंबन्धे सति अभिधाने प्रातिपदिकार्थग्रहणादेव सिद्धा प्रथमा 'प्रस्थो व्रीहिः' इति ।

न च गौणमुख्यन्यायेनात्र गौणे प्रातिपदिकार्थे प्रथमा न स्यादिति वाच्यम्, पदसंस्कारपक्षे मुख्ये प्रस्थपदार्थे प्रथमायां जातायां पश्चाद् व्रीहिपदार्थेन सह संबन्धे सति नामार्थयोरभेदान्वयानुपपत्तौ सत्यां प्रस्थपदस्य प्रस्थप्रमिते लक्षणायां गौणार्थस्य प्रतीतावपि प्राग् जातायाः प्रथमाया निवर्तकाभावेनाविनिवृत्तेः । अत एव जातसंस्कारो न निवर्तत इत्याहुः ।

किञ्चात्र सोऽयमित्यभिसम्बन्धे भेदग्रहाभावे प्रस्थत्वेन व्रीहीणां माने सति न गौणार्थत्वमित्यपि वक्तुं शक्यते । प्रस्थप्रमितत्वेन व्रीहीणां माने हि प्रस्थपदार्थस्य गौणत्वं वक्तुं शक्यते । एवं 'प्रस्थो व्रीहिः' इत्यत्र प्रातिपदिकार्थत्वादेव प्रथमा सिद्धावपि परिमाणरूपप्रातिपदिकार्थातिरिक्ते प्रमेये 'प्रस्थो व्रीहिः' इत्यत्र प्रथमासिद्धयर्थं भूयः = पुनः सूत्रे परिमाणग्रहणेन प्रथमा उपदिश्यते । तथा च 'प्रस्थो व्रीहिः' इत्यत्र प्रमेयः प्रथमार्थः । प्रस्थप्रमेयो व्रीहिरिति तदर्थः । प्रमेये प्रथमार्थे तदेकदेशे प्रमेयत्वे प्रस्थपदार्थस्य प्रयोज्यप्रयोजकभावसंबन्धेनान्वयः । तेन प्रथमान्तात् परिमाणशब्दात् (प्रस्थशब्दात्) मुख्यत एव प्रमेयं प्रथमार्थः प्रतीयते । तद्धितोऽपि महाविभाषया विभाषितो वचनसामर्थ्यात् = तद्धितविधानसामार्थ्यात् प्रमेयेऽर्थे जायमानया प्रथमया न बाध्यते। महाविभाषया तद्धिताभावे वाक्यमपि भवतीति ।। ८४ ।। ८५ ।।

ननु च परिमाणवाचि प्रस्थादिकं प्रातिपदिकं कथम्, 'प्रस्थो व्रीहिः' इत्यादौ परिमेये वर्तत इत्याशङ्कयाह—व्यतिरिक्तस्य साधुत्व इति ।

अस्यार्थः—व्यतिरिक्तस्य प्रातिपदिकार्थपरिमाणव्यतिरिक्तप्रमेयार्थबोधकस्य 'प्रस्थो व्रीहिः' इत्यादौ प्रस्थादिशब्दस्य प्रथमान्तस्य साधुत्वे तदेव च = परिमाणात् पुनः प्रथमाविधानमेव च निदर्शनम् = ज्ञापकम्, तत् परिमेयवाचि पदम्, अङ्गीकृताधिक्यम् = प्रातिपदिकार्थापेक्षया स्वीकृतकर्मादिशक्तिभेदाधिक्यं यथायथं सकलाभिर्विभक्तिभिर्द्वितीयादिभिर्युज्यते, 'प्रस्थं पचति, प्रस्थेन क्रीणाति' इत्यादीति ।

तदेव परिमाणात् पुनः प्रथमाविधानं ज्ञापकं मानमेयसंबन्धोपहित-व्यतिरेकार्थाभिधाने ।

प्रस्थादेः स्वाभाविकं ह्यर्थाभिधानं ज्ञाप्यते । तथा च तद्धितेनेव भिन्नं प्रमेयं प्रथमयाभिधीयते । तत्र चान्तरङ्गे मानमेयसंबन्धे चरितार्था प्रथमा बाह्यक्रियाविभाविते कर्मादिके भेदे आधिक्येऽपेक्षिते संबन्धे विभक्त्यन्तैर्द्वितीयादिभिर्बोध्यते ।

अतो बाह्यक्रियाविभावितकर्मादिशक्तिभेदलक्षणं प्रातिपदिकार्थाधिक्यमङ्गीकृतं स्वीकृतं येन तत् परिमेयवाचि पदं यथायथं सकलाभिर्द्वितीयादिविभक्तिभिर्युज्यते संबध्यते । 'प्रस्थं पचति, प्रस्थेन क्रीतम्' इत्यादि । एवमभेदोपचारादभिधानेऽपि नियमार्थं लुगादियत्नारम्भः ॥ ८६ ॥

गुणगुणिनोस्तु स्वभावादेव नियतो योग इति किमर्थं गुणवचनेभ्यो मतुपो लुगन्वाख्यानमित्याह—

**शुक्लादिषु मतुब्लोपो व्यतिरेकस्य दर्शनात् ।**
**असाधुत्वनिवृत्त्यर्थं साधवस्ते बिदादिवत् ॥८७॥**

---

अयं भावः—प्रातिपदिकार्थमात्रे प्रातिपदिकात् प्रथमाविधानानन्तरं तदेव परिमाणात् पुनः प्रथमाविधानं मानमेयसंबन्धोपहितव्यतिरेकार्थाभिधाने = मानमेयसंबन्धेनोपहितो व्यतिरेकः परिमाणरूपप्रातिपदिकार्थाद् भेदो यस्य स तथाभूतोऽर्थः परिमेयरूपः, तदभिधाने ज्ञापकम् ।

प्रस्थादेः परिमाणवाचिनः प्रथमासहकारेण स्वाभाविकं हि परिमेयार्थाभिधानं परिमाणात् पुनः प्रथमाविधानेन ज्ञाप्यते । तथा च तद्धितेनेव प्रातिपदिकार्थपरिमाणाद् भिन्नं प्रमेयं प्रथमयाऽभिधीयते । तत्र च मेयरूपेऽर्थे मानस्यान्तरङ्गे मानमेयसंबन्धे चरितार्था प्रथमा बाह्यक्रियाविभाविते = बाह्यक्रियानिरूपिते कर्मादिके शक्तिभेदे सति तदाधिक्येऽपेक्षिते संबन्धे क्रियाकारकभावरूपे निमित्तभूते सति जायमानैर्विभक्त्यन्तैर्द्वितीयादिभिर्बोध्यते ।

अतो बाह्यक्रियाविभावितकर्मादिशक्तिभेदलक्षणं प्रातिपदिकार्थाधिक्यमङ्गीकृतं स्वीकृतं येन तत्परिमेयवाचिपदं यथायथं सकलाभिर्द्वितीयादिविभक्तिभिर्युज्यते = संबध्यते । 'प्रस्थं पचति' 'प्रस्थेन क्रीतम्' इत्यादि । एवमपत्येषु गर्गाभेदोपचारात् = गर्गाभेदारोपाद् गर्गा इत्यादौ तदभिधानेऽप्यपत्य एवेति नियमार्थं लुगादियत्नारम्भ इति ॥ ८६ ॥

ननु गुणगुणिनोऽस्तु स्वभावादेव नियतो योगः, समवायस्तादात्म्यं वा, तन्मूलके च तयोरभेदारोपे 'शुक्लः पटः' इत्यादिसिद्धौ किमर्थं गुणवचनेभ्यो मतुपो लुगन्वाख्यानमित्याशङ्क्याह = शुक्लादिषु मतुब्लोप इति ।

अस्यार्थः—पटस्य शुक्लो वर्णः इति व्यतिरेकस्य दर्शनात् 'शुक्लः पटः' इत्यादौ शुक्लादिषु शब्देषु जातस्य मतुपो लोपो वक्तव्यः, 'पटः शुक्लः' इत्यस्यासाधुत्वनिवृत्त्यर्थम् । प्रत्ययार्थे केवलायाः प्रकृतेः प्रयोगस्यासाधुत्वात् । अतस्ते लुप्तमतुप्काः शुक्लादयोऽत्रो लुकि बिदादिवत् साधव इति ।

'पटस्य शुक्लः' इति व्यतिरेको दृष्टः । तथा च 'शुक्लः पटः' इत्यव्यतिरेके मतुप् स्यादिति केवलायाः प्रकृतेरसाधुत्वशङ्का स्यादिति व्यतिरेकनिबन्धनस्योत्पन्नस्य मतुप्-प्रत्ययस्य युक्तं लुगन्वाख्यानम् । तथा 'ह्यव्यतिरेकात् सिद्धमित्युक्त्वा' (भा० वा० ५।२।९४) 'दृष्टो व्यतिरेकः' (भा० वा० ५।२।९४) इति पुनर्लुगेव समर्थितः । लुगन्वाख्यानद्वारेण च 'विदाः, गर्गाः' इत्यादिशब्दवद्गुणिनि संबन्धाद् वृत्तिराख्यायते ।

यथा हि स्वार्थविशिष्टापत्यार्थाभिधानाद् 'विदाः' इत्यादयः प्रयोगार्हाः, तथा शुक्लादयोऽपि, न तु सोऽयमित्यभिसंबन्धादेवेत्यर्थः ॥ ८७ ॥

तदेवं समानाधिकरणवृत्तेः प्रस्तावेन विशेषणविशेष्यभावसमर्थनपूर्वकं प्रसक्तानुप्रसक्तायातं विचारं परिसमाप्य प्रकृतमेव विशेषणविशेष्यभावं वृत्तावभेदप्रतीतेरनुपपद्यमानमाशङ्क्यैकीयमतेन तावदुपपादयितुमाह—

**विशेषणाद् विशेष्येऽर्थे तद्भावाभ्युच्चये सति ।**
**पुनश्च प्रतिसंहारे वृत्तिमेके प्रचक्षते ॥८८॥**

इहैकया प्रख्यया द्वयोर्विशेषणविशेष्ययोर्ग्रहणे परस्परोपकाराग्रहणात् किंभूतो विशेषणविशेष्यभावः स्यात् ।

---

अयं भावः—पटस्य शुक्लो वर्ण इति गुणगुणिनोर्व्यतिरेको दृष्टः । तथा च 'शुक्लः पटः' इत्यव्यतिरेके मतुप् स्यादिति केवलायाः प्रकृतेः प्रयोगेऽसाधुत्वाशङ्का स्यादिति गुणगुणिनोर्व्यतिरेकनिबन्धनस्योत्पन्नस्य मतुप्प्रत्ययस्य लुगन्वाख्यानं युक्तम् । तथाहि भाष्ये—अव्यतिरेकात् सिद्धमित्युक्त्वा—दृष्टो व्यतिरेक इति पुनर्लुगेव समर्थितः । लुगन्वाख्यानद्वारेण च 'विदाः, गर्गाः इत्यादिशब्दवद् गुणनि गुणसंबन्धाद् वृत्तिराख्यायते ।

यथा हि स्वार्थविशिष्टापत्यार्थाभिधानाद् विदा इत्यादयः प्रयोगार्हाः, तथा शुक्लादयोऽपि स्वार्थविशिष्टमतुबर्थाभिधानात् प्रयोगार्हाः, न तु सोऽयमित्यभिसंबन्धादेवेति ॥ ८७ ॥

तदेवं समानाधिकरणवृत्तेः समासरूपायास्तद्धितरूपायाश्च प्रस्तावेन=प्रसङ्गेन विशेषणविशेष्यभावसमर्थनपूर्वकं प्रसक्तानुप्रसक्तायातं विचारं परिसमाप्य प्रकृतमेव विशेषणविशेष्यभावं वृत्तावर्थभेदप्रतीतेरनुपपद्यमानमाशङ्क्यैकीयमतेन तावदुपपादयितुमाह—विशेषणाद् विशेष्येऽर्थे इति ।

अस्यार्थः—प्रथमं विशेषणादवच्छेदकत्वेन गृहीतात् हेतोर्विशेष्येऽर्थे तद्भावस्य विशेषणत्वस्य विशेष्यत्वेन सहैकत्राभ्युच्चये=समुच्चये सति पुनश्च वृत्तावेकार्थीभावस्य विवक्षया विशेष्यविशेषणभावस्य प्रतिसंहारे निवृत्तौ सत्यां वृत्तिमेके प्रचक्षते । 'नीलोत्पलम्' इत्यादौ पूर्वं नीलोत्पलयोर्विशेषणविशेष्यभावस्य भानम्, पश्चात् एकार्थीभावापत्त्या 'विशेषणविशेष्यभावस्य' प्रतिसंहार इति तत्प्रतिसंहार एव वृत्तिरित्याहुरेके ।

यत्तु हेलाराजेन 'अभ्युच्चये' इत्यस्य 'अतिरेके' इत्यर्थ उक्तः, स शब्दाद् बहिर्भूत इति हेयः ।

अयं भावः—इह=एकार्थीभावरूपायां वृत्तौ एकया प्रख्यया=एकेन प्रज्ञानेन विशिष्टार्थविषयकेण द्वयोर्विशेषणविशेष्ययोरेकार्थीभावापन्नयोर्ग्रहणे गुणप्रधानभावाग्रहणेन परस्परोपकाराग्रहणात् किंभूतो विशेषणविशेष्यभावः स्यात् ?

न हि वस्तुतो नियतजातीयं विशेषणं नाम किञ्चिदस्ति। न चाप्यत्र शाब्दी प्रतीतिरेका युज्यते। अभिधानक्रमाद्ध्यभिधेये क्रमिकैव प्रतीतिर्न्याय्या। ततश्च 'नागृहीतविशेषणा विशेष्ये बुद्धिः' इति पूर्वं विशेषणग्रहणम्, ततो विशेषणाद्धेतोरवच्छेदकत्वेन गृहीताद् विशेष्ये तद्भावस्य विशेषणरूपस्याभ्युच्चये अतिरेके सति पुनः प्रतिसंहारेऽसन्निधेस्तद्भावाभ्युच्चयस्यैवोपेक्षणे वृत्तिरेकार्थीभावः। विशेष्ये ह्यतिशयमाधाय कृतार्थं विशेषणं न स्वरूपेण विशेष्यमतिरेचयति, मा भूद् व्यर्थावसाय इति। तथा च विशिष्टस्यैवार्थस्य वृत्ताववधारणमुपपद्यते ॥ ८८ ॥

तदेतन्मतं दूषयति—

**निमित्ते प्रत्ययः पूर्वो नानुप्राप्तो निमित्तिना।**
**निमित्तवति बुद्धेश्च न निमित्तसरूपता ॥८९॥**
**संस्कारसहिताद् ज्ञानान्नोपश्लेषः स्मृतेरपि।**
**व्यापारे तन्निमित्तानां न ग्राह्यं स्याद् तथाविधम् ॥९०॥**

---

न हि वस्तुतो नियतजातीयं विशेषणं नाम किञ्चिदस्ति, सर्वस्यापि यत् किञ्चिन्निरूपितस्य विशेषणत्वस्य संभवात्। न चाप्यत्र=वृत्तौ शाब्दी प्रतीतिरेका युज्यते। अभिधाक्रमाद्धि अभिधेये क्रमिकैव प्रतीतिर्न्याय्या। "ततश्च नागृहीतविशेषणा विशेष्ये बुद्धिरिति पूर्वं विशेषणग्रहणम्, ततो विशेषणादवच्छेदकत्वेन गृहीताद् हेतोर्विशेष्ये तद्भावस्य विशेषणरूपस्याभ्युच्चये अतिरेके सति पुनः प्रतिसंहारेऽसंन्निधेस्तद्भावाभ्युच्चयस्यैवोपेक्षणे वृत्तिरेकार्थीभावः" इति हेलाराजः। अत्र=अभ्युच्चये इत्यस्य अतिरेके इति, प्रतिसंहारे इत्यस्योपेक्षणे इत्यर्थो न युक्तः, उदक्षरत्वाद्। अतः अभ्युच्चये इत्यस्य समुच्चये इति प्रतिसंहारे इत्यस्य च निवृत्ताविति अर्थ एवाक्षरानुगतत्वाद् ग्राह्य इति। विशेष्ये हि अतिशयमवच्छेदरूपमाधाय कृतार्थं विशेषणं न स्वरूपेण विशेष्यमतिरेचयति=पृथक् करोति, मा भूद् व्यर्थावसाय इति=मा भूत् विशेष्यस्य विशेषणरूपेण अभेदावसायो वृथा इति। तथा च वृत्तेः प्रागपोद्धारबुद्धौ विशेषणविशेष्यभावावसायेऽपि वृत्तौ विशिष्टस्यैवार्थस्यावधारणमुपपद्यत इति ॥ ८८ ॥

तदेतन्मतं दूषयति—निमित्ते प्रत्यय इति।

अस्यार्थः—प्रतिविषयं भिन्नानि ज्ञानानि क्षणिकानि चालम्बनानि स्वस्मिन् आकारसमर्पकाणि विषयाणामिति बौद्धानां=भिन्नज्ञानालम्बनवादे दूषणमिदम्। निमित्ते निमित्तविषयकः अवच्छेदनिमित्तभूतविशेषणविषयकः पूर्वः प्रत्ययः, निमित्तिना अवच्छेद्येन विशेष्यत्वाभिमतेन न प्राप्तः, निमित्तिविषयकोत्तरप्रत्ययकाले क्षणिकस्य निमित्तप्रत्ययस्य पूर्वस्य विनिष्टत्वात्। निमित्तवति बुद्धेश्च=निमित्तवत् पदाभिधेयविशेष्यविषया या बुद्धिर्ज्ञानं तस्या निमित्तसरूपता निमित्ताकारता विशेषणाच्छुरितत्वं न, तदानीं तत्र निमित्तस्य विशेषणस्य पूर्वप्रत्ययाकारस्यास्तमयेनाप्रतिभासनात्। एवञ्च ज्ञानयोस्तदाकारयोश्च विषययोः क्षणिकत्वेन विशेष्यविशेषणयोश्च सप्रतियोगिकत्वेन वस्तुस्वरूपमात्रग्राहकं ज्ञानं कथं तत्र विशेषणतां विशेष्यतां वा गृणीयाद्?

भिन्नज्ञानालम्बनवादे दूषणमिदम्। निमित्तेऽवच्छेदकाभिमते विशेषणे प्रथमः प्रत्ययो निमित्तिना विशेष्याभिमतेन नासादितः। न हि विशेषणग्रहणकाले विशेष्यग्रहणमत्र पक्षे, तस्य तदानीमस्तमयात्। निमित्तवति च विशेष्याभिमते या बुद्धिर्ज्ञानम्, तत्र निमित्तस्य विशेषणस्याप्रतिभासनान्न तदाच्छुरितत्वम्।

एवं च वस्तुस्वरूपमात्रग्रहणं ज्ञानं कथं तत्र विशेषणतां विशेष्यतां च गृह्णीयात्। विशेष्यापेक्षं हि विशेषणत्वं विशेषणापेक्षं च विशेष्यत्वमिति परस्परज्ञाने परस्परस्वरूपानाभासनादापेक्षिकं विशेषणविशेष्यत्वं न गृहीतं स्यात्।

अथ पूर्वज्ञानाहितवासनासव्यपेक्षमुत्तरं ज्ञानमिति तस्मात् क्रमेण द्वयोरनुभवेऽपि पश्चात् संस्कारक्रमेणायाता स्मृतिस्तत्रावच्छेद्यावच्छेदकभावमावेदयत इत्युच्यते, तदपि न; यस्माद् यथानुभवं स्मृतिरुपजायत इत्यनुभवगृहीतार्थरूपाधिक्यमुपश्लेषं परस्परयोजनमवच्छेद्यावच्छेदकत्वेन सङ्घटनं कथं सावकल्पयेत्। एवं ह्यनुभूतार्थविषयत्वं तस्या विघटेतेत्यप्रमाणं स्यात्।

---

यदि तूच्यते विशेषणविशेष्यविषयकानुभवद्वयजन्यवासनाद्वयजन्या समूहालम्बनात्मिका स्मृतिस्तयोरवच्छेद्यावच्छेदकभावमावेदयत इति तदाऽप्याह—संस्कारसहितादिति।

स्वस्वजन्यसंस्कारसहितात् पूर्वज्ञानादुत्तरज्ञानाच्च जन्याया विशेषणविशेष्योभयविषयिकायाः समूहालम्बनात्मिकायाः स्मृतेरपि तद्बलादपि, न तयोः परस्परमुपश्लेषः परस्परयोजनं परस्परमवच्छेद्यावच्छेदकत्वेन संघटनम्, अनुभवगृहीतार्थादधिकस्य परस्परमुपश्लेषस्यावच्छेद्यावच्छेदकभावरूपस्य विषयीकरणे स्मृतेरसामर्थ्यात्। स्मृतेरनुभवानधिकार्थग्राहित्वस्य स्वभावसिद्धत्वात्। तन्निमित्तानाम्=तस्याः स्मृतेर्निमित्तानामनुसंधातृशक्तीनां प्रमातृशक्त्यभिन्नानां विचित्राणां व्यापारे विशेष्यविशेषणयोरवच्छेद्यावच्छेदकभावं प्रति उपयोगरूपे कथ्यमानेऽनुभवग्राह्यं बाह्यं विशेषणविशेष्यरूपं तथाविधं वस्तु न स्यात्, किन्तु अवस्तु स्यात्। प्रमातृशक्त्यैवासत्यपि संश्लेषेऽर्थानां घटनादिति न वास्तविको विशेषणविशेष्यभावः समर्थित इति।

अयं भावः—अवच्छेदनिमित्तं यद् विशेषणं तद् विषयकः प्रथमः प्रत्ययो निमित्तिना-विशेष्याभिमतेन नासादितः। अत्र पक्षे = भिन्नज्ञानालम्बनवादे न हि विशेषणग्रहणकाले विशेष्यग्रहणम्, तस्य तदानीमस्तमयात्=विशेष्यग्रहणकाले विशेषणग्रहणस्यास्तमयात्। निमित्तवति च विशेष्यत्वेनाभिमते या बुद्धिः=निमित्तवद्विषया या बुद्धिर्ज्ञानम्, तत्र निमित्तस्य विशेषणस्य पूर्वज्ञानाकारस्य, पूर्वज्ञानस्य क्षणिकत्वेन क्षणिकस्य, अविद्यमानत्वेनाप्रतिभासनान्न तदाच्छुरितत्वम्=न विशेषणाकारत्वम्।

एवञ्च वस्तुस्वरूपमात्रग्रहणं पूर्वमुत्तरञ्च ज्ञानं कथं तत्र विशेषणतां विशेष्यताञ्च गृह्णीयात्? विशेष्यापेक्षं हि विशेषणत्वम्, विशेषणापेक्षञ्च विशेष्यत्वमिति परस्परज्ञाने परस्परस्वरूपानवभासादापेक्षिकं विशेषणत्वं विशेष्यत्वञ्च न गृहीतं स्यात्। अथ पूर्वज्ञानाहितवासनासव्यपेक्षमुत्तरं ज्ञानमिति स्थिते तस्मात् क्रमेण द्वयोरनुभवेऽपि पश्चात् तज्जनितसंस्कारक्रमेणायाता स्मृतिस्तत्रावच्छेद्यावच्छेदकभावमावेदयत इत्युच्यते, तदपि न; यस्माद् यथानुभवं स्मृतिरुपजायत

अथ यथा स्मृतिर्बाह्यविषयानुसन्धानात् तद्विषया कथ्यते, तथा बाह्यस्य तदानीमभावादान्तरस्यानुसन्धातुः प्रमातुर्या विचित्राः शक्तयः, ता अपि तस्या निमित्तमिति तेषां तन्निमित्तानां व्यापारेऽत्रावच्छेद्यावच्छेदकभावं प्रत्युपयोगे कथ्यमानेऽनुभवग्राह्यं बाह्यं वस्तु विशेषणविशेष्यरूपं न स्यात्। प्रमातृशक्त्यैवासत्यपि संश्लेषेऽर्थानां घटनादिति न भाविको विशेषणविशेष्यभावः समर्थितः ॥ ८९-९० ॥

मा भूद् भाविक इति चेदाह—

**अन्तःकरणवृत्तौ च व्यर्था बाह्यार्थकल्पना।**

**तस्मादनुपकारो वा ग्राह्यं वा न तथा स्थितम् ॥ ९१ ॥**

अन्तःकरणं क्रिया, यस्यासावनुसन्धाता प्रमातैवं कथ्यते। सर्वार्थग्राहकं वा मनोऽन्तःकरणम्, तस्य वृत्तौ व्यापारेऽत्र विशेषणविशेष्यभावादिविषयेऽभ्युपगम्यमाने

---

इत्यनुभवगृहीतार्थरूपाधिक्यम् = अनुभवगृहीतार्थरूपादधिकमुपश्लेषं परस्परयोजनमवच्छेद्यावच्छेदकत्वेन संघटनं सा = स्मृतिः, कथमवकल्पयेत् ? एवं हि अनुभूतार्थविषयकत्वं तस्या विघटेत इत्यप्रमाणं सा स्यात्।

अथ यथा स्मृतिर्बाह्यविषयानुसंधानात् तद्विषया = बाह्यविषया कथ्यते, तथा बाह्यस्य तदानीम् = स्मृतिकालेऽभावादान्तरस्य अनुसंधातुः प्रमातुः = प्रमात्रभिन्नस्य या विचित्राः शक्तयः, ता अपि तस्याः = स्मृतेर्निमित्तमिति तेषाम् = प्रमातृशक्तिरूपाणां तन्निमित्तानाम् = स्मृतिनिमित्तानां व्यापारे, अत्रावच्छेद्यावच्छेदकभावं प्रत्युपयोगे = स्मृतौ विशेष्यविशेषणयोरवच्छेद्यावच्छेदकभावं प्रति उपयोगरूपे कथ्यमानेऽनुभवग्राह्यं बाह्यं विशेषणविशेष्यरूपं वस्तु न स्यात्, किन्तु अवस्तु असत् स्यात्। असत्यपि विशेषणविशेष्ययोरवच्छेद्यावच्छेदकभावरूपे संश्लेषे प्रमातृशक्त्यैव विचित्रयाऽर्थानां विशेषणविशेष्यरूपाणां घटनादिति न भाविकः = वास्तविको विशेषणविशेष्यभावः समर्थित इति ॥ ८९-९० ॥

माभूद् भाविकः = वास्तविको विशेषणविशेष्यभाव इति चेत्, आह—अन्तःकरणवृत्तौ चेति।

अस्यार्थः—यस्यान्तःकरणं क्रियाऽसौ अनुसंधाता प्रमात्रभिन्न एवं कथ्यते = अन्तःकरणमित्युच्यते तस्य वृत्तौ च व्यापारे च, विशेष्यविशेषणयोरवच्छेद्यावच्छेदकभावं प्रति उपयोगरूपे प्रागुक्तरीत्या स्वीक्रियमाणे व्यर्था बाह्यार्थकल्पना, असत्यपि संश्लेषे प्रमातृशक्त्यैवार्थानां घटनादित्यस्य प्रागुक्तत्वात्। तस्मादेतद्ग्रन्थसंदर्भप्रतिपादिताद् हेतुकदम्बकात्, अनुपकारो वा—विशेषणविषयकस्य पूर्वप्रत्ययस्य क्षणिकत्वेन विशेषणस्य च विज्ञानाकारत्वेन पूर्वप्रत्ययेन सहैव विशेषणरूपस्यार्थस्याप्युपक्षयेणार्थस्य विशेष्यावच्छेदकत्वलक्षणो य उपकारस्तदभावो वा स्यात्।

अथवा—अनुसन्धातृप्रमातृवशेन तु मानसविकल्पगोचरे विशेष्यविशेषणयोरवच्छेद्यावच्छेदकभावेऽभ्युपगते ग्राह्यम्—विशेष्यं विशेषणं च, तथा स्थितम्—यादृगनुभूयते तथा स्थितं वस्तुभूतं न स्यात्। प्रमातृशक्त्यैवासत्यपि संश्लेषेऽर्थानां घटनादिति।

अयं भावः—अत्रान्तःकरणपदेन अन्तःकरणरूपक्रियावान् अनुसन्धाता प्रमाता उच्यते। अथवा सर्वार्थग्राहकम् = सर्वविषयग्राहकम्, मनोऽन्तःकरणम्, तस्य वृत्तौ विशेषणविशेष्यभावादिविषयके

सर्वत्रान्तःकरणस्यैवाभासो बहीरूपतयाध्यस्तो भवत्वर्थः, तावतैव लोकयात्रासिद्धेरिति किमनुपपद्यमानेन बाह्येन कल्पितेन प्रयोजनमिति बाह्यार्थवादिनं प्रतीदमुच्यते। तस्य हि विशेषणविशेष्यभावादिसम्बन्धो वस्तुसमवाय्यभिमतः।

तथा च कल्पनानामनुभवमूलत्वमिति तदनुभवायातोऽयं विशेषणविशेष्यविकल्पः। तत्र च यथास्वं विषयोपक्षयत्वात् प्रत्ययस्य तटस्थस्यार्थस्य विशेष्यावच्छेदकत्वलक्षणो नास्त्युपकारः। अनुसन्धातृप्रमातृवशेन तु मानसे विकल्पेऽभ्युपगते ग्राह्यस्य तद्रूपशून्यत्वमित्युक्तार्थनिगमनम् ॥ ९१ ॥

एवं परमते भिन्नज्ञानावलम्बनपक्षेऽनुपपत्तिमुद्भाव्य स्वमतेनैकज्ञानावलम्बनवादेन वास्तवं विशेषणविशेष्यभावमवस्थापयितुमाह—

**अनुस्यूतेव संसृष्टेरर्थे बुद्धिः प्रवर्तते।**
**व्याख्यातारो विभज्याथ तां भेदेन प्रचक्षते ॥ ९२ ॥**
**तदात्मन्यविभक्ते च बुद्ध्यन्तरमुपाश्रिताः।**
**विभागमिव मन्यन्ते विशेषणविशेष्ययोः ॥ ९३ ॥**

---

व्यापारे, अत्र=वृत्तौ अभ्युपगम्यमाने सर्वत्रान्तःकरणस्यैवाभासो वृत्तिरूपो बहीरूपतयाऽध्यस्तोऽर्थो भवतु, तावतैव लोकयात्रासिद्धेरिति किमनुपपद्यमानेन बाह्येनार्थेन कल्पितेन प्रयोजनमिति बाह्यार्थवादिनं बौद्धं प्रतीदमुच्यते, न तु विज्ञानवादिनं प्रति। तस्य हि=बाह्यार्थवादिनो हि विशेषणविशेष्यभावादिसम्बन्धो बाह्यवस्तुसमवायी अभिमतः, न तु आन्तरविज्ञानाकारवस्तुसमवायी। तथा च स्मृतिगोचरपदार्थकल्पनानामनुभवमूलकत्वमिति तदनुभवायातः=विशेषणविशेष्यानुभवायातोऽयं स्मृतौ विशेषणविशेष्यविकल्पो विशेषणविशेष्यविषयककल्पनारूपः।

तत्र च यथास्वम्=यथायथम्, प्रत्ययस्य सविषयोपक्षयत्वात्=विशेषणप्रत्ययस्य स्वविषयेण सहोपक्षीणत्वात् तटस्थस्यार्थस्य=विशेषणातिरिक्तस्यार्थस्य विशेष्यावच्छेदकत्वलक्षण उपकारो नास्ति। अनुसंधातृरूपप्रमातृवशेन तु मानसेऽर्थानां विकल्पे कल्पनारूपेऽभ्युपगते ग्राह्यस्य विषयस्य विशेषणविशेष्यरूपस्य यदनुभूयते बाह्यं रूपं तद्रूपशून्यत्वम्, तेन बहिरसद्रूपत्वञ्चेति एतत्सन्दर्भोक्तस्यार्थस्य निगमनम्=उपसंहार इति ॥ ९१ ॥

एवं परमते - बौद्धमते विशेषणविशेष्ययोर्भिन्नं ज्ञानमालम्बनमिति पक्षे विशेषणविशेष्यभावानुपपत्तिमुद्भाव्य स्वमतेनैकज्ञानालम्बनवादेन वृत्ताववास्तवम्, वाक्ये च वास्तवं विशेषणविशेष्यभावमवस्थापयितुमाह—अनुस्यूतेवेति।

अस्यार्थः—पदेऽर्थयोर्विशेषणविशेष्ययोः परस्परं संसृष्टेः संसर्गाद् हेतोः, अर्थे विशेषणरूपे विशेष्यरूपे च बुद्धिरपि=तद्विषया बुद्धिरपि, अभिन्नापि अनुस्यूतेव संसृष्टेव, पदात् प्रवर्तते=जायते।

अथ व्याख्यातारः=अथ तस्या बुद्धेर्व्याख्यातारस्तां बुद्धिमपोद्धारबुद्ध्या विभज्य भेदेन पदार्थविभागेन प्रचक्षते। एवं वृत्तौ अविभक्तेऽभिन्ने अखण्डे च, तदात्मनि=अविभक्तबुद्ध्यात्मनि अर्थे=तद्विषयं बुद्ध्यन्तरमपोद्धारबुद्धिमुपाश्रिताः प्रतिपत्तारो वृत्तौ विशेषणविशेष्ययोरविभागेऽपि विभ.गमिव मन्यन्त इति।

इह यथावस्तु प्रत्ययाः प्रभवन्ति। वस्तु जातिगुणोपाधिविशिष्टमभिन्नमित्यभिन्न एव प्रत्ययः। समवायतिरोहितभेदा हि जात्यादयो वस्तूनामनुरूपकाः। तत्र समवायिनः श्वैत्यात् श्वैत्ये बुद्धे श्वेते बुद्धिः। ते कार्यकारणभूते इति पारमार्थिकपदार्थभेदावलम्बने, अनौचित्यात् क्रमस्योच्येते। प्रतिभासवेलायां तु क्रमो नास्ति, विशिष्टस्यैव वस्तुनो झटित्येकप्रख्योपारोहात्। अत एव केचिद् जात्यादीन् संसर्गिणोऽपह्नुवते।

एवञ्च भेदावभासपूर्वकस्य संसर्गस्याभावादनुस्यूतेवेयं बुद्धिर्जात्यादिभिः संसर्गिभिः कथ्यते। परमार्थतो भेदपूर्वकस्य संसर्गस्यार्थानामभावात् वस्तुस्थित्या त्वेवमुच्यते।

एवमभिन्नबुद्धिप्रतिभासिनोर्नीलोत्पलादौ गुणद्रव्ययोर्भेदपूर्वकस्यावच्छेद्यावच्छेदकभावस्याभावः, किन्तु निरंशस्य वस्तुनः परेभ्यः प्रतिपादयितुमशक्यत्वात् प्रतिपादनकाले प्रतिपादकास्तान् संसृष्टान् जात्यादीनर्थानपोद्धारबुद्ध्या पृथक्कृत्यायं गुणो जातिर्वा विशेषणम्, इदं द्रव्यं विशेष्यमिति बुद्ध्यन्तरविभागेन पूर्वप्रतिपादितरीत्या प्रतिपादयन्ति। तथैव च प्रतिपद्यन्ते प्रतिपत्तारः।

---

अयं भावः—इह=लोकव्यवहारे यथावस्तु=विषयीभूतवस्तुस्वरूपानतिक्रमेण प्रत्यया भवन्ति। वस्तु च जातिगुणोपाधिविशिष्टमभिन्नमित्यभिन्न एव प्रत्ययः. समवायसंबन्धेन तिरोहितभेदा हि जात्यादयो वस्त्वभेदेन भासमाना वस्तूनामनुरूपकाः = वस्तूनां सदृशा वस्तुवद् भासन्ते। तत्र समवायिनः श्वैत्यात् स्वबोधं प्रति कारणात् श्वैत्ये बुद्धे श्वेते पटादौ द्रव्ये बुद्धिः। ते बुद्धी यतः कार्यकारणभूते उच्येते इति=अतः पारमार्थिकपदार्थभेदावलम्बने, अखण्डेऽभिन्ने क्रमस्य कार्यकारणभावाविनाभूतस्यानौचित्यात्। पदार्थस्य वाक्यार्थस्य वृत्त्यर्थस्य वा विशिष्टस्य प्रतिभासवेलायां तु क्रमो नास्ति, विशिष्टस्यैव वस्तुनो झटिति एकप्रख्योपारोहात्=एकबुद्ध्युपारोहात्। अत एव केचिद् जात्यादीन् संसर्गिणोऽपह्नुवते अपलपन्ति। तत्र बौद्धाजातिमह्नुते। व्यक्तिपदार्थवादिनस्तु—सर्वानपि जात्यादीन् द्रव्यसंसर्गिणोऽपलपन्ति।

एवञ्च पदेऽखण्डार्थवाचके पदार्थभेदावभासपूर्वकस्य विशेषणविशेष्यभावसंसर्गस्याभावादनुस्यूतेवेयं बुद्धिर्जात्यादिभिः पदार्थसंसर्गिभिः कथ्यते। परमार्थतो भेदपूर्वकस्यार्थानां संसर्गस्याभावाद् वस्तुस्थित्या त्वनुस्यूतेवेत्येवमुच्यते।

तथा च यथा श्वेतादिपदेऽभिन्नबुद्धिप्रतिभासिनोर्गुणद्रव्ययोर्भेदबुद्धिपूर्वकस्यावच्छेद्यावच्छेदकभावस्याभावः, एवं वृत्तौ नीलोत्पलादावभिन्नबुद्धिप्रतिभासिनोर्गुणद्रव्योर्भेदपूर्वकस्यावच्छेद्यावच्छेदकभावस्याभावः, किन्तु निरंशस्य वस्तुनः परेभ्यः प्रतिपादयितुमशक्यत्वात्, प्रतिपादिकाः प्रतिपादनकाले तान् संसृष्टान् जात्यादीनर्थानपोद्धारबुद्ध्या पृथक्कृत्य अयं गुणो जातिर्वा विशेषणम्, इदं द्रव्यं विशेष्यमिति बुद्ध्यन्तरकृतविभागेन पूर्वप्रतिपादितरीत्या प्रतिपादयन्ति। तथैव च प्रतिपत्तारः प्रतिपद्यन्ते।

एवञ्च वस्तुबीजमनुसृत्य प्रतिपादनाद् बाह्येऽस्ति सद्भावो विशेषणविशेष्यत्वस्य। तदेव हि बाह्यं संसृष्टं व्याख्यानाय विभज्यते। तत्र चास्ति गुणादिर्विशेषणं द्रव्योपरञ्जकम्, जात्यादिरहितस्य द्रव्यस्यायोगाच्च तदवच्छेद्यम्, सम्बन्धश्च समवाय इति सर्वं वास्तवम्।

तथा च विभागकल्पनोपायेन तदात्माऽविभक्त एवार्थः प्रतिपादितो भवति। तथैव च विभागबुद्ध्याहितविशेषणविशेष्यरूपतया प्रतिपद्यन्ते व्यवहर्तारः।

यद्यपि विभागावस्था वाक्यदशा, तथापि वाक्यावस्थागतज्ञानवासनया वृत्तावपि विशेषणविशेष्यप्रतीतिरस्त्येव। परमार्थतस्तु वृत्तौ निरंश एवार्थ इति सापि निरंशा वाचिका सिद्धा। तदेवं धर्मभेदेन वृत्तिवाक्ययोरत्यन्तभेदः प्रतिपादितः॥ ९२-९३॥

मतान्तरमप्युपक्षिप्तं भाष्ये—'अथ ये वृत्तिं वर्तयन्ति, किं त आहुः? परार्थाभिधानं वृत्तिरिति'। तद् व्याचष्टे—

**अबुधान् प्रति वृत्तिं च वर्तयन्तः प्रकल्पिताम्।**
**आहुः परार्थवचने त्यागाभ्युच्चयधर्मताम्॥९४॥**

---

एवञ्च वस्तुबीजम्=वस्तूनां सत्त्वे बीजमनुसृत्य वस्तूनां प्रतिपादनात्=व्यवस्थापनात् बाह्ये वस्तुविशेषणविशेष्यत्वस्य संसर्गस्य सद्भावः=सत्त्वं पारमार्थिकत्वमस्ति। तदेव हि बाह्यं संसृष्टं व्याख्यानाय=प्रतिपादनाय विभज्यते। तत्र चास्ति गुणादिर्विशेषणं द्रव्योपरञ्जकम्=स्वेन रूपेण द्रव्यभानापादकमवच्छेदकम्, जात्यादिरहितस्य द्रव्यस्यायोगाच्च=व्यवहारायोग्यत्वाच्च तद्=द्रव्यमवच्छेद्यम्, तयोः संबन्धश्च समवाय इति सर्वम्=विशेषणम्, विशेष्यम्, तयोरवच्छेद्यावच्छेदकभावरूपो विशेषणविशेष्यभावः संबन्धः, समवायश्च तयोः संबन्ध इति सर्वं वास्तवम्।

तथा चाविभक्ते वृत्त्यर्थे विभागकल्पनारूपेणोपायेन तदात्मा=अविभक्तबुद्ध्यात्मकः, अविभक्त एवार्थः प्रतिपादितो भवति। तथैव च विभागबुद्ध्याऽऽहितविशेषणविशेष्यरूपतया प्रतिपद्यन्ते व्यवहर्तारः।

यद्यपि विभागावस्था वाक्यदशा, न तु वृत्तिदशा, तथापि वाक्यावस्थागतज्ञानवासनया वृत्तावपि विशेषणविशेष्यभावप्रतीतिरस्त्येव। परमार्थतस्तु वृत्तौ निरंश एव=अखण्ड एवार्थ इति साऽपि=वृत्तिरपि निरंशा=अवयवविभागरहिता वाचिका सिद्धा। तदेवं धर्मभेदेन=सखण्डार्थवाचकत्वाखण्डार्थवाचकत्वरूपधर्मभेदेनान्येनापि बहुविधेन विशेषणयोगायोगादिना वृत्तिवाक्ययोरत्यन्तभेदः प्रतिपादित इति॥ ९२-९३॥

वृत्तावखण्डार्थवाचिन्यामनुपपद्यमानां विशेषणविशेष्यभावं समर्थयितुं मतान्तरमप्युपक्षिप्तं भाष्ये—"अथ ये वृत्तिं वर्तयन्ति, किं ते आहुः? पदार्थाभिधानं वृत्तिः" इति।

अस्यार्थः—अथेति प्रश्ने। ये वृत्तिं वर्तयन्ति, वाक्यार्थे वर्तमानां कुर्वन्ति, वाक्यार्थे व्यवहरन्तीति यावत्। किं ते वृत्तिलक्षणमाहुरिति प्रश्नः। समाधत्ते—परार्थाभिधानं वृत्तिरिति।

अत्राजहत्स्वार्थावृत्तिरिति पक्षे स्वार्थाभिधाने सति इति शेषो बोध्यः। वृत्तौ हि अभिधाद्वयम्—स्वार्थाभिधानम्, परार्थाभिधानञ्चेति। तत्र प्रथमया स्वार्थस्याखण्डस्याभिधानम्,

निर्विभागं वृत्तिपदार्थरूपमवगन्तुमशक्ताः प्रतिपत्तारोऽबुधाः। ते हि यथाश्रुतग्राहिणो यथावद्वचनं वाचनिकं मन्यन्ते। ततश्च तान् प्रति वाक्योपमर्देन प्रक्रियायां वृत्तिर्व्युत्पाद्यमाना वाक्यप्रकृतिकैवावतिष्ठते। ततश्च वाक्यमपि नित्यं स्वविषय इति तस्यानुच्छेद्यत्वात् तत्प्रकृतित्वेन समारोपिता कल्पिता वृत्तिर्निर्वर्त्यते। तत्र कारणात् कार्यमधिकार्थक्रियाकारि दृष्टं पटादि।

एवमिहापि वृत्तिलक्षणस्य कार्यस्य वाक्यगतपदार्थाधिक्यं न्याय्यमिति परार्थाभिधानं वृत्तिलक्षणमारभ्यते। परस्यान्यस्य प्रधानस्य पदस्य योऽर्थः, तस्योपसर्जनपदेन प्रत्यायनम्, तत्र,

"एकमाहुरनेकार्थं शब्दमन्ये परीक्षकाः।"

इति नये वाक्यावस्थायामुपसर्जनपदस्य परार्थाभिधानशक्तिप्रतिघातापेक्षया वृत्तौ परार्थाभिधानमुच्यते। अनेकार्थप्रत्यायनसामर्थ्याद्धि स्वार्थ एव स तस्य तत्र भवति परार्थः।

---

द्वितीयया तु वाक्यार्थस्य परार्थस्येति वृत्तौ विशेषणविशेष्यभावोपपत्तिरिति। तदेतद् भाष्यं व्याचष्टे—अबुधान् प्रतीति।

अस्यार्थः—अबुधान्=निर्विभागं वृत्तिपदार्थमवगन्तुमशक्तान् प्रति परार्थवचने परार्थाभिधाने प्रकल्पितां वृत्तिं वर्तयन्तो व्युत्पादयन्तश्च तस्याः त्यागाभ्युच्चयधर्मताम्=स्वार्थत्यागधर्मताम्, स्वार्थाभ्युपगमरूपस्वार्थाभ्युच्चयधर्मताञ्चाहुः। एतेन—जहत्स्वार्था इति, अजहत्स्वार्था इति च वृत्तेर्भेदद्वयं सूचितं भवतीति।

अयं भावः—निर्विभागं वृत्तिपदार्थस्वरूपमवगन्तुमशक्ताः प्रतिपत्तारोऽबुधाः। ते हि यथाश्रुतग्राहिणो यथावद्वचनम्=वचनानतिक्रमेण=वचनानुसारेण वाचनिकं वृत्तिपदार्थं मन्यन्ते, न तु लोकव्यवहारसिद्धं व्यावहारिकम्। ततश्च तान् प्रति प्रक्रियायामलौकिकप्रक्रियावाक्योपमर्देन वृत्तिर्व्युत्पाद्यमाना वाक्यप्रकृतिकैवावतिष्ठते। ततश्च वाक्यमपि स्वविषये नित्यमिति तस्यानुच्छेद्यत्वात् तत्प्रकृतिकत्वेन समारोपिता कल्पिता वृत्तिर्वाक्योपादानिका निर्वर्त्यते। तत्र कारणात् कार्यमधिकार्थक्रियाकारि लोके दृष्टं पटादि। एवमिहापि वृत्तिलक्षणस्य कार्यस्य स्वप्रकृतिभूतवाक्यगतपदार्थाधिक्यं न्याय्यमिति परार्थाभिधानं वृत्तिलक्षणमारभ्यते=क्रियते।

तत्र परस्य वृत्त्यपेक्षयाऽन्यस्य वाक्यस्य योऽर्थो विशेषणविशेष्यभावस्तदभिधानं वृत्तिरिति मया पूर्वं प्रकृतोपयोगितया व्याख्यातम्।

हेलाराजस्तु—परस्यान्यस्य प्रधानस्य पदस्य योऽर्थः, तस्योपसर्जनपदेन प्रत्यायनं परार्थाभिधानं व्याचष्टे।

यथा—'राजपुरुषः' इत्यत्रोपसर्जनेन राजपदेन राजसंबन्धिनः पुरुषस्य प्रधानपदार्थस्य राजसंबन्धित्वेन रूपेण प्रत्यायनं परार्थाभिधानमिति।

तत्र—"एकमाहुरनेकार्थं शब्दमन्ये परीक्षकाः" इति नये वाक्यावस्थायामुपसर्जनपदस्यानेकार्थकस्य परार्थाभिधानशक्तिप्रतिघातापेक्षया=परार्थाभिधानशक्तिप्रतिबन्धापेक्षया वृत्तौ परार्थाभिधानमुच्यते। यत एकस्य शब्दस्यानेकार्थप्रत्यायनसामर्थ्याद् स परार्थः=परार्थत्वेनाभितः, तत्र=वृत्तौ तस्य स्वार्थ एव भवति।

यदा 'अन्यायश्चानेकार्थत्वम्' इति नयस्तदा वृत्तावन्यदेवोपसर्जनपद-मित्यर्थान्तरमुपादत्ते। एवं परार्थवचने सति द्वैतं भवति। वाक्यावस्थागतमर्थं परित्यज्योपसर्जनं वृत्तौ परार्थमभिदधाति।

तद्यथा कलशे दधि स्थितमपनीय क्षीरं निधीयते, नावस्थित एव दधनि निधातुं शक्यते तत्। सेयं जहत्स्वार्था वृत्तिः।

अपौरुषेये शब्दार्थसम्बन्धे कथं त्याग इति चेत्, न; अनुपादान एवात्र त्यागोपचारात्। यथा ह्यग्निसंयोगः पाकजान् विशेषणानुत्पाद्य परमाणुषु निवर्तते, तथोपसर्जनार्थः प्रधाने विशेषमाधाय तावन्मात्रप्रयोजनत्वान्निवर्तते।

अत्र निदर्शनं भाष्येऽभिहितम्। तद् यथा—'तक्षा राजकर्मणि प्रवर्तमानः स्वं कर्म जहाति' इति।

कोशसमाहरणसन्निधानादौ राजकर्मणि व्याप्रियमाणस्तक्षा स्वं दारुच्छेदचतुरस्रीकरणादिव्यापारं जहाति, स्वव्यापारापरित्यागे राजकर्मणोऽनुष्ठातुमशक्यत्वात्। एवं स्वार्थानुपादानेन पदान्तरार्थोपादानमुपसर्जनानां वृत्तौ न्याय्यमनेन निदर्शनेन।

अन्ये तु मन्यन्ते—अवस्थित एव प्राच्येऽर्थेऽर्थान्तराभ्युच्चयोऽसावुपसर्जन-पदानामाधिक्यम् (अर्थाधिक्यम्)

---

यदा त्वन्यायश्चानेकार्थत्वमिति नयस्तदा:, वृत्तावन्यदेवोपसर्जनपदं वाक्यघटकादिति अर्थान्तरं वाच्यतयोपादत्ते। एवं वृत्तौ परार्थवचने सति द्वैतम् = संशयो भवति। किं जहत्स्वार्था-वृत्तिरिति, आहोस्विदजहत्स्वार्थावृत्तिरिति।

तत्राद्यपक्षे वाक्यावस्थागतमर्थं परित्यज्योपसर्जनं पदं वृत्तौ परार्थम् = प्रधानार्थमभिदधाति। तद् यथा—कलशे दधि स्थितमपनीय क्षीरं निधीयते नावस्थित एव दधिनि निधातुं शक्यते तत्। सेयं जहत्स्वार्थावृत्तिरिति।

अपौरुषेये = नित्ये शब्दार्थसंबन्धे कथं त्याग इति चेत्, न, अनुपादाने एव = स्वार्थपरिग्रह-प्रागभाव एव अत्र त्यागोपचारात् = त्यागव्यवहारात्। यथा ह्यग्निसंयोगः पाकजान् विशेषान् रूपरसादीन् शाकसूपादिषूत्पाद्य परमाणुषु निवर्तते, तथोपसर्जनार्थः प्रधानेऽर्थे विशेषमवच्छेदरूप-माधाय तावन्मात्रप्रयोजनकत्वाद् हेतोः स्वार्थबोधनाद् निवर्तते।

अत्र निदर्शनम् = दृष्टान्तो भाष्येऽभिहितम्। तद् यथा—'तक्षा = वर्धकिः राजकर्मणि प्रवर्तमानः स्वं कर्म जहाति' इति।

अस्यार्थः—कोशसमाहरणसन्निधानादौ = तन्निधानादौ राजकर्मणि व्याप्रियमाणस्तक्षा स्वं दारुच्छेदचतुरस्रीकरणादि = चतुष्कोणीकरणादिव्यापारं जहाति, स्वव्यापारापरित्यागे राज-कर्मणः कोशसमाहरणादेरनुष्ठातुमशक्यत्वात्। एवमुपसर्जनानां वृत्तौ स्वार्थानुपादानेन पदान्त-रार्थोपादानं न्याय्यमनेन निदर्शनेन।

अन्ये तु = अजहत्स्वार्थावृत्तिरिति वादिनो मन्यन्ते—अवस्थिते एव प्राच्येऽर्थे = वृत्तितः प्राग् वाक्यघटकराजाद्युपसर्जनपदार्थे वृत्तौ अर्थान्तराभ्युच्चयः = पुरुषादिरूपप्रधानपदार्थाभ्युपगमः, असौ = इदमेवोपसर्जनपदानामर्थाधिक्यम्।

तथा हि—सिकताकलशे जलं निहितमवतिष्ठते। लाक्षादिहेतुजनितश्च रागातिशयस्तन्तूनां कार्येऽप्यनुवर्तते। एवमुपसर्जनपदस्य स्वार्थोऽऽर्थान्तरोपादानेऽपि। युक्तं चैतत्, दृष्टस्यार्थस्य स्वरूपवच्छब्दैस्त्यागायोगात्।

अत्रापि निदर्शनं भाष्येऽभिहितम्—'भिक्षुको द्वितीयां भिक्षामासाद्य पूर्वां न जहाति, सञ्चयायैव यतते' इति। तदियमजहत्स्वार्था वृत्तिः।

एवञ्च राजार्थेन पुरुषार्थस्य विशेषणाद् विशिष्टार्थसंप्रत्ययः।

यद्येवं राजार्थस्यापि सम्भवाद् वृत्तौ 'राजपुरुषः' इत्यत्र द्विवचनं प्राप्नोति धवखदिरादिवत्। नैतदस्ति, द्वन्द्वे समप्राधान्याद् द्वयोरुद्भूतावयवभेदत्वात् समुदायस्य युक्तं द्विवचनम्।

इह तु विशेषणविशेष्यभावावच्छिन्नमर्थान्तरमेवानभिधेयमवयवैः समुदायेनोपादीयते। यथा बहुव्रीहौ 'लोहितवसनश्चित्रगुः' इत्यादि। ततश्चावयवार्थाहितभेदस्य परार्थस्य समुदायेनाभिधीयमानत्वात् ततः परा विभक्तिः समुदायार्थनिवेशिनीं संख्यामुपादत्ते।

तथा चार्थवत्त्वे समुदायस्यानेकवचनस्य परिहार उक्तः—'सङ्घातस्यैकार्थ्यान्नावयवसंख्यातः सुबुत्पत्तिः' (भा० वा० २।१।७) इति।

---

तथा हि—सिकताकलशे = सिकताप्रचुरे कलशे निहितं जलमवतिष्ठते, न तु भ्रश्यति। तथा च यथा मृदुपादानकः कलशः सिकता धारयन् जलमपि धारयति, यथा वा तन्तूनां लाक्षादिरूपहेतुजनितश्च रागातिशयः तन्तुकार्यें पटेऽप्यनुवर्तते, एवं वृत्तावुपसर्जनपदस्य स्वार्थोऽर्थान्तरोपादानेऽप्यनुवर्तते। युक्तञ्चैतत्, वाक्ये दृष्टस्यार्थस्य वृत्तौ शब्दैः स्वरूपवत् त्यागायोगात्।

अत्रापि निदर्शनम् = दृष्टान्तो भाष्येऽभिहितम्—"भिक्षुको द्वितीयां भिक्षामासाद्य पूर्वां न जहाति। संचयायैव यतते" इति। तदियमजहत्स्वार्थावृत्तिरिति।

एवञ्च राजार्थेन पुरुषार्थस्य विशेषणाद् विशिष्टार्थसम्प्रत्ययः।

यद्येवमजहत्स्वार्थायां वृत्तौ 'राजपुरुषः' इत्यादौ राजार्थस्यापि संभवात् 'राजपुरुषः' इत्यत्र द्विवचनं प्राप्नोति, धवखदिरादिवत्, नैतदस्ति। द्वन्द्वे द्वयोः पदार्थयोः समप्राधान्यात् समुदायस्योद्भूतावयवभेदत्वाद् युक्तं द्विवचनम्।

इह तु='राजपुरुषः' इत्यादौ तु विशेषणविशेष्यभावावच्छिन्नमर्थान्तरमेवावयवैरनभिधेयं समुदायेनोपादीयते=अभिधीयते। यथा बहुव्रीहौ 'लोहितवसनश्चित्रगुः' इत्यादौ विशेषणविशेष्यभावावच्छिन्नमर्थान्तरमेव समुदायेनाभिधीयते इत्येकवचनमेव समुदायात्, अवयवयोस्तु समप्राधान्याभावाद् द्विवचनाभाव इति। ततश्चावयवार्थाहितभेदस्य=अवयवार्थप्रयुक्तभेदस्य, अवयवार्थप्रतियोगिकभेदवतः परार्थस्य=समुदायार्थस्य समुदायेनाभिधीयमानत्वात् ततः परा= समुदायात् परा विभक्तिः समुदायार्थनिवेशिनीमेवैकत्वसंख्यामुपादत्ते।

तथा च समुदायस्यार्थवत्त्वे सति प्रातिपदिकत्वेऽनेकवचनस्य=द्विवचनस्य, बहुवचनस्य च परिहार उक्तो भाष्ये-'संघातस्यैकार्थ्यान्नावयवसंख्यातः सुबुत्पत्तिः' इति।

तदेवं त्यागश्चाभ्युच्चयश्च यो धर्मः स्वभावोऽस्या वृत्तेः तद्भावस्तत्ता, तामाहुः परार्थाभिधानलक्षणायां तस्याम् ॥ ९४ ॥

तत्र जहत्स्वार्थायां वृत्तौ चोदितम्—'राजपुरुषमानय' इत्युक्ते पुरुषमात्रस्यानयनं प्राप्नोति, 'औपगवमानयेत्युक्तेऽपत्यमात्रम्' इति ।

ननु चोपसर्जनपदानामर्थत्यागे प्रयोगः किमर्थ इति कथं न चोद्यते ? नास्त्येतत्, 'यावो यावकः' इतिवत् पर्यायरूपेण 'राजपुरुषः' इति प्रयोगोपपत्तेः । तथैकार्थीभावलक्षणसामर्थ्यनिबन्धना समाससंज्ञापि यथा स्यादिति ।

अविशेषे तु समाधिरुक्तः—'जहदप्यसौ स्वार्थं नात्यन्ताय जहाति । अथवान्वयाद् विशेषणं भविष्यति' इति । एतद् विवृणोति—

**अन्वयाद् गम्यते सोऽर्थो विरोधी वा निवर्तते ।**
**द्व्यर्थमर्थान्तरे वापि तत्राहुरुपसर्जनम् ॥९५॥**

---

तदेवं त्यागश्च स्वार्थस्य, अभ्युच्चयश्च=अभ्युपगमश्च पदार्थस्य यो: धर्मः स्वभावोऽस्यावृत्तेस्तद्भावस्तत्ता, तामाहुः=त्यागाभ्युच्चयधर्मतामाहुः परार्थाभिधानलक्षणायां तस्याम्=वृत्तौ सत्यामिति ।

तत्र जहत्स्वार्थापक्षे स्वार्थस्य त्यागः, परार्थाभ्युपगमश्च । अजहत्स्वार्थापक्षे तु न स्वार्थस्य त्यागः, किन्तु परार्थाभ्युपगममात्रमिति ॥ ९४ ॥

तत्र जहत्स्वार्थायां वृत्तौ चोदितम्—'राजपुरुषमानय' इत्युक्ते पुरुषमात्रानयनं प्राप्नोति, 'औपगवमानय' इत्युक्तेऽपत्यमात्रस्येति ।

ननु चोपसर्जनपदानां वृत्तौ स्वार्थत्यागे तेषां तत्र प्रयोगः किमर्थं इति कथं न चोद्यते ? नास्त्येतत्, 'यावो यावकः' इतिवत् पुरुषपदस्य पर्यायरूपेण 'राजपुरुषः' इति प्रयोगोपपत्तेः । तथैकार्थीभावलक्षणसामर्थ्यनिबन्धना 'राजपुरुषः' इत्यस्य समाससंज्ञाऽपि समासस्वरादिसाधिका यथा स्यादिति वृत्तौ राजपदप्रयोग इति ।

अविशेषे तु='राजपुरुषमानय, पुरुषमानय' इत्यनयोः प्रयोगाविशेषे तु पूर्वंचोदिते समाधिरुक्तः—जहदप्यसौ स्वार्थं नात्यन्ताय जहाति। अथवाऽन्वयाद् विशेषणं भविष्यतीति ।

अस्यार्थः—जहत्स्वार्थायां वृत्तौ पुरुषेऽवच्छेदमाधाय स्वार्थबोधनान्निवर्तमानोऽपि असौ राजशब्दो वृत्तिघटकः, नात्यन्ताय स्वार्थं जहाति । पुरुषेऽवच्छेदाधानात् प्राक् स्वार्थबोधनात् । अथवा अजहत्स्वार्थायां वृत्तौ राजशब्दः स्वार्थं न जहात्येव, किन्तु स्वार्थमजहदेवान्वयाद् विशेषणविशेष्यभावरूपात् पुरुषे विशेषणं भविष्यतीति । तदेतद् भाष्यं समाधिरूपं विवृणोति—अन्वयाद् गम्यत इति ।

अस्यार्थः—सोऽर्थो वृत्तावुपसर्जनीभूतो राजपदार्थः, प्रधानार्थावच्छेदकतया विशेषणविशेष्यभावरूपादन्वयाद् गम्यते=प्रतीयते, न तु स्वतः । वा=अथवा, उपसर्जनस्य राजपदस्य प्रधानार्थावच्छेदविरोधी अर्थः प्रधानभूतः, विशेषणविशेष्यभावरूपादन्वयाद् निवर्तते विशेषणत्वेनाप्राधान्यमापद्यमानः ।

उक्तमेतदग्निसंयोगाहिता विशेषाः परमाणूनां निवृत्तेऽप्यग्निसंयोगेऽनुवर्तन्त इति। एवमुपसर्जनपदार्थः प्रधानार्थं विशेष्य निवर्तत इति तदाहितविशेषानुगमाद् विशिष्टः पुरुषः प्रतीयते, न पुरुषमात्रम्।

अत्र भाष्ये मल्लिकापुटो दृष्टान्तोऽभिहितः। कुसुमसंसर्गोपहितगन्धविशेषानुवृत्तेरपनीतकुसुमोऽपि पुटस्तद्व्यपदेश्यः।

एवमर्थस्य त्यागे कथं नात्यन्ताय जहातीत्युच्यते—तदप्यंशेनार्थो निवर्ततेंऽशेनावतिष्ठत इत्याशङ्क्य पक्षान्तरमाह—विरोधी वा निवर्तत इति।

प्रधानार्थावच्छेदप्रतिद्वन्द्वी स्वभावोऽपैत्युप सर्जनार्थस्य। कश्च तस्य प्रतिद्वन्द्वी, यः प्रधानभूतः? अनयोर्हि प्राधान्ये परस्परसम्बन्धाभावाद् विशिष्टोऽवच्छिन्नः प्रधानार्थो न प्रतीयेतेति स्वप्राधान्यमुपसर्जनार्थस्य निवर्तते।

अत एव स्वविशेषणेन समृद्धादिना न युज्यते। प्रधानोपकाराय तु यद्रूपं विशेषणतात्मकम्, तन्नापैत्यविरोधादिति नात्यन्ताय जहातीत्युक्तिः। सर्वथा हि स्वार्थपरित्यागे स्वपदार्थेन प्रधानोपकाराभावादुपसर्जनपदं स्वरूपमेव जह्यात्। परोपकारप्रभावितं ह्यु पसर्जनत्वम्।

असति च परोपकारे प्रयोगवैयर्थ्यम्। उत्तरपदादेव प्रधानार्थप्रतीतेः।

---

अथवा तत्र—वृत्तौ उपसर्जनं राजादिपदं द्व्यर्थम् = विशेषणविशिष्टप्रधानार्थवाचकत्वादर्थद्वयवाचकमाहुः, अथवा अर्थान्तरे राजपदार्थादन्यस्मिन् पुरुषपदार्थे वर्तमानमुपसर्जनमाहुरिति।

अयं भावः—उक्तमेतद् = अग्निसंयोगाहिताः परमाणूनां रूपादयो विशेषा निवृत्तेऽपि अग्निसंयोगेऽनुवर्तन्त इति। एवमुपसर्जनपदार्थः प्रधानार्थं विशेष्य = अवच्छिद्य शाब्दबुद्धिविषयत्वान्निवर्तत इति तदाहितावच्छेदरूपविशेषानुगमाद्, विशिष्टः पुरुषः = पुरुषविशेषः प्रतीयते, न पुरुषमात्रम् = पुरुषसामान्यम्।

अत्र भाष्ये मल्लिकापुटो दृष्टान्तोऽभिहितः। कुसुमसंसर्गोपहितगन्धविशेषानुवृत्तेरपनीतकुसुमोऽपि पुटस्तद्व्यपदेश्यः = तेन गन्धेन व्यपदेश्यो भवति।

एवमर्थस्य त्यागे कथं नात्यन्ताय जहातीत्युच्यते, तदपि = अर्थस्यात्यन्तायाहानमपि, अंशेनार्थो निवर्तते, अंशेनावतिष्ठत इति इत्याशङ्क्य पक्षान्तरमाह = विरोधी वा निवर्तत इति।

उपसर्जनार्थस्य प्रधानार्थावच्छेदकत्वविरोधी स्वभावोऽपैति। कश्च तस्य विरोधी स्वभावः, यः प्रधानभूतः? अनयोर्हि प्रधानयोः सतोः परस्परसंबन्धाभावाद् विशिष्टाऽवच्छिन्नः प्रधानार्थो न प्रतीयेतेति शङ्कया उपसर्जनार्थस्य स्वप्राधान्यं निवर्तते।

अत एव = स्वप्राधान्याभावादेव स्वविशेषणेन समृद्धादिना न युज्यते। प्रधानोपकाराय = प्रधानस्यावच्छेदाय तूपसर्जनार्थस्य यद्रूपं विशेषणतात्मकं तन्नापैति, अविरोधादिति मत्वा नात्यन्ताय जहातीत्युक्तिः। सर्वथा हि स्वार्थपरित्यागे स्वपदार्थेन प्रधानोपकाराभावादुपसर्जनपदं प्रधानोपकारकार्यबोधकत्वरूपं स्वरूपमेव जह्यात्। परोपकारप्रभावितम् = प्रधानार्थावच्छेदरूपपरोपकारप्रयुक्तं हि उपसर्जनत्वम्।

अनर्थकस्य चापरेण सम्बन्धाभावात् सामर्थ्यनिबन्धना समाससंज्ञा न स्यादिति न सकलार्थपरित्यागः। तक्षापि हिक्कितहसितादीनि प्राणित्वाव्यभिचारीणि राजकर्मण्यनुगुणानि न जहाति। स्वप्राधान्यमेव स्वस्य हीयत इति जहत्स्वार्था वृत्तिः। अजहत्स्वार्थायां तु वृत्तौ सर्वथैव सन्नुपसर्जनपदार्थः। स्वविशेषणविशिष्टं प्रधानार्थं हि तत्रोपसर्जनपदमभिदधातीति द्व्यर्थमुच्यते। प्रधाने च पांसूदकवदभेदापत्तेर्विवेकाभावात् स्वविशेषेणेन न युज्यते गुणपदार्थः। विषयभेदेन च शब्दानामर्थवैचित्र्याद् वृत्तौ गुणप्रधानभूतार्थद्वयाभिधानमुपसर्जनपदानां युक्तम्। द्विवचनं तु न भवतीति पूर्वमेवोक्तम्।

केचित्तु जहत्स्वार्थायां वृत्तावुपसर्जनपदस्य सर्वथैवार्थत्यागं प्रधानार्थवृत्तित्वं च मन्यन्ते। वर्णवदनर्थकं ह्युपसर्जनपदं वृत्तिपदस्यावयवभूतम्। पर्यायश्चायं पुरुषशब्दस्य राजपुरुषशब्दः। अत्र पुरुषविशेषप्रतिपत्तिर्न स्यादिति चोद्यम्॥ ९५॥

यदि तर्हि वाक्य इव वृत्तावपि विशिष्टार्थप्रतीतेर्नात्यन्ताय हानम्, तदा जहत्स्वार्थत्वं वाङ्मात्रेण स्यादित्याशङ्क्याह—

---

स्वार्थपरित्यागे सति असति च परोपकारे उपसर्जनपदस्य प्रयोगवैयर्थ्यम्, उत्तरपदादेव प्रधानार्थप्रतीतेः।

किञ्चानर्थकस्यापरेण संवन्धाभावात् सामर्थ्यनिवन्धना समाससंज्ञा न स्यादिति नोपसर्जनपदस्य सकलार्थपरित्यागो युक्तः। तक्षाऽपि हिक्कितहसितादीनि प्राणित्वाव्यभिचारीणि राजकर्मण्यनुगुणानि न जहाति। स्वप्रधान्यमेव स्वस्य=उपसर्जनार्थस्य हीयत इति जहत्स्वार्थावृत्तिरुच्यते। अजहत्स्वार्थायां वृत्तौ तूपसर्जनपदार्थः सर्वथैव सन्। तत्र हि वृत्तावुपसर्जनपदं स्वविशेषणविशिष्टम्=स्वं यद् विशेषणं तद्विशिष्टं प्रधानार्थमभिदधाति इति द्व्यर्थमुच्यते। प्रधाने च विशेषणस्य वृत्तौ पांसूदकवदभेदापत्त्या तद्विवेकाभावात् स्वविशेषणेन समृद्धादिना न युज्यते गुणपदार्थो राजादिः। विषयभेदेन च=प्रयोगभूमिभेदेन च शब्दानामर्थवैचित्र्याद् वृत्तौ गुणप्रधानभूतार्थद्वयाभिधानमुपसर्जनपदानां युक्तम्। वृत्तौ द्विवचनं तु न भवति द्वन्द्ववद् द्वयोः स्वप्रधान्याभावादिति पूर्वमेवोक्तम्।

केचित्तु जहत्स्वार्थायां वृत्तौ उपसर्जपदस्य सर्वथैवार्थत्यागं प्रधानार्थमात्रवृत्तित्वञ्च मन्यन्ते। वृत्तावनर्थकं ह्युपसर्जनपदं वर्णवद् वृत्तिपदस्यावयवभूतम्। पर्यायश्चायं पुरुषशब्दस्य राजपुरुषशब्दः। अत्र पक्षे पुरुषशब्दाद् यथा पुरुषविशेषप्रतिपत्तिर्न भवति, तथा राजपुरुषशब्दादपि पुरुषविशेषप्रतिपत्तिर्न स्यादिति चोद्यमुत्थितं भवति इति नायं पक्षो युक्तो भवतीति॥ ९५॥

यदि तर्हि वाक्य इव वृत्तावपि विशिष्टार्थप्रतीतिरिति वृत्तावुपसर्जनपदस्य नात्यन्ताय स्वार्थहानमित्युच्यते, तदा तस्य जहत्स्वार्थत्वं वाङ्मात्रेण स्यादित्याशङ्क्याह—उपायमात्रमिति।

उपायमात्रं नानात्वं समूहस्त्वेक एव सः ।
विकल्पाभ्युच्चयाभ्यां वा भेदसंसर्गकल्पना ॥९६॥

वाक्ये विच्छेदोपक्रमार्थाभिधानम्, वृत्तौ तु विशिष्टोऽर्थो भेदेन प्रतीयत इति निरंशमेव परमार्थतो वृत्तिपदम् । उपायमात्रं तु वाक्यगतपदार्थभेदेन व्युत्पादनमिति प्राधान्यस्य त्यागाज्जहत्स्वार्थताभणितिः ।

अतोऽनन्तरं भाष्ये पठितम्—'अथवा वृत्तौ समर्थाधिकारः क्रियते, सामर्थ्यं नाम भेदः संसर्गो वा, भेदसंसर्गौवा' इति ।

तद् व्याचष्टे—विकल्पेत्यादिना । वाक्यप्रकृतित्वं वृत्तिपदस्य मन्यमाना वाक्यगतभेदसंसर्गकल्पनामत्र कुर्वन्ति ।

तथाहि—भेदो वाक्यार्थः संसर्गो वेति विकल्पः । द्वावपीत्यभ्युच्चयः समुच्चयः ।

---

अस्यार्थः—निरंशस्य वृत्तिरूपस्य पदस्य तदर्थस्य च निरंशस्य प्रतिपत्तये कल्प्यमानं पद-नानात्वं पदार्थनानात्वञ्च उपायमात्रम्, सः = वृत्तिघटकपदसमूहः, तदर्थघटकपदार्थसमूहस्तु एक एव परमार्थतः । वा = अथवा विकल्पाभ्युच्चयाभ्यां भेदस्य यः संसर्गस्य च यो विकल्पः, तयो-रभ्युच्चयः = समुच्चयो वा ताभ्यां भेदस्य संसर्गस्य च कल्पना । तथा च 'राजपुरुषः' इत्यस्य अराजकीयभिन्नः पुरुष इति, राजसंबन्धी पुरुष इति वाऽर्थो विकल्पेन, समुच्चयेन तूभयमप्यर्थ इत्येवं विकल्पाभ्युच्चयां भेदसंसर्गकल्पना इति । परमार्थतस्तु अखण्ड एव वृत्त्यर्थ इति ।

अयं भावः—वाक्ये विच्छेदोपक्रमार्थाभिधानम् = उपक्रमे विच्छेदेन पार्थक्येनार्थाभिधानम्, पश्चात्तु विशेषणविशेष्यभावसंसर्गेण विशिष्टार्थाभिधानम् वृत्तौ तु विशिष्टोऽर्थोऽपोद्धारबुद्ध्याभेद-कल्पनया भेदेन प्रतीयत इति विशिष्टमेव = अभिन्नमेव = निरंशमेव परमार्थतो वृत्तिपदम् । उपायमात्रं तु वाक्यगतपदार्थभेदेन = वृत्तौ अनुसन्धीयमानेन व्युत्पादनमिति उपमर्जनार्थे प्राधान्यस्य त्यागाज्जहत्स्वार्थताभणितिः । अतोऽनन्तरं भाष्ये पठितम् = "अथवा वृत्तौ समर्था-धिकारः क्रियते, सामर्थ्यं नाम भेदः संसर्गो वा, भेदसंसर्गौ वा" इति ।

तद् व्याचष्टे—विकल्पाभ्युच्चयाभ्यां वा इति । वृत्तिपदस्य वाक्यप्रकृतिकत्वं मन्यमाना वाक्यगतस्य पदार्थभेदस्य पदार्थसंसर्गस्य वा कल्पनामत्र = वृत्तौ विकल्पसमुच्चयाभ्यां कुर्वन्ति ।

तथा हि—'राज्ञः पुरुषः' इत्यत्र भेदो वाक्यार्थः—अराजकीयभिन्नः पुरुष इति, संसर्गो वा वाक्यार्थः—राजसंबन्धी पुरुष इतिरीत्या वाक्ये भेदसंसर्गयोर्विकल्पः । द्वावपि भेदसंसर्गौ वाक्यार्थौ इति वाऽभ्युच्चयः समुच्चयः ।

तत्र पुरुषशब्दस्य भृत्यवाचित्वे स्वामिनः सामान्येनावगतौ राजशब्दः स्वामिविशेषेभ्यो व्यावृत्तिं प्रतिपादयतीति भेदो वाक्यार्थः। अनुमीयमानश्चात्र संसर्गः।

यदा तु जातिवाची पुरुषशब्दः, तदा राजशब्दाद् विशिष्टेनार्थेनैतदर्थस्य समन्वयोऽवगम्यत इति संसर्गो वाक्यार्थः। विशिष्टत्वाच्च संसर्गस्यार्थान्तराद् भेदोऽनुमीयमानः। एवं गुणप्रधानभेदेन विकल्पः। उभयस्य वा शब्दात् प्रतीतेरविशेषेणोभयं सामर्थ्यम्। तदेवं विशिष्टार्थवृत्ति वृत्तिपदमिति न पुरुषमात्रस्यानयनमवयवास्यानर्थक्येऽपि ॥ ९६ ॥

अत एव चोपायत्वाद्विभागस्य मतभेदोऽविरुद्धोऽनवस्थितत्वाद् रुचिवैचित्र्येणोपायानामित्याह—

**वृत्तिं वर्तयतामेवमबुधप्रतिपत्तये ।**
**भिन्नाः सम्बोधनोपायाः पुरुषेष्वनवस्थिताः ॥९७॥**

---

तत्र पुरुषशब्दस्य भृत्यवाचित्वे स्वामिनः सामान्येनावगतौ सत्यां -राजशब्दः स्वामिविशेषेभ्यो वणिगादिभ्यो व्यावृत्तिं पुरुषे प्रतिपादयति इतिरीत्या भेदो वाक्यार्थोऽनुमीयमानश्चात्र संसर्गः।

तथा चायमत्रानुमानप्रयोगः—राजपदार्थपुरुषपदार्थौ-मिथःसंसर्गिणौ, भेदे सति आकाङ्क्षादिमत्पदबोध्यत्वात् यन्नैवं तन्नैवम् यथा दशदाडिमादि वाक्यमिति।

यदा तु जातिवाची पुरुषशब्दः, तदा विशिष्टेनार्थेनैतदर्थस्य=स्वामिविशेषेण राजपदार्थेन सह पुरुषपदार्थस्य समन्वयः=संसर्गो राजशब्दादवगम्यते इति संसर्गो वाक्यार्थः। विशिष्टत्वाच्च संसर्गस्य=संसर्गस्य स्वस्वामिभावरूपस्य स्वामिविशेषराजपदार्थप्रतियोगिकत्वाच्चार्थान्तरादराजकीयाद् भेदोऽनुमीयमानोऽत्र।

तथाचायमनुमानप्रयोगः—राजपदार्थपुरुषपदार्थौ मिथो भिन्नौ विशिष्टार्थप्रतियोगिकसंसर्गवत्त्वात्, परस्परसंयुक्तघटपटवदिति। एवं भेदस्य संसर्गस्य च शब्दवाच्यत्वानुमीयमानत्वाभ्यां गुणप्रधानभेदेन विकल्पः। तत्र गुणत्वम्-अनुमीयमानत्वरूपम्, प्राधान्यं तु-शब्दवाच्यत्वरूपम्।

अथवा शब्दशक्तिवैचित्र्येण भेदसंसर्गोभयस्य शब्दात् प्रतीतेरविशेषेणोभयरूपं सामर्थ्यम्। तदेवं विशिष्टार्थवृत्ति=अखण्डार्थविशेषवाचकम्, वृत्तिरूपं पदमिति जहत्स्वार्थायामपि वृत्तौ न पुरुषमात्रस्य=पुरुषसामान्यस्य आनयनमवयवस्यानर्थक्येऽपीति ॥ ९६ ॥

अत एव च वृत्तिपदप्रतिपत्तये पदविभागस्य, वृत्त्यर्थप्रतिपत्तये च पदार्थविभागस्योपायत्वाद् रुचिवैचित्र्येण चोपायानामनवस्थितत्वादुपायविषयको मतभेदोऽविरुद्ध इत्याह=वृत्तिं वर्तयतामिति।

अस्यार्थः—एवमुक्तप्रकारेण, अबुधप्रतिपत्तये वृत्तिं वर्तयताम्, पदविभागेन पदार्थविभागेन च व्युत्पादयताम्, व्युत्पादकानां पुंसां प्रतिपत्तृषु पुरुषेषु वृत्तेः संबोधनोपायाः=सम्यक्प्रबोधनोपायाः, पदविभागरूपाः पदार्थविभागरूपाश्च, रुचिवैचित्र्याद् भिन्ना अनवस्थिताश्चेति।

वृत्तिवाक्ययोरभेददर्शिनां प्रकृतिविकारभावेन व्युत्पादयतां व्युत्पादकानां पुरुषेषु प्रतिपत्तृषु सम्बोधनोपायाः व्युत्पादने हेतवो रुचिवैचित्र्याद् भिन्नाः विलक्षणाः।

ये हि वृत्तिवाक्ययोः समानमर्थमध्यवस्यन्ति, तद्दर्शनेनाजहत्स्वार्थत्वमुच्यते। ये तु स्वाभाविकमर्थभेदमनयोः पश्यन्ति, तद्दर्शनेन जहत्स्वार्थत्वमित्यसत्यभूतभेद-संसर्गाश्रयेण व्यवस्था भिद्यते ॥ ९७ ॥

तदेवं परमार्थतोऽत्यन्तभेदो वृत्तिवाक्ययोरिति सङ्ख्याविशेषतिरोधानादयो वृत्तौ विशेषाः प्रोक्ताः। तत्र च विभक्त्यभावादेव सङ्ख्याविशेषतिरोधानमिति चोदिते 'न शब्दनिमित्तकेन नामार्थेन भवितव्यमर्थनिमित्तकेन नामशब्देन भवितव्यम्। तदेतदेवं दृश्यतामर्थरूपमेवैतदेवंजातीयकम्' इत्युक्तम्।

एतद् व्याचष्टे—

**वाचिका द्योतिका वापि सङ्ख्यानां या विभक्तयः।**
**तद्रूपेऽवयवे वृत्तौ सङ्ख्याभेदो निवर्तते ॥९८॥**

---

अयं भावः—वृत्तिवाक्ययोः प्रकृतिविकृतिभावेनाभेददर्शिनां वृत्तिं पदविभागेन पदार्थ-विभागेन च व्युत्पादयतां व्युत्पादकानां पुंसां प्रतिपत्तृषु पुरुषेषु संबोधनोपायाः वृत्तिव्युत्पादने हेतवो रुचिवैचित्र्याद् भिन्ना विलक्षणाः, अनवस्थिताश्च=इयत्तापरिच्छेदरहिताश्च। ये हि वृत्तिवाक्ययोः समानमर्थमध्यवस्यन्ति=निश्चिन्वन्ति, तद्दर्शनेन वृत्तेरजहत्स्वार्थत्वमुच्यते। ये तु स्वाभाविकमर्थभेदमनयोः=वृत्तिवाक्ययोः पश्यन्ति, तद् दर्शनेन तस्या जहत्स्वार्थत्वमिति प्रकल्पिता सत्यभूतभेदसंसर्गाश्रयेण विकल्पसमुच्चयाभ्यां जहत्स्वार्थत्वाजहत्स्वार्थत्वव्यवस्था भिद्यते। तत्र भेदस्य वाक्यार्थत्वे जहत्स्वार्थत्वम्, संसर्गस्य तु तत्त्वेऽजहत्स्वार्थत्वमिति ॥ ९७ ॥

तदेवं वस्तुतोऽत्यन्तभेदो वृत्तिवाक्ययोः स्वरूपतोऽर्थतश्चेति कृत्वा वृत्तौ संख्याविशेषतिरो-धानादयो वाक्याद् विशेषाः प्राक् प्रोक्ताः। तत्र च=वृत्तौ च विभक्त्यभावादेव संख्याविशेष-तिरोधानम्, न तु अर्थस्वभाववैजात्यादिति चोदिते-'न शब्दनिमित्तकेन नामार्थेन भवितव्यम्, अर्थनिमित्तकेन नामशब्देन भवितव्यम्। तदेतदेवं दृश्यताम्-अर्थरूपमेवैतदेवं जातीयकम्'' इति उक्तं भाष्ये। तदेतद् व्याचष्टे वाचिका इति।

अस्यार्थः—स्वार्थद्रव्यलिङ्गानां त्रिकं प्रातिपदिकार्थ इति पक्षे संख्याविशेषाणां वाचिकाः, स्वार्थद्रव्यलिङ्गसंख्याकारकाणि इति पञ्चकं प्रातिपदिकार्थ इति पक्षे संख्याविशेषाणां द्योतिका वापि विभक्तयो या वाक्ये ''राज्ञः पुरुषः, राज्ञोः पुरुषः, राज्ञां पुरुषः'' इत्यादौ दृश्यन्ते, 'वृत्तौ राजपुरुषः' इत्यादौ तद्रूपे तासां विभक्तीनां रूपे प्रकृतिरूपे राजपदादौ वाक्यघटकराजादिपद-सदृशे संख्याभेदः=संख्याविशेषः निवर्तते, अर्थस्वभाववैजात्यादिति न वृत्तिघटकराजादिरूपादुप-सर्जनपदाद् विभक्त्य इति।

त्रिके प्रातिपदिकार्थे सङ्ख्याया वाचिका विभक्तयः, पञ्चके तु द्योतिकाः। ताश्च राज्ञः पुरुषो, राज्ञो, राज्ञां पुरुष इति वाक्ये दृश्यन्ते स्वार्थप्रयुक्ताः। वृत्तावपि राज-पुरुष इत्यत्र वाक्यसदृश एव पूर्वपदभागः।

तथाच तत्रापि सङ्ख्याविशेषप्रयुक्ता विभक्तयः श्रूयेरन्। सति ह्यर्थे तद्वचनः शब्दः प्राप्नोति, न तु शब्दाभावे वाचनिके वृत्तावर्थाभावाविधानं युज्यते। सङ्ख्याशब्दाभावाद् वृत्तौ सङ्ख्याविशेषो नास्तीत्यनुमीयते।

तथाहि—प्रधानार्थसम्भेदादुपसर्जनार्थस्य भेदाभावान्निवर्तते सङ्ख्याविशेष इति तदभावात् स्वाभाविक्येवानुत्पत्तिर्विभक्तीनां प्रत्ययलक्षणार्थं लुगन्वाख्यायते।

इत्थं सादृश्यमात्रं भ्रान्तं वृत्तिवाक्ययोर्न तत्त्वत ऐक्यम्, वाक्ये सङ्ख्याभेद-सद्भावाद् वृत्तौ तदभावादित्यत्र तात्पर्यार्थः ॥ ९८ ॥

एवं तावदुपसर्जनार्थो निवृत्तसङ्ख्याभेद इत्येकीयं मतम्। अन्ये तु मन्यन्ते—

**अभेदैकत्वसङ्ख्या वा तत्रान्यैवोपजायते।**
**संसर्ग(र्गि)रूपं सङ्ख्यानामविभक्तं तदुच्यते ॥९९॥**

---

अयं भावः—स्वार्थादित्रिके प्रातिपदिकार्थे संख्याया वाचिका विभक्तयः, स्वार्थादिपञ्चके तु प्रातिपदिकार्थे संख्याया द्योतिकास्ताः। ताश्च विभक्तयः "राज्ञः पुरुषः, राज्ञोः पुरुषः, राज्ञां पुरुषः" इति वाक्ये स्वार्थे संख्याविशेषे प्रयुक्ता दृश्यन्ते। 'राजपुरुषः' इत्यत्र वृत्तावपि वाक्यसदृश एव=वाक्यघटकराजपदसदृश एव दृश्यते पूर्वपदभागः।

तथा च तत्रापि=वृत्तौ पूर्वपदेऽपि संख्याविशेषप्रयुक्ता विभक्तयः श्रूयेरन्। यतः सत्यर्थे तद्वाचकः शब्दः प्राप्नोति, न तु वृत्तौ शब्दाभावे=विभक्त्यभावे वाचनिके लुग्वचनसिद्धे सति संख्या विशेषरूपस्यार्थस्याभावाभिधानं युज्यते। शब्दाभावस्यार्थाभावाप्रयोजकत्वात्। शब्दाभावस्य अर्थाभावव्याप्यत्वेन संख्याशब्दाभावात्=संख्यावाचकविभक्त्यभावाद् वृत्तौ संख्याविशेषो नास्तीत्यनुमीयते।

तथाहि—उपसर्जनार्थस्य प्रधानार्थसंभेदात्=प्रधानार्थसंमिश्रणात् तयोर्भेदाभावान्निवर्तते संख्याविशेष इति तदभावात्=वृत्तौ संख्याविशेषाभावात् स्वाभाविक्येव तत्र विभक्तीनामुत्पत्तिः, विभक्तिलुक् तु तत्र प्रत्ययलक्षणार्थमन्वाख्यायते।

इत्थं वृत्तिवाक्ययोः सादृश्यमात्रं भ्रान्तम्=भ्रान्तिविषयीभूतम्। नापि तत्त्वतस्तयो रैक्यम्। वाक्ये संख्याविशेषसद्भावात्, वृत्तौ संख्याविशेषाभावादित्यत्र तात्पर्यमिति ॥ ९८ ॥

एवं तावदुपसर्जनार्थो निवृत्तसंख्याभेदः = संख्याविशेषशून्यः इत्येकीयं मतम्। अन्ये तु वृत्तावुपसर्जनार्थेऽभेदैकत्वसंख्यां मन्यन्ते इत्याह—अभेदैकत्वसंख्या वा इति।

अस्यार्थः—वा=अथवा, तत्र=वृत्तौ उपसर्जनार्थे, अन्यैव एकत्वसंख्यातो विलक्षणैव, अभेदैकत्वसंख्या अभेदरूपा एकत्वसंख्या, उपजायते। तद् अभेदैकत्वसंख्यारूपं वस्तु संख्यानां सर्वासां संसर्गि अविभक्तम्=अभिन्नं रूपमुच्यते। अत एव 'राजपुरुषः' इत्यादिवृत्तौ उपसर्जने राज्ञि संख्या सामान्यस्य भानम्, न तु संख्याविशेषस्यैकत्वद्वित्वादेरिति।

वृत्तावुपसर्जनपदार्थानां सत्त्वभूतत्वादावश्यकः सङ्ख्यायोगः। न ह्यव्ययवन्निस्सङ्ख्य एवोपसर्जनार्थो युक्तः, सत्त्वमात्रस्यासम्प्रत्ययात्।

न च विशेषोऽवधार्यते। अतः सामान्यसङ्ख्यारूपं सर्वसङ्ख्याविशेषाणां संसर्ग(र्गि)रूपं क्रोडीकारकं विद्यत इत्यनुमीयते।

द्वित्वादिप्रतिपक्षं ह्येकत्वं द्वित्वाद्यपावर्तनान्न समस्तसङ्ख्याभेदस्वीकारसमर्थम्। इदं त्वभेदैकत्वं सर्वानुयायि।

अत्र हि सर्वे सङ्ख्याभेदाः संसर्गमविभागमनुप्राप्ता विद्यन्ते। तथाच सति निमित्ते ते तत आविर्भवन्तो दृश्यन्ते प्रसेकादिव शाणादिविशेषाः (प्रसेकादिव गन्धादिविशेषाः)। अतश्च शौर्पिक(पार्पिक)तावकीनमासजातादौ भवति विशेषनिश्चय इति वक्ष्यते।

---

अयं भावः—वृत्तावुपसर्जनपदार्थानां संख्यायोग आवश्यकः, सत्त्वभूतत्वात्। 'लिङ्गसंख्याऽन्वयित्वं हि सत्त्वभूतत्वमुच्यते'। नह्यव्ययवन्निस्संख्य एवोपसर्जनपदार्थो युक्तः, सत्त्वमात्रस्य= द्रव्यमात्रस्य संख्यारहितस्यासंप्रत्ययात्।

न च विशेषोऽवधार्यते=न हि संख्याविशेषो वृत्तावुपसर्जनपदार्थे प्रतीयते। अतः सामान्यसंख्यारूपं सर्वसंख्याविशेषाणां संसर्गिरूपं तेषां क्रोडीकारकं विद्यत इत्यनुमीयते।

अयञ्चानुमानप्रयोगः—वृत्तावुपसर्जनपदार्थः, संख्यासामान्यवान्, सत्त्वभूतत्वात्, यन्नैवं तन्नैवं यथाऽव्ययमिति।

द्वित्वादिविरोधि हि एकत्वं द्वित्वादिनिरसनान्न समस्तसंख्या विशेषस्वीकारे समर्थनम्। इदन्त्वभेदैकत्वं सर्वसंख्याविशेषानुयायि।

अत्र हि सर्वे संख्या विशेषाः संसर्गमविभागमनुप्राप्ता विद्यन्ते। तथा च निमित्ते सति ते ततः=संख्याविशेषाः संख्यासामान्यात् आविर्भवन्तो दृश्यन्ते जलप्रसेकादिव ग्रीष्मे तपनोष्मतप्ताया भुवो गन्धादिविशेषाः। प्रसेकादिव शाणादिविशेषा इति पाठस्तु अयुक्तः, अर्थासंगतेः। अतश्च पार्पिक-तावकीन-मासजातादौ भवति संख्या विशेषनिश्चय इति वक्ष्यते।

तथाहि—'पर्पाभ्यां चरति पार्पिकः' इति भवति। अत्र तद्धितवृत्तौ उपसर्जनपदार्थे पर्पे द्वित्वं संख्याविशेषो नियमेन प्रतीयते। एकेन पर्पेण=काष्ठपीठेन पङ्गोश्चरणासंभवात्। अत्र 'शौर्पिकः' इत्युदाहरणं तु न संभवति। 'शूर्पेण क्रीतः, शूर्पाभ्यां क्रीतः, शूर्पैः क्रीतः' इत्यर्थत्रयेऽपि शौर्पिकः' इति प्रयोगस्य संभवात्। 'तावकीनः' इति तु तवायं तावकीनः इति विग्रह एव भवति। "तवकममकावेकवचने" (पा० ४।३।३) इति पाणिनिसूत्रात्। 'मासजातः' इति बहुव्रीहावपि मासो जातस्य यस्य स मासजात इति विग्रहः।

अत्राप्युपसर्जने एकत्वरूपस्य संख्याविशेषस्य नियमेन संप्रत्ययः। अविभक्तमेकस्वभावत्वात् किञ्चिद् भवति, न तु संसृष्टम्।

अविभक्तमेकस्वभावत्वात् किञ्चिद् भवति, न तु संसृष्टम्। संसर्गेऽपि च भेदः स्यादित्युभयमुपात्तं संसर्ग(र्गि)रूपमविभक्तं चेति ॥ ९९ ॥

एतदेव निदर्शनेन व्युत्पादयति—

**यथौषधिरसाः सर्वे मधुन्याहितशक्तयः।**
**अविभागेन वर्तन्ते तां सङ्ख्यां तादृशीं विदुः ॥१००॥**

मधुनि माक्षिके बहुपुष्परसाः प्रत्यर्पितस्वरूपास्तत्कार्यत्वादिति नानाजातीयौषधिरससम्भेदेन मधुरससम्पादने विचित्रास्ते रसा विवेकेन न लक्ष्यन्ते।

अथ च कारणभूतौषधिरसानुगुण्येन मधुनो रसवीर्यविपाका अवधार्यमाणा यथास्वं कार्यदर्शनानुमीयमानसामर्थ्याः सन्निहितास्त इत्यवसीयन्ते। तथैव यथानिमित्तं सङ्ख्याभेदावसायादुपसर्जनपदार्थे सर्वसङ्ख्याविशेषाणामविभागेनावस्थानादभेदैकत्व-

---

यथा—'अद्वैतिनां ब्रह्म, शाब्दिकानां स्फोटः, सौगतानां क्षणः, सांख्यानां पुरुषः' इत्यादि। संसर्गेऽपि च भेदः स्याद्, यदा घटपटयोः संयुक्तयोरितिकृत्वा उभयमुपात्तं संसर्गिरूपमविभक्तञ्चेति ॥ ९९ ॥

एतदेव=संख्यासामान्यरूपमभेदैकत्वमेव निदर्शनेन=मधुदृष्टान्तेन व्युत्पादयति—यथौषधिरसा इति।

अस्यार्थः—अत्रौषधिपदेन ओषध्यः फलपाकान्ता इति न गृह्यते, किन्तु ओषं हिमं चन्द्ररश्मिद्वारा प्रार्द्रं दधति स्वजीवनाय इति ओषधयः गुल्मलतादयः शक्त्या उच्यन्ते।

अत्र तु औषधिपदेन तत्पुष्पाणि लक्ष्यन्ते। उष्यते दह्यते येन लतापत्रादिकमसौ ओषो हिमम्, बाहुलकात् करणे घञ्। 'उषदाहे' इति भौवादिको धातुः। बहुना हिमपातेन हि लतापत्रादिकं दह्यते। अल्पेन तु पुष्टिमाप्नोति इति लोके प्रसिद्धम्।

यथा मधुनि माक्षिके=मक्षिकाभिः संगृहीते सर्वे ओषधिरसाः=तत्पुष्परसाः आहितशक्तयः स्थापितनिजसूक्ष्मस्वरूपाः, अविभागेन=भेदापरिचयेन वर्तन्ते तथा तां संख्याम्=वृत्तौ उपसर्जनपदार्थगतामभेदैकत्वरूपसंख्यासामान्यरूपां संख्याम्, तादृशीम्=सर्वसंख्याविशेषाविभागापन्नां विदुरिति।

अयं भावः। मधुनि=माक्षिके, न तु मद्यादौ, बहुपुष्परसाः प्रत्यर्पितस्वरूपाः, मधुनस्तत्कार्यत्वादिति नानाजातीयौषधिरससंभेदेन=संमिश्रणेन मधुरससंपादने सति मिथो विचित्रास्ते रसाः परस्परस्माद् विवेकेन=विभागेन न लक्ष्यन्ते।

अथ च=तथापि तु मधुनो रसवीर्यविपाकाः स्वकारणभूतौषधिरसानुगुण्येन=रससादृश्येन अवधार्यमाणा यथास्वम्=यथायथं स्वकार्यदर्शनानुमीयमानसामर्थ्याः 'मधुनि सन्निहितास्ते' इत्यवसीयन्ते=निश्चीयन्ते। तथैव यथानिमित्तम्=प्रकरणरूपनिमित्तानुसारेण वृत्तौ संख्याविशेषावसायादुपसर्जनपदार्थे सर्वेषां संख्याविशेषाणामविभागेनावस्थानाद् संख्यासामान्यरूपा

सङ्ख्यापि तथाभूतैव बोद्धव्या। सङ्ख्याभेदानां हि ततोऽपोद्धारात् सङ्ख्येति कथ्यते, न तु तया यत् किञ्चिद् गण्यते द्वित्वादिकयेव। सङ्ख्यासंसर्गस्य च संसृष्टविवेकेन रूपानवधारणात् सङ्ख्या विशेषसामान्यरूपेयम् ॥ १०० ॥

प्रकारान्तरमत्रैवाह—

**भेदानां वा परित्यागात् सङ्ख्यात्मा स तथाविधः ।**
**व्यापाराज्जातिभागस्य भेदापोहेन वर्तते ॥१०१॥**

परित्यक्तभेदा तान् भेदान् व्यावर्तयन्ती संख्याव्यपदेशमियमप्यासादयति। तथा च तथाविधोऽभेदैकत्वस्वभावोऽसौ संख्यात्मा व्यक्तिभेदतिरोधानेन जातिरूपाश्रयेण वर्तते। भेदापोहलक्षणं हि सर्वसंख्यानां जातिरूपमनुगतम्। पूर्वत्र समस्तभेदसंसर्गमात्रं समस्तभेदात्मकमभेदैकत्वमुक्तम् ।

---

अभेदैकत्वसंख्याऽपि तथाभूतैव=सर्वसंख्याविशेषाविभागापन्नैव बोद्धव्या। संख्याविशेषाणां हि ततः=संख्यासामान्यादपोद्धारात् संख्यासामान्यं संख्येति कथ्यते, न तु तया यत् किंचिद् गण्यते द्वित्वादिकयेव। संख्याविशेषसंसर्गस्य च स्वसंसृष्टात् संख्यासामान्याद् विवेकेन रूपानवधारणात् सामान्यरूपा इयमुपसर्जनपदार्थगता संख्या विशेषसामान्योभयरूपेति ॥ १०० ॥

अत्रैव=वृत्तावुपसर्जनपदार्थेऽभेदैकत्वसंख्या भासते इत्यस्मिन्नेव पक्षे प्रकारान्तरमाह—भेदानां वा परित्यागादिति ।

अस्यार्थः—वा=अथवा, भेदानाम्=व्यक्तिरूपाणां संख्याविशेषाणां परित्यागात्=तिरोधानात्, तथाविधः=अभेदैकत्वस्वभावः स संख्यासामान्यरूपः संख्यात्मा जातिभागस्य संख्यासामान्यरूपस्याभेदैकत्वस्य व्यापारात् संख्याविशेषाणामन्यस्माद् व्यावर्तनरूपाद् भेदापोहेन=अतद्व्यावृत्तिरूपजातिरूपेण वर्तते। पूर्वकल्पे समस्तसंख्याविशेषे संसर्गिरूपं समस्तसंख्याविशेषात्मकमभेदैकत्वमुक्तम्, इदानीं तु समस्तसंख्याविशेषानुगतरूपमन्यापोहरूपम् = अतद्व्यावृत्तिरूपमिति विशेष इति ।

अयं भावः। परित्यक्तभेदा=विभागरहिता तान् भेदान्=स्वाश्रयीभूतान् संख्याविशेषान् अन्यस्माद् व्यावर्तन्ती इयमपि = अभेदैकत्वरूपा संख्या अपि संख्याव्यपदेशमासादयति। यथा एकत्वादिका संख्या स्वाश्रयं द्वित्वादिसंख्याश्रयाद् व्यावर्तयन्ती संख्येत्युच्यते ।

तथा च तथाविधोऽभेदैकत्वस्वभावोऽसौ संख्यात्मा व्यञ्जकनिमित्ताभावात् स्वाश्रयव्यक्तिभेद—(विशेष) तिरोधानेन जातिरूपाश्रयेण=जातिरूपमाश्रित्य जातिरूपेण वर्तते। भेदापोहलक्षणं हि=अभेदैकत्वरूपं हि सर्वसंख्यानां जातिरूपमनुगतम्। पूर्वत्र समस्तभेदसंसर्गमात्रम्=सर्वसंख्याविशेषसंसर्गिस्वरूपम्=धर्मधर्मिणोरभेदात् समस्तभेदात्मकम्=समस्तसंख्याविशेषरूपम् अभेदैकत्वमुक्तम् ।

इदानीं तु समस्तभेदानुगतरूपमन्यापोहरूपमिति विशेषः। यथा ह्येकत्वं द्वित्वाद्यपावर्तयति, द्वित्वं च त्रित्वादिं, एवमिदमभेदैकत्वं सर्वमेकत्वाद्यपावर्तयतीत्यस्ति संख्यात्वम्। सति च निबन्धने द्वित्वैकत्वादि प्रतीयत इति सामान्यात्मकताभ्युपगताऽत्र ॥ १०१ ॥

ननु चाभिन्नप्रत्ययावेद्यं सामान्यं गोत्वादि। अत्र चाभेदैकत्वस्य न किञ्चित् कार्यम्। भेदा एव हि शास्त्रकार्ययोगिन इति किं तत्सद्भावे लिङ्गमित्याशङ्क्याह—

**अगृहीतविशेषेण यथा रूपेण रूपवान्।**
**प्रख्यायते न शुक्लादिभेदरूपस्तु (रूपन्तु) गृह्यते ॥१२०॥**

**भेदरूपसमावेशे तथा सत्यविवक्षिते।**
**भागः प्रकाशितः कश्चिच्छास्त्रेऽङ्गत्वेन गृह्यते ॥१०३॥**

गुणैरविनाभावाद् द्रव्यमप्रतीतनीलादिगुणरूपमपि सामान्येन रूपवदिति प्रतीयते यथा दूरात्, तथा सख्याविशेषसमवाये प्रतिपाद्यत्वेनानिष्टे संख्यावानित्ये-

---

इदानीं तु समस्तसंख्याविशेषानुगतरूपमन्यापोहरूपम्=अतद्व्यावृत्तिरूपमिति विशेषः। यथा हि एकत्वादि स्वाश्रये द्वित्वादि अपावर्तयति=व्यावर्तयति, द्वित्वञ्च त्रित्वादिकं स्वाश्रये व्यावर्तयति, एवमिदमभेदैकत्वं सर्वमेकत्वादिकं संख्यारूपं स्वाश्रये व्यावर्तयति, एवमिदमभेदैकत्वं इत्यस्ति संख्यान्तरव्यावर्तकत्वरूपं संख्यात्वमभेदैकत्वेऽपि। सति च प्रकरणादिज्ञानरूपे निबन्धने=निमित्ते पार्पिकादौ द्वित्वम्, तावकीनादौ एकत्वं वृत्तावपि संख्याविशेषः प्रतीयत इति अभेदैकत्वस्य संख्यासामान्यात्मकता=संख्याजातिरूपता अभ्युपगताऽत्रेति ॥ १०१ ॥

ननु च 'गौर्गौः' इत्याद्यभिन्नप्रत्ययावेद्यं सामान्यं गोत्वादि, अत्र चाभेदैकत्वस्य न किञ्चित् कार्यम्। भेदा एव हि=संख्याविशेषा एव हि शास्त्रकार्ययोगिन इति वृत्तावुपसर्जनपदार्थे किमभेदैकत्वसद्भावे लिङ्गमित्याशङ्क्याह—अगृहीतविशेणेति, भेदरूपसमावेशे इति च।

अस्य पद्यद्वयस्यार्थः—यथा दूरात् कश्चन पार्थिवः पदार्थः अगृहीतशुक्लादिरूपविशेषेण रूपेण रूपसामान्येन गृह्यमाणेन रूपवान् प्रख्यायते; अस्ति किञ्चिद् रूपवद् द्रव्यमिति, भेदरूपं तु= विशेषरूपं तु शुक्लादि न गृह्यते, तथा भेदरूपसमावेशे=वृत्तावुपसर्जनपदार्थे भेदरूपस्य—संख्याविशेषरूपस्य एकत्वद्वित्वादिकस्य समावेशे=संबन्धेऽविवक्षिते सति प्रकरणादिज्ञानरूपनिमित्तवशात् कश्चन संख्यासामान्यस्य एकत्वादिरूपसंख्या विशेषरूपो भागः पार्पिक-तावकीनादौ प्रकाशितः "पर्पादिभ्यष्ठन्" "तवकममकावेकवचने" इत्यादौ शास्त्रेऽङ्गत्वेन=अन्वाख्यानाङ्गत्वेन गृह्यत इति।

अयं भावः। गुणैर्द्रव्यस्याविनाभावात् अप्रतीतनीलादिगुणविशेषरूपमपि द्रव्यं यथा दूरात् सामान्येन रूपवदिति प्रतीयते, तथा वृत्तावुपसर्जनपदार्थे संख्याविशेषसमवाये प्रतिपाद्यत्वेनानिष्टे=

तावतावगते सत्त्वभूतत्वादुपसर्जनार्थे योंऽशस्तत्संसृष्टो निमित्तविशेषात् तवकाद्यादेश-लक्षणादाविर्भूतः स तावकीनादिशब्दान्वाख्यानाय शास्त्रे निमित्ततयोपादीयते। तथाच संख्यावत्त्वसम्प्रत्यय एवात्रोपसर्जनार्थस्याभेदैकत्वसंख्याकार्यम् ॥ १०२,१०३ ॥

यदि तर्हि सर्वसंख्यासंसर्गरूपमभेदैकत्वं न तद्व्यतिरिक्तं तदोपसर्जनपदैर्विशेषा-त्मकमेव कथं न प्रतिपद्यत इत्याह—

**सङ्ख्यासामान्यरूपेण तदा सोंऽशः प्रतीयते।**
**अर्थस्यानेकशक्तित्वे शब्दैर्नियतशक्तिभिः ॥१०४॥**

सोंऽशः पूर्वपदार्थभाग उपसर्जनार्थः सत्त्वरूपत्वादनेकसंख्यासमाहारयोग-योग्योऽपि संख्यावानित्येवमभेदेनैवोपसर्जनपदेन प्रतिपाद्यते। न तु विशेषरूपप्रति-पादने तस्य शक्तिरस्ति। वाक्यवद् वृत्तौ अनेकशक्तिरपि ह्यर्थो न शब्दैः साकल्येन स्पृश्यते, नियतविषयत्वाच्छब्दशक्तीनामित्यर्थः ॥ १०४ ॥

---

अविवक्षिते सत्त्वभूतत्वात्=द्रव्यरूपत्वादुपसर्जनार्थे संख्यावान् इत्येतावता रूपेणावगते योंऽशस्त-त्संसृष्टः=संख्यासामान्यसंसृष्टो विशेषरूपः, 'निर्विशेषं न सामान्यम्' इति न्यायात् निमित्तविशेषात् तवकाद्यादेशलक्षणादाविर्भूतः स तावकीनादिशब्दान्वाख्यानाय शास्त्रे निमित्ततयोपादीयते।

तथा चात्र=वृत्तौ, उपसर्जनार्थस्य संख्यावत्त्वसंप्रत्यय एवाभेदैकत्वसंख्याकार्यमिति एतदेव तत्सद्भावे लिङ्गमिति ॥ १०२–१०३ ॥

यदि तर्हि सर्वसंख्यासंसर्गरूपमभेदैकत्वं न तद्व्यतिरिक्तम्, तदोपसर्जनपदैः संख्याविशेषा-त्मकमेव वस्तु कथं न प्रतिपद्यते इत्याह—संख्यासामान्यरूपेणेति।

अस्यार्थः—तदा वृत्तौ उपसर्जनपदार्थे संख्याविशेषज्ञापकनिमित्ताभावे सोंऽशः संख्यासामा-न्यस्य संख्याविशेषरूपोंऽशोऽर्थस्यानेकशक्तित्वेऽप्यनेकधर्मत्वेऽपि तत्तदर्थबोधने नियतशक्तिभिः शब्दैः संख्या सामान्यरूपेणैव प्रतीयते।

यद्वा वृत्तेः सोंऽशः पूर्वपदार्थभाग उपसर्जनार्थः संख्यासामान्यरूपेण विशिष्ट एव संख्या वा नित्या, एवमुपसर्जनपदेन प्रतिपाद्यते इति योजना।

अयं भावः। सोंऽशः पूर्वपदार्थभाग उपसर्जनार्थः सत्त्वरूपत्वात् = द्रव्यरूपत्वाद् अनेकसंख्या-समूहयोगयोग्योऽपि संख्याविशेषज्ञापकनिमित्ताभावे संख्या वा नित्येवमभेदेनैव=संख्याविशेषा-विभागेनैवोपसर्जनपदेन प्रतिपाद्यते, न तु संख्याविशेषरूपप्रतिपादने तस्य=उपसर्जनपदस्य शक्तिरस्ति। अनेकशक्तिरपि ह्यर्थः=अनेकसंख्यारूपधर्मविशिष्टोऽप्यर्थः वाक्यवद् वृत्तौ न शब्दैः साकल्येन=सर्वधर्मवत्तया स्पृश्यते=ज्ञाप्यते, शब्दशक्तीनां नियतार्थविषयकत्वादिति ॥ १०४ ॥

ननु च यद्युपसर्जनार्थे संख्याया अभेदः, कथं भेदानुगमः, अथ भेदः, कथमभेदात्मकत्वमित्याशङ्क्याह—

**अव्ययानां च यो धर्मो यश्च भेदवतां क्रमः ।**
**अभिन्नव्यपदेशार्हमन्तरालं तदेतयोः ॥१०५॥**

अलिङ्गासंख्यमव्ययमित्यसंख्यत्वमव्ययानां स्वभावः। एतादृशी हि शब्दशक्तिर्यदव्ययानि सत्त्वस्वभावादतिवृत्तमतश्च निस्संख्यमर्थमाहुः। भेदवन्तो विभक्तिविशेषावच्छिन्नाः शब्दाः, तेषामेकत्वादिसंख्याविशेषावच्छिन्नार्थप्रत्यायनं स्वभाव इति तदर्थो विशिष्टसंख्यायुक्तः, तदेतामुभयीमवस्थामतीत्योपसर्जनपदानामर्था वर्तन्ते।

तदेवं वृत्तावभेदैकत्वसंख्यावगमे विशेषो वाक्यादित्यत्यन्तभेदः ॥ १०५ ॥

अत्र वार्त्तिककारीयं संवादकमाह—

**अलुकश्चैकवद्भावस्तस्मिन् सति न शिष्यते ।**
**स च गोषुचरादीनां धर्मोऽस्ति वचनान्तरे ॥१०६॥**

---

ननु च यद्युपसर्जनार्थे संख्याया अभेदः=अभेदैकत्वसंख्यारूपः, तदा कथं तत्र पार्पिकतावकीनादौ भेदानुगमः=संख्याविशेषावगमः। अथ भेदः=संख्याविशेषावगमः, तदा तत्र कथं राजपुरुषादौ उपसर्जनपदार्थेऽभेदात्मकत्वम्=अभेदैकत्वसंख्यारूपमित्याशङ्क्याह—अव्ययानाञ्चेति।

अस्यार्थः—अव्ययानाञ्च यो धर्मोऽसत्त्ववाचित्वादसंख्यत्वरूपः स्वभावः, यश्च भेदवताम्=विभक्तिविशेषवतां शब्दानां क्रमः=एकत्वादिसंख्याविशेषावच्छिन्नार्थप्रत्यायनं स्वभावः, एतयोः=अव्ययधर्मभेदवत्-शब्दक्रमयोरन्तरालम्=उपसर्जनपदार्थस्याभिन्नव्यपदेशार्हम्=अभिन्नव्यपदेशे योग्यम्, तद्=अभेदैकत्वम्। एवञ्च वृत्तावभेदैकत्वसंख्यावगम एव विशेषो वाक्यादिति अत्यन्तभेदो वृत्तिवाक्ययोरिति।

अयं भावः—अलिङ्गासंख्यमव्ययमिति असंख्यत्वमव्ययानां स्वभावः। एतादृशी हि शब्दशक्तिर्यदव्ययानि सत्त्वस्वभावादतिवृत्तम्=असत्त्वभूतम्, अतश्च निःसंख्यमर्थमाहुः। भेदवन्तो विभक्तिविशेषावच्छिन्नाः शब्दाः, तेषामेकत्वादिरूपसंख्याविशेषावच्छिन्नार्थप्रत्यायनं स्वभाव इति तदर्थो विशिष्टसंख्यायुक्तः, तदेतामव्ययभेदवत्-शब्दयोरुभयीमवस्थामतीत्योपसर्जनपदानामर्था वर्तन्ते।

तदेवं वृत्तावभेदैकत्वसंख्यावगमे स एव विशेषो वृत्तौ वाक्यादिति तयोरत्यन्तभेदोऽवगन्तव्य इति ॥ १०५ ॥

अत्र वार्त्तिककारीयं संवादकं मतमाह—अलुकश्चैकवद्भाव इति।

अस्यार्थः—तस्मिन् सति=वृत्तावुपसर्जनपदार्थेऽभेदैकत्वसंख्याभ्युपगमे सति, 'स्तोकाभ्यां मुक्तः, स्तोकेभ्यो मुक्तः' इत्यादिविग्रहेऽपि 'स्तोकान्मुक्तः' इत्येतत्सिद्धयर्थम् 'अलुकश्चैकवद्भावो न शिष्यते', उपसर्जनपदार्थेऽभेदैकत्वसंख्याऽभ्युपगमे अलुक एकवद्भावस्य स्वतःसिद्धत्वात्। किञ्च, स धर्मः=अभेदैकत्वसंख्यारूपो धर्मः, गोषुचरादीनां समासे उपसर्जनपदे वचनान्तरे बहुवचने सत्यप्यस्ति।

इह 'स्तोकाभ्यां मुक्तः, स्तोकेभ्यो मुक्तः' इत्यपि वाक्ये 'स्तोकान्मुक्तः' इत्येवेष्यते वृत्तिः।

तथा च "एकवद्भावो वक्तव्यः" (भा० वा० ६।३।१) इति चोदिते परिहृतं वाक्यकारेण—"एकवद्वचनमनर्थकम्" ( भा० वा० ६।३।१ ), "द्विबहुष्वसमासः" ( भा० वा० ६।३।१ ) इति। तदेतत् कथमुपपद्यते ?

यदि वृत्तावभेदैकत्वसंख्याप्रादुर्भावाद् द्वित्वबहुत्वावगत्यभावः। तथा च तस्मिन्नभेदैकत्वे सति· द्विवचनबहुवचनयोरभावात् समासाभाव इति द्वित्वाद्यपक्रमेऽप्येकवचनान्तानामेव समास इति नार्थ एकवद्भावानुशासनेन। "एकवचनं तूत्सर्गतः करिष्यते" इति भवति।

अभेदैकत्वेऽपि वा तदविरोधः, सामान्येनैकत्वे विधानात्।

कथं तर्हि गोषुचरो वर्षासुजोऽप्सुयोनिरिति बहुवचनान्तानां समास इति चेत्, अह—स चेति।

सोऽभेदैकत्वाख्यो धर्मो वचनान्तरे एकवचनादन्यस्मिन् बहुवचनेऽप्यत्रास्ति।

अत्र हि नेदं व्यक्तिबहुत्वे बहुवचनम्, अपि तु 'जात्याख्यायामेकस्मिन् बहुवचनम्। ( पा० १-२-५८ ) इति।

तथाचैकस्यामपि यो गवि चरति प्राणी, सोऽपि गोषुचर इन्द्रगोपोऽभिधीयते।

---

एवञ्चेदं विज्ञायते सर्वस्मिन्नेव वचने सति वृत्तावुपसर्जनपदार्थेऽभेदैकत्वसंख्याऽस्तीति मत्वा 'अलुकश्चैकवद्भावस्तस्मिन् सति न शिष्यते' इत्युक्तिरिति।

अयं भावः—इह 'स्तोकाभ्यां मुक्तः, स्तोकेभ्यो मुक्तः' इत्यपि विग्रहवाक्ये 'स्तोकान्मुक्तः' इत्येवेष्यते समासरूपा वृत्तिः।

तथा च "एकवद्भावो वक्तव्यः" इति चोदिते परिहृतं वाक्यकारेण—"एकवद्वचनमनर्थकम्, द्विबहुष्वसमासः" इति।

तदेतत्तदा उपपद्यते, यदि वृत्तावभेदैकत्वसंख्याप्रादुर्भावादुपसर्जने द्वित्वबहुत्वावगत्यभावः। तथा च तस्मिन् सति=वृत्तावुपसर्जने अभेदैकत्वे सति द्विवचनबहुवचनयोरभावात् तयोः समासाभाव इति द्वित्वाद्युपक्रमेऽपि वाक्ये द्विवचनादिबोध्यद्वित्वादिसत्त्वेऽपि एकवचनान्तानामेव समास इति नार्थ एकवद्भावानुशासनेन। समासे संख्याविशेषाभावेऽपि "एकवचनं तूत्सर्गतः करिष्यते" इति भवति।

यद्वा अभेदैकत्वेऽपि तदविरोधः=एकवचनाविरोधः, सामान्येन एकत्वमात्रे तद्विधानात्।

कथं तर्हि—"गोषुचरः, वर्षासुजः, अप्सुयोनिः" इति बहुवचनान्तानां समास इति चेत्, आह—स चेति।

सोऽभेदैकत्वाख्यो धर्मो वचनान्तरे एकवचनादन्यस्मिन् बहुवचनेऽप्यत्रास्ति।

अत्र हि नेदं व्यक्तिबहुत्वे बहुवचनम्'। अपि तु—"जात्याख्यायामेकस्मिन् बहुवचनम्" ( पा० १।२।५८ ) इति।

तथा चैकस्यामपि यो गवि चरति प्राणी सोऽपि गोषुचर इन्द्रगोपः=कुक्कुटः अभिधीयते।

एकोऽपि चाप्परमाणुरप्छब्देन बहुवचनान्तेनाभिधीयते । वर्षारात्रोऽपि चाभिन्नो वर्षाशब्देन बहुवचनान्तेन शब्दशक्तिस्वाभाव्यादित्यत्राभेदैकत्वसंख्या वचनभेदप्रतिबन्धं न करोति । तथाप्यभेदैकत्वस्यैव प्रतीतेरित्यर्थः ॥ १०६ ॥

द्विवचनं तु नान्वाख्यातं जाताविति तत् सर्वथा वृत्तिषु संख्याभेदतिरोधानान्न भवतीत्याह—

**जातौ द्विवचनाभावात् तद् वृत्तिषु न विद्यते ।**
**प्रत्याख्याने तु योगस्य द्रव्ये गोषुचरादयः ॥१०७॥**

तद् द्विवचनं जातावनुपदेशाद् व्यक्तिगतभेदतिरोधानाच्च वृत्तिषु नास्ति, बहुवचनं तु "जात्याख्यायाम्" इत्युपदेशादस्ति। तथा च वृत्तावेकवचनबहुवचनयोर्भावेऽपि द्विवचनाभावोऽभेदैकत्वफलमवतिष्ठते ।

यदा तु जातेराश्रयोपाधिक एव बहुत्वे बहुवचनोपपत्तेः "जात्याख्यायाम्" इति सूत्रं प्रत्याख्यायते, तदा गोपुचर इत्यत्र गोद्रव्यगतभेदाश्रयमेव बहुवचनं वृत्तावपि ।

अनवयवेन हि व्यक्तीः परामृशति गोपुचरशब्दः । 'अप्सुयोनिः, वर्षासुजः' इत्यत्राप्यवयवप्रचयाद् धर्मबहुत्वाद् वा व्यक्तेरेकत्वेऽपि बहुवचनम् । शब्दशक्तिस्वाभाव्याद्धि किञ्चिद् बहुवचनमवयवबहुत्वमाह किञ्चिद् द्रव्यगधर्मबहुत्वम् ॥१०७॥

---

एकोऽपि च अप्परमाणुर्बहुवचान्तेनाप्शब्देनाभिधीयते, आप इति । वर्षारात्रोऽपि चाभिन्नः = एको वर्षाशब्देन बहुवचनान्तेनाभिधीयते, शब्दशक्तिस्वाभाव्यादिति । अत्र = गोपुचर इत्यादौ अभेदैकत्वसंख्या बहुवचनप्रतिबन्धं न करोति । तथापि = बहुवचनसत्त्वेऽपि अभेदैकत्वस्यैव प्रतीतेरिति ॥ १०६ ॥

द्विवचनं तु नान्वाख्यातं जाताविति तत् सर्वथा वृत्तिषु न भवति, तत्र संख्याभेदतिरोधानादित्याह—जातौ द्विवचनाभावादिति ।

अस्यार्थः—जातौ विधायकाभावेन द्विवचनाभावात् तद् द्विवचनं वृत्तिषु न विद्यते । "जात्याख्यायामेकस्मिन् बहुवचनम्" (पा० १।२।५८) इति योगस्य जातेराश्रयोपाधिकबहुत्वेन बहुवचनोपपत्त्या प्रत्याख्याने तु द्रव्ये द्रव्यगतबहुत्वे बहुवचनोपपत्त्या गोषुचरादयः शब्दा सिद्धयन्तीति ।

अयं भावः—तद् द्विवचनं जातावनुपदेशात् = अविधानाद् व्यक्तिगतभेदतिरोधानाच्च वृत्तिषु नास्ति, बहुवचनं तु अस्ति, जात्याख्यायामित्युपदेशात् । तथा च वृत्तावेकवचनबहुवचनयोरुपदेशाद् भावेऽपि द्विवचनाभावोऽभेदैकत्वफलमवतिष्ठते ।

यदा तु जातेराश्रयोपाधिके = आश्रयनिमित्तके एव बहुत्वे बहुवचनोपपत्तेः "जात्याख्यायाम्" (पा० १।२।५८) इति सूत्रं प्रत्याख्याय, तदा 'गोषुचरः' इत्यत्र गोद्रव्यगतभेदप्रयुक्तमेव बहुवचनं वाक्य इव वृत्तावपि ।

अनवयवेन हि = साकल्येन हि व्यक्तीः परामृशति गोषुचरशब्दः = गोषुचरशब्दघटको गोशब्दः । 'अप्सुयोनिः, वर्षासुजः' इत्यत्रापि अवयवप्रचयात् = अवयवबाहुल्याद् धर्मबहुत्वाद् वा व्यक्तेरेकत्वेऽपि बहुवचनम् । शब्दशक्तिस्वाभाव्याद् हि किञ्चिद् बहुवचनमवयवबहुत्वमाह—वर्षासुज इत्यत्र किञ्चिद् द्रव्यगधर्मबहुत्वम्, अप्सुयोनिरित्यत्राप्शब्दस्यैकपरमाणुपरत्वे इति ॥ १०७ ॥

तदेतदनुपपन्नमित्याह—

आश्रयाद् भेदवत्ताया: सर्वभेदसमन्वय: ।
द्रव्याभिधानपक्षोऽपि जात्याख्यायां न विद्यते ॥१०८॥
सर्वद्रव्यगतिश्चैवमेकशेषश्च नोच्यते ।
प्रत्याख्यातेऽन्यथा सूत्रे भिन्नद्रव्यगतिर्भवेत् ॥१०९॥

द्रव्यबहुत्वाश्रयेण गोषुचरादौ बहुवचनेऽङ्गीक्रियमाणे वृत्तौ संख्याविशेषयोगः स्फुटोऽभ्युपगतः स्यात् ।

तथा च भेदवत्ताया आश्रयणात् सर्वैरेकत्वद्वित्वबहुत्वैरपि सम्बन्धः प्राप्त इति कासावभेदैकत्वसंख्या ? एकस्यां द्वयोर्वापि चरतश्च भवत्यभिधानं गोषुचर इति ।

तथा च नेदं व्यक्तिभेदाथत्तं बहुवचनम्, अपि तु जात्याख्यायामेवेति तत्र द्रव्याभिधानपक्षस्याभावात् कथं द्रव्यभेदाश्रयमिदं बहुवचनं वर्ण्यते । एवम् 'अप्सुयोनिः' इत्यादावपि वाच्यम् ।

---

तदेतदनुपपन्नम्, द्रव्ये गोषुचरोदय इति इत्याह—आश्रयाद् भेदवत्ताया इति । सर्वद्रव्यगतिश्चैवमिति च ।

अस्य पद्यद्वयस्यार्थः—व्यक्तिगताया भेदवत्ताया गोषुचर इत्यादौ बहुवचनोत्पत्तौ निमित्तत्वेनाश्रयात् सर्वभेदसमन्वयः=सर्वेषां भेदानां संख्याविशेषाणां समन्वयः सम्बन्धः प्राप्नोति । तथा च नेदं व्यक्तिभेदप्रयुक्तं बहुवचनम्, अपि तु जात्याख्यायामेवेति जात्याख्यायां द्रव्याभिधानपक्षोऽपि न विद्यते ।

एवम् 'गोषुचरः' इत्यादौ जात्याख्यायां बहुवचनाभ्युपगमे, सर्वद्रव्यगतिश्च भवति, द्रव्याभिधानपक्षे तु सा न स्यात्, एकशेषश्च नोच्यते=एकशेषसूत्रञ्च प्रत्याख्यायते, अत्र पक्षे एकेनैव शब्देन सकलद्रव्यावगतेः ।

द्रव्याभिधानपक्षे तु प्रत्यर्थं शब्दाभिनिवेश इति कृत्वा सकलद्रव्यावगतिर्न स्यादिति एकशेषसूत्रमारब्धव्यं भवति ।

किञ्च "जात्याख्यायाम्" (पा० १।२।५८) इति सूत्रेऽन्यथाद्रव्याभिधानपक्षमादाय, प्रत्याख्याते 'गोषुचरः' इत्यादौ भिन्नानां द्रव्याणां गतिर्ज्ञानं भवेत् । तच्चानिष्टम्, वृत्तावभेदैकत्वसंख्याऽभ्युपगमविरोधादिति ।

अयं भावः—द्रव्याभिधानपक्षेण "जात्याख्यायाम्" (पा० १।२।५८) इति सूत्रं प्रत्याख्याय द्रव्यबहुत्वाश्रयेण गोषुचरादौ बहुवचनेऽङ्गीक्रियमाणे वृत्तौ संख्याविशेषयोगः स्फुटोऽभ्युपगतः स्यात् ।

तथा च व्यक्तिगताया भेदवत्ताया गोषुचर इत्यादौ बहुवचनोत्पत्तौ निमित्तत्वेनाश्रयणात् सर्वैरेकत्वद्वित्वबहुत्वैरपि संबन्धः प्राप्त इति काऽसावभेदैकत्वसंख्या ? एकस्यां द्वयोर्वाऽपि चरतश्च भवत्येवमविधानं गोषुचर इति ।

तस्माज्जात्याख्यायामेवेदं बहुवचनं न्याय्यम् ।

न च द्रव्यविवक्षाश्रयेण योगस्य प्रत्याख्यानमुचितम् । एवं ह्येकशेष आरम्भणीयः स्यात्, प्रत्यर्थं शब्दनिवेशान्नैकेनानेकार्थाभिधानमिति कृत्वा । जात्यभिधाने तु तत्रैव बहुवचने सर्वद्रव्यगतिर्बहुवचनान्तादेकस्मादपि शब्दाद् भवतीति प्रत्याख्यातमेकशेषसूत्रम्, "आकृत्यभिधानाद् वैकं विभक्तौ वाजप्यायनः" (भा० वा० १।२।६४) इति । "जात्याख्यायाम्" ( पा० १।२।५८ ) इति सूत्रं समर्थितमेवम्, "जात्याख्यायां सामान्याभिधानादैकार्थ्यम्" (भा० १।२।५३) इति ।

ननु च कोऽतिशयो जात्याख्यायामित्यस्य, येनैतदारम्भः समर्थ्यत इत्याह—प्रत्याख्यात इत्यादि । "जात्याख्यायाम्"इत्यस्मिन् योगेऽनारभ्यमाणे जातिपरायां चोदनायां बहुवचनाभावाद् गोषुचर इत्यादौ द्रव्यबहुत्वे बहुवचनमिति व्यक्तिबहुत्वप्रतीतिर्भवेत् । न चैवमिष्यते, एकस्यां गवि द्वयोर्वापि गवोश्चरति गोषुचर इत्यभिधानस्य गोषुचरे कुक्कुटाख्ये पक्षिविशेषे रूढेरित्यर्थः ।

---

तथा च नेदं व्यक्तिभेदायत्तं बहुवचनम्, अपि तु जात्याख्यायामेवेति तत्र द्रव्याभिधानपक्षस्याभावात् कथं द्रव्यभेदाश्रयमिदं बहुवचनं वर्ण्यते ? एवम् 'अप्सुयोनिः' इत्यादावपि बोध्यम् ।

तस्माज्जात्याख्यायामेवेदं गोषुचर इत्यादौ बहुवचनं न्याय्यम् ।

किञ्च, द्रव्यविवक्षाश्रयेण जात्याख्यायामिति योगस्य प्रत्याख्यानं नोचितम् । एवं हि एकशेष आरम्भणीयः स्यात् । प्रत्यर्थं शब्दनिवेशान्नैकेन शब्देनानेकार्थाभिधानमिति कृत्वा । जात्यभिधानपक्षे तु तत्रैव=जातावेव बहुवचने सर्वद्रव्यगतिः=सर्वद्रव्यज्ञानं बहुवचनान्तादेकस्मादपि शब्दाद् भवतीति प्रत्याख्यातमेकशेषसूत्रम् "आकृत्यभिधानाद् वैकं विभक्तौ वाजप्यायनः" ( भा० वा० १।२।६४ ) इति ।

अस्यार्थः—वा=अथवा, आकृत्यभिधानात्=जात्यभिधानाद्विभक्तौ परतोऽनेकार्थबोधनाय एकमेव शब्दस्वरूपं प्रयुज्यते, न त्वनेकम् । प्रत्यर्थं शब्दाभिनिवेश इत्यभ्युपगमस्तु द्रव्याभिधानपक्षे इति वाजप्यायन आहेति । "जात्याख्यायाम्" इति सूत्रं तु तेनैव एवं समर्थितम्—"जात्याख्यायां सामान्याभिधानादैकार्थ्यम्" (भा० १।२।५३) इति ।

अस्यार्थः—जात्याख्यायां जात्यभिधानपक्षे 'गोषुचरः' इत्यादावुपसर्जनपदेन सामान्याभिधानात्=जात्यभिधानादुपदेशाद् बहुवचनसत्त्वेऽपि ऐकार्थ्यमभेदैकत्वसंख्यारूपमस्तीति ।

ननु च द्रव्याभिधानपक्षात् कोऽतिशयः=विशेषो जात्याख्यायामित्यस्य योगस्य, येनैतदारम्भः समर्थ्यत इत्याशङ्क्याह=प्रत्याख्यातेऽन्यथा सूत्रे इति ।

अस्यार्थः—जात्याख्यायामित्यस्मिन् योगेऽनारभ्यमाणे जातिपरायां चोदनायाम्=जात्यभिधानपक्षे जातिपरे शब्दे बहुवचनाभावात् 'गोषुचरः' इत्यादौ द्रव्यबहुत्वे बहुवचनमिति कृत्वा व्यक्तिबहुत्वप्रतीतिर्भवेत् । न चैवमिष्यते, वृत्तावभेदैकत्वसंख्याऽभ्युपगमात् । एकस्यां गवि, द्वयोर्वाऽपि गवोश्चरति गोषुचरे कुक्कुटाख्ये पक्षिविशेषे गोषुचर इत्यभिधानस्य रूढेरिति ।

तस्माज्जात्याख्यायामेवैतदुपपद्यत इति सत्यप्यभेदैकत्वे तत्रैवेदं वाचनिकं बहुवचनं विज्ञेयम् ॥ १०८,१०९ ॥

इदानीमभेदैकत्वसंख्यायाः सर्वसंख्याविशेषात्मकत्वाद् भेदेन वृत्तौ स्वरूपोप दर्शनमित्येतदभिधातुं चोद्यपूर्वकमुपक्रमते—

**वृत्तौ यो युक्तवद्भावो वरणादिषु शिष्यते ।**
**अभेदैकत्वसङ्ख्यायां गोदौ तत्र न सिध्यति ॥११०॥**

"लुपि युक्तवद् व्यक्तिवचने"(पा० १-२-५१) इत्यत्र पक्षद्वयं सम्भाव्यते। तथाहि–यदा व्यक्तिवचने लिङ्गसंख्ये कथ्येते, तदा लुबन्तलक्षणायां तद्धितवृत्तौ विभक्तिनिवृत्तावप्यर्थनिवृत्तेरभावाद् वृत्तस्य ये व्यक्तिवचने तयोरतिदेश इत्ययं पक्षः ।

यदा पुनर्व्यक्तिद्योतनः शब्दो व्यक्तिः, वचनमप्येकदेशलोपादेकवचनादि विवक्षितम्, तदा तस्य वृत्तावदर्शनाद् प्रागवृत्तेर्व्यपेक्षावस्थायां ये व्यक्तिवचने तयोर्लुबर्थेऽयमतिदेश इत्ययं पक्षः ।

---

तस्माज्जात्याख्यायामेवैतदुपपद्यते = 'गोषुचरः' इत्येतदुपपद्यत इति वृत्तावभेदैकत्वे सत्यपि तत्रैव = जात्याख्यायामेव इदं वाचनिकं बहुवचनम् = गोषुचर इत्यत्रत्यं जात्याख्यायामिति वचनसिद्धं बहुवचनं विज्ञेयमिति ॥ १०८-१०९ ॥

इदानीमभेदैकत्वसंख्यायाः सर्वसंख्याविशेषात्मकत्वादेव गोदौ वरणा इत्यादिवृत्तौ भेदेन संख्याविशेषस्वरूपोपदर्शनम् = स्वरूपदर्शनम्—'अध्यागच्छति' इत्यादावध्यादिवदुपदर्शनमित्यत्रोपशब्दोऽनर्थक इत्येतत् चोद्यपूर्वकमभिधातुमुपक्रमते—वृत्तौ यो युक्तवद्भाव इति ।

अस्यार्थः—वृत्तावभेदैकत्वसंख्यायामभ्युपगतायां सत्यां वरणादिषु यो युक्तवद्भावो लिङ्गवचनयोः प्रकृतिवद्भावः, वरणानां प्राकाराणां वृत्तिविशेषाणां वा स्वभावसिद्धबहुत्वानामदूरभवं नगरं वरणाः, गोदयोः पूर्वोत्तरभागरूपयोः कोसलयोरिव नगरभागयोरदूरभवो ग्रामो गोदौ इत्यादौ शिष्यते अतिदिश्यते । वरणागोदौ च जनपदरूपौ तु न, 'वरणादिभ्यश्च' (पा० ४।२।८२) इत्यस्याजनपदार्थ आरम्भ इत्युक्तेः । तत्र वृत्तावभेदैकत्वसंख्यायां स्थितायां जात्याख्यायां द्विवचनाभावाद् गोदौ न सिद्ध्यति । बहुवचनं तु वरणाः पञ्चाला इत्यादौ जात्याश्रयं सिद्ध्यतीति ।

अयं भावः—"लुपि युक्तवद् व्यक्तिवचने"(पा०१।२।५१) इत्यत्र पक्षद्वयं संभाव्यते। तथाहि—यदा व्यक्तिवचने लिङ्गसंख्ये कथ्येते, तदा लुबन्तलक्षणायां तद्धितवृत्तौ वरणा इत्यादौ लुका विभक्तिनिवृत्तावपि तद्द्योत्यार्थसंख्यानिवृत्तेरभावाद् वृत्तस्य = वृत्तिमुपगतस्य ये व्यक्तिवचने = लिङ्गसंख्ये तयोर्लुबन्तेऽतिदेश इत्ययं पक्षः ।

यदा पुनर्व्यक्तिद्योतनः = 'लिङ्गद्योतको विभक्तिरूपः शब्दो व्यक्तिः, वचनमपि एकदेशलोपात् = एकवचनशब्दैकदेशैकशब्दरूपपूर्वपदलोपाद् एकवचनादिर्विवक्षितम्, तदा तस्य = एकवचनादेर्वृत्तावदर्शनात् प्राग्वृत्तेर्व्यपेक्षावस्थायाम् = वाक्यावस्थायां ये व्यक्तिवचने तयोर्लुबर्थेऽयमतिदेश इत्ययं पक्षः ।

तत्र पूर्वस्मिन् पक्षे गोदयोरदूरभवो ग्रामो गोदौ ग्राम इति न सिध्यति । यस्माद् वृत्तावुपसर्जनस्याभेदैकत्वसंख्या प्रादुर्भवतीत्युक्तम् । तद्गतस्यैव च संख्यालक्षणस्यार्थस्यातिदेश इति द्वित्वस्यात्रातिदेशाभावाद् द्विवचनं न स्यात् । बहुवचनं तु पञ्चाला इत्यादौ जात्याश्रयं सिध्यति ॥ ११० ॥

अथ द्वितीयः पक्षः, तत्राप्याह—

**प्राग्वृत्तेर्युक्तवद्भावे षष्ठी भेदाश्रया भवेत् ।**
**वृत्तौ सङ्ख्याविशेषाणां त्यागाद् भेदो निवर्तते ॥१११॥**

गोदयोरदूरभवो ग्राम इत्यत्र वाक्ये दृष्टा व्यतिरेकनिबन्धना षष्ठीति सा वृत्तावपि स्यात्, अतिदेशात् । भेदस्याभेदैकत्वेऽपि गोदावित्यत्र 'षष्ठ्यपि हि वचनम्' ( भा० १।२।५३ ) इत्युक्तं भाष्ये ।

---

तत्र पूर्वस्मिन् पक्षे गोदयोरदूरभवो ग्रामो गोदौ ग्राम इति न सिद्धयति । यस्माद् वृत्तावुपसर्जनस्याभेदैकत्वसंख्या प्रादुर्भवतीत्युक्तम् । तद्गतस्यैव च = अभेदैकत्वसंख्यागतस्यैव च संख्यालक्षणस्यार्थस्य लुपि युक्तवदित्यतिदेश इति द्वित्वस्यात्रातिदेशाभावात् 'गोदौ ग्रामः' इति द्विवचनं न स्यात् । वहुवचनं तु 'वरणाः, पञ्चालाः' इत्यादौ यथायथं नगरे जनपदे च जात्याश्रयं सिद्धयतीति ।

अयमत्र पिण्डीकृतो निष्कर्षः—वृत्तावभेदैकत्वसंख्या भासत इति स्थितम् । तत्र चाभेदैकत्वसंख्यागतस्य वहुत्वसंख्यारूपस्य विशेषस्य 'लुपि युक्तवद्' इत्यतिदेशो वरणाः पञ्चाला इति जात्याश्रयं वहुवचनं सिद्धयति, 'गोदौ ग्रामः' इति द्विवचनं तु न सिद्धयति, जातौ उपदेशाभावेन द्विवचनाभावात् । द्रव्याभिधानपक्षस्तु वृत्तौ प्राक् प्रत्याख्यात इति ॥ ११० ॥

अथ प्राग्वृत्तेर्व्यपेक्षावस्थायां ये व्यक्तिवचने तयोर्लुवर्थेऽतिदेश इति द्वितीयः पक्षः, तत्रापि दोषमाह—प्राग् वृत्तेरिति ।

अस्यार्थः—'गोदयोरदूरभवो ग्रामः, गोदौ ग्रामः' इत्यत्र प्राग्वृत्तेर्व्यपेक्षावस्थायां वाक्ये ये व्यक्तिवचने तयोर्वृत्तौ युक्तवद्भावे भेदाश्रया = भेदनिवन्धना षष्ठी भवेत्, द्विवचनातिदेशवत् षष्ठ्यपि अतिदिश्येत ।

अस्मिन् द्वितीयपक्षे प्रसक्तस्य षष्ठीप्रसक्तिरूपस्य दोषस्य परिहारः 'वृत्तस्य ये व्यक्तिवचने तयोर्लुवर्थेऽतिदेशः' इति पूर्वकल्पनेव संभवतीत्याह—वृत्तौ संख्याविशेषाणामिति ।

अस्यार्थः—वृत्तावुपसर्जनार्थेऽभेदैकत्वसंख्यास्वीकारेण तत्र संख्याविशेषाणां त्यागात् संख्याविशेषसमनियतो भेदो निवर्तते । भेदनिवृत्तेश्च नास्ति तन्निवन्धनायाः षष्ठ्या अत्र प्रसङ्ग इति ।

अयं भावः—'गोदयोरविदूरभवो ग्रामः' इत्यत्र वाक्ये दृष्टा स्वार्थसंबन्धानुयोगिप्रतियोगिनोर्भेदनिबन्धना षष्ठी इति सा 'गोदौ ग्रामः' इत्यत्र वृत्तावपि स्यात्, अत्र वृत्तावभेदैकत्वेऽपि भेदस्य 'लुपि युक्तवद् व्यक्तिवचने' इत्यनेनातिदेशात् । "षष्ठ्यपि हि वचनम्" इत्युक्तं भाष्ये । अतः षष्ठ्या अतिदेशो तस्या निमित्तस्य भेदस्याप्यतिदेश इति ।

अत्र परिहारः पक्षान्तराश्रयेणोक्तः 'वृत्तस्य ये लिङ्गसंख्ये ते अतिदिश्येते' ( भा० १।३।५३ ) इति। तद् व्याचष्टे—वृत्तौ संख्येत्यादिना। युक्तस्य प्रत्ययार्थेन सम्बद्धस्य प्रकृत्यर्थस्योपसर्जनस्य संख्याभेदानां हानाद् वृत्तावयं विभागो नास्तीत्यभेदैकत्वसंख्यामात्राश्रयं कार्यमतिदिश्यते, न षष्ठी व्यतिरेकनिबन्धनेत्यर्थः।

एतदनन्तरं क्वचिद् भाष्यमस्ति 'प्रागपि वृत्तेर्ये लिङ्गसंख्ये, ते अतिदिश्येते। षष्ठी न भवति सामान्यातिदेशे विशेषानतिदेशात्' इति।

इह प्रकृत्यर्थसम्बन्धि यदेकवचनत्वादि सामान्यानुगतं वचनम्, तदतिदिश्यते लुबर्थे संख्यान्तरयोगिन्यप्राप्तम्। तच्च यद्यपि विशेषद्वारेणैव प्रवर्तते, तथाप्यव्यभिचारा एकवचनादयो विशेषा अतिदेशात् प्राप्नुवन्ति, न तु षष्ठी। सा व्यतिरेकनिबन्धनेत्यसति तस्मिन्न भवन्ती व्यभिचारिणी वचनसामान्यस्य। यथा वसिष्ठादयो ब्राह्मणस्य ॥ १११ ॥

---

अत्र परिहारः पक्षान्तराश्रयेण=प्रथमपक्षाश्रयेणोक्तः। "वृत्तस्य ये लिङ्गसंख्ये ते अतिदिश्येते" ( भा० १।२।५३ ) इति। वृत्तौ तु नास्ति षष्ठी, न वा सा लिङ्गरूपा संख्यारूपा वा इति न तस्या लुबन्तेऽतिदेश इति। तद् व्याचष्टे कारिकोत्तरार्धेन-वृत्तौ संख्याविशेषाणामिति।

अस्यार्थः—युक्तस्य=प्रत्ययार्थेन संबद्धस्य प्रकृत्यर्थस्योपसर्जनस्य वृत्तावभेदैकत्वसंख्यामुपगतस्य संबन्धिनां संख्याभेदानां विरोधेन हानाद् वृत्तावयं संख्याविभागो नास्तीत्यभेदैकत्वसंख्यामात्राश्रयं कार्यम्=तदविरोधिकार्यम्, लिङ्गसंख्यारूपमत्रातिदिश्यते, तद्विरोधिनी भेदनिबन्धना षष्ठी तु नात्रातिदिश्यत इति। एतदनन्तरम्=वृत्तस्य ये लिङ्गसंख्ये ते अतिदिश्येते इत्येतद् भाष्यानन्तरं क्वचिद् भाष्यमस्ति "प्रागपि वृत्तेर्ये लिङ्गसंख्ये ते अतिदिश्येते। षष्ठी न भवति, सामान्यातिदेशे विशेषानतिदेशात्" इति।

अयमर्थः—इह प्रत्ययार्थसम्बद्धप्रकृत्यर्थसम्बन्धि यदेकवचनत्वादि सामान्यानुगतं वचनं तत् संख्यान्तरयोगिनि लुबर्थेऽप्राप्तमतिदिश्यते। तच्च=एकवचनत्वादिसामान्यानुगतं वचनञ्च यद्यपि सामान्यरूपतया विशेषद्वारेणैव प्रवर्तते, तथाप्यव्यभिचाराः=वचनसामान्याव्यभिचारिणः, एकवचनादयो विशेषा अतिदेशात् प्राप्नुवन्ति, न तु षष्ठी। सा हि व्यतिरेकनिबन्धना=स्वार्थप्रतियोग्यनुयोगिपदार्थभेदनिबन्धना इति असति तस्मिन्=व्यतिरेके न भवन्ती वचनसामान्यस्य व्यभिचारिणी। यथा वसिष्ठादयो ब्राह्मणसामान्यस्य कश्यपादिषु वर्तमानस्य व्यभिचारिण इति।

एवञ्च 'गोदौ' इत्यत्र षष्ठीप्रसङ्गरूपो दोषः पक्षद्वयेऽपि परिवृतो भवतीति निष्कर्ष इति ॥ १११ ॥

एवञ्चात्र 'वृत्तस्य ये लिङ्गसङ्ख्ये, ते अतिदिश्येते' इत्यस्मिन् पक्षेऽभेदैकत्वसङ्ख्यायां गोदौ न सिध्यतीतीदमेव चोद्यमवशिष्यते। तत् समाधातुं पूर्वोक्तमेवाभेदैकत्वसङ्ख्यालक्षणं तावदनुवदति—

**विद्यमानासु सङ्ख्यासु केचित् सङ्ख्यान्तरं विदुः।**
**अभेदाख्यमुपग्राहि वृत्तौ तच्चोपजायते ॥११२॥**

केचिदिति। ये सर्वसङ्ख्यानां संसर्गरूपमभेदैकत्वं मन्यन्ते। अत्र हि दर्शनेऽभेदैकत्वं सर्वसङ्ख्याभेदान् स्वात्मनि स्वीकरोति।

येषां तु 'तद्रूपेऽवयवे सङ्ख्याभेदो वृत्तौ निवर्तते' (वा० प० ३ वृ० १००) इति भेदापोहलक्षणमभेदैकत्वम्, न तन्मते सङ्ख्याभेदस्वीकारो युज्यत इति सूचयति॥११२॥

यतश्च विद्यमानासु संख्यास्वभेदैकत्वसङ्ख्या वृत्तौ प्रादुर्भवति, तदा गोदाविति सिध्यतीत्याह—

**व्यापारं याति भेदाख्यैस्तत् स्वैरवयवैः क्वचित्।**
**आत्मा भेदानपेक्षोऽस्य क्वचिदेति निमित्तताम् ॥११३॥**

---

एवञ्च = 'गोदौ ग्रामः' इत्यत्र षष्ठीप्रसङ्गरूपे दोषे पक्षद्वयेन परिहृते च "वृत्तस्य ये लिङ्गसंख्ये ते अतिदिश्येते" इत्यस्मिन् पक्षे अभेदैकत्वसंख्यायां गोदौ न सिध्यतीतिदमेव चोद्यमवशिष्यते, तत्समाधातुं पूर्वोक्तमेवाभेदैकत्वसंख्यालक्षणं तावदनुवदति—विद्यमानासु संख्यासु इति।

अस्यार्थः—केचित् = सर्वसंख्यानां संसर्गरूपमभेदैकत्वमिति मानिनः, वृत्तावुपसर्जनपदार्थे विद्यमानासु संख्यासु = विद्यमानेषु संख्याविशेषेषु, अभेदाख्यं सर्वेषां संख्याविशेषाणामुपग्राहि = संग्राहकं संख्यान्तरं विदुः। तच्च = अभेदैकत्वं वृत्तौ उपसर्जनपदार्थे उपजायते, न तु व्यपेक्षायामिति।

अयं भावः—ये सर्वसंख्यानां संसर्गरूपमभेदैकत्वं मन्यन्ते, तेऽत्र केचित् पदेनोक्ताः। अत्र हि दर्शने = मतेऽभेदैकत्वं सर्वसंख्याभेदान् = सर्वान् संख्याविशेषान् स्वात्मनि स्वीकरोति = अन्तर्भावयति।

येषां तु मते "तद्रूपेऽवयवे संख्याभेदो वृत्तौ निवर्तते" (वा० प० ३ वृ० १००) इति भेदापोहलक्षणम् = भेदनिवृत्तिलक्षणमभेदैकत्वम्, न तन्मतेऽभेदैकत्वस्य संख्यास्वीकारो युज्यत इति केचिदित्यनेन सूचयति इति॥ ११२॥

यतश्च विद्यमानासु संख्यासु = वृत्तावुपसर्जने विद्यमानेषु संख्याविशेषेष्वभेदैकत्वसंख्यावृत्तौ प्रादुर्भवति, तदा 'गोदौ' इति सिद्धयति, तत्राभेदैकत्वसत्त्वेऽपि तदविरोधिनो द्वित्वस्यापि संख्याविशेषस्य तत्र विद्यमानत्वादित्याह—व्यापारं यातीति।

अस्यार्थः—तत् = संख्याविशेषानुगतमभेदैकत्वं क्वचित् = यत्र संख्याविशेषाणामाविर्भावहेतुरुपदेशादिकमस्ति, तत्र भेदाख्यैः = संख्याविशेषाख्यैः स्वैः = स्वकीयैरवयवैर्द्विर्वचनाद्युत्पत्तिं प्रति व्यापारं याति प्राप्नोति, करोतीति यावत्। अस्योदाहरणम्—'गोदौ ग्रामः' इति।

तदित्यनुगतभेदमभेदैकत्वं क्वचिदन्तर्भूतद्वित्वादिमुखेनोपयुज्यते, यत्र भेदानामाविर्भावहेतुरस्ति।

क्वचित् तु व्यपगतभेदमभिन्नेन स्वरूपेणोपयुज्यते, यत्र भेदहेतुर्नास्ति ॥११३॥

अत्रैवोदाहरणमाह—

**दास्याः पतिरिति व्यक्तो गोदाविति च दृश्यते।**

**व्यापारभेदः सङ्ख्यायास्तस्मादेवं व्यवस्थितः ॥११४॥**

पत्युराक्रोशप्रतिपादनाय दासी सम्बन्धितयोपात्तेति तावन्मात्रस्य विवक्षितत्वाद् द्वित्वबहुत्वानादर इत्यभेदैकत्वसङ्ख्यायाः स्वरूपेणात्र व्यापारो व्यक्तो निश्चितः। गोदाविति तु गोदद्वयसामीप्यं विवक्षितम्, ग्रामस्यैकत्वाद् गोदो ग्राम इति न प्रतीयत इत्यन्तर्गतद्वित्वाश्रयेणाभेदैकत्वसङ्ख्याया व्यापारोऽत्र निश्चितः। तथा च वृत्त्यवस्थागतलिङ्गसङ्ख्यातिदेशेऽपि सम्भवन्ती द्वित्वादिका सङ्ख्या लुवर्थे युज्यतेऽतिदेष्टुम्।

---

क्वचित्तु = यत्राभेदैकत्वस्यावयवानां संख्याविशेषाणामाविर्भावहेतुर्नास्ति, तत्र अस्य = अभेदैकत्वस्य भेदानपेक्षः = संख्याविशेषानपेक्ष आत्मा = स्वरूपम् एकवचनोत्पत्तिं प्रति निमित्ततामेति। यथा—'दास्याः पतिः' इति।

अयं भावः—तदिति अनुगतभेदम् = अनुगतसंख्याविशेषमभेदैकत्वं क्वचित् स्वान्तर्भूतद्वित्वादिमुखेनोपयुज्यते, यत्र भेदानाम् = संख्याविशेषाणाम् आविर्भावहेतुरस्ति।

क्वचित्तु व्यपगतभेदम् = व्यपगतसंख्याविशेषम्, अभिन्नेन स्वरूपेणोपयुज्यत एकवचनोत्पत्तिं प्रति, यत्र भेदहेतुः = संख्याविशेषाविर्भावहेतुर्नास्तीति ॥ ११३ ॥

अत्रैवोदाहरणमाह—'दास्याः पतिः' इति।

अस्यार्थः—संख्यायाः = अभेदैकत्वसंख्यायाः, 'दास्याः पतिः' इत्यत्रोपसर्जनपदे एकवचनोत्पत्तिं प्रति स्वरूपेण व्यापारभेदः = व्यापारविशेषः, व्यक्तो निश्चितो दृश्यते। यतोऽत्र पत्युराक्रोशप्रतिपादनाय दासी पत्युः संबन्धितया उपात्तेति तस्या द्वित्वबहुत्वानादरोऽत्रेति।

किञ्चाभेदैकत्वसंख्यायाः 'गोदौ' इत्यत्र च व्यापारभेदः = स्वान्तर्भूतद्वित्वादिसंख्यामुखेन द्विवचनोत्पत्तिं प्रति व्यापारभेदः = व्यापारविशेषो व्यक्तो दृश्यते। तस्मात् स्थलद्वयेऽभेदैकत्वसंख्याया यथायथं तत्तद्वचनोत्पत्तिं प्रति व्यापारद्वयस्य व्यक्तस्य दर्शनात्, एवम् = अनेन प्रकारेण, संख्याविशेषाविर्भावहेतुसत्त्वे संख्याविशेषद्वारकस्तस्या वचनोत्पत्तिं प्रति व्यापारभेदः, तदसत्त्वे तु स्वरूपेण तस्यास्तत्र व्यापारभेद इत्यनेन प्रकारेण तस्या व्यापारभेदो व्यवस्थित इति।

अयं भावः—'दास्याः पतिः' इत्यत्र पत्युराक्रोशप्रतिपादनाय पत्युः संबन्धितया दासी उपात्तेति तावन्मात्रस्य = पत्युर्दासीसंबन्धमात्रस्य विवक्षितत्वाद्। दास्या द्वित्वबहुत्वानादर इत्यभेदैकत्वसंख्यायाः स्वरूपेणात्र व्यापारो व्यक्तो निश्चितो दृश्यते। 'गोदौ' इत्यत्र तु गोदद्वयसामीप्यं विवक्षितम्, ग्रामस्यैकत्वात्। 'गोदौ ग्रामः' इति न प्रतीयत इत्यभेदैकत्वसंख्याया अन्तर्गतद्वित्वाश्रयेण व्यापारोऽत्र निश्चितः। तथा च वृत्त्यवस्थागतलिङ्गसंख्यातिदेशपक्षेऽपि संभवन्ती द्वित्वादिका संख्या लुवर्थेऽतिदेष्टुं युज्यते।

अन्यत्रापि चायं सङ्ख्याधर्मो दृष्टः। तद्यथा—विंशतिसंख्या दशद्वर्गद्वयारब्धापि न द्वित्वेन सव्यापारा, अपि त्वभेदेनैव स्वधर्मेण-विंशतिर्गाव इति। विंशती इति तु विंशतिप्रचये विवक्षिते एकशेषः। द्वौ त्रय इति तु द्व्यादिका संख्या स्वरूपाभेदेऽपि सङ्ख्येयाश्रयभेदोपादानेन।

एवमभेदैकत्वसङ्ख्यायामपि को विरोधो विषयभेदेन भेदाभेदोपादाने? न च संख्यासु सङ्ख्यान्तराभावादभेदैकत्वसङ्ख्यायामपि सङ्ख्यान्तरासम्भव इति वाच्यम्, असत्यपि सङ्ख्यान्तरयोगे संख्यानां सङ्ख्यान्तर्भावस्य दर्शनात्।

तद्यथा—कति भवतः पुत्रा इति। अत्रोत्तरसंख्यायां पूर्वसंख्यानुप्रवेशादेकत्वद्वित्वादावविशेषेण प्रश्नो भवति। तथा च प्रतिवचनं दृश्यते—एको द्वौ बहव इति।

एवमभेदैकत्वसंख्यायामपि संख्यान्तराण्यन्तर्भवन्ति, तथा च निमित्तवशादुद्भवन्ति? अन्यथात्यन्तमसत्त्वे कथमुद्भवः।

सा चेयं सर्वसंख्यासामान्यभूता 'राजपुरुषः' इत्यादावुपसर्जनपदोपादानैव समवेतसंख्या। सामान्यं हि स्वार्थमुपसर्जनपदान्याहुः, स्वभावात्॥ ११४॥

---

अन्यत्रापि चायं संख्याधर्मो दृष्टः=अभेदरूपः। तद् यथा—विंशतिसंख्या दशद्वर्गद्वयारब्धाऽपि=दशावयवकवर्गद्वयारब्धाऽपि न द्वित्वेन वचनं प्रति सव्यापारा, अपि त्वभेदेनैव स्वधर्मेण विंशतिर्गाव इति। विंशती इति तु विंशतिप्रचये विवक्षिते एकशेषः। 'द्वौ, त्रयः' इत्यत्र तु द्व्यादिका संख्या स्वरूपाभेदेऽपि संख्येयाश्रयभेदोपादानेन=संख्येयवृत्तिभेदपरिग्रहेणोपपद्यते।

एवमभेदैकत्वसंख्यायामपि विषयभेदेन=संख्येयभेदेन 'गोदौ ग्रामः' 'दास्याः पतिः' इत्यादौ भेदाभेदोपादाने को विरोधः? न च संख्यान्तराभावादभेदैकत्वसंख्यायां संख्यान्तरासंभव इति वाच्यम्, असत्यपि संख्यान्तरयोगे संख्यानां संख्यान्तर्भावस्य दर्शनात्।

तद् यथा—'कति भवतः पुत्राः' इति। अत्रोत्तरसंख्यायां पूर्वसंख्यानुप्रवेशादेकत्वद्वित्वादावविशेषेण प्रश्नो भवति। तथा च प्रतिवचनं दृश्यते—'एको द्वौ बहवः' इति।

एवमभेदैकत्वसंख्यायामपि संख्यान्तराण्यान्तर्भवन्ति, तथा च निमित्तवशादुद्भवन्ति। अन्यथा तासां तत्रात्यन्तमसत्वे कथमुद्भवः।

सा चेयं सर्वसंख्यासामान्यभूता 'राजपुरुषः' इत्यादावुपसर्जनपदोपादानैव = उपसर्जनपदोपादायैव समवेतसंख्या=उपसर्जनपदार्थसमवेतसंख्या। सामान्यं हि स्वार्थमव्यावृत्तमुपसर्जनपदान्याहुः—स्वभावात्। तथा च तत्राभेदैकत्वसंख्याया उत्सर्गतो मानम्, द्वित्वादिसंख्याभानं तु तत्र संख्याविशेषाविर्भावहेतुसत्त्वे एवेत्युक्तं प्रागिति॥ ११४॥

यद्येवं द्विपुत्र इत्यत्र कथं द्वित्वावगमः उपसर्जनार्थस्येत्यत आह—

**द्व्यादीनां च द्विपुत्रादौ बाह्यो भेदो निवर्तते ।**
**विभक्तिवाच्यः स्वार्थत्वान्निमित्तं त्ववतिष्ठते ॥११५॥**

द्वयोः पुत्र इति विभक्तिवाक्यं द्वित्वं पूर्वमन्यदेव प्रातिपदिकार्थात् समर्थितम् । तदेव च वृत्तावभेदैकत्वप्रादुर्भावान्निवर्तते । प्रातिपदिकार्थभूतं तु नापगच्छति । अन्यथा निरर्थकत्वे प्रयोग एव न स्याद् द्विशब्दस्य । अस्ति च जहत्स्वार्थायामपि वृत्तावुपसर्जनार्थ इत्युक्तम् । एवं त्रिपुत्र इत्यादौ वाच्यम् ॥ ११५ ॥

यदि तर्हि स्वार्थो द्वित्वं न निवर्तते, तदाभेदैकत्वसंख्यात्र नास्तीत्यासंक्याह—

**द्वित्वोपसर्जने सङ्घे द्विशब्दस्तत्र वर्तते ।**
**सोऽयमित्यभिसम्बन्धादुभशब्दे न तत्तथा ॥११६॥**

---

यद्येवम्=यदि वृत्तावुपसर्जनपदार्थेऽभेदैकत्वसंख्या प्रतीयत इति स्वीक्रियते, तदा 'द्विपुत्रः' इत्यादौ कथमुपसर्जनार्थस्य द्वित्वावगम इत्याशङ्क्याह—द्व्यादीनाञ्चेति ।

अस्यार्थः—'द्विपुत्रः' इत्यादौ च उपसर्जने द्विपदार्थे द्व्यादिपदानां वाच्ये विभक्तिवाच्यो नामार्थाद् बाह्यो भेदोऽभेदैकत्वसंख्यया सह विरोधान्निवर्तते । निमित्तं तु=द्विपदस्य प्रवृत्तिनिमित्तभूतं तु द्वित्वं प्रयुज्यमानस्य द्वीति नाम्नः स्वार्थत्वाद् व्यवतिष्ठते नापगच्छतीति ।

अयं भावः—"द्वयोः पुत्रः" इत्यादौ विभक्तिवाच्यं द्वित्वमन्यदेव प्रातिपदिकार्थाद् द्वित्वादिति पूर्वं समर्थितम् । तदेव च=विभक्तिवाच्यं द्वित्वमेव च द्वित्वं वृत्तावभेदैकत्वप्रादुर्भावान्निवर्तते । नामार्थभूतं तु तन्नापगच्छति । अन्यथा नाम्नो द्विशब्दस्य निरर्थकत्वेन वृत्तौ प्रयोग एव न स्यात् । अस्ति च जहत्स्वार्थायामप्युपसर्जनार्थः, स्वार्थहानेऽपि परार्थाभिधानात्, अन्यथा जहत्स्वार्थायां वृत्तौ "परार्थाभिधानं वृत्तिः" इति वृत्तिलक्षणमेव न घटेतेत्युक्तं प्राक् । एवम् 'त्रिपुत्रः' इत्यादावपि वाच्यमिति ॥ ११५ ॥

यदि तर्हि वृत्तौ 'द्विपुत्रः' इत्यादौ विभक्त्यर्थद्वित्वनिवृत्तावपि स्वार्थो द्वित्वं न निवर्तते, तदाऽभेदैकत्वसंख्याऽत्र नास्ति, द्वित्वेन सह विरोधादित्याशङ्क्याह—द्वित्वोपसर्जने इति ।

अस्यार्थः—द्वित्वोपसर्जने संघे द्वित्वमुपसर्जनमवयवविशेषणं यत्र तादृशे तिरोहितावयवभेदे संघे, तत्र द्विपुत्र इत्यादिवृत्तौ द्विशब्दः सोऽयमित्यभिसंबन्धात् समुदायसमुदायिनोरभेदाध्यारोपाद् अवयवगतस्य द्वित्वस्य संघेऽध्यारोपाद् वर्तते । तथा च सङ्घे वस्तुभूताऽभेदैकत्वसंख्या अध्यारोपितेन द्वित्वेन सह न विरुध्यत इत्यायातम् ।

नन्वेवम् 'द्विपुत्रः' इतिवद् उभपुत्र इति स्यादित्याशङ्क्याह—उभशब्दे न तत्तथा इति ।

तत्=समुदायवृत्तित्वम्, उभशब्दे=उभशब्दविषये तथा=तेन प्रकारेण द्वित्वोपसर्जनत्वेन न संभवति, शब्दशक्तिस्वभावस्य विलक्षणत्वादिति 'द्विपुत्रः' इतिवद् उभपुत्र इति समासो न संभवतीति ।

वाक्येऽवयवप्राधान्यादुद्भूतभेदौ द्वावुच्येते। वृत्तौ तु समुदायसमुदायिनो-रभेदाध्यारोपाद् द्वित्वगुणावच्छिन्नः समुदाय एक इत्युपसर्जनार्थस्यात्रापि भेदो व्यावर्तते अभेदैकत्वप्रादुर्भावात्। तदेतत् समुदायवृत्तित्वमुभशब्दविषये तेन प्रकारेण द्वित्वोप-सर्जनत्वेन न सम्भवतीत्युभपुत्र इति न कदाचिदपि भवति समासः।

तथाहि—

"उभयस्तस्य तुल्यार्थो वृत्तौ नित्यं प्रयुज्यते।"

(वा० प० ३ वृत्ति० ११७)

इत्यनन्तरमेव वक्ष्यति। उभाबाहुरित्यादिस्तु प्रयोगो द्विदण्ड्यादित्वात् साधुः।

कथमुभशब्दो द्विपर्यायोऽपि तद्वद् वृत्तौ सङ्घं नाभिधत्त इति चेत्, शब्दशक्तिस्वाभाव्यादिति ब्रूमः। तथा च वार्तिकम्—"अन्याभावो द्विवचनटाब्विषयत्वात्, उभयोऽन्यत्र" (भा० वा० १।१।२७) इति॥ ११६॥

तदेतदाह—

**उभयस्तस्य तुल्यार्थो वृत्तौ नित्यं प्रयुज्यते।**
**सूत्रेऽपि नित्यग्रहणं तदर्थमभिधीयते॥११७॥**

---

अयं भावः—वाक्येऽवयवप्राधान्यादुद्भूतभेदः संघो द्वावुच्येते। 'द्विपुत्रः' इत्यादिवृत्तौ तु समुदायसमुदायिनोरभेदाध्यारोपाद् द्वित्वगुणावच्छिन्नः समुदाय एक इत्युपसर्जनार्थस्य=द्वित्व-संख्याविशिष्टस्यावयवरूपस्य अत्रापि='द्विपुत्रः' इत्यादिवृत्तावपि भेदो व्यावर्तते, तादृशे संघेऽ-भेदैकत्वप्रादुर्भावात्। तदेतत् समुदायवृत्तित्वमुभशब्दविषये तेन प्रकारेण द्वित्वोपसर्जनत्वेन न संभवति, शब्दशक्तिस्वभावादिति उभपुत्र इति समासः कदाचिदपि न भवति।

तथाहि—"उभयस्तस्य तुल्यार्थो वृत्तौ नित्यं प्रयुज्यते" इति (वा० प० ३ वृत्ति० ११७) समनन्तरमेव वक्ष्यति। तस्य=उभशब्दस्य तुल्यार्थ उभयशब्दो वृत्तौ नित्यं प्रयुज्यते। तेन 'उभपुत्रः' इति न भवति, 'उभयपुत्रः' इत्येव भवतीति। 'उभाबाहुः' इत्यादिस्तु प्रयोगो द्विदण्ड्यादित्वात् साधुरिति।

ननु कथमुभशब्दो द्विपर्यायोऽपि वृत्तौ तद्वत्=द्विशब्दवत् संघं नाभिधत्त इति चेत्, शब्दशक्तिस्वाभाव्यादिति ब्रूमः। तथा च वार्तिकम्—'अन्याभावो द्विवचनटाब्विषयत्वाद्, उभयोऽन्यत्र' इति।

अयमर्थः—उभशब्दादन्यासां द्विवचनातिरिक्तानां विभक्तीनामभावः, उभशब्दस्य द्विवचनटाब्विषयत्वाद् उभे भद्रे इति, उभौ इति च। अन्यत्र=द्विवचनपरत्वाभावे टाप्परत्वा-भावे च उभय इति भवतीत्येतद् वार्तिकार्थं इति॥ ११६॥

तदेतत्=उभशब्दस्य द्विवचनटाप्परत्वाभावे प्रयोगाभावमाह—उभयस्तस्येति।

अस्यार्थः—तस्य=उभशब्दस्य तुल्यार्थ उभयशब्द एव वृत्तौ नित्यं प्रयुज्यते। "उभादुदात्तो नित्यम्" (पा० ५।२।४४) इति सूत्रेऽपि नित्यग्रहणं तदर्थम्=वृत्तौ उभयशब्दस्य प्रयोगार्थ-मभिधीयत इति।

उभयपुत्रः, उभयथा, उभयत इत्यादौ वृत्तिपदे उभशब्दसमानार्थ उभयशब्दः प्रयुज्यते। स हि द्वित्वोपसर्जनं सङ्घमभिधातुं समर्थो नोभशब्दः। तथा च वस्त्वभेदाश्रयेण तुल्यार्थत्वम्, नाभिधाव्यापाराश्रयेण उभाविति भेदरूपेण प्रतिपादनात्, उभय इत्यवयविरूपेण। "उभादुदात्तो नित्यम्" (पा०५-२-४४) इत्यत्र सूत्रे नित्यग्रहणमेतदर्थम्, द्वित्वोपसर्जनसमुदायाभिधानशक्तिविरहमुभशब्दस्य ज्ञापयितुमित्यर्थः।

उभशब्दो ह्यसंख्यावाची, प्रत्ययान्तरं चायजित्यत्र पक्षे तयपोऽप्राप्तौ तेन सह विकल्पनिवृत्त्यर्थं नित्यग्रहणं नोपयुज्यते। उभशब्दः संख्यावाची तयबादेशश्चायज् इत्यत्रापि पक्षेऽस्वरितत्वादेव विकल्पनिवृत्तौ नित्यग्रहणं वृत्तिविषये नित्यमयजेवेत्युक्तप्रयोजनमेव।

नचोभशब्देन द्व्यवयवः सङ्घोऽभिधीयते, येनोभयशब्देनापि तथेति तुल्यार्थतायां विकल्पः स्यादिति नित्यग्रहणम्। शब्दशक्तिस्वाभाव्यात् समुदायस्याभिधानं ह्युभयशब्देनेति न्यायानुवादः सूत्रे नित्यग्रहणम् ॥ ११७ ॥

सत्यां त्वभिधानशक्तौ द्विवचनटाब्विषये प्रयुज्यत एवोभशब्द इत्याह—

**आपि के चापरार्थत्वान्नाभेद उपजायते।**
**उभे इति ततः स्वार्थे भेदवृत्तिः प्रयुज्यते ॥११८॥**

---

अयं भावः—'उभयपुत्रः, उभयथा, उभयतः' इत्यादौ वृत्तिपदे उभशब्दसमानार्थ उभयशब्दः प्रयुज्यते। स हि=उभयशब्दो हि द्वित्वोपसर्जनं संघमभिधातुं समर्थः, नोभशब्दः। तथा च वस्त्वभेदाश्रयेण=अर्थभेदाश्रयेण तुल्यार्थत्वम्, नाभिधाव्यापाराश्रयेण। उभाविति भेदरूपेण प्रतिपादनात्, उभय इत्यवयविरूपेणेति भेदात्। "उभादुदात्तो नित्यम्" (पा० ५।२।४४) इति सूत्रे नित्यग्रहणमेतदर्थम्—उभशब्दस्य द्वित्वोपसर्जनसमुदायाभिधानशक्तिविरहं ज्ञापयितुमित्यर्थः।

उभशब्दो हि द्वित्वोपसर्जनसमुदायवाचकत्वादसंख्यावाची, प्रत्ययान्तरं चायच्, न तु तयबादेश इत्यत्र पक्षेऽसंख्यावाचित्वेन तयपोऽप्राप्तौ तेन सह विकल्पनिवृत्यर्थं सूत्रे नित्यग्रहणं नोपयुज्यते। उभशब्दः संख्यावाची तयबादेशश्चायजित्यत्रापि पक्षेऽस्वरित्वादेव विकल्पनिवृत्तौ नित्यग्रहणं वृत्तिविषये नित्यमयजेवेत्युक्तप्रयोजकमेव।

न चोभशब्देन द्व्यवयवः संघोऽभिधीयते, येनोभयशब्देनापि तथा=द्व्यवयवसंघाभिधानम् इति तुल्यार्थतायां विकल्पः स्यादिति नित्यग्रहणम्। शब्दशक्तिस्वाभाव्यात् समुदायस्याभिधानं ह्युभयशब्देनैव, न तु उभशब्देन इति न्यायानुवादः=न्यायसिद्धस्यार्थस्य वृत्तिविषये नियमेन उभयशब्दप्रयोगरूपस्यानुवादरूपं सूत्रे नित्यग्रहणमिति स्थितमिति ॥ ११७ ॥

असत्यां तु परार्थाभिधानशक्तौ टापि स्वार्थिकैकप्रत्यये च द्विवचनटाब्विषये प्रयुज्यत एवोभशब्दः—'उभे, उभके' इत्याह—आपि के चेति।

अस्यार्थः—उभशब्दात् स्त्रियां वर्तमानात् प्रातिपदिकात् स्वार्थे आपि=टापि डापि चापि वा कृते, तत एव कुत्सिताद्यर्थद्योतने स्वार्थे कप्रत्यये वा कृते तत्र प्रत्ययार्थे उभशब्दार्थस्य गुणभूतत्वा-

स्त्रीवृत्तेः प्रातिपदिकात् स्वार्थे टाप्, एवं कुत्सितादिद्योतने स्वार्थे क इति तत्र प्रत्ययार्थे गुणभावानापत्तेरभेदेऽनुपजाते स्वतन्त्रे स्वार्थे भेदे वर्तमानः प्रयोगार्होऽयमुभ-शब्दः उभे उभक इति।

अस्वार्थिके तु प्रत्यये उत्तरपदे च पारार्थ्यात् प्रधानार्थैकार्थीभावाद् उद्भूत-भेदता (अनुद्भूतभेदता) स्वार्थोऽस्य हीयत इति तत्रास्य प्रयोगोऽन्याय्यः ॥ ११८ ॥

यदा तर्हि "स्त्रियाम्" (पा० ४।१।३) इत्यत्र प्रत्ययार्थविशेषणपक्षः, तदा तत्र प्रकृत्यर्थव्यतिरिक्तेऽर्थे विशेषणायोपादीयमानो न स्वार्थ प्रयुक्तः स्यादिति कथं तत्रोभ-शब्दप्रयोग इत्याशङ्क्याह—

स्त्रीत्वाभिधानपक्षेऽपि गुणभावविपर्ययः।
स्वभावादपरार्थत्वात् तत्र भेदो न हीयते ॥११९॥

गार्ग्यादौ प्रकृत्यर्थो गुणभूतः, प्रत्ययार्थः प्रधानं प्रतीयते। स्त्रीप्रत्ययान्तेषु तु

---

भावेनापरार्थत्वात् = प्रधानैकार्थीभावाभावेन परार्थाभिधायकत्वाभावादभेदो नोपजायते। ततः = अभेदोपजनाभावात् स्वार्थे भेदवृत्तिः = द्वित्वसमानाधिकरणे भेदे वर्तमान उभशब्दः प्रयुज्यते, उभे इति, उभके इति।

अयं भावः—स्त्रीवृत्तेरुभशब्दरूपात् प्रातिपदिकात् स्वार्थे टाप्, एवं कुत्सिताद्यर्थद्योतने स्वार्थे क इति तत्र प्रत्ययार्थे प्रकृत्यर्थस्य गुणभावानापत्तेरभेदेऽनुपजाते स्वतन्त्रे स्वार्थे द्वित्वसमाना-धिकरणे भेदे वर्तमानः प्रयोगार्होऽयमुभशब्दः, 'उभे, उभके' इति।

अस्वार्थिके तु प्रत्यये='उभयथा, उभयतः' इत्यत्र उत्तरपदे च=उभयपुत्र इत्यत्र पारार्थ्यात् प्रधानार्थैकार्थीभावादनुद्भूतभेदता=तिरोहितभेदत्वम्। तेन स्वार्थोऽस्य हीयत इति तत्रास्य=उभशब्दस्य प्रयोगोऽन्याय्य इति ॥ ११८ ॥

यदा तर्हि "स्त्रियाम्" (पा०४।१।३) इति प्रत्ययार्थस्य विशेषणं 'स्त्रियां स्वार्थे टाप् स्यात्' इति, न तु प्रातिपदिकविशेषणम्, स्त्रियां वर्तमानात् प्रातिपदिकादिति, तदा तत्र प्रकृत्यर्थव्यतिरिक्तेऽर्थे= प्रत्ययार्थे विशेषणायोपादीयमानः स्त्रीत्वाभिधायकष्टावादिर्न स्वार्थे प्रयुक्तः स्यादिति कथं तत्रोभशब्द-प्रयोग इत्याशङ्क्याह—स्त्रीत्वाभिधानपक्षेऽपीति।

अस्यार्थः—स्त्रीत्वाभिधानपक्षेऽपि प्रागुक्तरीत्या टापः स्त्रीत्वाभिधायकत्वमिति पक्षेऽपि, उभे इत्यत्र प्रकृत्यर्थप्रत्ययार्थयोर्गुणभावविपर्ययः = गुणत्ववैपरीत्यम्।

तथाहि—गार्ग्यादौ प्रकृत्यर्थो गुणभूतः अपत्यादिरूपः प्रत्ययार्थः प्रधानम्, स्त्रीप्रत्ययान्तेषु तु प्रत्ययार्थः स्त्रीत्वं विशेषणं प्रकृत्यर्थरूपं द्रव्यं तु विशेष्यम्, स्वभावात्=शब्दशक्तिस्वभावात् इति अपरार्थत्वात् परार्थाभिधानाभावात्, तत्र='उभे' इत्यत्र, भेदः=द्वित्वसमानाधिकरणभेद-स्वरूपः स्वार्थो न हीयते=न निवर्तत इति।

अयं भावः—गार्ग्यादौ प्रकृत्यर्थो गर्गादिर्गुणभूतः, प्रत्ययार्थस्तु अपत्यादिः प्रधानं प्रतीयते, गर्गस्यापत्यम्, गोत्रापत्यम् इति वा।

प्रत्ययार्थपक्षेऽपि स्त्रीत्वविशिष्टं द्रव्यमत्राभिधीयते, शब्दशक्तिस्वाभाव्यात्। नहि शब्दानामर्थादेशनं शक्यते कर्तुम्, शास्त्रप्रक्रियाभेदेऽपि लौकिकस्य स्थितलक्षणस्यार्थस्याभेदात्। तस्मादुभे इत्यत्र भेदो न निवर्तते, परार्थत्वाभावात् ॥ ११९ ॥

यत एवम्—

तस्माद् द्विवचनाट्टापश्चोभयोऽन्यत्र दृश्यते।
प्रत्ययं तयपं हित्वा नास्त्युत्तरपदे पुनः ॥ १२० ॥

द्विवचनटाब्विषय उभशब्द उक्तः। टापि च नान्यत्र द्विवचनात्। अतोऽन्यत्र तु प्रत्यये उत्तरपदे चोभशब्दो नास्ति। अपि तु तत्समानार्थ उभयशब्दः। तयपि तु प्रकृतित्वेनोभादित्युपादानसामर्थ्यात् तत्रैकार्थीभावविषयेऽप्युभशब्दः प्रयुज्यते। उभाहस्त्यादयस्तु द्विदण्ड्यादयः। तत्र च शब्दशक्तिस्वाभाव्यादेवोभशब्दः समुदायरूपेणार्थमाचष्टे द्विशब्दवत् ॥ १२० ॥

तदेवमभेदैकत्वसंख्यायाः प्रसङ्गायातं किञ्चिन्निर्णीतम्। इदं त्वत्र चोद्यते—"ईदूदेद् द्विवचनं प्रगृह्यम्" (पा० १-१-११) इत्यत्र वार्त्तिकेऽभिहितम्—'ईदाद्यन्तं द्विवच-

---

स्त्रीप्रत्ययान्तेषु तु प्रत्ययार्थपक्षेऽपि = स्त्रीत्वं प्रत्ययार्थ इति पक्षेऽपि स्त्रीत्वविशिष्टं द्रव्यमत्र = उभे इत्यत्राभिधीयते, शब्दशक्तिस्वाभाव्यात्। नहि शब्दानामर्थादेशनम् = शास्त्रेणार्थोपदेशः कर्तुं शक्यते। शास्त्रप्रक्रियाभेदेऽपि स्थितलक्षणस्य = व्यवस्थितस्वरूपस्यार्थस्याभेदात्। तस्मादुभे इत्यत्र भेदः = द्वित्वसमानाधिकरणभेदरूपः स्वार्थो न निवर्तते, परार्थत्वाभावात् = उभयशब्दस्य परार्थाभिधायकत्वाभावादिति ॥ ११९ ॥

यत एवम् = द्विवचनटाब्विषय एवोभशब्दप्रयोगो नान्यत्र तत आह—तस्मादिति।

अस्यार्थः—तस्मात् = प्रागुक्तहेतोः, द्विवचनात् टापश्चान्यत्र तयपं प्रत्ययं हित्वा उभयो दृश्यते। तयपि तु वृत्तिविषयेऽपि उभशब्दः तयप्प्रत्ययप्रकृतिभूतो दृश्यते। "उभादुदात्तो नित्यम्" (पा० ५।२।४४) इत्यत्र तयपः प्रकृतित्वेनोभशब्दोपादानसामर्थ्यात्। उत्तरपदे पुनः = तु, परतः पूर्वत्र उभशब्दो नास्ति इति।

अयं भावः :—द्विवचनटाब्विषये उभशब्द उक्तः। टापि च = अपि द्विवचनादन्यत्र न। अतोऽन्यत्र = द्विवचनाट्टापश्चान्यत्र तु प्रत्यये उत्तरपदे च परत उभशब्दो नास्ति, अपि तु तत्समानार्थ उभयशब्दः। तयपि तु प्रकृतित्वेन 'उभात्' इति सूत्रे उभशब्दोपादानसामर्थ्यात् तत्र = तयपि एकार्थीभावविषयेऽप्युभशब्दः प्रयुज्यते। उभाहस्त्यादयस्तु द्विदण्ड्यादयो निपातनात् साधवः। तत्र च = उभाहस्त्यादिषु शब्दशक्तिस्वभावादेवोभशब्दो द्व्यवयवकसमुदायरूपेण स्वार्थमाचष्टे 'द्विपुत्रः' इत्यादौ द्विशब्दवत्। अत एवात्राभेदैकत्वसंख्याप्रतीतिरिति ॥ १२० ॥

तदेवमभेदैकत्वसंख्यायाः प्रसङ्गायातं किञ्चित् = वृत्तावुपसर्जनेऽभेदैकत्वसंख्यायां सत्यां कथम् 'द्विपुत्रः, त्रिपुत्रः' इति प्रयोगोपपत्तिः, 'द्विपुत्रः' इतिवत् 'उभपुत्रः' इति कुतो न भवती-

नान्तमिति चेल्लुकि प्रतिषेधः' इति। कुमार्योरगारं कुमार्यगारमिति, श्रुत्येदाद्यन्तं प्रत्ययलक्षणेन च द्विवचनान्तमिति प्रगृह्यसंज्ञाप्रसङ्गश्चोदितः। स नोपपद्यते, वृत्तावभेदैकत्वसङ्ख्याभ्युपगमे द्विवचनान्तस्य समासाभावादित्याह—

प्राप्तिः प्रगृह्यसंज्ञाया न स्यात् प्रत्ययलक्षणात्।
कुमार्यगारे न ह्यस्ति समासो वचनान्तरे ॥१२१॥

व्याख्यातार्थः श्लोकः ॥ १२१ ॥

अन्यदपि चोदयितुमाह—

एकद्वयोर्यञादीनां विभाषा लुङ् न कल्पते।
यौष्माकस्तावकश्चेति भेदाभावान्न सिध्यति ॥१२२॥

---

त्यादिकम्, निर्णीतम्। इदं त्वत्र चोद्यते। "ईदूदेद्द्विवचनं प्रगृह्यम्" ( पा० १।१।११ ) इत्यत्र वार्त्तिकेऽभिहितम्—"ईदाद्यन्तं द्विवचनान्तमिति चेल्लुकि प्रतिषेधः" इति। 'कुमार्योरगारं कुमार्यगारम्' इति। श्रुत्येदाद्यन्तं प्रत्ययलक्षणेन च द्विवचनान्तमिति प्रगृह्यसंज्ञा प्रसङ्गश्चोदितः। स च नोपपद्यते, वृत्तावुपसर्जनेऽभेदैकत्वसंख्याऽभ्युपगमे द्विवचनान्तस्य समासाभावादित्याह—प्राप्तिः प्रगृह्यसंज्ञाया इति।

अस्यार्थः :—कुमार्यगारे प्रत्ययलक्षणात् = प्रत्ययलोपे प्रत्ययलक्षणकार्यातिदेशात् प्रगृह्यसंज्ञाया प्राप्तिर्न स्यात्। हि यतः 'कुमार्यगारम्' इत्यत्र वचनान्तरे वृत्तावुपसर्जनेऽभेदैकत्वसंख्यासत्त्वेनैकवचनादन्यस्मिन् वचने द्विवचनेऽत्र समासो नास्तीति।

अस्य श्लोकस्य भावः स्फुट इति न तद्विवृतिविशेषापेक्षेति ॥ १२१ ॥

अन्यदपि चोदयितुमाह—एकद्वयोर्यञादीनामिति।

अस्यार्थः—एकद्वयोः=भावप्रधानो निर्देशः। एकत्वे द्वित्वे च वाच्ये, 'गार्ग्यकुलम्, गर्गकुलम्' इत्यादौ यञादीनां विभाषालुक् वार्त्तिककृदुक्तो न कल्पते=न प्रसिध्यति। वृत्तावुपसर्जनेऽभेदैकत्वाभ्युपगमे द्वयादिप्रतिपक्षैकवचनद्विवचनयोरनुत्पत्तेः। तदुक्तं वार्त्तिककारेण—"यञादीनामेकस्य द्वयोर्वा तत्पुरुषे षष्ठ्या उपसंख्यानम्" ( भा० वा० २।४।६४ ) इति।

अस्यार्थः—एकस्य=एकत्वस्य, द्वयोर्वा=द्वित्वस्य वा वाचिकायाः षष्ठ्याः=षष्ठ्यन्तस्य पदस्य, तत्पुरुषे येन=केनचित् सुबन्तेन पदेन सह तत्पुरुषसमासे यञादीनां वा लुक उपसंख्यानमिति।

अत्र—एकस्य द्वयोर्वा इति भावप्रधानो निर्देशः। वापदञ्च काकाक्षिन्यायेन, देहलीदीपकन्यायेन वा उभयत्रान्वेतीति। यौस्माकस्तावकश्चेति प्रयोगद्वयं न सिद्धयति। वृत्तावभेदैकत्वविरोधिनो भेदस्याभावात्, भेदाभावे द्विवचनबहुवचनयोरभावः, तेन युवयोर्युष्माकं वा अयं यौष्माक इति रूपासिद्धिः। द्वयादिप्रतिपक्षस्यैकवचनस्याभावे 'तावकः' इति रूपासिद्धिः। 'तस्मिन्नणि च युष्माकास्माकौ" ( पा० ४।३।२ ) इति सूत्रं "युष्मदस्मदोर्द्विवचनबहुवचनयोर्युष्माकमस्माकञ्चादेशं विधत्ते। "तवकममकावेकवचने" ( पा० ४।३।३ ) इति सूत्रञ्च द्वयादिप्रतिपक्षैकवचने तवकममकादेशो विधत्ते इति।

'यञादीनामेकस्य द्वयोर्वा तत्पुरुषे षष्ठ्या उपसङ्ख्यानम्' (भा०वा०२।४।६४) इति पक्षे लुगुक्तो वाक्यकारेण। गार्ग्यस्य कुलं गार्ग्यकुलं गर्गकुलमिति वा, गार्ग्ययोः कुलं गार्ग्यकुलं गर्गकुलमिति वेति प्रयोगसिद्ध्यर्थम्। स चाभेदैकत्वाभ्युपगमे द्विवचनान्तानां समासाभावादेकवचनस्यापि द्व्यादिप्रतिपक्षस्याभावाद् विरुध्यते। तथा सूत्रकारमतेनाप्यभेदैकत्वं विरुध्यते।

तथाहि—"तवकममकावेकवचने" (पा०४-३-३ इति युष्माकास्माकबाधकावेकवचने विदधात्यादेशौ। ततश्च यौष्माक इति वृत्तौ द्वित्वादि मन्यते। तावक इत्येकत्वं द्वित्वादिप्रतिपक्षमिति कथमभेदैकत्वं स्यात्॥ १२२॥

किञ्च,

**दृष्टो गार्ग्यतरे भेदस्तथा गर्गतरा इति।**
**युष्मत्पिता त्वत्पितेति तथादेशौ व्यवस्थितौ॥१२३॥**

बहुषु "यञञोश्च" (पा० २-४-६४) इति लुग्विधानाद् गार्ग्यतर इति प्रत्ययश्रुतौ नियतं द्वित्वैकत्वे प्रतीयेते, गर्गतरा इति च बहुत्वमिति कथं वृत्तावभेदैकत्वप्रादुर्भावः?

---

अयं भावः—"यञादीनामेकस्य द्वयोर्वा तत्पुरुषे षष्ठ्या उपसंख्यानम्"( भा०वा०२।४।६४) इति पक्षे लुगुक्तः=वैकल्पिको लुगुक्तो वाक्यकारेण। अस्य वार्त्तिकस्यार्थः प्रागुक्त इति नेह पुनरुच्यते।

इदञ्च वार्त्तिकम्—"गार्ग्यस्य कुलं गार्ग्यकुलं गर्गकुलमिति वा, गार्ग्ययोः कुलं गार्ग्यकुलम्, गर्गकुलमिति वेति प्रयोगसिद्ध्यर्थम्। स च=वार्त्तिककृदुक्तो वैकल्पिको लुक् च अभेदैकत्वाभ्युपगमे द्विवचनान्तानां समासाभावादेकवचनस्यापि द्व्यादिप्रतिपक्षस्याभावाद् विरुध्यते, तथा सूत्रकारमतेनाप्यभेदैकत्वं विरुध्यते।

तथाहि "तवकममकावेकवचने" (पा० ४।३।३) इति सूत्रेण युष्माकास्माकादेशबाधकावेकवचने तवकममकावादेशौ विदधाति। ततश्च यौष्माक इति वृत्तौ द्वित्वादि मन्यते सूत्रकृत्। तावक इत्येके द्वित्वादिप्रतिपक्षमिति कथमभेदैकत्वं स्यादिति॥ १२२॥

वृत्तावभेदैकत्वसंख्याभ्युपगमेऽन्यदपि चोदयितुमाह—दृष्टो गार्ग्यतरे भेद इति।

अस्यार्थः—'गर्गाः' इत्यादौ बहुषु "यञञोश्च" ( पा० २।४।६४ ) इति लुग्विधानाद् 'गार्ग्यतरः, गार्ग्यतरौ' इत्यादौ प्रत्ययश्रुतौ नियमेन द्वित्वैकत्वे प्रतीयेते इति गार्ग्यतरे द्वित्वसमानाधिकरणो द्वित्वप्रतिपक्षैकत्वसमानाधिकरणश्च भेदो दृष्टः। तथा—'गर्गतराः' इत्यत्र यञो लुकि बहुत्वं तत्समानाधिकरणो भेदश्च दृष्ट इति कथं वृत्तावभेदैकत्वप्रादुर्भाव।

तथा—'युष्मत्पिता' इत्यत्र त्वादेशाभावः, 'त्वत्पिता' इत्यत्र त्वादेश इति द्वित्वबहुत्वयोरादेशाभावः, एकत्वे च त्वादेश इत्यादेशानादेशौ व्यवस्थितौ, तयोर्व्यवस्थया च 'युष्मत्पिता' इत्यत्र द्वित्वबहुत्वान्यतरसमानाधिकरणो भेदो दृष्टः, 'त्वत्पिता' इत्यत्र च द्वित्वप्रतिपक्षैकत्वसमानाधिकरणो भेदो दृष्ट इति कथमत्र वृत्तावभेदैकत्वसंख्या प्रादुर्भाव इति।

तथा प्रत्ययोत्तरपदयोः "त्वमावेकवचने" (पा० ७-२-९७) इति वचनाद् त्वत्पिता मत्पितेत्येकत्वं प्रतीयते। युष्मत्पिता अस्मत्पिता इति तु द्वित्वबहुत्वावगतिरिति। सर्वमेतद् वृत्तावभेदैकत्वाभ्युपगमे विरुध्यते ॥ १२३ ॥

अत्र प्रतिविधीयते—

**उपाधिभूता या सङ्ख्या प्रकृतौ समवस्थिता ।**
**आदेशैः संज्ञया वापि विभक्त्या व्यज्यते विना ॥१२४॥**

विद्यमानासु सङ्ख्यासु तत्संसर्गमय्यभेदैकत्वसङ्ख्या प्रादुर्भवतीत्युक्तम्। तथा च यत्र सङ्ख्याविशेषनिवन्धनमस्ति, तत्रासौ प्रतीयत एवेत्युपसर्जनपदविषये या प्रकृतिः प्रातिपदिकं तद्विषये तदर्थस्यावच्छेदकत्वेन या भेदसङ्ख्या समवेता, सा प्रगृह्यसंज्ञाप्रवृत्त्या कुमार्यगारम्' इत्यत्र प्रतीयत एव।

यदि ह्यत्र प्रगृह्यसंज्ञा स्यात्, तदा प्रकृतिभावे सति द्वित्वमुपसर्जनार्थस्यावगम्येत, द्विवचनान्तस्य प्रगृह्यसंज्ञाविधानात्। एवं 'तावकः, त्वत्पिता' इत्यादावप्यादेशादेकवचने विहिताद् विशेषाद् विशेषावगतिः। उपसर्जनस्य हि प्रातिपदिकस्यापि

---

अयं भावः—'गर्गा' इत्यादौ बहुषु 'यञञोश्च' इति लुग्विधानाद् 'गार्ग्यतरः, गार्ग्यतरौ' इत्यादौ अपत्यप्रत्ययश्रुतौ नियतं द्वित्वैकत्वे प्रतीयेते। 'गर्गतराः' इत्यादौ चापत्यप्रत्ययलुकि बहुत्वं नियमेन प्रतीयत इति कथमत्र वृत्तावभेदैकत्वसंख्याप्रादुर्भावः ?

तथा—प्रत्ययोत्तरपदयोः "त्वमावेकवचने" (पा० ७।२।९७) इति वचनात्=सूत्रात् 'त्वत्पिता, मत्पिता' इत्यत्रैकत्वं प्रतीयते। 'युष्मत्पिता, अस्मत्पिता' इति तु त्वमादेशयोरभावे द्वित्वबहुत्वावगतिरिति सर्वमेतद् वृत्तावभेदैकत्वाभ्युपगमे विरुध्यते, पूर्वोदाहृतेषु सर्वत्रैव भेदावगतेरिति ॥ १२३ ॥

अत्र प्रतिविधीयते=अस्मिन् चोद्ये समाधीयते—उपाधिभूता इति।

अस्यार्थः—प्रकृतौ उपसर्जनपदविषये या प्रकृतिः प्रातिपदिकम्, तद्विषये तदर्थस्यावच्छेदकत्वेनोपाधिभूताया भेदसंख्यासमवस्थिता=प्रकृत्यर्थे समवेता। सा वृत्तौ विभक्त्या विनापि तावको यौष्माक इत्यादौ आदेशैः, कुमार्यगारमित्यादौ 'ईदूदेत्' इत्यत्र ईदाद्यन्तं द्विवचनान्तमित्यर्थे संभावितया प्रगृह्यसंज्ञया वापि व्यज्यते। अत्र=अवाच्यत्वे सति प्रतीयमानत्वमुपाधिलक्षणं द्रष्टव्यमिति।

अयं भावः—वृत्तावुपसर्जने विद्यमानासु भेदसंख्यासु द्वित्वादिकासु तत्संसर्गमयी अभेदसंख्या प्रादुर्भवतीत्युक्तं प्राक्।

तथा च यत्र संख्याविशेषनिवन्धनम्=द्वित्वादिसंख्याज्ञापकमस्ति, तत्रासौ प्रतीयत एवेत्युपसर्जनपदविषये या प्रकृतिः प्रातिपदिकं तद्विषये तदर्थस्यावच्छेदकत्वेन या द्वित्वादिका भेदसंख्या समवेता, सा संभावनाविषयीभूतया प्रगृह्यसंज्ञाप्रवृत्त्या 'कुमार्यगारम्' इत्यत्र प्रतीयत एव।

तथा हि इयमत्र संभावना—यदि ह्यत्र प्रगृह्यसंज्ञा स्यात्, तदा प्रकृतिभावे सति उपसर्जनार्थस्य द्वित्वमवगम्येत, द्विवचनान्तस्य ईदाद्यन्तस्य प्रगृह्यसंज्ञाविधानात्। एवं तावकस्त्वत्पिता इत्यादावपि एकवचने विहितादादेशाद् विशेषात्=संख्याविशेषज्ञापकनिबन्धनविशेषाद् विशेषाव-

चैकत्वसङ्ख्यास्वीकारसामर्थ्येऽपि विशेषाभिव्यक्तौ नास्ति सामर्थ्यमिति तत्र विभक्तिं सहायमपेक्षते। एवमादेशाद्यपीति।

अत एव केचित् प्रकृतिरिव प्रकृतिर्विशेषसङ्ख्यायाः अभेदैकत्वसङ्ख्या, ततोऽस्या उद्भवादिति तत्रैकात्म्येनावस्थिता सोपसर्जनपदेन शक्तिप्रतिघातादप्रकाशिता विभक्त्येवादेशैः प्रकाश्यत इति व्याचक्षते। गर्गकुलादौ चैकद्वयोरपि लुगादेशे, प्रकरणाद् विशेषावसायो भविष्यति।

अनारम्भे तु लुको बहुष्वेव लुग्विधानाद् 'गर्गकुलम्' इत्येकत्वद्वित्वप्रतीतिर्नैव स्यात्। बहुषु तु लुगपत्ये नियमार्थमवश्यारम्भणीयः। एवं 'युष्मत्पिता'इत्यादौ प्रकरणाद् द्वित्वबहुत्वनियमावधारणम्, 'गार्ग्यकुलम्' इत्यादौ च।

इत्थं च कृत्वा 'द्विवचनबहुवचनान्तानामसमासः' इति नेदं वचनं सम्भवति, विशेषावगमे समासप्रवृत्तेः। राजपुरुषादौ तु विशेषावगमनिबन्धनाभावाद् वृत्तिपदमन्वाख्यातुं प्रक्रियायां सदृशस्य वाक्यस्य कल्पनादेकवचनान्तानामेव तद्युक्तमिति न्यायसिद्धार्थानुवादोऽयमत्र।

---

गतिः=संख्याविशेषावगतिः। वृत्तावुपसर्जनस्य ह्यर्थस्य तत्प्रतिपादकस्य प्रातिपदिकस्यापि च स्वभावादेकत्वरूपसंख्यासामान्यस्वीकारसामर्थ्येऽपि द्वित्वादिरूपसंख्याविशेषाभिव्यक्तौ नास्ति सामर्थ्यमिति तत्र वाक्ये वृत्तौ वा विभक्त्यलुकि विभक्तिं सहायमपेक्षते।

एवमादेशाद्यपि=एवं तावक इत्यादौ तवकाद्यादेशाद्यपि स्वप्रक्रियावाक्ये विभक्तिं सहायमपेक्षत इति।

अत एव केचिदस्याः कारिकायाः पूर्वार्धमेवं व्याचक्षते—प्रकृतिरिव प्रकृतिरभेदैकत्वसंख्या द्वित्वादिकाया विशेषसंख्यायाः, ततः=अभेदैकत्वसंख्यातः अस्याः=द्वित्वादिकाया विशेषसंख्याया उद्भवादिति। तत्र=अभेदैकत्वसंख्यायाम् ऐकात्म्येन=तादात्म्येन अवस्थिता, सा=विशेषसंख्या वृत्त्या उपसर्जनपदस्य संख्याविशेषाभिव्यञ्जकशक्तिप्रतिघातादुपसर्जनपदेनाप्रकाशिता वाक्ये विभक्त्येव तवकाद्यादेशैः प्रकाश्यत इति। 'गर्गकुलम्' इत्यादौ च एकद्वयोरपि='गार्ग्यस्य कुलम्' इत्यादावेकत्वे, 'गार्ग्ययोः कुलम्' इत्यादौ द्वित्वेऽपि लुगादेशो वार्त्तिककृता उक्तः। 'गर्गकुलम्' इत्यत्रैकत्वरूपस्य द्वित्वरूपस्य वा संख्याविशेषस्य प्रकरणादवसायः=निर्णयो भविष्यति। वार्त्तिककृदुक्तस्यैकत्वद्वित्वयोर्वैकल्पिकस्य यञादिलुकोऽनारम्भे तु बहुष्वेव यञादिलुको विधानाद् 'गर्गकुलम्' इत्यत्रैकत्वद्वित्वप्रतीतिर्नैव स्यात्। बहुषु लुक् तु 'गर्गाः, इत्यादावपत्ये नियमार्थमवश्यमारम्भणीयः। अपत्ये बहुषु यञादेर्लुगेव भवति, न तु श्रवणमिति नियमाकारः।

एवम्—'युष्मत्पिता' इत्यादौ प्रकरणादत्र द्वित्वं बहुत्वं वेत्यवधारणम्, 'गार्ग्यकुलम्' इत्यादौ चैवमेव।

एवञ्च कृत्वा 'द्विवचनबहुवचनान्तानामसमासः' इति नेदं वचनं सम्भवति। संख्याविशेषावगमेऽपि 'युष्मत्पिता' इत्यादौ समासप्रवृत्तेर्दर्शनात्। राजपुरुषादौ तु संख्याविशेषावगमनिबन्धनाभावाद् 'राजपुरुषः' इति वृत्तिपदमन्वाख्यातुं प्रक्रियायां सदृशस्य विग्रहवाक्यस्य कल्पनादेकवचनान्तानामेव, तद् युक्तमिति न्यायसिद्धार्थानुवादोऽयमत्र।

यत्र तु द्वित्वाद्यभिव्यक्तिसम्भवः, तत्र समासप्रकृतौ प्रक्रियावाक्ये कुमार्यो-रगारमित्यादावुपादीयत एव द्विवचनादीति न कश्चिद् विरोधः ॥ १२४ ॥

अनेनैव च न्यायेनेदमपि सिद्धमित्याह—

**शौर्पिके मासजाते च परिमाणं स्वभावतः ।**
**उपाधिभूतामाश्रित्य सङ्ख्यां भेदेन वर्तते ॥१२५॥**

शूर्पेण क्रीतो, मासो जातस्य यस्य सः— शौर्पिको, मासजात इत्यत्र यद्यभेदैकत्व-सङ्ख्या स्वात्मान्तर्गतसङ्ख्याविशेषानुपादानेन वर्तेत, तदा अनियतसङ्ख्यत्वे विशेष-णस्य क्रीतजातयोर्नियतमूल्यावगमो वयोविशेषावगतिश्च न स्यात्। परिच्छेदार्थं च शौर्पिकादयः शब्दाः प्रयुज्यन्ते। तत्र च मूलबाधाया अन्याय्यत्वात्, प्रयोगस्वभावा-दर्थानामात्मभूतं प्राथमकल्पिकं चैकत्वं सङ्ख्याभेदं प्रातिपदिकार्थावच्छेदकमुपादाय परिमाणं वृत्तिमनुभवति ॥ १२५ ॥

---

यत्र तु द्वित्वाद्यभिव्यक्तिसम्भवः, तत्र समासस्य प्रकृतौ प्रक्रियावाक्ये 'कुमार्योरगारम्' इत्यादौ उपादीयत एव द्विवचनादि इति न कश्चिद् विरोध इति ॥ १२४ ॥

अनेनैव च न्यायेन=वृत्तावुपसर्जने उपाधिभूतसंख्यासमाश्रयणरूपेण न्यायेन इदमपि= परिमाणावच्छेदकत्वेनैकत्वसंख्याभानमपि सिद्धमित्याह— शौर्पिके मासजाते चेति।

अस्यार्थः—'शूर्पेण क्रीतः, शौर्पिकः' इत्यत्र, मासो जातस्य यस्य स मासजात इत्यत्र शौर्पिके मासजाते च शूर्परूपं मासरूपञ्च परिमाणं वृत्तौ स्वभावतः स्वस्मिन् समवस्थितामुपाधिभूतां संख्या-मेकत्वरूपामाश्रित्य परिमाणान्तरात् संख्यान्तरावच्छिन्नाद् भेदेन वर्तते। अन्यथा शौर्पिके शूर्परूपस्य परिमाणस्य मासजाते च मासरूपस्य परिमाणस्य ग्रहणमनर्थकं स्यात्। परिमाणविशेषस्य क्रयणक्रिया-परिच्छेदकस्य चाप्रतीतिः। द्वित्वप्रतिपक्षैकत्वसंख्याप्रतीतौ च शूर्पमासादिरूपपरिमाणग्रहणं सार्थकम्, क्रयणरूपक्रियाविशेषमासात्मककालरूपवयोविशेषपरिच्छेदकत्वादिति।

अयं भावः—शूर्पेण क्रीतः शौर्पिकः, मासो जातस्य यस्य स मासजात इत्यत्र वृत्तौ यद्य-भेदैकत्वसंख्यास्वात्मान्तर्गतसंख्याविशेषानुपादानेन=स्वात्मान्तर्गतद्वित्वप्रतिपक्षैकत्वरूपसंख्याविशेषा-परिग्रहेण वर्तेत, तदा शूर्परूपस्य क्रीतविशेषणस्य मासरूपस्य च जातविशेषणस्यानियत-संख्यत्वे क्रीतस्य नियतमूल्यावगमः, जातस्य च वयोविशेषावगतिर्न स्यात्। मूलस्य वयोविशेषस्य च परिच्छेदार्थमेव शौर्पिकमासजातादयः शब्दाः प्रयुज्यन्ते। तत्र च मूलबाधायाः=मूल्यपरिच्छेद-रूपस्य, वयोविशेषपरिच्छेदरूपस्य च मूलस्य बाधाया अन्याय्यत्वात्। सर्वेषामर्थानामात्मभूतं प्राथम-कल्पिकञ्च=इतरसंख्यापेक्षया प्रथमोपस्थितञ्च एकत्वं संख्याभेदम्=द्वित्वप्रतिपक्षं संख्याविशेषं, प्रातिपदिकार्थस्य सर्वस्य सर्वत्र संख्यान्तरानुपस्थितावच्छेदकम्, प्रयोगस्वभावादुपादाय परिमाणं शूर्पमासादिकं तद्धितरूपां समासरूपाञ्च वृत्तिमनुभवतीति ॥ १२५ ॥

एतदेवाह—

**वयस्विनि परिच्छेदः क्रीते चापि न गम्यते ।**
**इष्टो भेदादृते तत्र परिमाणमनर्थकम् ॥१२६॥**

इष्टोऽभिमतः परिच्छेदो भेदमेकत्वसङ्ख्यालक्षणमन्तरेण क्रीतजातयोर्न गम्यत इति तत्रैकत्वानुपादाने शूर्पमासयोः प्रयोगो निष्फलः स्यात् ।

ननु चात्र अशूर्पव्यावृत्तये सप्तरात्रादिव्यवच्छेदाय च प्रयोगस्य साफल्यं स्यात् । नैतदस्ति । अनियतसङ्ख्यत्वे परिमाणस्य परिमेयविशेषो नावधार्यते । तद्विशेषावधारणायैव च प्रयोगः परिमाणशब्दानाम् । ते च स्वभावादेव परिच्छिन्नरूपार्थाभिधायिनः । ततश्च प्रयोगप्रामाण्यादुपसर्जनार्थस्यैकत्वविशिष्टस्यात्रावगतिः, परिमाणशब्दैरुक्तपरिमाणस्यार्थस्याभिधानात् ॥ १२६ ॥

अत एव—

**भिन्नस्याभेदवचनात् प्रस्थादिभ्यः शसो विधिः ।**
**तद्धर्मत्वादभेदात् तु घटादिभ्यो न दृश्यते ॥१२७॥**

---

एतदेव=प्रागुक्तं तिरोहितमर्थमेवोपपादयन् वैशद्येनाह—वयस्विनि इति ।

अस्यार्थः—वयस्विनि जाते, द्वित्वप्रतिपक्षैकत्वसंख्याविशिष्टमासकृतः परिच्छेद इष्टः, क्रीते चापि तादृशैकत्वसंख्याविशिष्टशूर्पकृतः परिच्छेद इष्टः, भेदात् तादृशैकत्वरूपसंख्याविशेषाद्, ऋते=विना न गम्यत इति तत्र शौर्पिके मासजाते च परिमाणम्=शूर्पमासरूपपरिमाणग्रहणमनर्थकं स्यात्, परिमाणस्यानियतसंख्यत्वे परिमेयविशेषानवधारणात् । परिमेयविशेषावधारणार्थमेव च परिमाणशब्दप्रयोगस्येष्टत्वादिति ।

अयं भावः—'शौर्पिकः, मासजातः' इत्यत्र क्रीतजातयोरिष्टः परिच्छेदः, एकत्वसंख्याविशिष्टशूर्पकृत एकत्वसंख्याविशिष्टमासकृतश्चैकत्वसंख्यारूपं भेदम्=संख्याविशेषम् अन्तरेण = विना न गम्यत इति तत्र=शौर्पिकमासजातयोः एकत्वानुपादाने=एकत्वापरिग्रहे शूर्पमासयोः प्रयोगो निष्फलः स्यात्, इष्टपरिच्छेदाप्रतीतेः ।

ननु चात्र अशूर्पव्यावृत्तये शूर्पपदस्य सप्तरात्रादिव्यावृत्तये च मासपदस्य प्रयोगस्य साफल्यं स्यात् । नैतदस्ति, परिमाणस्य शूर्पमासादेरनियतसंख्यत्वे परिमेयविशेषः क्रीतजातादिर्नावधार्यते=एतत्परिमाणक इति न निर्णीयते । परिमाणशब्दानाञ्च प्रयोगस्तदवधारणायैव । ते च=वृत्तावुपसर्जनीभूतार्थाभिधायिनः परिमाणशब्दाश्च स्वभावादेव परिच्छिन्नरूपार्थाभिधायिनः । ततश्च वृत्तौ शूर्पमासादिकानां परिमाणशब्दानां प्रयोगप्रामाण्यादुपसर्जनार्थस्य परिमाणरूपस्यैकत्वसंख्याविशिष्टस्यात्रावगतिः, परिमाणशब्दैरुक्तपरिमाणस्य=एकत्वसंख्याविशिष्टशूर्पमासादिपरिमाणरूपस्यार्थस्याभिधानादिति ॥१२६॥

अत एव=वृत्तावुपसर्जनेऽभेदैकत्वसंख्याभानादेव प्रस्थादिभ्यः शसो विधिरित्याह—भिन्नस्याभेदवचनादिति ।

सङ्ख्यैकवचनाद् वीप्सायां शसो विधानेऽन्वर्थत्वादेकवचनशब्दस्य प्रातिपदिकादेकत्वसङ्ख्यावच्छिन्नार्थाभिधायिनः शस्, न त्वेकवचनान्तात्। एवञ्च वृत्तौ भिन्नस्य द्रव्यस्य, न तु जातेः; अभेदो यदेकत्वं तस्याभिधानात् परिमाणशब्देभ्यः प्रस्थादिभ्यः शस्प्रत्ययो भवति। ते हि शब्दशक्तिस्वाभाव्यादेकत्वसङ्ख्यापरिच्छिन्नं स्वार्थमाचक्षत इति तद्धर्मत्वादुक्तपरिमाणार्थाभिधायित्वाद् वृत्तावभेदैकत्वप्रादुर्भावेऽप्येकत्वावगमाच्छसुत्पत्तिः, प्रस्थशो ददाति, खारीशो ददातीति। घटादिशब्देभ्यस्तु न भवति शस्, ते हि जातिशब्दाः।

तथा च जात्यभेदादभेदैकत्वसंख्यायोग इति न ते भिन्नस्य द्रव्यस्याभेदमभिदधति, अपि तु जातेः। सा च व्यक्तिभेदेऽपि स्थितेत्यनियतसङ्ख्याश्रयजातिवाचित्वे घटादिशब्दानां वृत्तौ नियमेन व्यक्त्येकत्वान्तर्भावनाशक्तत्वान्नैकार्थाभिधाननिमित्तः प्रत्ययः। दृशिग्रहणं चात्र प्रयोगानुसरणार्थम्। घटशो ददाति इति प्रयोगो न दृश्यते।

---

अस्यार्थः—वृत्तौ भिन्नस्य द्रव्यस्य योऽभेदः = एकत्वम्, तस्य वचनादभिधानात् परिमाणवाचकेभ्यः प्रस्थादिभ्यः शसो विधिः, प्रस्थशो ददाति इति। तद्धर्मत्वात्—तत् = एकत्वं धर्मो यस्य तत्त्वात्, एकत्वसंख्यापरिच्छिन्नप्रस्थरूपपरिमाणार्थाभिधायित्वात्, न त्वभिन्नाया जातेरभेदवचनाद् जातिशब्देभ्यो घटादिभ्यः शसो विधिरिति एकत्वसंख्यावच्छिन्नार्थाभिधायिनः प्रातिपदिकात् शस्, न त्वेकवचनान्तात् शस् इति, एकवचनशब्दस्यात्रान्वर्थत्वात्। अतो जातेरभेदात्तु घटादिभ्यः शस् न दृश्यत इति।

अयं भावः—"संख्यैकवचनाच्च वीप्सायाम्" (पा०५।४।४३) इति सूत्रेण संख्यैकवचनाद् वीप्सायां शसो विधाने एकवचनशब्दस्यान्वर्थत्वादेकत्वसंख्यावच्छिन्नार्थाभिधायिनः प्रातिपदिकात् शस्, न त्वेकवचनान्तात्। एवञ्च वृत्तौ भिन्नस्य द्रव्यस्य, न तु जातेः, अभेदो यदेकत्वं तस्याभिधानात् परिमाणशब्देभ्यः प्रस्थादिभ्यः शस् प्रत्ययो भवति। ते हि शब्दशक्तिस्वाभाव्यादेकत्वसंख्यावच्छिन्नं स्वार्थमाचक्षत इति तद्धर्मत्वात् = एकत्वसंख्यावच्छिन्नपरिमाणाभिधायित्वाद् वृत्तावभेदैकत्वसंख्याप्रादुर्भावेऽप्येकत्वावगमात् = द्वित्वादिप्रतिपक्षैकत्वसंख्यावगमात् शसुत्पत्तिः। 'प्रस्थशो ददाति, खारीशो ददाति' इति। घटादयस्तु जातिशब्दा इति न तेभ्यः शस् भवति।

तथा च तत्र जात्यभेदात् तेषां वृत्तौ प्रयोगे तदर्थस्योपसर्जनस्याभेदैकत्वसंख्यायोग इति न ते भिन्नस्य द्रव्यस्याभेदमभिदधति, अपि तु जातेः। सा च जातिर्व्यक्तिभेदेऽपि स्थिता इति घटादिशब्दानामनियतसंख्याश्रयजातिवाचित्वे = अनियतसंख्यद्रव्याश्रितजातिवाचित्वे वृत्तौ नियमेन व्यक्त्येकत्वान्तर्भावनाशक्तत्वात् = व्यक्त्यभेदैकत्वान्तर्भावनेऽशक्तत्वाद् नैकार्थाभिधाननिमित्तकः शस् प्रत्ययः।

कारिकायाम् 'दृश्यते' इति दृशिग्रहणञ्च प्रयोगानुसरणार्थम्। 'घटशो ददाति' इति प्रयोगो न दृश्यत इत्यर्थः।

यत्र तु जातिशब्दानामपि व्यक्तिविशेषप्रत्यायनपरतया प्रयोगः, तत्रैकत्वाद्यवगमदर्शनाद् भवत्येव शस्।

तद् यथा—'यो वा इमां वाचं वर्णशः पदश अक्षरशो वापि दधाति, स आर्त्विजीनो भवति' (म० भा० पस्पश०) इति। अत्र हि वर्णसमुदायरूपत्वात् पदस्य वर्णेभ्यो भेदेन निर्देशसामर्थ्यादेकव्यक्तिविवक्षा निश्चीयते। तदेवमभेदैकत्वसङ्ख्याभ्युपगमे यो विरोध उद्भावितः, स निवारितः। सर्वसङ्ख्याभेदसंसर्गस्वभावायां तस्यां यथानिबन्धनं विशेषाविर्भावनस्योपपत्तेरिति युक्तिसिद्धत्वादेतदनुसारेण सूत्रवार्त्तिकवचनानि गमयितव्यानि ॥ १२७ ॥

इदानीम् 'तद्रूपेऽवयवे वृत्तौ संख्याभेदो निवर्तते' (वा० प० ३ वृत्ति १००) इति ये भेदापोहलक्षणामभेदैकत्वसंख्यां मन्यन्ते, तन्मतेऽपि विरोधपरिहारायोपक्रमते—

**श्रूयते वचनं यत्र भावस्तत्र विशिष्यते।**
**निवर्तते यद् वचनं तस्य भावो न विद्यते ॥१२८॥**

यत्र वाक्ये एकवचनादि श्रूयते, तत्र भावः संख्यालक्षणो धर्मो विशिष्यते, अन्यस्माद् व्यावृत्तो विशिष्टोऽवसीयते।

---

यत्र तु जातिशब्दानामपि विवक्षावशाद् व्यक्तिविशेषप्रत्यायनपरतया प्रयोगः, तत्रैकत्वाद्यवगमदर्शनाद् भवत्येव शस्। तद् यथा—"यो वा इमां वाचं वर्णशः पदश अक्षरशो वापि दधाति स आर्त्विजीनो भवति" (म० भा० पस्पश०) इति।

अत्र हि पदस्य वर्णसमुदायरूपत्वाद् वर्णेभ्यो भेदेन निर्देशसामर्थ्यादेकपदव्यक्तिविवक्षा निश्चीयते। तदेवं वृत्तावभेदैकत्वसंख्याभ्युपगमे यो विरोधः 'गोदौ ग्रामः, शौर्पिको मासजातः' इत्यादावुद्भावितः, स निवारितः। सर्वसंख्याविशेषसंसर्गस्वभावायां तस्याम्=अभेदैकत्वसंख्यायां यथानिबन्धनम्=यथानिमित्तं संख्याविशेषाविर्भावनस्योपपत्तेरिति युक्तिसिद्धत्वादेतदनुसारेण सूत्रवार्त्तिकवचनानि प्रागुक्तानि गमयितव्यानीति ॥ १२७ ॥

पूर्वं संख्याविशेषसंसर्गलक्षणमभेदैकत्वमुक्तम्, इदानीम् "तद्रूपेऽवयवे वृत्तौ संख्याभेदो निवर्तते" (वा० प० ३ वृ० १ ०) इति ये भेदापोहलक्षणम्=संख्याविशेषनिवृत्तिलक्षणमभेदैकत्वसंख्यां मन्यन्ते, तन्मतेऽपि विरोधपरिहारायाह—श्रूयते वचनं यत्रेति।

अस्यार्थः—यत्र - वाक्ये वचनम्=एकवचनादिकं श्रूयते, तत्र भावः=संख्यारूपो धर्मो विशिष्यते=अन्यस्माद् व्यावृत्तः प्रतीयते। यत्=यत्तु, वचनमेकवचनादिवृत्तौ निवर्तते, तस्य=वचनस्य प्रत्याय्यो भावः स एव संख्याविशेषलक्षणो धर्मः, न विद्यते=नास्ति, स्ववाच्यस्य संख्याविशेषस्याभावादेव तस्य वचनस्य निवृत्तिरिति।

अयं भावः—यत्र वाक्ये एकवचनादि श्रूयते, तत्र भावः=संख्याविशेषलक्षणो धर्मः, विशिष्यते=अन्यस्मात् संख्याविशेषाद् विशिष्टो व्यावृत्तोऽवसीयते=प्रतीयते।

यत्तु वृत्तावेकवचनादि निवर्ततेऽपैति, तस्य भावः स एव संख्यालक्षणो धर्मः प्रत्याय्यो न विद्यते नास्ति । तदभावादेव हि तत्र तद्वचनस्य निवृत्तिः ॥ १२८ ॥

सैव तु स्वाभाविकी लुकान्वाख्यायते प्रत्ययलक्षणप्रसिद्धय इत्याह—

**कार्यं सत्ताश्रयं शास्त्रादप्रवृत्तिरदर्शनम् ।**
**वाक्ये दृष्टं यदत्यन्तमभावस्तस्य वृत्तिषु ॥१२९॥**

इह वृत्तौ विभक्तीनामर्थाभावादेवाप्रवृत्तिरनुत्पत्तिः प्रागभाव एवादर्शनम् । तदाश्रित्य प्रत्ययसत्ताश्रयं कार्यं शास्त्रात् 'प्रत्ययलोपे प्रत्ययलक्षणम्' (पा०१-१-६२) इत्यस्मात् प्रवर्तयितुं लुक्छास्त्रमारभ्यते । तवकादिरादेशः प्रगृह्यसंज्ञा च सति प्रत्ययेऽनुशिष्टेर्वृत्तौ संख्याविशेषाभावादसति प्रत्यये न स्यादिति प्रक्रियायां प्रत्यय उत्पाद्यते । तस्य प्रसक्तस्यादर्शनं लुगिति प्रत्ययलक्षणेन तत्सिद्धिः ।

कथमप्रवृत्तिः प्रागभावोऽदर्शनमिति चेद्, वाक्ये दृष्टस्य वृत्तावदर्शनाद् वचनस्य । वृत्तिवाक्ययोर्हि शब्दान्तरत्वेनात्यन्तं भेदादर्थाभावादेवाप्रवर्तनं वृत्तौ वचनस्य, न तु प्रध्वंसाभाव इत्यर्थः ॥१२९॥

---

यत्तु वृत्तावेकवचनादि निवर्तते अपैति=अपगच्छति, तस्य वचनस्य प्रत्याय्यो भावः, स एव संख्याविशेषलक्षणो धर्मो न विद्यते=नास्ति । तद्भावादेव हि=तद्वाच्यसंख्याविशेषाभावादेव हि तत्र=वृत्तौ तस्य वचनस्य निवृत्तिरिति ॥ १२८ ॥

सैव तु स्वाभाविकी वचननिवृत्तिः प्रत्ययलक्षणप्रसिद्धये लुकाऽन्वाख्यायत इत्याह—कार्यं सत्ताश्रयमिति ।

अस्यार्थः—वृत्तौ विभक्तीनामर्थाभावादेवाप्रवृत्तिरनुत्पत्तिः प्रागभावरूपा एवादर्शनं शास्त्रे विवक्षितम् । तदाश्रित्य प्रत्ययसत्ताश्रयं तन्निमित्तकं कार्यम् "प्रत्ययलोपे प्रत्ययलक्षणम्" ( पा० १।१।६२ ) इति शास्त्रात् प्रवर्तयितुं लुक्शास्त्रमारभ्यते । वाक्ये यदेकवचनादिकं विभक्तिरूपं दृष्टं तस्य वृत्तिषु अत्यन्तमभावोऽनुत्पत्तिलक्षणः, न तु प्रध्वंसाभाव इति ।

अयं भावः—इह वृत्तौ विभक्तीनामर्थाभावादेवाप्रवृत्तिरनुत्पत्तिः प्रागभाव एवादर्शनम् । तदाश्रित्य=तन्निमित्तीकृत्य प्रत्ययसत्ताश्रयं कार्यम् "प्रत्ययलोपे प्रत्ययलक्षणम्" (पा०।१।१।६२) इति शास्त्रात् प्रवर्तयितुं विभक्तिलुक्शास्त्रमारभ्यते । 'तावकः, मामकः' इत्यादिषु तवकादिरादेशः, 'कुमार्योरगारम्' इति विग्रहे 'कुमार्यगारम्' इत्यत्र प्रगृह्यसंज्ञा च ईदाद्यन्तं द्विवचनान्तमित्यर्थे सति प्रत्ययेऽनुशिष्टेः=अनुशासनाद् वृत्तौ संख्याविशेषाभावादसति प्रत्ययेन स्यादिति प्रक्रियावाक्ये प्रत्ययो द्विवचनरूप उत्पाद्यते, तस्य वृत्तौ प्रसक्तस्यादर्शनं लुगिति प्रत्ययलक्षणेन तत्सिद्धिः=प्रगृह्यसंज्ञाप्राप्तिः । सा च ईदाद्यन्तं द्विवचनमित्यर्थेन वार्यते । द्विवचनस्य विधीयमाना प्रगृह्यसंज्ञा द्विवचनभावे न भवतीति ।

कथमप्रवृत्तिः प्रागभावोऽदर्शनमिति चेद्, वाक्ये दृष्टस्य वचनस्य=एकवचनादेर्वृत्तावदर्शनात् । वृत्तिवाक्ययोर्हि शब्दान्तरत्वेन=शब्दभेदेन अत्यन्तं भेदाद् अर्थाभावादेव वृत्तौ वचनस्यैकवचनादेरप्रवर्तनम्, न तु प्रध्वंसाभाव इति ॥ १२९ ॥

यद्येवं सुपामनुत्पादनाद् वचनविशेषाश्रया विधयः प्रत्ययलक्षणेनापि कथं लभ्यन्त इत्यत आह—

**संज्ञाविषयभेदार्थं प्रसक्तादर्शनं स्मृतम् ।**
**श्रूयमाणं तु वचनं विशिष्टमुपलभ्यते ॥१३०॥**

सर्वस्य प्रत्ययस्य स्वविषयादन्यत्रात्यन्तादर्शनमित्यतिप्रसङ्गनिवारणाय लोपसंज्ञाया विषयनियमार्थम् "सिद्धं तु प्रसक्तादर्शनस्य लोपसंज्ञित्वात्" इत्युक्तम् ।

यद्यपि चात्रार्थाभावाच्छास्त्रीयापि नास्ति प्राप्तिः, तथापि स्वाभाविक एवाप्रयोगो लुका ज्ञाप्यते । न हि संभवदर्थः शब्दः शक्यते वचनेन निवर्तयितुम् । अप्राप्त्यनुमानमेव हि बाधा ।

एवञ्च लुक्छास्त्रेणैवात्र प्रसक्तेराख्यानात् प्रक्रियायां सुप उत्पन्ना निवर्त्यन्ते । प्रयोगसमवायिनि हि वाक्ये श्रूयन्ते नियताः सुपः । तच्चान्यदेव वृत्तेः । तत्सदृशं तु प्रक्रियावाक्यं वृत्तिप्रकृतिभूतं कल्प्यते ।

---

यद्येवं लुगादिविधिभिः सुपामनुत्पत्तेरेवान्वाख्यानम्, तदा सुपामनुत्पादनाद् वचनविशेषाश्रया विधयः प्रत्ययलक्षणेनापि कथं लभ्यन्त इत्याशङ्क्याह—संज्ञाविषयभेदार्थमिति ।

अस्यार्थः—लोपसंज्ञाया यो विषयः प्रसक्तादर्शनरूपः, तस्य भेदार्थम् = अत्यन्तादर्शनाद् व्यावृत्त्यर्थम्, प्रसक्तादर्शनं स्मृतम्—"सिद्धं तु प्रसक्तादर्शनस्य लोपसंज्ञित्वात्" (भा० वा० १।१:६२) इति वार्त्तिककारेणोक्तम् । वृत्तिप्रकृतिभूते प्रक्रियावाक्ये श्रूयमाणं तु वचनं लोपाद् विलक्षणमानुपूर्वीविशेषविशिष्टमुपलभ्यते ।

एवञ्च कारणानुरूपत्वात् कार्यस्य वृत्तावपि लुका ज्ञाप्यमानं विशिष्टमेव वचनं प्रत्ययलक्षणेन = प्रत्ययलक्षणशास्त्रविहितेन प्रत्ययवदतिदेशेन स्वकार्यं प्रयुङ्क्ते ।

एवञ्च प्रत्ययलोपे प्रत्ययवत्कार्यातिदेशाद् वृत्तौ सुपामनुत्पादेऽपि वचनविशेषाश्रया विधयः सिध्यन्तीति ।

अयं भावः—सर्वस्य प्रत्ययस्य स्वविषयादन्यत्र = स्वप्रकृतितोऽन्यत्र अत्यन्तादर्शनमिति । अत्रातिप्रसङ्गवारणाय लोपसंज्ञाया विषयनियमार्थं सिद्धं तु प्रसक्तादर्शनस्य लोपसंज्ञित्वादित्युक्तम् ।

यद्यपि चात्र = वृत्तावर्थाभावाच्छास्त्रीयाऽपि वचनस्य प्राप्तिर्नास्ति, तथापि स्वाभाविक एवात्र वचनाप्रयोगो लुका ज्ञाप्यते । यतो न सम्भवदर्थः शब्दो वचनेन निवर्तयितुं शक्यते । अप्राप्त्यनुमानमेव हि सुपां बाधा = निवृत्तिः ।

एवञ्च लुक्शास्त्रेणैवात्र = वृत्तौ सुपां प्रसक्तेराख्यानात्, अलौकिके प्रक्रियावाक्ये उत्पन्नाः सुपो वृत्तौ लुका निवर्त्यन्ते । प्रयोगसमवायिनि हि लौकिके विग्रहवाक्ये नियताः सुपः श्रूयन्ते । तच्च = लौकिकं विग्रहवाक्यञ्च वृत्तेरन्यदेव । तत्सदृशं तु = लौकिकविग्रहवाक्यसदृशं तु अलौकिकं प्रक्रियावाक्यं वृत्तिप्रकृतिभूतं कल्प्यते ।

तत्र च सुपः प्रयोगसमवायिवाक्यानुसारेणैव कल्प्यन्ते। तथा च तत्र प्रक्रियावाक्ये विशिष्टमेव वचनं श्रूयते।

तत्र हि यदुपलभ्यते वचनं तच्छ्रुतत्वादेव विशिष्टं विज्ञायते। ततश्च कारणानुरूपत्वात् कार्यस्य वृत्तावपि लुका ज्ञाप्यमानं विशिष्टमेव वचनं प्रत्ययलक्षणेन स्वकार्यं प्रयुङ्क्त इति राजपुरुषादौ वचनविशेषकार्यस्याभावाद् वचनमात्राश्रयं नलोपादिकार्यं प्रवर्तते।

तथा च तत्र भूतपूर्वो वचनभेदो नावगम्यत इति संख्याविशेषावगमाभावः। तवकादयस्त्वादेशाः प्रगृह्यसंज्ञा च प्रत्ययलक्षणकार्यं वचनविशेषप्रतिबद्धमिति तत्र वचनभेदस्य भूतपूर्वस्यावगमाद् भवति तन्निबन्धनः संख्याविशेषावसायः।

"श्रूयते वचनं यत्र भावस्तत्र विशिष्यते" (वा० प० ३ वृ० १३०)।

इति वचनभेदनिबन्धनो हि संख्याभेदावगमः।

स चात्रादेशादिनानुमितसन्निधान इति कथं स्ववाच्यं न प्रत्याययेदित्यर्थः। तदेवं पूर्वमादेशादेरेवाभेदैकत्वसंख्यान्तर्भूतस्य संख्याविशेषस्यावगम इति समर्थितम्।

इह त्वसत्यपि संख्याविशेषान्तर्भावेऽभेदैकत्वसंख्यायामादेशादिना विशिष्टप्रकृत्यानुमाने स्ववाचकद्वारेणैव संख्याभेदप्रतिपत्तिरिति भेदः॥ १३०॥

---

तत्र च = अलौकिके प्रक्रियावाक्ये च प्रयोगसमवायिवाक्यानुसारेणैव = लौकिकविग्रहवाक्यानुसारेणैव सुपः कल्प्यन्ते। तथा च तत्र = अलौकिके प्रक्रियावाक्ये विशिष्टमेव = आनुपूर्वीविशेषविशिष्टमेव वचनं श्रूयते।

तत्र हि = अलौकिके प्रक्रियावाक्ये हि यदुपलभ्यते वचनं तच्छ्रुतत्वादेव = श्रवणादेव विशिष्टम् = आनुपूर्वीविशिष्टं विज्ञायते। ततश्च वृत्तिरूपस्य कार्यस्य स्वकारणालौकिकप्रक्रियावाक्यानुरूपत्वाद् वृत्तावपि लुका ज्ञाप्यमानम् = प्रसक्तत्वेन—प्राप्तत्वेनानुमीयमानं विशिष्टमेव = आनुपूर्वीविशिष्टमेव वचनं प्रत्ययलक्षणसूत्रेण प्रत्ययवदतिदेशेन स्वकार्यं प्रयुङ्क्त इति राजपुरुषादौ प्रत्ययविशेषकार्यस्याभावात् प्रत्ययसामान्याश्रयं न लोपादिरूपं कार्यं प्रवर्तते।

तथा च भूतपूर्वो वचनभेदः = अलौकिके प्रक्रियावाक्ये वृत्तेः पूर्वं भूतो वचनविशेषः, तत्र = वृत्तौ लुका लुप्तत्वेन नावगम्यत इति वृत्तौ संख्याविशेषावगमाभावः। तवकादयस्त्वादेशाः प्रगृह्यसंज्ञा च प्रत्ययलक्षणकार्यम् = प्रत्ययनिमित्तकं कार्यं वचनविशेषसम्बद्धमिति तत्र वचनविशेषस्य भूतपूर्वस्यावगमात् = तवकाद्यादेशैः प्रगृह्यसंज्ञया चानुमानात् तन्निबन्धनः = वचनविशेषनिमित्तकः संख्याविशेषावगमो भवति। "श्रूयते वचनं यत्र भावस्तत्र विशिष्यते" (वा० प० ३ वृ० १३०) इति वचन विशेषनिमित्तको हि संख्याविशेषावगमः।

स चात्र = वचनविशेषश्चात्र आदेशादिनाऽनुमितसन्निधान इति कथं स्ववाच्यं संख्याविशेषं न प्रत्याययेदिति। तदेवं पूर्वमभेदैकत्वसंख्यान्तर्भूतस्य संख्याविशेषस्यादेशादेरेवावगम इति समर्थितम्।

इह त्वभेदैकत्वसंख्यायां संख्याविशेषान्तर्भावेऽसत्यपि वृत्तिरूपेण कार्येण स्वकारणीभूतालौकिकप्रक्रियावाक्यरूपप्रकृत्यनुमाने सति स्ववाचकद्वारेणैव संख्याविशेषप्रतिपत्तिरिति विशेष इति॥ १३०॥

अत्र तु दर्शने दोषमाह—

**अभावो वा लुको यत्र रूपवान् वा विधीयते ।**
**व्यभिचारान्निमित्तस्य तत्रासाधुः प्रसज्यते ॥१३१॥**

प्रक्रियावाक्ये यादृशं विशिष्टं वचनम्, तादृश एव प्रसक्तस्य वृत्तौ लुगित्युच्यते। तथा च यत्र लुकोऽभावः "पञ्चम्याः स्तोकादिभ्यः" (पा०६-३-२) इत्यादौ, तत्र द्वित्व-बहुत्वयोः 'स्तोकाभ्यां मुक्तः' 'स्तोकेभ्यो मुक्तः' इति प्राप्नोति। इष्यते च स्तोकान्मुक्त इत्येवेत्यलुक एकवद्भावो वक्तव्य एव स्यात्। स चाशिष्य इत्युक्त इति विरोधः। एकत्वं हि वृत्तौ प्रतीयते। 'स्तोकाभ्यां मुक्तः' इत्यादौ चैकत्वाख्यस्य वृत्तिनिमित्तस्य वचनान्तरश्रुतौ परित्यागाद् द्वित्वादावपशब्दोऽयं स्तोकान्मुक्त इति प्राप्नोति।

तथा रूपवान् भावात्मकस्तवकाद्यादेशोऽप्येकार्थत्वे विधीयते। अन्वर्थो हि

---

अत्र तु दर्शने = भेदापोहलक्षणाभेदैकत्वसंख्याऽभ्युपगमदर्शने दोषमाह—अभावो वा लुक इति।

अस्यार्थः—यत्र प्रक्रियावाक्ये यादृशं विशिष्टं वचनं तादृश एव प्रसक्तस्य वृत्तौ लुगित्युच्यत इति वृत्तौ प्रत्ययलुकि प्रत्ययलक्षणेन वचनविशेषाश्रयं कार्यं समर्थ्यत।

तथा च यत्र वृत्तौ 'स्तोकान् मुक्तः' इत्यादौ लुकोऽभावो वा। अत्र वाशब्दो वक्ष्यमाणा-पेक्षया पक्षान्तरपरतया विकल्पार्थकः। तत्र द्वित्वबहुत्वयोः 'स्तोकाभ्यां मुक्तः, स्तोकेभ्यो मुक्तः' इति प्राप्नोति। इष्यते च 'स्तोकान्मुक्तः' इत्येव। अभेदैकत्वं हि वृत्तौ प्रतीयते, 'स्तोकाभ्यां मुक्तः' इत्यादौ चैकत्वाख्यस्य वृत्तिनिमित्तस्य व्यभिचारात् = परित्यागाद्, द्वित्यादावसाधुरयं स्तोकाद् 'मुक्त इति' प्रसज्यते।

तथा—यत्र रूपवान् = स्वरूपवान् = आकारवान् भावात्मकस्तवकाद्यादेशो वा एकार्थत्वे विधीयते, "तवकममकावेकवचने" (पा०४।३।३) इत्यत्रैकवचनशब्दस्याकृत्रिमत्वेनान्वर्थत्वात्, तत्र वृत्तौ भेदापोहलक्षणाभेदैकत्वसंख्याभ्युपगमे द्व्यादिप्रतिपक्षभूतस्यैकत्वलक्षणस्यादेशनिबन्धनस्य वृत्तौ व्यभिचारात् = परित्यागात् तवकादिस्तत्रासाधुरप्रयोगार्ह एव स्यादिति।

अयं भावः—यत्र प्रक्रियावाक्ये यादृशं विशिष्टं वचनम्, तादृश एव प्रसक्तस्य वचनस्य वृत्तौ लुगित्युच्यते। अत्र सादृश्यञ्चोपदेशातिदेशाभ्यामेककार्यकरत्वम्।

तथा च यत्र लुकोऽभावः "पञ्चम्याः स्तोकादिभ्यः" (पा० ६।३।२) इत्यादि, तत्र द्वित्व-बहुत्वयोः 'स्तोकाभ्यां मुक्तः, स्तोकेभ्यो मुक्तः' इति प्राप्नोति। इष्यते च तत्रापि = द्वित्वबहुत्वयोरपि 'स्तोकान्मुक्तः' इत्येवेत्यलुक एकवद्भावो वक्तव्य एव स्यात्। स चाशिष्य इत्युक्त इति विरोधः। अभेदैकत्वं हि भेदापोहलक्षणं संख्याभेदसंसर्गलक्षणं वा वृत्तौ मतभेदेन प्रतीयते। 'स्तोकाभ्यां मुक्तः' इत्यादौ चैकत्वाख्यस्य वृत्तिनिमित्तस्य वचनान्तरश्रुतौ परित्यागरूपाद् व्यभिचाराद् द्वित्वादा-वपशब्दोऽयं 'स्तोकात् मुक्तः' इति प्राप्नोति।

तथा रूपवान् आकारवान् भावात्मकस्तवकाद्यादेशोऽप्येकार्थत्वे = एकार्थवाचित्वे विधीयते।

तत्रैकवचनशब्दः। तत्र यदि वृत्तौ भेदापोहलक्षणाभेदैकत्वसंख्याभ्युपगम्यते, ततो द्व्यादिप्रतिपक्षभूतस्यैकत्वलक्षणस्यादेशनिबन्धनस्य वृत्तौ परित्यागात् तवकादिस्तत्रासाधुरप्रयोगार्ह एव स्यात् ॥ १३१ ॥

तस्मादयमत्र मतद्वयेऽपि परमार्थरूपः सिद्धान्त इत्याह—

**भेदः संख्या विशेषो वा व्याख्यातो वृत्तिवाक्ययोः ।**
**सर्वत्रैव विशेषस्तु नावश्यं तादृशो भवेत् ॥१३२॥**

किमनेन दुःसमर्थेनाभेदैकत्वेनाभ्युपगतेन? शब्दानामभिधानशक्तयो हि विचित्राः। ता विशेषेणानुसर्तुमशक्याः किञ्चित् सामान्यमाश्रित्य ज्ञाप्यन्ते।

---

अन्वर्थो हि तत्रैकवचनशब्दः, न तु कृत्रिमसंज्ञापरः। तत्र यदि वृत्तौ भेदापोहलक्षणाभेदैकत्वसंख्याऽभ्युपगम्यते, ततो द्व्यादिप्रतिपक्षभूतत्वलक्षणस्यादेशनिमित्तस्य वृत्तौ परित्यागात् तवकादिरादेशस्तत्रासाधुरप्रयोगार्ह एव स्यादिति दुष्टमिदं दर्शनमिति ॥ १३१ ॥

तस्मादयमत्र मतद्वयेऽपि = संख्याविशेषसंसर्गरूपा वृत्तावभेदैकत्वसंख्या इत्येकं मतम्, भेदापोहलक्षणा अभेदैकत्वसंख्या इत्यपरं मतमिति मतद्वयेऽपि परमार्थरूपः सिद्धान्त इत्याह— भेदः संख्या विशेषो वा इति। संख्या विशेष इति पदद्वयम्। अत एव वा शब्दनिर्देशः।

अस्य पद्यस्यार्थः—संख्या = वृत्तावभेदैकत्वसंख्या, विशेषो वा = संख्याविशेषो वा द्वित्वादिका संख्या, वृत्तिवाक्ययोर्भेदो व्याख्यातः। वृत्तावभेदैकत्वसंख्या, वाक्ये तु संख्याविशेषो द्वित्वादिका संख्या इति भेदः।

यद्यपि वाक्ये संख्याविशेषो नियमेन प्रतीयते, तथापि वृत्तौ तु विशेषः = संख्याविशेषः पार्षिकमासजाततावकीनादौ प्रतीयमानोऽपि सर्वत्रैव—राजपुरुषादावपि तादृशो यादृशो वाक्ये वृत्तौ वा तावकादौ प्रतीयते, तादृशो नावश्यं भवेत् = नावश्यं प्रतीयेत। 'कृभ्वस्तयः क्रियासामान्यवचनाः' इति सिद्धान्तात्।

तथा च राजपुरुषादौ वृत्तावुपसर्जने संख्याविशेषाप्रतीत्या वाक्याद् भेदे सिद्धे वृत्तित्वजातीयतया तावकादावपि वाक्याद् भेदः सिद्ध्यति। तथा चायमत्र प्रयोगः—तावकादिरूपा वृत्तिः तवायमिति वाक्याद् भिन्ना, राजपुरुषादौ संख्याविशेषासमानाधिकरणवृत्तित्वजातिमत्त्वाद् राजपुरुषादिवृत्तिवदिति।

यथा—'क्रियावद् द्रव्यम्' इत्युक्ते गोघटादौ क्रियासमानाधिकरणद्रव्यत्वजातिमत्तया गगनादिके विभावपि गुणादिभ्यो भेदानुमानमिति।

अयं भावः—किमनेन दुःसमर्थेन = अनुपपन्नेनाभेदैकत्वेन स्वीकृतेन। शब्दानामभिधानशक्तयो हि विचित्राः। तथाहि—वाक्यानि सर्वाण्यपि संख्याविशेषमभिदधति। वृत्तिस्तु पार्षिकमासजाततावकादिका काचित् संख्याविशेषमभिदधाति, काचित्तु राजपुरुषादिका तं नाभिदधातीति। ताश्च शब्दानामभिधानशक्तयोऽनुगमाभावाद् विशेषेणानुसर्तुमशक्याः किञ्चित् सामान्यं कासुचिद् व्यक्तिष्वनुगतं समाश्रित्य ज्ञाप्यन्ते।

तथा च वृत्तावेकार्थीभावकृतं वाक्याद् विशेषं दर्शयता भाष्यकारेण यः संख्याभेदावगमलक्षणो विशेषो वृत्तौ व्याख्यातो वाक्ये च भेदः संख्याविशेष इति, सोऽभेदेन वृत्तिपदानि प्रातिस्विकभेदानाश्रयेणोपादाय बोद्धव्यः।

तथाहि—न सर्वत्र वृत्तिपदे संख्याविशेषाप्रतीतिः, शौर्पिकमासजाततावकीनादौ विशेषप्रतीतेः। अस्ति तु राजपुरुषादावविशेष इत्येतावता वाक्याद् भिन्ना वृत्तिर्लक्षिता भवत्येव। तद्यथा क्रियावद् गुणवत् समवायिकारणं द्रव्यमित्युक्ते गगनादीनां क्रियावत्त्वाभावेऽपि गुणादिभ्यो द्रव्यस्य भेदः सिध्यत्येव। तेषां कदाचिदपि क्रियावत्त्वाभावात्। द्रव्यस्य तु कस्यचित् कदाचित् तथाभूतत्वात्।

एवं वाक्ये सर्वत्रैव संख्याभेदप्रतीतेः क्वचित् तद्रूपापि वृत्तिस्ततोऽन्या भवत्येव ज्ञापिता। सर्वं हि लक्षणं सामान्येनैव प्रवर्तते, प्रतिव्यक्त्यशक्यत्वात् तत्प्रणयनस्य। देशकालस्वभावभेदेन विचित्रत्वान्मात्राणाम्, विशेषतः शब्दानामभिधानशक्तिनियमस्यायोगादिति सति निबन्धने तावकीनादौ संख्याविशेषप्रतिपत्तिर्भवन्ती लक्षणव्यभिचाराय न प्रभवति, सामान्ये लक्षणस्य प्रवृत्तेः सकृत्प्रवृत्तावपि चरितार्थत्वादित्यर्थः॥ १३२॥

---

तथा च वृत्तावेकार्थीभावकृतं वाक्याद् विशेषं दर्शयता भाष्यकारेण यः संख्याऽभेदावगमलक्षणो विशेषो वृत्तौ, वाक्ये च भेदः संख्या विशेष इति, स वृत्तिपदानि प्रातिस्विकभेदानाश्रयेणाभेदेनोपादाय बोद्धव्यः।

अयमत्र निष्कर्षः—यत्र वृत्तिपदेषु प्रातिस्वकभेदानवगमः तत्राभेदैकत्वसंख्यावगम इति। यत्र तु न तथा, तत्र नाभेदैकत्वसंख्यावगम इति। इदं च सर्वं शब्दशक्तिस्वाभाव्याद् बोध्यम्।

तथाहि—न सर्वत्र वृत्तिपदे संख्याविशेषप्रतीतिः, पार्पिकमासजाततावकीनादौ विशेषप्रतीतेः। अस्ति तु राजपुरुषादावविशेषः = संख्यांविशेषप्रतीत्यभाव इत्येतावतैव वाक्याद् भिन्ना वृत्तिर्लक्षिता भवति। तद् यथा—क्रियावद् गुणवत् समवायिकारणं द्रव्यमित्युक्ते गगनादीनां क्रियवत्त्वाभावेऽपि गुणादिभ्यो द्रव्यस्य भेदः सिध्यत्येव। तेषाम् = गुणादीनां कदाचिदपि क्रियावत्त्वाभावात्, द्रव्यस्य तु कस्यचित् कदाचित् तथाभूतत्वात्।

एवं वाक्ये सर्वत्रैव संख्याभेदप्रतीतेः क्वचित् तद्रूपाऽपि = संख्याभेदवत्यपि वृत्तिः ततोऽन्या = वाक्यादन्या भवत्येव लक्षणान्तरेण = एकार्थीभावरूपेण ज्ञापिता। सर्वं हि लक्षणसामान्येनैव = स्वमानाधिकरणजातिमत्त्वेनैव प्रवर्तते, तत्प्रणयनस्य प्रतिव्यक्त्यशक्यत्वात्। देशकालस्वभावभेदेन मात्राणाम् = मीयन्ते इति व्युत्पत्त्या भावानां विचित्रत्वात्, विशेषतः शब्दानामभिधानशक्तिनियमनस्यायोगादिति सति स्वनिमित्ते संख्याविशेषप्रतिपत्तिर्भवन्ती वृत्तिलक्षणव्यभिचाराय न प्रभवति। सामान्ये लक्षणस्य प्रवृत्तेः सकृत्प्रवृत्तावपि चरितार्थत्वादिति॥ १३२॥

यथा च वृत्तौ संख्याविशेषः क्वचिन्न प्रतीयते, तथा लिङ्गविशेषोऽपि। ततश्च कुक्कुट्यादीनामण्डादिषु पुंवद्भावः "न वा अस्त्रीपूर्वपदस्य विवक्षितत्वात्" (भा० वा० ६-३ ४२) इति प्रत्याख्यातः।

तद् व्याचष्टे—

जातेश्च भेदहेतुत्वान्न लिङ्गेन विशेष्यते।
प्रधानं मृगदुग्धादौ गार्गीपुत्रे न स क्रमः ॥१३३॥

'मृगदुग्धम्, कुक्कुटाण्डम्, छागमांसम्'त्यादौ दुग्धादेरुत्तरपदार्थस्य प्रधानस्यावच्छेदाय मृगादिपूर्वपदार्थो विशेषणमुपादीयत इति जातिपरायां चोदनायां लिङ्गविशेषस्याविवक्षेति 'मृगस्य दुग्धम्' इत्यादिरेव विग्रहः। जात्यन्तरनिवृत्तिपरायां चोदनायां मृगादयः शब्दा नियतजातिवाचका निरस्तलिङ्गभेदा एव प्रभवन्ति विवक्षितेनार्थेन प्रधानमवच्छेत्तुम्।

तदेतदुच्यते—"अस्त्री पूर्वपदस्य विवक्षितत्वात्"इति। अस्त्र्यर्थत्वे हि पूर्वपदस्य किमन्यज्जातिविवक्षायाः स्यात्? तत्राण्डादीनां स्त्रीपुंससाधारण्यात् कुक्कुटस्याण्डम्,

---

यथा च वृत्तौ संख्याविशेषः क्वचिन्न प्रतीयते राजपुरुषादौ, तथा वृत्तौ लिङ्गविशेषोऽपि क्वचिन्न प्रतीयते। ततश्च कुक्कुट्यादीनामण्डादिषु पुंवद्भावः "न वा अस्त्री पूर्वपदस्य विवक्षितत्वात्" (भा० वा० ६।३।४२) इति प्रत्याख्यातः, जात्यभिप्रायेण स्त्रीत्वरहितस्य पूर्वपदस्य विवक्षितत्वादिति तदर्थः। तद् व्याचष्टे—जातेश्च भेदहेतुत्वादिति।

अस्यार्थः—मृगदुग्धादौ जातेश्च मृगीसामान्यस्य भेदहेतुत्वात्, प्रधाने दुग्धे विशेषणत्वात्, प्रधानं स्त्रीत्वेन लिङ्गेन स्वाश्रयद्वारा न विशेष्यते। यः क्रमो मृगदुग्धादौ पूर्वपदे सामान्यविवक्षारूपः स क्रमः प्रकारो गार्गीपुत्रे न विद्यते।

अत्र हि गार्गीशब्दो व्यक्तिविशेषपर इति तस्य सामान्यपरता न संभवति।

किञ्चात्र गार्गीशब्दो निन्दाप्रशंसान्यतरपरतया प्रयुक्त इति न गर्गापत्यसामान्यपरः संभवतीति।

अयं भावः—'मृगदुग्धम्, कुक्कुटाण्डम्, छागमांसम्' इत्यादावुत्तरपदार्थस्य दुग्धादेः प्रधानस्यावच्छेदाय = अन्यस्माद् व्यावृत्तये मृगादिः पूर्वपदार्थो विशेषणमुपादीयत इति जातिपरायां चोदनायाम् = जातिपरे उपदेशे लिङ्गविशेषस्याविवक्षेति मृगस्य दुग्धमित्यादिरेव विग्रहः। जात्यन्तरनिवृत्तिपरायां चोदनायाम् = जात्यन्तरनिवृत्तिपरे उपदेशे मृगादयः शब्दा नियतजातिवाचका निरस्तलिङ्गभेदा एव = अविवक्षितस्त्रीत्वरूपलिङ्गविशेषा अपि प्रभवन्ति, विवक्षितेन जातिरूपणार्थेन तदाश्रयं द्वारीकृत्य प्रधानमवच्छेतुम्। तदेतदुच्यते—"अस्त्रीपूर्वपदस्य विवक्षितत्वात्" इति। पूर्वपदस्यास्त्र्यर्थत्वे हि = स्त्रीत्वविशिष्टार्थवाचकत्वाभावे हि किं जातिविवक्षाया अन्यत् स्यात् = जातिविवक्षैव स्यात्। तत्राण्डादीनां जन्यजनकभावरूपस्य, 'मृगदुग्धम्' इत्यादौ दुग्धादेराधाराधेयभावरूपस्य 'छागमांसम्' इत्यादौ मांसादेरवयवावयविभावरूपस्य संबन्धस्य स्त्रीपुंससाधारण्यात्

छागस्य मांसमिति कुक्कुटादिना विशेषणमनर्थकम्, अव्यभिचारात्। यदा त्वन्यजातिनिवृत्तिरेव विशेषणादवगम्यते, यदा तु मांसादेर्लघुतरत्वेनोपयोगविशेषार्थं स्त्रीलिङ्गेन पूर्वपदेन विशेषणमभिसंहितम्, तदा वाक्यमेव भवति, न समासः। ततो विशेषस्यानिश्चयात्। निवृत्ते हि स्त्रीप्रत्यये स्त्रीत्वस्यानभिव्यक्तेः सैव सामान्यविवक्षा पुंवद्वचनेन सूच्यते।

क्वचित् तु सर्वथैव लिङ्गविशेषयोगो भवत्युपसर्जनार्थस्य। तद् यथा गार्गीपुत्रछागलीमूत्रमहिषीमूत्रादिषु। पुत्रस्य हि निन्दाप्रशंसापरतया मूत्रविशेषस्य चार्थक्रियाभेदकारित्वात् स्त्रियैव विशेषणं युज्यते।

तथा चैवमादौ न सानुपूर्वी या कुक्कुट्यादिषु (कुक्कुटाण्डादिषु)। तत्र हि लिङ्गसामान्ययुक्तः पूर्वपदार्थः।

अत एवादिशब्देनैवंभूता जातिपरा एव कुक्कुटीप्रकारा अभिमताः। न तु यत्र

---

'कुक्कुटस्याण्डम्, छागस्य मांसम्' इति कुक्कुटादिना पुंसा विशेषणमनर्थकम्, अव्यभिचारात्। व्यभिचारे हि विशेषणं सार्थकं भवति। तदुक्तम्—"संभवव्यभिचाराभ्यां स्याद् विशेषणमर्थवत्" इति। अतः 'कुक्कुटाण्डम्, मृगदुग्धम्, छागमांसम्' इत्यादौ समासो जातिपरत्वमेव च न्याय्यम्।

यदा त्वन्यजातिनिवृत्तिरेव विशेषणादवगम्यते—कुक्कुटस्यैवाण्डमिति, छागस्यैव मांसमिति, यदा तु = यदा च मांसादेर्लघुतरत्वेनोपयोगविशेषार्थम् = आतुरादेरुपयोगाय स्त्रीलिङ्गेन पूर्वपदेन विशेषणम् = पुंछागमांसव्यावर्तनम् अभिसंहितम्, तदा वाक्यमेव भवति, छाग्या मांसमिति, न समासः 'कुक्कुटाण्डम्, छागमांसम्' इति। ततः = समासाद् विशेषस्य ('कुक्कुटाण्डम्' इत्यत्रान्यजातिनिवृत्तिरूपस्य, छागमांसमित्यत्र पुंछागनिवृत्तिरूपस्य) चानिश्चयात्। 'छागमांसम्' इत्यादौ निवृत्ते हि स्त्रीप्रत्यये स्त्रीत्वस्यानभिव्यक्तेः। सैव च सामान्यविवक्षा = जातिविवक्षा, 'कुक्कुटाण्डम्' इत्यादौ "कुक्कुटयादीनामण्डादिषु" (वा० २१२) इति पुंवद्वचनेन सूच्यत इति नेदमपूर्वं वार्त्तिकम्।

क्वचित्तूपसर्जनार्थस्य सर्वथैव लिङ्गविशेषयोगो भवति, तद्यथा = गार्गीपुत्रछागलीमूत्रमहिषीमूत्रादिषु। पुत्रस्य हि निन्दाप्रशंसाऽन्यतरपरतया, मूत्रविशेषस्य च = महिषीमूत्रस्य च तत्तदर्थक्रियाविशेषकारित्वात् स्त्रियैव विशेषणं युज्यते।

तथाहि—यदि गार्गी कुत्सिता भवति, तदा तया पुत्रः कुत्स्यते—धिग्गार्गीपुत्रमिति।

यदा तु गार्गी प्रशस्ता गुणवती च, तदा तया पुत्रः प्रशस्यते। गार्गीपुत्रस्य पाणिनेरिति। छागलीमूत्रस्य चोपयोगे यदर्थक्रियाकारित्वम्, न तदर्थक्रियाकारित्वं महिषमूत्रस्येति आयुर्वेदादवगन्तव्यम्।

तथा चैवमादौ = गार्गीपुत्रादौ न साऽनुपूर्वी = पूर्वपदार्थे लिङ्गसामान्ययोगवती आनुपूर्वी या कुक्कुटाण्डादिषु, तत्र हि = कुक्कुटाण्डादिषु हि लिङ्गसामान्ययुक्तः पूर्वपदार्थः।

अत एव "कुक्कुट्यादीनामण्डादिषु" (वा० २१२) इति वार्त्तिके प्रकारवाचिना आदिशब्देन एवंभूताः = पूर्वपदार्थे लिङ्गसामान्ययोगवन्तो जातिपरा एव कुक्कुटीप्रकारा अभिमता, न तु यत्र

व्यक्तिविवक्षा प्रयोजनवती गार्गीपुत्रादौ, तेऽपि गार्गीप्रभृतयोऽत्र गृह्यन्त इति प्रत्युदाहरणमत्रैते भवन्ति। इत्थं च कृत्वा संख्याया इव लिङ्गस्यापि विषयनियमेन विवक्षाऽविवक्षे विज्ञेये ॥ १३३ ॥

यतश्च जातिपरत्वे लिङ्गसंख्याभेदस्तिरोधीयते, अत एव—

**अभेदे लिङ्गसंख्याभ्यां योगाच्छुक्लं पटा इति।**
**प्रसक्ते शास्त्रमारब्धं सिद्ध्ये लिङ्गसंख्ययोः ॥१३४॥**

इह पदावधिकेऽन्वाख्याने पदान्तरानपेक्षया पदे संस्क्रियमाणे नियतवाक्यगतविशेषानवधारणात् सामान्ये स्वार्थमात्रे लिङ्गसर्वनामनपुंसकयोगात् सङ्ख्यासर्वनामाभेदैकत्वयोगाच्च शुक्लमिति पदे स्थिते, पटा इति पदान्तरसमन्वयोपजनेऽप्यभिनिर्वृत्तस्यान्तरङ्गस्य संस्कारस्यानिवृत्तेः पटा इत्यसमन्वितार्थत्वादसमानाधिकरणेऽपि प्रयोगे प्राप्ते "विशेषणानां चाजातेः" (पा० १-२-५२) इति विशिष्टलिङ्गसङ्ख्यासिद्ध्यर्थमारभ्यते शास्त्रम्।

---

गार्गीपुत्रादौ व्यक्तिविवक्षा प्रयोजनवती। तेऽपि = गार्गीप्रभृतयोऽत्र = कुक्कुट्यादिषु गृह्यन्त इति प्रत्युदाहरणमत्र = "कुक्कुट्यादीनामण्डादिषु" (वा० २१२) इति वार्त्तिके एते = गार्गीपुत्रादयो भवन्ति। इत्थं च कृत्वा संख्याया इव लिङ्गस्यापि विषयनियमेन विवक्षाऽविवक्षे विज्ञेये। यत्र पूर्वपदस्य व्यक्तिपरत्वम् तत्र लिङ्गस्य विवक्षा गार्गीपुत्रादौ, यत्र तु पूर्वपदस्य जातिपरत्वम् यथा 'कुक्कुटाण्डम्' इत्यादौ तत्र लिङ्गस्याविवक्षेति ॥ १३३ ॥

वृत्तौ जातिपरत्वे लिङ्गविशेषसंख्याविशेषयोस्तिरोधानादेव पदावधिकेऽन्वाख्याने मतुपो लुपि लिङ्गसामान्ये संख्यासामान्ये च 'शुक्लं' इति पदे स्थिते 'पटाः' इति पदान्तरसंसर्गे 'शुक्लं पटाः' इति प्रयोगे प्रसक्ते तद्वारणार्थं लिङ्गविशेषसंख्याविशेषप्रसिध्यर्थं च—"विशेषणानां चाजातेः" (पा० १।२।५२) इति सूत्रमारभ्यत इत्याह—अभेदे लिङ्गसंख्याभ्यामिति।

अस्यार्थः—पदावधिकेऽन्वाख्याने शुक्लशब्दाजातस्य मतुपो लुपि वृत्तौ अभेदे = लिङ्गभेदसंख्याभेदयोस्तिरोधाने, लिङ्गसंख्याभ्यां योगात् = सामान्ये स्वार्थमात्रे लिङ्गसर्वनामनपुंसकयोगात्, संख्यासर्वनामाभेदैकत्वयोगाच 'शुक्लम्' इति पदे स्थिते 'पटाः' इति पदान्तरसंबन्धे सति जातसंस्कारस्यानिवृत्तेः 'शुक्लं पटाः' इति प्रयोगे प्रसक्ते लिङ्गसंख्ययोः = लिङ्गविशेषसंख्याविशेषयोः प्रसिद्धये "विशेषणानां चाजातेः" (पा० १।२।५२) इति शास्त्रमारब्धमिति।

अयं भावः—इह पदावधिकेऽन्वाख्याने पदे संस्क्रियमाणे पदान्तरानपेक्षया नियतवाक्यगतलिङ्गविशेषसंख्याविशेषानवधारणात् :सामान्ये = जातिरूपे स्वार्थमात्रे लिङ्गसर्वनामनपुंसकयोगात् संख्यासर्वनामाभेदैकत्वयोगाच 'शुक्लम्' इति पदे स्थिते 'पटाः' इति पदान्तरसम्बन्धोद्भवेऽपि अभिनिर्वृत्तस्य = पूर्वं संजातस्यान्तरङ्गस्य संस्कारस्यानिवृत्तेः 'पटाः' इत्यसमन्वितार्थकत्वात् = असंबद्धार्थकत्वादसमानाधिकरणेऽपि = असमानार्थकेऽपि प्रयोगे प्राप्ते विशिष्टलिङ्गसंख्यासिद्ध्यर्थम् = लिङ्गविशेषसंख्याविशेषसिद्ध्यर्थम् "विशेषणानां चाजातेः" इति शास्त्रमारभ्यते।

लुबन्तविशेषणानां हि लुबर्थसमानाधिकरणत्वात् "लुपि युक्तवद्"(पा०१-२-५१) इत्यनेनैव लुबर्थगतलिङ्गसङ्ख्ययोः सिद्धत्वाद् "गुणवचनानामाश्रयतो लिङ्गवचनानि" ( म० भा० १।२।५१ ) इत्यस्मिन्नर्थे सूत्रमवस्थापितं भाष्ये। विशेषणानां तैर्युक्तस्येव व्यक्तिवचने भवत इति सूत्रार्थः ॥ १३४ ॥

तत्र विशेषणशब्देन सामान्यवाचिना गुण एव कथमभिधीयत इत्याह—

**परार्थं शेषभावं यो वृत्तिषु प्रतिपद्यते।**
**गुणो विशेषणत्वेन स सूत्रे व्यपदिश्यते ॥१३५॥**

भेदकं विशेषणमिति यद्यपि प्रतीतम्, तथापीह परतन्त्रमात्रं विवक्षितम्। तथाहि—तद्धितग्रहणसंबद्धस्य युक्तवदित्यस्यानुवृत्तेस्तद्धितार्थयोग एकार्थीभावे तद्धित-वृत्तिषु यो भावः श्रूयते, अन्यं तद्धितार्थमात्मोपधानेनोपकुर्वन् स गुणोऽत्र विशेषण-मित्युक्तः। स हि मतुब्लोपात्, मत्वर्थीयाकारान्ततया वा द्रव्यसामान्ये प्रक्रान्तः, तदा-श्रितत्वेनात्यन्तपारतन्त्र्याद् विशेषणम्।

---

लुबन्तानां विशेषणानां हि लुबर्थसमानाधिकरणत्वात् = लुबर्थसमानार्थकत्वात् "लुपि युक्तवत्" ( पा० १।२।५१ ) इत्यनेनैव लुबर्थगतलिङ्गसंख्ययोः सिद्धत्वात् "गुणवचनानामाश्रयतो लिङ्गवचनानि" इत्यस्मिन्नर्थे = तात्पर्यार्थे सूत्रमवस्थापितं भाष्ये।

सूत्राक्षरार्थस्तु विशेषणानां व्यक्तिवचने = लिङ्गवचने तैर्युक्तस्येव = विशेषणैर्युक्तस्य विशेषस्येव भवत इति ॥ १३४ ॥

तत्र विशेषणशब्देन भेदकसामान्यवाचिना गुण एव कथमभिधीयत इत्याशङ्क्याह— परार्थं शेषभावमिति।

अस्यार्थः—यो भावः तद्धितवृत्तिषु परार्थम् = परस्य तद्धितार्थस्योपकाराय शेषभावम् अङ्गत्वम्, प्रतिपद्यते = प्राप्नोति। स तद्धितार्थं प्रति गुणीभूतो गुणः "विशेषणानां चाजातेः" इति सूत्रे विशेषणत्वेन व्यपदिश्यत इति।

अयं भावः—यद्यपि भेदकं विशेषणमिति प्रतीतम्, तथापीह परतन्त्रमात्रं विशेषणत्वेन विवक्षितम्, न त्वाधारत्वेन; स्वतन्त्रं द्रव्यं भेदकत्वेनात्र विशेषणत्वेन विवक्षितम्।

तथाहि—"विशेषणानां चाजातेः" इत्यत्र तद्धितग्रहणसंबद्धस्य युक्तवदित्यस्यानुवृत्तेर्विशेष-णानां व्यक्तिवचने तद्धितार्थेन युक्तस्येव भवत इत्यर्थेन तद्धितार्थयोगे एकार्थीभावे तद्धितवृत्तिषु शुक्ल इत्यादिषु यो भावो गुणरूपः श्रूयते, अन्यम् = गुणातिरिक्तं तद्धितार्थं गुणाधारभूतं द्रव्यम् आत्मोपधानेनोपकुर्वन् = स्वस्वरूपेण गुणात्मकेनोपाधिना उपकुर्वन् स गुणोऽत्र विशेषणमित्युक्तः। स हि = गुणो हि मतुब्लोपाद् मत्वर्थीयाकारान्ततया वा द्रव्यसामान्ये प्रक्रान्तः = प्रक्रमे प्रारम्भे ज्ञातः तदाश्रितत्वेन = द्रव्याश्रितत्वेनात्यन्तपारतन्त्र्याद् विशेषणम्।

यस्तु व्यधिकरणः पटस्य शुक्ल इति, स गुणमात्रप्रतिष्ठो द्रव्येण विशेष्यमाणत्वाद् विशेषणमेव न भवति।

पुंलिङ्गे च गुणे एकत्र तस्य प्रथमत एव प्राप्तसंस्कारत्वान्न लिङ्गसङ्ख्याभेदाकाङ्क्षा। द्रव्यसमानाधिकरणस्य तु द्रव्यसामान्ये नपुंसकैकत्वयोगिनि स्थितस्य द्रव्यविशेषलक्षणाश्रयधर्माकाङ्क्षिणो युक्ता विशिष्टद्रव्यलिङ्गवचनप्रतिपत्तिः। तस्माद् गुणमुक्तवान् गुणवचनः शुक्लादिरत्र सूत्रे विशेषणमुच्यते।

यद्यपि चास्य लुप्तप्रत्ययस्य विशेष्यवचनता, तथापि विशेष्यसामान्यवृत्तित्वाद् विशेषाकाङ्क्षित्वात् तं प्रति विशेषणत्वं भवत्येव॥ १३५॥

वाक्यावधिके तद्व्यन्वाख्याने पदान्तरापेक्षया शुक्लो गुणोऽस्य पटस्यास्तीत्युपक्रम एव विशिष्टलिङ्गसंख्यासिद्धौ किमर्थं सूत्रमित्याशङ्क्याह—

**शब्दान्तरत्वाद् वाक्येषु विशेषा यद्यपि श्रुताः।**
**वृत्तेरभिन्नरूपत्वात् तेषु वृत्तिर्न विद्यते॥१३६॥**

---

यस्तु गुणशब्दो व्यधिकरणः = भिन्नार्थकः 'पटस्य शुक्लः' इति, स गुणमात्रप्रतिष्ठः = गुणमात्रे पर्यवसितो द्रव्येण विशेषणेन विशेष्यमाणत्वाद् विशेषणमेव न भवति।

पुंलिङ्गे च गुणे एकत्रार्थे तस्य = गुणशब्दस्य प्रथमत एव प्राप्तसंस्कारत्वान्न लिङ्गसंख्याभेदाकाङ्क्षा। द्रव्यसमानाधिकरणस्य तु गुणशब्दस्य द्रव्यसामान्यो नपुंकलिङ्गैकत्वसंख्यायोगिनि वाच्यतासंबन्धेन स्थितस्य द्रव्यविशेषरूपाश्रयधर्मलिङ्गविशेषसंख्याविशेषाकाङ्क्षिणो युक्ता विशिष्टद्रव्यलिङ्गवचनप्रतिपत्तिः = द्रव्यविशेषाश्रितलिङ्गवचनविशेषप्रतिपत्तिः। तस्माद् गुणमुक्तवान् गुणवचनः शुक्लादिशब्दोऽत्र सूत्रे = "विशेषणानां चाजातेः" इति सूत्रे विशेषणमुच्यते।

यद्यपि चास्य = मत्वर्थीयस्य लुप्तप्रत्ययस्य विशेष्यवचनता, तथाप्यस्य विशेष्यसामान्यवृत्तित्वाद् विशेष्यविशेषाकाङ्क्षित्वात् तं प्रति = विशेष्यविशेषं प्रति गुणस्य विशेषणत्वं भवत्येवेति॥ १३५॥

ननु पदावधिकेऽन्वाख्याने पदान्तरानपेक्षया जातिपरत्वे वृत्तौ लिङ्गसंख्याभेदतिरोधाने प्रागुक्तरीत्या 'शुक्लं पटाः' इति प्रयोगे प्रसक्ते "विशेषणानां चाजातेः" इति सूत्रमारम्यत इत्युक्तम्, वाक्यावधिके तद्व्यन्वाख्याने पदान्तरापेक्षासत्त्वेन शुक्लो गुणोऽस्य पटस्यास्ति इत्युपक्रम एव विशिष्टलिङ्गसंख्यासिद्धौ = लिङ्गसंख्याविशेषसिद्धौ किमर्थमिदं सूत्रमित्याशङ्क्याह—शब्दान्तरत्वादिति।

अस्यार्थः—यद्यपि 'शुक्लः पटः' इत्यादिवाक्येषु लिङ्गसंख्याविशेषाः श्रुताः, तथापि वृत्त्यपेक्षया वाक्यस्य शब्दान्तरत्वाद् वृत्तौ ते वाक्यीया विशेषा न संभवन्तीति प्रागुक्तरीत्या 'शुक्लं पटाः' इति प्रसक्तप्रयोगव्यावृत्त्यर्थं "विशेषणानाम्" इति सूत्रमारब्धव्यम्।

किञ्च, 'शुक्लः' इति मतुब्लोपरूपाया मत्वर्थीयाकारान्तरूपाया वा वृत्तेर्घटपटादिविशेषेष्वभिन्नरूपत्वात् = अभिन्नानुपूर्वीकत्वात् तेषु घटपटादिविशेषु शुक्लादिपदरूपा वृत्तिर्न विद्यते। अतः सर्वथा सामान्यापेक्षमेव वृत्तिपदानुशासनमिति लिङ्गसंख्याविशेषसिद्ध्यर्थमिदं सूत्रमारब्धव्यमिति।

शुक्लो गुणोऽस्य पटस्यास्तीति यदिदं विशेषवाक्यम्, तन्मतुब्लोपात् ,मत्वर्थीयाकारान्ततया वा या वृत्तिस्तस्या भिन्नरूपमेवेति प्रागेव प्रतिपादितम्। ततश्च वाक्यगता विशेषा वृत्तौ नान्तर्भवन्ति। अभिन्नरूपा हि वृत्तिः पटादिविशेषेष्विति तस्य (तस्यां) नियतवाक्यगतविशेषाभिव्यक्तिर्नास्तीति सर्वथा सामान्यापेक्षमेव वृत्तिपदानुशासनमिति विशेषलिङ्गसंख्यासिद्ध्यर्थमिदमारम्भणीयमेव सूत्रम् ॥ १३६ ॥

नन्वेवमपि नियतविशेषनिष्ठस्यैव सामान्यस्य प्रतिपाद्यत्वादनिर्धारितोऽपि विशेषो भविष्यत्यन्वाख्याननिमित्तम्, समन्वयान्यथानुपपत्त्या वा बहिरङ्गमप्याश्रयलिङ्गसंख्यं प्रतीक्षिष्यते। कथमन्यथा सत्यपि वचने तत् सिध्येदित्याशङ्क्याह—

**रूपाच्च शब्दसंस्कारः सामान्यविषयो यतः।**
**तस्मात् तदाश्रयं लिङ्गं वचनं च प्रसज्यते ॥१३७॥**

**सलिङ्गं च ससङ्ख्यं च ततो द्रव्याभिधायिना।**
**सम्बध्यते पदं तत्र तयोर्भिन्ना श्रुतिर्भवेत् ॥१३८॥**

---

अयं भावः—शुक्लो गुणोऽस्य पटस्य अस्ति इति यदिदं शुक्लः पट इत्येतदपेक्षया विशेषवाक्यम्, तन्मतुब्लोपाद् मत्वर्थीयाकारान्ततया वा या शुक्लपदरूपा वृत्तिः, तस्या भिन्नरूपमेवेति प्रागेव प्रतिपादितम्। ततश्च वाक्यगता विशेषाः = लिङ्गसंख्याविशेषा वृत्तौ नान्तर्भवन्ति। अभिन्नरूपा हि शुक्लादिपदरूपा वृत्तिः पटादिविशेषेष्विति तस्यां नियतवाक्यगतलिङ्गसंख्याविशेषाभिव्यक्तिर्नास्तीति सर्वथा सामान्यापेक्षमेव वृत्तिपदानुशासनमिति 'शुक्लाः पटाः' इति लिङ्गसंख्याविशेषसिद्ध्यर्थम् "विशेषणानाम्" इति सूत्रमारम्भणीयमेवेति ॥ १३६ ॥

नन्वेवमपि निर्विशेषं न सामान्यमित्यभ्युपगमेन नियतविशेषनिष्ठस्यैव = नियतेषु परस्परं व्यावृत्तेषु विशेषेषु निष्ठापर्यवसानं यस्य तस्यैव सामान्यस्य पटाद्यविवेकेऽन्वाख्याने शुक्लादिपदप्रतिपाद्यत्वात् तदानीं तन्निर्धारणनिमित्ताभावादनिर्धारितोऽपि विशेषोऽन्वाख्याननिमित्तं भविष्यति, अथवा 'शुक्लम्' इति पदान्वाख्याने पदान्तरानपेक्षया पदे संस्कृते पश्चात् 'पटाः' इति पदान्तरसंबन्धे समन्वयान्यथाऽनुपपत्त्या = विरुद्धयोः पदार्थयोः परस्परं संबन्धानुपपत्त्या पश्चात् प्रतीतिकत्वेन बहिरङ्गमपि शुक्लगुणाश्रयद्रव्यलिङ्गसंख्यं पूर्वभाविनि शुक्लादिपदसंस्कारे प्रतीक्षिष्यते। कथमन्यथा सत्यपि वचने = सत्यपि "विशेषणानाम्" इति सूत्रे तत् सिध्येत् = विशेषणे विशिष्टलिङ्गसंख्यं सिध्येदित्याशङ्क्याह—( युग्मेन ) रूपाच्च शब्दसंस्कार इति। सलिङ्गञ्च ससंख्यञ्चेति।

अस्य पद्यद्वयस्यार्थः—यतः = यस्मात् कारणात्, रूपाच्च = रूपात्तु, रूप्यते शब्देन निरूप्यत इति रूपमर्थं निमित्तीकृत्य तु, शब्दसंस्कारः सामान्यविषयः = अर्थसामान्यनिमित्तकः, पूर्वस्य पदस्य संस्कारकाले पदान्तरसंबन्धनिमित्तकस्य लिङ्गसंख्याविशेषस्यान्यस्य वा विशेषस्याप्रतीतेः।

इह योऽर्थः शब्दात् प्रतीयते, स एव संस्कारनिमित्तम्। अस्माच्च वृत्तिपदादभिन्नरूपात् सर्वविशेषसाधारणाच्छ्रुतिसामान्यस्वभावादर्थसामान्यं प्रतीयते, न तु विशेषः।

तथा च विवक्षितस्यापि विशेषस्याप्रतीतस्यासत्समत्वात् सामान्यनिबन्धनमेवान्वाख्यानं युक्तमिति सामान्याश्रययोर्लिङ्गसङ्ख्ययोः प्राप्तिः॥ १३७, १३८॥

तयोश्चान्तरङ्गयोः कृतयोर्विशेषसन्निधानेऽपि त्यागाभावाद् व्यधिकरणत्वादसंबन्धे वचनानुसारिणं प्रति प्राप्ते—

**भाविनो बहिरङ्गस्य वचनादाश्रयस्य ये।**
**लिङ्गसङ्ख्ये गुणानां ते सूत्रेण प्रतिपादिते॥१३९॥**

---

तस्मात् तदाश्रयम् = अर्थसामान्याश्रयम्, लिङ्गं वचनञ्च सामान्यमेव प्रसज्यते—शुक्लमिति। प्रागुक्तरीत्या शुक्लमिति पदसंस्कारानन्तरम्, सलिङ्गञ्च ससंख्यञ्च 'शुक्लम्' इति पदं द्रव्याभिधायिना 'पटाः' इति पदेन संबध्यते। तत्र 'शुक्लं पटाः' इत्यत्र तयोः शुक्लपदपटपदयोः, भिन्ना श्रुतिर्भवेत् = भिन्नं लिङ्गवचनश्रवणं भवेत्, 'शुक्लं पटाः' इति। ततश्चैतन्निवृत्त्यर्थम् "विशेषणानाम्" इति सूत्रमावश्यकमिति।

अयं भावः—इह योऽर्थो यस्मात् शब्दात् प्रतीयते स एवार्थस्तच्छब्दसंस्कारनिमित्तम्। अस्माच्च वृत्तिपदात् = मतुब्लोपेन मत्वर्थीयाकारान्ततया वा वृत्तिरूपात् शुक्लपदात् पटादिविशेषेषु अभिन्नरूपात् सर्वस्वविशेषसाधारणात् श्रुतिसामान्यस्वभावात् = शब्दसामान्यस्वरूपात्, अर्थसामान्यं प्रतीयते, न तु अर्थविशेषः, पूर्वस्य पदस्य संस्कारकाले पदान्तरासंबन्धात्।

तथा च विवक्षितस्यापि लिङ्गसंख्याविशेषस्य तदानीमप्रतीतस्यासत्समत्वादर्थसामान्यनिमित्तकमेवान्वाख्यानम् = शब्दसंस्कारो युक्तमिति अर्थसामान्यनिमित्तकयोर्लिङ्गसंख्यासामान्ययोः प्राप्तिरिति' शुक्लं पटाः' इति प्रयोगे प्रसक्ते तद्वारणार्थम् 'शुक्लाः पटाः' इति प्रयोगसिद्ध्यर्थम् = "विशेषणानाम्" इति सूत्रमावश्यकमिति॥ १३७-१३८॥

तयोश्चार्थसामान्याश्रययोर्लिङ्गसंख्ययोः 'शुक्लम्' इत्यत्र कृतयोः 'पटाः' इति लिङ्गसंख्याविशेषसन्निधानेऽपि जातसंस्कारस्य त्यागाभावाद् व्यधिकरणत्वात् = विरुद्धार्थकत्वात् परस्परमसम्बन्धे वचनानुसारिणम् = सूत्रानुसारिणं प्रति प्राप्ते आह—भाविन इति।

अस्यार्थः—वाक्यान्वाख्यानपक्षेऽपि वाक्ये पदानां प्रयोगयौगपद्याभावात् पूर्वस्य पदस्य संस्कारकाले पदान्तरस्यानपेक्षणाद् भाविनः = भाविप्रतीतिकस्य, अत एव बहिरङ्गस्याश्रयस्य द्रव्यस्य ये लिङ्गसंख्ये ते वचनात् = "विशेषणानाम्" इति सूत्रारम्भसामर्थ्यात्, अनेनैव सूत्रेण गुणानां विशेषणानां प्रतिपादिते इति।

वाक्ये पदानां प्रयोगयौगपद्याभावाद् भाविग्रहणमसमानकालताप्रतिपादनपरम्, पूर्वप्रतिपादनेऽप्याश्रयस्य पदान्तरसंस्कारेऽनपेक्षणात्। अत एव बहिरङ्गत्वमनपेक्षणादाश्रयस्याश्रितसंस्कारे। एवमपि वचनसामर्थ्याद् बहिरङ्गोऽप्यर्थोऽपेक्ष्यत इति विशिष्टलिङ्गवचनसिद्धिः "विशेषणानां" (पा०१-२-५२) इति सूत्रारम्भात्॥ १३९॥

यदा तर्हि प्रथमत एव तद्धितवाच्यत्वं विशेष्यस्याभिधित्सितम्, तदा किं वचनेनेत्यत आह—

**विशेषवृत्तेरपि च रूपाभेदादलक्षितः।**
**यस्माद् विशेषस्तेनात्र भेदकार्यं न कल्पते॥१४०॥**

विवक्षितेऽपि विशेषे वृत्तिपदस्य साधारण्याद् यदनवधारणं तस्य तत इत्यशब्दार्थोऽन्वाख्याननिमित्तं न भवति विशेष इत्युक्तमेवैतत्॥ १४०॥

---

अयं भावः—वाक्ये पदानां प्रयोगयौगपद्याभावात् कारिकायां भाविग्रहणमसमानकालताप्रतिपादनार्थम्। आश्रयस्य=द्रव्यस्य गुणापेक्षया पूर्वं प्रतिपादनेऽपि पदान्तरसंस्कारे=गुणपदसंस्कारेऽनपेक्षणात्। अत एवाश्रितस्य गुणस्य तद्वाचकशब्दस्य संस्कारे आश्रयस्यानपेक्षणाद् बहिरङ्गत्वमाश्रयस्योक्तम्। एवमपि बहिरङ्गोऽप्यर्थो वचनसामर्थ्यात्="विशेषणानाम्" इति सूत्रारम्भसामर्थ्याद् गुणवाचकपदसंस्कारेऽपेक्ष्यत इति विशिष्टलिङ्गवचनसिद्धिः, "विशेषणानाम्" इति सूत्रारम्भादिति॥ १३९॥

यदा तर्हि प्रथमत एव=पूर्वमेव गुणवाचकपदसंस्कारकाल एव लुप्तमत्वर्थीयतद्धितवाच्यत्वं गुणविशेष्यस्य द्रव्यस्याभिधित्सितम् तदा किं वचनेन="विशेषणानाम्" इति सूत्रेण गुणपदसंस्कारकाल एव आश्रयलिङ्गवचनयोर्गुणवाचकपदे सिद्धेरित्यत आह—विशेषवृत्तेरपि चेति।

अस्यार्थः—यस्मात् कारणाद् विशेषवृत्तेरपि च=आश्रयरूपे विशेषे वर्तमानस्यापि च वृत्तिपदस्य शुक्लादेः, रूपाभेदात्=गुणवाचकेन शुक्लपदेन सह स्वरूपाभेदात्, तयोः पदयोः परस्परं विशेषोऽलक्षितः, तेनात्र 'शुक्लाः पटाः' इत्यादौ भेदकार्यम्=लिङ्गसंख्याविशेषकार्यं न कल्पते=न प्रसिध्यति, अतस्तत्प्रसिद्ध्यर्थं विशेषणानामिति सूत्रमारम्भणीयमिति प्रागेवोक्तमिति।

अयं भावः—आश्रयवाचके शुक्लपदे लिङ्गसंख्याविशेषे विवक्षितेऽपि वृत्तिपदस्य शुक्लादेर्गुणवाचकशुक्लपदसाधारण्यात् यद्=यस्मात् कारणात् ततः=गुणवाचकशुक्लपदात्, तस्य=आश्रयवाचकस्य शुक्लपदस्य भेदानवधारणमस्तीति हेतोरनवधारणेनाशब्दार्थो विशेषः=लिङ्गसंख्याविशेषः, अन्वाख्याननिमित्तम्=पदसंस्कारनिमित्तं न भवतीत्युक्तमेवैतत् प्राक्।

नवीनशङ्कासमाधानाय तु अनूदितमत्रेति॥ १४०॥

ननु च सामान्यस्य विशेषेषु प्रतिष्ठानात् तन्निबन्धनं कार्यं सामान्योपक्रमेऽप्यभिधानेऽनिवार्यं, निर्विशेषस्य सामान्यस्याभावादित्याशङ्क्याह—

**विशेष एव सामान्यं विशेषाद् भिद्यते यतः ।**
**अभेदो हि विशेषाणामाश्रितो विनिवर्तकः ॥१४१॥**

इह व्यावृत्तिर्विशेषलक्षणम् । परस्परं व्यावर्तमाना हि विशेषाः कथ्यन्ते । तथा च सामान्यमप्यभेदेनाश्रितं विशेषाणां निवर्तकत्वादविशेषो भवति । सामान्यविवक्षायां हि नियता विशेषा व्यावर्तिता भवन्ति ।

तत्र यथा नियतो विशेषः समाश्रितो विशेषान्तरं निवर्तयति, तथा सामान्यमपि विशेषानिति सोऽपि विशेषः । तदुक्तम् "सामान्यमपि यथा विशेषस्तद्वत" ( म० भा० १।२।५२ ) इति ।

---

ननु च "निर्विशेषं न सामान्यम्" इति न्यायेन सामान्यस्य विशेषेषु प्रतिष्ठानात् तन्निबन्धनम् = विशेषनिमित्तकं कार्यं सामान्योपक्रमेऽप्यभिधानेऽनिवार्यम्, निर्विशेषस्य सामान्यस्याभावादित्याशङ्क्याह—विशेष एव सामान्यमिति ।

अस्यार्थः—सामान्यमपि विशेष एव, यतः सामान्यं विशेषाद् भिद्यते । सर्वं हि कुतश्चिद् भिद्यमानं विशेष एव भवति । हि = यतः, अभेदः = सामान्यम्, पदान्तरानपेक्षेऽनुशासने आश्रितो विशेषाणां निवर्तकः । तेन तत्र सामान्यप्रयुक्तमेव कार्यं भवति, न विशेषप्रयुक्तम् ।

अत एव "सामान्ये नपुंसकम्" (वा० १०४) इत्युच्यते । तेन 'स्त्रियां पुंसि च इदं वस्तु' इति प्रयोगो भवति ।

अत एव 'एकवचनमुत्सर्गतः करिष्यते' इत्युच्यते । अत एव सामान्ये एकवचनं प्रयुज्यते—'नाप्यरण्यम्' शरण्यमिति । विशेषविवक्षायां तु बहुवचनं प्रयुज्यते, 'दण्डकान् प्रविवेश ह' इति । 'श्यामायमानानि वनानि पश्यन्' इति ।

अयं भावः—इह व्यावृत्तिर्विशेषलक्षणम् । तेन व्यावृत्तो व्यावर्तकश्च विशेषो भवति । परस्परं व्यावर्तमाना हि सजातीया विजातीयाश्च विशेषाः कथ्यन्ते । तथा च घटत्वादिकं सामान्यमपि अभेदेन स्वाश्रयेषु विशेषेष्वाश्रितम् = अनुगतम्, विशेषाणां निवर्तकत्वाद् विशेषो भवति । सामान्यविवक्षायां हि नियता विशेषा व्यावर्तिता भवन्ति ।

तद् यथा—'घटोऽनित्यः, घटो द्रव्यम्' इति घटसामान्यस्य अनित्यत्वद्रव्यत्वविवक्षा इति घटविशेषाणामनित्यत्वद्रव्यत्वेनोक्ते भवतोऽन्नेति । तत्र यथा नियतो विशेषः समाश्रितो विशेषान्तरं निवर्तयति, यथा कृष्णा गौर्बहुक्षीरात्वेन समाश्रिता श्वेतगवीं निवर्तयति, तथा सामान्यमपि विशेषान्, यथा—'घटोऽनित्यः' इति उक्ते घटसामान्यस्यानित्यत्वं प्रतीयते, न तु घटविशेषाणामिति अनित्यत्वाश्रयत्वेन घटविशेषाणामप्रतीतिरेवात्र तेषां निवृत्तिरिति रीत्या सोऽपि = सामान्यमपि विशेषः । तदुक्तम् – "सामान्यमपि यथा विशेषस्तद्वत्" इति ।

एवञ्च पदान्तरानपेक्षेऽनुशासनेऽभेदः सामान्यमाश्रितं भेदानां निवर्तकमिति कथं विशेषगतलिङ्गसङ्ख्यालाभः ॥ १४१ ॥

ननु चाभेदस्य भेदनिवारणे तैरसावुत्तरकालं न संपद्येत, स्वानुरूपप्रत्ययजननं च तेषु, अतो न स्यादित्याशङ्क्याह—

**यद् यदाश्रीयते तत् तदन्यस्य विनिवर्तकम् ।**
**भेदाभेदविभागस्तु सामान्ये न निरूप्यते ॥१४२॥**

अन्यव्यवच्छेदफलत्वाच्छब्दप्रयोगस्य विशेषवत् सामान्यमपि नियतविशेषव्यवच्छेदमाश्रितं सत् करोत्येवेति वीप्सया व्यवच्छेदकत्वं विशेषलक्षणं सामान्यस्यापि योजितम् ।

---

अस्यार्थः—यथा विशेषो व्यावृत्तो व्यावर्तकश्च तद्वत् सामान्यमपि व्यावृत्तं व्यावर्तकञ्चेति विशेष इति ।

एवञ्च प्रागुक्तरीत्या पदान्तरानपेक्षे शुक्लमित्यस्यानुशासनेऽभेदः सामान्यमाश्रितं भेदानां पटादीनां निवर्तकमिति 'शुक्लं पटाः' इति प्रयोगे प्रसक्ते कथम् 'शुक्लाः पटाः' इति विशेषगतलिङ्गसंख्यालाभ इति ॥ १४१ ॥

ननु चाभेदस्य भेदनिवारणे=भेदनिवारकत्वे तैरसौ=भेदैरभेदः विशेषैः सामान्यम्, उत्तरकालं न सम्पद्येत=न संसृज्येत । तथा च 'निर्विशेषं न सामान्यम्' इति न्यायविरोधः ।

किञ्च, अतः=अभेदस्य भेदनिवारकत्वात् तेषु=भेदेषु स्वानुरूपप्रत्ययजननं च न स्यात्, 'शुक्लाः पटाः' इत्याशङ्क्याह—यद् यदाश्रीयते इति ।

अस्यार्थः—यद् यद् वस्तुसामान्यं विशेषो वा यत् किञ्चिद् विधातुमुद्देश्यतया समाश्रीयते, तत्तदन्यस्य=स्वातिरिक्तस्य विनिवर्तकं व्यवच्छेदकं भवतीति व्यवच्छेदकत्वं विशेषलक्षणं सामान्यस्याप्यस्ति । एवमपि च यथा विशेषो भेद इत्युच्यते, तथा सामान्ये भेदाभेदविभागस्तु न निरूप्यते ।

तथाहि—सामान्यं भेद इति नोच्यते, स्वाश्रयेषु सामान्यान्तराणां निरासपूर्वकमनुवृत्तेः । नापि सामान्यमभेद इति शक्यते वक्तुम्, विशेषाणां सामान्तराणाञ्च व्यवच्छेदकत्वादिति ।

अयं भावः—शब्दप्रयोगो हि अन्यव्यवच्छेदफलकः । तथा च यथा विशेषशब्दप्रयोगः सामान्यव्यवच्छेदफलकः, तथा सामान्यशब्दप्रयोगो विशेषव्यवच्छेदफलक इति शब्दप्रयोगस्यान्यव्यवच्छेदफलकत्वाद् विशेषवत् सामान्यमपि यत् किञ्चिद् विधातुमुद्देश्यतया समाश्रितं सद् नियतविशेषव्यवच्छेदं करोत्येवेति व्यवच्छेदकत्वं विशेषलक्षणं यद् यदिति तत्तदिति च वीप्सया सामान्यस्यापि योजितम् ।

एवमपि च सामान्यं भेद इति नोच्यते, सामान्यान्तराणामपाकरणेन स्वाश्रयेष्वनुवृत्तेः।

नाप्यभेद इति शक्यते निरूपयितुम्, नियतविशेषाणां सामान्यान्तराणां च व्यावर्तकत्वात्।

इत्थं च यथा गौरिति मुख्येऽर्थेऽन्वाख्यातं सामानाधिकरण्यान्यथानुपपत्त्या वाहीकं गोत्वसमारोपेणाभिधत्ते, तथा शुक्लादिशब्दाः सामान्ये मुख्येऽर्थे संस्कृता विशेषैः पदान्तरोपादानैः संयुज्येरन्निति तयोर्भिन्ना श्रुतिर्भवेदिति बहिरङ्गाश्रयगतलिङ्गसंख्यासिद्ध्यर्थं सूत्रमित्येव स्थितम्॥ १४२॥

ननु च पदवाच्यानामर्थानां वस्तूनामिव न किञ्चिदन्वयि रूपं दृश्यते, तत् किमेषां सामान्यमित्याशङ्क्याह—

अपोद्धारश्च सामान्यमिति तस्योपकारिणः।
निमित्तावस्थमेवातस्तत् स्वधर्मेण गृह्यते॥१४३॥

---

एवमपि च सामान्यं भेद इति नोच्यते, सामान्यान्तराणामपाकरणेन = स्वातिरिक्तानां सामान्यानां निरासेन स्वाश्रयेष्वनुवृत्तेः।

नापि सामान्यमभेद इति शक्यते निरूपयितुम्, नियतविशेषाणाम् = परस्परं व्यावृत्तानां विशेषाणां सामान्यान्तराणाञ्च व्यावर्तकत्वात्। इत्थं च यथा गौरिति पदं मुख्येऽर्थे गोत्वजात्यवच्छिन्नेऽन्वाख्यातम् = अनुशिष्टम् 'गां वाहीकं पाठय' इत्यादौ वाहीकेन सह सामानाधिकरण्यान्यथाऽनुपपत्त्या तत्र गोत्वसमारोपेण वाहीकमभिधत्ते, तथा शुक्लादिशब्दाः सामान्यरूपे मुख्येऽर्थे शुक्लमिति संस्कृताः पदान्तरोपादानैः = पटा इति पदान्तरेणोपादीयमानैर्विशेषैः संसृज्येरन्निति तयोः = शुक्लं पटाः इति पदयोर्भिन्ना वचनरूपा श्रुतिर्भवेदिति बहिरङ्गाश्रयगतलिङ्गसंख्यासिद्धयर्थम् = असमानकालप्रतीतिकत्वेन प्रागुक्तरीत्या बहिरङ्गो य आश्रयः, तद्गतलिङ्गसंख्यासिद्धयर्थं शुक्लाः पटा इति समानव्यक्तिवचनकप्रयोगसिद्धयर्थं "विशेषणानाम्" (पा० १।२।५२) इति सूत्रमित्येव स्थितमिति॥ १४२॥

ननु पदवाच्यानामर्थानां दृश्यमानानामर्थानामिव किञ्चिदन्वयिरूपं न दृश्यते, तत् किमेषां सामान्यमित्याशङ्कयाह—अपोद्धारश्च सामान्यमिति।

अस्यार्थः—अपोद्ध्रियते संसर्गरूपाद् वाक्यार्थात् पृथक् क्रियत इति अपोद्धारः = अपोद्ध्रियमाणोऽर्थः सामान्यमिति उपकारिणः = वाक्यार्थभूतविशेषावगमोपायभूतस्य, तस्य = सामान्यस्य, निमित्तावस्थमेव, वाक्यार्थावगमं प्रति निमित्तावस्थामापद्यमानमेव, तत् = स्वरूपम्, अतः स्ववाचकपदसंस्कारे पदान्तरानपेक्षणात् स्वधर्मेण = स्वेनात्मीयेन धर्मेण स्वभावेन, अभेदरूपेण गृह्यते = निश्चीयते, न तु भेदरूपेणेति।

यद्यपि स्थितलक्षणार्थविशेषविषयं वाक्यमेव वाचकम्, तथापि तस्मात् संसर्गरूपात् पदानामपोद्ध्रियमाणानां किञ्चिदर्थलेशलक्षणं सामान्यमप्यपोद्धारानुगुणं वाक्यार्थानुगुण्येनापोद्धारात् तदुपकारि व्यवतिष्ठते। अपोद्ध्रिते संसर्गात् पृथक्क्रियते इत्यपोद्धारः सामान्यमिति।

एवमपोद्ध्रियमाणत्वेन तस्य सामान्यस्योपकारिणो वाक्यार्थभूतविशेषावगमोपायभूतस्येत्यर्थः। केवलाद्ध्यपोद्धृतात् पदादर्थसामान्यविषया प्रतिभा जायत इति तद्विषयः सामान्यं न विशेषः।

तथाहि निमित्ते साकाङ्क्षरूपेऽवस्थितिर्यस्य, न विशेषात्मनि, तत् स्वेनात्मीयेन स्वभावेन निश्चीयते न भेदरूपेण, तस्यानियतस्योपप्लवात्। अतश्च न विशेषलिङ्गसंख्याभ्यां संबध्यते पदार्थः।

ननु च नियतवाक्यगतत्वात् पदानामपोद्धारेऽपि पदाभिधेया विशेषा एवेति किमन्यत् सामान्यं स्यादित्याशङ्क्याह—

**अनिर्धारितधर्मत्वाद् भेदा एव विकल्पिताः।**
**निमित्तैर्व्यपदिश्यन्ते सामान्याख्याविशेषिताः॥१४४॥**

---

अयं भावः—यद्यपि स्थितलक्षणार्थविशेषविषयम् = स्थितलक्षणः स्थिरस्वरूपो योऽर्थविशेषः संसर्गरूपस्तद्विषयकं वाक्यमेव वाचकम्, तथापि तस्मात् संसर्गरूपात् वाक्यार्थादपोद्धृतं वाक्यादपोद्ध्रियमाणानां पदानां किञ्चिदर्थलेशरूपं सामान्यमपि वाक्यार्थरूपाद् विशेषादपोद्ध्रियमाणस्य पदार्थविशेषस्यानुगुणं वाक्यार्थानुगुण्येन पदार्थापोद्धारात् तदुपकारि = वाक्यार्थोपकारि व्यवतिष्ठते। अपोद्ध्रियते संसर्गरूपाद् वाक्यार्थात् पृथक् क्रियते इत्यपोद्धारः सामान्यमिति।

एवं तस्य अपोद्ध्रियमाणत्वेन सामान्यस्योपकारिणः = वाक्यार्थोपकारिणः वाक्यार्थरूपविशेषावगमोपायभूतस्य वाक्यार्थनिमित्तावस्थमेव = साकाङ्क्षावस्थमेव स्वरूपं स्वधर्मेण अभेदेन निश्चीयते। तथाहि—वाक्यादपोद्धृतात् केवलाद् हि पदादर्थसामान्यविषया प्रतिभा जायत इति तद्विषयः = तादृशापोद्धृतपदवाच्यः सामान्यं न विशेषः।

तथाहि—निमित्ते = पदान्तरार्थं प्रति साकाङ्क्षरूपेऽर्थेऽवस्थितिर्यस्य तन्निमित्तावस्थमेव, न विशेषात्मनि अवस्थितम्। तत् स्वेनात्मीयेन स्वभावेनाभेदरूपेण निश्चीयते, न भेदरूपेण, तस्य अनियतस्योपप्लवात् = अपोद्धारेण प्राप्तत्वात्, अतश्च न विशेषलिङ्गसंख्याभ्यां सम्बध्यते पदार्थ इति तदर्थं 'विशेषणानाम्' (पा०१।२।५२) इति सूत्रमावश्यकम्। तदेवमपोद्धृतपदवाच्येषु अर्थेष्ववगतं सामान्यं समर्थितमिति॥ १४३॥

ननु च पदानां नियतवाक्यगतत्वेन नियतत्वादपोद्धारेऽपि तेषां वाक्यघटकत्वदशायामिव अपोद्धृतपदाभिधेया विशेषा एवेति किमन्यत् सामान्यं स्यादित्याशङ्क्याह—अनिर्धारितधर्मत्वादिति।

पदानां विशेषाभिधानासामर्थ्यादनवगतनियतविशेषरूपा भेदा एव तेभ्यः प्रतीयमानाः सामान्यमित्यनया संज्ञया कल्पनया व्यवस्थापिताः, न विशेषसमाख्यया। यतश्च जातिगुणक्रियालक्षणैर्निमित्तैरुपाधिभिरवच्छिन्ना 'गौः शुक्लो गच्छति' इत्यादिरूपेण ते व्यपदिश्यन्ते, ततो भेदा एवैवंरूपा इति निर्श्रीयन्ते।

यद्यपि हि पदैर्व्यावृत्तरूपोऽर्थो नाभिधीयते, तथाप्युपाधिरूपोपधानेनार्थाभिधानाद् भेदा एवाभिहिताः, निरुपाधेः सर्वतोऽव्यावृत्तस्याव्यवहार्यत्वात्।

दूरादपि रूपमात्रेण व्यक्तौ नैवावसीयते। तस्मात् सर्वस्या वृत्तेः प्रतीतेर्भेदनिष्ठत्वात् पदार्थानां विशेषस्य पदान्तरगम्यस्यानासादनमात्रात् प्रतीतिः सामान्यस्येति व्यवस्थाप्यते।

---

अस्यार्थः—वाक्यादपोद्धृतेभ्यः पदेभ्यः प्रतीयमाना भेदा एव = विशेषा एव, अनिर्धारितधर्मत्वाद् = अनवगतावान्तरधर्मत्वाद् निमित्तैर्जातिगुणक्रियालक्षणैर्विकल्पिताः कल्पनया सामान्यमिति संज्ञया व्यवस्थापिताः सामान्याख्याविशेषिताः = सामान्यमिति याऽऽख्या संज्ञा तया विशेषिता व्यपदिश्यन्ते। जात्यादीनि तादृशव्यवस्थापने निमित्तानि, तादृशव्यवस्थापनञ्च तादृशव्यपदेशे निमित्तमिति ध्येयमिति।

अयं भावः वाक्यादपोद्धृतानां पदानां विशेषार्थाभिधाने सामर्थ्यं नास्ति, प्रयोज्यप्रयोजकवृद्धव्यवहारात् पदानामर्थसामान्य एव शक्तिग्रहात्। अन्यथा घटादिपदेभ्यः सर्वघटादिबोधो न स्यात्। ततश्चानवगतविशेषरूपाः = अनवगतावान्तरधर्मविशेषा भेदा एव = पदार्थविशेषा एव तेभ्यः प्रतीयमानाः = वाक्यादपोद्धृतेभ्यः पदेभ्यः प्रतीयमानाः सामान्यमिति संज्ञया-कल्पनया व्यवस्थापिताः, न तु विशेषसमाख्यया। यतश्च जातिगुणक्रियालक्षणैर्निमित्तैरुपाधिभिः = व्यावर्तकधर्मैः अवच्छिन्नाः—'गौः शुक्लो गच्छति' इत्यादिरूपेण ते व्यपदिश्यन्ते। ततो भेदा एव = अर्थविशेषा एव एवंरूपाः = जात्याद्यवच्छिन्नरूपा इति निश्चीयन्ते गौरिति जात्यवच्छिन्नोऽर्थभेदः, शुक्ल इति गुणावच्छिन्नः, गच्छतीति क्रियावच्छिन्नः कर्तृरूपः। अत्र कर्तरि क्रियावच्छिन्नत्वञ्च क्रियोपहितत्वरूपम्, न तु क्रियाविशिष्टत्वरूपम्।

'भावप्रधानमाख्यातम्' इति वचनानुरोधेन वैयाकरणैः क्रियामुख्यविशेष्यकबोधस्वीकारेण कर्तुः क्रियायां विशेषणत्वात्, विशेष्यत्वोपाधित्वयोरेकस्मिन् यौगपद्याविरोधात्।

यद्यपि हि पदैर्व्यावृत्तरूपोऽर्थो नाभिधीयते, वृद्धव्यवहारादर्थसामान्ये एव तेषां शक्तिग्रहात्। तथापि जात्यादिरूपोपाधिरूपोपधानेनार्थाभिधानाद् भेदा एवापोद्धृतैः पदैरभिहिताः, निरुपाधेः सर्वतोऽव्यावृत्तस्याव्यवहार्यत्वात्।

दूरादपि दृश्यमानस्य पदार्थस्य रूपमात्रेण = संस्थानमात्रेण दृश्यमानेन पदार्थव्यक्तौ = पदार्थप्रत्यक्षे पदार्थभेदो नैवावसीयते। तस्माद् वृत्तेः = अभिधातो जायमानायाः सर्वस्याः प्रतीते-

तत्त्वदृष्ट्या तु तद्वाक्योपादानस्य विशेषस्यानासादनादाकाङ्क्षणाच्च विप्लुतरूपत्वादसत्यैव पदार्थानां प्रतीतिः। उपायमात्रं तु सा वाक्यार्थप्रतीताविति निर्णीतचरमेतत् ॥ १४४ ॥

तदेवं 'विशेषणानाम्' (पा० १।२।५२ इत्यारम्भः समर्थितः। 'स्वाभाविकमेतत्' इत्येवं तस्य भाष्ये प्रत्याख्यानमुक्तम्। तदुपपादयितुमाह—

**यदा तु व्यपदिश्येते लिङ्गसंख्ये स्वभावतः।**
**प्रयोगेष्वेव साधुत्वं वाक्ये प्रक्रम्यते तदा ॥१४५॥**

प्रयोगेष्वेव प्रयुज्यमानेष्वेव पदान्तरेषु वाक्यस्थानां वाक्यावधिकमन्वाख्यानं यदा प्रस्तूयते, तदोपक्रम एवाश्रयविशेषसामानाधिकरण्यान्यथानुपपत्त्या सोऽयमित्यभिसंबन्धाच्छुक्लादीनां विशेषलिङ्गसंख्यायोग इति स्वाभाविकमेतदित्युच्यते।

अत्र हि दर्शने नास्त्येतद्रूपाभेदादलक्षितो विशेषः। न चाप्यन्तरङ्गबहिरङ्गभावः कश्चित्, उपक्रम एवाश्रयविशेषस्यापेक्षितत्वात्। तथाचान्तरङ्गेऽर्थसामान्ये संस्कारो पर्यवस्यति।

---

भेदनिष्ठत्वात् = पदार्थविशेषनिष्ठत्वात् पदार्थानां विशेषस्य पदान्तरसमभिव्याहारागम्यस्य पदापोद्धारदशायां पदान्तरानासादनमात्रादप्रतीतौ सामान्यस्य प्रतीतिर्व्यवस्थाप्यते।

तत्त्वदृष्ट्या तु तद्वाक्योपादानस्य = तद्वाक्येन उपादीयमानस्य—प्रतीयमानस्य विशेषस्य वाक्यार्थरूपस्य वाक्यादपोद्धृतेन पदेन अनासादनात् तदाकाङ्क्षणाच्च अपोद्धृतपदार्थस्य विप्लुतरूपत्वात् = विनष्टरूपत्वात् तदा पदार्थानां प्रतीतिरसत्यैव सामान्यरूपा। उपायमात्रं तु सा वाक्यार्थप्रतीताविति निर्णीतपूर्वमेतदिति ॥ १४४ ॥

तदेवम् 'विशेषणानाम् (पा०१।५।२।५२) इति सूत्रारम्भः समर्थितः। स्वाभाविकमेतद् = 'विशेषणानामाश्रयवद् लिङ्गवचनकत्वम्' इत्येवं तस्य सूत्रस्य भाष्ये प्रत्याख्यानमुक्तम्, तदुपादयितुमाह—यदा तु व्यपदिश्यत इति।

अस्यार्थः—यदा तु वाक्यावधिकेऽन्वाख्याने स्वभावतः, न तु सूत्रतो विशेषणे आश्रयस्येव लिङ्गसंख्ये व्यपदिश्येते। तदा प्रयोगेष्वेव वाक्ये प्रयुज्यमानेष्वेव पदान्तरेषु सत्सु वाक्ये स्थितानां विशेषणपदानामाश्रयवल्लिङ्गवचने आश्रित्य साधुत्वं प्रक्रम्यते = प्रक्रमे—विशेषणपदानां संस्कारोपक्रमे एव बोध्यत इति।

अयं भावः—प्रयोगेष्वेव = प्रयुज्यमानेष्वेव पदान्तरेषु सत्सु वाक्यस्थानाम् = वाक्यघटकानां विशेषणपदानामनपोद्धृतानामेव वाक्यावधिकमन्वाख्यानं यदा प्रस्तूयते, तदा उपक्रम एवाश्रयविशेषेण सह सामानाधिकरण्यान्यथाऽनुपपत्त्या सोऽयमित्यभिसम्बन्धात् शुक्लादीनामाश्रयविशेषगतलिङ्गसंख्यायोग इति स्वाभाविकमेतदित्युच्यते।

अत्र हि दर्शने = मते शुक्लादीनां विशेषणपदानां गुणगुणिनोः स्वरूपाभेदादलक्षितो विशेष इत्येतन्नास्ति। न चाप्यन्तरङ्गबहिरङ्गभावः कश्चित् प्रागुक्तः, उपक्रम एवाश्रयविशेषस्या-

तदेवं पूर्वं विच्छेदोपक्रमेऽन्वाख्याने गुणगुणिनोर्भेदमाश्रित्य तद्धितप्रयोगे मत्याश्रयसामान्ये वृत्तेरन्तरङ्गो लिङ्गसंख्यासर्वनामयोग उक्तः।

इदानीं तु सोऽयमित्यभिसंबन्धाश्रयेणाभेदमाश्रित्य प्रथमत एव नियतवाक्योपात्तविशेषवृत्तिता कथिता। तथा चात्र भेदसंबन्धाभावान्मतुपो लुगकारो वा न विधीयत इति नास्त्यभिन्नरूपत्वं वृत्तेः, भेदसंबन्धविवक्षायामेव तद्विधानात् ॥ १४५ ॥

नन्वेवमभेदविवक्षैव न्याय्या, अन्यथा यथा भेदसंबन्धे गुणवचनेभ्यो मतुपो लुग् विधीयते, तथा जात्यापि योगे विवक्षिते जातिशब्देभ्योऽपि कस्मात् स न विधीयत इत्याशङ्क्य जातिगुणयोर्द्रव्यसमवेतत्वाविशेषेऽप्यवान्तरविशेषप्रतिपादनायाह—

**तत्र प्रयोगोऽनियतो गुणानामाश्रयैः सह।**
**सामान्यं यत् तदत्यन्तं तत्रैव समवस्थितम् ॥१४६॥**

---

पेक्षितत्वात्। तथा चान्तरङ्गेऽर्थसामान्ये पूर्वोक्तरीत्या संस्कारो न पर्यवस्यतीति न प्रागुक्तरीत्या 'शुक्लं पटाः' इति प्रयोगप्रसङ्गरूपो दोषः।

तदेवं पूर्वम् = पूर्वग्रन्थे विच्छेदोपक्रमे = वाक्यात् पदापोद्धारोपक्रमे पदावधिकेऽन्वाख्याने गुणगुणिनोर्भेदमाश्रित्य तद्धितप्रयोगतल्लुकि च सति आश्रयसामान्ये वृत्तेः = वर्तमानात् पदाद् अन्तरङ्गो नपुंसकलिङ्गाभेदैकत्वसंख्यारूपलिङ्गसंख्यासर्वनामयोग उक्तः।

इदानीं तु सोऽयमित्यभिसम्बन्धाश्रयेणाभेदमाश्रित्य प्रथमत एव = विशेषणपदसंस्कारकाल एव विशेषणपदस्य नियतवाक्योपात्ताश्रयविशेषवृत्तिता कथिता। तथा चात्र पक्षे = स्वाभाविकमेतदिति पक्षे गुणगुणिनोर्भेदसम्बन्धाभावान्मतुपो लुक्, अकारो वा न विधीयत इति वृत्तिरूपस्य शुक्लादिपदस्य गुणवाचिना शुक्लादिपदेन सह अभिन्नरूपत्वम् = अभिन्नानुपूर्वीकत्वं नास्ति, मतुब्लुकोऽकारस्य वा भेदसम्बन्धविवक्षायामेव विधानादिति ॥ १४५ ॥

नन्वेवं तद्धितवृत्तौ 'शुक्लाः पटाः' इत्यादावभेदविवक्षैव न्याय्या। अन्यथा यथा भेदसम्बन्धे गुणवचनेभ्यो मतुपो लुग् विधीयते, तथा जात्याऽपि योगे विवक्षिते जातिशब्देभ्योऽपि 'शाबलेयो गौः' इत्यादौ कस्मात् स = लुग् न विधीयत इत्याशङ्क्य जातिगुणयोर्द्रव्यसमवेतत्वाविशेषेऽप्यवान्तरविशेषप्रतिपादनायाह—तत्र प्रयोगोऽनियत इति।

अस्यार्थः—तत्र = जातिगुणयोर्मध्ये, गुणानामाश्रयैः सह भेदेन अभेदेन च अनियतः प्रयोगः—'पटस्य शुक्लः, शुक्लः पटः' इति।

यत्तु सामान्यं तदत्यन्तमभेदेनैवोत्पत्तिप्रभृति आविनाशात् तत्रैव = आश्रय एव समवस्थितम्, गुणास्तु निमित्तवशाद् कदाचित् स्वाश्रये समवयन्ति, कदाचित्तु वियुज्यन्त इति गुणानां स्वाश्रयेण सह भेदेनाभेदेन च प्रयोग इति गुणशब्दा एव भेदसम्बन्धविवक्षायां मतुपो लोपं प्रयोजयन्ति, न जातिशब्दा इति।

शुक्लादयो गुणाः समुपजाते द्रव्ये निमित्तवशादनियमेन समवयन्ति, यावदाश्रयं च नावतिष्ठन्त इत्यनियतः प्रयोगो भेदेनाभेदेन च पटस्य शुक्लः, शुक्लः पट इति।

जातिस्तूत्पत्तिप्रभृत्याविनाशादव्यभिचरितसंबन्धा द्रव्येणेति तदभेदेन सोऽयमिति संबन्धाद् व्यवह्रियते सदैव, न तु कदाचिदपि भेदेन पटस्य शुक्ल इत्यादिवदिति गुणशब्दा एव मतुब्लोपं भेदसंबन्धविवक्षायां प्रयोजयन्तीत्यर्थः।

तथा च विच्छेदोपक्रमे सूत्रारम्भः समर्थितः ॥ १४६ ॥

एतदेव प्रकटयति—

**न गोत्वं शाबलेयस्य गौरिति व्यपदिश्यते।**
**शुक्लत्वं बाहुलेयस्य शुक्ल इत्यपदिश्यते ॥१४७॥**

भावप्रत्ययमन्तरेण व्यक्तेर्निष्कृष्टं सामान्यं नाभिधीयते जातावपि पदार्थे इति सर्वथा व्यक्तिरूपतां प्राप्तमभेदेन तदभिधीयते। सोऽयमिति संबन्धाद्धि व्यक्तिरूपतां प्राप्तं सामान्यं तथैव निर्देशार्हम्।

---

अयं भावः—शुक्लादयो गुणाः समुपजाते स्वाश्रयद्रव्ये स्वनिमित्तवशादनियमेन स्वाश्रये समवयन्ति—'कदाचिद् हरितम्, कदाचित् पीतम्, कदाचिद् रक्तं फलम्' इति। यावदाश्रयं च नावतिष्ठन्त इति तेषामाश्रयेण सह भेदेनाभेदेन चानियतो योगः—'पटस्य शुक्लः, शुक्लः पटः' इति।

जातिस्तूत्पत्तिप्रभृति = द्रव्योत्पत्तिमारभ्य आ च स्वाश्रयद्रव्यविनाशाद् द्रव्येण सहाव्यभिचरितसंबन्धा इति, तदभेदेन = द्रव्याभेदेन 'सोऽयम्' इत्यभिसंबन्धाद् 'घटः, पटः' इत्यादिरूपेणैव व्यवह्रियते सदैव, न तु 'शाबलेयस्य गौः' इति कदाचिदपि भेदेन 'पटस्य शुक्लः' इत्यादिवदिति गुणशब्दा एव मतुब्लोपं भेदसंबन्धविवक्षायां प्रयोजयन्ति, न जातिशब्दाः।

तथा च वाक्याद् विच्छेदोपक्रमे पदापोद्धारोपक्रमे "विशेषणानाम्" (पा०१।२।५२) इति सूत्रारम्भः समर्थित इति ॥ १४६ ॥

एतदेव प्रकटयति = गुणशब्दानां 'पटस्य शुक्लः' इति भेदविवक्षा दृश्यते, जातिशब्दानां तु 'शाबलेयस्य गौः' इति सा न दृश्यते, किन्तु 'शाबलेयो गौः' इत्यभेदविवक्षैव दृश्यत इत्येतदेव प्रकटयति—न गोत्वमिति।

अस्यार्थः—शाबलेयस्य = शबलायाश्चित्राया गोरपत्यस्य गोत्वं शाबलेयस्य गौरिति भेदेन न व्यपदिश्यते।

बाहुलेयस्य बहुला = बहुदुग्धा गौस्तस्या अपत्यं बाहुलेयः। बहुला गौश्च बहुलाव्रतकथायां पुराणे स्मर्यते। बहुलाव्रतञ्च प्रचलति प्राच्येषु। बाहुलेयस्य = बहुलागवीवत्सस्य शुक्लत्वं गुणस्तु बाहुलेयस्य शुक्ल इति भेदेन अपदिश्यते = व्यवह्रियत इति जातिगुणयोर्विशेष इति गुणशब्देभ्य एव मतुप्, न जातिशब्देभ्य इति।

अयं भावः—जातावपि पदार्थे व्यक्तेर्निष्कृष्टं सामान्यं भावप्रत्ययमन्तरेण नाभिधीयत इति 'शाबलेयो गौः' इति। 'सोऽयम्' इति संबन्धाद् हि व्यक्तिरूपतां प्राप्तं सामान्यं तथैव सर्वथाव्यक्तिरूपतां प्राप्तं तद् सामान्यं व्यक्त्यभेदेनाभिधीयते = व्यक्त्यभेदेनैव निर्देशार्हम्। 'शाबलेयो गौः' इति।

यदा तु व्यक्तेर्निष्कृष्टरूपं विवक्षितम्, तदा भावप्रत्ययान्तवाच्यं शावलेयस्य गोत्वमिति। जातावपि हि पदार्थे द्रव्याभेदं गताया जातेरभिधानाद् गोर्गोत्वमिति प्रतीतिर्भिन्ना। गुणास्तु भेदेनापि कथ्यन्त इत्युक्तमेव। ततश्च तेभ्यो मतुपो लुगुच्यते ॥ १४७ ॥

अन्यथा,

**व्यतिरेके च सत्येवं मतुपः श्रवणं भवेत् ।**
**लुगन्वाख्यायते तस्माद् रसादिभ्यश्च नास्ति सः ॥१४८॥**

'पटस्य शुक्लः, इति भेदे सति संबन्धिवृत्तौ मत्वर्थीयप्रत्ययेनासावुच्येत इति तत्रापि शुक्ल इत्येव यथा स्यादिति मतुपो लुगुच्यते। 'अव्यतिरेकात् सिद्धमिति चेद् दृष्टो व्यतिरेकः' इति हि भेदसंबन्ध एव लुक् समर्थितः। जातेस्तु नास्ति भेदसंबन्ध इति तद्वचनाद् मतुब् नोत्पद्यते। अयमेव च विषयविभागो लुग्द्वारेणा-

---

यदा तु व्यक्तेर्निष्कृष्टरूपं सामान्यं विवक्षितम्, तदा भावप्रत्ययान्तवाच्यं तत्=सामान्यं, शावलेयस्य गोत्वमिति। जातावपि हि पदार्थे द्रव्याभेदं गताया जातेर्गवादिपदेनाभिधानाद् गोर्गोत्वमिति प्रतीतिर्भिन्ना गौरिति द्रव्याभेदेन प्रतीयमानजातिप्रतीतितः। गुणास्तु भेदेनापि कथ्यन्ते 'पटस्य शुक्लः' इत्युक्तमेव। ततश्च तेभ्यः=गुणशब्देभ्यो मतुपो लुगुच्यते, न जातिशब्देभ्य इति ॥ १४७ ॥

अन्यथा=गुणगुणिनोर्भेदविवक्षायां जातस्य मतुपो लुगनुक्तौ मतुपः श्रवणं भवेदित्याह—व्यतिरेके च सत्येवमिति।

अस्यार्थः—व्यतिरेके च=गुणगुणिनोर्भेदे च विवक्षिते सति, एवम्=शुक्लादिपदाद् जातस्य मतुपो लुगनुक्तौ मतुपः श्रवणं भवेत् 'शुक्लवान् पटः' इति।

तस्मात्=मतुपः श्रवणभयात् तस्य लुगन्वाख्यायते। रसादिभ्यश्चतु, सलुङ् नास्ति, रसादिपदानां 'सोऽयम्' इति संबन्धेन गुणिनि वृत्तेरभावादिति।

अयं भावः—'पटस्य शुक्लः' इति गुणगुणिनोर्भेदे विवक्षिते सति शुक्लपदस्य संबन्धिनि वृत्तौ मत्वर्थीयप्रत्ययेनासौ=शुक्लपदार्थः संबन्धी उच्येत 'शुक्लवान्' इति, अतस्तत्रापि शुक्ल इत्येव यथा स्यादिति मतुपो लुगुच्यते। "अव्यतिरेकात् सिद्धमिति चेद् दृष्टो व्यतिरेकः" इति हि भेदसंबन्ध एव लुक् समर्थितो भाष्ये।

अस्यार्थः—अव्यतिरेकात्=गुणगुणिनोरभेदात् सोऽयमित्यभिसंबन्धसिद्धात् 'पटः शुक्लः' इति रूपं सिद्धमिति चेत्, दृष्टस्तयोर्व्यतिरेकः 'पटस्य शुक्लः' इति, मतुपः श्रवणप्रसङ्गे लुग् वक्तव्य इति। जातेस्तु नास्ति भेदसंबन्धः 'शावलेयस्य गौः' इति। अतस्तद्वचनात्=जातिवचनाद् मतुब् नोत्पद्यते 'शावलेयो गोमान्' इति। अयमेव च शुक्लशब्दस्य विषयविभागः=अर्थविभागो लुग्-

ख्यायते अभिधानशक्तिनियमनिमित्तः। ततश्च यथा श्रूयमाणे प्रत्यये प्रकृत्यर्थावच्छिन्नः प्रत्ययार्थोऽभिधीयते, तथा लुप्तेऽपि शुक्लादावित्युक्तं भवति। रसादिभ्यश्च स लुङ् नास्ति ॥ १४८ ॥

न हि ते मत्वर्थीयरहिताः स्वाश्रयमभिधातुं शक्नुवन्तीत्याह—

**यत्सोऽयमिति संबन्धाद्रूपाभेदेन वर्तते।**
**शुक्लादिवत् ततो लोपस्तद्रसादौ न विद्यते ॥१४९॥**

वचनग्रहणसामर्थ्याद् ये गुणमुक्त्वा तद्वति द्रव्ये सोऽयमिति संबन्धेन यादृशा एव गुणमात्रे वृत्तास्तादृशा एव वर्तन्ते, तेभ्यो मतुपो लुग् विधीयते, गुणमात्रवृत्तित्वस्य दर्शनाद् गुणिनि वृत्तिमाख्यातुम्।

तत्र निमित्तरूपारोपेणाभेदविवक्षायां शुक्लादीनां द्रव्याभिधानपक्षे भेदनिमित्तस्य मत्वर्थीयस्याप्राप्तौ किं लुका? न च 'शुक्लः पटो विद्यते यस्य' इत्यत्र बाह्ये व्यतिरेके विवक्षिते मतुपो लुगिष्यत इति, श्रौतस्यार्थस्यायोगाल्लाक्षणिकोऽर्थोऽत्राश्रीयते।

---

द्वारेणाख्यायते अभिधानशक्तिनियमनिमित्तः=शुक्लशब्दस्य गुणगुण्यभिधानेयः शक्तिनियमस्तन्निमित्तकः। ततश्च यथा 'घटवद् भूतलम्' इत्यादौ श्रूयमाणे प्रत्यये प्रकृत्यर्थावच्छिन्नः प्रत्ययार्थोऽभिधीयते, तथा लुप्तेऽपि प्रत्यये शुक्लादावित्युक्तं भवति। रसादिभ्यश्च स लुङ् नास्ति, रसादिपदानां गुणिनिवृत्तेरभावादिति ॥ १४८ ॥

न हि ते=रसादयो मत्वर्थीयरहिताः स्वाश्रयमभिधातुं शक्नुवन्तीति तेभ्यो लुग् नास्तीत्याह=यत्सोऽयमितीति।

अस्यार्थः—यत् शब्दस्वरूपं सोऽयमिति संबन्धात् तादात्म्याध्यासात्, रूपाभेदेन स्वरूपाभेदेन गुणे गुणिनि च शुक्लादिशब्दवद् वर्तते ततः=तस्मात् शब्दाद् मतुपो लोपो भवति, तत्=सोऽयमिति संबन्धाद् रूपाभेदेन गुणे गुणिनि च वर्तमानत्वम्, रसादौ=रसादिशब्दे न विद्यत इति।

अयं भावः—"गुणवचनेभ्यो मतुपो लुगिष्टः" (वा० ४५८) इति वार्त्तिके वचनग्रहणसामर्थ्याद् ये गुणमुक्त्वा यादृशा एव गुणमात्रे वृत्तास्तादृशा एव तद्वति द्रव्ये सोऽयमिति संबन्धेन-वर्तन्ते, तेभ्यो मतुपो लुग् विधीयते, गुणमात्रवृत्तित्वस्य दर्शनाद् गुणिनि वृत्तिमाख्यातुम्।

तत्र=गुणिनि शुक्लशब्दप्रवृत्तिनिमित्तशुक्लत्वरूपारोपेणाभेदविवक्षायां शुक्लादीनां द्रव्याभिधानपक्षे गुणगुणिनोर्भेदनिमित्तकस्य मत्वर्थीयस्याप्राप्तौ किं लुका? न च 'शुक्लः पटो विद्यते यस्य' इत्यत्र विग्रहे शुक्लपट इति बहुव्रीहौ बाह्ये व्यतिरेके शुक्लद्रव्याधारगते विवक्षिते मतुपो लुगिष्यत इति। श्रौतस्यार्थस्य शुक्लद्रव्यरूपस्यायोगात्=असंभवात् लाक्षणिकोऽर्थः शुक्लद्रव्याधाररूपोऽत्र=शुक्लपट इति बहुव्रीहौ आश्रीयत इति लक्षणयैवात्र निर्वाहे किं लुका?

ये सोऽयमिति संबन्धेन गुणनिमित्तद्रव्यवचना अविशिष्टरूपा दृष्टाः, तेभ्यः संप्रति गुणमात्रवृत्तिभ्यो भेदसंबन्धविवक्षायां मतुपः श्रवणं मा भूदिति लुगन्वाख्यायते।

एवञ्च रसादयो व्यावर्तिता भवन्ति, यतस्तद्रूपाभेदेन रसादिशब्दानां तद्वति वर्तनं नास्ति। सदैव हि ते मत्वर्थीयान्ता एव स्वाश्रयमाचक्षते रसवान् गन्धवानिति।

तथा च "रसादिभ्यश्च" ( पा० ५-२-९५ ) इति प्रतिपदमारभ्यते मत्वर्थीयः। इनिठनावेभ्यो न दृश्येते इति पुनर्मतुवेव विधीयते।

तथा च वार्त्तिकम् 'रसादिभ्यः पुनर्वचनमन्यनिवृत्त्यर्थम्' इति। अन्यस्य प्रकृतस्य प्रत्ययस्य निवृत्त्यर्थमित्यर्थः। रूपिण्यप्सरा इति तु शोभासंबन्धो गम्यते, न चक्षुर्ग्राह्यरूपगुणसमवायः। 'रसिको राजा' इत्यादौ तु शृङ्गारादिरससंबन्धो न रसनेन्द्रियग्राह्यगुणयोगो विवक्षित इति 'गुणात्' इति गणे विशेषणाद् गुणशब्देभ्य एव रसादिभ्य इनिठनोर्निवर्तनादन्यतस्तौ भवत एव। उक्तेन न्यायेन तु लुगप्रसङ्गादन्यशब्देन वार्त्तिके लुगुच्यत इत्यपव्याख्यानम्।। ॥ १४९ ॥

---

अत्रायं समाधिः—ये शब्दाः सोऽयमिति संबन्धेन=आध्यासिकतादात्म्यरूपेण गुणप्रवृत्तिनिमित्तका द्रव्यवचनाः=गुणमात्रवाचकादविशिष्टरूपा दृष्टाः, तेभ्यः संप्रति गुणमात्रवृत्तिभ्यो भेदसंबन्धिभ्यां मतुपः श्रवणं मा भूदिति लुगन्वाख्यायते।

एवञ्च रसादयो गुणवचनेभ्यो व्यावर्तिता भवन्ति, यतस्तद्रूपाभेदेन=गुणवचनस्वरूपाभेदेन रसादिशब्दानां तद्वति वर्तनं नास्ति। सदैव हि ते मत्वर्थीयान्ता एव स्वाश्रयमाचक्षते, रसवान् गन्धवान् इति।

तथा च—"रसादिभ्यश्च" ( पा० ५।२।९५ ) इति प्रतिपदम्=तत्तत्पदमुच्चार्य मत्वर्थीय आरभ्यते। इनिठनावेभ्यः=रसादिभ्यो न दृश्येते इति पुनर्मतुवेव विधीयते=पुनर्मतुब् विधानेन इनिठनोरभावो ज्ञाप्यते।

तथा च वार्त्तिकम्="रसादिभ्यः पुनर्वचनमन्यनिवृत्यर्थम्" इति। अन्यस्य प्रत्ययस्य प्रकृतस्य इनिठनादेर्निवृत्यर्थः। 'रूपिणी अप्सरा' इत्यत्र तु रूपशब्दः शोभावाची इत्यत्र शोभासंबन्धो गम्यते, न चक्षुर्ग्राह्यरूपगुणसमवाय इति न इनिप्रत्ययस्य निवृत्तिः। रसादिगणे च गुणवचन एव रसरूपादिर्गृह्यत इति गुणवचनेभ्य एव रसादिभ्य इनिठनोर्निवृत्तिः। 'रसिको राजा' इत्यादौ तु शृङ्गारादिरससंबन्धः, न रसनेन्द्रियग्राह्यगुणयोगो विवक्षित इति गुणादिति रसादिगणे विशेषणाद् गुणशब्देभ्य एव रसादिभ्य इनिठनोर्निवर्तनाद् गुणादन्यतस्तौ=इनिठनौ भवत एव। उक्तेन न्यायेन तु=तद्रूपाभेदेन रसादिशब्दानां तद्वति वृत्तिर्नास्ति इति युक्त्या तु रसादिशब्दप्रकृतिकमतुपो लुगप्रसङ्गात् "अन्यशब्देन वार्त्तिके लुगुच्यते" इति अपव्याख्यानमिति॥ १४९ ॥

तदेवमुपक्रम एव विशिष्टद्रव्यविवक्षायां स्वाभाविकमेतदिति गुणानामाश्रयेण सह सोऽयमित्यभेदसंबन्धे सिद्धे लिङ्गसंख्ये इति प्रतिपादितम्। अत्रापि च पक्षे सूत्रस्योपयोगं प्रतिपादयितुमुपक्रमते—

**आवेशो लिङ्गसंख्याभ्यां क्वचिन्मञ्चादिवत् स्थितः।**
**सोऽयमित्यभिसंबन्धे स प्रष्ठादौ न विद्यते ॥१५०॥**

इह सोऽयमित्यभेदसंबन्धविषये समारोप्यमाणस्यार्थान्तरे द्वैतं दृश्यते, आविष्टलिङ्गसंख्यता तदभावश्च। तत्र 'मञ्चान् युवतीः पश्य, वासांसि वा' इत्यत्र मञ्चशब्दः तात्स्थ्यात् समारोप्यमाणोऽजहत्स्वलिङ्गसंख्य एव वर्तते स्वाधेये। तथा गिरिप्रभवासु नदीषु सामीप्याद् गिरिरूपसमावेशेन गिरिशब्दोऽजहत्स्वलिङ्गसंख्य एव प्रवर्तमानो दृष्टः, गिरीन् सरितः स्यन्दमानाः पश्येति। प्रष्ठप्रचरादिशब्दास्तु स्वभार्यायां प्रस्थानादिक्रियासङ्गात् प्रवर्तमानाः परित्यक्तस्वलिङ्गसंख्या एव समावेशविषयलिङ्गसंख्योपादायिनो दृश्यन्ते।

तथा च प्रष्ठी प्रचरीति स्त्रीलिङ्गेनैव समाख्यायते स्त्री। तदत्र द्वे अपि लिङ्गसंख्ये

---

तदेवं वाक्यावधिकेऽन्वाख्याने पदसंस्कारोपक्रम एव शुक्लादिपदाद् विशिष्टद्रव्यविवक्षायाम् "स्वाभाविकमेतत्" इति गुणानामाश्रयेण सह सोऽयमित्यभेदसंबन्धे "सिद्धे लिङ्गसंख्ये" इति प्रतिपादितम्। अत्रापि पक्षे=वाक्यान्वाख्यानपक्षेऽपि विशेषणानाम्' (पा० १।२।५२) इति सूत्रस्योपयोगं प्रतिपादयितुमुपक्रमते—आवेशो लिङ्गसंख्याभ्यामिति।

अस्यार्थः—सोऽयमित्यभिसंबन्धे विशेषणानां स्वकीयाभ्यां लिङ्गसंख्याभ्यामावेशः क्वचिद् मञ्चादिवत् स्थितः।

यथा—सोऽयमित्यभिसंबन्धे 'मञ्चान् युवतीः, वासांसि वा पश्य' इत्यत्र मञ्चशब्दो न स्वकीये लिङ्गसंख्ये जहातीति। स=सोऽयमित्यभिसंबन्धे विशेषणानां स्वकीयलिङ्गसंख्याभ्यामावेशः, प्रष्ठादौ न विद्यते प्रष्ठी प्रचरी इत्यादौ सोऽयमित्यभिसंबन्धे विशेष्यलिङ्गस्यैव दर्शनादिति।

अयं भावः—इह सोऽयमित्यभेदसंबन्धविषयेऽर्थान्तरे समारोप्यमाणस्य संबन्धिद्वैतम्=संशयो दृश्यते। आविष्टलिङ्गसंख्यता=आविष्टे लिङ्गसंख्ये यस्मिन् तस्य भावस्तत्ता इति, तदभावश्च। 'तत्र मञ्चान् युवतीर्वासांसि वा पश्य' इत्यत्र मञ्चशब्दः तात्स्थ्यात् समारोप्यमाणोऽजहत्स्वलिङ्गसंख्य एव स्वाधेये वर्तते। तथा गिरिप्रभवासु नदीषु सामीप्याद् गिरिरूपसमावेशेन अजहत्स्वलिङ्गसङ्ख्य एव=अपरित्यक्तस्वलिङ्गसङ्ख्य एव गिरिशब्दः प्रवर्तमानो दृष्टः, गिरीन् सरितः स्यन्दमानाः पश्येति। प्रष्ठप्रचरादिशब्दास्तु स्वभार्यायाम्=प्रष्ठप्रचरादिभार्यायाम्, पुंयोगात् प्रस्थानादिक्रियासङ्गात्=प्रस्थानादिक्रियाध्यारोपात् प्रवर्तमानाः परित्यक्तस्वलिङ्गसङ्ख्या एव समावेशविषयलिङ्गसङ्ख्योपादायिनः=समारोपविशेष्यगतलिङ्गसङ्ख्या परिग्राहिणो, दृश्यन्ते।

तथा च—प्रष्ठी प्रचरीति स्त्रीलिङ्गेनैव प्रष्ठस्त्री प्रचरस्त्रीसमाख्यायते। तदत्र-भार्यारूपे

परित्यक्ते निमित्तिनि प्रवर्तमानेन प्रष्ठादिशब्देन। मञ्चादिशब्दस्तु कश्चित् स्वगतं लिङ्गमेवोपादायोपचरितनिमित्ते निमित्तिनि प्रवर्तते, मञ्चान् योषितो हरीतक्यःफलानीति।

कश्चित् तु वचनमेवानुवर्तते स्वगतम्, खलतिकं वनानीति।

कश्चित् पुनर्द्वे अपि लिङ्गसंख्ये स्वगते समाश्रित्य तद्वति निमित्तिनि वर्तते शब्दः। तद् यथा विंशतिर्ब्राह्मणा इत्यादि। एष च शब्दशक्तिस्वाभाव्यान्नियमो विषयविभागेन सिद्धः ॥ १५० ॥

शास्त्रेऽप्यस्यैवार्थस्यास्ति ज्ञापकमित्याह—

**लिङ्गं लिङ्गपरित्यागे सूत्रे प्रत्ययशासनम्।**
**सोऽयमित्यभिसंबन्धात् पुंशब्दे स्त्र्यभिधायिनी ॥१५१॥**

"पुंयोगादाख्यायाम्" (पा०४।१।४८) इति प्रष्ठादिभ्यः स्त्रीप्रत्ययानुशासनं सोऽयमित्यभिसंबन्धेन स्त्रियां तेषां परित्यक्तस्वलिङ्गसंख्यानां प्रवृत्तिरित्यस्यार्थस्य ज्ञापकम्।

---

निमित्तिनि प्रष्ठशब्दस्य भार्यायां प्रवृत्तिनिमित्तं प्रस्थानं तदारोपवति तदारोपविशेष्ये अर्थे प्रवर्तमानेन प्रष्ठादिशब्देन स्वकीये द्वे अपि लिङ्गसख्ये परित्यक्ते। मञ्चादिशब्दस्तु कश्चित् स्वगतं लिङ्गमेवोपादायोपचरितनिमित्ते = समारोपितमञ्चत्वरूपनिमित्तवति निमित्तिनि योषिद्रूपेऽर्थे प्रवर्तते, 'मञ्चान् योषितः पश्य, हरीतक्यः फलानि दृश्यन्ते' इति।

कश्चित्तु स्वगतं वचनमेवानुवर्तते, लिङ्गं तु परस्यैव खलतिकं वनानि इति। खलतिको वृक्षविशेषः, अध्यारोहन् पुरुषो यत्र स्खलति स्निग्धत्वात्।

कश्चित् पुनर्द्वे अपि स्वगते लिङ्गसंख्ये समाश्रित्य तद्वति = समारोपितप्रवृत्तिनिमित्तवति निमित्तिनि शब्दो वर्तते।

तद् यथा—'विंशतिर्ब्राह्मणाः' इति। अत्र विंशतिशब्दः संख्यावाची स्वगतं स्त्रीत्वरूपं लिङ्गम् = एकत्वरूपां संख्याञ्च अजहदेव समारोपितस्वप्रवृत्तिनिमित्तवति ब्राह्मणरूपेऽर्थे वर्तते। एष च विषयविभागेन नियमः शब्दशक्तिस्वाभाव्यात् सिद्ध इति ॥ १५० ॥

शास्त्रेऽपि अस्यैवार्थस्य = शब्दशक्तिस्वाभाव्याद् विषयविभागेन नियम इत्यस्यैवार्थस्य, अस्ति ज्ञापकमित्याह—लिङ्गं लिङ्गपरित्यागे इति।

अस्यार्थः—सोऽयमित्यभिसंबन्धात् स्त्र्यभिधायिनि प्रष्ठप्रचरादिके पुंशब्दे पुंस्त्वलिङ्गपरित्यागे स्त्रीप्रत्ययस्य शासनं विधायकम् "पुंयोगादाख्यायाम्" इति सूत्रं ( पा० ४।१।४८ ) लिङ्गं ज्ञापकमिति।

अयं भावः। "पुंयोगादाख्यायाम्" ( पा० ४।१।४८ ) इति सूत्रेण प्रष्ठप्रचरादिशब्देभ्यः स्त्रीप्रत्ययानुशासनं सोऽयमित्यभिसंबन्धेन स्त्रियां तेषां परित्यक्तस्वलिङ्गसंख्यानामेव प्रवृत्तिरित्यस्यार्थस्य ज्ञापकम्। तत्र षष्ठी इत्यत्र पुंस्त्वरूपस्य लिङ्गस्यैव परित्यागः। प्रष्ठ्यौ, प्रष्ठ्यः' इत्यादौ तु लिङ्गसंख्ययोरुभयोरपीति।

तथा ह्याख्याग्रहणादभेदसंबन्धात् पुंशब्दाः स्त्रियां ये वर्तन्ते, ते गृह्यन्ते, न तु भेदसंबन्धेन प्रष्ठस्येयमिति तद्धितान्ताः ।

तथा च भाष्यम् "नहि तद्धितान्तमाख्या भवति" इति । सति तद्धिते पुमाख्यानामभिन्नरूपाणामेव नास्ति स्त्रियां वृत्तिरित्यर्थः ॥ १५१ ॥

तदेवं प्रष्ठादीनामेव शब्दशक्तिस्वाभाव्यालिङ्गाच्च स्वलिङ्गसंख्यापरित्यागेनार्थान्तरे वृत्तिः, नान्येषामिति मञ्चादिशब्दवच्छुक्लादिशब्दानामपि सोऽयमित्यभिसबन्धेन द्रव्ये स्वलिङ्गसंख्यानामेव प्रवृत्तिप्रसङ्गे "विशेषणानां' (पा०१।१।५२) इति सूत्रमाश्रयविशेषगतलिङ्गसंख्यासिद्धयर्थमारभ्यत इत्याह—

**आश्रये लिङ्गसंख्याभ्यामाश्रितं व्यपदिश्यते ।**
**विशेषणानां चाजातेरिति शास्त्रव्यवस्थया ॥१५२॥**

शब्दशक्तिस्वाभाव्यात् प्रष्ठादिवदाश्रयलिङ्गसंख्योपादाने सिद्धे "पुंयोगादाख्यायाम्' (पा० ४।१।४८, इतिवद् 'विशेषणानां' (पा० १।१।५२) इत्यपि शास्त्रमनुवादकम् । ततश्चाश्रयविषयाभ्यां लिङ्गसंख्याभ्यामाश्रितं शुक्लादिगुणरूपमभिधीयते सामानाधिकरण्यान्यथानुपपत्त्येति स्थितम् ॥ १५२ ॥

---

तथाहि—ये प्रष्ठादयः पुंशब्दा, अभेदसंबन्धात् स्त्रियां वर्तन्ते, ते सूत्रे आख्याग्रहणाद् गृह्यन्ते, न तु भेदसंबन्धेन प्रष्ठस्येयमिति विग्रहे प्राष्ठी इत्यादयः तद्धितान्ताः ।

तथा च भाष्यम्—"न हि तद्धितान्तमाख्या भवतीति, भेदेसंबन्धमादाय निर्वृत्तं तद्धितान्तमाख्या नहि भवति, किन्तु ये प्रष्ठादयः पुंशब्दा अभेदसंबन्धात् स्त्रियां वर्तन्ते त एवाख्यापदेन सूत्रे गृह्यन्ते । सति तद्धिते पुमाख्यानामेवाभिन्नरूपाणां नास्ति स्त्रियां वृत्तिः । प्राष्ठशब्दस्य तद्धितान्तस्य प्रष्ठसंबन्धिरूपार्थवाचकस्य स्त्रीपुंनपुंसकरूपार्थसाधारण्येन पुमाख्यारूपत्वाभावादिति तद्भाष्यार्थ इति ॥ १५१ ॥

तदेवं प्रष्ठादीनामेव शब्दशक्तिस्वाभाव्यात्, "पुंयोगादाख्यायाम्" इति सूत्रेण स्त्रीप्रत्ययशासनरूपाल्लिङ्गाच्च । स्वलिङ्गसंख्यापरित्यागेनार्थान्तिरे वृत्तिः, नान्येषां तत एव मञ्चादीनामिति मञ्चादिशब्दवत् शुक्लादिशब्दानामपि सोऽयमित्यभिसंबन्धेन द्रव्ये स्वलिङ्गसंख्याभ्यामेव नपुंसकलिङ्गैकत्वसंख्यारूपाभ्यां प्रवृत्तिप्रसङ्गे विशेषणानाम्' ( पा० १।२।५२ ) इति सूत्रमाश्रयविशेषगतलिङ्गसंख्यासिद्धयर्थमारभ्यत इत्याह—आश्रये इति ।

अस्यार्थः—विशेषणानाञ्चाजातेः ( पा० १।२।५२ ) इति शास्त्रे जात्यजातिसंबन्धिन्या व्यवस्थया आश्रये लिङ्गसंख्याभ्याम्, द्रव्यगताभ्यां लिङ्गसंख्याभ्याम् आश्रितम् शुक्लादिको गुणो व्यपदिश्यते=व्यवह्रियते 'शुक्लाः पटाः' इति, न तु स्वलिङ्गसंख्याभ्याम्—'शुक्लं पटाः' इति ।

अयं भावः—शब्दशक्तिस्वाभाव्यात् प्रष्ठादिवदाश्रयलिङ्गसंख्योपादाने विशेषणानां शुक्लादिगुणानां सिद्धे "पुंयोगादाख्यायाम्" ( पा० ४।१।४८ ) इतिवद् "विशेषणानाम्" ( पा० १।१।५२ ) इत्यपि शास्त्रं न्यायसिद्धार्थानुवादकम् । ततश्चाश्रयविषयाभ्याम्=आश्रय-

तथाहि—

**निमित्तानुविधायित्वाद् ये धर्मा भेदहेतुषु ।**
**त आश्रयेऽपि विद्यन्त इति बुद्धिर्निवर्त्यते ॥१५३॥**

निमित्ताद् निमित्तवत्यर्थे निमित्तसरूपः प्रत्ययो जायत इति निमित्ते शुक्लादिना गुणेन निमित्ती द्रव्यविशेषस्तिरोहितरूपोऽभिधीयत इति तेषु भेदहेतुषु निमित्तेषु ये धर्मास्ते तत्राश्रये निमित्तिनि सर्वे प्राप्ता इति यथा शुक्लादिशब्दस्तत्र प्रवर्तते, तथा तद्गतलिङ्गसंख्याप्राप्तावपि सूत्रारम्भ इत्यर्थः ।

तथा च शुक्लादिगुणगतलिङ्गवचनप्रतिपत्तिः शास्त्रेण निवार्यते द्रव्यस्य गुणशब्देनाप्याख्यायमानस्य स्वलिङ्गसंख्याभ्यामेव व्यपदेश इति ।

---

वृत्तिभ्यां लिङ्गसंख्याभ्यामाश्रितं शुक्लादिगुणरूपमभिधीयेते समानलिङ्गवचनकत्वरूपसामान्याधिकरण्यान्यथानुपपत्त्येति स्थितमिति ॥१५२॥

यथा शब्दशक्तिस्वाभाव्यात् प्रष्ठादिशब्दवत् स्वलिङ्गसंख्यापरित्यागेन आश्रयलिङ्गसंख्योपादानं विशेषणरूपाणां शुक्लादिगुणानां न्यायसिद्धमनूद्यते "विशेषणानाम्" ( पा० १।२।५२ ) इति सूत्रेण, तथा निमित्तिनां निमित्तसरूपत्वात् = विशेष्याणां विशेषणानुकारित्वाद् विशेषणधर्माणां लिङ्गसंख्यादीनां विशेष्ये प्राप्तौ तन्निवर्तकमपि "विशेषणानाम्" ( पा० १।२।५२ ) इति सूत्रमित्याह—निमित्तानुविधायित्वादिति ।

यत्तु हेलाराजेन—'तथाहि' इत्युक्त्वा इदं पद्यमवतारितं तन्न युक्तम् । अनेन पद्येन पूर्वपद्योक्तार्थस्योपपादनाभावात् ।

अस्य पद्यस्यार्थः—निमित्तिनाम् = भेदनिमित्तभूतविशेषणवतां विशेष्याणाम्, निमित्तानुविधायित्वात् = भेदनिमित्तभूतविशेषणानुकारित्वात्, विशेषणसरूपत्वात्, ये भेदहेतुषु विशेषणेषु धर्मा लिङ्गसंख्यादयः, ते आश्रयेऽपि = विशेष्येऽपि विद्यन्त इति बुद्धिः 'विशेषणानाम्' (पा० १।२।५२) इति सूत्रेण निवर्त्यते ।

अयमत्र निष्कर्षः—विशेष्याणां विशेषणसरूपत्वाद् विशेष्ये विशेषणगतलिङ्गसंख्याप्राप्तौ तन्निवर्तकम् "विशेषणानां चाजातेः" (पा० १।२।५२) इति सूत्रमिति ।

अयं भावः—निमित्तिसमानाधिकरणाद् भेदनिमित्ताद् निमित्तवत्यर्थे निमित्तसरूपः प्रत्ययः = ज्ञानं जायत इतीतरभेदनिमित्तेन शुक्लादिना गुणेन निमित्ती द्रव्यविशेषः पटादिस्तिरोहितरूपोऽभिधीयत इति तेषु भेदहेतुषु निमित्तेषु = विशेषणेषु ये धर्मा लिङ्गसंख्यादयस्ते तत्राश्रये निमित्तिनि विशेष्ये सर्वे प्राप्ता इति । यथा शुक्लादिशब्दस्तत्र = आश्रये द्रव्यविशेषे प्रवर्तते, तथा तद्गतलिङ्गसंख्याप्राप्तावपि = शुक्लादिविशेषणगतलिङ्गसंख्याप्राप्तावपि तन्निवृत्त्यर्थं 'विशेषणानाम्' (पा० १।२।५२) इति सूत्रारम्भ इति ।

तथा च गुणशब्देनाप्याख्यायमानस्य द्रव्यस्य शुक्लादिगुणगतलिङ्गवचनप्रतिपत्तिः तत्प्राप्तिरूपा 'विशेषणानाम्'(पा०१।२।५२)इति शास्त्रेण निवार्यत इति स्वलिङ्गसंख्याभ्यामेवाश्रयस्य व्यपदेश इति ।

दृष्टो हि निमित्तगतलिङ्गसंख्यायोगो निमित्तिनि । तद्यथा पञ्चाला इति क्षत्रियावच्छेदेन निवासस्याभिधीयमानस्य बहुत्वम् । गोदौ ग्राम इति गोदसामीप्येनाभिधीयमानस्य ग्रामस्य द्वित्वम् ॥ १५३ ॥

ननु च पञ्चाला इत्यादौ "लुपि युक्तवद् व्यक्तिवचने" ( पा०१।२।५१ ) इति शास्त्रान्निमित्तगतलिङ्गसंख्यायोग इत्याशङ्क्याह—

**आख्यायते च शास्त्रेण लोकरूढा स्वभावतः ।**
**निमित्ततुल्या गोदादौ प्रवृत्तिर्लिङ्गसंख्ययोः ॥१५४॥**

"गोदौ ग्रामः, पञ्चाला जनपदः' इत्यादौ शब्दशक्तिस्वाभाव्यान्निमित्तानुविधानेन निमित्तिनि शब्दप्रवृत्तिर्लोके सिद्धा वचनेन प्रकाश्यते, न तु वचनमेव शब्दशक्त्याधानक्षमम् ।

तथा च "तदशिष्यं संज्ञाप्रमाणत्वात्" (पा० १।१।५३) इति प्रत्याख्यातमेतत् । संज्ञा हि संज्ञानं लौकिकसंप्रत्ययो रूढः ।

कश्चित् किल शब्दो निमित्तधर्मेण तद्वन्तमाचष्टे, यथा मञ्चादिरिति । शुक्लादावप्येवं सन्देहे प्रष्ठादिवन्निमित्तिधर्मेणार्थाभिधानम् 'विशेषणानां' ( पा०१।२।५२ ) इति वचनेन प्रकाश्यते ॥ १५ ॥

---

दृष्टो हि विशेषणरूपनिमित्तगतलिङ्गसंख्यायोगो विशेष्यरूपे निमित्तिनि । तद्यथा— पञ्चाला जनपद इति क्षत्रियावच्छेदेन=पञ्चालाख्यक्षत्रियरूपविशेषणकृतपरिच्छेदेन इतरव्यावृत्तिरूपेण अभिधीयमानस्य जनपदरूपस्य निवासस्य एकस्यापि बहुत्वम् । 'गोदौ ग्रामः' इति गोदसामीप्येनाभिधीयमानस्य ग्रामस्य द्वित्वमिति ॥ १५३ ॥

ननु 'पाञ्चालाः' इत्यादौ "लुपि युक्तवद् व्यक्तिवचने" ( पा०१।२।५१ ) इति शास्त्रान्निमित्तगतलिङ्गसंख्यायोगः, न तु शब्दशक्तिस्वभावादित्याशङ्क्याह=आख्यायते चेति ।

अस्यार्थः—स्वभावतो लोकरूढा निमित्ततुल्या गोदादौ निमित्तिनि लिङ्गसंख्ययोः प्रवृत्तिः शास्त्रेण चापि आख्यायते, न तु अपूर्वा सा शास्त्रेण क्रियते, शास्त्रस्यापूर्वशब्दशक्त्याधाने क्षमत्वाभावादिति ।

अयं भावः—'गोदौ ग्रामः, पञ्चाला जनपदः' इत्यादौ शब्दशक्तिस्वाभाव्यान्निमित्तानुविधानेन=विशेषणधर्मलिङ्गसंख्यापरिग्रहरूपविशेषणानुकारेण=निमित्तिनि विशेष्ये लोके सिद्धा शब्दप्रवृत्तिर्वचनेन=सूत्रेण प्रकाश्यते, न तु वचनमेव शब्दशक्त्याधानक्षमम् ।

तथा च "तदशिष्यं संज्ञाप्रमाणत्वात्" ( पा० १।२।५३ ) इति सूत्रेण प्रत्याख्यातमेतत्= "लुपि युक्तवद् व्यक्तिवचने" इति सूत्रम् । "तदशिष्यं संज्ञाप्रमाणत्वात्" इति सूत्रे लौकिको रूढः संप्रत्ययो हि भावप्रत्ययान्तसंज्ञा न पदबोध्या संज्ञा ।

कश्चित् किल शब्दो निमित्तधर्मेण=विशेषणधर्मेण लिङ्गसंख्यादिना तद्वन्तमाचष्टे= निमित्तिनं विशेष्यमाचष्टे । यथा मञ्चादिर्योषितमाचष्टे—'मञ्चान् योषितः पश्य' इति । शुक्लादावप्येवं संदेहे प्रसक्ते प्रष्ठप्रचारादिवद् निमित्तिधर्मेण=सोऽयमित्यभेदारोपे विशेष्यधर्मेण लिङ्गसंख्यादिना अर्थाभिधानम् "विशेषणानाम्" ( पा० १।२।५२ ) इति वचनेन प्रकाश्यत इति ।

यतश्च शब्दशक्तिरेव वचनेनानुगम्यते, ततो विषयविभागोऽत्र सिद्ध इत्याह—

**हरीतक्यादिषु व्यक्तिः सङ्ख्या खलतिकादिषु ।**
**मनुष्यलुब्विशेषाणामभिधेयाश्रयं द्वयम् ॥१५५॥**

उक्तमिदं वार्त्तिके—"हरीतक्यादिषु व्यक्तिः खलतिकादिषु वचनं मनुष्यलुपि प्रतिषेधः" (भा० वा० १।२।५२) इति । तत्र वाचनिकत्वे लिङ्गसंख्ययोर्निर्निबन्धनोऽयं विषयविभागः ।

अनेन हि वचनेन स्वभावसिद्ध एवाख्यायतेऽर्थः, वचनस्यार्थप्रभावने शक्त्यभावादिति हरीतक्यः फलानि नखरजन्यः काशाः द्राक्षा इत्यादिषु लिङ्गमेव निमित्ततुल्यम्, संख्या त्वभिधेयनिमित्तिगतैवेति फलानां बहुत्वाद् बहुवचनमेव भवति ।

न हि पररूपसमारोपे तद्विषयस्य सर्वथैव स्वरूपं तिरोधीयत इति फलस्वरूपस्यातिरस्कारात् तदाश्रयं बहुत्वम् । निमित्तसङ्ख्योपादाने तु नास्त्यस्य शब्दस्य शक्तिः ।

---

तथा च लोकसिद्धार्थानुवादकं 'विशेषणानाम्' ( पा० १।२।५२ ) इति सूत्रं शुक्लादौ मञ्चादिवत् प्रसक्तस्वलिङ्गसंख्योपादनसन्देहनिवर्तकमिति ॥ १५४ ॥

यतश्च शब्दशक्तिरेव वचनेनानुगम्यते, ततो विषयविभागोऽत्र=सोऽयमित्यभेदारोपविषये सिद्ध इत्याह—हरीतक्यादिषु व्यक्तिरिति ।

अस्यार्थः—हरीतक्यादिषु व्यक्तिर्लिङ्गमेव निमित्ततुल्यम्, वचनं तु हरीतक्यादिपदाभिधेयनिमित्तिगतमेव । हरीतक्यः फलानि इति । खलतिकादिषु संख्यैव निमित्ततुल्या, लिङ्गं तु खलतिकादिपदाभिधेयवनगतमेव । खलतिकस्य पर्वतस्यादूरभवानि वनानि खलतिकं वनानि । मनुष्यलुब्विशेषाणां मनुष्ये यः प्रत्ययलुप् तस्य विशेषाणां विशेषणानां द्वयम्=लिङ्गं संख्या च अभिधेयं यन्निमित्ति तदाश्रयं=तद्गतं भवति, चञ्चेव मनुष्यश्चञ्चा अभिरूप इति ।

अयं भावः—उक्तमिदं वार्त्तिके—"हरीतक्यादिषु व्यक्तिः, खलतिकादिषु वचनम्, मनुष्यलुपि प्रतिषेधः" इति ।

अस्यार्थः—हरीतक्यादिषु व्यक्तिलिङ्गमेव निमित्ततुल्यं भवति, न तु वचनम् । 'हरीतक्यः फलानि' इति । खलतिकादिषु वचनमेव निमित्ततुल्यं भवति, न तु लिङ्गम् । 'खलतिकं वनानि' इति । मनुष्यलुपि निमित्ततुल्ययोर्लिङ्गसंख्ययोः प्रतिषेधः । तथा च तत्र मनुष्यरूपनिमित्तिगते एव लिङ्गसंख्ये भवत इति ।

चञ्चेव मनुष्यश्चञ्चा दर्शनीय इति । तत्र लिङ्गसंख्ययोर्वाचनिकत्वे=वचनसिद्धत्वे निर्निबन्धनः=निर्निमित्तः, अयं विषयविभागः ।

अनेन हि वार्त्तिकवचनेन स्वभावसिद्ध एवार्थ आख्यायते, वचनस्यार्थप्रभावने=अर्थोत्पादने शक्त्यभावादिति हरीतक्यः फलानि, नखरजन्यः पुष्पाणि, काशाः पुष्पाणि, द्राक्षाः फलानि इत्यादिषु लिङ्गमेव निमित्ततुल्यम्, संख्या त्वभिधेयनिमित्तिगतैवेति फलानां पुष्पाणां च निमित्तिनां बहुत्वाद् बहुवचनमेव भवति ।

न हि पररूपसमारोपे तद्विषयस्य=समारोपविशेष्यस्य सर्वथैव स्वरूपं तिरोधीयत इति फलस्वरूपस्यातिरस्कारात् तदाश्रयं बहुत्वम् । निमित्तसंख्योपादाने तु नास्ति अस्य शब्दस्य=फललुवन्तस्य हरीतकीशब्दस्य शक्तिः ।

तथा खलतिकस्य पर्वतस्यादूरभवानि विन्ध्यस्यादूरभवानीत्यादौ निमित्तगत-सङ्ख्योपादाने शब्दस्य शक्तिः, लिङ्गं तु निमित्तिगतमेव भवतीति वनस्य नपुंसकत्वा-न्नपुंसकं खलतिकं वनानीत्यादि ।

तथा चञ्चेव मनुष्यश्चञ्चा मनुष्य इत्यत्र "लुम्मनुष्ये" (पा०५।३।९८) इति "इवे प्रतिकृतौ" ( पा० ५।३।९६ ) इति विहितस्य कनो लुपि यानि विशेषणान्युपादीयन्ते, अभिरूपः स्वाकृतिर्दर्शनीय इत्यादीनि, तेषां विशेषणानामिति पञ्चाला वह्वन्ना इत्यादिवन्निमित्तगतलिङ्गसङ्ख्यारूपं भवति ।

एवञ्च न्यायसिद्धेऽस्मिन् प्रकरणेऽजातेरित्येतदपि प्रत्याख्यातम् । आविष्ट-लिङ्गत्वाज्जातेः पञ्चाला जनपद इति जनपदस्य निमित्तलिङ्गसङ्ख्यानुविधानं न भविष्यति ।। १५५ ।।

यदपि व्याख्यातमजातेरिति जातिप्रयोगं विना यावद्विशेषणानि तानि लुबन्त-गतलिङ्गसङ्ख्यानुविधायीनि, जातिविशेषणानि तु न तथेति, तद् व्याचष्टे—

**जातिप्रयोगे जात्या चेत् सम्बन्धमुपगच्छति ।**
**विशेषणं ततो धर्मान् जातेस्तत् प्रतिपद्यते ।।१५६।।**

---

तथा खलतिकस्य पर्वतस्यादूरभवानि, विन्ध्यस्यादूरभवानि इत्यादौ निमित्तगतसंख्येपा-दाने शब्दस्य शक्तिः, लिङ्गं तु निमित्तिगतमेव भवतीति वनस्य नपुंसकत्वान्नपुंसकं खलतिकं वनानि इत्यादि ।

तथा 'चञ्चेव मनुष्यश्चञ्चा मनुष्यः' इत्यत्र "इवे प्रतिकृतौ" (पा०५।३।९६)इति विहितस्य कनः "लुम्मनुष्ये" ( पा० ५।३।९८ ) इति लुपि यानि विशेषणानि उपादीयन्ते-अभिरूपः, स्वाकृतिर्दर्शनीय इत्यादीनि तेषां विशेषणानामिति। 'पञ्चाला वह्वन्नाः' इत्यादिवत् निमित्तगतलिङ्ग-संख्यानुविधाने नास्ति शक्तिरित्यभिधेयो निमित्ती मनुष्यस्तदाश्रयं द्वयमपि लिङ्गसंख्यारूपं भवति।

एवञ्च लोकन्यायसिद्धेऽस्मिन् प्रकरणे अजातेरित्येतदपि प्रत्याख्यातम् । जातेराविष्टलिङ्ग-त्वात्=लिङ्गविशिष्टस्यैवार्थस्य जातित्वात् स्वगतलिङ्गविरोधात् पञ्चाला जनपद इत्यादौ जनपदस्य निमित्तसंख्यानुविधानम्, खलतिकं वनानि इत्यत्र वनपदार्थस्य निमित्तलिङ्गानुविधानं न भविष्यतीति ।। १५५ ।।

यदपि 'अजातेः' इति व्याख्यातमाकरे—जातिप्रयोगे=जातेर्लुबन्तविशेषणतया प्रयोगे, यावद् विशेषणानि=सर्वाणि विशेषणानि जात्यतिरिक्तानि लुबन्तगतलिङ्गसंख्यानुविधायीनि, तद् यथा—'पञ्चालाः प्रियातिथयः' स्पष्टाभिधाना विनीतवेषा बह्वन्ना जनपद इति । जातिविशेषणानि तु न तथा=न लुबन्तगतलिङ्गसंख्याभिधायीनि इति, तद् यथा—'वरणा नगरं रम्योपवनं स्वच्छोदकं सुगन्धि कुसुमम्' इति तद् व्युत्क्रमेण व्याचष्टे—जातिप्रयोगे इति ।

अस्यार्थः—चेद्=यदि, जातिप्रयोगे विशेषणं जात्या सह संबन्धमुपगच्छति, ततः= तस्मात्=जात्या सह संबन्धोपगमात् कारणात्, तद्=विशेषणम्, जातेर्धर्मान्=लिंगसंख्यादीन् प्रतिपद्यते । तद् यथा—'वरणा नगरम्, सुरम्योपवनम्, स्वच्छोदकम्, सुगन्धि कुसुमम्' इति ।

कामचाराद् विशेषणेनावच्छेदस्य यदा जातिमभिसन्धाय विशेषणं प्रयुज्यते, तदा तद्गतलिङ्गसङ्ख्यासिद्धिः, तद्यथा—वरणा नगरं रम्योपवनं स्वच्छोदकं सुगन्धिकुसुममिति ॥ १५६ ॥

यदा तु लुबन्ताभिसन्धानेन विशेषणप्रयोगः, तदा—

लुबन्ते सन्निपतितं जातेरन्यद् विशेषणम् ।
लुबन्तस्य प्रधानत्वात् तद्धर्मैर्व्यपदिश्यते ॥१५७॥

जातिराविष्टलिङ्गसङ्ख्येति ततोऽन्यद्विशेषणं लुबन्तसमानाधिकरणं तल्लिङ्गसङ्ख्यमेव सिद्धम् । पञ्चालाः प्रियातिथयः स्पष्टाभिधाना विनीतवेषा बह्वन्नाः जनपदः, गोदौ सूक्ष्मकण्टकौ वृक्ष इति ।

एवञ्च कृत्वा नार्थ एतदर्थेन सूत्रेणेति 'गुणवचनानामाश्रयतो लिङ्गवचनानि भवन्ति इत्यत्रार्थे सूत्रं व्यापारितम् ।

---

अत्र नगररूपजातिविशेषणानि सर्वाणि न लुबन्तगतलिङ्गसंख्याऽनुविधायीनि, किन्तु जातिगतलिङ्गसंख्यानुविधायीन्येवेति ।

अयं भावः—विशेषणेनावच्छेदस्य इतरव्यावृत्तिरूपस्य कामचारात्=पदार्थस्य विशेष्यविशेषणभावे कामचारादिति यावत्, यदा जातिप्रयोगे जातिं विशेष्यमभिसंधाय सर्वं विशेषणं प्रयुज्यते, तदा तद्गत( जातिगत )लिङ्गसंख्यासिद्धिः, तद्विशेषणेषु, तद् यथा—वरणा नगरम्, सुरम्योपवनम् स्वच्छोदकम्, सुगन्धिकुसुममिति । अत्र वरणानामदूरभवं नगरं वरणा इति लुबन्तमिति ॥ १५६ ॥

यदा तु लुबन्तरूपविशेष्याभिसंधानेन विशेषणप्रयोगस्तदाप्याह—लुबन्ते इति ।

अस्यार्थः—जातेर्नियतलिङ्गसंख्यत्वात् ततोऽन्यत् = जातेरन्यद् लुबन्ते संनिपतितम् = लुबन्ते विशेषणतया संयुक्तम्, लुबन्तविशेषणम्, लुबन्तस्य विशेष्यत्वेन प्रधानत्वात् । तद्धर्मैः = लिङ्गसंख्यादिभिर्व्यपदिश्यते, न तु जातिधर्मैः, तत्र जातेर्लुबन्तविशेषणत्वेनाप्रधानत्वादिति । तद् यथा—'गोदौ सूक्ष्मकण्टकौ वृक्षः' इति । अत्र वृक्ष इति जातिशब्द इति ।

अयं भावः—जातिराविष्टलिङ्गसंख्या=आवेश आग्रहो नियमः, नियतलिङ्गसंख्या इति तस्य लिङ्गसंख्या परिवर्तनासंभवात्, ततोऽन्यत्=जातेरन्यद् लुबन्तसमानाधिकरणं विशेषणम्, तल्लिङ्गसंख्यामेव=लुबन्तलिङ्गसंख्यानुविधायि एव सिद्धम् । तद् यथा—पञ्चालाः प्रियातिथयः स्पष्टाभिधाना विनीतवेषा बह्वन्ना जनपदः, गोदौ सूक्ष्मकण्टकौ वृक्ष इति ।

एवञ्च कृत्वा नार्थ एतदर्थेन=विशेषणानां जात्यतिरिक्तानां लुबन्तवद् व्यक्तिवचनार्थेन "विशेषणानाञ्चाजातेः" ( पा० १।२।५२ ) इति सूत्रेणेति "गुणवचनानामाश्रयतो लिङ्गवचनानि भवन्ति" इति लोकन्यायसिद्धेऽर्थेऽनुवादकं विशेषणानामिति सूत्रं सूत्रकृता व्यापारितमित्येकः कल्पः।

अत्रापि यदाश्रितरूपमाश्रये प्रत्यस्यते, तदाश्रितरूपस्योद्भूतत्वात् तच्छब्दमिवाश्रयस्तल्लिङ्गवचनमपि प्रतिपद्येतेति सूत्रारम्भः।

यदा त्वाश्रयरूपस्याश्रिते प्रत्यासः, तदाश्रयधर्मप्रतिपत्तिरेव युक्तेति स्वाभाविकमेतदिति प्रत्याख्यातं सूत्रम्। आश्रयधर्मरूपस्याश्रितेऽध्यासे हि पटशब्देन शुक्लगुणोऽभिधीयत इति तद्गत एव लिङ्गसङ्ख्यायोगो मुख्यः।

न चैवं स्वशब्देन गुणस्याभिधानं निवर्तत इति शुक्लशब्देन समानाधिकरणेन तुल्यलिङ्गसङ्ख्येनैव भवितव्यम्।

अपरः कल्पो वात्रारम्भप्रत्याख्यानयोर्विद्वद्भिरुक्तः। तथाहि—निराश्रयस्य गुणस्याभावाद् यदाश्रयमात्रे तस्य निवेशः, तदा द्रव्यसामान्यगतलिङ्गवचनसर्वनामप्राप्तौ सूत्रारम्भः।

यदा तु द्रव्यविशेषविवक्षा पूर्वमेवेति नियते द्रव्ये गुणस्य निवेशः, तदा स्वाभाविकमेतदिति प्रत्याख्यातम्। उपक्रम एव हि प्रयोगेष्वेव वाक्ये साधुत्वं प्रक्रम्यत इत्यस्ति विशेषप्रत्यायने शब्दस्य सामर्थ्यम्।

---

अत्रापि यदाश्रितमाश्रये प्रत्यस्यते=अध्यारोप्यते तस्याश्रितरूपस्योद्भूतत्वात् तच्छब्दमिव आश्रितस्य शब्दमिव तल्लिङ्गवचनमपि आश्रयः प्रतिपद्येत इति प्रागुक्तरीत्या पदान्वाख्याने 'शुक्लं पटाः' इति प्रयोगः प्रसज्येतेति तन्निवृत्यर्थं विशेषणानामिति सूत्रारम्भ इति द्वितीयः कल्पः।

यदा तु आश्रयरूपस्याश्रिते प्रत्यासः=विशेष्यरूपस्य पटादेर्विशेषणे शुक्लादौ अध्यारोपः, तदाश्रितस्याश्रयधर्मप्रतिपत्तिरेव युक्ता इति स्वाभाविकमेतदिति प्रत्याख्यातं विशेषणानामिति सूत्रम्। आश्रयरूपस्याश्रितेऽध्यासे हि पटादिशब्देन शुक्लादिगुणोऽभिधीयत इति तद्गत एव=पटादिरूपाश्रयगत एव लिङ्गसंख्यायोगो मुख्यः।

न चैवमपि स्वशब्देन गुणस्याभिधानं निवर्तत इति पटादिरूपाश्रयसमानाधिकरणेन शुक्लशब्देनाश्रयतुल्यलिङ्गसंख्येनैव भवितव्यमिति "विशेषणानाम्" (पा॰ १।२।५२) इति सूत्रप्रत्याख्यानकल्पस्तृतीयः।

अथवा विशेषणानामिति सूत्रारम्भप्रत्याख्यानयोरत्रापरः कल्पो विद्वद्भिरुक्तः। तथाहि निराश्रयगुणस्याभावाद् यदाश्रयमात्रे आश्रयसामान्ये तस्य गुणस्य निवेशः, तदा द्रव्यसामान्यलिङ्गवचनसर्वनामप्राप्तौ नपुंसकलिङ्गैकवचनप्राप्तौ 'विशेषणानाम्' (पा॰ १।२।५२) इति सूत्रारम्भः।

यदा तु पदान्वाख्यानपक्षेऽपि पदान्तरसंबन्धात् पूर्वमेव द्रव्यविशेषविवक्षा इति नियते द्रव्ये=द्रव्यविशेषे गुणस्य निवेशः, तदा स्वाभाविकमेतदिति 'विशेषणानाम्' (पा॰ १।२।५२) इति सूत्रप्रत्याख्यानम्। वाक्यान्वाख्याने हि पदसंस्कारोपक्रम एव वाक्ये प्रयोगेष्वेव=प्रयुज्यमानेष्वेव पदेषु साधुत्वं प्रक्रम्यत इत्यस्ति द्रव्यविशेषप्रत्यायने शुक्लादिशब्दस्य सामर्थ्यम्।

तृतीयोऽप्यत्र दर्शनभेदः कामचाराद् विशेषणविशेष्यभावस्य। यदा गुणो विशेष्यते, तदा स्वगतलिङ्गसंख्याभ्यामेव प्राधान्याद् योगे प्राप्ते गुणिगतलिङ्गसंख्या-सिद्धये सूत्रारम्भः।

यद्यपि च सूत्रे विशेषणानामित्युक्तम्, तथाप्यत्र गुणो विशेष्योऽपि प्राधान्ये-नाश्रयणात् स्वाधारं प्रत्याश्रितत्वाद्विशेषणं भवत्येवेति कथ्यते। अस्यामपि प्रधानदशायां विशेषणशब्देन आश्रितमात्रं ह्यत्र विशेषणमभिप्रेतम्, न भेदकमेव, अस्ति च विशेष्यतया प्राधान्येऽपि गुणस्याश्रितत्वमिति न कश्चिद् दोषः।

यदा तु गुणो विशेषणम्, तदा तस्य प्रधानानुरोधित्वादाश्रयधर्मप्रतिपत्तिर्न्याय-सिद्धेति स्वाभाविकमेतदिति प्रत्याख्यानशब्दः। ततश्च न्यायसिद्धार्थप्रदर्शनार्थमिदं सूत्रं सकलशास्त्रव्यापकमिति ॥ १५७ ॥

येषु भाष्यवार्त्तिकप्रयोगेष्वस्योपयोगः, तानुद्दिश्य क्रमेण विचारयति—

**नञ्समासबहुव्रीहिद्वन्द्वस्त्र्यतिशयेषु ये।**
**भेदा भाष्यानुसारेण वाच्यास्ते लिङ्गसङ्ख्ययोः ॥१५८॥**

---

तृतीयोऽप्यत्र दर्शनभेदः=सिद्धान्तभेदो विशेषणविशेष्यभावस्य कामचारप्रयुक्तः। यदा गुणः शुक्लादिर्विशेष्यते=विशेष्यः क्रियते, तदा तस्य विशेष्यत्वेन प्राधान्यात् स्वगतलिङ्गसंख्या-भ्यामेव योगे प्राप्ते गुणिगतलिङ्गवचनसिद्धये "विशेषणानाम्" (१।१।५२) इति सूत्रारम्भः।

यद्यपि च सूत्रे विशेषणानामित्युक्तम्, तथा च विशेष्यविशेषणभावे कामचाराद् यदा गुणस्य विशेष्यत्वम् तदा कथमेतत्सूत्रप्रवृत्तिसंभव इति दोषः, तथाप्यत्र गुणः प्राधान्येनाश्रयणाद् विशे-ष्योऽपि स्वाधारं प्रत्याश्रितत्वाद् विशेषणं भवत्येवेति कथ्यते। अस्यामपि च गुणस्य प्रधानदशायां विशेषणशब्देनात्र सूत्रे आश्रितमात्रं विशेषणमभिप्रेतम्, न भेदकमेव=इतरव्यावर्तकमेव। अस्ति चात्र गुणस्य विशेष्यतया प्राधान्येऽपि आश्रितत्वम्=आश्रितत्वेन विशेषणत्वमिति न कश्चिद् दोषः सूत्रारम्भे।

यदा तु गुणो विशेषणम् तदा तस्य प्रधानानुरोधित्वादाश्रयधर्मलिङ्गसंख्यादिप्रतिपत्तिर्लोक-न्यायसिद्धेति स्वाभाविकमेतदिति भाष्ये एतत्सूत्रप्रत्याख्यानशब्दः प्रवृत्तः। ततश्च लोकन्यायसिद्धार्थ-प्रदर्शनार्थम् "विशेषणानाम्" (पा० १।२।५२) इति सूत्रं सकलशास्त्रव्यापकम्=सकलेषु व्याकरणतदितरशास्त्रेषु व्यवहारार्थं समाश्रितमिति ॥ १५७ ॥

येषु भाष्यवार्त्तिकप्रयोगेषु अस्य="विशेषणानाम्" (पा० १।२।५२) इति सूत्रस्य उपयोगः, तान् प्रयोगान् उद्दिश्य=संक्षेपेण संकीर्त्य क्रमेण विचारयति—नञ्समासेत्यादि।

अस्यार्थः—ये नञ्समासबहुव्रीहिद्वन्द्वस्त्र्यतिशयेषु भाष्यानुसारेण लिङ्गसंख्ययोर्भेदा विशेषाः प्रतीतास्तेऽत्र प्रकरणे वाच्या उक्तिप्रयुक्तिभ्यां विचार्या इति।

एतेषु भाष्यप्रदेशेष्वाश्रयतो लिङ्गवचनान्युक्तानि विचार्यन्ते। भेदा इति निमित्तानुविधानेन प्राप्तानपोद्याश्रयतो लिङ्गसंख्याविशेषा भाष्ये प्रतिपादिता इहा-नुगम्यन्ते ॥ १५८ ॥

तत्र प्रातिलोम्यक्रमेण लघुवक्तव्यत्वादतिशायनसूत्रवार्त्तिकभाष्यं तावद् व्याचष्टे—

**यदि षष्ठीद्वितीयान्तान्निकृष्टात् तरबादयः।**
**न्यक्कारिणि स्युरुत्कृष्टे प्रकृतेः स्यात् विलिङ्गता ॥१५९॥**

"अतिशायने तमबिष्ठनौ" (पा० ५।३।५५) इत्यत्र बहवः पक्षाः, अतिशायनशब्दः कर्तृसाधनः, करणसाधनः, भावसाधनो वेति। अतिशेते इत्यतिशायनः। बहुलवचनात् कर्तरि ल्युट्। निपातनाद् दीर्घः। अतिशेते इत्यतिशायनो गुणक्रियालक्षणो द्रव्याश्रयो धर्मः। द्रव्यस्य हि स्वतः प्रकर्षाभावादाश्रितधर्मद्वारकः सोऽवस्थापितः। तत्र च धर्माश्रयो धर्मी यदाभिभावकत्वेन विवक्ष्यते, तदासावतिशेते इति कर्ता प्रत्ययार्थः।

यदा तु धर्ममात्रस्यात्र व्यापारः, तदा करणं धर्ममात्रं प्रत्ययार्थः। शुक्लेन हि गुणेन पटोऽन्यानतिशेत इति स एवातिशायनो मुख्यो गुणः।

---

अयं भावः—एतेषु नञ्समासादिषु भाष्यप्रदेशेषु आश्रयतो लिङ्गवचनान्युक्तानि विचार्यन्ते। भेदा इति। निमित्तानुविधानेन=विशेषणानुकारेण प्राप्तान् लिङ्गसंख्याविशेषानपोद्य=प्रबाध्य आश्रयतः=विशेष्यतः प्राप्ता लिङ्गसंख्याविशेषा भाष्ये प्रतिपादिता इह प्रकरणे अनुगम्यन्ते=अनुगतीकृत्य विचार्यन्ते ॥ १५८ ॥

तत्र लघुवक्तव्यत्वात् प्रातिलोम्यक्रमेण अतिशायनसूत्रवार्त्तिकभाष्यं तावद् व्याचष्टे—यदि षष्ठीति।

अस्यार्थः—अयमनयोर्लघ्वोरतिशयेन लघुरिति विग्रहे लघुतर इत्यत्र यदि निकृष्टात् षष्ठी द्वितीयान्ताद् उत्कृष्टे न्यक्कारिणि=प्रकृत्यर्थतिरस्कारिणि तरबादयः स्युः, तदा "ङ्याप्प्राति-पदिकाद्" ( पा० १।२।५२। ) इत्यधिकारेण अनिर्दिष्टलिङ्गत्वेन नपुंसकात् प्रातिपदिकात् तरपि प्रकृतेर्विलिङ्गता तरबन्तविरुद्धलिङ्गता स्यादिति।

अयं भावः—"अतिशायने तमबिष्ठनौ" ( पा० ५।३।५५ ) इत्यत्र बहवः पक्षाः। अतिशायनशब्दः कर्तृसाधनः, करणसाधनः, भावसाधनो वेति। अतिशेते इति अतिशायनः। बहुलवचनात्=बाहुलकात् कर्तरि ल्युट्। अत्रैव निपातनाद् दीर्घः। अतिशेते वाऽनेन इत्यतिशायनो गुणक्रियालक्षणो द्रव्याश्रितो धर्मः। द्रव्यस्य हि स्वतः प्रकर्षाभावादाश्रितधर्मद्वारा कः सः=प्रकर्षः अवस्थापितः। तत्र च धर्माश्रयो धर्मी यदाऽभिभावकत्वेन विवक्ष्यते, तदाऽसौ=धर्मी अतिशेते इति कर्ता प्रत्ययार्थः।

यदा तु धर्ममात्रस्यात्राभिभवानुकूलो व्यापारः, तदा करणं धर्ममात्रं प्रत्ययार्थः। शुक्लेन हि गुणेन पटोऽन्यानतिशेते इति स एवातिशायनो मुख्यो गुणः।

अत एव तस्य प्रयोजकत्वादतिशाययतीति ण्यर्थोपपत्तौ निर्देशो न्याय्यः। भावसाधनेऽप्यतिशयनमतिशयः प्रकर्षः, स चाश्रितगुणनिमित्त इति स एव गुणस्तमबादिप्रत्ययार्थोऽवतिष्ठते, क्रियालक्षणो वा धर्मः। एतेषु चार्थेषु प्रत्यये विधीयमाने सामर्थ्यात् प्रतियोगिनो निकृष्टादसौ भवति।

तत्र च विशिष्टा प्रकृतिर्नोपात्तेति ङ्याप्प्रातिपदिकसामान्यं निकृष्टवाचि प्रकृतित्वेनावतिष्ठते। समर्थविभक्तिश्च सूत्रे नोपात्तेत्युक्तम्—'किमन्तात् पुनरुत्पत्त्या भवितव्यम्' इति।

तत्र 'द्वितीयान्तादतिशय्यमानात्' इत्युक्तम्। शेतिरकर्मकोऽप्युपसर्गवशात् सकर्मकेऽभिभवे वर्तत इत्यभिभविता प्रत्ययार्थः। तस्य न्यूनेनाभिभाव्येन प्रकृत्यर्थेन योग इत्यपकृष्टवाचिनः प्रत्ययाः। सूत्रेषु च येन केनचिच्छब्देनार्थनिर्देश इति। यदा तिङन्तेन वाक्यम् तदा कर्मणि न्यूने द्वितीया न्याय्येति द्वितीयान्तादित्याह।

यदा कृदन्तेनैव वाक्यम्, तदा कृत्प्रयोगे कर्मणि षष्ठीति षष्ठ्यन्तादपि सम्भवोऽत्र व्याख्यातः। "षष्ठ्या रूप्य च" (पा० ५।३।५४) इत्यतो वा षष्ठी समर्थविभक्तिरनुवर्तत एव। अर्थाभेदश्चात्रोभयत्रापि समर्थविभक्ताविप्येवं परमेतत्।

---

अत एव तस्य=करणस्य प्रयोजकत्वादतिशाययतीति ण्यर्थोपपत्तौ अतिशायन इति निर्देशो न्याय्यः, न तु निपातनकृतः। भावसाधनपक्षेऽपि अतिशयनमतिशयः प्रकर्षः। स च द्रव्याश्रितगुणनिमित्तक इति स एव गुणस्तमबादिप्रत्ययार्थोऽवतिष्ठते, 'पचतितमाम्' इत्यादौ क्रियालक्षणो वा धर्मः। एतेषु चार्थेषु=कर्तृकरणभावेषु प्रत्यये विधीयमाने सामर्थ्यात् प्रतियोगिनः=प्रत्ययार्थप्रकर्षनिरूपकाद् निकृष्टादसौ=प्रत्ययो भवति।

तत्र च=तमब्विधायके सूत्रे च विशिष्टा=आनुपूर्वी विशेषवती प्रकृतिर्नोपात्तेति ङ्याप्प्रातिपदिकसामान्यं निकृष्टवाचिप्रकृतित्वेनावतिष्ठते। समर्थविभक्तिश्च तमब्विधायके सूत्रे नोपात्तेत्युक्तं भाष्ये—"किमन्तात् पुनरुत्पत्त्या भवितव्यम्" इति।

तत्र—द्वितीयान्तादतिशय्यमानादित्युक्तम्। प्रकर्षरूपातिशयप्रतियोगिनो द्वितीयान्तादिति तदर्थः। शेतिः=शीङ् धातुः, अकर्मकोऽपि अतिरूपोपसर्गवशात् सकर्मकेऽभिभवरूपेऽर्थे वर्तत इत्यभिभविता तरबाद्यर्थः। तस्य प्रत्ययार्थस्य स्वस्माद् न्यूनेनाभिभाव्येन प्रकृत्यर्थेन गुणेन क्रियया वा योग इत्यपकृष्टवाचिनस्तरबादयः प्रत्ययाः सूत्रेषु च तरबादिविधायकेषु येन केनचिच्छब्देनार्थनिर्देश इति यदा तिङन्तेन विग्रहवाक्यम् "इमौ अयम् अतिशेते" इति, तदा कर्मणि न्यूनेऽभिभाव्ये द्वितीया न्याय्या इति द्वितीयान्तादित्याह भाष्ये।

यदा तु कृदन्तेनैव विग्रहवाक्यम्—अयमनयोरतिशयेन लघुरिति, तदा कृत्प्रयोगे कर्मणि षष्ठीति षष्ठ्यन्तादपि गुणशब्दात् तरबादिप्रत्ययसंभवोऽत्र व्याख्यातः। "षष्ठ्या रूप्य च" (पा० ५।३।५४) इति सूत्राद्वा षष्ठी समर्थविभक्तिरनुवर्तत एवात्र तरबादिविधायकसूत्रे। अर्थाभेदश्चात्र=तरबादिविधिषु उभयत्रापि=तिङन्तेन विग्रहवाक्यपक्षे। एतत्="षष्ठ्या रूप्य च" इत्यतोऽनुवर्तमानं षष्ठीपदम्, समर्थविभक्तौ षष्ठ्यां द्वितीयायां वा सत्यां तरबादि इत्येवं परम्।

भाष्ये तु कृद्योगषष्ठ्याः कर्तर्यपि भावादसन्देहेन कर्म द्वितीयाया एवावगम्यत इति द्वितीयान्तादित्युक्तम्। एवमत्र प्रत्ययार्थविशेषणपक्षे प्रकृतिप्रत्ययार्थयोर्भेदात् प्रकृतेर्यल्लिङ्गं तद्विपरीतं प्रत्ययार्थस्य प्रसज्येत ॥ १५९ ॥

तामेव भिन्नलिङ्गतामुदाहरणेनाप्यभिव्यनक्ति—

**काल्यां कालाद् द्वितीयान्तात् काले काल्यास्तरब् भवेत्।**
**न्यक्कर्तरि तथा गार्ग्ये गर्गेभ्यः प्रत्ययो भवेत् ॥१६०॥**
**न्यक्कर्तृषु च गर्गेषु गार्ग्यात् स्यात् तच्च नेष्यते।**

कालमतिशेते, तस्य वातिशायिनी कालीति द्वितीयान्तात् षष्ठ्यन्ताद् वातिशय्यमानादतिशयितरि प्रत्यये कालतरा कालीति प्राप्नोति। कालितरेति चेष्यते। तथा कालीमतिशेते, तस्या वातिशायनः काल इत्यत्र कालितर इति प्राप्नोति। कालतर इति चेष्यते। विलिङ्गतेति चात्रोपलक्षणम्। विभिन्नसङ्ख्यता च प्रसज्यते।

---

भाष्ये तु—कृद्योगषष्ठ्याः कर्तर्यपि भावाद् असंदेहेन कर्मद्वितीयाया एवावगम्यते, न तु षष्ठ्या इति द्वितीयान्तादित्युक्तम्। एवमत्र प्रत्ययार्थविशेषणपक्षे=तरवादिप्रत्ययार्थे प्रकृत्यर्थो विशेषणमिति पक्षे प्रकृतिप्रत्ययार्थयोर्विशेषणविशेष्यभावापन्नयोर्भेदात् प्रागुक्तरीत्या प्रकृतेर्यल्लिङ्गम् लिङ्गसर्वनामनपुंसकत्वं तद् विपरीतम् पुँस्त्वस्त्रीत्वादिकं प्रत्ययार्थस्य प्रसज्येत। यदा तु स्वार्थे तरबादयः प्रकृत्यर्थस्यैव द्योतकाः, न तु प्रकृत्यर्थातिरिक्तस्तरबादिप्रत्ययस्यार्थ इति पक्षः, तदा प्रकृत्यर्थप्रत्ययार्थयोरभेदाद् नायं दोष इति ॥ १५९ ॥

तामेव प्रकृतिप्रत्ययान्तयोर्भिन्नलिङ्गतामुदाहरणेनापि विशेषतोऽभिव्यनक्ति सार्धेन पद्येन—काल्यां कालादिति।

अस्यार्थः—कालमतिशेते, कालस्य वाऽतिशायिनी काली इति विग्रहे द्वितीयान्तात् कालात् षष्ठ्यन्ताद्वा काल्यां तरब् भवेदिति कालतरा कालीति प्राप्नोति, कालितरा इति चेष्यते। तथा कालीमतिशेते, काल्या वाऽतिशायनः काल इति विग्रहे काल्याः=कालीशब्दाद् द्वितीयान्तात् षष्ठ्यन्ताद् वा काले तरब् भवेत्, तथा च कालितर इति प्राप्नोति, कालतर इति चेष्यते। तथा पूर्वकारिकायां विलिङ्गता इति विभिन्नसंख्यताया अप्युपलक्षणम्।

तथा हि—गर्गानतिशेते गार्ग्य इति विग्रहे न्यक्कर्तरि तिरस्कर्तरि गार्ग्ये गर्गेभ्यः तरप् प्रत्ययो भवेत्। तथा च—गर्गतर इति प्राप्नोति। गार्ग्यतर इति चेष्यते। किञ्च गार्ग्यमतिशेरते गर्गा इति विग्रहे गर्गेषु न्यक्कर्तृषु=तिरस्कर्तृषु गार्ग्यात् तरप् स्यात्। तथा च गार्ग्यतरा इति प्राप्नोति, तच्च नेष्यते। गर्गतरा इति चेष्यत इति।

अयं भावः—कालमतिशेते, कालस्य वाऽतिशायिनी कालीति विग्रहे द्वितीयान्ताद् षष्ठ्यन्ताद् वाऽतिशय्यमानात्=अभिभूयमानवाचकाद् अतिशयितरि=अभिभवितर्यर्थे तरप् प्रत्यये कृते कालतरा कालीति प्राप्नोति। कालितरेति चेष्यते। तथा कालीमतिशेते, काल्या वाऽतिशायनः काल इति विग्रहे कालितर इति प्राप्नोति। कालतर इति चेष्यते। विलिङ्गता चात्र=पूर्वकारिकायाम् उपलक्षणम्। विभिन्नसंख्यता च प्रसज्यते।

तथाहि—गर्गानतिशेते गार्ग्य इति। तत्र न्यक्कर्तरि गर्गतर इति प्राप्नोति। गार्ग्यतर इति साधुरिष्यते। गार्ग्यमतिशेरते गर्गा इति। तेष्वतिशायकेषु गार्ग्याद् विधौ गार्ग्यतरा इति प्राप्नोति। गर्गतरा इति चेष्यते। अत्र च वृत्तौ सङ्ख्याविशेषप्रतीतिर्लुगलुग्भ्यामेव प्रतीयत इति भवत्येकवचनबहुवचनान्तात् तरबिति पूर्वमेव निर्णीतम्।

एवं प्रत्ययार्थविशेषणपक्षो दुष्टोऽभिहितो भाष्ये। तदनन्तरमेव 'तर्हि प्रथमान्तात् स्वार्थिको भविष्यति' इति प्रकृत्यर्थविशेषणपक्षोऽभ्युपगतः।

तथा ह्यतिशेतेऽतिशायन इति "कृत्यल्युटो बहुलम्" (पा०३।३।११४) इति कर्तर्येवातिशायनशब्दः। तत्र प्रत्ययवाच्यस्य व्यतिरेकहेतोरभावादन्तरङ्गा प्रातिपदिकार्थमात्रापेक्षा प्रथमा तदन्ताद् विधिः। अर्थान्तरानिर्देशाच्च स्वार्थिकास्तरबादयः। अतिशायने यद् वर्तते, तस्मात् प्रत्ययः स्वार्थे। काली अतिशेते कालितरा। कालोऽतिशेते कालतर इति विलिङ्गता न भवति, तथा गार्ग्योऽतिशेते गार्ग्यतर इति। गर्गा अतिशेरते गर्गतरा इति विसङ्ख्यतापि न भवति॥ ,६०३॥

किन्त्विदमत्रानिष्टमुक्तं—यदि प्रथमान्तात् स्वार्थिकः, कुमारितरा। अव्यतिरिक्तं वय इति कृत्वा "वयसि प्रथमे" (पा० ४।१।२०) इति ङीप् प्राप्नोति।

---

तथाहि—गर्गानतिशेते गार्ग्य इति विग्रहे न्यक्कर्तरि = अभिभवितरि गर्गतर इति प्राप्नोति। गार्ग्यतर इति साधुरिष्यते। गार्ग्यमतिशेरते गर्गा इति विग्रहे तेष्वतिशायकेषु = गर्गेष्वभिभावकेषु गार्ग्यात् तरप् प्रत्ययविधौ गार्ग्यतरा इति प्राप्नोति। गर्गतरा इति चेष्यते। अत्र च वृत्तौ = गार्ग्यतर इति, गर्गतरा इति च वृत्तौ, सङ्ख्याविशेषप्रतीतिर्यत्रो लुगलुग्भ्यामेव प्रतीयत इति भवति अत्र यथासंभवमेकवचनबहुवचनान्तात् तरबिति पूर्वमेव निर्णीतम्।

एवं प्रत्ययार्थविशेषणपक्षो दुष्टोऽभिहितो भाष्ये। तदनन्तरमेव "तर्हि प्रथमान्तात् स्वार्थिको भविष्यति" इति प्रकृत्यर्थविशेषणपक्षः = तरबर्थत्वेनाभिमतः प्रकर्षः प्रकृत्यर्थः प्रकृत्यर्थे विशेषणञ्चेति पक्षोऽभ्युगत।

तथा हि—अतिशेते अतिशायन इति "कृत्यल्युटो बहुलम्" (पा० ३।३।११३) इति कर्तर्येवातिशायनशब्दः। तत्र प्रत्ययवाच्यस्य व्यतिरेकहेतोः = भेदहेतोरभावादन्तरङ्गा प्रातिपदिकार्थमात्रापेक्षा प्रथमा। तदन्तात् तरब्विधिः। अतिशायनरूपस्यार्थप्रकृत्यर्थान्तर्गतत्वादर्थान्तरानिर्देशाच्च स्वार्थिकास्तरबादयः। अतिशायने यद् वर्तते, तस्मात् तरबादिः प्रत्ययः स्वार्थे। काली अतिशेते कालितरा, कालोऽतिशेते कालतर इति विग्रहे विलिङ्गता प्रागुक्ता न भवति। तथा—गार्ग्योऽतिशेते गार्ग्यतर इति, गर्गा अतिशेरते गर्गतरा इति विलिङ्गता = विरुद्धलिङ्गता, भिन्नलिङ्गता अपि न भवति॥ १६०३॥

किन्त्विदमत्र पक्षेऽनिष्टमुक्तं भाष्ये—"यदि प्रथमान्ताद् स्वार्थिकः, कुमारितरा।" तरबन्तार्थादव्यतिरिक्तं वय इति कृत्वा "वयसि प्रथमे" (पा० ४।१।३०) इति ङीप् प्राप्नोति, कुमारितरीति।

तदेतद् व्याचष्टे—

**कुमार्याः स्वार्थिके ङीप् स्यात् प्रकृत्यर्थो हि नाधिकः ॥१६१॥**

कुमारी अतिशेते, किशोरी अतिशेत इति कुमारितरा, किशोरितरा इति "वयसि प्रथमे" (पा० ४।१।२०) इति ङीप् स्यात्, स्वार्थिकत्वे तरपः प्रकृत्यर्थस्य प्रथमवयोऽवच्छिन्नस्त्रीलक्षणस्यानतिरेकात्। न हि प्रथमेन ङीपाभिव्यक्तातिशायनस्य स्त्रीत्वे द्योतितम्।

ननु च तरपा कुमार्यर्थस्यैव प्रकर्षप्रकाशनात् प्रकृष्टस्यार्थस्य स्त्रीत्वमवगतमेव। तथा च भाष्यं—"तरपोक्तत्वात् तस्यार्थस्य न भविष्यति" इति। स्त्रीत्ववत एव प्रकृष्यमाणत्वात् तरबन्तेनैव द्योतितमेव स्त्रीत्वमिति ङीब् न भविष्यतीत्यर्थः।

अत्र चोदितम्—'टाबपि तर्हि न प्राप्नोति" इति। अभिहितार्थत्वं सर्वस्त्रीप्रत्ययानुत्पत्तिनिमित्तं समानमित्यर्थः।

अत्र परिहारोऽभिहितः—'उक्तेऽपि हि भवन्त्येते स्वार्थिकाष्टाबादयः' इति।

अयमर्थः—स्त्रियां यद्वर्तते प्रातिपादिकम्, तस्मात् स्वार्थे टाबादयो विहिताः। एवञ्च यथा प्रातिपदिकार्थस्य सर्वलिङ्गसाधारण्यादुपात्तमपि प्रातिपदिकेन स्त्रीत्वं नियमेन

---

तदेतद् भाष्यं व्याचष्टे—कुमार्याः स्वार्थिक इति।

अस्यार्थः—कुमार्याः—कुमारीशब्दात्, स्वार्थिके प्रत्यये तरपि विहिते सति कुमारितरा इत्यत्र "वयसि प्रथमे" (पा० ४।१।२०) इति ङीप् स्यात्। हि = यतः, प्रकृत्यर्थः—कुमारीपदार्थः, तरबन्तार्थादधिको नेति तरबन्तस्यापि वयोवाचित्वात् ततो ङीप् स्यादिति।

अयं भावः—कुमारी अतिशेते, किशोरी अतिशेते इति कुमारितरा, किशोरितरा इति "वयसि प्रथमे" (पा० ४।१।२०) इति ङीप् स्यात्। तरपः स्वार्थिकत्व प्रकृत्यर्थस्य प्रथमवयोऽवच्छिन्नस्त्रीलक्षणस्यातरबन्तार्थादनतिरेकात् = अभेदात्। तरपाऽभिव्यक्तातिशयनस्य स्त्रीत्वंप्र थमेन ङीपा न हि द्योतितम्।

ननु च तरपा कुमार्यर्थस्यैव प्रकर्षप्रकाशनात् प्रकृष्टस्यार्थस्य स्त्रीत्वं तरपैवावगतमिति तरबन्तान् ङीप् न भविष्यति। तथा च भाष्यम्—"तरपोक्तत्वात् तस्यार्थस्य न भविष्यति" इति। तस्यार्थस्य = स्त्रीत्वरूपस्यार्थस्य तरपैवोक्तत्वात् तरबन्तान् ङीप् न भविष्यतीति तदर्थः। स्त्रीत्ववत एव प्रकृष्यमाणत्वात् तरबन्तेनैव द्योतितमेव स्त्रीत्वमिति तरबन्तान् ङीब् न भविष्यतीति निष्कर्षः।

अत्र = अस्मिन् समाधाने सति चोदितं भाष्ये = आक्षेपः कृतो भाष्ये—"टाबपि तर्हि न प्राप्नोति" इति। तर्हि कुमारितरा इत्यत्र तरबन्तादिष्टष्टाबपि न प्राप्नोतीति तदर्थः। अभिहितार्थत्वं सर्वस्त्रीप्रत्ययानुत्पत्तिनिमित्तं ङीप्टापोः समानमिति निष्कर्षः।

अत्र परिहारोऽभिहितो भाष्ये—"उक्तेऽपि हि भवन्त्येते स्वार्थिकाष्टाबादयः" इति।

अयमर्थः – स्त्रियां यत्प्रातिपदिकं वर्तते तस्मात् स्वार्थे टाबादयो विहिताः। एवञ्च यथा प्रातिपदिकार्थस्य सर्वलिङ्गसाधारण्यात् प्रातिपदिकेनोपात्तमपि स्त्रीत्वं नियमेन = अव्यभिचारेण

न प्रतीयेतेति प्रथमेन स्त्रीप्रत्ययेन तद् द्योत्यते, तथा कुमारितरेत्यसति टापि विपरीतार्थावगमप्रसङ्ग इति भवत्यसौ, न तु सर्वथैवोक्तेऽनवस्थाप्रसङ्गात् स्वार्थिकेनापि भवितव्यम्। यद्येवं टावपवादो ङीबपि प्राप्नोतीत्युक्तं भाष्य इति चोद्यमेव।

ननु च प्रथमेनैव ङीपा प्रथमवयोऽवच्छेदस्योक्तत्वात् स्त्रीत्वमात्राभिव्यक्त्यर्थं टावेव न्याय्यः। नैतदस्ति, अर्थानुगुण्यात् ङीप एव न्याय्यत्वम्।

तद्यथा—एको द्वौ बहव इत्यत्रोक्तार्थापि प्रथमा समयाद् भविष्यतीत्युक्ते चोदितम्—'यदि सामयिकी न नियोगतोऽन्या अपि कस्मान्न भवन्ति इति।

तत्र परिहारोऽभिहितः—'अर्थतो व्यवस्था इति। न केवला प्रकृतिः प्रयोक्तव्येति प्रयोगनियमानुपालनायां विभक्तौ यद्यपि न कश्चिदर्थानुरोधः, तथाप्यनुगतार्थत्वात् प्रथमैव न्याय्येत्यर्थः।

अत्र दर्शने तत्र यत्रे त्यादावपि सप्तम्येव न्याय्या।

एवमिहापि प्रक्रमाभेदार्थं ङीवेव न्याय्य इति युक्तमुक्तं ङीबपि तर्हि प्राप्नोतीति। अन्तरेणापि च तरबादीन् प्रकरणादिवशात् केवलापि प्रकृतिरतिशयमुपगमयतीति। प्रकरणाद्यभावेऽतिशयं द्योतयन्तो भवन्त्येव स्वार्थिकास्तरबादयो न वाचकाः।

---

न प्रतीयेत इति कुमारितरा इत्यत्र प्रथमेन स्त्रीप्रत्ययेन तत् = स्त्रीत्वं द्योत्यते, तथा कुमारितरा इत्यत्रैवासति टापि विपरीतार्थावगमप्रसङ्गः = प्रकृत्यर्थाद् विपरीतस्यान्यलिङ्गविशिष्टस्य तरबन्तादवगमप्रसङ्ग इति भवत्यसौ = टाप्, न तु सर्वथैवोक्ते स्वार्थिकेनापि भवितव्यम्, अनवस्थाप्रसङ्गात्। तदनन्तरम्—"यद्येवं टावपवादो ङीवपि प्राप्नोति" इति चोद्यमेवोक्तं भाष्ये, न त्वस्य समाधानं कृतम्। अत्र भाष्ये—"कुमारितरा इत्यत्र" इति शेषः।

ननु प्रथमेनैव ङीपा प्रथमवयोऽवच्छेदस्योक्तत्वात् स्त्रीत्वमात्राभिव्यक्त्यर्थम् = केवलस्य स्त्रीत्वस्याभिव्यक्त्यर्थं टावेव न्याय्यः। नैतदस्ति, अर्थानुगुण्यात् ङीप एव न्याय्यत्वम्।

तद् यथा—'एको द्वौ बहवः' इत्यत्रोक्तार्थाऽपि प्रथमा समयात् = शिष्टाचाराद्, भविष्यति इत्युक्ते चोदितम्—"यदि सामयिकी, न नियोगतः, अन्या अपि कस्मान्न भवन्ति" इति। यदि एक इत्यादौ सामयिकी = शिष्टाचारप्रयुक्ता विभक्तिः, न नियोगतः = विधितः, तदा अन्या अपि विभक्तयस्तत्र कस्मान्न भवन्ति, शिष्टाचारस्य स्वविषयप्रयोगसाधुत्वबोधकत्वेऽपि इतरनिवर्तकत्वाभावादिति तदर्थः। "समयः शपथाचार कालसिद्धान्तसंविदः" इति कोशः।

तत्र परिहारोऽभिहितः—"अर्थतो व्यवस्था" इति। न केवला प्रकृतिः प्रयोक्तव्या इति प्रयोगनियमानुपालनायां कर्तव्यायां यद्यपि विभक्तौ = विभक्त्युत्पत्तौ न कश्चिदर्थानुरोधोऽत्र निर्दिष्ट इति सर्वा विभक्तयः प्राप्नुवन्ति, तथाप्यनुगमार्थत्वात् प्रथमैव न्याय्येति तदर्थः।

अत्र दर्शने—यत्र तत्र इत्यादावपि सप्तम्येवानुगतार्थत्वान्न्याय्या, न तु प्रथमा।

एवमिहापि = कुमारितरा इत्यत्रापि प्रक्रमे ङीपः सत्त्वात् प्रक्रमाभेदार्थं ङीवेव न्याय्य इति युक्तमुक्तम्—"ङीवपि तर्हि प्राप्नोति" इति। एभ्यः सर्वेभ्यो लघुरयमित्यादौ अन्तरेणापि च तरबादीन् प्रकरणादिवशात् केवलाऽपि प्रकृतिरतिशयमुपगमयतीति प्रकरणाद्यभावेऽतिशयं द्योतयन्तस्तरबादयो भवन्त्येव स्वार्थिकाः, न वाचकाः।

तथाहि— स्वतन्त्रमर्थमन्यानपेक्षं गमयन्तो वाचकाः कथ्यन्ते शब्दाः। तदपेक्षास्तु तद्गतमर्थं द्योतयन्तः स्वार्थिकाः। तत्रैव च (तस्यैव च) द्योतनेऽत्रान्वयव्यतिरेकौ सव्यापारौ। 'पटुतरो देवदत्तः पटुकल्पः पटुरूपः' इति च सामानाधिकरण्यात् प्रकृतिप्रत्ययार्थयोः प्रकृत्यर्थानुवादित्वेन स्वार्थिकत्वमेषां तरबादीनां निश्चीयते। वाचकेषु तु यञादिषु गर्गस्यापत्यं गार्ग्य इति व्यधिकरणत्वम्, न 'यावत् काली तावत् कालितर' इत्यस्माद् भाष्यान्न वाचकत्वावसायः।

अनभिव्यक्तप्रकर्षा हि काली, सैव प्रकृष्यमाणा कालितरेति प्रकर्षोपादानानुपादानलक्षणभेदाश्रयेण भाष्यप्रवृत्तेः। तस्माल्लौकिक एवार्थो नियतोऽवस्थितः शास्त्रे वाचकद्योतकप्रविभागेनानुविधीयते, न तु प्रक्रियागता एवामो विकल्पा निरस्तार्थप्रविभागाः॥ १६१॥

एवं स्वार्थिकत्वेऽपि दोषमुद्भाव्यानन्तरमभिहितम्—'एवं तर्हि गुणोऽभिधीयते, अथवा क्रियाभिधीयत' इति। तदेतद् भाष्यं व्याख्यातुमाह—

**षष्ठ्यन्तादधिके तस्माद् गुणे स्वाश्रयवर्तिनि।**
**उत्कृष्टसमवेतायां क्रियायां वा विधीयते॥१६२॥**

---

तथा हि—स्वतन्त्रमर्थमन्यानपेक्षं गमयन्तः=ज्ञापयन्तः शब्दा वाचकाः कथ्यन्ते। तदपेक्षास्तु=वाचकापेक्षास्तु तद्गतमर्थम्=वाचकगतमर्थं द्योतयन्तः स्वार्थिकाः। तस्यैव च=प्रकृत्यर्थस्यैव च द्योतनेऽत्र=तरबादिषु अन्वयव्यतिरेकौ सव्यापारौ। 'पटुतरो देवदत्तः, पटुकल्पः, पटुरूपः' इति च प्रकृतिप्रत्ययार्थयोः सामानाधिकरण्यात् एषां तरबादीनां प्रकृत्यर्थानुवादित्वेन स्वार्थिकत्वं निश्चीयते। वाचकेषु तु यञादिषु गर्गस्यापत्यं गार्ग्य इति प्रकृतिव्यधिकरणत्वेन न वाचकत्वावसायः, यावत् काली तावत् कालितरा इत्यस्माद् भाष्यात् तरबादीनां प्रकृत्यर्थद्योतकत्वावगमात्।

अनभिव्यक्तप्रकर्षा हि काली, सैव प्रकृष्यमाणा कालितरा इति प्रकर्षोपादानानुपादानलक्षणभेदाश्रयेणैतद् भाष्यप्रवृत्तेः। तस्माल्लौकिक एवार्थो नियतोऽवस्थितश्च शास्त्रे वाचकद्योतकप्रविभागेनानुविधीयते=अनूद्यते, न तु प्रक्रियागता एवामी विकल्पाः=वाचकत्वद्योतकत्वविकल्पाः, प्रकृत्यर्थत्वप्रत्ययार्थत्वविकल्पा वा, वस्तुतो निरस्तार्थप्रविभागा इति॥ १६१॥

एवं तरबादेः स्वार्थिकत्वेऽपि कुमारितरा इत्यादौ ङीबापत्तिरूपं दोषमुद्भाव्यानन्तरमभिहितं भाष्ये—"एवं तर्हि गुणोऽभिधीयते, अथवा क्रियाऽभिधीयते" इति।

अत्र गुणः शुक्लत्वलघुत्वादिकः, क्रिया तु प्रकर्षरूपा। तदेतद् भाष्यं व्याख्यातुमाह—षष्ठ्यन्तादधिके इति।

अस्यार्थः—तस्मात्=तरबादेः स्वार्थिकत्वे कुमारितरा इत्यादौ ङीबापत्तिरूपाद् दोषाद्धेतोः, अधिके=उत्कृष्टे, स्वाश्रयवर्तिनि गुणे, उत्कृष्टसमवेतायां प्रकर्षरूपायां क्रियायां वा षष्ठ्यन्तात् तरबादिः प्रत्ययो विधीयते। स्वाश्रयवर्तिनि इति गुणविशेषणाद् आश्रयान्तरवर्तिनि न भवति तरबादिप्रत्यय इति सूचितम्। तेन न विलिङ्गतादिरूपः प्रागुक्तो दोषः।

किञ्चात्र पक्षे गुणः क्रिया च प्रत्ययार्थ इति—तत्र वयस्विन्याः कुमार्या विशेषणत्वेनाप्राधान्यान्न 'कुमारितरा' इत्यत्र तरबन्तान् ङीबापत्तिरूपोऽपि दोषः। "प्रधानाप्रधानयोः प्रधाने कार्यं संप्रत्ययः" इति न्यायेन वयोवाचकस्येतराविशेषणत्व एव ङीपः संभवादिति।

करणसाधनेनातिशायनशब्देन गुण उच्यतेऽभिभावकः। अतिशयानमभिभवन्तं स्वाश्रयं प्रयोजयत्यतिशाययतीत्यतिशायन इति वा ण्यन्तात् कर्तरि ल्युटि गुणोऽभिधीयते। प्रकृष्यमाणेन हि गुणेन द्रव्यस्य समानगुणात् प्रकर्षो भवति, स्वतः प्रकर्षाभावात्। तेन च गुणेन स्वाश्रयसमवायिना स्वाश्रयव्यतिरेकोपजननात् प्रकृतिर्गुणाश्रयवाचिनी षष्ठ्यन्ता भवति गुणः प्रत्ययार्थः। शुक्लस्यातिशायनो गुणः शुक्लतरः। स्वाश्रयवर्तिनीति च वदन्नाश्रयान्तरवर्तिनि न भवति प्रत्यय इति विलिङ्गतादिपूर्वोक्तदोषो नावतरतीत्याह।

यदा तु भावसाधनो ल्युट् अतिशयोऽतिशायनमिति, तदा क्रिया प्रकर्षाख्योच्यत इत्येतस्यां वाच्यायां प्रत्ययः। क्रियोपजनिते च व्यतिरेके प्रकृतेः षष्ठी, शुक्लस्यातिशायनं शुक्लतर इति। व्यतिरिक्तश्चात्र गुणक्रियालक्षणः प्रत्ययार्थ इति वयस्विन्याः कुमार्या विशेषणत्वेनाप्राधान्यान्न भवति तदन्ताद् ङीप्प्रत्ययः॥ १६२॥

अत्र पक्षे गुणक्रियालक्षणोऽर्थः प्रत्ययवाच्यः प्रधानमिति द्रव्याभिधायिभिः पटादिभिः सामानाधिकरण्याभावो भाष्ये कथं न चोदित इत्याह—

**उपात्तं च प्रकृत्यर्थो द्रव्यमेवाश्रयस्तयोः।**
**सोऽयमित्यभिसंबन्धादभेदेन प्रतीयते ॥१६३॥**

---

अयं भावः—प्रागुक्तरीत्या करणसाधनेनातिशायनशब्देन गुणरूपोऽभिभावक उच्यते। अतिशेतेः करणे ल्युट्। "अतिशायने तमबिष्ठनौ" (पा० ५।३।५५) इति सूत्रे निपातनाद् दीर्घत्वम्। अतिशायनमभिभवन्तं स्वाश्रयं प्रयोजयति अतिशाययति इत्यतिशायन इति वा बाहुलकात् ण्यन्तात् कर्तरि ल्युटि गुणोऽभिधीयते। प्रकृष्यमाणेन हि गुणेन द्रव्यस्य समानगुणाद् द्रव्यात् प्रकर्षो भवति, द्रव्यस्य स्वतः प्रकर्षाभावात्। तेन च गुणेन स्वाश्रयसमवायिना स्वाश्रयव्यतिरेकोपजननात्=स्वाश्रये स्वभेदोपजननाद् गुणसमवायिनी=गुणप्रतियोगिकसमवायवदर्थवाचिका प्रकृतिः षष्ठ्यन्ता भवति, गुणः प्रत्ययार्थः। 'शुक्लस्यातिशायनो गुणः शुक्लतरः' इति। स्वाश्रयवर्तिनि इति च वदन् आश्रयान्तरवर्तिनि तस्मिन् न तरबादिः प्रत्ययो भवतीति विलिङ्गतादिः पूर्वोक्तदोषो नापततीत्याह।

यदा तु भावसाधनो ल्युट्, अतिशयोऽतिशायनमिति, तदा क्रिया प्रकर्षाख्या उच्यत इत्येतस्यां वाच्यायां तरबादिः प्रत्ययः। क्रियोपजनिते च व्यतिरेके=प्रकर्षाख्यक्रिया प्रयुक्ते च प्रकृतिप्रत्ययार्थयोर्भेदे प्रकृतेः षष्ठी, शुक्लस्यातिशायनं शुक्लतर इति। प्रकृत्यर्थव्यतिरिक्तश्चात्र गुणक्रियालक्षण· प्रत्ययार्थ इति—वयस्विन्याः कुमार्याः प्रत्ययार्थे विशेषणत्वेनाप्राधान्यान्न भवति तदन्तात् = तरबाद्यन्तात् कुमारितरा इत्यत्र ङीप् प्रत्यय इति॥ १६२॥

अत्र पक्षे गुणक्रियारूपोऽर्थस्तरबादिप्रत्ययवाच्यः प्रधानमिति द्रव्याभिधायिभिः पटादिशब्दैः सह तस्य सामानाधिकरण्याभावो भाष्ये कथं न चोदित इत्याशङ्क्याह—उपात्तञ्चेति।

अस्यार्थः—उपात्तञ्च = प्रकृत्या उपात्तञ्च, प्रकृत्यर्थो द्रव्यमेव तयोर्गुणक्रिययोराश्रयः। स च सोऽयमित्यभिसंबन्धात् तादात्म्याध्यासादभेदेन प्रतीयत इति द्रव्यस्य गुणक्रियाभ्यां सह सामानाधिकरण्यमुपपन्नमिति।

यदेव प्रकृतेः प्रातिपदिकस्य वाच्यं द्रव्यमत्र सन्निहितम्, तदेवानयोर्गुणक्रिययोः प्रत्ययवाच्ययोः सोऽयमित्यभेदसम्बन्धेनाश्रयः प्रतीयत इति भवति सामानाधिकरण्यम्। प्रकर्षप्रत्ययान्तस्य गुणक्रियामात्रे कदाचिदपि वृत्त्यदर्शनात् केवलं ङीप्-प्रतिसमाधानाय प्रक्रियायां व्यतिरेकार्थत्वं तरबादेरुपेयते।

स्वार्थिका एव त्विमेऽतिशयद्योतनात्। अत एवातिशयविशिष्टस्य द्रव्यस्यातिशयप्रत्ययान्तेनोपादानाश्रयतो लिङ्गवचनानि भवन्ति ॥ १६३ ॥

ननु च शुक्लशब्देनात्र गुणोपसर्जनं द्रव्यमुच्यते। तरबन्तेनाप्यतिशयविशिष्टं तदेव। तथा चाश्रितमात्रस्य केनचिदनभिधानात् कस्याश्रितस्याश्रयवल्लिङ्गवचने स्यातामित्याशङ्क्याह—

रूपाभेदाच्च तद् द्रव्यमाकाङ्क्षावत् प्रतीयते।
विशेषैर्भिन्नरूपैस्तदाश्रयैरिव युज्यते ॥१६४॥

इह शुक्लशब्देन गुणोपसर्जनं द्रव्यमात्रमुच्यते। तदेवातिशयविशिष्टं तरबन्तेनेति विशेषेषु तस्मात् पटादिषु न प्रतिपत्तिः, साधारण्यात् सर्वविशेषेषु द्रव्यमात्रस्य।

---

अयं भावः—यदेव प्रकृतेः प्रातिपदिकस्य वाच्यं द्रव्यमत्र तरबादिषु प्रत्ययेषु परेषु सत्सु सन्निहितम्, तदेवानयोर्गुणक्रिययोस्तरबादिप्रत्ययवाच्ययोः सोऽयमित्यभिसंबन्धेनाश्रयः प्रतीयत इति भवति द्रव्यस्य पदान्तरार्थस्य तरबादिप्रत्ययार्थाभ्यां गुणक्रियाभ्यां सह समानाधिकरण्यम्। प्रकर्षार्थकतरबादिप्रत्ययान्तरस्य च शुक्लतरादेर्गुणक्रियामात्रे कदाचिदपि वृत्त्यदर्शनात् कुमारितरा इत्यादौ केवलं ङीप् प्रति समाधानाय प्रक्रियादशायां तरबादेर्व्यतिरेकार्थत्वम्=प्रकृतितो भिन्नार्थकत्वमुपेयते।

वस्तुतस्तु इमे तरबादयः स्वार्थिका एव, प्रकृत्यर्थस्यातिशयस्य द्योतनात्। अत एव=तरबादीनां स्वार्थिकत्वादेव अतिशयविशिष्टस्य द्रव्यस्यातिशयार्थकतरबादिप्रत्ययान्तेनांशद्वयवता वाचकत्वद्योतकत्वाभ्यामुपादानादाश्रयतो लिङ्गवचनानि भवन्तीति ॥ १६३ ॥

ननु च शुक्लशब्देनात्र='शुक्लतरः पटः' इत्यादौ गुणोपसर्जनकं द्रव्यमुच्यते, तरबन्तेनाप्यतिशयविशिष्टं तदेवोच्यते। तथा चाश्रितमात्रस्य=आश्रितसामान्यस्य केनाप्यनभिधानात् कस्याश्रितस्याश्रयवल्लिङ्गवचने स्यातामित्याशङ्क्याह—रूपाभेदाच्चेति।

अस्यार्थः—तद्गुणोपसर्जनकं शुक्लादिपदाभिधेयं द्रव्यम्, रूपाभेदाच्च सर्वेषु द्रव्यविशेषेषु रूपसामान्याच्च, आकाङ्क्षावत् सामान्यस्य विशेषसाकाङ्क्षत्वेन द्रव्यविशेषविषयकाकाङ्क्षावत् प्रतीयते। आकाङ्क्ष्यमाणैश्च तैर्भिन्नस्वरूपैर्विशेषैः पश्चात् संबध्यमानत्वेनाश्रयैरिव तद्गुणोपसर्जनं द्रव्यं युज्यते। अत एवाश्रितत्वेन तद्व्यवह्रियत इति।

अयं भावः—इह शुक्लपदेन गुणोपसर्जनकं द्रव्यमात्रम्=द्रव्यसामान्यमुच्यते। तदेवातिशयविशिष्टं तरबन्तेनोच्यत इति तस्मात्=शुक्लादिपदात् पटादिषु विशेषेषु न प्रतिपत्तिः,

तथा च तत् पटादीन् विशेषानपेक्षमाणं प्रतीयत इति ते तस्यापेक्ष्यमाणा विशेषा विलक्षणा बहिरङ्गाः पश्चात्संबध्यमानत्वादाश्रयत्वेन व्यवह्रियन्ते। तच्च तदाश्रितत्वेन ॥ १६४ ॥

ततश्च—

भिन्नरूपेषु यल्लिङ्गं विशेषेषु व्यवस्थितम्।
संख्या च ताभ्यां द्रव्यात्मा सोऽभिन्नो व्यपदिश्यते ॥१६५॥

स निर्विशेषोऽर्थात्मा गणवचनशब्देनोच्यत इति तस्य संबध्यमानविशेषगतलिङ्गसंख्यातिदेशः सूत्रेण प्रतिपाद्यत इति ताभ्यामाश्रयलिङ्गसंख्याभ्यामुपलक्षितः प्रतिपाद्यते। एवं गुणपक्षे तस्य स्वाश्रयवृत्तित्वात् तद्गतमेव वचनमुपपद्यते। क्रियापक्षे तु तस्य यश्चैवातिशेते यश्चातिशय्यते उभौ तावाश्रयौ भवत इत्येवमपि द्विवचनं प्राप्नोती'ति चोदितं भाष्ये।

अत्रोत्तरमभिहितम्—'शेतिरकर्मक' इति ॥ १६५ ॥

अत्र पर्यनुयोगः—'अकर्मका अपि धातवः सोपसर्गाः सकर्मका भवन्ति इति। सिद्धान्तवादिना तु येनाभिप्रायेणाकर्मक इत्युक्तम्, तदाविष्करोति—'कर्मापदिष्टा

---

द्रव्यमात्रस्य=द्रव्यसामान्यस्य सर्वविशेषेषु=सर्वेषु विशेषद्रव्येषु साधारण्यात्=समानरूपत्वात्। तथा च तद्गुणोपसर्जनं द्रव्यसामान्यं पटादीन् विशेषानपेक्षमाणं प्रतीयत इति ते तस्यापेक्ष्यमाणा विशेषाः परस्परं विलक्षणाः पश्चात् संबध्यमानत्वाद् बहिरंगा आश्रयत्वेन व्यवह्रियन्ते, तच्च द्रव्यसामान्यं तदाश्रितत्वेन=पटादिरूपद्रव्यविशेषाश्रितत्वेन व्यवह्रियत इति ॥ १६४ ॥

ततश्च=तदाश्रितत्वेन व्यवहाराच्च आश्रयस्य लिङ्गसंख्ये तत्प्रतिपद्यते इत्याह—भिन्नरूपेषु यल्लिङ्गमिति।

अस्यार्थः—परस्परं भिन्नरूपेषु विशेषेषु यल्लिङ्गं व्यवस्थितम्, या च संख्या व्यवस्थिता, ताभ्यां सोऽभिन्नः सामान्यरूपो द्रव्यात्मा व्यपदिश्यते व्यवह्रियत इति।

अयं भावः—स निर्विशेषः=सामान्यरूपोऽर्थात्मा गुणवचनशब्देन=शुक्लादिशब्देनोच्यत इति तस्य=निर्विशेषस्यार्थात्मनः संबध्यमानविशेषगतलिङ्गसंख्याऽतिदेशः सूत्रेण=विशेषणानामित्यनेन प्रतिपाद्यत इति ताभ्यामाश्रयलिङ्गसंख्याभ्यामुपलक्षितोऽर्थो गुणवचनशब्देन प्रतिपाद्यते। एवं गुणपक्षे=गुणस्तरवाद्यर्थ इति पक्षे तस्य स्वाश्रयवृत्तित्वात् तद्गतमेव=आश्रयगतमेव वचनं तत्रोपपद्यते। क्रियापक्षे तु=प्रकर्षरूपा क्रिया तरवाद्यर्थ इति पक्षे तु "यश्चैवातिशेते, यश्चातिशय्यते, उभौ तौ तस्या आश्रयौ भवत इत्येवमपि द्विवचनं प्राप्नोति" इति चोदितं भाष्ये। क्रियापक्षे तरवन्ताद् द्विवचनं प्राप्नोतीति शङ्कितुराशयः।

अत्रोत्तरमभिहितं तत्रैव—"शेतिरकर्मकः" इति ॥ १६५ ॥

अत्र पर्यनुयोगः—"अकर्मका अपि धातवः सोपसर्गाः सकर्मका भवन्ति" इति। अत्र चातिशेतिरभिभवार्थकत्वेन सकर्मक इति पर्यनुयोक्तुराशयः। सिद्धान्तवादिना तु येनाभिप्रायेणा-

विधयः कर्मस्थभावकानां कर्मस्थक्रियाणाम्,' 'कर्तृस्थभावकः शेतिः, इति किल समवायिकारणमस्य कर्म नास्तीत्येवमकर्मकोऽभिहितः ।

तदेतद् व्याचष्टे--

**आश्रयः समवायी च निमित्तं लिङ्गसंख्ययोः ।**
**कर्तृस्थभावकः शेतिरतो भाष्य उदाहृतः ॥१६६॥**

क्रिया यत्र समवैति, स तस्या आश्रयः । स चैक एवेत्येकवचनं भवति । अभिभवनं ह्यत्र शेत्यर्थः कर्तरि समवैति, न कर्मण्यभिभाव्ये । यत्किञ्चित् कर्म निमित्ततयाभिहितं तत् कर्मण्यपदिष्टमिति द्विवचनमपि कर्मापदिष्टो भाष्य उक्तः ॥ १६६ ॥

---

कर्मक इत्युक्तम्, तदाविष्करोति भाष्यकारस्तत्रैव—"कर्मापदिष्टा विधयः कर्मस्थभावकानां कर्मस्थक्रियाणाम्, कर्तृस्थभावकः शेतिरिति किल समवायिकारणमस्य कर्म नास्ति" इत्येवमकर्मकोऽभिहितः । तथा चाकर्मक इत्यस्य प्रकर्षरूपक्रियासमवायिकारणकर्मरहित इत्यर्थः सिद्धान्तिनोऽभिप्रेतः ।

एतद्भाष्यार्थस्तु—कर्मणि सति अपदिष्टाः = कर्मनिमित्तीकृत्य व्यवहृता विधयः कर्मस्थभावकानां कर्मस्थक्रियाणाञ्च धातूनां भवन्ति, शेतिस्तु सकर्मकोऽपि कर्तृस्थभावकः, न तु कर्मस्थभावकः, अभिभवस्य भावरूपस्य क्रियारूपस्य वा कर्तृस्थत्वादित्यस्य = अभिभवरूपस्य धात्वर्थस्य कर्तृस्थत्वेन समवायिकारणं कर्म नास्ति, अस्य निमित्तकारणं तु कर्म भवत्येवेति कर्मसत्त्वेऽपि शेतिरकर्मक इत्युक्तमिति समवायिकारणरूपस्य कर्मण आश्रयरूपस्याभावात् कर्तृरूपस्यैकस्यैवाश्रयस्य सत्त्वादेकवचनमेवेति । स परिस्पन्दनसाधनसाध्यो धात्वर्थः क्रिया, अपरिस्पन्दनसाधनसाध्यो धात्वर्थस्तु भाव इति ।

तदेतद् भाष्यं व्याचष्टे—आश्रयः समवायी चेति ।

अस्यार्थः—समवायी च प्रकर्षक्रियायाः समवायिकारणमेवाश्रयः, लिङ्गसङ्ख्ययोर्निमित्तम्, न तु तस्या असमवायितन्निमित्तम् = लिङ्गसङ्ख्ययोर्निमित्तम् । अतः शेतिरुपसर्गवशात् सकर्मकत्वेऽपि कर्तृस्थभावकः, कर्तृस्थभावकत्वेन क्रिया समवायिकारणकर्मरहितोऽकर्मक उदाहृत इति ।

अयं भावः—प्रकर्षरूपा, तत्प्रयुक्तान्याभिभवरूपा वाऽक्रिया यत्र समवैति, स तस्या आश्रयः कर्तृरूपः, स चैक एवेत्येकवचनमेव तरबन्ताद् गुणवचनाद् भवति 'शुक्लतरः पटः' इति । अभिभवनं ह्यत्र शेत्यर्थः कर्तरि समवैति, न कर्मण्यभिभाव्ये । यत्किचित् कार्यं कर्मनिमित्तकतयाऽभिहितम् तत्सर्वं कर्मण्यपदिष्टम् = कर्मनिमित्तकतया व्यवहृतमिति द्विवचनमपि कर्मापदिष्टो भाष्ये उक्तः पूर्वपक्षिणा आक्षेप्त्रेति ॥ १६६ ॥

कर्मैकत्वापेक्षेण हि कर्तुरेकत्वेन द्वित्वस्यात्र जननं स्यात् । यदि कर्माप्यसमवायि गृह्येतेत्याह—

निमित्तमाश्रयत्वेन गृह्येत यदि साधनम् ।
कर्मापदिष्टयोः प्राप्तिस्तत्र स्याल्लिङ्गसंख्ययोः ॥१६७॥

'गुणवचनानामाश्रयतो लिङ्गवचनानि भवन्ति' इत्यत्राश्रयशब्देन यदि निमित्तमात्रमुच्येत, तदा क्रियाया आत्मलाभे द्वयमपेक्ष्यते कर्तृकर्मरूपमत्र साधनमिति स्यात् कर्मापेक्षयापि तद्गतं लिङ्गम् । तदपेक्ष्य द्वित्वोपजननाच्च द्विवचनम् । अभिभवो ह्यभिभाव्यमपेक्षते । तत्र कर्तृकर्मस्थत्वेन च क्रियायाः प्रसिद्धत्वान्न करणाद्यपेक्षया बहुवचनप्रसङ्गश्चोदितः । तदेवमतिशायनभाष्यं लिङ्गवचनातिदेशविचारप्रसङ्गेन व्याख्यातम् ॥ १६७ ॥

इदानीं तेनैव प्रातिलोम्यक्रमेण स्त्रीसूत्रवार्त्तिकभाष्यं लिङ्गवचनातिदेशविचारप्रसङ्गेन व्याख्यातुमाह—

शास्त्रे निमित्तभावेन समुदायादपोद्धृतः ।
स्त्र्यर्थस्तस्येच्छया योगः प्रकृत्या प्रत्ययेन वा ॥१६८॥

---

कर्मैकत्वापेक्षेण हि कर्तृरेकत्वेन द्वित्वस्यात्र=कर्तृकर्मणोर्जननं स्यात् । यदि क्रियाया असमवाय्यपि कर्म आश्रयत्वेन गृह्येतेत्यत्राह—निमित्तमाश्रयत्वेनेति ।

अस्यार्थः—यदि क्रियाया असमवाय्यपि निमित्तरूपं साधनम् "गुणवचनानामाश्रयतो लिङ्गवचनानि भवन्ति" इत्यत्राश्रयत्वेन गृह्यते, तदा तत्र गुणवचने, कर्मापदिष्टयोर्लिङ्गसङ्ख्ययोः प्राप्तिः स्यात्, न त्वेतदस्ति, क्रियाया असमवायिनः कर्मणः क्रियाया आश्रयत्वेन व्यपदेशासंभवादिति ।

अयं भावः—'गुणवचनानामाश्रयतो लिङ्गवचनानि भवन्ति' इत्यत्राश्रयशब्देन यदि निमित्तमात्रम्=क्रियायाः समवायि असमवायि वा सर्वंनिमित्तमुच्येत, तदाऽत्र क्रियया आत्मलाभे कर्तृकर्मरूपं द्वयं साधनमपेक्षक्ष्यत इति स्यात् कर्मापेक्षयाऽपि तद्गतम्=कर्मगतं लिङ्गं गुणवचनेषु तरबन्तेषु तदपेक्ष्य=कर्मापेक्ष्य द्वित्वोपजननाच्च तत्र द्विवचनम् । अभिभवो हि अभिभाव्यमपेक्षते । तत्र=गुणवचनेषु कर्मापेक्षया द्विवचनप्रसङ्गवत् करणाद्यपेक्षया बहुवचनप्रसङ्गस्तु न चोदितः, क्रियायाः कर्तृकर्मस्थत्वेन प्रसिद्धत्वात्, करणस्थत्वस्य तस्या अप्रसिद्धेः, करणस्य क्रियाश्रयत्वेन व्यपदेशासंभवादिति । तदेवमतिशायनभाष्यं लिङ्गवचनातिदेशविचारप्रसङ्गे न व्याख्यातमिति ॥ १६७ ॥

इदानीं तेनैव=नञ्समासबहुव्रीहिद्वन्द्वस्त्र्यतिशयेषु ये इत्यत्र निर्दिष्टेनैव प्रातिलोम्यक्रमेण स्त्रीसूत्रवार्त्तिकभाष्यम्="स्त्रियाम्" (पा० ४।१।३) इति सूत्रोक्तवार्त्तिकभाष्यं प्रवृत्तपरिसमाप्तलिङ्गवचनातिदेशविचारप्रसङ्गेन व्याख्यातुमाह—शास्त्रे निमित्तभावेनेति ।

स्थितलक्षणो लौकिकोऽर्थः स्त्रीत्वविशिष्टद्रव्यस्वभावो निरंशात् पदात् प्रतीयते। तस्य तु पदस्य प्रकृतिप्रत्ययपरिकल्पनयान्वाख्याने तयोः प्रकृतिप्रत्यययोरवयवरनुशासनाङ्गत्वेन प्रकृत्यर्थप्रत्ययार्थतया निरंशोऽप्यसावर्थो विभज्यते।

तत्र समित्, दृषदित्यादौ प्रातिपदिकमात्रेणापि स्त्रीत्वप्रतिपादनं दृष्टम्, गौरी, किशोरीत्यादौ प्रत्ययसहितेन, इत्यन्वयव्यतिरेकयोर्नियमाभावादन्वाख्यातुरिच्छया प्रयोगानुरोधिन्या प्रकृतिप्रत्ययार्थतया तद्विमर्शः॥ १६८॥

तथाहि—

स्त्रीशब्दो गुणशब्दत्वात् तुल्यधर्मा सितादिभिः।
गुणमात्रे प्रयुज्येत संस्त्यानवति वाश्रये॥१६९॥

संस्त्यानं रूपादीनां संहननं गुणः, तत्र वा स्त्रीशब्दो वर्तते, तद्वति वा गुणिनीति शुक्लादिशब्दैस्तुल्यः। तेऽपि हि पटस्य शुक्लः, शुक्लः पट इत्यादौ गुणमात्रे गुणिनि च दृष्टप्रयोगाः।

---

अस्यार्थः—लौकिकः स्थितलक्षणः=स्थिरस्वभावः स्त्रीत्वविशिष्टद्रव्यरूपो यः पदार्थः समुदायात्मकः, तस्मात् समुदायादन्वाख्यानार्थमपोद्धृतो यः स्त्र्यर्थः=स्त्री रूपोऽर्थः तस्य शास्त्रे—स्त्रीप्रत्ययविधायके शास्त्रे, निमित्तभावेनान्वाख्यानाङ्गत्वेन इच्छया अन्वाख्यातुरिच्छया, प्रकृत्या प्रातिपदिकेन, प्रत्ययेन वा योगो भवति इति स्त्रीत्वस्य प्रकृत्यर्थत्वप्रत्ययार्थत्वयोर्द्वैते तद्विमर्श आरभ्यते इति।

अयं भावः—निरंशात् खट्वारमादिपदात् स्थितलक्षणो लौकिकोऽर्थः स्त्रीत्वविशिष्टस्वरूपः प्रतीयते। किन्तु तत्र पदे निरंशेऽपि प्रकृतिप्रत्ययपरिकल्पनया तस्य पदस्यान्वाख्याने क्रियमाणे तयोः प्रकृतिप्रत्यययोरवयवयोरनुशासनाङ्गत्वेन निरंशोऽप्यसावर्थः प्रकृतिप्रत्ययार्थतया विभज्यते।

तत्र 'समिद्, दृषद्' इत्यादौ प्रातिपदिकमात्रेणापि स्त्रीत्वप्रतिपादनं दृष्टम्, 'गौरी किशोरी' इत्यादौ प्रत्ययसहितेन प्रातिपदिकेन इत्यन्वयव्यतिरेकयोर्नियमाभावात्=व्यभिचारात् प्रयोगानुरोधिन्याऽन्वाख्यातुरिच्छया प्रकृतिप्रत्ययार्थतया=प्रकृत्यर्थप्रत्ययार्थरूपे द्वे कोटी आलम्ब्य तद्विमर्शः=स्त्रीत्वरूपार्थविचार आरभ्यत इति॥ १६८॥

तथाहि—तद्विमर्शमेव दर्शयति—स्त्रीशब्द इति।

अस्यार्थः—संस्त्यानं रूपादीनां संहननम्=संहतत्वम्, गुणः स्त्रीशब्दस्य प्रवृत्तिनिमित्तम्। तथा च स्त्रीशब्दो गुणशब्दत्वाद्=गुणार्थकशब्दत्वात्, सितादिभिः शुक्लादिभिः शब्दैस्तुल्यधर्मा सदृशः, अतः शुक्लादयो यथा गुणे गुणिनि च वर्तन्ते तथा स्त्रीशब्दः संस्त्यानरूपे गुणमात्रे प्रयुज्येत, वा=अथवा, संस्त्यानवति=संस्त्यानरूप गुणवति आश्रये प्रयुज्येत।

एवञ्च "स्त्रियाम्" इति निर्देशे यदा गुणमात्रवृत्तिः स्त्रीशब्दः, तदा प्रातिपदिकात् स्त्रीत्वे गुणे वर्तमानात् प्रत्यय इति प्रकृत्यर्थविशेषणपक्षे भवति। अभिधेये स्त्रीत्वे टाबादय इति तु प्रत्ययार्थपक्षो जायते।

यदा तु तद्वति वृत्तिः, तदा संस्त्यानवति द्रव्ये वर्तमानात् प्रातिपदिकात् स्वार्थे टाबादय इति प्रकृत्यर्थपक्षो भवति।

अत्र तु पक्षे यथा शुक्लादयो गुणं निमित्तीकृत्य तद्वति वर्तन्ते, नैवं किञ्चित् प्रातिपदिकमस्ति, यस्य द्रव्ये वृत्तौ स्त्रीत्वं निमित्तम्। स्त्रीशब्द एव हि तथा। तत एव विधौ सर्वप्रकृतिसाधारण्येन "स्त्रियाम्" इत्यपार्थको निर्देशः स्यात्। अतः स्त्रियां स्त्री-शब्दप्रत्यायितेऽर्थे यत् प्रातिपदिकं वर्तत इति स्त्रीशब्देन प्रातिपदिकार्थ उपलक्ष्यते॥ १६९॥

---

एवञ्च "स्त्रियाम्" (पा० ४।१।३) इति निर्देशे यदा स्त्रीशब्दो गुणमात्रवृत्तिः, तदा स्त्रीत्वे गुणे वर्तमानात् प्रातिपदिकात् टाबादिप्रत्यय इति स्त्रीत्वं प्रकृत्यर्थविशेषणमिति पक्षः। प्रातिपदिकात् टाबादयः स्त्रीत्वे वाच्ये इत्यर्थे तु प्रत्ययार्थः स्त्रीत्वमिति पक्षः।

यदा तु स्त्रीशब्दस्य गुणवति वृत्तिः, तदा संस्त्यानवति द्रव्ये वर्तमानात् प्रातिपदिकात् स्वार्थे टाबादय इति प्रवृत्तिनिमित्ततया प्रकृत्यर्थः स्त्रीत्वमिति पक्षः स्यात्।

अत्र तु पक्षे कस्यापि स्त्रीशब्दातिरिक्तस्य शब्दस्य स्त्रीत्वं न प्रवृत्तिनिमित्तम्। स्त्रीशब्द एव स्त्रीप्रत्ययविधौ सर्वप्रकृतिसाधारणः "स्त्रियाम्" ( पा० ४।१।३ ) इति निर्देशोऽनर्थकः स्यात्। अतः "स्त्रियाम्" ( पा० ४।१।३ ) इत्यस्य स्त्रीशब्दप्रत्यायितेऽर्थे लक्षणया तत्र वर्तमानात् प्राति-पदिकात् स्वार्थे टाबादय इत्येवं प्रकृत्यर्थः स्त्रीत्वमिति पक्षो भवतीति।

अयं भावः—संस्त्यानं रूपादीनां संहननम्=संहतत्वं गुणः, तत्र वा स्त्रीशब्दो वर्तते, तद्वति वा गुणिनि इति शुक्लादिशब्दैस्तुल्यः सः। शुक्लादयोऽपि हि 'पटस्य शुक्लः, शुक्लः पटः' इत्यादौ गुणमात्रे=केवले गुणे गुणिनि च इष्टप्रयोगाः।

एवञ्च तत्र तत्र प्रत्ययविधौ "स्त्रियाम्" ( पा० ४।१।३ ) इति निर्देशे यदा गुणमात्रवृत्तिः स्त्रीशब्दः तदा स्त्रीत्वे गुणे वर्तमानात् प्रातिपदिकात् टाबादिप्रत्यय इति प्रकृत्यर्थविशेषणं स्त्रीत्वमिति पक्षो भवति। अभिधेये स्त्रीत्वे=स्त्रीत्वे वाच्ये टाबादय इत्यर्थे तु टाबादिप्रत्ययार्थः स्त्रीत्वमिति पक्षो जायते।

यदा तु स्त्रीशब्दस्य तद्वति=स्त्रीत्ववति वृत्तिः, तदा संस्त्यानरूपस्त्रीत्ववति द्रव्ये वर्तमानात् प्रातिपदिकात् स्वार्थे टाबादय इति तदा प्रकृत्यर्थः स्त्रीत्वमिति पक्षो भवति।

अत्र तु पक्षे यथा शुक्लादयः शब्दा गुणं निमित्तीकृत्य वर्तन्ते=प्रवर्तन्ते नैवं किञ्चिदपि प्रातिपदिकमस्ति, यस्य द्रव्ये वृत्तौ=प्रवृत्तौ स्त्रीत्वं निमित्तम्। स्त्रीशब्द एव हि तथा। तत एव तु विधौ=तत्रैव तु स्त्रीप्रत्ययविधौ सर्वप्रकृतिसाधारण्येन स्त्रियामिति निर्देशोऽपार्थकः स्यात्। अतः स्त्रियामित्यस्य स्त्रीशब्दप्रत्यायितेऽर्थे लक्षणया तत्र यत्प्रातिपदिकं वर्तत इत्यर्थस्वीकारे स्त्रीशब्देन स्त्रीसमानाधिकरणः प्रातिपदिकार्थः उपलक्ष्यते=लक्षणया बोध्यत इति॥ १६९॥

२६

ततश्च कुमारः स्त्रीति स्त्रीशब्दसमानाधिकरणेऽर्थे वर्तमानात् प्रातिपदिकादित्ययं पक्षो (प्रत्ययो) जायते। स चानिष्ट इत्युक्तम्—'स्त्रीसमानाधिकरणादिति चेद्, भूतादिष्वतिप्रसङ्गः। षट्संज्ञकेभ्यश्च प्रतिषेधः' इति।

तदेतद् व्याचष्टे—

**स्त्र्यर्थः संस्त्यानवद् द्रव्यं प्रकृत्यर्थश्च यद्यसौ।**
**द्रव्योपलक्षणार्थत्वं संस्त्यानस्य तथा सति ॥१७०॥**

संस्त्यानेन निमित्तभूतेनावच्छिन्नं संस्त्यानवत्। तथा सतीति संस्त्याननिमित्तस्यार्थस्य स्त्रीशब्देन निर्देशे सति द्रव्यस्य शब्दान्तरोपादानस्य संस्त्यानमुपलक्षणं भवेत्। तन्निमित्तेऽर्थे कस्यचिदप्यप्रवृत्तेरित्यभिप्रायः ॥ १७० ॥

---

ततश्च="स्त्रियाम्" (पा० ४।१।३) इति निर्देशस्य स्त्रीसमानाधिकरणप्रातिपदिकार्थलक्षकत्वाच्च 'कुमारः, स्त्री' इत्यत्र "स्त्रीसमानाधिकरणे" अर्थे वर्तमानात् प्रातिपदिकादित्यर्थस्वीकारे अयं प्रत्ययः=स्त्रीत्वद्योतको ङीप् प्रत्ययः कुमारशब्दाद् जायते। स चानिष्ट इत्युक्तं भाष्ये—"स्त्री समानाधिकरणादिति चेद् भूतादिष्वतिप्रसङ्गः। षट् संज्ञकेभ्यश्च प्रतिषेधः" इति।

अस्यार्थः—स्त्रीसमानाधिकरणात् प्रातिपदिकात् टाबादय इति यद्युच्यते, तदा भूतादिषु 'भूतमियं ब्राह्मणी' इत्यादिषु टाबादेरतिप्रसङ्गः। 'पञ्च ब्राह्मण्यः' इत्यादौ च षट्संज्ञकेभ्यः 'ऋन्नेभ्यो ङीप्' (पा० ४।१।५) प्राप्नोति तस्य "न षट् स्वस्रादिभ्यः" (पा० ४।१।१०) इति प्रतिषेधोऽपूर्वो वक्तव्य इति।

तदेतद् भाष्यं व्याचष्टे-स्त्र्यर्थः संस्त्यानवदिति।

अस्यार्थः—स्त्र्यर्थः=स्त्रीशब्दार्थः, संस्त्यानवत्=संस्त्यानरूपं यत्स्त्रीत्वं तद्रूपो यो गुणस्तद्वद् द्रव्यम्, यद्यसौ प्रकृत्यर्थश्च=प्रकृत्यर्थस्तु भवति, तथा सति संस्त्यानरूपस्त्रीत्वविशिष्टस्यार्थस्य स्त्रीशब्देन निर्देशे सति संस्त्यानस्य स्त्रीशब्दप्रवृत्तिनिमित्तभूतस्य द्रव्योपलक्षणार्थत्वम्, शब्दान्तरोपात्तस्त्रीसमानाधिकरणद्रव्योपलक्षणार्थत्वं स्यात्। ततश्च 'भूतमियं ब्राह्मणी' इत्यादावतिप्रसङ्गः। अत्र भूतशब्दः पूतनावाची। 'पञ्च ब्राह्मण्यः' इत्यादौ स्त्रीप्रत्ययप्रतिषेधार्थं "न षट् स्वस्रादिभ्यः" (पा० ४।१।१०) इति प्रतिषेधश्चारब्धव्यः स्यादिति।

अयं भावः—संस्त्यानेन निमित्तभूतेन=इतरभेदे निमित्तभूतेन=विशेषणेनेति यावत्, अवच्छिन्नम्=विशिष्टं संस्त्यानवत्। कारिकास्थस्य तथा सति इत्यस्यार्थः—संस्त्याननिमित्तस्यार्थस्य=संस्त्यानरूपेतरभेदनिमित्तकस्यार्थस्य—संस्त्यानरूपविशेषणकस्यार्थस्य—संस्त्यानविशिष्टस्यार्थस्येति यावत्, स्त्रीशब्देन निर्देशे सतीति। 'भूतमियं ब्राह्मणी' इत्यादौ शब्दान्तरोपात्तस्य द्रव्यस्य=भूतादिपदोपात्तस्य स्त्रीसमानाधिकरणस्य द्रव्यस्य संस्त्यानमुपलक्षणं भवेत्। तन्निमित्तेऽर्थे=संस्त्यानरूपेतरभेदनिमित्तकेऽर्थे—संस्त्यानविशेषणकेऽर्थे—संस्त्यानविशिष्टेऽर्थे इति यावत् कस्यचिदपि स्त्रीशब्दातिरिक्तस्य प्रातिपदिकस्यावृत्तेरिति ॥ १७० ॥

एवं सति को दोष इत्याह—

**संस्त्यानेन क्वचिद् द्रव्यं दृष्टं यदुपलक्षितम् ।**
**अनङ्गीकृतसंस्त्यानात् तद्वृत्तेः प्रत्ययो भवेत् ॥१७१॥**

अनङ्गीकृतमनुपात्तं वाच्यत्वेन संस्त्यानं स्त्रीत्वं येन तद्वृत्तेः स्त्रीशब्दसन्निधापितेऽर्थे वर्तमानात् प्रातिपदिकात् प्रत्ययः प्रसज्येत । बहिरङ्गस्यैव पदान्तरोपलक्षितार्थस्यान्वाख्याने निमित्तत्वेनापेक्षणात् ॥ १७१ ॥

अत्रोदाहरणमाह—

**भूतादयः षडाख्याश्च संस्त्यानेनोपलक्षिते ।**
**ब्राह्मण्यादौ यदा वृत्तास्तेभ्यः स्युः प्रत्ययास्तदा ॥१७२॥**

यथा कुमारः स्त्रीति स्त्रीशब्दप्रत्यायितेऽर्थे कुमारशब्दो वृत्तः स्त्रीप्रत्ययमस्मिन् पक्षे प्रतिपद्यते । तथा भूतमियम्, कारणमियम्, आवपनमियं ब्राह्मणीत्यत्र भूतादिशब्देभ्यो

---

एवं सति=स्त्रीशब्देन निर्देशे संस्त्यानस्य द्रव्योपलक्षणार्थत्वे सति, को दोष इत्याह—संस्त्यानेन क्वचिदिति ।

अस्यार्थः—यद् द्रव्यं क्वचित्='भूतमियं ब्राह्मणी' इत्यादौ भूतशब्दवाच्यम्, ब्राह्मणीपदसमानाधिकरणभूतपदवाच्यत्वात्, ब्राह्मणीपदार्थमतेन संस्त्यानेनोपलक्षितम्, न तु विशिष्टं दृष्टम्, अनङ्गीकृतसंस्त्यानात्=अनङ्गीकृतम्—वाच्यत्वेनानुपात्तं संस्त्यानं स्त्रीत्वं येन भूतशब्देन तस्मात्—तद्वृत्तेः—ब्राह्मणीपदार्थगतसंस्त्यानोपलक्षिते द्रव्ये वर्तमानाद् भूतशब्दात् टाप् प्रत्ययो भवेत् । एवं 'कुमारः स्त्री' इत्यदावाक्षेपे ङीप्प्रत्ययो भवेदिति ।

अयं भावः—"स्त्रियाम्" ( पा० ४।१।३ ) इति निर्देशे प्रागुक्तरीत्या संस्त्यानस्य शब्दान्तरोपात्तद्रव्योपलक्षणार्थत्वेऽनङ्गीकृतं वाच्यत्वेनानुपात्तं संस्त्यानं स्त्रीत्वं येन तद्वृत्तेः स्त्रीशब्दसंनिधापिते=स्त्र्यर्थकशब्दसंनिधापितेऽर्थे वर्तमानात् प्रातिपदिकात् टावादिप्रत्ययः प्रसज्येत । ततश्च 'भूतमियं ब्राह्मणी' इत्यत्र 'भूता ब्राह्मणी, कुमारः स्त्री' इत्यत्र कुमारी स्त्रीति स्यात् । बहिरङ्गस्यैव पदान्तरोपलक्षितार्थस्य=ब्राह्मण्यादिपदवाच्यस्य स्त्रीत्वरूपस्यार्थस्य भूतादिपदान्वाख्याने निमित्तत्वेनापेक्षणादिति ॥ १७१ ॥

अत्रोदाहरणमाह—भूतादयः षडाख्याश्चेति ।

अस्यार्थः—भूतादयः=भूतकुमारादयः शब्दाः, षडाख्याश्च=पञ्चषडादयः शब्दाः षट्संज्ञकाः, संस्त्यानेन स्त्रीत्वेनोपलक्षिते ब्राह्मण्यादौ यदा सामानाधिकरण्येन वृत्ताः=वृत्तिमन्तः, तदा तेभ्यो भूतकुमारादिभ्यः टाबादयः प्रत्ययाः स्युः, ते चानिष्टा इति ।

अयं भावः—यथा 'कुमारः स्त्री' इति स्त्रीशब्दप्रत्यायितेऽर्थे सामानाधिकरण्येन वृत्तः कुमारशब्दः अस्मिन् पक्षे=स्त्रीसमानाधिकरणात् प्रातिपदिकात् स्वार्थे टावादय इति पक्षे स्त्रीप्रत्ययं प्रतिपद्यते=प्राप्नोति । तथा भूतमियम्, कारणमियम्, आवपनमियं ब्राह्मणीत्यत्र भूतकारणावपन-

ब्राह्मणीशब्दोपलक्षितस्त्रीत्वेऽर्थे वर्तमानेभ्यष्टाप् स्यात्। तथा पञ्च षट् सप्त नव दश ब्राह्मण्य इति पञ्चादिभ्यः स्त्रीप्रत्ययप्रसङ्गे "न षट्स्वस्रादिभ्यः" (५।१।१०) इति प्रतिषेधो वक्तव्यः स्यात्। प्रकृत्यर्थविशेषणपक्षे स्त्रीत्ववचनाट्टाबादिरित्यनङ्गीकृत-संस्त्यानान्न भवतीति स्त्रीसमानाधिकरणपक्ष एवायं दोषः ॥ १७२ ॥

तथाहि—

**तद्वन्तो हि प्रधानत्वात् प्रत्ययानां प्रयोजकाः।**
**सामानाधिकरण्येऽपि तस्माट्टाबादिसम्भवः ॥१७३॥**

अत्र पक्षे संस्त्यानाभिधानं प्रातिपदिकेन नाश्रीयते प्रत्ययोत्पत्तौ। अपि तु संस्त्यानवन्तः स्त्रीशब्दोपलक्षिता अर्थाः प्रधानानि प्रत्ययानां प्रवर्तका इत्युप-सर्जनत्वात् संस्त्यानस्य पदान्तरेण बाह्येन समानाधिकरणत्वेऽपि तथाभूतस्य संस्त्यानस्य प्रतीतेष्टाबादयो भवेयुरेव।

न ह्येतदत्र शक्यते वक्तुम्—कथं पदान्तरगम्योऽर्थः शब्दसंस्कारे निमित्तमिति। तथाभूतस्यैव वचनेनाश्रयणात् ॥ १७३ ॥

---

शब्देभ्यो वाच्यतया ब्राह्मणीशब्दोपलक्षिते स्त्रीत्वरूपेऽर्थे सामानाधिकरण्येन वर्तमानेभ्यष्टाप् स्यात्। तथा—'पञ्च, षट्, सप्त, नव, दश, ब्राह्मण्यः' इत्यत्र पञ्चादिभ्यः षट्संज्ञकेभ्यः स्त्रीप्रत्ययप्रसङ्गे "न षट्स्वस्रादिभ्यः" (पा० ५।१।१०) इति प्रतिषेधो वक्तव्यः स्यात्। स्त्रीत्वं प्रकृत्यर्थविशेषणमिति पक्षे तु स्त्रीत्ववचनाट्टाबादिरिति वाच्यत्वेनानङ्गीकृतसंस्त्यानान्न भवतीति स्त्रीसमानाधिकरणपक्ष एव=स्त्रीसमानाधिकरणप्रातिपदिकप्रकृतिकटाबादिप्रत्ययविधानपक्ष एव अयं दोषः=भूतादिषु अतिप्रसङ्गः, षट्संज्ञकेषु च टाबादिप्रतिषेधस्य वक्तव्यत्वम्, न तु स्त्रीत्वं प्रकृत्यर्थविशेषणमिति पक्षे, भूतादेः स्त्रीत्ववाचकत्वाभावादिति ॥ १७२ ॥

तथाहि=स्त्रीसमानाधिकरणपक्षे भूतादिशब्देभ्यष्टाबादिप्रत्ययप्रसङ्गरूपं दोषमेवोप-पादयति—तद्वन्तो हीति।

अस्यार्थः—हि=यत., तद्वन्तः=संस्त्यानरूपस्त्रीत्ववन्तो ब्राह्मण्यादयो विशेष्यत्वेन प्रधानत्वाद् भूतादिशब्देभ्यष्टाबादिप्रत्ययानां प्रयोजकाः, तस्मात् सामानाधिकरण्येऽपि=स्त्री-समानाधिकरणात् प्रातिपदिकात् स्वार्थे टाबादय इति पक्षेऽपि, भूतादिशब्देभ्यष्टाबादिप्रत्ययसंभव इति।

अयं भावः—अत्र पक्षे=स्त्रीसामानाधिकरण्यपक्षे प्रातिपदिकेन संस्त्यानाभिधानं टाबादि-प्रत्ययोत्पत्तौ निमित्ततयानाश्रीयते, अपि तु संस्त्यानवन्तो वाच्यतया स्त्रीशब्दोपलक्षिता अर्थाः प्रधानानि टाबादिप्रत्ययानां प्रवर्तका इति संस्त्यानस्योपसर्जनत्वाद् भूतादिशब्दानां बाह्येन पदान्तरेण ब्राह्मण्यादिना समानाधिकरणत्वेऽपि तथाभूतस्य=उपसर्जनस्य संस्त्यानस्य प्रतीतेर्भूतादि-शब्देभ्यष्टाबादयो भवेयुरेव।

कथं पदान्तरगम्यः स्त्रीत्वरूपोऽर्थो भूतादिशब्दसंस्कारे निमित्तमित्येतदत्र न हि वक्तुं शक्यते। तथाभूतस्यैव=पदान्तरगम्यस्यैव स्त्रीत्वरूपस्यार्थस्य वचनेन सूत्ररूपेण प्रागुक्तरीत्या निमित्ततयाऽऽश्रयणादिति ॥ १७३ ॥

एवं हि स्त्रीसमानाधिकरणपक्षं दूषयित्वा 'सिद्धं तु स्त्रियाः प्रातिपदिकविशेषणत्वात् स्वार्थे टाबादयः' इति प्रकृत्यर्थविशेषणपक्षोऽभिहितः।

एतदुत्थानबीजमाह—

**गुणमात्राभिधायित्वं स्त्रीशब्दे वर्ण्यते यदा।**
**प्रकृत्यर्थश्च संस्त्यानं स्वार्थिकाः प्रत्ययास्तदा ॥१७४॥**

संस्त्यानमात्रं यदा स्त्रीशब्दवाच्यम्, तच्च प्रातिपदिकविशेषणमिति, तदा स्त्रीत्वे वर्तमानात् प्रातिपदिकाट्टाबादय इत्यर्थस्य तेषामन्यस्यानिर्देशात् स्वार्थिकत्वं भवति। यदा तु स्त्रीत्वेऽभिधेये इत्यर्थः, तदा प्रत्ययार्थविशेषणपक्षो जायते ॥ १७४ ॥

ननु च स्त्रीत्वमात्रे कस्यचित् प्रातिपदिकस्य वृत्त्यसम्भवात् कथं प्रकृत्यर्थविशेषणपक्षो भवतीत्याह—

**संस्त्याने केवले वृत्तिः प्रकृतीनां न विद्यते।**
**तदाविष्टे ततो द्रव्ये गृह्यन्ते समवस्थिताः ॥१७५॥**

---

एवं हि स्त्रीसमानाधिकरणप्रातिपदिकप्रकृतिकटाबादिप्रत्ययविधानपक्षं दूषयित्वा "सिद्धं तु स्त्रियाः प्रातिपदिकविशेषणत्वात् स्वार्थे टाबादयः" इति प्रकृत्यर्थविशेषणं स्त्रीत्वमिति पक्षोऽभिहितः।

अत्र भाष्ये 'स्त्रियाः' ( पा० ६।४।७९ ) इत्यस्य स्त्रीत्वस्य इत्यर्थः। एतत्पक्षोत्थानबीजमाह—गुणमात्राभिधायित्वमिति।

अस्यार्थः—यदा स्त्रीशब्दे भावप्रधाननिर्देशेन संस्त्यानात्मकस्त्रीत्वरूपगुणमात्राभिधायित्वं वर्ण्यते, तदा संस्त्यानं च=तु प्रकृत्यर्थः, टाबादिप्रत्ययास्तु स्वार्थिकाः स्त्रियामिति निर्देशे स्त्रीत्वे वर्तमानात् प्रातिपदिकात्स्वार्थे टाबादय इत्यर्थाद् इति।

अयं भावः—यदा संस्त्यानमात्रं स्त्रीत्वं गुणः स्त्रीशब्दवाच्यम्, तच्च = तदपि प्रागुक्तरीत्या प्रातिपदिकविशेषणमिति, तदा स्त्रीत्वे वर्तमानात् प्रातिपदिकात् टाबादय इत्यत्र तेषाम्=टाबादिप्रत्ययानाम्, अन्यस्य=प्रकृत्यर्थातिरिक्तस्य अर्थस्यानिर्देशात् तेषां स्वार्थिकत्वं भवति। यदा तु प्रातिपदिकात् स्त्रीत्वेऽभिधेये टाबादय इत्यर्थस्तदा प्रत्ययार्थविशेषणपक्षः=स्त्रीत्वं टाबादिप्रत्ययार्थविशेषणमिति पक्षः जायत इति ॥ १७४ ॥

ननु च स्त्रीत्वमात्रे कस्यापि स्त्रीशब्दातिरिक्तस्य प्रातिपदिकस्य वृत्त्यसंभवात् कथं सर्वप्रकृतिसाधारण्येन प्रकृत्यर्थविशेषणपक्षो भवति इत्याह—संस्त्याने केवले इति।

अस्यार्थः—टाबादिप्रत्ययविधौ स्त्रियामित्युक्तेऽपि केवले संस्त्याने स्त्रीत्वमात्रे टाबादिप्रकृतीनां वृत्तिर्न विद्यते = शक्तिर्नास्ति। ततः=केवले संस्त्याने प्रकृतीनां वृत्त्यभावात् तदाविष्टे= तेन स्त्रीत्वेनाविष्टे विशिष्टे द्रव्ये समवस्थिताः वर्तमानाः ब्राह्मण्यादौ ब्राह्मणादयः टाबादिप्रत्ययविधौ प्रकृतितया गृह्यन्ते, न तु 'भूतमियं ब्राह्मणी' इत्यादौ भूतादयः, तेषां तदाविष्टत्वाभावात् इति।

लौकिकोऽर्थः स्थितलक्षणोऽन्वाख्यानाङ्गमुपादीयमानो यथासम्भवमसौ गृह्यत इति 'स्त्रियाम्' इत्युक्तेऽपि स्त्रीत्वमात्रे प्रातिपदिकस्य वृत्त्यदर्शनात् सामर्थ्यात् तद्विशिष्टार्थाभिधायिनः प्रातिपदिकाद् विधिर्विज्ञायते ।। १७५ ।।

तथा च तेन स्त्रीत्वेनाविष्टे सम्भिन्ने द्रव्ये वर्तमानाः प्रत्ययमुत्पादयन्तीति पूर्वदोषानवतार इत्याह—

**उपकारि च संस्त्यानं येषु शब्देष्वपेक्षितम् ।**
**तेभ्यष्टाबादयस्तच्च भूतादिष्वविवक्षितम् ।।१७६।।**

वाच्यत्वेनोपयोगि येषु शब्देषु, तेभ्यष्टाबादय इत्युपलक्षणभूतं येषु संस्त्यानं तेभ्यो भूतादिभ्यः प्रत्ययाभाव इत्यर्थः। तदुक्तं भाष्ये—'भूतमियं ब्राह्मणी' इति। 'नात्र स्त्रीत्वं विवक्षितम्, किं तर्हि पौतन्यम्' इति। स्त्रीत्वे वाच्ये विवक्षिते भवत्येव प्रत्ययः 'भूता ब्राह्मणी' इति। सत्यवादिनी अतीता वेत्यर्थः, न पौतन्यम्। तथा 'कारणमियं ब्राह्मणी' इति प्राधान्यं विवक्षितम्। 'आवपनमियमुष्ट्रिका' इति सम्भवनम्। आधेयप्रमाणादाधारस्य प्रमाणानतिरेको विवक्षितः। पञ्चादीनामपि भेदगणनात्मिका सङ्ख्या वाच्या, न स्त्रीत्वमिति तेभ्यः स्त्रीप्रत्ययाप्रसङ्गात् ततः प्रतिषेधः प्रत्याख्यातः। एवं निर्दोषः प्रकृत्यर्थविशेषणपक्षोऽवस्थापितः ।। १७६ ।।

---

अयं भावः—लौकिकः शब्दस्यार्थः स्थितलक्षणः=स्थिरस्वभाव एकोऽखण्ड एव, स चान्वाख्यानाङ्गतया शास्त्रे उपादीयमानो यथासंभवं प्रकृतिप्रत्ययार्थरूपाभ्यामपोद्धृतो गृह्यत इति "स्त्रियाम्" इत्युक्तेऽपि स्त्रीत्वमात्रे प्रातिपदिकस्य वृत्त्यदर्शनात् सामर्थ्यात् स्त्रीत्वविशिष्टार्थाभिधायिनः प्रातिपदिकात् टाबादिप्रत्ययविधिर्विज्ञायत इति ।। १७५ ।।

तथा च तेन स्त्रीत्वेनाविष्टे संभिन्ने=विशिष्टे द्रव्ये वर्तमानाः शब्दाः टाबादिप्रत्ययमुत्पादयन्तीति पूर्वदोषानवतारः=भूतादिशब्देभ्यष्टाबादिप्रत्ययप्रसङ्गानवसरः, भूतादीनां तदाविष्टत्वाभावादित्याह—उपकारि च संस्त्यानमिति ।

अस्यार्थः—वाच्यत्वेनोपकारि उपयोगि च = तु संस्त्यानं स्त्रीत्वं येषु शब्देषु अन्वाख्यानाङ्गत्वेनापेक्षितम्, तेभ्योऽजादिभ्यो यथायथं टाबादयः, तच्च वाच्यत्वेनोपयोगिसंस्त्यानं भूतादिषु अविवक्षितम्, लोके प्रयोगदर्शनेन नपुंसकत्वस्यैव विवक्षितत्वानुमानादिति ।

अयं भावः—वाच्यत्वेनोपयोगि येषु शब्देषु संस्त्यानं तेभ्यष्टाबादय इत्युक्त्या स्त्र्यर्थसामानाधिकरण्येन उपलक्षणभूतं येषु शब्देषु संस्त्यानं तेभ्यो भूतादिभ्यः टाबादिप्रत्ययाभाव इति । यदुक्तं भाष्ये "भूतमियं ब्राह्मणी इति । नात्र स्त्रीत्वं विवक्षितम्, किं तर्हि, पौतन्यम्" इति । अत्र पूतनैव पौतन्यमिति चातुर्वर्ण्यादिवत् स्वार्थे ष्यञ् । स्त्रीत्वे वाच्ये विवक्षिते भवत्येव प्रत्ययः—'भूता ब्राह्मणी' इति । सत्यवादिनी अतीता वा इत्यर्थो न पौतन्यम् । तथा कारणमियं ब्राह्मणी इति प्राधान्यं विवक्षितम् । 'आवपनमियमुष्ट्रिका' इति मुक्तानां पीतानाञ्च तृणजलादीनां संभवनं विवक्षितम् । आधेयप्रमाणादाधारस्य प्रमाणानतिरेको विवक्षितः संभवनरूपः । पञ्चादीनां षट्संज्ञकानामपि भेदगणनात्मिका संख्या वाच्या, न स्त्रीत्वमिति तेभ्यः स्त्रीप्रत्ययस्य टाबादेरप्रसङ्गात्, तेभ्यः=

तृतीयोऽपि पक्षोऽभिहितः 'अथवा पुनरस्तु स्त्रियामभिधेयायाम्' इति प्रत्ययार्थत्वं स्त्रीत्वस्य। अत्र पक्षे सम्भावनाबीजमुपन्यस्य दोषमभिहितं व्याचष्टे—

**संस्त्यानं प्रत्ययस्यार्थः शुद्धमाश्रीयते यदा।**
**तदा द्विवचनानेकप्रत्ययत्वं न सिध्यति ॥१७७॥**

शुद्धं केवलं द्रव्यविशेषणभावमनापन्नं यदा संस्त्यानं स्त्रियामिति निर्दिष्टं प्रत्ययार्थत्वेनाश्रीयते, तदा तस्यैकत्वात् कुमार्यौ कुमार्य इति द्विवचनबहुवचने न स्याताम्।

एकस्य च संस्त्यानस्य प्रत्यायने स्त्रीप्रत्ययो भवन्नेक एव स्यादिति 'गार्ग्यायणी, कारीषगन्ध्या, कालितर' इत्यादावनेकः स्त्रीप्रत्ययो न स्यात्।

तदुक्तं वार्त्तिके—'स्त्रियामिति स्त्र्यर्थाभिधान इति चेद् द्विवचनबहुवचनानेकप्रत्ययानुपपत्तिः' इति ॥ १७७ ॥

---

"न षट्स्वस्रादिभ्यः" (पा० ४।१।१०) इति टावादिप्रत्ययप्रतिषेधः प्रत्याख्यातः। एवं निर्दोषः प्रकृत्यर्थविशेषणं स्त्रीत्वमिति पक्षोऽवस्थापितो भाष्ये इति ॥ १७६ ॥

प्रकृत्यर्थविशेषणत्वपक्षस्त्रीसमानाधिकरणपक्षापेक्षया तृतीयोऽपि पक्षोऽभिहितो भाष्ये—"अथवा पुनरस्तु स्त्रियामभिधेयायामिति प्रत्ययार्थत्वं स्त्रीत्वस्य" इति। अत्र पक्षे संभावनाबीजमुपन्यस्य भाष्येऽभिहितं दोषं व्याचष्टे—संस्त्यानं प्रत्ययस्यार्थं इति।

अस्यार्थः—यदा शुद्धं केवलं द्रव्यविशेषणभावमनापन्नं संस्त्यानं स्त्रियामिति निर्दिष्टं स्त्रीत्वं स्त्रियामभिधेयायामित्यर्थे प्रत्ययस्यार्थः आश्रीयते, तदा 'कुमार्यौ कुमार्यः' इत्यादौ द्विवचनानेकप्रत्ययत्वम् = 'कुमार्यौ' इत्यत्र द्विवचनम्, 'कुमार्यः' इत्यादौ अनेकप्रत्ययत्वम्—अनेकत्वार्थकप्रत्ययवत्वं न सिद्धयति।

किञ्चैकस्य स्त्रीत्वस्य स्त्रियामित्यनेन प्रत्यायने स्त्रीप्रत्यय एक एवस्यादिति 'गार्ग्यायणी' इत्यादौ चाब्ङीषौ, 'कारीषगन्ध्या' इत्यत्र ष्यङ्चापौ, 'कालितरा' इत्यत्र ङीष्टापौ न स्यातामित्यनेकस्त्रीप्रत्ययवत्त्वं न सिध्यतीत्युक्तमिति।

अयं भावः—शुद्धं केवलं द्रव्यविशेषणभावमनापन्नम् = द्रव्यविशेषणभावरहितम्, संस्त्यानं यदा स्त्रियामिति पदेन निर्दिष्टं स्त्रीत्वेऽभिधेये टाप् इत्यर्थे प्रत्ययार्थत्वेनाश्रीयते, तदा तस्यैकत्वात् 'कुमार्यौ कुमार्यः' इत्यत्र द्विवचनवहुवचने न स्याताम्।

किञ्चैकस्य संस्त्यानस्य = स्त्रीत्वस्य प्रत्यायने स्त्रीप्रत्ययो भवन्नेक एव स्यादिति 'गार्ग्यायणी' इत्यत्र चाब्ङीषौ, 'कारीषगन्ध्या' इत्यत्र ष्यङ्चापौ, 'कालितरा' इत्यत्र ङीष्टापौ अनेकः स्त्रीप्रत्ययो न स्यात्।

तदुक्तं वार्त्तिके—"स्त्रियामिति स्त्र्यर्थाभिधान इति चेद् द्विवचनबहुवचनानेकप्रत्ययानुपपत्तिः" इति। स्त्र्यर्थाभिधाने इत्यस्य स्त्रीत्वरूपार्थाभिधाने टाबादय इत्यर्थः। द्विवचनबहुवचनानेकप्रत्ययानुपपत्तेरुदाहरणानि तु प्रागुक्तानीति ॥ १७७ ॥

अथ 'तिस्रो जातय एवैताः सर्वत्र समवस्थिताः' (वा० प० ३ लिङ्ग ४) इति दर्शने स्त्रीत्वजातिरत्र निर्दिष्टा प्रत्ययार्थत्वेन। तस्याश्च व्यक्तिभेदेन 'गावौ गावः' इत्यादिवद् वचनभेदो योक्ष्यत इत्याशङ्क्याह—

**जातिश्चेत् स्त्रीत्वमेवासौ भेदोऽन्यत्राविवक्षितः।**
**यस्माद् भिन्नैरपि द्रव्यैस्तदेकं सद् विशिष्यते ॥१७८॥**

स्त्रियामिति प्रत्ययार्थत्वेन जातिनिर्देशे 'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूत' इति तस्या एव प्राधान्येन विवक्षितत्वादन्यत्र व्यक्तौ यो द्वित्वबहुत्वाख्यो भेदो विशेषः, स नात्र प्रतिपाद्यत्वेन विवक्षितः। यतस्तत् स्त्रीत्वमेकं सद् भिन्नैर्बहुभिः प्रकृतिवाच्यै-राश्रयभूतैर्द्रव्यैः सङ्ख्याभेदवद्भिरवच्छिद्यत इति प्रधानभूतप्रत्ययवाच्यस्त्रीत्वैकत्वाश्रय-मेकवचनमेव न्याय्यम्।

'गावौ गावः' इत्यादौ तु जात्यावेशेन व्यक्तीनामभिधानाद् युक्तो वचनभेदः ॥ १७८ ॥

---

अथ "तिस्रो जातय एवैताः सर्वत्र समवस्थिताः" ( वा० प० ३ लिं० ४ ) इति दर्शने स्त्रीत्वजातिरत्र = स्त्रियामित्यत्र प्रत्ययार्थत्वेन निर्दिष्टा। तस्याश्च व्यक्तिभेदेन 'गावौ, गावः' इत्यादिवत्, कुमार्यौ, कुमार्यः' इति वचनभेदो योक्ष्यते = युक्तो भविष्यतीति समाधानमाशङ्क्य आह—जातिश्चेत् स्त्रीत्वमेवेति।

अस्यार्थः—' स्त्रियाम्" (पा० ४।१।३) इत्यत्र जातिश्चेद् यदि स्त्रीत्वं प्रत्ययार्थः, तदाऽन्यत्र व्यक्तौ यो भेदो द्वित्वबहुत्वाख्यो विशेषः, असावेवात्र जातौ अविवक्षितः, प्रतिपाद्यत्वेन न विवक्षितः, यस्मात् तत्स्त्रीत्वं जातिरूपतया एकं सद् भिन्नैर्बहुभिः प्रकृतिवाच्यैराश्रयभूतैः संख्याभेद-वद्भिरपि द्रव्यैर्विशिष्यते विशेषणतयाऽवच्छिद्यते, तस्मात् प्रत्ययार्थतया प्रधानभूतं प्रत्ययवाच्यं यत् स्त्रीत्वं तद्गतैकत्वनिमित्तकमेकवचनमेव न्याय्यमिति।

अयं भावः—"स्त्रियाम्" ( पा० ४।१।३ ) इत्यत्र टावादिप्रत्ययार्थत्वेन स्त्रीत्वजातिनिर्देशे प्रकृतिप्रत्ययौ प्रत्ययार्थं सह = प्रकृत्यर्थान्वितं ब्रूत इति तस्या एव = स्त्रीत्वजातेरेव प्रत्ययार्थभूतायाः प्राधान्येन विवक्षितत्वादन्यत्र व्यक्तौ यो द्वित्वबहुत्वाख्यो भेदो विशेषः, स नात्र = जातौ प्रतिपाद्य-त्वेन विवक्षितः। यतस्तत् स्त्रीत्वमेकं सद् भिन्नैर्बहुभिः प्रकृतिवाच्यैराश्रयभूतैर्द्रव्यैः संख्याभेदवद्भि-रवच्छिद्यत इति प्रधानभूतप्रत्ययवाच्यस्त्रीत्वैकत्वाश्रयम् = प्रत्ययवाच्यत्वेन प्रधानभूतं यत् स्त्रीत्वं तद्गतैकत्वनिमित्तकम् एकवचनमेव न्याय्यमिति 'कुमार्यौ, कुमार्यः' इत्यादौ द्विवचनबहुवचनानुप-पत्तिर्वार्त्तिककृदुक्ता स्त्रीत्वजातेः प्रत्ययार्थत्वपक्षेऽपि तदवस्था।

'गावौ, गावः' इत्यादौ तु जात्यावेशेन = जातिविशिष्टतया व्यक्तीनां प्राधान्येनाभिधानात् तद्गतं द्वित्वबहुत्वादिकमादाय युक्तो वचनभेद इति ॥ १७८ ॥

अथ गुणावस्था लिङ्गमित्यस्मिन् दर्शने अवस्थानां भेदाद् वचनभेदो भविष्यतीत्यत आह—

**मात्राणां हि तिरोभावे परिमाणं न विद्यते ।**
**कुमार्य इति तेन स्यात् कुमार्यां भेदसम्भवात् ॥१७९॥**

मात्राणां सत्त्वादिगुणमयानां रूपरसादीनां तिरोभावे प्रतिलयेऽपचयेऽत्र संस्त्यानलक्षणे स्त्रीत्वे विवक्षितेऽवस्थाभेदाश्रयेण वचनभेदे कथ्यमानेऽवस्थाभेदानामेकत्रापीयत्तानवधारणात् सदैव कुमार्य इति बहुवचनान्त एव प्रयोगः स्यात् । तदर्थस्य संस्त्यानस्य बहुत्वसम्भवात् ।

चलं हि गुणवृत्तमिति परिणामस्य क्षणिकत्वादवस्थाभेदः सदातनः । अवस्थाभेदानादरेण प्रत्ययानुवृत्तिकार्य मेकं चेत् स्त्रीत्वं, तदा जातिपक्षादस्याभेद इति नियोगत एकवचनं स्यात् ।

---

अथ सत्त्वादिगुणावस्था लिङ्गम् = सत्त्वादिगुणानामुपचयापचयसाम्यरूपास्तिस्रोऽवस्था यथायथं स्त्रीत्वपुंस्त्वनपुंसकत्वरूपं लिङ्गमित्यस्मिन् दर्शने गुणानां प्रतिक्षणं परिणामेन गुणावस्थानां भेदात् 'कुमार्यौ, कुमार्यः' इत्यादौ वचनभेदो भविष्यतीत्यत आह—मात्राणां हि तिरोभावे इति ।

अस्यार्थः—हि = यतः, मात्राणाम् = मीयन्ते इति मात्राविषया रूपरसादयः, तेषां सत्त्वादिगुणमयानां तिरोभावेऽपचयावस्थारूपे प्रतिलये स्त्रियामित्यत्र संस्त्यानलक्षणे स्त्रीत्वे विवक्षिते गुणानां प्रतिक्षणं परिणामेन गुणावस्थानामपचयादिरूपाणां परिमाणमियत्ता न विद्यते, तेन गुणावस्थानामपचयादिरूपाणामेकत्रापि इयत्तानवधारणेन स्त्रीत्वरूपगुणावस्थागतबहुत्वमादाय 'कुमार्यः' इति बहुवचनमेव स्यात् । कुमार्याः—कुमारीपदार्थस्य तद्गतस्त्रीत्वस्य भेदसम्भवाद् बहुत्वस्यैव संभवात्, कुमारी इत्येकवचनं तु कदाऽपि न स्यादिति गुणावस्था लिङ्गमिति पक्षेऽपि दोष इति ।

अयं भावः—मात्राणाम् = विषयाणाम्, सत्त्वादिगुणमयानाम् = सत्त्वादिगुणविकाराणाम्, रूपरसादीनां तिरोभावे = प्रतिलयेऽपचये अत्र = स्त्रियामित्यत्र संस्त्यानलक्षणे स्त्रीत्वे विवक्षिते गुणावस्थाभेदाश्रयेण वचनभेदे = संख्याभेदे कथ्यमाने गुणावस्थाभेदानामेकत्राप्यर्थे इयत्तानवधारणात् सदैव कुमार्य इति बहुबचनान्त एव प्रयोगः स्यात् । तदर्थस्य संस्त्यानस्य = कुमारीपदार्थस्य स्त्रीत्वस्य बहुत्वसंभवात् ।

चलं हि गुणवृत्तम् = सत्त्वादिगुणानां स्वभावः स्वरूपं चलम्, सत्त्वादिगुणानां प्रतिक्षणं परिणामित्वेनास्थिरमिति सांख्यसिद्धान्तेनाद्वैतिनामपि संमतेन गुणानां परिणामस्य क्षणिकत्वादवस्थाभेदः सनातनः । सतोऽपि अवस्थाभेदस्यानादरेण सर्वासु स्त्रीषु चेतनाचेतनसाधारणीषु स्त्रीति प्रत्ययानुकार्यम् = बहुव्रीहिणा स्त्रीतिप्रत्ययानुवृत्तिकारणम् एकं चेत् स्त्रीत्वं स्वीक्रियते, तदा जातिपक्षादस्य = गुणावस्थालिङ्गमिति पक्षस्याभेद इति नियोगतः = नियमतः कुमारी इति एकवचनमेव स्यात्, न द्विवचनबहुवचने ।

अत एव चात्रापि जातेरेषणीयत्वात् फलत एकपक्षीभावं मन्यमानः पूर्वोक्तार्थोपपादनहेतुद्योतनं हिशब्दं पठति, न समुच्चयार्थं चकारम्। यथा चात्र पक्षे द्विवचनबहुवचनानेकप्रत्ययानुत्पत्तिदोषः, तथा द्रव्येण सामानाधिकरण्याभावोऽपि। तथा चास्याः कुमारीति स्यात्। संस्त्यानस्य च धर्ममात्रत्वात् क्रियायोगो न कल्पते, अलङ्क्रियतां कुमारीति ॥ १७९ ॥

तदत्र प्रतिसमाधानमुक्तं वार्तिककृता—'गुणस्य चाश्रयतो लिङ्गवचनभावाद्' इति। तदेतद् व्याख्यातुमुपक्रमते—

**जातिसङ्ख्यासमाहारैर्यथैव सहचारिणि।**
**द्रव्ये क्रियाः प्रवर्तन्त एकात्मत्वेऽप्यपेक्षिते ॥१८०॥**
**मूर्तिभ्यो मूर्तिधर्माणां तथाऽभेदस्य दर्शनात्।**
**सामानाधिकरण्यं च क्रियायोगश्च कल्पते ॥१८१॥**

---

अत एव चात्रापि = गुणावस्थालिङ्गमिति पक्षेऽपि जातेरेषणीयत्वात् = स्त्रीत्वस्य जातिरूपस्यापेक्षणीयत्वादस्य पक्षस्य स्वरूपतो जातिपक्षेण सहैकपक्षीभावाभावेऽपि फलत एकपक्षीभावं मन्यमानः पूर्वोक्तार्थोपपादनहेतुद्योतनम् = पूर्वोक्तार्थस्य = जातिः स्त्रीत्वमित्यस्य उपादने यो हेतुः = मात्राणामियत्तानवधारणं तद्द्योतकं = तत्प्रसिद्धिद्योतकं हिशब्दं पठति, न तु तदुपपादकहेतुसमुच्चयार्थं चकारम्, यथा चात्र पक्षे = जातिः स्त्रीत्वमिति पक्षे द्विवचनबहुवचनानेकप्रत्ययानुत्पत्तिरूपो दोषः तथा द्रव्येण सह सामानाधिकरण्यस्याभावोऽपि दोषः। तथा चास्याः कुमारीति प्रयोगः स्यात्, न त्वियं कुमारीति। संस्त्यानस्य च = स्त्रीत्वस्य च धर्ममात्रत्वात् क्रियायोगो न स्यात्—'अलंक्रियतां कुमारी' इति। स्त्रीत्वस्यालङ्करणक्रियाकर्मत्वानुपपत्तेरिति ॥ १७९ ॥

तदत्र = जातिपक्षे त्रिषु प्रागुक्तेषु दोषेषु प्रतिसमाधानमुक्तं वार्तिककृता—"गुणस्य चाश्रयतो लिङ्गवचनभावात्" इति।

अत्र गुणपदेन गुणावस्थारूपं स्त्रीत्वमभिप्रेतम्। तदेतद् वार्तिकं व्याख्यातुमुपक्रमते युग्मेन—जातिसंख्यासमाहारैरिति। मूर्तिभ्यो मूर्तिधर्माणामिति च।

अस्यार्थः—यथैव जातिसंख्यासमाहारैः शब्दोपात्तैः सह द्रव्यस्य वास्तवे एकात्मत्वेऽभेदे द्रव्ये क्रियाप्रवृत्त्यर्थमपेक्षितेऽपि तदभावे सहचारिणि द्रव्ये सोऽयमिति जात्यादिभिः सह तादात्म्याध्यासरूपादभिसंबन्धाद् द्रव्ये क्रियाः प्रवर्तन्ते, तथा मूर्तिधर्माणाम् = वस्तुधर्माणां संस्त्यानादीनां मूर्तिभ्योऽभेदस्य द्रव्यादव्यतिरेकस्य धर्मधर्मिणोस्तादात्म्याध्यासमूलकस्य दर्शनात् 'इयं कुमारी' इति सामानाधिकरण्यञ्चालंक्रियतां कुमारी इति क्रियायोगश्च कल्पते प्रसिध्यतीति।

'गौर्दुह्यताम्, ब्राह्मणशतं भोज्यताम्, पञ्चपूली समानीयताम्' इत्यादौ जाति-सङ्ख्यासमाहारैः शब्दोपादानात् करणभूतैः स्वात्मन्यसम्भवादविनाभाविनि द्रव्ये क्रियाः क्रियन्ते, जातितद्वतोः समवायाद् भेदस्य प्रच्छादनेऽभेदे निरूपिते, धर्मधर्मिणोरपि तथैव विवेकानवसायात् तत्त्वतो भेदेऽप्येकात्मत्वे बुद्ध्या निरूपिते सति। एवं मूर्तिभ्यो वस्तुभ्यस्तद्धर्माणां संस्त्यानादीनामभेदस्य द्रव्यादव्यतिरेकस्य प्रतिभासनात् सामानाधिकरण्यम्, द्रव्येण क्रियायोगश्च कल्पते।

स्वभावाद्धि प्रत्ययेन द्रव्याद् व्यतिरेकेण स्त्रीत्वं न प्रत्याय्यते। प्रक्रियायां तु प्रत्ययार्थपक्षापोद्धारः। 'सर्वाश्च पुनर्मूर्तय एवमात्मिकाः संस्त्यानप्रसवगुणाः' इति भाष्ये मूर्तिशब्देन वस्तुमात्रस्याभिधानादिहापि मूर्तिशब्देन वस्तुमात्रं लक्ष्यते। दिगादीनाममूर्तानामपि स्त्रीत्वाख्यस्य धर्मस्य सम्भवात् ॥ १८०, १८१ ॥

केचिदाहुः—'लुप्तमत्वर्थीयाः कुमार्यादयो द्रव्यवचनैः समानाधिकरणा भवन्ति' इति। तन्मतमपाकरोति—

**सामानाधिकरण्ये तु मतुब्लोपादपेक्षिते।**
**लुक् तद्धितलुकीति स्याल्लुक् तत्राप्युपलक्षणम् ॥१८२॥**

---

अयं भावः—'गौर्दुह्यताम्, ब्राह्मणशतं भोज्यताम्, पञ्चपूली समानीयताम्' इत्यादौ गोत्वजातौ शब्दोपात्तायां दोहनकर्मत्वानुपपत्तिः, शतसंख्यायां भोजनकर्मत्वानुपपत्तिः, समाहारे च समानयनकर्मकत्वानुपपत्तिरिति जातिसंख्यासमाहारैः शब्दोपादानात् करणभूतैः स्वात्मनि असंभवाद् अविनाभाविनि द्रव्ये दोहनादयः क्रियाः क्रियन्ते, जातितद्वतोः समवायाद् भेदस्य प्रच्छादनेऽभेदे निरूपिते सति। तथैव धर्मधर्मिणोरपि विवेकानवसायात् = भेदाग्रहाद् वस्तुतो भेदेऽपि एकात्मत्वे = अभेदे बुद्ध्या निरूपिते सति एवम् = अनेन प्रकारेण मूर्तिभ्यो वस्तुभ्यस्तद्धर्माणां संस्त्यादीनामभेदस्य द्रव्यादव्यतिरेकस्य प्रतिभासनात् 'इयं ब्राह्मणी' इत्यादौ सामानाधिकरण्यम्, 'अलंक्रियतां कुमारी' इति द्रव्येण क्रियाया योगश्च कल्पते प्रसिध्यति।

स्त्रीप्रत्ययेन टावादिना हि द्रव्याद् व्यतिरेकेण स्त्रीत्वं स्वभावान्न प्रत्याय्यते। प्रक्रियायां तु प्रत्ययार्थपक्षापोद्धारः = स्त्रीत्वं प्रत्ययार्थ इति पक्षे पदार्थापोद्धारः। "सर्वाश्च पुनर्मूर्तय एवमात्मिकाः संस्त्यानप्रसवगुणाः" इति भाष्ये मूर्तिशब्देन वस्तुमात्रस्याभिधानादिहापि = हरिकारिकायां मूर्तिशब्देन वस्तुमात्रं लक्ष्यते। दिगादीनाममूर्तानामपि सत्त्वादिगुणविकारत्वेन गुणापचयरूपस्य स्त्रीत्वाख्यस्य धर्मस्य संभवाददोष इति ॥ १८०, १८१ ॥

केचिदाहुः—"लुप्तमत्वर्थीयाः कुमार्यादयो द्रव्यवचनैः समानाधिकरणा भवन्ति" इति। स्त्रीत्वं गुणस्तद्वचनाः कुमार्यादयः शुक्लादिवल्लुप्तमत्वर्थीयाः सन्तो द्रव्यवचनैः सह समानाधिकरणा भवन्तीति तेषामाशयः। तन्मतमपाकरोति—सामानाधिकरण्ये त्विति।

अस्यार्थः—'इयं कुमारी' इत्यादौ मतुब्लोपात्तु 'कुमारी' शब्दात् स्त्रीत्वरूपस्य गुणस्य प्राधान्येन वाचकाद् जातस्य मतुपो लुकस्तु सामानाधिकरण्येऽपेक्षिते "लुक् तद्धितलुकि"

संस्त्यानलक्षणधर्ममात्रवचनः स्त्रीप्रत्ययान्त इति गुणवचनत्वान्मतुपो लुका शुक्लादिवद् द्रव्यसामानाधिकरण्येऽङ्गीक्रियमाणे "लुक् तद्धितलुकि" (१।२।४९) इति स्त्रीप्रत्ययस्य लुक्प्रसङ्गः ।

अथ सर्वदा द्रव्यस्यैव स्त्रीप्रत्ययान्तैः प्रत्यायनात् स्त्रीप्रत्ययस्य विधान-सामर्थ्याल्लुक् प्रतिविधीयते । एवमपि कुत एतत् स्त्रीप्रत्ययस्यालुग् भविष्यति, न तु मतुप एव ।

एवं हि स्त्रीप्रत्ययस्य लुग् नैव प्राप्नोति । तस्माद् विनापि मतुपं स्वभावादेव द्रव्यस्य स्त्रीत्वाभेदेन प्रत्यायनम् । तथा च यत्रापि मतुपो लुगारब्धः शुक्लादौ, तत्रापि स्वार्थावच्छिन्नप्रत्ययार्थप्रत्यायनशक्तिं प्रकृतेरेव ज्ञापयितुमित्युपलक्षणं तत्र लुक् । असति तु तथार्थाभिधाने लुकापि किं कृत्यम् ।

एवं प्रत्ययार्थपक्षे गुणवचनत्वादभेदोपचारादाश्रयेण सह तत्सामानाधिकरण्यं वचनभेदश्चोपपादितः । अनेकश्च प्रत्ययो भवति स्वभावाद् द्रव्योपसर्जनस्य स्त्रीत्वस्य क्वचिदनेकप्रत्ययेन प्रतिपादनात् ॥ १८२ ॥

---

( पा० १।२।४९ ) इति लुक्, तत्रापि—गुणवचनेभ्यो जातस्य मतुपो लुक्यप्युपलक्षणम्, स्वार्था-वच्छिन्नप्रत्ययार्थप्रत्यायनशक्तेरुपलक्षणं ज्ञापकं स्यादिति ।

अयं भावः—प्राधान्येन स्त्रीत्वरूपसंस्त्यानधर्मवचनः स्त्रीप्रत्ययान्त इति गुणवचनत्वान्मतुपो लुका शुक्लादिशब्दवद् द्रव्यसामानाधिकरण्येऽङ्गीक्रियमाणे "लुक् तद्धितलुकि" (पा० १।२।४९) इति स्त्रीप्रत्ययस्य लुक्प्रसङ्गः ।

यत्तु हेलाराजेन संस्त्यानरूपधर्ममात्रवचनः स्त्रीप्रत्ययान्त इत्यत्रोक्तम्, तन्न; "स्वार्था-वच्छिन्नप्रत्ययार्थप्रत्यायनशक्तिं प्रकृतेरेव ज्ञापयितुम्" इत्यादिनाऽग्रिमस्वग्रन्थेन विरोधात् ।

अथ सर्वदा द्रव्यस्यैव स्त्रीप्रत्ययान्तैः प्रत्यायनात् स्त्रीप्रत्ययस्य विधानसामर्थ्यात् लुक् प्रति-विधीयते=निरस्यते । एवमपि कुत एतत् स्त्रीप्रत्ययस्यालुग् भविष्यति, न तु मतुप एव, मत्वर्थस्यापि हि स्त्रीप्रत्ययान्तोत्तरवर्तिना मतुपैव प्रत्यायनस्य दर्शनात् । एवं हि=मतुपो लुगभावे हि स्त्रीप्रत्ययस्य लुग् नैव प्राप्नोति । तस्माद् विनापि मतुपं स्वभावादेव द्रव्यस्य स्त्रीत्वाभेदेन प्रत्यायनम् । तथा च यत्रापि मतुपो लुगारब्धः शुक्लादौ, तत्रापि स्वार्थावच्छिन्नप्रत्ययार्थप्रत्यायनशक्तिं प्रकृतेरेव ज्ञापयितुमित्युपलक्षणं तत्र = "लुक् तद्धितलुकि" (पा० १।२।४९) इत्यत्र लुक् । असति तु तथा अर्थाभिधाने = शक्तिराहित्यात् तादृशार्थाभिधानाभावे गुणवचनेभ्यो लुकापि किं कृत्यम् ।

एवञ्च प्रत्ययार्थपक्षे=स्त्रीत्वं प्रत्ययार्थ इति पक्षे स्त्रीप्रत्ययान्तानां गुणवचनत्वात् स्त्रीत्वस्य द्रव्येऽभेदोपचारादाश्रयेण सह तत्सामानाधिकरण्यम्=स्त्रीत्वस्य सामानाधिकरण्यं वचनभेदश्चोप-पादितः । "कालितरा" इत्यादावनेकश्च प्रत्ययो भवति, द्रव्योपसर्जनस्य स्त्रीत्वस्य स्वभावात् क्वचिद-नेकप्रत्ययेन प्रतिपादनादिति ॥ १८२ ॥

प्रत्ययार्थपक्ष एव सामानाधिकरण्याद्यपरेण प्रकारेण समर्थयितुमाह—

**केषाञ्चित् त्यक्तभेदेषु द्रव्येष्वेव विधीयते।**
**संस्त्यानवत्सु टाबादिरभेदेन समन्वयात् ॥१८३॥**

संस्त्यानवत्सु द्रव्येषु "स्त्रियाम्" (४-१-३) इति स्त्रीशब्दस्य तद्वति वृत्तिमाश्रित्य प्रत्ययार्थपक्षेऽपि टाबादिर्विधीयते। स्त्रीप्रत्ययान्ताद्धि नियोगतो द्रव्यं प्रतीयत इति तदेव प्रत्ययवाच्यं न्याय्यं कल्पयितुम्। यद्येवमेकं प्रकृत्यर्थभूतं द्रव्यमपरं प्रत्ययार्थभूतमिति द्रव्यद्वयप्रतीतिप्रसङ्गः। न च भेदेन द्रव्यद्वयं प्रतीयते।

प्रकृतिप्रत्ययार्थयोश्च द्वयोः परस्परमनभिसम्बन्धप्रसङ्ग इत्याशङ्क्योक्तम्—त्यक्तभेदेष्विति।

यस्मादविद्यमानविशेषेणार्थेनाविरोधाद् भवति प्रकृतिवाच्यस्य विशेषस्याभिसम्बन्धोऽभेदेन, सर्वत्र स्त्रीत्येवमाकारसंविन्निबन्धनेन सामान्येनावगमात्। तस्मात् प्रकृतिप्रत्ययवाच्यतया सामान्यविशेषकल्पनया द्रव्यभेदः। प्रकृतिवाच्यं हि विशिष्टं द्रव्यम्, प्रत्ययवाच्यं तु द्रव्यसामान्यम्। तदेव च प्रकृत्यर्थावच्छिन्नं विशेषमासादयति।

---

प्रत्ययार्थपक्ष एव=स्त्रीत्वं प्रत्ययार्थ इति पक्ष एवापरेण प्रकारेण सामानाधिकरण्यादि=सामानाधिकरण्यवचनभेदौ समर्थयितुमाह—केषाञ्चिदिति।

अस्यार्थः—केषाञ्चिन्मते सर्वेषु स्त्रीविशेषेषु स्त्रीत्येवमभेदेन समन्वयात्=समनुगमात् त्यक्तभेदेषु=त्यक्तविशेषेषु विशेषरहितेषु सामान्यरूपेषु संस्त्यानवत्सु स्त्रीत्ववत्सु=द्रव्येष्वेव, न तु स्त्रीत्ववति द्रव्यविशेषे टाबादिर्विधीयते। स्त्रीरूपो द्रव्यविशेषस्तु प्रकृत्यर्थ इति परिशेषाल्लब्धम्।

अयं भावः—"स्त्रियाम्" (पा० ४।१।३) इति सूत्रे स्त्रीशब्दस्य तद्वति वृत्तिमाश्रित्य प्रत्ययार्थपक्षेऽपि संस्त्यानवत्सु द्रव्येषु टाबादिर्विधीयते। स्त्रीप्रत्ययान्ताद् हि नियोगतः=नियमतो द्रव्यं प्रतीयत इति तदेव प्रत्ययवाच्यं कल्पयितुं न्याय्यम्।

यद्येवमेकं प्रकृत्यर्थभूतं विशेषरूपं द्रव्यम्, अपरं सामान्यरूपं प्रत्ययार्थभूतं द्रव्यमिति सर्वत्र स्त्रीप्रत्ययान्तेषु द्रव्यद्वयप्रतीतिप्रसङ्गः। न च=न तु तत्र भेदेन द्रव्यद्वयं प्रतीयते।

किञ्च, प्रकृतिप्रत्ययार्थयोर्द्वयोरपि विशेषरूपत्वे परस्परमनभिसंबन्धप्रसङ्ग इत्याशङ्क्योक्तम्—त्यक्तभेदेष्विति।

यस्मात् प्रकृतिवाच्यस्य द्रव्यविशेषस्याविद्यमानविशेषेण प्रत्ययार्थेन द्रव्यसामान्यरूपेण सहाविरोधादभेदेनाभिसंबन्धो भवति, स्त्री इत्येवमाकारकसंविन्निमित्तकेन सामान्येन रूपेण सर्वत्र=प्रकृत्यर्थभूतेषु स्त्रीद्रव्यविशेषेषु प्रत्ययार्थस्यावगमात्। तस्मात् प्रकृतिप्रत्ययवाच्यतया यथायथं सामान्यविशेषकल्पनया द्रव्यभेदः। प्रकृतिवाच्यं हि विशिष्टं द्रव्यम्=द्रव्यविशेषः। स्त्रीप्रत्ययवाच्यं तु द्रव्यसामान्यम्। तदेव च प्रकृत्यर्थावच्छिन्नं सद् विशेषमासादयति=अभेदेन द्रव्यविशेषरूपतां भजते।

तथाहि—प्रकृतिवाच्यानां द्रव्यविशेषाणां स्त्रीत्येवमभेदोऽनुगतः प्रतीयत इति प्रातीतिकोऽयं भेदः प्रकृतिप्रत्ययार्थयोः, न तु परस्परासंबद्धौ द्वौ द्रव्यात्मानौ ॥ १८३ ॥

तथाहि—

**सामान्यभूतो द्रव्यात्मा परिच्छिन्नपरिग्रहः ।**
**क्रियाभिर्युज्यते भेदैर्भागशश्चावतिष्ठते ॥१८४॥**

प्रकृतिवाच्येन द्रव्यविशेषेणावच्छेदाद् बुद्ध्या परिकल्पितः प्रत्ययवाच्यो द्रव्यात्मा सामान्यमिव, न तु सामान्यमेव । एकपदनिबन्धनेन हि विशेषेणोपरागान्न सामान्यात्मनि द्रव्यमत्रावतिष्ठते । अपि तु परिच्छिन्नः परिमितरूपः परिगृह्यमाण आलम्बनीयोऽस्येति परिच्छिन्नपरिग्रहः ।

एवञ्च कृत्वा क्रियायोगोऽस्य न विरुद्धः । तैश्च प्रकृतिवाच्यैर्भेदैर्विशेषैस्तस्य समूहरूपस्य सर्वत्रानुगतत्वात् सामान्यस्य भागैरिवावच्छेदात् तद्रूपतयावस्थानमिति सामानाधिकरण्यमपि युज्यते ।

---

तथाहि—प्रकृतिवाच्यानां द्रव्यविशेषाणां स्त्रीत्येवमभेदोऽनुगतः प्रतीयत इति प्रातीतिकोऽयम्=प्रतीतिमात्रकृतोऽयम्, न तु वस्तुभूतः प्रकृतिप्रत्ययार्थयोर्भेदः, एवं न तु परस्परासंबद्धौ द्वौ द्रव्यात्मानाविति ॥ १८३ ॥

तथाहि=पूर्वोक्तार्थमेव विशदीकरोति—सामान्यभूत इति ।

अस्यार्थः—प्रकृतिप्रत्ययसमुदायार्थाद् विशिष्टद्रव्यादपोद्धृतः प्रत्ययवाच्यतया व्यवस्थितो द्रव्यात्मा परिच्छिन्नपरिग्रहः=प्रकृतिवाच्येन द्रव्यविशेषेणावच्छेदात् परिच्छिन्नतया परिगृह्यमाणः सामान्यभूतः सामान्यमिव, न तु सामान्यमेव, 'अलंक्रियतां कुमारी' इत्यादौ क्रियाभिर्युज्यते, तत्तत्प्रकृतिवाच्यैर्भेदैर्द्रव्यविशेषैर्भागशः=स्वभागैरिवावस्थितैरुपलक्षितश्च सामान्यात्मनाऽवतिष्ठत इति अस्य सामानाधिकरण्यमपि युज्यते । तथा च द्रव्यविशेषः प्रकृतेरर्थः, द्रव्यसामान्यं तु प्रत्ययार्थ इति आयातमिति ।

अयं भावः—अपोद्धारबुद्ध्या परिकल्पितः प्रत्ययवाच्यो द्रव्यात्मा प्रकृतिवाच्येन द्रव्यविशेषेणावच्छेदात् सामान्यमिव, न तु सामान्यमेव । एकपदनिबन्धनेन हि=प्रकृतिरूपैकपदवाच्येन हि द्रव्यविशेषेणोपरागात्=अवच्छेद्यावच्छेदकभावरूपात् संबन्धादत्र=प्रत्यये न द्रव्यं सामान्यात्मनि अवतिष्ठते, अपि तु प्रकृतिवाच्येन द्रव्यविशेषेण परिच्छिन्नपरिग्रहः=परिच्छिन्नः परिमितरूपः परिग्रहः परिगृह्यमाणो द्रव्यविशेषः प्रकृतिवाच्यः, परिच्छेदकतया आलम्बनीयोऽस्य द्रव्यसामान्यस्य प्रत्ययवाच्यस्येति परिच्छिन्नपरिग्रहः ।

एवञ्च कृत्वा 'अलंक्रियतां कुमारी' इत्यादौ कर्मतया क्रियायोगोऽस्य प्रत्ययवाच्यस्य द्रव्यसामान्यस्य न विरुद्धः । तैश्च प्रकृतिवाच्यैर्भेदैर्विशेषैः, तस्य=प्रकृतिवाच्यस्य सामान्यस्य समूहरूपस्य सर्वत्र=सर्वेषु द्रव्यविशेषेष्वनुगतत्वात् सामान्यस्य भागैरिव=अवयवैरिव अवच्छेदात् तद्रूपतया=द्रव्यविशेषरूपतयाऽवस्थानमिति सामानाधिकरण्यमपि पदान्तरार्थेन सह युज्यते ।

अयमत्राशयः—प्रकृतिप्रत्ययसमुदायाद् विशिष्टं द्रव्यं प्रतीयत इति तत्रापोद्धारे प्रक्रियायां कल्पनया सामान्यविशेषभावेन भेदमाश्रित्य प्रकृत्यर्थप्रत्ययार्थत्वमवस्थाप्यते। तदेव द्रव्यं प्रकृतेरर्थादन्यस्माद् भेदेनावधार्यमाणं विशेषष्टाबादेरर्थस्य—स्त्रीत्यनुयायिना स्वभावेनानुगम्यमानं सामान्यमिति। लौकिके तु प्रयोगे विशेषपर्यवसानैव प्रतिपत्तिरिति सर्वमुपपद्यते ॥ १८४ ॥

तदेवं प्रत्ययार्थपक्षे प्रकारद्वयेन स्वाश्रयतो वचनमुपपादितम्। एतदाक्षिपति—

**शुक्लादिष्वाश्रयद्रव्यं प्राधान्येनाभिधीयते।**
**स्त्रीत्वं तु प्रत्ययार्थत्वादभिधाविषयो यतः ॥१८५॥**

गुणोपसर्जनद्रव्यवचनाः शुक्लादयो युक्तं यदाश्रयगतलिङ्गसङ्ख्यानुवर्तिनः, प्राधान्यादाश्रयस्य। स्त्रीत्वं तु प्रत्ययस्य टाबादेर्वाच्यं प्राधान्येन। प्रकृत्यर्थस्तु द्रव्यमत्र गुणभूतमिति कथमत्र गुणधर्मान् प्रधानं प्रतिपद्येत। "विशेषणानाम्" (१।२।५२) इत्यपि सूत्रेण विशेष्यवद् विशेषणानां व्यक्तिवचने अतिदिश्येते, न तु विशेषणवद्

---

अयमत्राशयः—प्रकृतिप्रत्ययसमुदायात् स्त्रीप्रत्ययान्ताद् विशिष्टं द्रव्यम्=द्रव्यविशेष एकः प्रतीयत इति प्रक्रियायां बुद्ध्याऽपोद्धारे कल्पनया सामान्यविशेषभावेन भेदमाश्रित्य यथायथं प्रकृत्यर्थप्रत्ययार्थत्वमवस्थाप्यते। यत्प्रत्ययवाच्यं द्रव्यसामान्यं तदेव द्रव्यं प्रकृत्यर्थादन्यस्माद् भेदेनावधार्यमाणं विशेषष्टाबादेरर्थस्य द्रव्यसामान्यस्य, स्त्रीत्येवमनुयायिना=द्रव्यविशेषेष्वनुगतेन स्वभावेनानुगम्यमानम्=अनुगततया ज्ञायमानं सामान्यमिति। लौकिके तु कुमारीत्यादिप्रयोगे द्रव्यविशेषपर्यवसानैव प्रतिपत्तिः, प्रकृतिप्रत्ययसमुदायेन द्रव्यविशेषस्यैव प्रतिपत्तेरिति सर्वमुपपद्यते=क्रियायोगः सामानाधिकरण्यञ्चैतदुभयमुपपद्यत इति ॥ १८४ ॥

तदेवं प्रत्ययार्थपक्षे=स्त्रीत्वं प्रत्ययार्थ इति पक्षे प्रकारद्वयेन=गुणवचनत्वादभेदोपचारादाश्रयेण सह तत्सामानाधिकरण्यमित्येकः प्रकारः। प्रकृत्यर्थप्रत्ययार्थयोः सामान्यविशेषभावेन भेदमाश्रित्य सामानाधिकरण्योपपत्तिरित्यपरः प्रकारः। एतेन प्रकारद्वयेन स्वाश्रयतो वचनमुपपादितम्, तदाक्षिपति—शुक्लादिष्विति।

अस्यार्थः—गुणोपसर्जनद्रव्यवचनेषु शुक्लादिशब्देषु प्रयुक्तेषु आश्रयद्रव्यम् शुक्लादिगुणाश्रयीभूतं द्रव्यं प्राधान्येनाभिधीयत इति युक्तमाश्रयतो लिङ्गवचनानुवर्तनं तत्र, कुमारीत्यादौ स्त्रीत्वं तु यतः प्रत्ययार्थत्वात् प्राधान्येनाभिधाविषयः, अतः कथं प्रधानभूतं स्त्रीत्वं प्रकृत्यर्थत्वेन गुणभूतस्याश्रयस्य धर्मान् लिङ्गादीन् प्रतिपद्येतेति।

अयं भावः—गुणोपसर्जनद्रव्यवचनाः शुक्लादयः शब्दा इति युक्तं यदाश्रयगतलिङ्गसंख्यानुवर्तिनस्ते, आश्रयस्य प्राधान्यात्। स्त्रीत्वं तु टाबादेः प्रत्ययस्य प्राधान्येन वाच्यम्, द्रव्यं तु प्रकृत्यर्थोऽत्र=स्त्रीत्वे गुणभूतमिति कथमत्र=स्त्रीप्रत्ययान्ते गुणधर्मान् प्रधानं स्त्रीत्वं प्रतिपद्येत। गुणो हि प्रधानधर्मान् अनुवर्तत इति युक्तम्,न तु प्रधानं गुणधर्मानिति। 'विशेषणानाञ्चाजातेः' (पा०१।२।५२) इतिसूत्रेणापि विशेष्यवद् विशेषणानां व्यक्तिवचने=लिङ्गसंख्येअतिदिश्येते, न तु विशेषणवद्

विशेष्याणाम् । अभिधाविषय इति । सत्यपि वास्तवे द्रव्यस्य प्राधान्ये न शब्दास्तदनुरुध्यन्ते, अपि तु स्वसामर्थ्यानुरूपमेषामभिधानमित्यर्थः ॥ १८५ ॥

एतत् परिहरति—

**सोऽयमित्यभिसम्बन्धादाश्रयं प्रतिपद्यते ।**
**स्त्रीत्वं स्वभावसिद्धो वा गुणभावविपर्ययः ॥१८६॥**

यद्यपि प्रक्रियायां स्त्रीत्वं प्रत्ययार्थ इति व्यवस्थाप्यते, तथापि शब्दशक्तिस्वाभावाद् गुणभावस्येह विपर्ययो वैपरीत्यं दृश्यते । स्त्रीत्वस्याप्राधान्यम्, द्रव्यस्य तु प्राधान्यमिति ।

न हि सर्वत्र प्रत्ययार्थः प्रधानम् । तद्यथा—साधने विधीयमानास्तिङो नाख्याते साधनं प्राधान्येनाचक्षते, अपि तु क्रियोपसर्जनम् । संख्यायां विधीयमानाश्च विभक्तयः संख्येयोपसर्जनं तामाचक्षते । दीव्यत्यादिषु च विधीयमानाष्ठगादयः क्रियावन्तमभिदधति प्राधान्येनेति सर्वत शब्दशक्तिरेवानुसरणीया ।

एवञ्चाश्रयस्यैव प्राधान्यात् तत्संख्यात्रोपपद्यते ।

---

विशेष्याणां व्यक्तिवचने । कुमारीत्यादौ सत्यपि वास्तवे द्रव्यस्योद्देश्यत्वलक्षणे प्राधान्ये कुमार्यादयः शब्दा न तद् 'द्रव्यस्य वास्तवं प्राधान्यम्' अनुरुध्यन्ते; अपि तु स्वसामर्थ्यानुरूपम् = स्वशक्त्यनुगुणम् एषाम् = शब्दानां स्वार्थाभिधानमिति कुमार्यादौ स्त्रीप्रत्ययान्ते स्त्रीत्वस्यैव प्राधान्यमित्यभिधाविषयो यत इत्यस्यार्थ इति ॥ १८५ ॥

स्त्रीत्वं टावादिप्रत्ययार्थः प्रधानम्, प्रकृत्यर्थस्तु द्रव्यमत्र गुणभूतमिति कथमत्र गुणधर्मान् प्रधानं प्रतिपद्येतेत्येतद् दूषणं परिहरति—सोऽयमित्यभिसंबन्धादिति ।

अस्यार्थः—टावादिप्रत्ययवाच्यतया प्रधानीभूतं स्त्रीत्वमाश्रयेण सह सोऽयमित्यभिसंबन्धात् तादात्म्याध्यासाद् आश्रयम् = आश्रयस्वरूपं तद्रूपतां प्रतिपद्यते प्राप्नोति । तथा चाश्रयधर्मयोर्लिङ्गवचनयोरनुवृत्तिस्तत्र ।

यद्वा शब्दशक्तिस्वभावसिद्धो गुणभावविपर्ययः—गुणभावस्य विपर्ययो वैपरीत्यं कुमारीत्यादौ स्त्रीप्रत्ययान्ते दृश्यते । स्त्रीत्वस्य प्रत्ययार्थस्यापि अप्राधान्यम्, द्रव्यस्य तु प्रकृत्यर्थस्यापि प्राधान्यमित्येवंरूपोऽत्र गुणभावविपर्यय इति ।

अयं भावः—यद्यपि शब्दसाधुत्वप्रक्रियादशायां स्त्रीत्वं प्रत्ययार्थं इति व्यवस्थाप्यते, तथापि शब्दशक्तिस्वभावादिह = स्त्रीप्रत्ययान्ते कुमार्यादौ गुणभावस्य विपर्ययौ = वैपरीत्यं दृश्यते । स्त्रीत्वस्य प्रत्ययार्थस्यापि अप्राधान्यम्, द्रव्यस्य तु प्रकृत्यर्थस्यापि प्राधान्यमिति । प्रकृतिप्रत्ययौ सहार्थं ब्रूतः, तयोः प्रत्ययार्थः प्रधानम्' इति तु प्रायोवादः ।

न हि सर्वत्र प्रत्ययार्थः प्रधानम् । तद् यथा—साधने कर्तरि कर्मणि वा विधीयमानास्तिङो नाख्याते साधनं प्रत्ययार्थत्वेऽपि प्राधान्येनाचक्षते, अपि तु क्रियोपसर्जनम् = क्रियायां गुणीभूतम् । संख्यायां विधीयमानाश्च द्विविधा अपि विभक्तयः संख्येयोपसर्जनीभूतां तामाचक्षते । दीव्यत्यादिषु च विधीयमानाष्ठगादयः क्रियावन्तं कर्तारमभिदधति प्राधान्येनेति सर्वत्र शब्दशक्तिरेवानुसरणीया ।

एवञ्च शब्दशक्तिस्वभावसिद्धस्य गुणभावविपर्ययस्याभ्युपगमे च आश्रयस्यैव प्राधान्यात् तत्संख्याऽत्र = स्त्रीप्रत्ययान्ते कुमार्यादावुपपद्यते ।

यद्वा यद्यपि संस्त्यानमात्रमभिधेयं प्रत्ययस्य, तथापि तेनोपचरिता भेदाः प्रकृत्यर्थ-व्यक्तीः प्रत्ययान्तोऽभिधत्त इति सिद्धं वचनम्। तदेवं सामानाधिकरण्ये त्रयः प्रकाराः।

द्रव्यादनतिरिक्तस्य स्त्रीत्वस्य प्रत्यायनम्, तद्यथा—'मूर्तिभ्यो मूर्तिधर्माणाम्'-(वा० प० ३वृ० १८१) इत्युक्तम्। अभेदोपचारो द्रव्यस्य वा प्राधान्यमितीहोक्तम् ॥१८६॥

इदानीं संस्त्यानवद् द्रव्यसामान्याभिधानपक्षेऽप्यत्र प्रत्ययार्थभूतस्यापि सामान्यस्य वास्तवगुणत्वसंभवाद् गुणवचनत्वादाश्रयतो लिङ्गवचनातिदेशं योजयितुमाह—

**साकाङ्क्षत्वाद् गुणत्वेन सामान्यं वोपदिश्यते ।**
**व्यक्तीनामात्मधर्मोऽसावेकप्रख्यानिबन्धनः ॥१८७॥**

यदभेदेन संस्त्यानवद् द्रव्यं प्रत्ययवाच्यं सामान्यभूतमुक्तम्, तत् सूत्रे विशेषण-शब्देन गुणपर्यायेणोक्तम्। यस्मात् प्रत्ययार्थत्वेन प्रधानमपि द्रव्यसामान्यं प्रकृत्यर्थ-गतद्रव्यविशेषापेक्षत्वाद् गुणशब्देनार्हत्यभिधानम्, द्रव्याकाङ्क्षस्यार्थस्य गुणत्वेन प्रसिद्धेः।

---

यद्वा यद्यपि संस्त्यानमात्रम्=स्त्रीत्वमात्रम्, अभिधेयं प्रत्ययस्य, तथापि तेनोपचारिता भेदाः=स्त्रीत्वेन सहारोपिता भेदाः प्रकृत्यर्थव्यक्तीः टावादिप्रत्ययान्तोऽभिधत्त इति सिद्धमाश्रयतो वचनम्। तदेवं लिङ्गलिङ्गिशब्दयोः सामानाधिकरण्ये त्रयः प्रकाराः।

द्रव्यादनतिरिक्तस्य स्त्रीत्वस्य प्रत्यायनम्, तद् यथा—मूर्तिभ्यो मूर्तिधर्माणामित्युक्तम्। अभेदोपचारः=अभेदारोपी द्रव्यस्य वा प्राधान्यमितीहोक्तमिति ॥ १८६ ॥

इदानीं संस्त्यानवद् द्रव्यसामान्याभिधानपक्षेऽपि=संस्त्यानवतः स्त्रीत्ववतः, द्रव्यसामान्यस्य अभिधानं टाबादिना स्त्रीप्रत्ययेनेति पक्षेऽपि अत्र=कुमार्यादौ स्त्रीप्रत्ययान्ते टावादिप्रत्ययार्थभूत-स्यापि द्रव्यसामान्यस्य वास्तवगुणत्वसंभवाद् गुणवचनत्वादाश्रयतो लिङ्गवचनातिदेशं योजयितु-माह—साकाङ्क्षत्वादिति।

अस्यार्थः—वा=अथवा यस्मात् प्रत्ययार्थत्वेन प्रधानमपि द्रव्यसामान्यं प्रकृत्यर्थगतद्रव्य-विशेषसाकाङ्क्षत्वाद् गुणत्वेनोपदिश्यते। यस्माच्चासौ गुणस्वभावतां प्राप्तो द्रव्यसामान्यस्वभावः स्त्रीत्वरूपो धर्मो व्यक्तीनां द्रव्यविशेषाणां स्त्रीत्येवमाकारकैकप्रख्यानिबन्धनः=तादृशप्रख्यायां निमित्तभूतः, आत्मधर्मः स्वभावः, तस्माद् गुणवचनत्वादाश्रयतो लिङ्गवचने तत्र भवत इति कारिकायामसावित्यत्र आत्मधर्मरूपविधेयापेक्षया पुंस्त्वनिर्देश इति।

अयं भावः—यदभेदेन हेतुना=प्रकृत्यर्थगतद्रव्यविशेषाभेदेन हेतुना प्रत्ययवाच्यं संस्त्यानवद् द्रव्यं सामान्यभूतमुक्तम्, तत् प्रकृत्यर्थगतद्रव्यविशेषरूपम् 'विशेषणानाञ्चाजातेः' (१।२।५२) इति सूत्रे गुणपर्यायेण विशेषणशब्देनोक्तम्। प्रत्ययवाच्ये द्रव्यसामान्येऽभेदेन विशेषणत्वात्। यस्मात् प्रत्ययार्थत्वेन प्रधानं द्रव्यसामान्यमपि प्रकृत्यर्थगतद्रव्यविशेषापेक्षत्वाद् गुणशब्देनाभिधानमर्हति, द्रव्याकाङ्क्षस्यार्थस्य गुणत्वेन प्रसिद्धेः।

न च विशेषेभ्यो विलक्षणं तत्। यस्माद् व्यक्तीनां द्रव्यविशेषाणामसौ गुणस्वभावतां प्राप्तः। एकप्रख्यानिबन्धनो हि व्यक्तीनां स्वभावः सामान्यं कथ्यते। व्यतिरेकदर्शनेऽपि समवायात् स्वरूपतिरोधानात् स्वभावताप्राप्तिरेव ॥ १८७ ॥

ननु साकाङ्क्षत्वाद् भवतु गुणत्वं द्रव्यसामान्यस्य बुद्ध्या परिकल्पितस्य, तत्त्वतस्तु संस्त्यानविशिष्टस्य द्रव्यस्यैकत्वादाश्रयाश्रयिभावः कथमित्याह—

**एवम्भूता च सावस्था भागभेदपरिग्रहे।**
**कृते बुद्धयैव भेदानामाश्रयत्वेऽवकल्पिते ॥१८८॥**

**निष्कृष्टेष्वपि भेदेषु व्यक्तिरूपाश्रये ततः।**
**लिङ्गप्रत्यवमर्शेन लिङ्गसंख्ये प्रपद्यते ॥१८९॥**

---

न च विशेषेभ्यः प्रागुक्तरीत्या गुणत्वेन व्यपदिष्टेभ्यो विलक्षणम्=भिन्नं तत्=द्रव्यसामान्यम्, अतोऽपि तद्—गुणशब्देनार्हत्यभिधानम्। यस्माद् व्यक्तीनां द्रव्यविशेषाणामसौ=द्रव्यसामान्यरूपः प्रत्ययार्थो गुणस्वभावतां प्राप्तः। एकप्रख्यानिबन्धनो हि=एकप्रख्यायां निमित्तभूतो हि व्यक्तीनां स्वभावः सामान्यं कथ्यते। व्यतिरेकदर्शनेऽपि=व्यक्तीनां द्रव्यविशेषाणां स्वभावाद् व्यतिरिक्तं द्रव्यसामान्यमित्येवंरूपे व्यतिरेकदर्शनेऽपि द्रव्यसामान्यस्य द्रव्यविशेषेषु समवायात्=समवायसंबन्धेन वृत्तेर्द्रव्यसामान्यस्य कुमारीत्यादि स्त्रीप्रत्ययान्तजन्यप्रत्यये गौरिति प्रत्यये गोत्वस्येव स्वरूपतिरोधानात् तस्य द्रव्यविशेषस्वभावताप्राप्तिरेव। तस्मात् टाबादिप्रत्ययवाच्यस्य द्रव्यसामान्यस्य प्रागुक्तरीत्या गुणत्वात् स्त्रीप्रत्ययान्तानां गुणवचनत्वादाश्रयो लिङ्गवचने उपपद्येते इति ॥ १८७ ॥

ननु अपोद्धारबुद्धया परिकल्पितस्य प्रत्ययार्थस्य द्रव्यसामान्यस्य प्रकृत्यर्थद्रव्यविशेषसाकाङ्क्षत्वाद् गुणत्वं भवतु, तत्त्वतस्तु=स्वरूपतस्तु संस्त्यानविशिष्टस्य द्रव्यस्य स्त्रीप्रत्ययान्तवाच्यस्यैकत्वाद् द्रव्यविशेषस्याश्रयत्वं द्रव्यसामान्यस्य त्वाश्रयित्वमित्याश्रयाश्रयिभावः कथमित्याशङ्क्याह—एवंभूता चेति। निष्कृष्टेष्वपीति च।

अस्यार्थः—एवंभूता च पूर्ववर्णिता सामान्यविशेषरूपाभ्यां शबला च=तु साऽवस्था, अपोद्धारबुद्धयैव भागभेदपरिग्रहे कृते तादृश्याः शबलावस्थाया भागरूपस्य भेदस्य द्रव्यविशेषस्य स्त्रीत्वानुविद्धस्य तादृशावस्थातः प्रकृत्यर्थत्वेन पृथक् परिकल्पने कृते, ततो भेदानां द्रव्यविशेषाणां प्रकृत्यर्थानां तादृशावस्थातः पृथक्कृतानां प्रत्ययार्थद्रव्यसामान्यनिरूपिताश्रयत्वेऽवकल्पिते ततो द्रव्यविशेषाद् भेदेष्वपि विशेषेष्वपि निष्कृष्टेषु व्यक्तिरूपाश्रये लिङ्गप्रत्यवमर्शेन स्त्रीत्येवं लिङ्गस्य शबलावस्थायां परामृष्टस्य व्यक्तिरूपाश्रये पुनः परामर्शेन व्यक्तिरूपस्याश्रयस्य लिङ्गसंख्ये प्रपद्यत इति।

सा सामान्यविशेषरूपाभ्यां शबलावस्था लिङ्गसंख्ये व्यक्तिरूपाश्रये विशिष्ट-द्रव्याश्रये प्रतिपद्यत इति समन्वयः।

तथाहि—अपोद्धारबुद्ध्या प्रकृतिप्रत्ययभागपरिकल्पने कृते तयैव समुदाय-वाच्यमर्थं प्रकृतिप्रत्यययोर्विभज्य किञ्चिदस्य भेदरूपं प्रातिपदिकोपादानमपरं प्रत्ययवाच्यं संस्त्यानानुविद्धमंशप्रख्यं प्रकल्पितम्।

भेदे च परिकल्पिते, प्रकृतिवाच्यानां विशेषणानामाश्रयत्वे समारोपिते तेषु पृथक्कृतेष्वपि स्वतन्त्रेष्वपि निरूप्यमाणेषु विशेषेषु लिङ्गप्रत्यवमर्शेन स्त्रीत्येवं निरूपणेन स्त्रीत्ववद् आश्रितत्वादाश्रयगतलिङ्गसंख्याप्रतिलम्भः।

अन्यत्र लिङ्गसंख्ययोः साहचर्येण दृष्टत्वादिह लिङ्गग्रहणम्, न त्वत्र स्त्रीत्ववतो लिङ्गान्तरस्य विरोधिनोऽतिदेशः संभवति। तदेवं द्विवचनानुपपत्तिः प्रतिविहिता। अनेकप्रत्ययानुपपत्तिस्त्वत्र न प्रतिविहिता। लिङ्गवचनविचारप्रस्तावेन हीदमिह कथ्यत इत्यत्राप्रस्तुतानेकप्रत्ययानुपपत्तिः। सुप्रतिविधाना चेयम्।

---

अत्र सुदूरस्थितायाः शबलावस्थायाः प्रतिपत्तिक्रियायां कर्तृत्वं बोध्यमिति।

अयं भावः—सा सामान्यविशेषरूपाभ्यां शबलावस्था व्यक्तिरूपाश्रये = विशिष्टद्रव्यरूपे आश्रये लिङ्गसंख्ये प्रतिपद्यत इति समन्वयः = पदानां योजना।

तथा हि—अपोद्धारबुद्ध्या = पदात् प्रकृतिप्रत्ययापोद्धारबुद्ध्या, पदार्थाच्च प्रकृत्यर्थप्रत्यया-र्थापोद्धारबुद्ध्या यथायथं प्रकृतिप्रत्ययभागपरिकल्पने कृते तयैव = पदार्थापोद्धृतप्रकृत्यर्थप्रत्ययार्थ-बुद्ध्या पदात्मकप्रकृतिप्रत्ययसमुदायवाच्यमर्थं वाच्यप्रकृतिप्रत्यययोर्विभज्य किञ्चिदस्य = पदात्मकस्य प्रकृतिप्रत्ययसमुदायस्य भेदरूपम् = विभक्तमर्थस्वरूपम्, प्रातिपदिकोपादानम् = प्रातिपदिकाभि-धानम्, प्रातिपदिकवाच्यम्, अपरं टावादिप्रत्ययवाच्यं संस्त्यानानुविद्धम् = स्त्रीत्वानुविद्धम्—स्त्रीत्वविशिष्टमंशप्रख्यम् = पदार्थात्मकस्य—प्रकृत्यर्थप्रत्ययार्थसमुदायस्य भागसदृशं प्रकल्पितम्।

एवं पदार्थात्मके प्रकृत्यर्थप्रत्ययार्थसमुदाये प्रकृत्यर्थरूपे प्रत्ययार्थरूपे च भेदे = विभागे परिकल्पिते प्रकृतिवाच्यानां द्रव्यविशेषाणां संस्त्यानविशेषणानां संस्त्यानाश्रयत्वे समारोपिते = प्रकल्पिते तेषु अपोद्धारबुद्ध्या प्रागुक्तरूपया पृथक्कृतेष्वपि पृथक्करणेनैव स्वतन्त्रेष्वपि निरूप्यमाणेषु द्रव्यविशेषेषु प्रकृतिवाच्येषु लिङ्गप्रत्यवमर्शेन स्त्रीत्येवं मनसा निरूपणेन स्त्रीत्ववद् = स्त्रीत्वप्रति-लम्भवद् आश्रितत्वात् = संस्त्यानानुविद्धस्यार्थभागस्य प्रत्ययवाच्यस्य प्रकृत्यर्थद्रव्यविशेषाश्रितत्वात् तत्राश्रयगतलिङ्गसंख्याप्रतिलम्भः।

अन्यत्र = 'शुक्लः पटः' इत्यादौ आश्रयगतलिङ्गसंख्ययोरतिदेशस्य साहचर्येण दृष्टत्वादिह = लिङ्गसंख्ये प्रपद्यते इत्यत्र लिङ्गग्रहणम्, न त्वत्र प्रत्ययवाच्यस्त्रीत्ववतो द्रव्यस्य = तत्र द्रव्ये लिङ्गान्तरस्य स्त्रीत्वविरोधिनोऽतिदेशः संभवति। तदेवं प्रागापादिता द्विवचनानुपपत्तिः प्रति-विहिता = परिहृता। 'कुमारितरा' इत्यादौ अनेकप्रत्ययानुपपत्तिस्त्वत्र न प्रतिविहिता। लिङ्ग-वचनविचारप्रस्तावेन हीदमिह कथ्यते इत्यनेकप्रत्ययानुपपत्तिरप्रस्तुताऽत्र। सुप्रतिविधाना = सुसमाधाना चेयमनेकप्रत्ययानुपपत्तिः।

क्वचित् किल स्वभावाद् द्रव्योपसर्जनस्य स्त्रीत्वस्यानेकेन प्रत्ययेनाभिव्यङ्ग्यत्वात् । न हि व्यञ्जकानां नियमः ।

एतामेव च शब्दशक्तिमनुसर्तुं ष्फस्य षित्वं ङीषर्थं कृतम् । ष्यङश्च ङित्करणं "यङश्चाप्" ( पा० ४-१-७४ ) इत्यत्र सामान्यग्रहणार्थम् ।

भाष्ये त्वन्यथा परिहारोऽभिहितः—'भावस्य च भावयुक्तत्वात्" इति हि वार्तिकम् । गुणपरिणामरूपत्वात् स्त्रीत्वस्यापि स्त्रीत्वेन योग उपपन्न इत्यर्थः । विस्तर-व्याख्यात्र वार्त्तिकोन्मेषे ।

एतच्च शब्दशक्तिमननुसृत्य प्रत्ययार्थपक्षे संस्त्यानस्य प्राधान्यं प्रक्रियागत-माश्रित्योक्तम् ।

यथा तु शब्दशक्त्यनुसारेणेह द्रव्यप्राधान्यं विवक्षितम्, तथा अनेकेनापि व्यञ्जकेन व्यङ्ग्यप्रतीतिर्दृष्टेति यथासमर्थितमेव ज्यायः ।

तथा ह्यभिधानभेदात् स्त्रीत्वस्य स्त्रीत्वयोग उच्यते । प्रातिपदिकेन द्रव्यरूपस्या-भिधानात् प्रत्ययेन धर्मरूपस्येति प्रत्ययद्वयोपपत्तिः । यथा तदेव कर्मादिविभक्तिभिः शक्तिरूपं प्रत्याय्यते । प्रातिपादिकेन तु वस्तुभूतम् । अयं ह्येकत्वादर्थस्य शब्दभेदात् प्रतीतिभेद उपपन्नः ॥ १८८-१८९ ॥

---

क्वचित् किल द्रव्योपसर्जनकस्य स्त्रीत्वस्य स्वभावादनेकेन प्रत्ययेनाभिव्यङ्ग्यत्वात् । नहि व्यञ्जकानां नियमः, एक एव व्यञ्जको भवतीति । एतामेव चानेकस्य प्रत्ययस्यैकस्त्रीत्वाभि-व्यञ्जकत्वरूपामेव च शब्दशक्तिमनुसर्तुं गार्ग्यायणी इत्यत्र स्त्रियां विहितस्य ष्फस्य षित्वम् "षिद्गौरादिभ्यश्च" ( पा० ४।१।१० ) इति ङीषर्थं कृतम् ।

'कौमुदगन्ध्या' इत्यत्र "अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ्गोत्रे" (पा० ४।१।७८) इति स्त्रियां विहितस्य ष्यङश्च ङित्करणम् "यङश्चाप्" (पा०४।१।७४) इत्यत्र सामान्यग्रहणार्थं कृतम् ।

भाष्ये तु 'कुमारितरा' इत्यादौ अनेकप्रत्ययानुपपत्तेरन्यथा परिहारोऽभिहितः—"भावस्य च भावयुक्तत्वात्" इति हि वार्त्तिकम् । विश्वस्य सत्त्वादिगुणत्रयपरिणामरूपत्वादुपचयरूपस्य स्त्रीत्वस्यापि गुणापचयरूपेण स्त्रीत्वेन योग उपपन्न इति फलितार्थः । अक्षरार्थस्तु स्त्रीत्वरूपस्य भावस्य च=अपि स्त्रीत्वयुक्तत्वादिति ।

अत्र प्रकृतिजन्यबोधे प्रकारो भावः । अत्र विस्तरव्याख्या वार्त्तिकोन्मेषे इति हेलाराजः ।

एतच्च वार्त्तिककृदुक्तं सामाधानं प्रत्ययार्थपक्षे=संस्त्यानं टाबादिप्रत्ययार्थ इति पक्षे शब्द-शक्तिमननुसृत्य प्रक्रियागतं संस्त्यानस्य प्राधान्यं चाश्रित्योक्तम् ।

यथा तु शब्दशक्त्यनुसारेणेह=शब्दशक्त्यनुसारेण समाधातृमते द्रव्यप्राधान्यं विवक्षितम्, तथाऽनेकेनापि व्यञ्जकेन 'गार्ग्यायणी' इत्यादौ व्यङ्ग्यप्रतीतिर्दृष्टेति तन्मतानुसारेण यथासमर्थित-मेव ज्यायः ।

तथा हि—वार्त्तिकोक्तप्रकारेण समाधाने हि अभिधानभेदात्=शब्दभेदात् 'कुमारितरा' इत्यादौ स्त्रीत्वेन स्त्रीत्वयोग उच्यते, प्रातिपदिकेन द्रव्यरूपस्याभिधानात्, प्रत्ययेन स्त्रीत्वस्य धर्म-रूपस्याभिधानादिति 'कुमारितरा' इत्यादौ ङीप्टाप्रूपप्रत्ययद्वयोपपत्तिः । यथा तदेव कर्मादि-

क्रमप्राप्त्या द्वन्द्वे लिङ्गवचनातिदेशस्योपयोगो विचार्यते। तत्र चार्थे द्वन्द्वविधानादलिङ्गसंख्यत्वे चोदिते 'स्वाभाविकत्वात्' इति परिहारोऽभिहितः। स कथमुपपद्यते। यतश्चार्थस्य द्वन्द्वेनोपग्रहाद् मा भूच्चास्य तत्र प्रयोगः।

चशब्दवत् तु द्वन्द्वस्याप्यर्थोऽभिहित इति अलिङ्गसंख्यत्वं केन न स्यादित्याशङ्क्य क्रमेणैतदुपपादयितुमाह—

**अन्तरेण चशब्दस्य प्रयोगं द्वन्द्वभाविनाम्।**
**अविशिष्टार्थवृत्तित्वं रूपाभेदात् प्रतीयते ॥१९०॥**

धवखदिरादिशब्दा द्वन्द्वं भावयन्ते प्राप्नुवन्ति, द्वन्द्वो वा भावी येषाम्, तेषां चशब्दप्रयोगं विना अविशिष्टार्थवृत्तित्वमवगम्यते। समुच्चयाख्यविशेषानपेक्षया धवादिजातीयस्यार्थस्य चशब्देनाविशेषितरूपा अविशिष्टरूपा धवादयः शब्दा वाचका इति समुच्चयद्योतनाय वाक्ये चशब्दमपेक्षन्ते ॥ १९० ॥

---

विभक्तिभिः शक्तिरूपं प्रत्याय्यते, कर्मादिप्रातिपदिकेन तु वस्तुभूतं धर्मि। अयं हि प्रतीतिभेदोऽर्थस्यैकत्वादेतन्नये शब्दभेदादुपपन्न इति ॥ १८८, १८९ ॥

अथेदानीं प्रातिलोम्येन क्रमप्राप्त्या द्वन्द्वे आश्रयतो लिङ्गवचनातिदेशस्योपयोगो विचार्यते। तत्र चार्थे द्वन्द्वविधानाच्च शब्दस्याव्ययत्वेनालिङ्गसंख्यत्ववत् चार्थे द्वन्द्वेऽपि अलिङ्गसंख्यत्वे चोदिते "स्वाभाविकत्वात्" इति परिहारोऽभिहितो भाष्ये। यथा चशब्दस्याव्ययत्वेनालिङ्गसंख्यत्वं स्वाभाविकम्, तथा द्वन्द्वस्यानव्ययस्य लिङ्गसंख्यावत्त्वं स्वाभाविकम्, स्वभावावगमश्च लोकप्रयोगाद् भवतीति तदाशयः। सः कथमुपपद्यते? यतश्चार्थस्य द्वन्द्वेनोपग्रहान्मा भूत् तत्र=द्वन्द्वे चशब्दस्य प्रयोगः।

किन्तु चशब्दवद् द्वन्द्वस्याप्यर्थोऽभिहित इति तद्वद् द्वन्द्वस्यालिङ्गसंख्यत्वं केन हेतुना न स्यादित्याशङ्क्य क्रमेणैतत्=द्वन्द्वस्य लिङ्गसंख्यावत्त्वम् उपपादयितुमाह—अन्तरेण 'चशब्दस्येति।

अस्यार्थः—द्वन्द्वभाविनाम्, द्वन्द्वो भावी येषां तेषां वाक्ये स्थितानां धवखदिरादिपदानाम्, वाक्ये चशब्दस्य प्रयोगमन्तरेण रूपाभेदात्=प्रथमान्तत्वेन स्वरूपाभेदात्, 'धवः, खदिरः' इत्यत्रावशिष्टार्थवृत्तित्वम्=अभिन्नार्थवृत्तित्वं प्रतीयते, समानविभक्तित्वे सामानाधिकरण्यप्रत्ययादिति तत्र समुच्चयद्योतनाय चशब्दप्रयोग आवश्यक इति।

अयं भावः-धवखदिरादिशब्दा द्वन्द्वं भावयन्ते=प्राप्नुवन्ति, 'इत्थं भूतलक्षणे च' (पा० २।३।२१) इत्यादौ भवतेः प्राप्त्यर्थकत्वात्, इत्थंभूतः कश्चित्प्रकारं प्राप्त इति हि तदर्थः, द्वन्द्वो वा भावी येषां तेषां वाक्ये चशब्दप्रयोगं विना अवशिष्टार्थवृत्तित्वम्=अभिन्नार्थकत्वमवगम्यते। वाक्ये चशब्दप्रयोगे चशब्देनाविशेषितरूपाः=चशब्दप्रयुक्तार्थभेदरहिता अविशिष्टरूपा अभिन्नार्थका रूप्यन्त इति व्युत्पत्त्या रूपशब्दस्यार्थपरत्वाद् धवादयः शब्दाः समुच्चयाख्यविशेषानपेक्षया धवादिजातीयस्यार्थस्य वाचका इति समुच्चयद्योतनाय वाक्ये चशब्दमपेक्षन्त इति ॥ १९० ॥

यतः—

**विकल्पवति वा वृत्तिर्निवर्त्येऽर्थे समुच्चिते।**
**तेषामज्ञातशक्तीनां द्योतकेन नियम्यते ॥१९१॥**

असति चादिपदप्रयोगे समुच्चयादिविशिष्टेऽर्थे द्वन्द्वभाविनां पदानां वाक्यावस्थानां वाचकशक्तिर्नावधार्यते। सन्देहो हि स्याद् विकल्पादौ। ततश्च यथा विकल्प्यमानेऽर्थे वाशब्देन पदानां वाचकशक्तिर्ज्ञाप्यते, नञा च निवर्त्ये प्रतिषिध्यमाने, तथा चशब्देन समुच्चीयमाने। द्योतकेनेति च वदन् परपदनिष्ठस्य शब्दस्य वाचकत्वाभावात् द्योतकलक्षणं ज्ञापयति। अकेवलपदप्रयोगो द्योतक इति निर्णीतं वाक्यकाण्डे ॥ १९१ ॥

एवं वाक्ये चशब्दप्रयोगः समर्थितः। समासे तु द्वन्द्वे नास्ति तस्य प्रयोग इत्याह—

**वृत्तौ विशिष्टरूपत्वाच्चशब्दो विनिवर्तते।**
**अर्थभेदेऽपि सारूप्यात् तच्चार्थेनापदिश्यते ॥१९२॥**

---

यतो वाक्ये चादिपदप्रयोगाभावे समुच्चयादिविशिष्टेऽर्थेऽज्ञातशक्तीनां द्वन्द्वभाविनां धवादिपदानां समुच्चयादिष्वर्थेषु शक्तिद्योतिकेन चशब्दादिना नियम्यते, अतो वाक्ये चादिपदप्रयोग आवश्यक इत्याह—विकल्पवतीति।

अस्यार्थः—यतो वाक्ये चादिपदप्रयोगाभावे समुच्चितादिष्वर्थेषु अज्ञातशक्तीनां तेषाम्=द्वन्द्वभाविनां धवादिपदानां विकल्पवति वृत्तिः, निवर्त्ये=निषेध्ये वा वृत्तिः, अथ=अथवा, समुच्चिते वृत्तिर्द्योतकेन चादिपदेन नियम्यते। अतो वाक्ये धवादिपदानां समुच्चितादिष्वर्थेषु शक्तिनिर्धारणाय चादिपदप्रयोग आवश्यक इति।

अयं भावः—असति वाक्ये चादिपदप्रयोगे द्वन्द्वभाविनां धवादिपदानां वाक्येऽवस्थितानां समुच्चयादिविशिष्टेऽर्थे वाचकत्वशक्तिर्नावधार्यते। असति चादिपदप्रयोगे विकल्पादिविषयकस्तत्र संदेहः स्यात्। ततश्च यथा वाशब्देन विकल्प्यमानेऽर्थे पदानां वाचकत्वशक्तिर्ज्ञाप्यते, नञा च निवर्त्ये प्रतिषिध्यमानेऽर्थे, तथा चशब्देन समुच्चीयमानेऽर्थे धवखदिरादिपदानां वाचकत्वशक्तिर्ज्ञाप्यते। द्योतकेनेति च वदन् परपदनिष्ठस्य=परपदार्थे परिसमाप्तस्य, स्वसमभिव्याहृतपदार्थातिरिक्तार्थाबोधकस्य शब्दस्य परपदशक्त्यैव स्वार्थस्योक्तत्वेन वाचकत्वाभावात् परपदशक्त्युद्बोधकत्वं द्योतकलक्षणं ज्ञापयति। वाक्यकाण्डे तु अकेवलप्रयोगः=न केवलः अकेवलः, अकेवलः प्रयोगो यस्य स तथा द्योतक इति लक्षणं निर्णीतमिति ॥ १९१ ॥

एवं द्वन्द्वविग्रहवाक्ये चशब्दप्रयोगः समर्थितः। समासे तु द्वन्द्वे नास्ति चशब्दप्रयोगः, समासे एकार्थीभावसत्त्वेन विग्रहवाक्यापेक्षया विलक्षणत्वादित्याह—वृत्तौ विशिष्टरूपत्वादिति।

अस्यार्थः—विग्रहवाक्यापेक्षया वृत्तेर्विशिष्टरूपत्वाद् भिन्नार्थकत्वात्, रूप्यते इति कर्मव्युत्पत्त्या रूपशब्दस्यार्थपरत्वाद् वृत्तौ द्वन्द्वे च शब्दो विनिवर्तते। विग्रहवाक्ये हि धवश्च

एकार्थीभावकृताद् वृत्तिवाक्ययोर्विशेषाद् वाक्यगतधर्मवैलक्षण्येन वृत्तिपदानामर्थाभिधानादन्तरेणापि चशब्दं समुच्चयोपाधिकं विशिष्टार्थाभिधानं द्वन्द्वे स्वाभाविकम्, न तु चार्थे द्वन्द्ववचनात्। न ह्यर्था आदिश्यन्ते। सहविवक्षायां हि वृत्तावनुस्यूतभेदः प्रत्येकं पदैरन्योन्यापेक्षैः समुदायोऽभिधीयत इति तत्र भेदस्य विगलनात् तदधिष्ठानः समुच्चयो न द्योत्यः।

वाक्ये तु भेदप्राधान्याच् चशब्देन भेदाधिष्ठानः समुच्चयो द्योत्यते। तदेवमत्यन्तार्थभेदेऽपि चार्थेन द्वन्द्वार्थो निर्दिश्यते, क्रियायामितरेतरापेक्षासाम्यमात्रात्। अन्वाख्यानाय ह्यर्थो लोकसिद्ध एव सर्वतो व्यावृत्तस्वभावः कथञ्चित् सादृश्यलेशानुगमनेन शब्देषु निर्दिश्यते। सर्वतो व्यावृत्तस्य प्रतिशब्दमर्थस्यानन्त्यान्निर्देष्टुमशक्यत्वात् प्रक्रियागौरवप्रसङ्गाच्चेति लाघवेनार्थनिर्देशो न्याय्यः ॥ १९२ ॥

---

खदिरश्चेत्यादौ धवखदिरादिपदं समुच्चितधवखदिरादिवाचकम्, च शब्दस्तु समुच्चयद्योतकोऽज्ञातशक्तिनिर्धारणाय विग्रहवाक्ये प्रयुज्यते। तत्र चशब्दप्रयोगाभावे हि विकल्पवति निवर्त्ये समुच्चिते वा धवादिपदानां शक्तेरज्ञातत्वात्। वृत्तौ तु धवखदिरावित्यादौ इतरेतरयोगे धवखदिरमित्यादौ समाहारद्वन्द्वे च यथायथं समुच्चिते धवखदिरादौ धवखदिरादिसमुच्चये वा एकार्थीभावसत्त्वेन निर्ज्ञातैव समुच्चये विशेषणीभूते विशेष्यभूते वा द्वन्द्वस्य शक्तिरिति न तन्निर्धारणाय विग्रहवाक्य इव च शब्दः प्रयुज्यत इति।

अयं भावः—एकार्थीभावकृतात् = एकार्थीभावाभावकृताद् वृत्तिवाक्ययोर्विशेषात् = भेदाद् वाक्यगतधर्मवैलक्षण्येन = वाक्यगतो धर्मः समुच्चयद्योतकचशब्दयोगित्वलक्षणस्तद्वैलक्षण्येन तादृशचशब्दयोगित्वाभावलक्षणेन वृत्तिपदानामर्थाभिधानात् चशब्दमन्तरेणापि = विनापि समुच्चयोपाधिकम् = समुच्चयविशेषणकं व्यावर्तकत्वरूपधर्मसाम्येनोपाधिशब्दस्य विशेषणपरत्वात् विशिष्टार्थाभिधानम् = विग्रहवाक्यार्थाद् व्यावृत्तार्थाभिधानम्, समुच्चयविशिष्टार्थाभिधानं वा द्वन्द्वे स्वाभाविकम्, न तु चार्थे द्वन्द्ववचनात् तेषां विशिष्टार्थाभिधानम्। न ह्यर्था वचनेन आदिश्यन्ते = विधीयन्ते। वृत्तौ सहविवाक्षायां हि समुच्चयेनानुस्यूतभेदः = अन्वितपदपदार्थविशेषः पदसमुदायोऽन्योऽन्यापेक्षैः पदैः प्रत्येकम् = एकैकेन अभिधीयत इति तत्र = वृत्तौ पदार्थभेदस्य विगलनात् = तिरोभावात् तदधिष्ठानः = भेदाश्रयो भेदनिमित्तकः समुच्चयो न द्योत्यः।

विग्रहवाक्ये तु भेदप्राधान्यात् = भेदस्य परस्परं भिन्नस्य पदार्थविशेषस्य प्राधान्यात्, प्राधान्येन प्रत्ययात् चशब्देन भेदाधिष्ठानः = पदार्थभेदनिमित्तकः समुच्चयो द्योत्यते। तदेवं वृत्तिविग्रहवाक्ययोरत्यन्तार्थभेदेऽपि चार्थेन द्वन्द्वार्थो निर्दिश्यते, 'धवखदिरौ छिन्धि' इत्यादौ क्रियायामन्वये जायमाने इतरेतरापेक्षा साम्यमात्रात्। लोकसिद्ध एव ह्यर्थः = वृत्त्यर्थः सर्वतो व्यावृत्तस्वभावः कथञ्चिद् विग्रहवाक्यार्थसादृश्यलेशानुगमनेनान्वाख्यानाय विग्रहवाक्यघटकशब्देषु निर्दिश्यते। सर्वतो व्यावृत्तस्य लोकसिद्धस्यार्थस्य आनन्त्यात् प्रतिशब्दं निर्देष्टुमशक्यत्वात्, प्रतिशब्दमर्थनिर्देशे प्रक्रियागौरवप्रसङ्गाच्चेति लाघवेन चार्थे द्वन्द्व इत्यादिरूपैरेवार्थनिर्देशो न्याय्य इति ॥ १९२ ॥

तत्र च तद्धितार्थनिर्देशवन्नैर्देशिकस्यार्थस्याप्राधान्यात् स्वभावसिद्ध एवार्थविशेषोऽनुगम्यते।

यदि तु यथानिर्देशमर्थाः स्युः, तदा—

**चस्य चासत्त्वभूतोऽर्थः स एवाश्रीयते यदि।**
**तद्धर्मत्वं ततो द्वन्द्वे चादिष्वर्थकृतं हि तत् ॥१९३॥**

'अलिङ्गमसंख्यमव्ययम्' इत्यर्थनिबद्धाव्ययसंज्ञेति चार्थे द्वन्द्वविधानात् तस्य चार्थस्येव धर्मो लिङ्गसंख्यारहितत्वं द्वन्द्वेऽप्यनुषज्येत। द्वन्द्वस्य चादिष्वपाठादव्ययसंज्ञा न प्राप्नोतीत्याशङ्कयोक्तम्—'चादिष्वर्थकृतं हि तत्' इति।

अलिङ्गसंख्यत्वे चादीनामव्ययत्वं स्वभावसिद्धं पाठेनानूद्यते, न तु पाठ एव विधायकः, उदाहरणार्थत्वात् तस्येति च समानार्थत्वे द्वन्द्वेऽप्यव्ययत्वं स्यादेव।

मा भूद् वाव्ययसंज्ञा पाठनिबद्धा, अलिङ्गासंख्यत्वं त्वर्थाश्रयं केन निवार्येतेत्यर्थः। अन्वर्थत्वाद् वाव्ययसंज्ञायाः सापि भवेत् ॥ १९३ ॥

---

तत्र चान्वाख्यानाय लाघवेनार्थनिर्देशस्य न्याय्यत्वेऽपि तद्धितार्थनिर्देशवत्=तद्धितार्थनिर्देशे तद्धितार्थस्य प्रत्ययार्थत्वेन प्राधान्यवत्, नैर्देशिकस्यार्थस्याप्राधान्यात्=प्रकृत्यर्थनिर्देशसिद्धस्यार्थस्य प्रकृत्यर्थत्वेनाप्राधान्यात् लोके स्वभावसिद्ध एवार्थविशेषो व्यावृत्तस्वभावोऽत्रान्वाख्यानायानुगम्यते।

यदि तु यथा निर्देशमर्था अन्वाख्याने उपयुक्ताः स्युः, तदा चार्थस्याव्ययार्थत्वेनासत्त्वभूतत्ववत् चार्थको द्वन्द्वार्थोऽप्यसत्त्वभूतः स्यादिति द्वन्द्वस्याप्यलिङ्गासंख्यत्वं प्रसज्येतेत्याह—चस्य चासत्त्वभूतोऽर्थ इति।

अस्यार्थः—चस्य च=तु अर्थः समुच्चयः असत्त्वभूतः=अद्रव्यस्वभावः, लिङ्गसंख्याद्यनन्वयित्वमसत्त्वभूतम्। स एव असत्त्वभूत एवार्थः समुच्चयः, यदि चार्थके द्वन्द्वेऽपि आश्रीयते, ततः=तस्माद् असत्त्वभूतस्य चार्थस्य=समुच्चयस्य द्वन्द्वेऽपि समाश्रयणात्, द्वन्द्वे तद्धर्मत्वम्=चार्थस्य समुच्चयस्यासत्त्वभूतस्य यो धर्मो लिङ्गसंख्यारहितत्वं तद्वत्त्वं प्रसज्येत। हि=यतः, चादिषु तद् अलिङ्गसंख्यत्वम्, अर्थकृतम्, न तु स्वरादिचादिपाठकृतमिति।

अयं भावः—अलिङ्गमसंख्यमव्ययमिति अर्थनिबद्धाऽव्ययसंज्ञा इति चार्थे द्वन्द्वविधानात् तद्धर्मत्वम्=तस्य चार्थस्येव धर्मो लिङ्गसंख्यारहितत्वं द्वन्द्वेऽपि अनुषज्येत=प्रसज्येत। द्वन्द्वस्य चादिषु पाठाभावादव्ययसंज्ञा न प्राप्नोति, तदभावे नैष दोष इत्याशङ्क्योक्तम्—'चादिष्वर्थकृतं हि तद्' इति।

चादीनामलिङ्गसंख्यत्वे स्वाभाविके लोकसिद्धे सत्यव्ययत्वमपि स्वभावसिद्धं चादिपाठेनानूद्यते, न तु चादिपाठ एव तदव्ययत्वस्य विधायकः, पाठस्योदाहरणार्थत्वादिति द्वन्द्वस्य चसमानार्थत्वे द्वन्द्वेऽप्यव्ययत्वं स्यादेव=प्रसज्येतैव।

अथवा चादिपाठनिबद्धा अव्ययसंज्ञा मा भूद्, अलिङ्गासंख्यत्वं तु अर्थाश्रयम्=अर्थनिमित्तकमिति चार्थे द्वन्द्वे केन तन्निवार्येत। अथवा अन्वर्थाऽव्ययसंज्ञा, यन्न व्येति तदव्ययमिति व्युत्पत्तेः। तथा च द्वन्द्वस्यालिङ्गासंख्यत्वे तस्य साऽपि भवेदिति ॥ १९३ ॥

तस्मान्न वचनानुरोधी स्वार्थः शब्दानामित्यभिधानवैचित्र्यादर्थवैचित्र्यमुदाहरति—

**चार्थः शक्तेः क्वचिद् भेदात् कथञ्चित् समवस्थितः ।**
**द्योतकाश्चादयस्तस्य वक्ता द्वन्द्वस्तु तद्वताम् ॥१९४॥**

शब्दशक्तिभेदाद् यथा समुच्चयशब्दो लिङ्गसंख्यायुक्तं चार्थमाह, तथा द्वन्द्व इति समुच्चयोपाधिकार्थाभिधायकोऽसौ । पदान्तरोपादानार्थनिष्ठास्तु द्योतकाः चादय इति वाचकत्वद्योतकत्वकृत एवायं विशेषो व्यक्तिवचनाभ्यामयोगो योगश्च॥ १९४ ॥

तथाहि—

**विकल्पाद्यभिधेयस्य चार्थस्यान्यपदार्थता ।**
**द्योतकत्वान्न कल्पेत तस्मात् सदुपलक्ष्यते ॥१९५॥**

---

तस्मान्न वचनानुरोधी = वचनविधेयः स्वार्थः शब्दानामिति मनसि निधायाभिधानवैचित्र्यात् = शक्तिभेदार्थवैचित्र्यम् = अर्थभेदमुदाहरति—चार्थः शक्तेरिति ।

अस्यार्थः—चार्थः समुच्चयः शब्दशक्तेर्भेदात् क्वचित् कथञ्चित् समवस्थितः । तथाहि—शब्दशक्तिभेदात् समुच्चयशब्दो लिङ्गसंख्यायुक्तचार्थवाचकत्वेन समवस्थितः । एवं द्वन्द्वोऽपि शब्दशक्तिभेदादेव लिङ्गसंख्यायुक्तस्य समुच्चयोपाधिकस्य स्वार्थस्याभिधायकः ।

तथा च शब्दशक्तिभेदादेव लिङ्गसंख्यारहितस्यासत्त्वभूतस्य चार्थस्य समुच्चयस्य चादयो द्योतकाः, द्वन्द्वस्तु तद्वताम् = चार्थसमुच्चयवतामर्थानां वक्ता = अभिधायक इति ।

अयं भावः—यथा समुच्चयशब्दः शब्दशक्तिभेदात् लिङ्गसंख्यायुक्तं चार्थमाह, तथा द्वन्द्व इति विज्ञातोऽसौ = शब्दः समुच्चयोपाधिकार्थाभिधायकः । पदान्तरोपादानार्थनिष्ठास्तु = स्वसमभिव्याहृतपदान्तरोपात्तचार्थपर्यवसायिनस्तु चादयः चार्थस्य द्योतका इति वाचकत्वद्योतकत्वकृत एवायं विशेषो लिङ्गसंख्याभ्यामयोगो योगश्च । समुच्चयवाचकत्वे लिङ्गसंख्याभ्यां योगः, समुच्चयः, समुच्चयौ इति, घटपटौ, घटपटमठा इति । समुच्चयद्योतकत्वे तु चादिषु तदभावः । घटश्च पटश्चेति ॥ १९४ ॥

तथाहि = पूर्वकारिकोक्तमर्थमेव हि विशदीकृत्य दर्शयति— विकल्पाद्यभिधेयस्येति ।

अस्यार्थः—विकल्पाद्यभिधेयस्य = विकल्पः, समुच्चयः, प्रतिषेध इत्यादिभिः शब्दैरभिधेयस्यार्थस्य, अन्यपदार्थता = अन्येन रूपेण लिङ्गसंख्यासमानाधिकरणेन रूपेण सत्त्वभूतत्वेन विकल्पादिपदप्रत्याय्यता वा शब्दादिभिः सह विकल्पादिशब्दानामर्थाभेदे द्योतकत्वाद् वा शब्दादीनामसत्त्वभूतविकल्पाद्यर्थद्योतकत्वाद् न कल्पेत = न घटेत । उभयेषामर्थाभेदेऽसत्त्वभूतार्थबोधकत्वस्यैवौचित्यात् । तस्मात् = वाचकत्वद्योतकत्वाभ्यामुभयेषामर्थभेदाद् धवश्च खदिरश्चेत्यादौ द्वन्द्वविषयकेण चशब्देन सत् = सत्त्वभूतं वस्तु समुच्चयरूपम् उपलक्ष्यते = लक्षणया बोध्यते, समुच्चयत्वेन साम्यादिति ।

विकल्पः समुच्चयः प्रतिषेध इत्येवमादिभिः शब्दैरभिधीयमानस्यार्थस्यान्येन रूपेण लिङ्गसंख्यायोगिना पदप्रत्याय्यता वाप्रभृतिभिर्विकल्पादिशब्दानामर्थाभेदे वाशब्दादिद्योतकत्वान्न घटेत ।

अस्ति तु लिङ्गसंख्यायोगिनोऽर्थस्य विकल्पादिशब्दैरभिधानात् सान्यपदार्थतेत्येकस्यैव वस्तुनः शब्दशक्तिभेदान्नानाकारस्य प्रकाशनमिति शब्दार्थोऽर्थ इति नये स्वाभाविक एवायमर्थभेद इति सत् सत्त्वभूतं वस्तु द्वन्द्वविषयत्वेन ( विषयकेण ) चशब्देनोपलक्ष्यते कुतश्चित् सामान्यात् । न त्वसौ तत्त्वतश्चशब्देनेव द्वन्द्वेन प्रत्याय्यत इत्यर्थः ।

तदेतदुक्तं भाष्ये—"नेदं वाचनिकमलिङ्गता असङ्ख्यता वा । किं तर्हि, स्वाभाविकमेतत्" इति ॥ १९५ ॥

एतदेवाह—

**तत्र स्वाभाविकं लिङ्गं शब्दधर्मे व्यपेक्षिते ।**
**शब्दः कश्चित् तमेवार्थं कथञ्चित् प्रतिपद्यते ॥१९६॥**

---

अयं भावः—विकल्पः, समुच्चयः प्रतिषेधः, इत्येवमादिभिः शब्दैरभिधीयमानस्यार्थस्यान्येन रूपेण लिङ्गसंख्यायोगिना=लिङ्गसंख्यासमानाधिकरणेन सत्त्वभूतत्वेन रूपेण विकल्पादिपदप्रत्याय्यता वाप्रभृतिभिः सह विकल्पादिशब्दानामर्थाभेदे वाशब्दादीनामसत्त्वभूतविकल्पादिद्योतकत्वान्न घटेत ।

अस्ति तु लिङ्गसंख्यायोगिनोऽर्थस्य सत्त्वभूतस्य विकल्पादिशब्दैरभिधानात् सा अन्यपदार्थता इत्येकस्यैव वस्तुनः शब्दशक्तिभेदात् सत्त्वभूतत्वासत्त्वभूतत्वभ्यां नानाकारस्य प्रकाशनमिति शब्दार्थोऽर्थ इति नये=शब्दात् प्रतीयमानोऽर्थः शब्दस्यार्थः, शब्दाद्धि येन रूपेणार्थः प्रतीयते तेनैव रूपेण स शब्दस्यार्थ इति नये स्वाभाविक एवायं शब्दभेदादर्थभेद इति सत्=सत्त्वभूतं वस्तु=द्रव्यभूतं लिङ्गसंख्याद्यन्वययोगि वस्तु धवश्च खदिरश्चेत्यादिविग्रहवाक्ये द्वन्द्वविषयकेण चशब्देनोपलक्ष्यते=लक्षणया बोध्यते कुतश्चित् सामान्यात् समुच्चयत्वरूपधर्मसाम्यात् । न त्वसौ=चार्थः चशब्देनेवासत्त्वभूतत्वेन रूपेण द्वन्द्वेन प्रत्याय्यत इति कारिकार्थः ।

तदेतदुक्तं भाष्ये—"नेदं वाचनिकमलिङ्गता असंख्यता वा । किं तर्हि, स्वाभाविकमेतत्" इति।

अत्र भाष्यवाक्ये वाशब्दश्चार्थे वाचनिकमित्यस्य वचनसिद्धमित्यर्थ इति ॥ १९५ ॥

एतदेवाह=शब्दस्यालिङ्गत्वमसंख्यत्वञ्च स्वाभाविकमित्येतदेवाह—तत्र स्वाभाविकमिति ।

अस्यार्थः—तत्र=भाष्ये, शब्दधर्मे, शब्दस्वभावे, व्यपेक्षितेऽभिसंहिते लिङ्गं स्वाभाविकमित्युक्तम् । अत्र लिङ्गपदं संख्याया अप्युपलक्षणम् ।

तथाहि—कश्चित् शब्दस्तमेवार्थं कथञ्चित्=केनचित् प्रकारेण लिङ्गेन संख्यया च प्रतिपद्यते प्राप्नोति, अन्यस्तु अन्येन प्रकारेणेति स्वाभाविकमेव लिङ्गं संख्या च, न तु वाचनिकम् ।

तद्यथा—कार्श्यम्, कृशिमा, कृशता इत्येते शब्दास्तमेवार्थं लिङ्गभेदेन ब्रुवते, स एषां स्वभाव इति ।

शब्दधर्मे शब्दस्वभावेऽभिसंहिते भाष्य एतदुक्तमित्यर्थः। तथाहि—वस्तुन ऐक्येऽपि शब्दभेदादर्थवैचित्र्यम्।

तद्यथा—कार्श्यम्, कृशिमा, कृशतेति प्रकृतिप्रत्ययार्थयोः प्रकृतिरूपस्याभेदेऽपि प्रत्ययश्रुतिभेदनिबन्धनः स्थितिप्रसवसंस्त्यानभेदः। जलम्, आपः, दारा, भार्येति च शब्दशक्तिभेदाल्लिङ्गवचनभेदः। तथा द्वैधमित्यलिङ्गोऽसंख्यः स एवमतिद्वैधानीति सलिङ्गसंख्योऽर्थः प्रतिपाद्यते।

अत्र हि "धमुञन्तात् स्वार्थे डदर्शनम्" ( वा० ५।३।४५ ) इति प्रत्ययान्तरत्वे शब्दान्तरत्वम्। एवं द्वन्द्वोऽपि सलिङ्गसंख्यार्थाभिधायी॥ १९६॥

स्यादेतत् वक्तुरभिप्रायादर्थानां व्यवस्था, न शब्दधर्मत इत्याशङ्क्याह—

**शब्दादर्थाः प्रतायन्ते स भेदानां विधायकः।**
**अनुमानं विवक्षायाः शब्दादन्यन्न विद्यते॥१९७॥**

जातावेकवचनं शब्दादिति। यथाभिप्रेतमर्थं प्रतिपादयितुं वक्ता योग्यान् शब्दानुदाहरतीति तेभ्यः शब्देभ्यो वक्तृविवक्षानुमानाद् व्यवहारे शब्दा एवार्थव्यवस्थापने प्रभवः। अक्षिनिकोचादीनामपि शब्देनैवानुमापकत्वं, सङ्केतितत्वात्।

---

अयं भावः—शब्दधर्मे = शब्दस्वभावेऽभिसंहिते भाष्ये एतदुक्तमित्यर्थः। तथाहि—वस्तुन ऐक्येऽपि शब्दभेदादर्थवैचित्र्यम् = अर्थभेदः।

तद्यथा—'कृशिमा, कार्श्यम्, कृशता' इत्यत्र प्रकृतिप्रत्ययार्थयोर्वाच्ययोः सतोः प्रकृतिरूपस्य कृशशब्दस्याभेदेऽपि प्रत्ययश्रुतिभेदनिबन्धनः स्थितिप्रसवसंस्त्यानभेदः = नपुंसकत्वपुंस्त्वस्त्रीत्वरूपलिङ्गभेदः। जलम्, आपः, दारा, भार्या इत्यत्र च शब्दशक्तिभेदाल्लिङ्गवचनभेदः = वचनं संख्या। तथा द्वैधमिति धमुञ्प्रत्ययान्तेऽव्ययेऽलिङ्गोऽसंख्योऽर्थः, स एवार्थः ततोऽप्रत्यये मतिद्वैधानि इत्यत्र मतिसंशयार्थके सलिङ्गसंख्यः प्रतिपाद्यते।

अत्र हि—"धमुञन्तात् स्वार्थेऽदर्शनम्" इति प्रत्ययान्तरत्वे शब्दान्तरत्वम् = प्रत्ययभेदे शब्दभेदः। एवं द्वन्द्वोऽपि सलिङ्गसंख्यार्थाभिधायी चशब्दस्यालिङ्गसंख्यार्थाभिधायित्वेऽपि शब्दशक्तिभेदादिति॥ १९६॥

ननु वक्तुरभिप्रायाद् विवक्षारूपादर्थानां लिङ्गसंख्याव्यवस्था, न तु शब्दधर्मतः = शब्दस्वभावादित्याशङ्क्याह—शब्दादर्थाः प्रतायन्त इति।

अस्यार्थः—शब्दात् = शब्देभ्यः, जातावेकवचनम्। अर्था नानाकारैः प्रकाशिताः प्रतायन्ते = विस्तारं लभन्ते। स शब्दः, भेदानां वाच्यविशेषाणां स्वशक्तिवशाद् वाच्याकारेण विधायकः = निर्माता। यतः शब्दादन्यद् विवक्षाया अनुमानमनुमापकम्—करणे ल्युट्, न विद्यते, अतः शब्दा एवार्थव्यवस्थापने प्रभवः, न वक्त्रभिप्रायरूपा विवक्षेति।

अयं भावः—जातावेकवचनं शब्दादिति, शब्देभ्य इति तदर्थः। यथाऽभिप्रेतमर्थं प्रतिपादयितुं वक्ता तदर्थबोधने योग्यान् शब्दानुदाहरति = उच्चारयति इति तेभ्यः = उच्चारितेभ्यः शब्देभ्यः वक्तृविवक्षानुमानाद् व्यवहारे शब्दा एवार्थव्यवस्थापने प्रभवः, न वक्तृविवक्षा। अनुमानप्रयोगश्चैवम्—शब्दात् प्रतीयमानोऽर्थः, स्वविषयकवक्तृविवक्षागोचरः, स्वजन्यप्रत्ययविषयत्वसंबन्धेन

तथाहि—शब्देभ्यो वस्त्वर्था एकस्वभावा अपि विस्तारं भजन्ते, तेभ्यो नानारूपाणां प्रकाशनात् ।

तथा च दारशब्दः स्त्रियं पुंस्त्वविशेषणामाचष्टे, भार्याशब्दः स्त्रीत्वविशिष्टाम्, अप्शब्दोऽवयवात्मकं तमेवार्थं बहुत्वावच्छिन्नमाह ।

उदकशब्दस्तु समूहरूपमेकमित्यादिशब्दधर्मोऽनुगन्तव्यः । अतश्च सशब्दः स्वशक्तिवशाद् भेदानां वाच्यविशेषाणां विधायको निर्माता । भागभेदस्य वस्तुनि समारोपणमिवार्थस्य स्वभावात् तत्कृतं नानात्वमित्यर्थः ।। १९७ ।।

तदेवं स्वाभाविको लिङ्गसंख्यायोगो द्वन्द्वे समर्थितः । 'अथवाश्रयतो लिङ्गवचनानि भविष्यन्ति' इति पक्षान्तरं वाचनिकं भाष्ये उक्तं विचारयितुमाह—

**समुच्चितः स्याद् द्वन्द्वार्थो गुणभूतसमुच्चयः ।**
**समुच्चयो वापि भवेद् गुणभूतसमुच्चितः ।।१९८।।**

---

शब्दवत्त्वात् शब्दान्तरजन्यप्रत्ययगोचरार्थान्तरवत्, व्यतिरेके प्रत्यक्षगोचरार्थो दृष्टान्तः । अक्षिनिकोचादीनामपि तत्तदर्थे संकेतितानां स्ववृत्तितत्तदर्थविषयकसंकेतग्राहकेण शब्देनैव तत्तदर्थानुपाकत्वम्, तत्तदर्थे तेषां संकेतितत्वात् ।

तथाहि—एकस्वभावा अपि वस्त्वर्थाः=वस्तुभूता अर्थाः शब्देभ्यो नानाकारैः प्रतीयमाना विस्तारं भजन्ते, तेभ्यः=शब्देभ्य एकस्यैवार्थस्य नानारूपाणां प्रकाशनात् ।

तथा च दारशब्दः स्त्रियं पुंस्त्वविशेषणामाचष्टे, भार्याशब्दः स्त्रीत्वविशिष्टाम्, अपशब्दोऽवयवात्मकं तमेवार्थं बहुत्वावच्छिन्नमाह ।

उदकशब्दस्तु अवयवसमूहरूपमेकमित्यादिः शब्दधर्मः=शब्दस्वभावोऽनुगन्तव्यः=तत्तच्छब्देष्वनुगतो ज्ञातव्यः । अतश्च स शब्दः स्वशक्तिवशाद् भेदानां वाच्यविशेषाणां नानाकाराणां विधायको निर्माता । भागभेदस्य=अवयवभेदस्याखण्डे वस्तुनि द्वन्द्वादिसमासार्थेऽर्थस्वभावात् समारोपणमिव तत् कृतम्=शब्दस्वभावकृतम्, शब्दवाच्यानामर्थानां नानात्वम्=नानारूपत्वम्, न तु वक्तृविवक्षाकृतमिति ।। १९७ ।।

तदेवं स्वाभाविकः=शब्दस्वभावकृतो द्वन्द्वे लिङ्गसंख्यायोगः समर्थितः । "अथवाश्रयतो लिङ्गवचनानि भविष्यन्ति" इति वाचनिकम्="विशेषणानां चाजातेः" ( पा० १।२।५२ ) इति वचनसिद्धं पक्षान्तरं भाष्ये उक्तं विचारयितुमाह—समुच्चितः स्यादिति ।

अस्यार्थः—इतरेतरयोगद्वन्द्वे गुणभूतसमुच्चयः=गुणभूतः समुच्चयो यत्र स तादृशः समुच्चितो द्वन्द्वसमासार्थः स्यात् । तथा च 'धवखदिरौ छिन्धि' इत्यत्र समुच्चितयोर्धवखदिरयोश्छेदनकर्मता । समुच्चयोऽत्र गुणभूतः । समुच्चयोऽत्र परस्परापेक्षयोः समाहारः ।

यद्यपि 'ईश्वरं गुरुञ्च भजस्व' इत्यत्रापि अस्ति समुच्चयः, तथापि नात्र द्वन्द्वसमासः । मिलितयोरेकक्रियान्वयित्वाभावेन परस्परापेक्षाया अभावात्, वा=अथवा समाहारद्वन्द्वे गुणभूतसमुच्चितः=गुणभूतः समुच्चितो यत्र स तादृशः समुच्चयोऽपि द्वन्द्वसमासार्थो भवेदिति संशय इति ।

समुच्चयोपाधिकाः समुच्चिता वा अर्था द्वन्द्वेनोच्येरन्, समुच्चितोपसर्जनो वा समुच्चय इति द्वैतम् ॥ १९८ ॥

तत्र,

**समुच्चितस्य प्राधान्ये लिङ्गसंख्ये स्वभावतः ।**
**समुच्चयस्य प्राधान्ये शास्त्रं स्यात् प्रतिपादकम् ॥१९९॥**

समुच्चयोपसर्जनस्य सत्त्वभूतस्यार्थस्य द्वन्द्ववाच्यत्वे स्वाभाविके लिङ्गसंख्ये इत्युक्तम् ।

यदा तु वचनेनार्थनिर्देशे समुच्चयः प्राधान्येन द्वन्द्ववाच्यः, तदा वचनेनैव "विशेषणानाम्" ( पा० १।२।५२ ) इत्याश्रयतो लिङ्गवचने विधीयते । धर्मरूपत्वात् समुच्चयस्याप्राप्तयोरिष्टयोर्लिङ्गसंख्ययोः शास्त्रं विधायकम् । तत्र समुच्चयस्य प्राधान्येऽप्याश्रितमात्रस्य विशेषणशब्देनाभिधानाद् युज्यतेऽतिदेशः ॥ १९९ ॥

---

अयं भावः – समुच्चयोपाधिकाः=समुच्चयविशिष्टाः, उपाधिशब्दोऽत्र विशेषणपरः, इतरेतरयोगद्वन्द्वे समुच्चयस्य विशेषणत्वेन द्वन्द्ववाच्यत्वात् समुच्चिताः=अत्र समुच्चितपदेनाभिप्रेताः, अर्था वा द्वन्द्वेनोच्येरन्, समुच्चितोपसर्जनको वा समुच्चय इति द्वैतम्=संशयोऽत्रेति ॥ १९८ ॥

तत्र=तस्मिन् द्वैते सति लिङ्गसंख्ययोः स्वाभाविकत्ववाचनिकत्वे पक्षभेदेन व्यवस्थापयितुमाह—समुच्चितस्य प्राधान्य इति ।

अस्यार्थः—समुच्चितस्य=समुच्चयोपसर्जनकस्य, अत एव सत्त्वभूतस्यार्थस्य प्राधान्ये=प्राधान्येन द्वन्द्ववाच्यत्वे शब्दस्वभावतो लिङ्गसंख्ये भवत इति ।

समुच्चयस्य समुच्चितोपसर्जनकस्य प्राधान्ये=प्राधान्येन द्वन्द्ववाच्यत्वे तु समुच्चयस्य चार्थस्यैवासत्त्वभूतत्वेन लिङ्गसंख्ययोरप्राप्त्या "विशेषणानाञ्चाजातेः" ( पा० १।२।५२ ) इति शास्त्रमिष्टयोर्लिङ्गसंख्ययोः प्रतिपादकम्=विधायकम्, सूत्रे विशेषणपदस्याश्रितमात्रपरत्वादिति ।

अयं भावः—समुच्चयोपसर्जनकस्य, अत एव सत्त्वभूतस्यार्थस्य द्वन्द्ववाच्यत्वे स्थिते लिङ्गसंख्ये स्वाभाविके=शब्दस्वभावसिद्धे इत्युक्तं प्राक् ।

यदा तु 'चार्थे द्वन्द्वः'। पा० २।२।२०) इति वचनेनार्थनिर्देशे समुच्चयः प्राधान्येन द्वन्द्ववाच्यः, तदा वचनेनैव "विशेषणानां चाजातेः" ( पा० १।२।५२ ) इत्यनेन आश्रयतो लिङ्गवचने विधीयेते । प्राधान्येन द्वन्द्ववाच्यस्य समुच्चयस्य धर्मरूपत्वेनासत्त्वभूतत्व.दप्राप्तयोरिष्टयोर्लिङ्गसंख्योः "विशेषणानां चाजातेः" (पा० १।२।५२) इति शास्त्रं विधायकम् । तत्र समुच्चयस्य प्राधान्येऽपि प्रकृतसूत्रे विशेषणशब्देनाश्रितमात्रस्याभिधानाद् युज्यते आश्रयतो लिङ्गवचनातिदेश इति ॥१९९॥

समुच्चितप्राधान्येऽपि शास्त्रस्योपयोगमेकीयमतेनाह—

**समुच्चयवतोऽर्थस्य प्राधान्येऽप्यपरे विदुः ।**
**निमित्तानुविधायित्वादसिद्धिं लिङ्गसंख्ययोः ॥२००॥**

निमित्तरूपेण निमित्तिनोऽवधार्यमाणस्य तदावेशाद् रूपतिरोधानमितीहापि समुच्चयाख्यनिमित्तावच्छादितस्य समुच्चितस्य स्वधर्मप्रतिपत्त्ययोग्यत्वात् तदीययोर्लिङ्गसंख्ययोरप्राप्तावतिदेश इति पक्षद्वयेऽपि शास्त्रमुपयोगि ॥ २०० ॥

एतद्युक्तमित्याह—

**समुच्चयो निमित्तं चेत् स्यान्निमित्तानुवर्तनम् ।**
**अन्वयव्यतिरेकाभ्यां चार्थो द्वन्द्वनिबन्धनः ॥२०१॥**

समुच्चयोपाधिरर्थो न द्वन्द्ववाच्यः, येन निमित्तानुविधानं स्यात् । अपि तु योऽर्थोऽन्वयव्यतिरेकाभ्यां द्वन्द्वस्य वाच्य इत्यवधारितः, स चार्थ इत्येवं द्वन्द्वस्यान्वाख्यानायानुभाष्यते ।

---

समुच्चितस्य प्राधान्येऽपि लिङ्गवचनातिदेशशास्त्रस्योपयोगमेकीयमतेनाह—समुच्चयवतोऽर्थस्येति ।

अस्यार्थः—अपरे वादिनः—समुच्चयवतोऽर्थस्य प्राधान्येऽपि द्वन्द्वे लिङ्गसंख्ययोरसिद्धिं विदुः । निमित्तानुविधायित्वात्=द्वन्द्वनिमित्तस्य समुच्चयरूपस्यार्थस्यासत्त्वभूतस्यालिङ्गसंख्यायोगिनोऽनुविधायित्वाद्=अनुसारित्वादिति द्वन्द्वे लिङ्गसंख्ययोरसिद्धौ हेतुः ।

अयं भावः—निमित्तरूपेण विशेषणेन निमित्तिनोऽवधार्यमाणस्य=विशेष्यमाणस्य तदावेशादरूपतिरोधानम्=निमित्तावेशात् स्वरूपतिरोधानमिति नियमाभ्युपगमेन इहापि=द्वन्द्वेऽपि समुच्चयाख्यनिमित्तस्वरूपावच्छादितस्य समुच्चितस्य निमित्तधर्मालिङ्गासंख्यत्वेनैव प्रतिपत्तियोग्यत्वात् स्वधर्मसलिङ्गसंख्यत्वप्रतिपत्त्ययोग्यत्वाच्च तदीययोः=स्वकीययोर्लिङ्गसंख्ययोरप्राप्तावतिदेश इति पक्षद्वयेऽपि=स्वाभाविको लिङ्गसंख्यायोगो द्वन्द्वे इति पक्षे, अथवा आश्रयतो लिङ्गवचनानि भविष्यन्ति'' इति वाचनिके पक्षान्तरे च ''विशेषणानाम्'' (पा० १।२।५२) इति शास्त्रमुपयोगि इति ॥ २०० ॥

एतदयुक्तमित्याह—समुच्चयो निमित्तं चेदिति ।

अस्यार्थः—चेत्=यदि, समुच्चयो द्वन्द्वविधौ निमित्तं स्यात्, तदा द्वन्द्वस्य लिङ्गसंख्यायोगायोगयोर्निमित्तानुवर्तनम्, निमित्तानुसारित्वं स्यात्, न त्वेतदस्ति, प्रत्युत चार्थ एव क्रियायां समकक्ष्यतयाऽन्वयिनामर्थानां समूह एव । अन्वयव्यतिरेकाभ्यां द्वन्द्वनिबन्धनः स्वाभिधाने द्वन्द्वनिमित्तकः । अन्वयव्यतिरेकाभ्यां द्वन्द्व एव तादृशसमूहरूपचार्थाभिधाने निमित्तमिति यावत् ।

अयं भावः—समुच्चयोपाधिरर्थः=समुच्चयप्रवृत्तिनिमित्तकोऽर्थः, न द्वन्द्ववाच्यः, येन निमित्तानुविधानं स्यात् । अपि तु योऽर्थोऽन्वयव्यतिरेकाभ्यां द्वन्द्वस्य वाच्य इत्यवधारितः, स द्वन्द्वस्यान्वाख्यानाय चार्थ इत्यनुभाष्यते=अनूद्यते ।

स च क्रियायां समकक्ष्याणामर्थानां समूह उद्भूतकारकशक्तिः। तस्य च कथञ्चित् समुच्चितशब्देनाभिधानदर्शनाद् भ्रान्त्या समुच्चयो निमित्तत्वेनाध्यारोप्यते ॥ २०१ ॥

परमार्थस्त्वयमत्रेत्याह—

**समुच्चितनिमित्तत्वे चार्थस्यापगमेऽपि वा ।**
**स्वभावसिद्धे द्वन्द्वस्य लिङ्गसंख्ये व्यवस्थिते ॥२०२॥**

यदा समुच्चितो द्वन्द्वस्य निबन्धनम्, तदा प्रधानधर्मानुविधानाद् न्यायप्राप्ते तदीये लिङ्गसङ्ख्ये।

यद्वात्यन्तवैलक्षण्याच्चार्थ एवार्थसमुच्चयो नास्ति, यस्य द्रव्येण सह गुणप्रधानभावश्चिन्त्येत। सादृश्यलेशानुगममात्रेण तु शब्दानुशासने यथाकथञ्चिदर्थो निर्दिश्यते द्वन्द्वनिमित्तत्वेन चार्थ इति।

सत्त्वभूत एव तु स्वभावतो द्वन्द्वार्थ इति समुच्चयस्यासत्त्वादेव निमित्तभावो नास्ति ॥ २०२ ॥

---

स च क्रियायामन्वयित्वे समकक्ष्याणामर्थानामुद्भूतकारकशक्तिः समूहः। तस्य च द्वन्द्वार्थविवरणपरे वाक्ये कथञ्चित् समुच्चितशब्देनाभिधानदर्शनाद् भ्रान्त्या समुच्चयो द्वन्द्वनिमित्तत्वेनाध्यारोप्यते=कल्प्यते ॥ २०१ ॥

परमार्थस्त्वयमत्रेत्याह—समुच्चितनिमित्तत्वे चेति।

अस्यार्थः—समुच्चितनिमित्तत्वे=समुच्चितस्यार्थस्य द्वन्द्वनिमित्तत्त्वे, चार्थस्यार्थसमुच्चयस्य द्वन्द्वनिमित्तत्वादपगमेऽपि वा इत्युक्ते पक्षद्वयेऽपि द्वन्द्वस्य लिङ्गसंख्ये स्वभावसिद्धे व्यवस्थिते। तत्राद्यः पक्षः—समुच्चितस्य प्राधान्ये ( १९९ ) इति कारिकायामुक्तः।

द्वितीयस्तु—समुच्चयो निमित्तं चेत् ( २०१ ) इत्यत्रोक्तः।

अयं भावः—यदा समुच्चितोऽर्थो द्वन्द्वस्य निबन्धनम्=निमित्तम्, तदा द्वन्द्वस्य प्रधानधर्मानुविधानाद् न्यायसिद्धे=स्वभावसिद्धे तदीये=समुच्चितार्थसंबन्धिनी लिङ्गसंख्ये द्वन्द्वे।

यद्वा द्वन्द्वनिमित्तस्य चार्थस्यार्थसमुच्चयस्य च सत्त्वरूपत्वासत्त्वरूपत्वाभ्यां परस्परमत्यन्तवैलक्षण्यात् चार्थ एवार्थसमुच्चयो नास्ति, यस्य द्रव्येण सह गुणप्रधानभावश्चिन्त्येत। सादृश्यलेशानुगममात्रेण तु शब्दानुशासने=व्याकरणे यथाकथञ्चिदर्थो द्वन्द्वनिमित्तत्वेन चार्थ इत्येवं निर्दिश्यते।

सत्त्वभूत एव तु=द्रव्यस्वरूप एव तु स्वभावतो द्वन्द्वार्थ इति समुच्चयस्यासत्त्वादेव=अद्रव्यत्वादेव द्वन्द्वे निमित्तभावो नास्तीति ॥ २०२ ॥

अन्योन्यापेक्षा द्वन्द्वान्तर्वर्तिपदार्थो द्वन्द्ववाच्याः, स एव च समुच्चयः। तत् किमुच्यते चार्थस्यापगम इत्याशङ्क्य पूर्वोक्तमर्थभेदं स्मारयति—

पदान्तरस्थस्यार्थस्य द्योतकत्वान्न युज्यते।
निपातो लिङ्गसङ्ख्याभ्यां द्वन्द्वस्त्वर्थस्य वाचकः ॥२०३॥

वस्त्वर्थस्याभेदेऽप्यभिधाव्यापारभेदाच्छब्दार्थो भिद्यत इति द्वन्द्वे सत्त्वभूतार्थाभिधानाच्चार्थस्य वाक्येऽसत्त्वभूतस्य दृष्टस्यापगमो वर्णित इत्यर्थः। वाचकद्योतकशक्तिविलसितं चैतत् प्रागेवोक्तम् ॥ २०३ ॥

पुनरपि निमित्तानुविधानदर्शनमुपालभते—

निमित्तानुविधाने च द्रव्यधर्मानपेक्षणात्।
गुणप्रधानभावेन क्रियायोगो न कल्पते ॥२०४॥

---

अन्योऽन्यापेक्षा द्वन्द्वान्तर्वर्तिपदार्था द्वन्द्ववाच्याः, स एव समुच्चयः, तत् किमुच्यते "चार्थस्यापगमे" इति, इत्याशङ्क्य पूर्वोक्तं वाच्यत्वद्योतत्वाभ्यां सत्त्वभूतत्वासत्त्वभूतत्वाभ्याञ्च चार्थद्वन्द्वार्थभेदं स्मारयति—पदान्तरस्थस्येति।

अस्यार्थः—निपातश्चादिः, घटश्च पटश्चेत्यादौ वाक्ये पदान्तरस्थस्य-चादिरूपनिपातपदातिरिक्ते चादिरूपनिपातपदसमभिव्याहृते पदान्तरे वाच्यतया स्थितस्य समुच्चयाद्यर्थस्य द्योतकत्वाद् द्योत्यस्यार्थस्यासत्त्वभूतत्वेन लिङ्गसंख्याभ्यां न युज्यते, द्वन्द्वस्तु सत्त्वभूतस्यार्थस्य समुच्चयस्य वाचक इति वाच्यत्वद्योत्यत्वाभ्यां सत्त्वभूतत्वासत्त्वभूतत्वाभ्यां च चार्थद्वन्द्वार्थयोर्भेद इति।

अयं भावः—वस्त्वर्थस्य=वस्तुभूतस्यार्थस्य समुच्चयस्य द्वन्द्वविग्रहवाक्ययोर्वाच्यत्वेनाभेदेऽपि द्वन्द्वनिपातयोरभिधाद्योतनारूपव्यापारभेदाच्छब्दार्थो भिद्यते=द्वन्द्वार्थो निपातार्थश्च समुच्चयः सत्त्वभूतत्वासत्त्वभूतत्वाभ्यां भिद्यत इति द्वन्द्वे सत्त्वभूतसमुच्चयरूपार्थाभिधानाद् वाक्येऽसत्त्वभूतस्य दृष्टस्य चार्थस्यापगमो वर्णितः। द्वन्द्वनिपातयोर्यथायथं वाचकद्योतकशक्तिविलसितं चैतत्=द्वन्द्वनिपातयोर्यथायथं सत्त्वभूतासत्त्वभूतार्थाभिधायित्वं, प्रागेवोक्तम् ॥ २०३ ॥

प्रागुक्तं निमित्तानुविधानदर्शनं पूर्वमुपालब्धमपि पुनरपि प्रकारान्तरेणोपालभते=दूषयति—निमित्तानुविधाने चेति।

अस्यार्थः—निमित्तानुविधाने च=द्वन्द्वनिमित्तस्य समुच्चयस्य द्वन्द्वेऽनुसरणे च समुच्चयधर्मस्यासत्त्वभूतत्वस्य द्वन्द्वार्थेऽनुसरणे च, तद्विरोधेन तत्र द्वन्द्वे द्रव्यधर्मानपेक्षणात्=द्रव्यधर्मस्य कर्मत्वादिसाधनशक्तिरूपस्यानपेक्षणाद् द्वन्द्वार्थस्य गुणप्रधानभावेन क्रियायोगो न कल्पत इति।

निमित्तानुविधाने निमित्तरूपाच्छुरितस्य निमित्तिनो द्रव्यस्याभिधानात् तस्य धर्मः शक्तिर्बुद्धया नावधार्यत इति क्रियाभिः प्राधान्येन गुणत्वेन वास्य योगो न स्यात्। द्रव्यं हि साधनम्। तस्य चानवधारितस्वशक्तेः कथं क्रियाभिसम्बन्धः ?

न च निमित्तस्य क्रियायोगोऽसत्त्वभूतत्वात्। तत्र गुणभावेन करणादिरूपतया क्रियासम्बन्धः, प्रधानभावेन कर्मरूपतया च तस्य क्रियाभिरुत्पत्तिसंस्कारप्रतिपत्तिविषयस्य समन्वयात् ॥ २०४ ॥

मा भूत् क्रियायोग इति चेदाह—

**यस्य नास्ति क्रियायोगः स्वतन्त्रोऽसौ न विद्यते।**
**अर्थो द्वन्द्वस्य तत्र स्यादुपादानमनर्थकम् ॥२०५॥**

"क्रियानुषङ्गेण विना न पदार्थः प्रतीयते" ( वा० प० २।४२५ ) इति स्वतन्त्रः स्वनिष्ठः क्रियाभिरसम्बध्यमानः पदार्थो नास्ति। ततश्च तस्मिन्नर्थे निमित्तानुरक्ते

---

अयं भावः—निमित्तानुविधाने निमित्तरूपाच्छुरितस्य निमित्तिनो द्रव्यस्याभिधानमिति अभ्युपगमात् तस्य धर्मः शक्तिर्बुध्या नावधार्यते=तस्य द्रव्यस्य निमित्तिनो धर्मः क्रियानिरूपिता कर्मत्वादिरूपा शक्तिर्बुद्धया नावधार्यते, समुच्चयरूपनिमित्ताच्छुरितस्य द्रव्यस्याभिधाने स्वधर्मस्य कर्मत्वादिशक्तिरूपस्य तिरोधानात्, निमित्तस्य च समुच्चयस्यासत्त्वभूतत्वेन तत्र कर्मत्वादिशक्तेरभावान्न तद्धर्मपुरस्कारेणापि द्वन्द्वार्थस्य क्रियायामन्वय इति क्रियाभिः साकं प्राधान्येन गुणत्वेन वाऽस्य=द्वन्द्वार्थस्य समुच्चितस्य समुच्चयस्य वा योगो न स्यात्। द्रव्यं हि साधनम्। तस्य चानवधारितकर्मत्वादिरूपस्वशक्तेः कथं क्रियाऽभिसंबन्धः।

न च द्वन्द्वनिमित्तस्य चार्थस्य समुच्चयस्यापि क्रियायोगोऽसत्त्वभूतत्वेन कर्मत्वादिशक्तिराहित्यात्। भवति च तत्र गुणभावेन करणादिरूपतया "दात्रलवित्राभ्यां छिनत्ति" इत्यादौ क्रियासंबन्धः। उत्पत्तिसंस्कारप्रतिपत्तिक्रियाविषयस्य तस्य=द्वन्द्वार्थस्य चार्थस्य 'घटपटौ कुरु, गेहदेहौ संस्कुरु, घटपटौ पश्य' इत्यादौ प्रधानभावेन कर्मरूपतया च क्रियायां समन्वय इति ॥ २०४ ॥

मा भूत् क्रियायोग इत्यभ्युपगमे दोषमाह—यस्य नास्ति इति।

अस्यार्थः—यस्यार्थस्य क्रियायोगो नास्ति, असौ स्वतन्त्रः=क्रियायोगरहितः स्वनिष्ठः स्वस्मिन्नेव परिसमाप्तः स्वप्रधानोऽर्थो न विद्यते। "क्रियाऽनुषङ्गेण विना न पदार्थः प्रतीयते" इत्युक्तेः। ततश्च, तत्र—तस्मिन्नर्थेऽसत्त्वभूतसमुच्चयरूपनिमित्तानुरक्ते वाचकत्वेन द्वन्द्वस्योपादानं परिग्रहः, अनर्थकं निष्प्रयोजनं स्यात्, क्रियायोगाभावेनाव्यवहार्यत्वादिति द्वन्द्वः शास्त्रेणान्वाख्येयो न भवेदिति।

अयं भावः—"क्रियानुषङ्गेण विना न पदार्थः प्रतीयते" ( वा० प० २।४२५ ) इत्युक्तेः स्वतन्त्रः स्वनिष्ठः=स्वस्मिन्नेव परिसमाप्तः क्रियाभिरसंबध्यमानः पदार्थः शाब्दे व्यवहारे नास्ति।

क्रियायोगाभावा द्द्वन्द्वस्य वाचकत्वेन परिग्रहो निष्प्रयोजन इति नान्वाख्येयोऽसौ भवेद्व्यवहार्यः। तस्मादन्वाख्यानादेवावसीयते निमित्ताननुविधानमत्र ॥ २०५ ॥

नचापि सर्वत्र निमित्तानुविधानमित्याह—

**समुच्चयवतोऽर्थस्य वाचको नानुवर्तते ।**
**निमित्तमपि चास्यार्थः स्वधर्मैर्युज्यते ततः ॥२०६॥**

येऽप्येते समुच्चितादयः शब्दाः समुच्चयोपाधिकार्थाभिधायकत्वेन प्रसिद्धाः, तेऽपि निमित्तं नानुरुध्यन्ते। प्रागेव तु द्वन्द्वः, यत्र समुच्चयोपाधित्वे भ्रान्तिः, यत्र हि निमित्तरूपेण निमित्तिनि तिरोहितस्वरूपे प्रतिपत्तिः, तत्र निमित्तानुविधानम्, यथा शुक्लादौ ।

इह पुनर्निमित्तेन भिन्नेनावच्छिन्नस्याख्यानमिति नास्ति तत्। अत एव समुच्चयवत इति मतुबुपात्तः। भिन्नेन निमित्तेनावच्छिन्नस्यात्राख्यानमिति मतुपा दर्शयति ।

---

ततश्च तस्मिन्नर्थे निमित्तानुरक्ते द्वन्द्वार्थे क्रियायोगाभावात् तद्वाचकत्वेन द्वन्द्वस्य शाब्दे व्यवहारे परिग्रहः=प्रयोगो निष्प्रयोजन इति नान्वाख्येयोऽसौ=द्वन्द्वो भवेत्, अव्यवहार्यत्वात्। तस्मादन्वाख्यानादेवावसीयते=निश्चीयते, अत्र=द्वन्द्वे निमित्ताननुविधानमिति ॥ २०५ ॥

न चापि सर्वत्र निमित्तानुविधानम्, किन्तु यत्र निमित्तरूपेण निमित्तस्वरूपं तिरोधीयते तत्रैव, यथा शुक्लादौ द्वन्द्वे तु समुच्चयरूपेण निमित्तेन भिन्नेनावच्छिन्नरूपं द्वन्द्वार्थस्य निमित्तिनः स्वरूपं प्रतीयते, न तु तेन तिरोहितरूपमिति न तत्र निमित्तानुविधानम् किन्तु स्वधर्मयोग एवेत्याह-समुच्चयवतोऽर्थस्येति ।

अस्यार्थः—अपि च=किञ्च, समुच्चयवतोऽर्थस्य वाचको द्वन्द्वः, निमित्तं समुच्चयं तद्धर्ममसत्त्वभूतत्वं नानुवर्तते=नानुसरति, निमित्तनिमित्तिनोर्भेदेनावच्छेद्यावच्छेदकभावेन प्रतीत्या निमित्तिरूपस्य तिरोधानाभावात्। ततः=निमित्तिनो निमित्तधर्मानुविधानाभावात्। अयमर्थः=निमित्तिनो द्वन्द्वस्यार्थः, स्वधर्मैर्लिङ्गसंख्यादिभिर्युज्यत इति ।

अयं भावः—येऽप्येते समुच्चितादयः शब्दाः समुच्चयोपाधिकार्थाभिधायकत्वेन प्रसिद्धाः, तेऽपि समुच्चयरूपं स्वप्रवृत्तिनिमित्तं नानुरुध्यन्ते, प्रागेव तु द्वन्द्वः। यत्र वस्तुतः समूहवाचिनि समुच्चयोपाधिकत्वे भ्रान्तिः, यत्र हि निमित्तरूपेण तिरोहितस्वरूपे निमित्तिप्रतिपत्तिः, तत्र निमित्तानुविधानम्, यथा शुक्लादौ। इह पुनः=द्वन्द्वे तु निमित्तेन निमित्तिनो भिन्नेनावच्छिन्नस्य निमित्तिन आख्यानमिति नास्ति तत्=निमित्तानुविधानम् ।

अत एव कारिकायाम् 'समुच्चयवतः' इति मतुबुपात्तः। भिन्नेन निमित्तेनावच्छिन्नस्यार्थस्यात्र=द्वन्द्वे आख्यानमिति मतुपा दर्शयति ।

यत्र तु निमित्तरूपेणाभिधानम्, तत्र शुक्लादौ मतुब् नोत्पद्यते। तस्मान्निमित्तानुविधानाभावादत्र समुच्चितशब्दः स्वार्थं स्वलिङ्गसंख्यायोगिनमभिधत्ते, तद्वद् द्वन्द्वोऽपीति न कश्चिद् दोषः।

तदेवम् 'समुच्चितः स्याद् द्वन्द्वार्थ' (वा० प० ३ वृ० २० ) इत्यत्र पक्षे स्वभावत एव लिङ्गसंख्ये इत्येतदेव युक्तम्। समुच्चयप्राधान्ये तु "विशेषणानाम्" (पा०१।२।५२) इति शास्त्रेण लिङ्गसंख्याविधानं तत्रैव तद् वक्तव्यम्॥ २०६॥

समकक्ष्यानर्थानभिदधतो द्वन्द्वस्य कः समानाधिकरणपदवाच्य आश्रयः, यस्य व्यक्तिवचने प्रतिपद्येतेत्याशङ्क्याह—

**बाह्यो नास्त्याश्रयो द्वन्द्वे विशेषौ तत्र हि श्रुतौ।**
**समुच्चयस्तदाधारस्तद्धर्मैर्व्यपदिश्यते ॥२०७॥**

'शुक्लाः पटाः' इत्यत्र यथा पटशब्दोपादानो गुणवचनस्याश्रयोऽस्ति, नैवं पदान्तरोपादानो द्वन्द्वे विद्यते। श्रुत्यैव द्वन्द्वपदाभ्यां विशेषयोर्भेदयोरुपादानात्तदन्त-

---

यत्र तु निमित्तरूपेण निमित्तिनोऽभिधानम्, तत्र शुक्लादौ मतुब् नोत्पद्यते। तस्माद्-निमित्तानुविधानाभावादत्र=शब्दे व्यवहारे समुच्चितशब्दः स्वार्थं स्वलिङ्गसंख्यायोगिनमभिधत्ते, तद्वद् द्वन्द्वोऽपीति न कश्चित्=कोऽपि पूर्वोक्तो दोषः।

तदेवम् "समुच्चितः स्याद् द्वन्द्वार्थः" (वा० प० ३ वृ० २००) इत्यत्र पक्षे शब्दस्वभावत एव लिङ्गसंख्ये इत्येतदेव युक्तम्। समुच्चयप्राधान्ये तु "विशेषणानाम्" ( पा० १।२।५२ ) इति शास्त्रेण लिङ्गसंख्याविधानमिति तत्रैव=समुच्चयप्राधान्य एव तद्वक्तव्यम्="विशेषणानाम्" ( पा० १।२।५२ ) इति सूत्रं वक्तव्यमिति ॥ २०६ ॥

ननु समकक्ष्यानर्थानभिदधतो द्वन्द्वस्य कः समानाधिकरणपदवाच्य आश्रयः, सर्वस्यैव द्वन्द्वस्य व्यधिकरणपदघटितत्वात्। एवञ्च कस्य व्यक्तिवचने द्वन्द्वः प्रतिपद्येतेत्याशङ्क्याह—बाह्यो नास्त्याश्रय इति।

अस्यार्थः—यथा-'शुक्लः पटः' इत्यादौ बाह्यः पदान्तरेणोपादीयमानः पटादिर्गुणस्याश्रयोऽस्ति, नैवं द्वन्द्वे बाह्यः पदान्तरोपादानोऽर्थ आधारोऽस्ति। हि=यतः, तत्र=द्वन्द्वे यौ विशेषौ श्रुतौ, तदाधारः=तौ आधारौ यस्य स तदाधारः, समुच्चयो द्वन्द्ववाच्यः, तद्धर्मैः-तयोर्विशेषयोर्द्वन्द्वान्तर्वर्तिपदार्थयोर्धर्मैर्लिङ्गसंख्यादिभिः समुच्चयो व्यपदिश्यते। तत्र युगपत् पदद्वय-लिङ्गयोर्विरोधेनातिदेशासंभवात् पर्याये प्राप्ते 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' (पा० २।४।२६) इति शास्त्रमारभ्यते। 'शुक्लः पटः' इत्यादौ आश्रयः पदान्तरोपात्तः पदार्थविशेषः। द्वन्द्वे तु द्वन्द्वान्तर्वर्तिपदार्थरूपावेव स इति विशेषः।

अयं भावः—'शुक्लः पटः' इत्यत्र यथा पटशब्दोपादानः=पटशब्देनाभिधीयमानो गुणवचनस्य=गुणशब्देनोच्यमानस्य आश्रयोऽस्ति, नैवं पदान्तरोपादानः=पदान्तरेणाभिधीयमानः आश्रयो द्वन्द्वे विधीयते। श्रुत्यैव=शब्दशक्त्यैव द्वन्द्वपदाभ्याम्=द्वन्द्वघटकपदाभ्यां विशेषयो-

रङ्गयोः । धवखदिराविति तावेव विशेषौ समुच्चीयमानौ समुच्चयस्याधार आश्रय इति तल्लिङ्गसंख्ये समुच्चयवाचिनौ द्वन्द्वस्य भवतः ।

तत्र च पूर्वोत्तरपदगताभ्यां विरुद्धाभ्यां लिङ्गाभ्यां युगपद् व्यपदेशासम्भवात् पर्याये प्राप्ते परवल्लिङ्गं नियम्यते । संख्याप्यवयवगतैकत्वसमाहारात्मिका द्वित्वबहुत्वलक्षणावयवलक्षणाश्रयवद् द्वन्द्वस्य भवति ॥ २०७ ॥

एवं परस्परापेक्षा अवयवार्था एव द्वन्द्वार्थ इत्यत्र दर्शने प्रतिपादितमिदम् । इदानीं युगपदधिकरणवचनतायाश्चार्थस्यासम्भवपक्षे प्रतिपादयितुमाह—

**यो वावयवभेदाभ्यां भेदवद्भ्यामिवान्वितः ।**
**एकः समूहो धर्मान् स भागयोः प्रतिपद्यते ॥२०७॥**

अवयवभेदानुगतः समुदायः सहविवक्षायां द्वन्द्ववाच्यः, अभिधानं पुनः स्वाभाविकम् 'याभ्यां चैकमनेकार्थं ताभ्यामेवापरं पदम्' ( वा० प० ३ वृ० ३२ ) इति

---

भेदयोः = भिद्यमानयोः अन्तरङ्गयोः = द्वन्द्वान्तर्वर्तिपदोपस्थापितयोः उपादानात् = अभिधानात् । धवखदिराविति तावेव विशेषौ समुच्चीयमानौ समुच्चयस्य द्वन्द्ववाच्यस्याधारः = आश्रय इति तल्लिङ्गसंख्ये = विशेषयोर्लिङ्गसंख्ये समुच्चयवाचिनो द्वन्द्वस्य भवतः ।

तत्र च पूर्वोत्तरपदगताभ्यां विरुद्धाभ्यां लिङ्गाभ्यां युगपद् व्यपदेशासंभवात् पर्याये प्राप्ते परवल्लिङ्गम् "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः" ( पा० २।४।२६ ) इति सूत्रेण नियम्यते । संख्याप्यवयवगतैकत्वसमाहारात्मिका = अवयवगतैकत्वद्वयाद्यात्मिका द्वित्वबहुत्वरूपाऽवयवरूपाश्रयवद् द्वन्द्वस्य भवतीति ॥ २०७ ॥

एवं परस्परसापेक्षा अवयवपदार्था एव द्वन्द्वार्थः, स एव समुच्चयः समूहो वा, समूहस्यावयवानतिरेकात्। तत्रोद्भूतावयवभेदः समूह इतरेतरयोगः, तत्र द्विवचनबहुवचने, अनुद्भूतावयवभेदस्तु स समाहारः, तत्र नपुंसकत्वैकत्वे इत्यत्र दर्शने एकेन पदेनापरपदसापेक्षेण चार्थस्याभिधानमित्येवं रूपयुगपदधिकरणवचनतापक्षे पर्यवसिते प्रतिपादितमिदम् = पूर्वोक्तम् । इदानीं चार्थरूपाया युगपदधिकरणवचनताया असंभवपक्षे "सेयं युगपदधिकरणवचनता दुःखा च दुरुपपादा च" इति भाष्योक्ते द्वन्द्वे आश्रयतो व्यक्तिवचने प्रतिपादयितुमाह—यो वाऽवयवभेदाभ्यामिति ।

अस्यार्थः—वा इति पक्षान्तरे । य एकः समूहः परस्परं भेदवद्भ्यामिवावयवभेदाभ्यामेकैकपदवाच्यत्वेन शास्त्रे कल्पिताभ्यामन्वितः । अनुस्यूतभेदस्य च समुदायस्य द्वन्द्वेन प्रतिपाद्यत्वाद् भेदवद्भ्यामिवेत्याह । स समूहः भागयोः स्वाश्रयभूतयोर्धर्मान् लिङ्गसंख्यादीन् प्रतिपद्यते = प्राप्नोति । युगपदधिकरणवचनतापक्षे एकेन पदेनोपसर्गादिसदृशद्योतकापरपदसापेक्षेण चार्थस्याभिधानम् । अत्र पक्षे तु अवयवार्थयोरवयवपदाभ्याममभिधानम् । समुदायशक्त्या तु समुदायस्य चार्थस्याभिधानमिति विशेषः ।

अयं भावः—अवयवभेदानुगतः समुदायः सहविवक्षायां युगपदधिकरणतापक्षे पर्यवसितायां द्वन्द्ववाच्यः शास्त्रे कल्पितः, अभिधानं पुनः स्वाभाविकम् = विशिष्टाभिधानशक्तिस्तु एकार्थीभावरूपा स्वाभाविकी । "याभ्यां चैकमनेकार्थं ताभ्यामेवापरं पदम्" ( वा० प० ३ वृ० ३२ ) इति ।

प्रत्येकं पदैरभिधीयमानोऽर्थ इत्यत्र दर्शने व्यक्तिवचने अवयवाश्रये समुदायः प्रतिलभत इति स्पष्टमेतत्। अनुस्यूतभेदस्य च समुदायस्य द्वन्द्वेन प्रतिपाद्यत्वाद् भेदवद्भ्यामिवेत्याह। न त्वत्यन्तभिन्नाभ्यामित्यर्थः।

अभेदानुगमाच्च तयोर्भागयोराश्रयभूतयोः समुदायो लिङ्गसंख्ये अनुवर्तते। अन्यथा निरस्तभेदस्य वनयूथादिवदभिधाने भेदयोराश्रयभूतयोरनुपादानाद् वर्तिपदाभ्यां कस्य लिङ्गसंख्ये भजेत द्वन्द्व इत्यभिप्रायः ॥ २०८ ॥

नन्वेवमप्यवयवव्यतिरेकेण समुदायानुपलक्षणात् क आश्रयाश्रयिभाव इत्याह—

**एकश्च द्व्यात्मकोऽर्थोऽसौ भेदाभेदसमन्वितः।**
**यौ भेदावाश्रितस्तत्स्थे लिङ्गसङ्ख्ये प्रपद्यते ॥२०९॥**

अवयवात्मतया गृह्यमाणः समुदायो भिन्नः, स्वतस्त्वेकप्रख्यानिबन्धनतयाऽभिन्न इति द्विरूपः।

तथाच प्रत्येकं पदैर्भेदात्मना प्रत्याय्यमान आश्रयः, समूहात्मना त्वर्थाश्रितः (त्वाश्रितः) इत्याश्रयभूतवर्तिपदार्थसमवेते लिङ्गसंख्ये समवलम्बत इति स्थितम् ॥२०९॥

---

अस्यार्थः—याभ्यामवयवार्थाभ्यां द्वन्द्वघटकमेकं पदमनेकार्थं युगपदधिकरणवचनतापक्षे ताभ्यामेवार्थाभ्यामपरमपि पदमनेकार्थमिति प्रत्येकं पदैरभिधीयमानः समुदायोऽर्थो द्वन्द्वे इत्यत्र दर्शने युगपदधिकरणतापक्षपर्यवसिते अवयवाश्रये व्यक्तिवचने समुदायः प्रति लभत इति स्पष्टमेतत् प्रागुक्तम्। युगपदधिकरणताया असंभवपक्षे तु--अनुस्यूतभेदस्य च समुदायस्य द्वन्द्वेन प्रतिपाद्यत्वाद् भेदवद्भ्यामिवेत्याह। न त्वत्यन्तभिन्नाभ्यामित्यर्थः। विशिष्टार्थनिविष्टत्वाद् भागयोः परस्परं भेदाप्रतीतेः। परस्परं समुदायेन सह चाभेदानुगमाच्च तयोर्भागयोराश्रयभूतयोर्लिङ्गसंख्ये समुदायोऽनुवर्तते।

अन्यथा वनयूथादिवन्निरस्तभेदस्य समुदायस्याभिधाने आश्रयभूतयोर्भेदयोरनुपादानाद् द्वन्द्वघटकपदाभ्यां कस्य लिङ्गसंख्ये द्वन्द्वो भजेत इति ॥ २०८ ॥

नन्वेवमपि अवयवव्यतिरेकेण समुदायानुपलक्षणात्=अवयवव्यतिरिक्तस्य समुदायस्यादर्शनात् क आश्रयाश्रयिभावो द्वन्द्वे इत्याशङ्क्याह—एकश्चेति।

अस्यार्थः—एकश्च=वस्तुत एकोऽपि, असौ द्वन्द्वपदवाच्यः समुदायरूपोऽर्थः द्व्यात्मकः, द्विरूपः, एकोऽवयवात्मतया गृह्यमाण उद्भूतावयवभेदः। द्वितीयस्तु एकप्रख्यानिबन्धनः=घटपटावित्यत्र घटपटसमुदाय इत्येकस्याः प्रख्यायाः प्रतीतेर्निबन्धनः निमित्तभूतः तिरोहितावयवभेदः। एवं स्थितेऽसौ द्वन्द्ववाच्यः समुदायो यौ अवयवभेदौ आश्रितस्तत्स्थे लिङ्गसंख्ये प्रपद्यत इति।

अयं भावः—अवयवात्मतया गृह्यमाणः उद्भूतावयवभेदः समुदायो भिन्नः, स्वतस्तु=स्वेन रूपेण गृह्यमाणस्तु एकप्रख्यानिबन्धनतया एकत्वेन या समुदायस्य प्रतीतिस्तन्निमित्ततया भिन्नस्तिरोहितावयवभेद इति द्विरूपः।

इदानीं बहुव्रीहौ व्यक्तिवचनातिदेशोपयोगं क्रमेण व्युत्पादयितुमाह—

**यथा स्वशब्दाभिहिते चैत्रार्थे न प्रयुज्यते ।**
**चैत्रशब्दो बहुव्रीहावप्रयोगस्तथा भवेत् ॥२१०॥**

इहान्यपदार्थे बहुव्रीहिरन्वाख्यायते । ततश्च तेनैवान्यपदार्थस्योक्तत्वाद् द्वन्द्व इव चशब्दस्य तदभिधायिनश्चैत्रादेः प्रयोगो न प्राप्नोति ।

तद्यथा—चैत्रशब्देनोक्ते स्वार्थे पुनश्चैत्रशब्दो न प्रयुज्यते । उक्तार्थानां ह्यप्रयोगः। तदुक्तं वार्त्तिके—"पदार्थाभिधानेऽनुप्रयोगानुपपत्तिरभिहितत्वात्" इति ।

अत्र परिहारोऽभिहितः "न वानभिहितत्वात्, सामान्याभिधाने हि विशेषानभिधानम्" इति ॥ २१० ॥

एतद् व्याचष्टे—

**यथा गौरिति शुक्लादेरभिधानं न विद्यते ।**
**एवं यस्याभिसम्बन्धो गोभिस्तावत् प्रतीयते ॥२११॥**

---

तथा च प्रत्येकं पदैर्भेदात्मना प्रत्याय्यमान आश्रयः,समूहात्मना त्वाश्रित इत्याश्रयभूतवर्ति (द्वन्द्वघटक) पदार्थसमवेते लिङ्गसंख्ये समवलम्बते इति स्थितमिति ॥ २०९ ॥

इदानीं बहुव्रीहौ व्यक्तिवचनातिदेशोपयोगं प्रतिलोमक्रमेण व्युत्पादयितुमाह—यथा स्वशब्दाभिहिते इति ।

अस्यार्थः—यथा स्वशब्दाभिहिते=चैत्रशब्दाभिहिते चैत्रार्थे पुनश्चैत्रशब्दो न प्रयुज्यते, तथा बहुव्रीहौ चित्रग्वादौ प्रयुक्ते तेनाभिहिते चैत्रार्थे चैत्रशब्दस्याप्रयोगो भवेदिति आशङ्का इति ।

अयं भावः—इह=चित्रग्वादौ अन्यपदार्थे बहुव्रीहिरन्वाख्यायते 'अनेकमन्यपदार्थे' (पा० २।२।२४) इनि शास्त्रेण । ततश्च तेनैव=बहुव्रीहिणैवान्यपदार्थस्योक्तत्वाद् द्वन्द्वे चशब्दस्येव तदभिधायिनः=बहुव्रीह्यभिहितान्यपदार्थाभिधायिनः चैत्रादिशब्दस्य प्रयोगो न प्राप्नोति ।

तद्यथा—चैत्रशब्देनोक्ते स्वार्थे पुनश्चैत्रशब्दो न प्रयुज्यते । उक्तार्थानां हि अप्रयोग इति । तदुक्तं वार्त्तिककृता—"पदार्थाभिधानेऽनुप्रयोगानुपपत्तिरभिहितत्वात्" इति ।

अत्र परिहारोऽभिहितः—"न वाऽनभिहितत्वात् । सामान्याभिधाने हि विशेषानभिधानम्" इति ।

बहुव्रीहिघटकपदार्थसंबन्धित्वेन सामान्यरूपेणाभिधानेऽपि विशेषरूपेण चैत्रत्वादिनानभिधानमित्यर्थ इति ॥ २१० ॥

एतद् व्याचष्टे=पूर्वकारिकोक्तमेवार्थमुदाहरणेन विस्पष्टमाचष्टे—यथा 'गौः' इति ।

अस्यार्थः—यथा गौरिति पदेन सामान्यवाचिना शुक्लादेर्विशेषस्याभिधानं न विद्यते इति विशेषस्य प्रतिपत्तये शुक्लादिपदं तत्र प्रयुज्यते, 'गौः शुक्लः' इति, एवं यस्य स्वामिनश्चित्राभिर्गोभिरभिसंबन्धः स सामान्यभूतोऽर्थः, तावत् चित्रगुपदात् प्रतीयत इति स्वामिविशेषप्रतिपत्तये तत्र चैत्रादिपदप्रयोग आवश्यकः चित्रगुश्चैत्र इति ।

सम्बन्धिसामान्ये बहुव्रीहिरिति तद्विशेषप्रतिपत्तिरतो न भवति। तद्यथा—सामान्यवाची गोशब्दो विशेषाभिधानायासमर्थ इति प्रयुज्यते विशेषप्रतिपत्तये शब्दः, तत्र 'गौः शुक्लः कृष्णो वेत्यादिः। एवं 'चित्रगुश्चैत्रो मैत्रो वा' इति प्रयोगो विशेषप्रतिपत्तये न्याय्यः। चित्रा गावो यस्येति स्वामिमात्रस्य प्रतीतेः ॥ २११ ॥

यत्र तु शब्दशक्तिस्वभावाद् बहुव्रीहिणैव विशेषोऽङ्गीकृतः, तत्र तदभिधायी न प्रयुज्यत इत्याह—

**सम्बन्धी नियतो रूढश्चित्राणां न च विद्यते।**
**गवां यथा वज्रपाणिस्त्र्यक्षो वापि व्यवस्थितः ॥२१२॥**

वज्रं पाणौ यस्य, त्रीण्यक्षीणि यस्येति नियतः प्रसिद्धोऽव्यभिचारी रूढः शक्रः शिवश्च सम्बन्धी वृत्तावन्तरेण विशेषपदप्रयोगमवगम्यत इति भवति तत्र सम्बन्धविशेषेऽन्यपदार्थे बहुव्रीहिः। चित्रगुरित्यत्र विशेषो नावधार्यते, चित्रैर्गोभिरविशेषेण स्वामिमात्रस्य समन्वयसम्भवादिति विशेषस्यानुप्रयोगोऽत्राविरुद्धः। प्रकरणादेस्तु विशेषावगमेऽत्रापि तत्प्रयोगो नास्ति॥ २१२॥

---

अयं भावः—अन्यपदार्थे संबन्धिसामान्ये बहुव्रीहिरिति बहुव्रीहेः संबन्धिविशेषस्य चैत्रादेः प्रतीतिर्न भवति। तद् यथा—सामान्यवाची गोशब्दो विशेषाभिधानायासमर्थ इति गौरिति प्रयुक्ते विशेषप्रतिपत्तये तत्र विशेषशब्दः शुक्लादिः प्रयुज्यते—'गौः शुक्लः कृष्णो वा' इत्यादि। एवं चित्रगुश्चैत्रो मैत्रो वेति प्रयोगः संबन्धिविशेषप्रतिपत्तये न्याय्यः। चित्रा गावो यस्येति विग्रहे निष्पन्नात् चित्रगुपदात् स्वामिसामान्यस्य प्रतीतेरिति ॥ २११ ॥

यत्र तु योगरूढे शब्दशक्तिस्वभावाद् बहुव्रीहिणैव विशेषोऽर्थो वाच्यतयाऽङ्गीकृतः, 'वज्रपाणिः, त्र्यक्षः' इत्यादौ, तत्र तदभिधायी=विशेषाभिधायी शब्द इन्द्रशिवादिर्न प्रयुज्यते इत्याशङ्क्याह—संबन्धी नियत इति।

अस्यार्थः—यथा वज्रपाणिः, त्र्यक्षो वाऽपि योगरूढः शब्दो नियते रूढे च संबन्धिविशेषे व्यवस्थितः, तथा चित्राणां गवां नियतोऽव्यभिचारी रूढः प्रसिद्धश्च संबन्धी न च लोके विद्यत इति तत्र संबन्धिविशेषस्य प्रतिपत्तये विशेषशब्दः प्रयोक्तव्यः—चित्रगुश्चैत्र इति।

अयं भावः—वज्रं पाणौ यस्य, त्रीण्यक्षाणि यस्येति विग्रहे जातायां वृत्तौ नियतोऽव्यभिचारी रूढः प्रसिद्धः शक्रः शिवश्च संबन्धी विशेषपदप्रयोगमन्तरेणापि अवगम्यत इति भवति तत्र संबन्धिविशेषेऽन्यपदार्थे बहुव्रीहिः। 'चित्रगुः' इत्यत्र तु संबन्धिविशेषो नावधार्यते, चित्राभिर्गोभिरविशेषेण=सामान्येन स्वामिमात्रस्य संबन्धसंभवादिति विशेषप्रतिपत्तये विशेषपदस्यात्रानुप्रयोगश्चैत्रादेरविरुद्धः। प्रकरणादेस्तु संबन्धिविशेषावगमेऽत्रापि=चित्रग्वादिपदप्रयोगेऽपि विशेषस्य चैत्रादेः प्रयोगो नास्तीति ॥ २१२ ॥

एवं वार्तिककृता विशेषाभिधानायानुप्रयोगे समर्थिते चोदितं भाष्ये—"भवेत् सिद्धम्, यदा सामान्ये वृत्तिः। यदा तु विशेषे वृत्तिः, तदा न सिध्यति। चित्रा गावोऽस्य देवदत्तस्य" इति।

अत्र समाधिः 'नेदमुभयं युगपद् भवति वाक्यं समासश्च। यदा वाक्यं, न तदा समासः, यदा समासः, सामान्ये तदा वृत्तिः। तत्रावश्यं विशेषार्थिना विशेषोऽनुप्रयोक्तव्यः। चित्रगुः कः, देवदत्त इति।

तदेतद् व्याचष्टे—

**शब्दान्तरत्वाद् वाक्येषु विशेषा यद्यपि श्रुताः।**
**वृत्तिशब्दोऽन्य एवायं सामान्यस्याभिधायकः ॥२१३॥**

निर्णीतचरमेतद् वृत्तिवाक्ययोरर्थरूपभेदेन शब्दान्तरत्वमिति। विशेषप्रक्रमेऽपि वाक्ये वृत्तिशब्दो विशेषाभिधानप्रहतशक्तिरिति युक्त एवानुप्रयोगः।

न हि वाक्यमेव वृत्त्यात्मना परिणमते, पृथक् तस्यापि श्रुतत्वात्। तस्माद् वाक्योपलब्धानां विशेषाणां वृत्तावनन्तर्भावात् सामान्यमेवासावाचष्टे। अदूरविप्रकर्षेण तु वृत्त्यर्थो वाक्येनोपदर्श्यते। न तु सर्वतः परिच्छिन्ने वाक्यार्थे वृत्तिपदस्याभिधानशक्तिः, संख्याविशेषादेरतोऽप्रतीतेः ॥ २१३ ॥

---

एवं चित्रगुर्देवदत्त इत्यत्र वृत्तेः सामान्याभिधायित्वेन विशेषाभिधानाय वार्तिककृताऽनुप्रयोगे समर्थिते चोदितं भाष्ये—"भवेत् सिद्धम्, यदा सामान्ये वृत्तिः, यदा तु विशेषे वृत्तिः, तदा न सिध्यति। चित्रा गावोऽस्य देवदत्तस्य" इति।

अत्र हि वाक्ये विशेषार्थकपदप्रयोगे वृत्तेरपि विशेषार्थकत्वमित्यभिमानः।

अत्र समाधिः नेदमुभयं युगपद् भवति, वाक्यं समासश्च। यदा वाक्यं न तदा समासः, यदा समासः सामान्ये तदा वृत्तिः। तत्र विशेषार्थिना = विशेषबोधार्थिना अवश्यं विशेषोऽनुप्रयोक्तव्यः। 'चित्रगुः, कः, देवदत्तः' इति।

तदेतद् व्याचष्टे—शब्दान्तरत्वादिति।

अस्यार्थः—वाक्यस्य वृत्त्यपेक्षया शब्दान्तरत्वाद् यद्यपि वाक्येषु विशेषः श्रुतः' तथापि अयं वृत्तिशब्दश्चित्रग्वादिर्वाक्यादन्य एव, अतः सामान्यस्याभिधायकः, शब्दशक्तिस्वाभाव्यादिति।

अयं भावः—वृत्तिवाक्ययोरर्थभेदेन रूपभेदेन च शब्दान्तरत्वमिति निर्णीतचरमेतत्। वाक्ये विशेषप्रक्रमेऽपि = वृत्तेः प्राग् विशेषस्य बोधेऽपि वृत्तिशब्दो विशेषाभिधाने प्रहतशक्तिरिति युक्त एव वृत्तौ विशेषवाचकपदानुप्रयोगः। न हि वाक्यमेव वृत्त्यात्मना परिणमते, येन वृत्तेरपि वाक्यवद् विशेषार्थकत्वेन विशेषपदानुप्रयोगो न स्यादिति वक्तुं शक्यते। तस्यापि = वाक्यस्यापि वृत्तेः पृथक्श्रुतत्वात्। तस्माद् वाक्योपलब्धानां विशेषाणां वृत्तावनन्तर्भावाद् वृत्तिः सामान्यमेवाचष्टे। अदूरविप्रकर्षेण = सामीप्येन तु वृत्त्यर्थो विग्रहवाक्येनोपदर्श्यते, न तु वस्तुतः। न हि सर्वतः परिच्छिन्ने, संख्याविशेषादिभिः परिच्छिन्ने वाक्यार्थे वृत्तिपदस्याभिधानशक्तिरस्ति, वृत्तिपदात् संख्याविशेषादेरप्रतीतेरिति ॥ २१३ ॥

यद्येवं किमनेनानवगमितविशेषेण साकाङ्क्षेण सामान्याभिधायिना बहुव्रीहिसमासेन प्रयुक्तेनेत्याशङ्क्याह—

**अगोरचित्रगोश्चैव रूपभेदान्निवर्तकः ।**
**एवं चित्रगुविशेषाणां रूपाभेदात्तु वाचकः ॥२१४॥**

चित्रगुशब्देनाविद्यमानगोसम्बन्धाद् व्यावृत्तोऽर्थोऽभिधीयते। चित्रत्वेन विशेषणादचित्रगोर्व्यावृत्तिः।

एवञ्च न सर्वथा सामान्यशब्दोऽयम्, अपि त्वन्यव्यावृत्तिविशेषस्याप्यभिधातेत्यर्हति प्रयोगम्।

एतावतीं विवक्षां पुरस्कृत्य चित्रगवीसम्बन्धे हि प्रतिपाद्ये भिन्नरूप एवायं शब्दः। तन्निष्ठापरविशेषप्रतिपादने तु रूपसामान्यादशक्त इति सामान्यस्याभिधायकः कथ्यते। चैत्रोऽपि हि स्याच्चित्रगुर्मैत्रोऽपीत्यत्राविशेषः ॥ २१४ ॥

---

यद्येवं किमनेनानवगमितविशेषेण = विशेषानभिधायिना, अत एव विशेषसाकाङ्क्षेण सामान्याभिधायिना बहुव्रीहिसमासेन प्रयुक्तेन प्रयोजनमित्याशङ्क्याह—अगोरचित्रगोश्चैवेति।

अस्यार्थः—'चित्रगुः' इति बहुव्रीहिरगोरचित्रगोश्चैव=चापि, पुरुषस्य निवर्तकः, रूपभेदात् निवर्त्यस्य=निवर्तकचित्रगुशब्दवाच्यस्य च चित्रगवीसंबन्धिसामान्यस्य स्वरूपभेदादिति परनिवृत्त्यर्थं प्रयोगार्हः। तु=किन्तु चित्रगुशब्दो विशेषाणां स्वार्थगतानामगुव्यावृत्तस्वरूपाणामचित्रगुव्यावृत्तस्वरूपाणाञ्च न वाचकः, रूपाभेदात्=चित्रगवीसंबन्धिनः सामान्यस्य अगुव्यावृत्तस्वरूपस्य चित्रगुव्यावृत्तस्वरूपस्य च विशेषस्य चैत्रादिरूपविशेषाप्रतीत्या सामान्यरूपत्वेन स्वरूपसाम्यादिति।

अयं भावः—चित्रगुशब्देनाविद्यमानगोसंबन्धात् पुरुषाद् व्यावृत्तोऽर्थात्माऽभिधीयते। चित्रत्वेन गोर्विशेषणादचित्रगुव्यावृत्तोऽप्यर्थात्माऽभिधीयते।

एवञ्चैतादृशव्यावृत्तस्वरूपविशेषार्थाभिधायित्वेन चित्रगुशब्दो न सर्वथा=एकान्ततः सामान्याभिधायी एव, अपित्वन्यव्यावृत्तस्य विशेष्याभिधाता इति बहुव्रीहिरयं सामान्याभिधाय्यपि प्रयोगमर्हति।

एतावतीं विवक्षाम्=अन्यव्यावृत्तस्वरूपविशेषविवक्षापर्यन्तां विवक्षां पुरस्कृत्य चित्रगवीसंबन्धे हि चैत्रादौ प्रतिपाद्ये भिन्नरूप एवायम्=भिन्नार्थक एवायं शब्दः चैत्रादिशब्देभ्यः। चैत्रादयः शब्दा हि चैत्रत्वादिरूपैः चैत्रादीन् विशेषान् प्रतिपादयन्ति, अयं तु चित्रगुशब्दोऽन्यव्यावृत्तत्वेन रूपेण चैत्रादीन् विशेषान् प्रत्याययतीति भेदः। तन्निष्ठापरविशेषप्रतिपादने=चित्रगवीसंबन्धिनिष्ठान्यव्यावृत्तस्वरूपस्य विशेषस्य चैत्रत्वादिना प्रतिपादने तु रूपसामान्यादशक्तः=चित्रगवीसंबन्धिरूपस्य सामान्यस्यान्यव्यावृत्तस्वरूपस्य च विशेषस्योभयोरपि चैत्रत्वादिरूपविशेषानवगत्या सामान्यरूपत्वेन धर्मसाम्यादशक्त इति सामान्यस्याभिधायकः कथ्यते। चैत्रोऽपि हि स्याच्चित्रगुर्मैत्रोऽपि इत्यत्राविशेषः चैत्रमैत्रादिरूपचित्रगवीसंबन्धिविशेषप्रतीत्यभाव इति ॥ २१४ ॥

एवं विशेषशब्दानामनुप्रयोगे साधिते पुनश्चोदितम्—'सामान्यस्यैव तर्ह्यनुप्रयोगो न प्राप्नोति। चित्रगु तत्, चित्रगु किम्, चित्रगु सर्वम्' इति।

अत्र समाधिः—'सामान्यमपि यथा विशेषः, तद्वत् चित्रगु इत्युक्ते सन्देहः स्यात्, सर्वं वा विश्वं वेति, तत्रावश्यं विशेषोऽनुप्रयोक्तव्यः" इति।

अत्र सामान्यस्य कथं विशेषसादृश्यमिति व्याचष्टे—

**यथा चित्रगुरित्येतत्प्रयुक्ते न प्रयुज्यते।**
**एवं यदि स्यात् सामान्यं तस्य न स्यात् प्रतिश्रुतिः ॥२१५॥**

चित्रगुरित्येवं चित्रगवोस्वामिन्याख्याते न तदर्थ एव शब्दोऽनाकाङ्क्षितार्थः प्रयोगमर्हति। एवंभूतं यदि सर्वादिपदोपादानं सामान्यमनाकाङ्क्ष्यमाणं स्यात्, तदा न प्रयुज्येत। यावताकाङ्क्ष्यते तदित्यर्हति तावत् प्रयोगम् ॥ २१५ ॥

अन्यव्यावृत्ताभिधानाच्च विशेषपदमेवैतदित्याह—

**सर्वादयो विशेषास्तु प्रदेशानां निवर्तकाः।**
**यथा प्रदेशाः सामान्यप्रदेशान्तरबाधकाः ॥२१६॥**

---

एवं बहुव्रीहौ विशेषशब्दानामनुप्रयोगे साधिते पुनश्चोदितं भाष्ये—"सामान्यस्यैव तर्ह्यनुप्रयोगो न प्राप्नोति। चित्रगु तत्, चित्रगु किम्, चित्रगु सर्वम्" इति। अत्र तत् किं सर्वशब्दानां सर्वनामत्वेन सामान्यार्थकत्वमिति।

अत्र समाधिः "सामान्यमपि यथा विशेषस्तद्वत् चित्रगु इत्युक्ते संदेहः स्यात्, सर्वं वा विश्वं वेति। तत्रावश्यं विशेषार्थिना विशेषोऽनुप्रयोक्तव्यः" इति।

अस्यार्थः—यथा विशेषोऽन्यव्यावृत्तः, तथा सामान्यमपि अन्यव्यावृत्तमिति। ब्रह्माण्डं तद् बाह्यञ्च सर्वपदार्थः। ब्रह्माण्डमेव तु विश्वपदार्थः। यत्र जीवा वसन्तो विशन्ति गत्यागतिभ्यां तत्तल्लोकेष्विति।

अत्र सामान्यस्य सर्वनामार्थस्य कथं विशेषसादृश्यं तदभावे च कथं सर्वनाम्नामत्रानुप्रयोज्यत्वमित्याशङ्क्य व्याचष्टे—यथा चित्रगुरित्येतदिति।

अस्यार्थः—यथा 'चित्रगुः' इत्येतत् पदं सामान्यार्थकं प्रयुक्ते सति एतदर्थके पदान्तरे न प्रयुज्यते, उक्तार्थानामप्रयोग इति न्यायात्। एवं यदि सर्वनामार्थरूपं सामान्यं स्यात्, तदा तस्य चित्रग्वादिपदानन्तरमनुप्रयोगरूपेण प्रतिश्रुतिः श्रवणं न स्यात्, अस्ति च तस्य तेन रूपेण श्रवणमिति अस्ति सर्वनामार्थस्य विशेषसादृश्यम्, अस्ति चानुप्रयोगार्हत्वमिति।

अयं भावः—चित्रगवीसंबन्धिन्यर्थे चित्रगुरित्येवमाख्यातेन तदर्थक एवान्यः शब्दोऽनाकाङ्क्षितार्थः प्रयोगमर्हति, उक्तार्थत्वात्। सर्वादिपदोपादानम्=सर्वादिपदैः सर्वनामभिरभिधीयमानं सामान्यं यदि एवंभूतमनाकाङ्क्ष्यमाणं स्यात्, तदा न प्रयुज्येत। यतस्तु तदाकाङ्क्ष्यतेऽतोऽर्हति तद् अनुप्रयोगम्। चित्रगु तत्, चित्रगु सर्वमित्यादीति ॥ २१५ ॥

यावता 'चित्रगु सर्वम्, चित्रगु विश्वम्' इत्यादौ सर्वविश्वादिपदमपि असर्वाविश्वादिव्यावृत्तार्थाभिधायकम् अतस्तदपि विशेषार्थकमेव पदमित्याह—सर्वादयो विशेषास्त्विति।

इह भेदकत्वं विशेषलक्षणमिति यथा चैत्र इत्युक्ते मैत्रादिविशेषान्तरव्यवच्छेदः प्रतीयते, सामान्यस्य च निवृत्तिः, तथा 'सर्वं विश्वम्' इत्यादिसामान्यपदप्रयोगेऽपि विशेषनिवृत्तिप्रतीतेरन्यव्यवच्छेदकमिदं सामान्यमपि विशेषो भवत्यपेक्षावशादित्यर्थः। ॥ २१६ ॥

एवं पदार्थाभिधानपक्षेऽनुप्रयोगानुपपत्तिचोद्यं समाहितम्।

यदा तु चित्रा गावो यस्येति विभक्त्यर्थेऽन्यपदार्थे सम्बन्धलक्षणे बहुव्रीहिः, तदा सम्बन्धवाचिका विभक्तिः षष्ठी मानुप्रयोजि, द्रव्यं तु सम्बन्ध्यनभिहितमिति तदभिधानायानुप्रयोग उपपद्यत एव।

तदुक्तं भाष्ये—"अथवा विभक्त्यर्थोऽभिधीयते। एतच्चात्र युक्तम्। अत्र हि सर्वपश्चात्पदं वर्तते' इति।

---

अस्यार्थः—सर्वादयः सर्वनामशब्दा उद्भूतावयवभेदसमुदायाभिधायिनः। सर्वे इति। तिरोहितावयवभेदसमुदायाभिधायिनः सर्वं इति। एवं समुदायाभिधायित्वेन सामान्यवचना अपि विशेषास्तु=विशेषवचना अपि, यतस्तिरोहितानामुद्भूतानां वाऽवयवानां प्रदेशपदवाच्यानां निवर्तकाः सर्वं कृतम्, न तु केचिदवयवाः कृता इति अवयवव्यावृत्तिः।

इतरभेदकत्वमेव हि विशेषलक्षणम्। यथा प्रदेशा अवयवरूपा विशेषाः सामान्यरूपाणि यानि प्रदेशान्तराणि अवयवान्तराणि स्वातिरिक्तानि तेषां बाधका विनिवर्तका भेदका इति विशेषाः। यथा हस्तोऽयमित्युक्ते इतरावयवसामान्यव्यावृत्तिरिति।

अयं भावः—इह=शास्त्रे लोकव्यवहारे च भेदकत्वम्=व्यावर्तकत्वम्, विशेषलक्षणमिति। यथा चैत्र इत्युक्ते मैत्रादिरूपविशेषान्तरव्यवच्छेदः प्रतीयते, सामान्यस्य च=मनुष्यसामान्यस्य च चैत्रातिरिक्तस्य निवृत्तिः=व्यावृत्तिः, तथा—सर्वं विश्वमित्यादिसामान्याभिधायिपदप्रयोगेऽपि अवयवरूपविशेषनिवृत्तिप्रतीतेरन्यवच्छेदकमिदं सामान्यमपि भेदकत्वाद् विशेषो भवत्येव, अवयवापेक्षावशादिति ॥ २१६ ॥

एवं पदार्थाभिधानपक्षे=द्रव्यं पदार्थ इति पक्षे चित्रगु सर्वमित्यादावनुप्रयोगानुपपत्तिरूपं चोद्यं समाहितम्।

यदा त्वाकृतिः पदार्थ इति पक्षे चित्रा गावो यस्येति विभक्त्यर्थेऽन्यपदार्थे संबन्धरूपे बहुव्रीहिः, तदा संबन्धवाचिका षष्ठी विभक्तिर्माऽनुप्रयोजि=नानुप्रयुज्यताम्, द्रव्यं तु संबन्धि अनभिहितमिति तदभिधानायानुप्रयोग उपपद्यत एव।

तदुक्तं भाष्ये—"अथवा विभक्त्यर्थोऽभिधीयते। एतच्चात्र युक्तम्। अत्र हि सर्वपश्चात् पदं वर्तते" इति।

अस्यार्थः—अथवा 'चित्रगुः' इत्यादिबहुव्रीहिणा षष्ठीविभक्त्यर्थः संबन्धोऽभिधीयते। एतच्चात्र युक्तम्=संबन्धाभिधानं चात्र युक्तम्। अत्र हि सर्वपश्चात् पदं वर्तते='चित्रगुः' इत्यादौ सर्वं पश्चात्पदम्=अनुप्रयोगरूपं पदं वर्तते सामान्याभिधायि—तत् किं विश्वसर्वादिकम्, विशेषाभिधायि चैत्रमैत्रादिपदम्! संबन्ध्यभिधानपक्षे तु संबन्धिविशेषरूपमेव चैत्रादिपदं अनुप्रयोगरूपं वर्तेत इति संबन्ध्यभिधानपक्षो न न्याय्य इति।

चित्रा गावो देवदत्तस्येति यथैतत् षष्ठ्यन्तं पदं तदभिधाव्यापारेण प्रातिपदिकार्थोपसर्जनं विभक्त्यर्थं प्राधान्येनाचष्टे। तथा च सम्बन्ध्युपसर्जनस्य सम्बन्धस्यान्यपदार्थता न्याय्येति सर्वपश्चाच्छब्देन षष्ठ्यन्तस्य पदस्य तत्र विभक्त्यर्थे व्यतिरेके सम्बन्धलक्षणे वृत्तिमाह अभिधाव्यापारेण। 'नागृहीतविशेषणा विशेष्ये बुद्धिः' इति न्यायात् पूर्वमवच्छेदके प्रातिपदिकार्थे सम्बन्धिनि वृत्तिः, पश्चात् तदुपहितविशेषे सम्बन्ध इति स एवान्यपदार्थः प्रधानभूतो न्याय्यः।

पूर्वं तु तात्पर्यदृशा सम्बन्ध्यन्यपदार्थ उक्तो नाभिधाव्यापाराश्रयेण। तदाश्रयणमेव तु ज्याय इति भाष्यकारो मन्यते।

तदेतदाह—

**विभक्त्यर्थाभिधानाद् वा षष्ठी नानुप्रयुज्यते।**
**द्रव्यस्यानभिधानात्तु तच्छब्दोऽनुप्रयुज्यते ॥२१७॥**

गतार्थोऽयं श्लोकः ॥ २१७ ॥

---

संबन्ध्यभिधानपक्षे यथा चित्रा गावो देवदत्तस्येति एतत् षष्ठ्यन्तं पदं तदभिधाव्यापारेण= देवदत्तस्येति षष्ठ्यन्तपदस्याभिधाव्यापारेण प्रातिपदिकार्थोपसर्जनं विभक्त्यर्थं संबन्धं प्राधान्येन= विशेष्यतया आचष्टे। तथा च=तथैव संबन्ध्युपसर्जनस्य संबन्धस्यान्यपदार्थता बहुव्रीहौ न्याय्येति सर्वपश्चाच्छब्देन=सर्वशब्दानुप्रयोगेण षष्ठ्यन्तस्य पदस्य विग्रहवाक्ये स्थितस्य यस्येत्यादेः, तत्र= बहुव्रीहिविग्रहवाक्ये विभक्त्यर्थे व्यतिरेके=भेदे संबन्धरूपे वृत्तिमाह—अभिधाव्यापारेण= अभिधाव्यापाराभिन्नाम्—अभिधाव्यापाररूपाम्। प्रकृत्यादित्वादभेदे तृतीया। 'नागृहीतविशेषणा-विशेष्ये बुद्धिः' इरि न्यायात् पूर्वमवच्छेदके प्रातिपदिकार्थे संबन्धिनिवृत्तिः, पश्चात् तदुपहिते विशेषे संबन्धरूपे इति स एवान्यपदार्थः प्रत्ययार्थत्वाद् प्रधानभूतो न्याय्यः।

पूर्वं तु तात्पर्यदृष्ट्या संबन्धी अन्यपदार्थं उक्तः, नाभिधाव्यापारमाश्रित्य। तदाश्रयमेव तु=अभिधाव्यापाराश्रयणमेव तु ज्याय इति भाष्यकारो मन्यते।

तदेतद् व्याचष्टे—विभक्त्यर्थाभिधानाद् वा इति।

अस्यार्थः—वा=अथवा, विभक्त्यर्थाभिधानाद् विभक्त्यर्थस्य संबन्धस्य अन्यपदार्थस्य बहुव्रीहिणाऽभिधानात्, तद्वाचिका षष्ठी बहुव्रीहौ नानुप्रयुज्यते। द्रव्यस्य संबन्धिनो बहुव्रीहिणा अनभिधानात्तु, तच्छब्दः=तस्य संबन्धिनो वाचकः शब्दः, चैत्रादिर्विशेषशब्दः, सर्वविश्वादिः सामान्यशब्दश्चापेक्षावशेन विशेषशब्दत्वादनुप्रयुज्यत इति।

अस्य श्लोकस्य भावार्थो न तिरोहित इत्यस्य भावार्थो न लिख्यत इति ॥ २१७ ॥

अत्र पक्षे चोदितम्—"विभक्त्यर्थाभिधाने द्रव्यस्य लिङ्गसङ्ख्योपचारानुपपत्तिः" इति विभक्त्यर्थस्यासत्त्वभूतत्वात् सत्त्वस्य द्रव्यस्य ये लिङ्गसङ्ख्ये तदुपचारो व्यवहारोऽत्र समासवाच्यस्य न स्यादित्यर्थः।

अत्र समाधिरुक्तः—"सिद्धं तु यथा गुणवचनेषु" इति। तत्र गुणवचनानामाश्रयतो लिङ्गवचनानि भवन्ति। शुक्लादीनामाश्रयैर्मतुब्लोपेन सामानाधिकरण्यात्।

इह तु सम्बन्धमात्रवचनस्य बहुव्रीहेः सम्बन्धिवचनैर्मतुब्लोपात् सामानाधिकरण्यं न युज्यत इत्याह—

**सामानाधिकरण्यं चेन्मतुब्लोपात् प्रकल्पते।**
**मतुपोऽपि तदर्थत्वादनवस्था प्रसज्यते॥२१८॥**

बहुव्रीहिवन्मतुपापि सम्बन्धस्यैव प्रतिपादनात् सम्बन्धिनोऽनभिधाने पुनरपरो मतुव् विधेयः, तेनापि सम्बन्धिनोऽप्रत्यायने पुनरपर इत्यनवस्था अनिष्टा मतुपामत्र स्यात्। मतुपा तु सम्बन्ध्यभिधाने मत्वर्थे बहुव्रीहेर्विधानात तेनापि तथैवार्थाभिधाने विभक्त्यर्थाभिधानपक्षो न भवेत्॥ २१८॥

---

अत्र पक्षे=आकृत्यभिधानपक्षे बहुव्रीहिर्विभक्त्यर्थं संबन्धमभिधत्त इति पक्षे चोदितम्—"विभक्त्यर्थाभिधाने द्रव्यस्य लिङ्गसंख्योपचारानुपपत्तिः" इति। विभक्त्यर्थस्याद्रव्यभूतत्वात् सत्त्वस्य द्रव्यस्य ये लिङ्गसंख्ये तदुपचारस्तद्व्यवहारोऽत्र समासवाच्यस्य संबन्धस्यासत्त्वभूतत्वान्न स्यादित्यर्थः।

अत्र समाधिरुक्तस्तत्रैव—"सिद्धं तु यथा गुणवचनेषु" इति। तत्र गुणवचनानामाश्रयसमानाधिकरण्ये गुणवचनानामाश्रयतो लिङ्गवचनानि भवन्ति। शुक्लादीनां मतुब्लोपेनाश्रयैः सामानाधिकरण्यात्।

इह तु=चित्रगुसर्वम् इत्यादिबहुव्रीहौ अनुप्रयोगे तु संबन्धमात्रवचनस्य बहुव्रीहेर्मतुब्लोपात् संबन्धिवचनैः सह सामानाधिकरण्यं न युज्यते, बहुव्रीहेरिव मतुपोऽपि सम्बन्धार्थकत्वेन मतुब्धारापत्त्याऽनवस्थाप्रसङ्गादित्याह—सामानाधिकरण्यं चेदिति।

अस्यार्थः—चेद्=यदि, गुणवचनानां मतुब्लोपाद् आश्रयैः सह सामानाधिकरण्यं प्रकल्पत इत्युच्यते, तदा बहुव्रीहिवन्मतुपोऽपि तदर्थत्वात्=संबन्धार्थकत्वात्। तत्रापि सामानाधिकरण्योपपत्तये मतुब्लोपकल्पनेऽविश्रान्तानवस्था प्रसज्यते इति।

अयं भावः—बहुव्रीहिवत्तदर्थे जातेन तत्प्रकृतिकमतुपाऽपि संबन्धस्यैवं प्रतिपादनात् संबन्धिनोऽनभिधाने पुनरपरो मतुब्विधेयः, तेनापि संबन्धिनोऽप्रत्यायने पुनरपर इति मतुपामनवस्थाऽनिष्टाऽत्र प्रसज्यते। मतुपा संबन्ध्यभिधाने तु मत्वर्थे बहुव्रीहेर्विधानात् तेनापि तथैव संबन्धिरूपार्थाभिधाने बहुव्रीहौ विभक्त्यर्थाभिधानपक्षो न सिध्येदिति॥ २१८॥

न केवलमनवस्था, यावत्—

**सम्बन्धस्य च सम्बन्धी सम्बन्धोऽन्यः प्रसज्यते ।**
**विभक्त्यर्थप्रधाने च क्रियायोगो न कल्पते ॥२१९॥**

बहुव्रीहिवाच्यः सम्बन्धः प्रकृत्यर्थः । तेनावच्छिन्नोऽपरो मतुब्वाच्यः सम्बन्धः । प्रकृत्यर्थोपरक्तत्वाच्च प्रत्ययार्थस्य प्रकृत्यर्थसम्बन्धावच्छिन्नः प्रत्ययार्थः प्रकृत्यर्थस्य सम्बन्धी स्यात् ।

तथा च प्रकृत्यर्थस्य सम्बन्धरूपता हीयेत । उपाधिमत्त्वात् सम्बन्धिरूपता प्राप्तेत्यभिप्रायः । षष्ठ्यर्थप्रधाने च बहुव्रीहौ चित्रगुरानीयतामित्यादिः क्रियायोगो न स्यात्, सम्बन्धस्यासत्त्वभूतत्वेन कारकशक्त्याविर्भावायोगात् ॥ २१९ ॥

---

संबन्धमात्रवचनस्य बहुव्रीहेः संवन्धिवचनैर्देवदत्तादिभिः सह सामानाधिकरण्योपपत्तये बहुव्रीहिपदोत्तरं जातस्य मतुपो लोपस्वीकारे पूर्वपद्योक्तरीत्या न केवलमनवस्था, अपि तु बहुव्रीहि-वाच्यस्य संबन्धस्य संवन्धित्वमपि प्रसज्यते । किञ्च, बहुव्रीहेर्विभक्त्यर्थसंवन्धप्राधान्ये संबन्धस्या-सत्त्वभूतत्वात् कर्मत्वादिकारकशक्त्याविर्भावायोगेन क्रियायोगो न प्रकल्पत इत्याह—संवन्धस्य च संवन्धी इति ।

अस्यार्थः—संबन्धस्य = बहुव्रीहिवाच्यस्य मतुप्प्रकृत्यर्थस्य संबन्धस्य च = तु, अन्योऽपरः, संबन्धः = मतुप्प्रत्ययवाच्यः, मतुप्प्रकृतिबहुव्रीह्यर्थसंवन्धेनावच्छिन्नः संबन्धः, संबन्धी प्रसज्यते । मतुबर्थसंबन्धावच्छेदकत्वरूपोपाधिमत्त्वेन हि बहुव्रीहिवाच्यस्य संबन्धस्य संबन्धत्वहानेः । संबन्धो हि संबन्धत्वेनैव भासते, न तु प्रकारतयाऽवच्छेदकत्वेनेति 'राज्ञः पुरुषः' इत्यादौ राजादेरिव तस्य प्रकारतया संबन्धित्वमेव स्यात्, न तु संबन्धत्वमिति ।

किञ्च, विभक्त्यर्थसंबन्धप्रधाने च बहुव्रीह्यर्थे संबन्धस्यासत्त्वभूतत्वेन कर्मत्वादिरूपेण तस्य क्रियायोगो न कल्पते, न प्रसिध्यतीति ।

अयं भावः—चित्रग्वादिपदरूपबहुव्रीहिवाच्यः संबन्धो मतुप्प्रकृत्यर्थः । तेनावच्छिन्नोऽपरः संबन्धो मतुब्वाच्यः । मतुप्प्रत्ययार्थस्य संवन्धस्य प्रकृत्यर्थोपरक्तत्वाच्च = प्रकारतया प्रकृत्यर्थ-संबन्धावच्छिन्नत्वाच्च स्वप्रकृत्यर्थावच्छिन्नो मतुप्प्रत्ययार्थः संबन्धः प्रकृत्यर्थस्य संबन्धस्य संबन्धी स्यात् ।

तथा च = एवञ्च प्रकृत्यर्थस्य संबन्धरूपता हीयेत । प्रागुक्तरीत्या प्रकारतया मतुप्प्रत्यय-वाच्यसंबन्धावच्छेदकत्वरूपोपाधिमत्वात् 'राज्ञः पुरुषः' इत्यादौ राजादेरिव मतुप्प्रकृत्यर्थस्य संबन्धस्य संवन्धित्वापातात् । मतुप्प्रत्ययार्थसंबन्धस्य प्रकारतयाऽवच्छेदकत्वरूपोपाधिमत्त्वात् प्रकृत्यर्थसंबन्धस्य संबन्धिरूपता प्राप्तेत्यभिप्रायः । षष्ठ्यर्थसंबन्धप्रधाने च बहुव्रीहौ 'चित्रगुरानीय-ताम्' इत्यादिः क्रियायोगो न स्यात् । संबन्धस्य मतुप्प्रकृत्यर्थस्यासत्त्वभूतत्वेन कर्मत्वादिरूपकारक-शक्त्याविर्भावायोगादिति ॥ २१९ ॥

अथ 'तत्र पश्य, ततः पश्य' इति विभक्त्यर्थप्रधानेऽपि दृष्टः क्रियायोगः, नेत्याह—

**विभक्त्यर्थप्रधानत्वात् ततस्तत्रेति न क्रिया ।**
**दृश्यादिः कर्मकर्त्रादिनिमित्तत्वाय कल्पते ॥२२०॥**

अपादानाधिकरणशक्तिप्रधानयोस्ततस्तत्रेत्यनयोर्दृशितिष्ठतीत्यादिका क्रिया कर्तृकर्मशक्ती नाविर्भावयति, विभक्त्यर्थस्य विभक्त्यन्तरार्थविरोधात् ।

किन्त्वत्रावधिमतत आधेयस्य च क्रियायोगः प्रतीयते । ततः पश्य, तत्र तिष्ठतीति ॥ २२० ॥

एवं विभक्त्यर्थाभिधानपक्षे दोषः ।

किञ्च विभक्त्यर्थाभिधाने चित्रगुर्देवदत्तस्येति षष्ठी स्यात् ? न भविष्यति । "अभिहितः सोऽर्थोऽन्तर्भूतः प्रातिपदिकार्थः सम्पन्नः" इति ।

---

ननु 'तत्र पश्य, ततः पश्य, दिवा पश्य, नक्तं पश्य' इत्यादौ विभक्त्यर्थाधिकरणापादान-प्रधानेष्वपि दृष्टः कर्तृकर्मादिरूपतया क्रियायोग इति चेन्नेत्याह—विभक्त्यर्थप्रधानत्वादिति ।

अस्यार्थः—ततस्तत्रेति—ततः पश्य, तत्र पश्य इत्यादौ दृश्यादिः क्रिया, ततस्तत्रेत्यनयो-रपादानाधिकरणशक्तिरूपविभक्त्यर्थप्रधानत्वात् तदर्थयोरसत्त्वभूतत्वेन तयोः कर्मकर्त्रादिसंज्ञा-निमित्तत्वाय न कल्पते न प्रभवति । एवञ्च 'तत आगतं पश्य, तत्र स्थितः पश्य' इत्यादिकं वाक्यमागत-स्थितादिपदमध्याहृत्य बोद्धव्यम् । ततश्चागतस्थितादिपदार्थानां कर्मकर्त्रादित्वम्, न तु ततस्तत्रेत्यादि-पदार्थानामिति ।

अयं भावः—अपादानाधिकरणशक्तिप्रधानयोस्ततस्तत्रेत्यनयोः=ततस्तत्रेत्येतदर्थयोः दृशि प्रतीत्यादिका क्रिया कर्तृकर्मशक्तीनाविर्भावयति । एकस्य विभक्त्यर्थस्य विभक्त्यन्तरार्थ-विरोधात् । एवञ्च ततस्तत्रेत्येतदर्थयोरपादानाधिकरणशक्त्योः कर्तृकर्मशक्तिभ्यां विभक्त्यन्तरार्थाभ्यां सह विरोधान्न ततस्तत्रेत्येतदर्थयोः कर्मकर्तृत्वादिकम् ।

किन्त्वत्रावधिमत आधेयस्य चाध्याहृतस्यागतस्थितादेः कर्मत्वं कर्तृत्वं वा बोध्यम् । तत आगतं पश्य, तत्र स्थितः पश्य, तत्र निश्चेष्टस्तिष्ठति इति ॥ २२० ॥

एवं विभक्त्यर्थाभिधानपक्षे=बहुव्रीहिणा षष्ठीविभक्त्यर्थः संबन्धः प्राधान्येनाभिधीयत इति पक्षे मतुपामनवस्था, बहुव्रीहिवाच्यस्य संबन्धस्य संबन्धित्वप्रसक्तिः, कर्मकर्त्रादिरूपतया क्रियायोगाभावश्च इत्येते त्रयो दोषा उक्ताः ।

किञ्च, विभक्त्यर्थाभिधानपक्षे चित्रगुर्देवदत्तस्येति षष्ठी स्यात् । चित्रगवीसंबन्धो देवदत्तस्येति हि तदानीं तदर्थः स्यात् । अत्र समाहितं भाष्ये—"न भविष्यति, अभिहितः सोऽर्थोऽन्तर्भूतः प्रातिपदिकार्थः संपन्नः" इति ।

अस्यार्थः—सोऽर्थः=संबन्धरूपोऽर्थः,बहुव्रीहिणाऽभिहितः, बहुव्रीह्यर्थेऽन्तर्भूतः, बहुव्रीहि-रूपस्य प्रातिपदिकस्यार्थः संपन्न इति ।

अत एव क्रियायोगो भविष्यतीत्याशङ्क्याह—

**अन्तर्भवेच्च सम्बन्धः प्राधान्याभिहितः कथम् ।**
**स प्रातिपदिकार्थश्च तथाभूतः कथं भवेत् ॥१२१॥**

चैत्रस्येति यथा षष्ठ्या सम्बन्धः प्राधान्येनोद्भूतरूपोऽभिधीयते, तथा च बहुव्रीहिणेति स कथमत्रान्तर्भवेत्? यो हि सम्बन्ध्युपसर्जनः सम्बन्धोऽभिधीयते, सोऽन्तर्भवति समासे।

तद्यथा—'राजपुरुषः' इत्यत्र राजविशिष्टस्य पुरुषार्थस्य प्राधान्यात् सम्बन्धो गुणभूत इति भवत्वसौ प्रातिपदिकार्थः, इह तु व्यतिरेकेणोच्यमानः कथं प्रातिपदिकार्थः स्यात्॥ २२१॥

इदानीं क्रियायोगं तावदुपपादयति—

**असम्भवात्तु सम्बन्धे सम्बन्धसहचारिणि ।**
**जातिसङ्ख्यासमाहारकार्याणामिव सम्भवः ॥२२२॥**

---

अत एव=प्रातिपदिकार्थत्वसंपत्तेरेव क्रियायोगो भविष्यतीति चित्रगुर्देवदत्तस्येति षष्ठी-प्रसक्तिरूपस्य क्रियायोगो न कल्पत इत्यस्य च दोषस्य समाधानमाशङ्क्याह—अन्तर्भवेच्च संबन्ध इति।

अस्यार्थः—बहुव्रीहिणा प्राधान्येनाभिहितः संबन्धः कथं प्रातिपदिकार्थेऽन्तर्भवेच्च? च शब्दस्त्वर्थेऽत्र। 'राजपुरुषः' इत्यादौ गुणत्वेनाभिहितस्यैव पुरुषे राजसंबन्धस्य प्रातिपदिकार्थेऽन्तर्भावदर्शनात्।

किञ्च, सः तथाभूतः—बहुव्रीहिणा प्राधान्येनाभिहितः संबन्धः प्रातिपदिकार्थश्च कथं भवेत्? गुणत्वेनाभिहितस्यैव संबन्धस्य प्रातिपदिकार्थत्वदर्शनादिति।

अयं भावः—यथा चैत्रस्येत्यत्र उद्भूतरूपः संबन्धः षष्ठ्या प्राधान्येनाभिधीयते, तथा च=तथैव बहुव्रीहिणा सोऽभिधीयत इति सः=संबन्धः कथमत्र प्रातिपदिकार्थेऽन्तर्भवेत्? यो हि संबन्धः संबन्ध्युपसर्जनोऽभिधीयते, सोऽन्तर्भवति समासे=समासरूपप्रातिपदिकार्थे।

तद्यथा—'राजपुरुषः' इत्यत्र राजविशिष्टस्य पुरुषपदार्थस्य प्राधान्यात् संबन्धो गुणभूतः पुरुषे इति भवत्वसौ राजपुरुषप्रातिपदिकार्थेऽन्तर्भूतत्वात् तत्प्रातिपदिकार्थः, इह तु=चित्रग्वादौ बहुव्रीहौ तु व्यतिरेकेण=विपर्ययेण प्राधान्येनोच्यमानः संबन्धः कथं प्रातिपदिकार्थः स्यादिति॥ २२१॥

विभक्त्यर्थाभिधानपक्षे सत्सु प्रागुक्तेषु दोषेष्विदानीं क्रियायोगानुपपत्तिं परिहरन् क्रियायोगं तावदुपपादयति—असंभवात् तु संबन्धे इति।

अस्यार्थः—संबन्धे=बहुव्रीहिवाच्ये प्रागुक्तरीत्या क्रियायोगस्यासंभवात्तु संबन्धसहचारिणि =संबन्धाविनाभूते द्रव्ये संबन्धिनि जातिसंख्यासमाहारकार्यणामिव क्रियायोगस्य संभवः।

तथाहि—यथा 'गौरनुबन्ध्य' इत्यत्र गोशब्दो गोत्वजातिपरः, अन्यथा व्यक्तिपरत्वे एकस्या गोव्यक्तेरनुबन्धनेऽनुष्ठितेऽपरस्या अनुबन्धनमचोदितमनुष्ठितं स्यात्।

'गामालभेत, ब्राह्मणानां शतमानय, पञ्चपूली बध्यताम्' इति जात्यादिषु शब्दचोदितेषु क्रियायोगानुपपत्तेस्तत्सहचारिण्यविनाभाविनि द्रव्ये क्रिया यथानुष्ठीयन्ते, तथा 'चित्रगुरानीयताम्' इति सम्बन्धमात्रे क्रियानुपपत्तेः, तदविनाभूते सम्बन्धिनि तन्निवेशः ॥ २२२ ॥

स्यादेतत् । जातिशब्दैः स्वरूपाच्छुरितोऽभिधीयतेऽभेदेन सहचारीति युज्यते तत्र क्रियायोगः । इह तु सम्बन्धस्य प्राधान्यात् कथमेतदित्याशङ्क्यात्रापि सामानाधिकरण्यमुपपादयितुमाह--

**सोऽयमित्यभिसम्बन्धाद् विशिष्टाश्रयवाचिनाम् ।**
**शुक्लादिवल्लिङ्गसङ्ख्ये शास्त्रारम्भाद् भविष्यतः ॥२२३॥**

मा भून्मतुब्लोपादत्र सामानाधिकरण्यम्, सोऽयमित्यभिसम्बन्धाश्रयेण तु शुक्लादिवत् सम्बन्धेनोपचरिताभेदः सम्बन्धी वृत्तिपदवाच्यः सम्बन्धमात्रेऽपि वृत्ति-

---

एवञ्च जातावनुबन्धनक्रियाकर्मत्वासंम्भवाद् व्यक्तावनुबन्धनं जातिसहचारिण्यामनुष्ठीयते । 'ब्राह्मणानां पञ्चविंशतिर्भोज्यताम्' इत्यत्र ब्राह्मणानां पञ्चविंशतौ संख्यायां भोजनाकर्मत्वासंभवात् तत्संख्यासहचारिषु ब्राह्मणेषु भोजनाकर्मत्वं परिसमाप्यते । 'पञ्चगवं चारयत' इत्यत्र समाहारे चारणकर्मत्वासंभवात् तत्सहचारिषु द्रव्येषु चारणकर्मत्वमनुभूयत इत्येतत् सर्वं यथा द्रव्येषु जात्यादिसहचारिषु अनुष्ठीयते, तथा बहुव्रीहिवाच्ये संबन्धे क्रियायोगानुपपत्तेः संबन्धसहचारिणि द्रव्ये क्रियायोगस्य संभव इति ।

अयं भावः—'गामालभेत, ब्राह्मणानां शतमानय, पञ्चपूली बध्यताम्' इति जातिसंख्यासमाहारेषु शब्दशक्त्याऽभिहितेषु तेषामद्रव्यत्वेन क्रियायोगानुपपत्तेस्तत्सहचारिण्यविनाभाविनि द्रव्ये क्रिया यथाऽनुष्ठीयते, तथा चित्रगुरानीयतामिति संबन्धमात्रे प्राधान्येन प्रतीयमाने तदाश्रयद्रव्यमद्वारीकृत्य क्रियाऽनुपपत्तेस्तदविनाभूते संबन्धिनि तन्निवेशः=क्रियायोग इति ॥ २२२ ॥

स्यादेतत् । जातिशब्दैरभेदेन स्वरूपाच्छुरितः=जातिस्वरूपसंबद्ध आश्रयः सहचारी=जात्यविनाभूतो अभिधीयत इति युज्यते तत्र=जातौ आश्रयाभेदेन प्रतीतस्य आश्रयद्वारकः क्रियायोगः । इह तु=बहुव्रीहौ तु संबन्धस्य प्राधान्यात् कथमेतत्=क्रियायोगित्वमित्याशङ्क्य अत्रापि=बहुव्रीहावपि आश्रयद्रव्येण सह सामानाधिकरण्यमुपपादयितुमाह—सोऽयमित्यभिसंबन्धादिति ।

अस्यार्थः—बहुव्रीहिवाच्यस्य संबन्धस्य आश्रयद्रव्येण सह सोऽयमित्यभिसंबन्धात्=अभेदारोपाद् विशिष्टाश्रयवाचिनाम्=संबन्धविशिष्टो य आश्रयः, तद्वाचिनां बहुव्रीहिपदानां शुक्लादिपदवत् शास्त्रारम्भात्="विशेषणानाञ्चाजातेः" ( पा० १।२।५२ ) इति सूत्रारम्भाद् आश्रयस्य लिङ्गसंख्ये भविष्यतः, न त्वत्र निमित्तानुविधानान्मञ्चादिवल्लिङ्गसंख्ये भवतः, तथात्वे हि संबन्धस्य द्विष्ठत्वेन द्विवचनं स्यादिति ।

अयं भावः—मा भून्मतुब्लोपादत्र=चित्रगुर्देवदत्त इत्यादौ सामानाधिकरण्यम्, मतुपामनवस्थाप्रसङ्गात् । संबन्धसंबन्धिनोः सोऽयमित्यभिसंबन्धाश्रयेण तु शुक्लादिवत् संबन्धेन

विधाने, शब्दशक्तिस्वाभाव्यादिति मञ्चादिवन्निमित्तानुविधानपरिहारार्थम् "विशेषणानाम्" ( २।१।५२ ) इति सूत्रेण सम्बन्धिगतलिङ्गसङ्ख्यासिद्धिः। निमित्तानुविधाने तु सम्बन्धस्य द्विष्ठत्वाद् द्विवचनं स्यात्। शास्त्रारम्भात्तु प्रधानभूतान्यपदार्थाश्रये व्यक्तिवचने सिध्यतः॥ २२३॥

यद्येवं कथमिदमुक्तं भाष्ये—"यदि तर्हि विभक्त्यर्थोऽभिधीयते, कृत्स्नः पदार्थः कथमभिहितो भवति सद्रव्यः, सलिङ्गः, ससङ्ख्यश्च" इति।

यावता सोऽयमित्यभिसम्बन्धाल्लिङ्गः सङ्ख्योपपत्तिरित्याशङ्क्य भाष्यकाराभिप्रायं व्याचष्टे—

**भेदेन तु विवक्षायां सामान्ये वा विवक्षिते।**
**सलिङ्गस्य ससङ्ख्यस्य पदार्थस्यागतिर्भवेत्॥२२४॥**

सम्बन्धिनो व्यतिरेकेण यदा सम्बन्धस्य बहुव्रीहिणा प्रतिपादनमिष्टम्, तदा द्रव्येणासामानाधिकरण्यात् तल्लिङ्गसंख्ययोरयोगात् कृत्स्नस्य पदार्थस्यागतिरुक्ता।

---

साकमुपचरिताभेदः=आरोपिताभेदः संबन्धी वृत्तिपदवाच्यः=बहुव्रीहिपदवाच्यः संबन्धमात्रेऽपि वृत्तिविधाने शब्दशक्तिस्वाभाव्यादिति।

मञ्चादिवन्निमित्तानुविधानपरिहारार्थम् "विशेषणानाम्" ( पा० १।२।५२ ) इति सूत्रेण बहुव्रीहौ संबन्धिगतलिङ्गसंख्यासिद्धिः। निमित्तानुविधाने तु संबन्धस्य द्विष्ठत्वाद् बहुव्रीहौ द्विवचनं स्यात्। विशेषणानामिति शास्त्रारम्भात्तु प्रधानभूतान्यपदार्थाश्रये प्रधानभूतसंबन्धिरूपान्यपदार्थनिमित्तके व्यक्तिवचने=लिङ्गसंख्ये सिध्यत इति॥२२३॥

यद्येवम्=सोऽयमित्यभिसंबन्धात् संबन्धे वृत्तिवाच्ये यदि संबन्धितादात्म्यारोपः तदा कथमिदमुक्तं भाष्ये—"यदि तर्हि विभक्त्यर्थोऽभिधीयते, कृत्स्नः पदार्थः कथमभिहितो भवति, सद्रव्यः, सलिङ्गः, ससंख्यश्च" इति।

यावता=यतः सोऽयमित्यभिसंबन्धात् संबन्धिगतयोर्लिङ्गसंख्ययोः संबन्धे उपपत्तिरित्याशङ्क्य=इति भाष्यमाक्षिप्य भाष्यकाराभिप्रायं व्याचष्टे—भेदेन तु विवक्षायामिति।

अस्यार्थः—संबन्धिनो भेदेन तु संबन्धस्य बहुव्रीहिपदेन विवक्षायां बहुव्रीह्यर्थस्य संबन्धस्य संबन्धिना द्रव्येणासामानाधिकरण्यात् तल्लिङ्गसंख्ययोः संबन्धेऽयोगात् सलिङ्गस्य ससंख्यस्य पदार्थस्यागतिः=ज्ञानाभावो भवेत्। वा=अथवा, 'चित्रगोरिदं वृत्तम्' इत्यादौ अचित्रगुव्यावृत्तिमात्रपरेऽभिधाने चित्रगवीसंबन्धिसामान्ये विवक्षिते चैत्रादिपदगम्यस्याश्रयस्याभावाद् लिङ्गसंख्या सर्वनामनपुंसकैकवचनप्रसङ्गात् सलिङ्गस्य ससंख्यस्य द्रव्यस्यागतिः=गत्यभावः अवगमाभावो भवेदिति।

अयं भावः—यदा वृत्तिवाच्यस्य संबन्धस्य संबन्धिनो भेदेन तु बहुव्रीहिणा प्रतिपादनं वक्तुरिष्टम्, तदा स्वाश्रयेण द्रव्येण वृत्तिवाच्यस्य संबन्धस्यासामानाधिकरण्यात् संबन्धिलिङ्गसंख्ययोः संबन्धे वृत्तिवाच्येऽयोगात् कृत्स्नस्य पदार्थस्यागतिर्ज्ञानाभाव उक्तः।

सोऽयमिति सम्बन्धिविवक्षायामेव वा निर्विशेषस्य सामान्यस्य चित्रगोरिदमुचितमित्यचित्रगुव्याद्वृत्तिमात्रपरेऽभिधाने बहिरङ्गस्य चैत्रादिपदान्तरगम्यस्याश्रयस्याभावाल्लिङ्गसंख्यासर्वनामनपुंसकैकवचनप्रसङ्गात् कृत्स्नः पदार्थः कथमभिहितो भवतीत्युक्तम्। अतश्चात्र सोऽयमित्यभिसम्बन्धेऽपि कृत्स्नपदार्थाभिधानाभावाद् विभक्त्यर्थाभिधानपक्षस्त्याज्यः, द्रव्याभिधानपक्ष एवाश्रयितव्यः ॥ २२४ ॥

स कथमुपपद्यत इत्याह—

**साधुत्वं न विभक्त्यर्थमात्रे वृत्तस्य दृश्यते ।**
**कृत्स्नार्थवृत्तेः साधुत्वमित्यर्थग्रहणं कृतम् ।।२२५।।**

प्रयुक्तानां शब्दानामन्वाख्यानात् षष्ठ्यर्थमात्रे द्रव्यादिरहिते वृत्तस्यैकार्थीभावापन्नस्य बहुव्रीहेः समासस्य प्रयोगो यतो न दृश्यते, द्रव्यप्रधानस्यैवान्यपदार्थस्यास्मात् प्रतीतेः। अतोऽर्थग्रहणं सकलार्थवाचिनः प्रयोगज्ञापनार्थं कृतम्।

तदुक्तं भाष्ये-"अन्यपद इत्येतावता सिद्धे यदर्थग्रहणं करोति, तस्यैतत् प्रयोजनं कृत्स्नः पदार्थो यथा विज्ञायेत सद्रव्यः सलिङ्गः ससंख्यश्च"इति। सद्रव्य

---

अथवा संबन्धे वृत्तिवाच्ये संबन्धिनः सोऽयमित्यभिसंबन्धेन तादात्म्यारोपरूपेण संबन्धिविवक्षायामेव निर्विशेषस्य सामान्यस्य चित्रगोरिदमुचितमिति अचित्रगुव्याद्वृत्तिमात्रपरेऽभिधाने बहिरङ्गस्य चैत्रादिपदान्तरगम्यस्याश्रयस्य वाचकपदाभावेनाभावात् लिङ्गसंख्यासर्वनामनपुंसकैकवचनप्रसङ्गात् कृत्स्नः पदार्थः सद्रव्यः सेष्टलिङ्गः सेष्टसंख्यश्च कथमभिहितो भवतीत्युक्तम्। अतश्चात्र=बहुव्रीहौ सोऽयमित्यभिसंबन्धेऽपि कृत्स्नपदार्थाभिधानाभावाद् बहुव्रीहौ विभक्त्यर्थाभिधानपक्षस्त्याज्यः, द्रव्याभिधानपक्ष एवाश्रयितव्य इति ॥ २२४ ॥

स=द्रव्याभिधानपक्षः कथमुपपद्यत इत्याह—साधुत्वं नेति।

अस्यार्थः—यतो वृत्तस्यैकार्थीभावापन्नस्य बहुव्रीहेः समासस्य विभक्त्यर्थमात्रे=संबन्धमात्रे प्रयोगः प्रयुक्तस्य साधुत्वञ्च न दृश्यते, कृत्स्नार्थवृत्तेः सद्रव्ये सलिङ्गे ससंख्ये च कृत्स्नेऽर्थे वर्तमानस्य तस्य साधुत्वं दृश्यत इत्यभिप्रेत्य सकलार्थवाचिनः प्रयोगज्ञापनार्थम्="अनेकमन्यपदार्थे" ( पा० २।२।२४ ) इति सूत्रेऽर्थग्रहणं कृतम्।

अन्यथा—समस्यमानपदेभ्योऽन्यत् पदं वाचकं यस्य तस्मिन्नर्थे इत्यभिप्रायेण 'अन्यपदे' इत्यनेनैवेष्टसिद्धौ अर्थग्रहणं व्यर्थं स्यादिति।

अयं भावः—प्रयुक्तानां शब्दानामन्वाख्यानात्=शास्त्रेण साधुत्वमात्रबोधनात् षष्ठ्यर्थमात्रे=संबन्धमात्रे द्रव्यादिरहिते वृत्तस्य=वृत्तिमतः एकार्थीभावापन्नस्य बहुव्रीहेः समासस्य प्रयोगो यतो न दृश्यते, द्रव्यप्रधानस्यैवान्यपदार्थस्यास्मात्=बहुव्रीहिपदात् प्रतीतेः। अतः "अनेकमन्यपदार्थे" ( पा० २।२।२४ ) इति सूत्रेऽर्थग्रहणं सकलार्थवाचिनः प्रयोगज्ञापनार्थम्=लोके प्रयुक्तस्य सद्रव्यसलिङ्गससंख्यार्थवाचिनो बहुव्रीहेः साधुत्वबोधनार्थं कृतम्।

तदुक्तं भाष्ये—"अन्यपदे इत्येतावता सिद्धे यदर्थग्रहणं करोति, तस्यैतत्प्रयोजनम्, कृत्स्नः पदार्थो यथा विज्ञायेत, सद्रव्यः सलिङ्गः ससंख्यश्च" इति।

इत्येवमपि निर्देशे द्रव्यमेव प्रधानमभिसंहितम् , न गुणादयोऽपि समकक्ष्याः, द्रव्यस्यैव तात्पर्यदृशा गुणाद्युपरक्तस्य प्रतीतेः ।

तत्र पद इत्युक्ते सामर्थ्याद् विभक्त्यर्थः सन्निहितः प्रतीयेत, शब्दे शब्दस्य वृत्त्यभावात् । अर्थशब्दोपादाने तु पदेनार्थो विशेष्यमाणः सर्वपदावधिको विज्ञायेत ।

यथा ह्याधिक्याद् वाक्यार्थोऽत्रैव व्यावर्त्यते, तथा न्यूनत्वाद् विभक्त्यर्थमात्रमिति लिङ्गसंख्यावत् पदार्थभूतं द्रव्यमेवान्यपदार्थ इति पदार्थाभिधानपक्ष एव ज्यायान् । ततश्चानुप्रयोगः समर्थितः ॥ १२५ ॥

अत्र च पक्षे व्यक्तिवचनातिदेशस्य नास्त्युपयोग इति तस्य पक्षान्तरे सप्रयोजनत्वमाह—

सोऽयमित्यभिसम्बन्धाद् द्रव्यवृत्तिरयं यदा ।
सलिङ्गस्य ससङ्ख्यस्य तदा साधुत्वमुच्यते ॥२२६॥

---

अस्यार्थः—समस्यमानपदेभ्योऽन्यत्पदं वाचकं यस्यार्थस्य तस्मिन्नर्थे इत्यर्थकेन 'अन्यपदे' इत्येतावता निर्देशेनैव सिद्धे यदर्थग्रहणं करोति सूत्रकारः, तस्यैतद् प्रयोजनम्, कृत्स्नः पदार्थो यथा विज्ञायेत, सद्रव्यः सलिङ्गः ससंख्यश्चेति । 'अनेकं सद्रव्ये' इत्येवमपि सूत्रनिर्देशे द्रव्यमेव प्रधानमभिसंहितम्, न गुणादयोऽपि वाच्यत्वेन द्रव्यसमकक्ष्याः, तात्पर्यदृशा गुणाद्युपरक्तस्यैव द्रव्यस्य बहुव्रीहिपदात् प्रतीतेः ।

वस्तुतस्तु—अत्र शास्त्रे लिङ्गसंख्यान्वयिसत्त्वभूतं द्रव्यमित्यभ्युपगमेनगुणादीनामपि द्रव्यत्वमेवेति सद्रव्ये इति निर्देशे गुणादीनामपि संग्रहः सुकर एवेति तत्र 'अन्यपदे' इत्युक्ते शब्दे शब्दस्य वृत्त्यभावात् सामर्थ्यात् पदावयवविभक्त्यर्थः संबन्धः संनिहितस्तत्त्वादेव प्रतीयेत । 'अनेकमन्यपदार्थे' इत्येवमर्थशब्दोपादाने तु निर्विशेषणेन पदेन पदसामान्यवाचिनार्थो विशेष्यमाणः सर्वपदावधिकः = सर्वं पदं वाचकत्वेनावधिर्यस्येति स तादृशो विज्ञायेत ।

यथा हि—अत्र = "अनेकमन्यपदार्थे" (पा० २।२।२४) इत्यत्र एवम् = अन्यपदार्थ इत्युक्त्या पदार्थपेक्षयाआधिक्याद् वाक्यार्थो व्यावर्त्यते, तथा पदार्थपेक्षया न्यूनत्वाद् विभक्त्यर्थमात्रम् = केवलो विभक्त्यर्थः प्रकृत्यर्थरहितः व्यावर्त्यत इति लिङ्गसंख्यावत् पदार्थभूतं द्रव्यमेवान्यपदार्थ इति पदार्थाभिधानपक्ष एव ज्यायान्, न तु विभक्त्यर्थाभिधानपक्षः । ततश्च सामानाधिकरण्यविशेषवाचित्वाभ्यां हेतुभ्यां चैत्रादिपदानुप्रयोगः समर्थितो भवतीति ॥ २२५ ॥

अत्र च पक्षे = बहुव्रीहौ पदार्थाभिधानपक्षे विशेष्यगतव्यक्तिवचनयोर्विशेषणे बहुव्रीहिरूपे लोकत एव सिद्धया "विशेषणानाञ्चाजातेः" (पा० १।२।५२) इति तत्र व्यक्तिवचनातिदेशस्य नास्त्युपयोग इति तस्य = विशेषणे आश्रयतो व्यक्तिवचनातिदेशस्य पक्षान्तरे = बहुव्रीहौ विभक्त्यर्थाभिधानमिति पक्षे सप्रयोजनत्वमाह—सोऽयमित्यभिसंबन्धादिति ।

अस्यार्थः—अयम् = चित्रग्वादिर्बहुव्रीहिः, यदा विभक्त्यर्थाभिधानपक्षे संबन्धे वृत्तिवाच्ये संबन्धिनः [सोऽयमित्यभिसंबन्धाद् द्रव्यवृत्तिः कृत्स्नद्रव्याभिधायकः, तदा सलिङ्गस्य ससंख्यस्य विशेष्यगतलिङ्गसंख्यावतो बहुव्रीहिपदस्य साधुत्वं "विशेषणानां चाजातेः" (पा० १।२।१३) इति

विभक्त्यर्थप्रधानपक्षे द्रव्यसामान्येन सम्बन्धस्योपचरिताभेदस्याभिधानेऽपि विशेषगतलिङ्गसंख्यासिद्ध्यर्थम् 'यथा गुणवचनेषु''इति वार्त्तिककारेण व्यक्तिवचनातिदेशस्योपयोग उक्तः, न त्वर्थपक्षे। अर्थग्रहणात् कृत्स्नद्रव्याभिधाने स्वाभाविकत्वाल्लिङ्गवचनयोरत्रेत्यर्थः ॥ २२६ ॥

अत्र त्वयमुपालम्भः—''यदि तर्हि कृत्स्नः पदार्थोऽभिधीयते, लैङ्गाः सांख्याश्च विषयो न सिध्यन्ति''इति भाष्य उक्तः। तमेव व्याचष्टे—

**अन्तर्भूतविभक्त्यर्थे षष्ठी न श्रूयते यथा।**
**तथाऽश्रुतिः प्रसज्येत लिङ्गसङ्ख्याभिधायिनाम् ॥२२७॥**

अर्थग्रहणात् सलिङ्गसंख्यस्य द्रव्यस्य प्राधान्येनाभिधाने तद्गुणभूतस्य विभक्त्यर्थस्य सम्बन्धस्यान्तर्भावात् प्रातिपदिकार्थत्वे यथा षष्ठीविभक्तिर्न भवति, तथा

---

सूत्रेणोच्यते। अतो विभक्त्यर्थाभिधानपक्षे विशेषणानामिति व्यक्तिवचनातिदेशस्योपयोगः, न तु द्रव्याभिधानपक्षे इति निष्कर्षः।

यद्यपि विभक्त्यर्थाभिधानपक्षेऽपि सोऽयमित्यभिसंबन्धाभ्युपगमे बहुव्रीहेर्द्रव्याभिधायित्वेन नास्त्येवोपयोगो व्यक्तिवचनादेशस्य, तथापि तादात्म्यारोपरूपोक्ताभिसंबन्धज्ञापकत्वमेव व्यक्तिवचनातिदेशस्येति ध्येयमिति।

अयं भावः—विभक्त्यर्थप्रधानपक्षे = बहुव्रीहौ षष्ठी विभक्त्यर्थः संबन्धः प्रधानतया वाच्य इति पक्षे वृत्तिवाच्यस्य संबन्धस्य द्रव्यसामान्येन संबन्धिना सह उपचरिताभेदस्य = सोऽयमित्यारोपिताभेदस्य अभिधानेऽपि द्रव्यविशेषगतलिङ्गसंख्यासिद्ध्यर्थम् ''यथा गुणवचनेषु'' इति वार्त्तिककारेण व्यक्तिवचनातिदेशस्योपयोग उक्तः, न त्वर्थपक्षे = न तु पदार्थाभिधानपक्षे। ''अनेकमन्यपदार्थे'' (पा० २।२।२४) इत्यत्रार्थग्रहणात् कृत्स्नद्रव्याभिधानेऽत्र = बहुव्रीहौ लिङ्गवचनयोः स्वाभाविकत्वात् = लोकन्यायसिद्धत्वादिति ॥ २२६ ॥

अत्र त्वयमुपालम्भः = पदार्थाभिधानपक्षे त्विदं दूषणमुक्तं भाष्ये—''यदि तर्हि कृत्स्नः पदार्थोऽभिधीयते, लैङ्गाः सांख्याश्च विधयो न भविष्यन्ति'' इति।

अस्यार्थः—सलिङ्गः ससंख्यश्च पदार्थः कृत्स्नः तस्याभिधाने लिङ्गसंबन्धिनो विधयष्टाबादयः, संख्यासंबन्धिनश्च विधयः स्वादयो न भविष्यन्ति, बहुव्रीहिणा तदर्थयोर्लिङ्गसंख्ययोरभिधानादुक्तार्थानामप्रयोग इति न्यायप्रवृत्तेरिति। तमेवोपालम्भसन्दर्भं भाष्यीयं व्याचष्टे—अन्तर्भूतविभक्त्यर्थे इति।

अस्यार्थः—यथा बहुव्रीहिरूपस्य प्रातिपदिकस्यार्थेऽन्तर्भूतविभक्त्यर्थे सति विभक्त्यर्थबोधनाय तत्र षष्ठी न श्रूयते, तथा बहुव्रीहेः कृत्स्नपदार्थाभिधायित्वे लिङ्गसंख्ययोर्बहुव्रीह्यर्थेऽन्तर्भावात् लिङ्गसंख्याभिधायिनां टाबादीनां स्वादीनाञ्च तत्राश्रुतिरश्रवणमप्रयोगः प्रसज्येत इति।

अयं भावः—अनेकमन्यपदार्थे (पा० २।२।२४) इत्यत्रार्थग्रहणात् सलिङ्गसंख्यस्य द्रव्यस्य बहुव्रीहिणा प्राधान्येनाभिधाने तत्र गुणभूतस्य विभक्त्यर्थस्य सम्बन्धस्यान्तर्भावात्

लिङ्गे स्त्रीत्वे भवा लैङ्गाष्टाबादयः, संख्यायामेकत्वादिकायां भवाः साङ्ख्याः स्वादयस्तेषामप्यश्रुतिरश्रवणमप्रयोगः प्रसज्येतापद्येत ॥ २२७ ॥

स्वाद्यभावे केवला प्रकृतिः कथं प्रयोगार्हेत्याशङ्क्याह—

**साधर्म्यमव्ययेन स्याद् बहुव्रीहेस्तथा सति ।**
**लिङ्गसङ्ख्यानिमित्तस्य संस्कारस्यापवर्तनात् ॥२२८॥**

लिङ्गसङ्ख्याप्रापितस्य संस्कारस्य टाबादिस्वाद्युत्पत्तिलक्षणस्याभावादलिङ्गसङ्ख्यैरव्ययैर्बहुव्रीहिपदानामेकयोगक्षेमता स्यात् । यथैवाव्ययस्य स्त्रीप्रत्ययविभक्तिरहितस्य प्रयोगनियमापवादात् केवलस्य प्रयोगः साधुः, एवं बहुव्रीहेर्भवेदित्यर्थः ॥ २२८ ॥

चैत्रादिना सत्त्ववचनेन पदान्तरेण तर्हि कथं सामानाधिकरण्यमित्यत आह—

**प्रयुक्तेन च सम्बन्धाच्चैत्रादिश्रवणं भवेत् ।**
**विना विभक्त्या सम्बन्धो विभक्त्या विद्यते विना ॥२२९॥**

---

प्रातिपदिकार्थत्वे यथा षष्ठी विभक्तिस्तत्र नोत्पद्यते, तथा लिङ्गे स्त्रीत्वे निमित्तभूते नैमित्तकत्वेन भवा लैङ्गाष्टावादयः, सांख्यमेकत्वादिकायां निमित्तभूतायां नैमितिकत्वेन भवाः सांख्याः स्वादयस्तेषामप्यश्रुतिरश्रवणमप्रयोगः प्रसज्येत आपद्येतेति ॥ २२७ ॥

लिङ्गसंख्याबोधकटाबादिस्वाद्यभावे बहुव्रीहिरूपा केवला प्रकृतिः कथं प्रयोगार्हा 'अपदं न प्रयुञ्जीत' इति निषेधादित्याशङ्क्याह—साधर्म्यमव्ययेनेति ।

अस्यार्थः—तथा सति बहुव्रीहेर्लिङ्गसंख्याबोधकटाबादिस्वाद्यभावे सति, बहुव्रीहेरव्ययेन साधर्म्यं स्यात् । अव्ययं यथाऽलिङ्गमसंख्यञ्च टाबादिस्त्रादिरहितम्, तथा बहुव्रीहिरपि अलिङ्गोऽसंख्यष्टाबादिस्वादिरहित एव प्रयुक्तः, तथा सति स्यादिति निष्कर्षः ।

तत्र हेतुः—लिङ्गसंख्यानिमित्तकस्य संस्कारस्य टाबादिस्वादिविधिरूपस्यापवर्तनात् = अभावादिति ।

अयं भावः—लिङ्गसंख्याप्रापितस्य टाबादिस्वाद्युपत्तिरूपस्य संस्कारस्य बहुव्रीहौ अभावाद् अलिङ्गसंख्यैरव्ययैः सह बहुव्रीहिपदानामेकयोगक्षेमता = तुल्यता स्यात् । यथैवाव्ययस्य टाबादिरूपस्त्रीप्रत्ययस्वादिरूपविभक्तिरहितस्य स्त्रीप्रत्ययविभक्तिप्रयोगनियमापवादात् केवलस्य प्रयोगः साधुः, एवं बहुव्रीहेरपि टाबादिस्वादिरहिस्य प्रयोगः साधुर्भवेदिति ॥ २२८ ॥

एवं तर्ह्यव्ययवदेव बहुव्रीहेरसत्त्ववचनत्वेन सत्त्ववचनेन चैत्रादिना पदान्तरेण साकं तस्य सामानाधिकरण्यं कथं स्यादित्याशङ्क्याह—प्रयुक्तेन च सम्बन्धादिति ।

अस्यार्थः—प्रयुक्तेन च प्रागुक्तरीत्या विभक्त्या विना प्रयुक्तेन च चित्रग्वादिपदेन बहुव्रीहिणा द्रव्यसामान्यवाचिना समं विभक्त्या विना प्रयुक्तस्यैव चैत्रादिपदस्य द्रव्यविशेषवाचकस्य सम्बन्धाद् वाक्ये चित्रग्वादिबहुव्रीहिणा निर्विभक्तिकेन साकं तादृशमेव सामानाधिकरण्येन चैत्रादिश्रवणं चैत्रादिपदप्रयोगो भवेत्, यतो विभक्त्या विना प्रयुक्तस्य विभक्त्या विना प्रयुक्तेन साकं सम्बन्धो न्याय्यो विद्यत इति ।

बहुव्रीहिपदेन द्रव्यसामान्यवाचिना विभक्तिरहितेनोच्चरितेन चित्रग्वित्यादिना विशेषप्रतिपादकानां चैत्रादीनां तत्समानाभिधेयत्वात् तद्वदेव विभक्तिरहितानां प्रयोगो भवेत्। विभक्तिरहितस्य विभक्तिशून्येनैव सह सम्बन्धो न्याय्यः, न तु सविभक्तिकेनात्यन्तवैधर्म्यात्। तथा चासम्बद्धे द्रव्यसामान्यनिष्ठद्रव्यविशेषाभिधानं न स्यात्॥ २२९॥

एवमत्र पदार्थाभिधानपक्षे चोद्यभाष्यं व्याख्यातम्।

अत्रैव परिहारभाष्यम्—"लैङ्गेषु तावदुक्तम्—सिद्धं तु स्त्रियाः प्रातिपदिकविशेषणत्वात् स्वार्थे टाबादयः" इति।

यथान्यत्र टाबादयो द्योतकाः, तथा बहुव्रीहेरपि भविष्यन्तीत्यर्थः।

साङ्ख्येष्वप्युक्तम्—"कर्मादीनामनुक्ता एकत्वादयः" इति द्वितीयादयो भविष्यन्तीत्यादि।

तदेतद् विवृणोति—

**अभिधानेऽपि सङ्ख्यायाः संख्यात्वं न निवर्तते।**
**षष्ठ्यर्थस्याभिधाने तु स्यात् प्रातिपदिकार्थता॥२३०॥**

---

अयं भावः—बहुव्रीहिपदेन द्रव्यसामान्यवाचिना विभक्तिरहितेन उच्चारितेन चित्रगु इत्यादिना द्रव्यविशेषप्रतिपादकानां चैत्रादीनां बहुव्रीहिसमानार्थकत्वाद् बहुव्रीहिवदेव विभक्तिरहितानां प्रयोगो भवेत्। विभक्तिरहितस्य विभक्तिशून्येनैव सह सम्बन्धो न्याय्यः, न तु सविभक्तिकेन सह, अत्यन्तवैधर्म्यात् = निर्विभक्तिकत्वसविभक्तिकत्वयोरत्यन्तविरुद्धधर्मत्वात्। तथा च चित्रग्वादिबहुव्रीहिणा निर्विभक्तिकेनासंबद्धे सति सविभक्तिके द्रव्यविशेषाभिधायिनि चैत्रादिपदे द्रव्यसमान्यनिष्ठद्रव्यविशेषाभिधानं न स्यादिति॥ २२९॥

एवमत्र बहुव्रीहौ पदार्थाभिधानपक्षे चोद्यभाष्यम् = "लैङ्गाः सांख्याश्च विधयो न सिध्यन्ति" इत्याक्षेपभाष्यं व्याख्यातम्।

अत्रैव परिहारभाष्यम्—"लैङ्गेषु तावदुक्तम्—सिद्धं तु स्त्रियाः प्रातिपदिकविशेषणत्वात् स्वार्थे टाबादयः" इति।

यथाऽन्यत्र = अजाश्वादौ टाबादयः प्रातिपदिकार्थस्य लिङ्गस्य द्योतकाः, तथा बहुव्रीहेरपि जातास्ते तद्द्योतका भविष्यन्तीत्यर्थः।

सांख्येष्वप्युक्तं चित्रगुं पश्येत्यादौ—"कर्मादीनामनुक्ता एकत्वादयः" इति द्वितीयादयो भविष्यन्तीत्यादि।

तदेतद् भाष्यं विवृणोति—अभिधानेऽपि संख्याया इति।

अस्यार्थः—संख्याया एकत्वद्वित्वादिकाया बहुव्रीहिणाऽभिधानेऽपि तस्याः संख्यात्वं न निवर्तते। तेन बहुव्रीहिणा संख्याया अभिधानेऽपि भवन्ति ततो वचनानि। वचनविधायकेषु विधिषु अनभिहितत्वस्य संख्याविशेषणतयाऽनादरात्। षष्ठ्यर्थस्यान्यपदार्थस्य बहुव्रीहिणाऽभिधाने तु

बहुव्रीहिपदैरभिहितापि संख्या स्वकार्यं स्वादिलक्षणं प्रापयत्येव। तद्यथा— 'एकः, द्वौ, बहवः; इत्यत्र।

नह्यभिहितापि संख्या स्वरूपं जहाति। ततश्च कर्मादिविशेषणायाः संख्याया अभिधानाय द्वितीयादयस्तावदुत्पद्यन्ते। प्रथमापि 'न केवला प्रकृतिः प्रयोक्तव्या' इति समयपालनायोत्पत्स्यते। अव्ययात्तु लुग्वचनेनायं प्रयोगनियमो बाधितः। न चैवं बहुव्रीहिपदेभ्यो लुगन्वाख्यातः।

तुल्ये समयपालने द्वितीयादयः कस्मान्न भवन्तीति चेन्न, अर्थाभावात्। कर्मादिषु हि द्वितीयादयः, तदभावे कथं भवेयुः ? तस्मादेकादिशब्देभ्य इवार्थानुगुण्यात् प्रथमैकवचनादीन्येव भविष्यन्ति प्रातिपदिकार्थमात्रे। तदुक्तम्—'अर्थतो व्यवस्था' इति।

वचनग्रहणाद्वा प्रथमा भविष्यत्युक्तार्थापि। षष्ठ्यर्थस्य तु सम्बन्धस्य द्रव्ये गुणभूतस्याभिधाने प्रातिपदिकार्थत्वादभिहितः सोऽर्थोऽन्तर्भूत इति षष्ठी न भवति।

---

बहुव्रीहिरूपप्रातिपदिकार्थान्तर्गतत्वेन तस्य प्रातिपदिकार्थता स्यात्। तेन बहुव्रीहितः प्रातिपदिकार्थमात्रे प्रथमैव, न तु षष्ठी, षष्ठ्यर्थस्य बहुव्रीहिरूपेण प्रातिपदिकेनाभिधानादिति।

अयं भावः—बहुव्रीहिपदैः स्वार्थान्तर्गतत्वेनाभिहितापि संख्या स्वकार्यं स्वादिलक्षणं बहुव्रीहौ प्रापयत्येव। तद्यथा—'एकः, द्वौ, बहवः' इत्यत्र प्रकृत्या एकत्वादिसंख्याऽभिधानेऽपि तत्र यथायथमेकवचनादिकं भवत्येव।

न ह्यत्राऽभिहिताऽपि संख्या स्वरूपं जहाति। ततश्च चित्रगुमानय, चित्रगुणा कृतमित्यादौ कर्मकरणादिविशेषणायाः संख्याया अभिधानाय द्वितीयादयस्तावदुत्पद्यन्ते 'चित्रगुः शोभनः' इत्यादौ प्रथमाऽपि 'न केवला प्रकृतिः प्रयोक्तव्या' इति समयपालनाय उत्पत्स्यते। अव्ययात्तु लुग्वचनेनायं प्रयोगनियमो बाधितः। न चैवम् = न त्वेवं बहुव्रीहिपदेभ्यो लुगन्वाख्यात इति अव्ययबहुव्रीह्योर्विशेषः।

ननु 'न केवला प्रकृतिः प्रयोक्तव्या' इति समयपालने बहुव्रीहितः प्रथमोत्पत्तौ द्वितीयाद्युत्पत्तौ च तुल्ये ततो द्वितीयादयः कस्मान्न भवन्ति इति चेन्न, द्वितीयाद्यर्थाभावात्। उद्भूतशक्तिषु कर्मादिषु हि द्वितीयादयः, तदभावे=तादृशकर्माद्यभावे, तादृशकर्मादेर्बहुव्रीहिवाच्यत्वाभावे कथं भवेयुः। तस्मादेकादिशब्देभ्य इवार्थानुगुण्यात् प्रथमैकवचनादीन्येव भविष्यन्ति प्रातिपदिकार्थमात्रे। तदुक्तं भाष्ये—''अर्थतो व्यवस्था'' इति। विभक्त्यर्थतो विभक्तिव्यवस्था इति तदर्थः।

अथवा ''प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा'' (पा० २।३।४६) इत्यत्र वचनग्रहणादुक्तार्थाऽपि प्रथमा बहुव्रीहौ भविष्यति। षष्ठ्यर्थस्य तु सम्बन्धस्य द्रव्ये गुणभूतस्य बहुव्रीहिपदेनाभिधाने बहुव्रीहिरूपप्रातिपदिकार्थत्वादभिहिर्भूतः सोऽर्थोऽन्ततः=बहुव्रीहिणाऽभिहितः सम्बन्धरूपोऽर्थो बहुव्रीहिरूपप्रातिपदिकार्थेऽन्तर्भूत इति बहुव्रीहितः षष्ठी न भवति।

यत्र हि प्राधान्येनोद्भूतः सम्बन्धः, स विषयः षष्ठ्याः। तदेवं पदार्थाभिधाने-ऽनुप्रयोगानुपपत्तिचोद्यप्रतिसमाधानाय विभक्त्यर्थाभिधानपक्षः समाश्रितः। तत्र च सामानाधिकरण्यं क्रियायोगश्चोपपादितः।

किञ्चार्थग्रहणात् कृत्स्नार्थवृत्तेः साधुत्वं प्रयोगप्रामाण्यादवस्थापितम् ॥ २३० ॥

केचित् पुनर्मतान्तरमाहुरित्याह—

**अनुप्रयोगसिद्ध्यर्थं न विभक्त्यर्थकल्पना।**
**वस्त्वन्तरमुपक्षिप्तमिति केचित् प्रचक्षते ॥२३१॥**

'पदार्थाभिधानेऽनुप्रयोगानुपपत्तिरभिहितत्वात्' इत्यस्य प्रतिसमाधानाय विभक्त्यर्थाभिधानपक्षो नाश्रितः 'न वानभिहितत्वात्। सामान्यभिधाने हि विशेषानभिधानम्' इत्येवमनुप्रयोगस्योपपादित्वात्।

किन्तु दर्शनान्तरमेवेदं युक्तायुक्तविचारविषयतयोपन्यस्तमित्यन्येषां मतम्।

तथा ह्यत्रापि सोऽयमित्यभिसम्बन्धाद् द्रव्यस्याभिधानमिष्यते। तथा चानु-

---

यत्र हि सम्बन्धः प्राधान्येनोद्भूतः स षष्ठ्या विषयः। तदेवं बहुव्रीहौ पदार्थाभिधानपक्षे चैत्रादिपदानुप्रयोगानुपपत्तिरूपचोद्यप्रतिसमाधानाय विभक्त्यर्थाभिधानपक्षः समाश्रितः। तत्र च=विभक्त्यर्थाभिधानपक्षे चानुप्रयुक्तेन चैत्रादिना पदान्तरेण समानाधिकरण्यं बहुव्रीह्यर्थस्य क्रियायोगश्चोपपादितः।

किञ्च 'अनेकमन्यपदार्थे' ( पा० २।२।२४ ) इत्यत्रार्थग्रहणात् कृत्स्नार्थवृत्तेः=सद्रव्य-सलिङ्गससंख्यार्थवृत्तेर्बहुव्रीहेः साधुत्वं तादृशस्यैव लोके प्रयोगप्रमाण्यादवस्थापितमिति ॥ २३० ॥

केचित् पुनर्बहुव्रीहौ विभक्त्यर्थाभिधानमिति पक्षं मतान्तरमाहुः=न तु "पदार्थाभिधाने-ऽनुप्रयोगानुपपत्तिरभिहितत्वात्" इत्यस्य प्रतिसमाधानाय इत्याह—अनुप्रयोगसिद्ध्यर्थमिति।

अस्यार्थः—बहुव्रीहौ विभक्त्यर्थकल्पना=बहुव्रीहौ विभक्त्यर्थस्य सम्बन्धस्य प्राधान्येना-भिधानमिति पक्षस्य कल्पना द्रव्यविशेषवाचिनश्चैत्रादिपदस्यानुप्रयोगसिद्ध्यर्थं न, "न वाऽनभिहित-त्वात्। सामान्याभिधाने हि विशेषानभिधानम्" इति अनुप्रयोगस्योपपादितत्वादित्यभिप्रेत्य केचिद् बहुव्रीहौ विभक्त्यर्थाभिधानमिति युक्तायुक्तत्वविचारविषयत्वेन वस्त्वन्तरम्=मतान्तरम्, उपक्षिप्तं भाष्ये इति प्रचक्षत इति।

अयं भावः—पदार्थाभिधानेऽनुप्रयोगानुपपत्तिरभिहितत्वादित्यस्याक्षेपस्य प्रतिसमाधानाय बहुव्रीहौ विभक्त्यर्थाभिधानमिति पक्षो नाश्रितः, "न वाऽनभिहितत्वात्। सामान्याभिधाने हि विशेषानभिधानम्" इत्येवं बहुव्रीहिसमभिव्याहारे चैत्रादिपदानुप्रयोगस्य समर्थितत्वात्।

किन्तु दर्शनान्तरमेवेदं=मतान्तरमेवेदम् युक्तायुक्तत्वविचारविषयतयोपन्यस्तमित्यन्येषां मतम्।

तथाहि—अत्रापि=विभक्त्यर्थाभिधानपक्षेऽपि सोऽयमित्यभिसम्बन्धाद् द्रव्यस्याभिधान-

प्रयोगानुपपत्तिरिति तदवस्थो दोषः। तत्र पुनस्तथैव प्रतिविधेयम् 'न वानभिहितत्वात्' इति। तत् कथं परिहारान्तरमिदं भवेदिति।

केचिदिति वचनादत्रारुचिं सूचयति।

तथा हि भाष्येऽथवेति समाधानान्तरत्वेनैवास्योपक्षेपः। 'एतच्चात्र युक्तम्, अत्र हि सर्वपश्चात्पदं वर्तत' इति चास्य पक्षस्योत्कर्षोऽभिहितः।

यद्यपि चात्रापि पक्षे सोऽयमिति सम्बन्धाद् द्रव्याभिधानम्, तथापि प्रक्रियायामनुप्रयोगसिद्धचर्थं विभक्त्यर्थप्राधान्यमेव। अनुप्रयोगप्रामाण्यात्तु कृत्स्नाभिधानमर्थग्रहणात् सिद्धान्त इति प्रागुक्तमेव ज्यायः। तत्र च स्वाभाविके ( स्वाभाविक्यौ ) लिङ्गसंख्ये। पक्षान्तरे तु शास्त्रादिति निर्णीतम् ॥ २३१ ॥

वस्त्वन्तरोपक्षेपदर्शने पक्षद्वयसङ्कलनायाह—

**सम्बन्धिभिर्विशिष्टानां सम्बन्धानां निमित्तता।**
**सम्बन्धैर्वा विशिष्टानां तद्वतां स्यान्निमित्तता ॥२३२॥**

---

मिष्यते। तथा चात्रापि पक्षेऽनुप्रयोगानुपपत्तिरिति तदवस्थो दोषः। तत्र पुनः = विभक्त्यर्थाभिधानपक्षे पुनः तथैव = पदार्थाभिधानपक्ष इव प्रतिविधेयम् "न वाऽनभिहितत्वात्" इति। तत्कथं परिहारान्तरमिदं भवेत् ? पक्षद्वयेऽपि एकस्यैव समाधानस्य सत्त्वात्। न वाऽनभिहितत्वादिति।

केचिदिति वचनादत्र = मतान्तरमुपन्यस्तमिति पक्षे अरुचिं सूचयति।

तथाहि भाष्ये—अथवेत्युक्त्यासमाधानान्तरत्वेनैवास्योपक्षेपः। "एतच्चात्र युक्तम्, अत्र हि सर्वपश्चात् पदं वर्तते" इत्युक्त्या चास्य पक्षस्योत्कर्षोऽभिहितः।

यद्यपि चात्रापि पक्षे = विभक्त्यर्थाभिधानमित्यस्य समाधानान्तरत्वपक्षेऽपि सोऽयमित्यभिसम्बन्धाद् द्रव्याभिधानमिति नास्य समाधानान्तरत्वसम्भवः, तथाप्यनुप्रयोगसिद्धचर्थं प्रक्रियायां विभक्त्यर्थप्राधान्यमेव स्वीक्रियते। अनुप्रयोगप्रामाण्यात् तु कृत्स्नाभिधानमनेकमन्यपदार्थे इत्यत्रार्थग्रहणात् सिद्धान्तभूतमिति प्रागुक्तमेव = विभक्त्यर्थाभिधानपक्षस्य समाधानान्तरत्वमेव ज्यायः। तत्र च = पदार्थाभिधानपक्षे च स्वाभाविके लिङ्गसंख्ये नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् ( पा० २।२।२४ ) इति नपुंसकमत्र शिष्यत इति स्वाभाविक इति भवति।

पक्षान्तरे तु = विभक्त्यर्थाभिधानपक्षे तु "विशेषणानाञ्चाजतेः" ( पा० १।२।५२ ) इति शास्त्रादिति निर्णीतम् = निर्णय इति ॥ २३१ ॥

वस्त्वन्तरोपक्षेपदर्शने = मतान्तरोपन्यासदर्शने पक्षद्वयसंकलनाय = बहुव्रीहौ पदार्थाभिधानम्, बहुव्रीहौ विभक्त्यर्थाभिधानमिति पक्षद्वयस्वरूपस्य संक्षेपेण बोधनाय आह—सम्बन्धिभिर्विशिष्टानामिति।

अस्यार्थः—विभक्त्यर्थाभिधानपक्षे बहुव्रीहिघटकपदवाच्यैः सम्बन्धिभिर्विशिष्टानां संबन्धानां बहुव्रीहिप्रवृत्तौ निमित्तता स्यात्। वा = अथवा, पदार्थाभिधानपक्षे सम्बन्धैर्विशिष्टानां तद्वतां सम्बन्धिनां बहुव्रीहौ निमित्तता स्यात्। उभयत्रापि = सम्बन्धानां सम्बन्धैरिति बहुवचनं बहुव्रीहिभेदात्।

वर्तिपदोपादानैः सम्बन्धिभिरवच्छिन्नानां सम्बन्धानां बहुव्रीहिप्रवृत्तौ निमित्तत्वं विभक्त्यर्थाभिधानपक्षे¹। बहुव्रीहिभेदाच्चात्र बहुवचनम्। एक एव तु सम्बन्धैरवच्छिन्नानां सम्बन्धिनां बहुव्रीहिप्रवृत्तौ निमित्तत्वम्। बहुवचनमत्रापि पूर्ववत् ॥२३२॥

एतदेवैकयोगक्षेममत्वर्थीयदर्शनेन व्युत्पादयति—

केचित् संयोगिनो दण्डाद् विषाणात् समवायिनः।
तद्वति प्रत्ययानाहुर्बहुव्रीहिं तथैव च ॥२३३॥

संयोगाख्येन सम्बन्धेन विशिष्टाद् दण्डात् सम्बन्धिनि प्रवृत्तिनिमित्तात् समवायाख्यसम्बन्धोपकृताच्च विषाणात् तद्वति संयोगिदण्डसम्बन्धिनि समवायिविषाणसम्बन्धिनि च प्रत्ययान्मत्वर्थीयान् इनिठन्मतुब्लक्षणान् वर्णयन्ति दण्डी विषाणीत्यादौ।

तथैव तेनैव प्रकारेण द्रव्याभिधानपक्षावलम्बिनो बहुव्रीहिं सम्बन्धोपकृतसम्बन्धिनिमित्तमाचक्षते। यथा दण्डविषाणसम्बन्धोपकृतौ सम्बन्धिनौ मत्वर्थीय-

---

वस्तुतस्त्वेक एव सम्बन्धः प्रतिबहुव्रीहि प्रवृत्तिनिमित्तमिति।

अयं भावः—वर्तिपदोपादानैः = बहुव्रीहिघटकपदैरभिधीयमानैः सम्बन्धिभिरवच्छिन्नानां सम्बन्धानां बहुव्रीहिप्रवृत्तौ निमित्तत्वं विभक्त्यर्थाभिधानपक्षे बहुव्रीहिभेदाच्चात्र बहुवचनं सम्बन्धानामिति। एक एव वस्तुसम्बन्धो वस्तुभूतः प्रतिबहुव्रीहि प्रवृत्तिनिमित्तमिति तत्त्वम्। पदार्थाभिधानपक्षे तु सम्बन्धैरवच्छिन्नानां सम्बन्धिनां बहुव्रीहिप्रवृत्तौ निमित्तत्वम्। अत्रापि सम्बन्धैरिति बहुवचनं पूर्ववत् = बहुव्रीहिभेदादिति। २३२॥

एतदेव = पक्षभेदेन सम्बन्धस्य सम्बन्धिनो वा बहुव्रीहौ प्रवृत्तिनिमित्तत्वमित्येतदेव एकयोगक्षेममत्वर्थीयदर्शनेन = बहुव्रीहिसमानार्थकमत्वर्थीयदृष्टान्तेन व्युत्पादयति = ग्राहयति—केचित् संयोगिन इति।

अस्यार्थः—यथा केचित् संयोगिनो दण्डात् = संयोगाख्येन सम्बन्धेन विशिष्टाद् दण्डाद् मतुबन्तप्रवृत्तौ निमित्तात् तद्वति सम्बन्धिनि मत्वर्थे, समवायिनः = समवायसम्बन्धप्रतियोगिनश्च प्रतियोगितया समवायसम्बन्धविशिष्टाद् विषाणात् तद्वति = संयोगिदण्डसम्बन्धिनि समवायिविषाणिसम्बन्धिनि च मत्वर्थीयान् प्रत्ययान् इनिठन्मतुब्रूपान् आहुः, तथैव च = तेनैव प्रकारेण न द्रव्याभिधानपक्षावलम्बिनो बहुव्रीहिं सम्बन्धोपकृतसम्बन्धिरूपप्रवृत्तिनिमित्तकमाचक्षत इति।

अयं भावः—संयोगाख्येन सम्बन्धेन प्रतियोगितया विशिष्टाद् दण्डाद् मतुबन्तप्रवृत्तौ निमित्तभूताद् सम्बन्धिनि मत्वर्थे, विशेषणीभावे समवायसम्बन्धोपकृताच्च विषाणात् तद्वति = संयोगि दण्डिसम्बन्धिनि, समवायिविषाणसम्बन्धिनि च मत्वर्थीयान् प्रत्ययान् इनिठन्मतुब्रूपान् वर्णयन्ति। दण्डी विषाणीत्यादौ। तथैव च = तेनैव प्रकारेण, द्रव्याभिधानपक्षावलम्बिनो बहुव्रीहिं व्यावर्त्यतया सम्बन्धोपकृतसम्बन्धिप्रवृत्तिनिमित्तकमाचक्षते। यथा व्यावर्त्यतया दण्ड-

निमित्तमेवं यथास्वं सम्बन्धोपकृतो वर्तिपदार्थलक्षणः सम्बन्धी बहुव्रीहिसमासस्य प्रवृत्तिनिमित्तम् ।

अन्यपदार्थलक्षणस्तु सम्बन्धी वाच्य इति पदार्थाभिधानपक्ष इत्यर्थः । पालाशदण्ड इति संयोगोपकृतः सम्बन्धो निमित्तम् । तिग्मविषाण इति समवायोपकृतः ॥ २३३ ॥

पक्षान्तरमाह—

**भिन्नं सम्बन्धिभेदेन सम्बन्धमपरे विदुः ।**
**निमित्तं सविभक्त्यर्थः समासेनाभिधीयते ॥२३४॥**

वर्तिपदार्थलक्षणसम्बन्धिविशेषोपकृतः सम्बन्धो वा यथायथं भिन्नोऽत्र मत्वर्थीयनिमित्तम् । तथाहि-दण्डी विषाणीत्युक्ते सम्बन्धिनः सम्बन्धस्य च सन्निधानाच्छब्दप्रवृत्तावविशेषेण द्वयोरपि निमित्तत्वमवधार्यते, द्वाभ्यामपि प्रतीतावनुरागजननात् । प्रक्रियाभेदस्तु कल्पनाकल्पितः ।

---

विषाणसम्बन्धोपकृतौ सम्बन्धिनौ मत्वर्थीयप्रत्ययप्रवृत्तिनिमित्तम्, एवं यथास्वम् = यथायथं व्यावर्त्यतया सम्बन्धोपकृतो वर्तिपदार्थलक्षणः = बहुव्रीहिघटकपदार्थरूपः सम्बन्धी बहुव्रीहिसमासस्य प्रवृत्तिनिमित्तम् ।

अन्यपदार्थरूपस्तु सम्बन्धी बहुव्रीहिवाच्य इति पदार्थाभिधानपक्षः । पालाशः पलाशकाष्ठनिर्मितो दण्डो यस्य वर्णिनः स पालाशदण्ड इत्यत्र व्यावर्त्यतया संयोगोपकृतः, तादृशदण्डरूपः सम्बन्धी बहुव्रीहौ प्रवृत्तिनिमित्तम् । तिग्मौ तीक्ष्णौ विषाणौ यस्य स तथेति विग्रहे तिग्मविषाण इत्यत्र बहुव्रीहौ व्यावर्त्यतया समावायोपकृतः सम्बन्धी विषाणरूपो बहुव्रीहौ तिग्मविषाण इत्यत्र प्रवृत्तिनिमित्तमिति ॥ २३३ ॥

विभक्त्यर्थाभिधानपक्षे विभक्त्यर्थः सम्बन्धो बहुव्रीहेः प्रवृत्तिनिमित्तमिति पक्षान्तरमाह—भिन्नं सम्बन्धिभेदेनेति ।

अस्यार्थः—अपरे बहुव्रीहौ सामान्यरूपेण सम्बन्धस्यैकत्वेऽपि सम्बन्धिभेदेन भिन्नं सम्बन्धं बहुव्रीहेः प्रवृत्तिनिमित्तं विदुः । स बहुव्रीहेः प्रवृत्तिनिमित्तभूतो विभक्त्यर्थः सम्बन्धो बहुव्रीहिसमासेनाभिधीयत इति ।

अयं भावः—अथवा वर्तिपदार्थलक्षणसंबन्धिविशेषोपकृतः = मतुबन्तघटकप्रकृतिपदार्थभूतसंबन्धिविशेषेण व्यावर्त्यतया उपकृतः संबन्धो यथायथं संबन्धिभेदाद् भिन्नोऽत्र = शास्त्रे मत्वर्थीयप्रत्ययोत्पत्तिनिमित्तम् । तथा हि—दण्डी विषाणीत्युक्ते प्रकृत्या संबन्धिनः प्रत्ययेन संबन्धस्य च संनिधानात् = उपस्थापनाद् मतुबन्तशब्दप्रवृत्तौ अविशेषेण द्वयोरपि संबन्धिसंबन्धयोर्निमित्तत्वमवधार्यते । द्वाभ्यामपि संबन्धिसंबन्धाभ्यां मतुबन्तशब्दजन्यप्रतीतौ स्वानुरागजननात् = विषयतया स्वसंबन्धजननात् ।

वस्तुगत्याऽखण्डे नित्ये च मतुबन्ते पदे इयं प्रकृतिः, अयं प्रत्ययः, अयं प्रकृत्यर्थः, अयञ्च प्रत्ययार्थ इत्येवंरूपः प्रक्रियाभेदस्तु पौरुषेयकल्पनाकल्पितः ।

एवं बहुव्रीहिणापि समासेन स विभक्त्यर्थः सम्बन्धिविशेषोपकृतः सम्बन्धः प्रतिपाद्यत इत्युक्तमेव । सम्बन्धमात्रे चात्र विश्रान्त्यभावादुभयत्र सोऽयमिति सम्बन्धेन तद्वदभिधानम् ॥ २३४ ॥

तदेवं बहुव्रीहेरन्यपदार्थविषयत्वे सम्बन्धस्य यदा निमित्तमात्रत्वम्, तदवच्छिन्नस्तु सम्बन्धी वाच्योऽर्थग्रहणसामर्थ्यात्, तदा पूर्वः पक्षः ।

यदा तु सम्बन्ध एव प्रधानमन्यपदार्थतया स्वैरुपाधिभिः सम्बन्धिभिर्गुणभूतैरवच्छिन्नोऽभिधेयो वाच्यः, तदा द्वितीयः पक्ष इति निगमयितुमाह—

**प्रधानमन्यार्थतया भिन्नं स्वैरुपसर्जनैः ।**
**निमित्तमभिधेयं वा सर्वपश्चादपेक्ष्यते ॥२३५॥**

प्रधानमन्यपदार्थतया सम्बन्धो वर्तिपदार्थगुणभूतैरवच्छिन्नः सम्बन्धिनि प्रवर्तमानस्य बहुव्रीहेर्निबन्धनमिति पूर्वस्य पक्षस्य निगमनम् । स एव वा सम्बन्धो वाच्यः । तथाहि सर्वपश्चादपेक्ष्यत इति सम्बन्धाभिधानपक्षं भाष्येण संवादयति ।

---

एवं बहुव्रीहिणाऽपि समासेन स विभक्त्यर्थः व्यावर्त्यतया संबन्धिविशेषोपकृतः संबन्धः प्रतिपाद्यत इत्युक्तमेव । संबन्धमात्रे चात्र=बहुव्रीहौ विश्रान्त्यभावादुभयत्र=मत्वर्थीये बहुव्रीहौ च सोऽयमिति संबन्धेन तद्वदभिधानम्=तद्वतः संबन्धवतः अभिधानमिति ॥ २३४ ॥

तदेवं बहुव्रीहेरन्यपदार्थविषयकत्वे स्थिते संबन्धस्य यदा बहुव्रीहिपदस्य प्रवृत्तिनिमित्तमात्रत्वम्, न तु वाच्यत्वम्, तदवच्छिन्नस्तु=बहुव्रीहिपदप्रवृत्तिनिमित्तभूतसंबन्धावच्छिन्नस्तु संबन्धी वाच्योऽनेकमन्यपदार्थे इत्यत्रार्थग्रहणसामर्थ्यात्, तदा पूर्वः पक्षः=पदार्थाभिधानपक्षः ।

यदा तु संबन्ध एव प्रधानमन्यपदार्थतया स्वैरुपाधिभिः=स्वकीयैर्विशेषणैः संबन्धिभिर्गुणभूतैरवच्छिन्नोऽभिधेयो वाच्यः, तदा द्वितीयः पक्षः=विभक्त्यर्थाभिधानपक्ष इति निगमयितुम्=उपसंहर्तुमाह—प्रधानमन्यार्थतयेति ।

अस्यार्थः—अन्यार्थतया=अन्यापदार्थतया, बहुव्रीहिवाच्येऽर्थे एकार्थीभावापन्ने प्रधानम् वस्तुगत्याऽभिन्नमपि स्वैः=स्वकीयैरुपसर्जनैर्गुणभूतैः संबन्धिभिर्भिन्नं बहुव्रीहौ प्रवृत्तिनिमित्तमभिधेयं वाच्यं वा संबन्धस्वरूपं सर्वपश्चात् पदेन भाष्येऽपेक्ष्यते प्रवृत्तिनिमित्ततया वाच्यतया वाऽऽकाङ्क्ष्यते, गोचरीक्रियत इति यावदिति ।

अयं भावः—अन्यपदार्थतया प्रधानं संबन्धो वर्तिपदार्थैः=बहुव्रीहिघटकपदार्थैर्गुणभूतैः संबन्धिरूपैरवच्छिन्नः संबन्धिनि प्रवर्तमानस्य=संबन्धिरूपमर्थं वाच्यतया बोधयतो बहुव्रीहेर्निबन्धनम्=प्रवृत्तिनिमित्तमिति पूर्वस्य पक्षस्य पदार्थाभिधानपक्षस्य निगमनम्=उपसंहारः । वा=अथवा स एव संबन्धो बहुव्रीहेर्वाच्यः पक्षान्तरे ।

तथाहि—सर्वपश्चादपेक्ष्यत इति संबन्धाभिधानपक्षं भाष्येण संवादयति । अत्र हि=

अत्र हि 'सर्वपश्चात्पदं वर्तते' इति भाष्ये उक्तम्। अभिधानव्यापारेण षष्ठ्यन्तस्य पदस्य सम्बन्ध्यवच्छिन्नसम्बन्धप्रधानत्वादस्य पक्षस्योत्कर्षः प्रतिपादितः ॥ २३५ ॥

ननु च चित्रा गावो यस्येति व्यतिरिच्यमानेन तत्र गुणभूतेन स्वामिना स्वपदार्थभूता गाव एव विशेष्यमाणाः प्रधानमिति कथं सम्बन्धविशिष्टः सम्बन्धी, सम्बन्धिविशिष्टो वा सम्बन्धो बहुव्रीहिवाच्यः स्यादित्याशङ्क्याह—

**स्वामिनि व्यतिरेकश्च वाक्ये यद्यपि दृश्यते ।**
**प्राधान्य एव तस्येष्टो बहुव्रीहिर्विवक्षिते ॥२३६॥**

वृत्तिवाक्ययोरत्यन्तभेदादर्थभेदोऽविनाभावीति वाक्येऽन्यपदार्थस्योपसर्जनत्वेऽपि वृत्तौ प्राधान्यं तस्याभिमतम् ॥ २३६ ॥

एवं च नेदमनुगुणं वाक्यमित्याह—

**गवां विशेषणत्वेन यदा तद्वान् प्रवर्तते ।**
**अस्यैता इति तत्रार्थे बहुव्रीहिर्न विद्यते ॥२३७॥**

---

संबन्धाभिधानपक्षे हि "सर्वपश्चात्पदं वर्तते" इति भाष्ये उक्तम्। षष्ठ्यन्तस्य पदस्य यस्येत्यस्याभिधानव्यापारेण संबन्ध्यवच्छिन्नसंबन्धप्रधानत्वादस्य पक्षस्य = संबन्धाभिधानपक्षस्य उत्कर्षः "सर्वपश्चात् पदं वर्तते" इति भाष्येण प्रतिपादित इति ॥ २३५ ॥

ननु च 'चित्रा गावो यस्य' इति विग्रहवाक्ये चित्रगवीभ्यो व्यतिरिच्यमानेन तत्र = चित्रगवीषु स्वभूतासु गुणभूतेन स्वामिना स्वपदार्थभूताः = धनरूपा गाव एव विशेष्यमाणाः प्रधानमिति कथं संबन्धविशिष्टः संबन्धी, संबन्धिविशिष्टो वा संबन्धो बहुव्रीहिवाच्यः स्यादित्याशङ्क्याह—स्वामिनि व्यतिरेकश्चेति ।

अस्यार्थः—यद्यपि चित्रा गावो यस्येति विग्रहवाक्ये स्वामिनो व्यतिरेकश्च = व्यतिरेकस्तु, विपर्ययस्तु = अप्राधान्यं तु दृश्यत इति न बहुव्रीहौ संबन्धिनः प्राधान्यम् तथापि वृत्तिवाक्ययोरत्यन्तभेदात् तयोरर्थभेदोऽविनाभावीति तस्य स्वामिनः प्राधान्य एव विवक्षिते बहुव्रीहिरिष्ट इति वाक्येऽन्यपदार्थस्य स्वामिन उपसर्जनत्वेऽपि वृत्तौ तस्य प्राधान्यमेवेष्टमिति ॥ २३६ ॥

एवञ्च = वृत्तिवाक्ययोरर्थतो भेदे च नेदं बहुव्रीहेरनुगुणं वाक्यं यदा कस्यैताश्चित्रा गाव इति जिज्ञासायां चित्रा गावोऽस्येति वाक्यं प्रयुज्यते। अत्र हि वाक्ये स्वामिनो विशेषणत्वम्, वृत्तौ तु विशेष्यत्वमिति नैतस्य वाक्यस्य वृत्त्यनुगुणत्वमित्याह—गवां विशेषणत्वेनेति ।

अस्यार्थः—यदा अस्यैताः अस्य = देवदत्तादेः स्वामिन एताश्चित्रगव्य इति वाक्ये कस्यैताश्चित्रगव्य इति जिज्ञासायाः समाधानभूते गवां चित्राणां विशेषणत्वेन तद्वान् गोमान् स्वामी प्रवर्तते, तत्रार्थे बहुव्रीहिर्न विद्यते, बहुव्रीहौ स्वामिनो विशेष्यत्वादिति ।

कस्यैताश्चित्रगव्य इति जिज्ञासायां चित्रा गावोऽस्येति यदा वाक्यं प्रयुज्यते, तदोपसर्जनत्वे तद्वतो गोस्वामिनो वाक्यादस्मादवगते वृत्त्यर्थो न प्रदर्शितः स्यात् परिपूर्णः ॥ २३७ ॥

इदं त्वनुगुणं वाक्यमित्याह—

**यदा प्रत्यवमर्शस्तु तासां स्वामी गवामिति ।**
**गोभिस्तदाभिसम्बन्धो निमित्तत्वाय कल्पते ॥२३८॥**

आसां चित्रगवीनां कः स्वामीति जिज्ञासायां यदा स्वमिविशेषप्रतिपत्त्यर्थं चित्रगव्य उपलक्षणत्वेनाश्रीयन्ते, तदान्यपदार्थस्य वर्तिपदार्थैर्गोभिरभिम्मन्धो बहुव्रीहिसमासस्य निमित्तं जायते । ततश्च चित्रा गावो यस्य सोऽयं चित्रगुरित्येव-मत्रान्यपदार्थप्राधान्ये वाक्यमुचितमित्यर्थः ॥२३८ ॥

यदा तर्हि सम्बन्धान्निमित्तात् सम्बन्धी समासवाच्यः, तदा लिङ्गसंख्याति-देशस्योपयोगो न वेत्याह--

**अपेक्षमाणः सम्बन्धं रूढित्वस्य निवृत्तये ।**
**निमित्तानुविधायित्वात् तद्धर्मार्थः प्रसज्यते ॥२३९॥**

---

अयं भावः—कस्यैताश्चित्रगव्य इति जिज्ञासायां चित्रा गावोऽस्येति वाक्यं यदा प्रयुज्यते, तदाऽस्माद् वाक्यात् तद्वतो गोस्वामिनो गोषु उपसर्जनत्वे = विशेषणत्वेऽवगतेऽस्माद् वाक्यात् चित्रग्वादिवृत्त्यर्थः परिपूर्णो न प्रदर्शितः स्यात्, वृत्तौ स्वामिनो विशेष्यत्वादिति ॥ २३७ ॥

इदं तु चित्रग्वादिरूपाया वृत्तेरनुगुणं वाक्यम्, यदा क एतासाम् = चित्राणां गवां स्वामीति जिज्ञासायामस्यैताश्चित्रा गाव इति वाक्यं प्रयुज्यते, वृत्तौ वाक्ये च स्वामिनो विशेष्यत्वादित्याह— यदा प्रत्यवमर्शस्तु इति ।

अस्यार्थः—यदा तु = तासां गवाम् चित्राणां गवां स्वामी इति वृत्त्यर्थस्य चित्रा गावोऽस्येति वाक्येन प्रत्यवमर्शः = परामर्शः, तदा तत्र वाक्ये = चित्रा गावोऽस्येति वाक्ये गोभिश्चित्राभिः सहास्य स्वामिनो विधेयतयाऽभिसंबन्धो बहुव्रीहेर्निमित्तत्वाय कल्पते संपद्यत इति ।

अयं भावः—आसां चित्रगवीनां कः स्वामीति जिज्ञासायां यदा स्वामिविशेषप्रतिपत्त्यर्थं चित्रगव्य उपलक्षणत्वेन = परिचायकत्वेनाश्रीयन्ते, तदाऽन्यपदार्थस्य स्वामिरूपस्य संबन्धिनो वर्तिपदार्थैः = बहुव्रीहिघटकपदार्थैः गोभिरभिसंबन्धो बहुव्रीहिसमासस्य प्रवृत्तिनिमित्तं जायते । तद्विशिष्टः संबन्धी तु स्वामिरूपो वाच्यः । ततश्च चित्रा गावो यस्य सोऽयं चित्रगुरित्येव-मत्रान्यपदार्थस्य स्वामिरूपस्य प्राधान्ये वाक्यमुचितम् = बहुव्रीहिरूपवृत्त्यनुगुणमिति ॥ २३८ ॥

यदा तर्हि संबन्धरूपात् प्रवृत्तिनिमित्तात् संबन्धी समासवाच्यः, तदा बहुव्रीहौ लिङ्ग-संख्याऽतिदेशस्योपयोगोऽस्ति न वेत्याह—अपेक्षमाणः संबन्धमिति ।

सम्बन्धावच्छिन्नः सम्बन्धी वाच्य इति निमित्तस्य सम्बन्धस्यानुविधानमनुप्रवृत्तिरिति तस्यैव सम्बन्धस्य धर्मो लिङ्गसंख्यारहितत्वं यस्य तथाभूतो बहुव्रीहिवाच्यः प्राप्नोति। सम्बन्धो हि निमित्तम्। असत्त्वभूतः स च नानुविधीयतेऽत्र निमित्तमिति न वाच्यम्, यस्मान्निमित्तेऽननुविधीयमाने रूढिशब्दो बहुव्रीहिः स्यात्। रूढिष्ववयवार्थानुसरणाभावात्। 'चित्रगुः'त्यादौ चावयवार्थोऽनुस्रियत एव॥ २३९॥

एतदेव निदर्शनेन द्रढयति—

**नानाचित्रा इति यथा निमित्तमनुरुध्यते (वर्तते)।**
**नानाभूतेऽपि वृत्तः सन् बहुव्रीहिस्तथा भवेत् ॥२४०॥**

---

अस्यार्थः—संबन्धावच्छिन्नस्य संबन्धिनो वाचको बहुव्रीहिसमासेऽवयवार्थसंबन्धः स्वप्रवृत्तिनिमित्ततयाऽपेक्षमाणः, रूढित्वस्य निवृत्तये निमित्तानुविधायित्वात् = निमित्तस्य बहुव्रीहिप्रवृत्तिनिमित्तस्य संबन्धस्यानुविधायित्वात् = अनुसारित्वात्। यदि बहुव्रीहिः स्वप्रवृत्तिनिमित्तावयवार्थसंबन्धानुविधायी न स्यात्, तदा रूढः स्यात्, अतो रूढित्वस्य निवृत्तये निमित्तानुविधायित्वात्, तद्धर्मा = बहुव्रीहिप्रवृत्तिनिमित्तस्यावयवार्थसंबन्धस्यासत्त्वभूतस्य यो धर्मो लिङ्गसंख्याराहित्यं तद्धर्मा अर्थः = बहुव्रीह्यर्थः संबन्धी प्रसज्यते, अता लिङ्गसंख्यातिदेशो बहुव्रीहावावश्यक इति।

अयं भावः—संबन्धावच्छिन्नः = संबन्धविशिष्टः संबन्धो बहुव्रीहिवाच्य इति निमित्तस्य = बहुव्रीहिप्रवृत्तिनिमित्तस्य संबन्धस्यानुविधानमनुप्रवृतिर्बहुव्रीहिकर्तृकेति तस्यैव संबन्धस्य धर्मो लिङ्गसंख्याराहित्यं यस्य तथाभूतो बहुव्रीहिवाच्योऽर्थः प्राप्नोति। संबन्धो हि बहुव्रीहेः प्रवृत्तिनिमित्तम्। स चासत्त्वभूतः। नानुविधीयते = नानुस्रियते अत्र = बहुव्रीहौ निमित्तमिति न वाच्यम्। यस्मान्निमित्तेऽननुविधीयमाने = अननुस्रियमाणे बहुव्रीहौ रूढिशब्दः स्यात्। रूढिशब्देष्ववयवार्थानुसरणाभावात्। 'चित्रगुः' इत्यादौ च बहुव्रीहौ अवयवार्थोऽनुस्रियत एव। अतो बहुव्रीहिर्न रूढिशब्द इति॥ २३९॥

एतदेव = निमित्तानुविधाने तद्धर्मत्वमेव निदर्शनेन = दृष्टान्तेन दर्शयति—नाना चित्रा इतीति।

अस्यार्थः—नानाशब्दः "विनञ्भ्यां नानाञौ नसह" (पा० ५।२।२७) इति सूत्रेण निष्पन्नोऽसहभावमात्रवचनोऽव्ययोऽसत्त्वभूतत्वाद् लिङ्गसंख्यारहितः। स यदाऽसहभावरूपं निमित्तमुपादाय तद्वति द्रव्ये वर्तते, तदाऽसहभावस्तस्य प्रवृत्तिनिमित्तम्, तदाश्रयीभूतं द्रव्यं तु वाच्यम्। तथा च नाना चित्रा गाव इत्यत्र यथा नानाभूतेऽपि द्रव्ये वृत्तो वृत्तिमापन्नो वर्तमानो वा नानाशब्दो निमित्तम्—स्वप्रवृत्तिनिमित्तमसहभावमद्रव्याद् लिङ्गसंख्यारहितमनुवर्ततेऽनुसरति अनुवर्तमानश्च द्रव्ये वृत्तोऽपि लिङ्गसंख्यारहित एव नाना—चित्रा इति वाक्ये प्रयुज्यते, तथा 'चित्रगुः' इत्यादि बहुव्रीहिरपि भवेत्, स्वप्रवृत्तिनिमित्तमवयवार्थसंबन्धसत्त्वभूतमनुवर्तमानो लिङ्गसंख्यारहित इति बहुव्रीहौ लिङ्गसंख्योपपत्तये व्यक्तिवचनातिदेश आवश्यक इति।

नानाशब्दोऽसहभावमात्रवचनोऽव्ययः। स सदाऽसहभावं निमित्तमुपादाय तद्वति सत्त्वरूपे वर्तते, तदापि निमित्तानुविधानादसत्त्वभूत एव।

एवं बहुव्रीहिरपि स्यात्। निमित्तान्निमित्तवत्यर्थे निमित्तसरूपः प्रत्ययो जायत इति निमित्तिनः स्वरूपस्य शुद्धस्याप्रतिभासनात् स्वकार्ययोगाभावे निमित्त-कार्यमेव न्याय्यमित्यत्र युक्तिर्गर्भीकृता, न तु दृष्टान्तमात्रादर्थसिद्धिः ॥ २४० ॥

तदेवं निमित्तानुविधानेऽत्र प्राप्ते व्यक्तिवचनातिदेशः सफलः।

यदा तु वर्त्तिपदार्थभूताः सम्बन्धिनो निमित्तमन्यपदार्थस्य द्रव्यस्य, तदा नार्थोऽतिदेशेनेत्याह—

**सम्बन्धिनि निमित्ते तु द्रव्यधर्मो न हीयते।**
**लिङ्गाभावो हि लिङ्गस्य विरोधित्वेन वर्तते ॥२४१॥**

---

अयं भावः—नानाशब्दोऽसहमात्रवचनोऽव्ययः। स यदाऽसहभावरूपमसत्त्वभूतं स्वप्रवृत्ति-निमित्तमुपादाय द्रव्यरूपे तद्वति = असहभूतेऽर्थे वर्तते, तदाऽपि = द्रव्ये वर्तमानत्वेऽपि स्वप्रवृत्ति-निमित्तानुविधानादिसत्त्वभूत एव।

एवं बहुव्रीहिरपि संबन्धरूपस्वप्रवृत्तिनिमित्तानुविधानादसत्त्वभूत एव स्याद् लिङ्गसंख्या-रहित इति बहुव्रीहौ लिङ्गसंख्यातिदेश आवश्यकः। निमित्तवत्यर्थे निमित्ताद् जायमानः प्रत्ययः = ज्ञानम्, निमित्तसरूपः = निमित्तानुरूपो जायत इति स्थिते निमित्तिनः स्वरूपस्य शुद्धस्याप्रति-भासनात् स्वकार्ययोगाभावे निमित्तकार्यमेव न्याय्यमिति युक्तिरत्र गर्भीकृता, यतो हेत्वभावेन दृष्टान्तमात्रादर्थसिद्धिरिति ॥ २४० ॥

तदेवमत्र = बहुव्रीहौ निमित्तानुविधाने प्राप्ते = स्वप्रवृत्तिनिमित्तस्य संबन्धस्यास-त्त्वभूतस्यानुविधानाद् लिङ्गसंख्ययोरभावे प्राप्ते "विशेषणानाञ्चाजातेः" ( पा० १।२।५२ ) इति व्यक्तिवचनातिदेशः सफलः।

यदा त्वन्यपदार्थस्य द्रव्यस्य वर्तिपदार्थभूताः = बहुव्रीहिघटकपदार्थरूपाः संबन्धिनो निमित्तम्, तदा नार्थो व्यक्तिवचनातिदेशेनेत्याह—संबन्धिनि निमित्ते त्विति।

अस्यार्थः—अवयवार्थभूते संबन्धिनि बहुव्रीहेः प्रवृत्तिनिमित्ते तु तत्र वर्तमानो द्रव्यधर्मो लिङ्गं संख्या च बहुव्रीहौ न हीयत इति नास्ति व्यक्तिवचनातिदेशेनार्थोऽत्र पक्षे।

यद्यपि अवयवाश्चित्रा गावोऽन्यलिङ्गाः संबन्धिन्यो निमित्तभूताः, देवदत्तादिश्चान्यपदार्थो बहुव्रीहिवाच्योऽन्यलिङ्गसंख्य इति विरोधाद् बहुव्रीहिर्न स्वलिङ्गमासादयेदित्याशङ्का जायते, तथाप्यवयवानां निमित्तभूतानां संबन्धिनां बहुव्रीह्यर्थसंबन्धिस्वरूपतिरोधायकत्वाभावेनान्य-पदार्थो देवदत्तादिः स्वलिङ्गमासादयेदेव। हि=यतः, लिङ्गभावो लिङ्गस्य विरोधित्वेन वर्तते, संबन्धो बहुव्रीहिनिमित्तमिति पक्षे संबन्धो हि निमित्तमसत्त्वभूत इति तत्र लिङ्गाभावः, स च बहुव्रीह्यर्थे संबन्धिनि देवदत्तादौ लिङ्गस्य विरोधी, स्वरूपतिरोधायकत्वाभावात्, भिन्नलिङ्गत्वं तु

प्रवृत्तिनिमित्तं सम्बन्धी वाच्योऽपि सम्बन्धी लिङ्गसंख्यासमन्वययोग्य इत्यत्र पक्षे स्वाभाविके लिङ्गसंख्ये, नार्थोऽतिदेशेन।

न ह्यत्र निमित्तानुविधानेऽपि द्रव्यधर्मस्य लिङ्गसंख्यायोगित्वस्य हानिः, निमित्तस्यापि लिङ्गसंख्यायोगित्वात्।

यद्यपि चान्यलिङ्गसंख्याश्चित्रा गावश्च सम्बन्धिन्यो निमित्तभूताः, देवदत्तश्चान्यपदार्थो वाच्यः अन्यलिङ्गसंख्यः, तथापि सम्बन्धिनामवयवार्थानामत्र प्रवृत्तिनिमित्तानां निमित्तिरूपातिरोधायकत्वम्, भेदेन वृत्तिहेतुत्वात्।

तथा चातिरस्कृतात्मान्यपदार्थः सम्बन्धी प्रतीयमानः स्वलिङ्गसंख्यायोगार्ह एवेति नास्ति विरोधः। सम्बन्धस्य तु प्रवृत्तिनिमित्तत्वे स्वशब्दोपादानोऽसौ स्वरूपाविरोधेन सम्बन्धिनं गमयेत्। तथा च तेन निमित्तेनालिङ्गसंख्येन तिरोहितरूपः सम्बन्धी स्वलिङ्गसंख्याकार्यं नासादयति। लिङ्गाभावो लिङ्गविरोधी, नान्यलिङ्गता ॥ २४१ ॥

तथाहि—

**संख्यावाँल्लिङ्गवांश्चार्थोऽभिन्नधर्मा निमित्ततः।**
**आसन्न एव द्रव्यत्वात् तद्धर्मैर्न विरुध्यते ॥२४२॥**

---

न लिङ्गस्य विरोधि, अवयवार्थसंबन्धिनो बहुव्रीह्यर्थसंबन्धिस्वरूपतिरोधायकत्वादिति। अन्यपदार्थो देवदत्तादिर्बहुव्रीहिवाच्यः स्वलिङ्गं तत्प्रयुक्तं कार्यञ्च लभत एवेति।

अयं भावः—बहुव्रीहेः प्रवृत्तिनिमित्तमवयवार्थः संबन्धी, बहुव्रीहिवाच्योऽपि अर्थः संबन्धी लिङ्गसंख्यासमन्वययोग्य इत्यत्र पक्षे स्वाभाविके लिङ्गसंख्ये इति नार्थो बहुव्रीहौ व्यक्तिवचनातिदेशेन।

न ह्यत्र पक्षे बहुव्रीहेः स्वप्रवृत्तिनिमित्तानुविधानेऽपि द्रव्यधर्मस्य लिङ्गसंख्यायोगित्वस्य हानिः, निमित्तस्यापि लिङ्गसंख्यायोगित्वात्।

यद्यपि चान्यलिङ्गसंख्याः=बहुव्रीह्यपेक्षया विभिन्नलिङ्गसंख्याः चित्रा गावश्च संबन्धिन्यो निमित्तभूताः, देवदत्तश्चान्यपदार्थो वाच्योऽन्यलिङ्गसंख्यः, तथापि संबन्धिनामवयवार्थानामत्र= बहुव्रीहौ प्रवृत्तिनिमित्तानां निमित्तिरूपातिरोधायकत्वम्, भेदेन वृत्तिहेतुत्वात्।

तथा चातिरस्कृतात्माऽन्यपदार्थः संबन्धी प्रतीयमानः स्वलिङ्गसंख्यायोगार्ह एवेति नास्ति विरोधः। संबन्धस्य तु बहुव्रीहिप्रवृत्तिनिमित्तत्वे स्वशब्दोपादानोऽसौ = संबन्धः स्वरूपाविरोधेन संबन्धिनं गमयेत्। तथा च तेन निमित्तेनालिङ्गसंख्येन तिरोहितस्वरूपः संबन्धी स्वलिङ्गसंख्याकार्यं नासादयति। लिङ्गाभावो हि लिङ्गे विरोधी नान्यलिङ्गता इति ॥ २४१ ॥

तथाहि=पूर्वकारिकोक्तमेवार्थमुपपादयति—संख्यावान् लिङ्गवांश्चार्थं इति।

अस्यार्थः—संख्यावान् लिङ्गवांश्चार्थः=अन्यपदार्थः संबन्धी बहुव्रीहिवाच्यः, निमित्ततः= स्ववाचकबहुव्रीहिप्रवृत्तिनिमित्ततः, अवयवार्थसंबन्धितः, अभिन्नधर्मा=तुल्यधर्मा लिङ्गवत्त्वसंख्यावत्त्वाभ्याम्। अवयवार्थान्यपदार्थरूपयोर्द्वयोरपि संबन्धिनोः सत्त्वद्रव्यरूपत्वात्।

यदा सम्बन्धी निमित्तं, स एव च लिङ्गसंख्यावानन्यपदार्थः, तदासावभिन्न-धर्मा तुल्यधर्मा। केनाभिन्नधर्मेत्याह—निमित्तत इति। ल्यब्लोपे पञ्चमी। निमित्तमपेक्ष्येत्यर्थः। निमित्तेन तुल्यधर्मेति यावत्। द्वयोरपि सम्बन्धिनोः सत्त्वरूपत्वात्। एवञ्चासन्न एवान्यपदार्थो निमित्तस्य तुल्यधर्मत्वान्निकटः, नातिदूरः सम्बन्धनिमित्तपक्षवत्। अतश्च निमित्तधर्मैर्लिङ्गसंख्याभेदैरन्यपदार्थो न विरुध्यते। अतिरोहितात्मा ह्यभिधीयमानः स्वलिङ्गसंख्याभ्यां योक्ष्यत इत्यर्थः। क्वचित् तु विरोधे सति निमित्तधर्मानुवृत्तिर्भवत्येव।

तद्यथा—हरीतक्यः फलानि, खलतिकं वनानीति। इत्थं च व्यतिरेकेण प्रतीय-मानस्य निमित्तस्य द्वयी गतिः तद्धर्मानुविधानं हरीतक्यादिषु। तदभावोयथा बहुव्रीहौ। स्वरूपावेशेन त्वभेदेन प्रतीयमानस्य निमित्तस्य निमित्तिना धर्मोऽनुविधीयत एव। गतमेतत्॥ २४२॥

---

एवञ्चासन्न एव=निकट एवान्यपदार्थो निमित्तस्यावयवार्थस्य संबन्धिनः, अतस्तद्धर्मैर्निमित्तधर्मैर्लिङ्गसंख्याविशेषैरन्यपदार्थो न विरोधमनुभवति। अवयवार्थान्यपदार्थयोर्भेदेन प्रतीयमानत्वाद्-अतिरोहितात्मा ह्यभिधीयमानोऽन्यपदार्थः स्वलिङ्गसंख्ये न जहाति, किन्तु ताभ्यां योक्ष्यत एवेति।

अयं भावः—यदाऽवयवार्थः संबन्धी बहुव्रीहेः प्रवृत्तिनिमित्तम्, स एव च=संबन्धी एव च लिङ्गसंख्यावान् अन्यपदार्थः, तदाऽसौ=अन्यपदार्थः संबन्धी अभिन्नधर्मा लिङ्गसंख्यावत्त्वाभ्यां तुल्यधर्मा। केन सहाभिन्नधर्मेत्याह—निमित्तत इति। 'ल्यब्लोपे पञ्चमी' निमित्तमपेक्ष्येत्यर्थः। निमित्तेनावयवार्थेन संबन्धिना सह लिङ्गसङ्ख्याभ्यां तुल्यधर्माऽन्यपदार्थः संबन्धी इति यावत्। द्वयोरपि संबन्धिनोः सत्त्वरूपत्वात्=द्रव्यरूपत्वेन लिङ्गसंख्यावत्त्वात्।

एवञ्चासन्न एवान्यपदार्थो निमित्तस्यावयवार्थस्य संबन्धिनः, तुल्यधर्मत्वान्निकटः, नातिदूरः संबन्धनिमित्तपक्षवत्=संबन्धो बहुव्रीहिनिमित्तमिति पक्षे यथा निमित्तादतिदूरोऽन्यपदार्थस्तथा न। अतश्च निमित्तधर्मैर्लिङ्गसंख्याविशेषैरन्यपदार्थो न विरुध्यते। अन्यपदार्थो हि भेदेनाभिधीयमानोऽतिरोहितात्मा स्वलिङ्गसंख्याभ्यां योक्ष्यते। क्वचित्तु निमित्तिनि निमित्तधर्मविरोधे सति तत्र निमित्तधर्मानुवृत्तिर्भवत्येव।

तद्यथा—'हरीतक्यः फलानि, खलतिकं वनानि' इति। अत्राद्ये निमित्तिषु फलेषु हरीतकीरूपनिमित्तधर्मस्य स्त्रीत्वस्य विरोधे सति तद्धर्मस्य स्त्रीत्वस्य तत्रानुवृत्तिर्भवत्येव। एवं खलतिकं वृक्षविशेषस्तद्धर्मस्यैकत्वस्य निमित्तिषु वनेषु विरोधे तद्धर्मानुवृत्तिस्तत्र भवत्येव। इत्थं च व्यतिरेकेण=निमित्तिनो भेदेन प्रतीयमानस्य निमित्तस्य द्वयी गतिः, तद्धर्मानुविधानं हरीतक्यादिषु। तदभावः=तद्धर्मानुविधानाभावः, यथा बहुव्रीहौ। स्वरूपावेशेन तु=सोऽयमित्यभिसंबन्धेन तु निमित्तिना सह भेदेन प्रतीयमानस्य निमित्तस्य निमित्तिना धर्मोऽनुविधीयते=अनुक्रियत एव। गतमेतत्=एतत्तु पूर्वं गतमिति नोपपत्त्युदाहरणाभ्यां विशदीक्रियत इति॥ २४२॥

इदं तु वक्तव्यम्—विभक्त्यर्थपक्षेऽपि सोऽयमिति सम्बन्धात् सम्बन्धिनिष्ठत्वे, कः पदार्थाभिधानपक्षाद् भेद इत्यत आह—

**विभक्त्यर्थेन चाविष्टं शुद्धं चेति द्विधा स्थितम् ।**
**द्रव्यं शुद्धस्य यो धर्मः स न स्यादन्यधर्मणः ॥२४३॥**

षष्ठीलक्षणविभक्तिवाच्येन सम्बन्धेनापादिताभेदं द्रव्यं विभक्त्यर्थाभिधानपक्षे वाच्यम्, अनन्योपहितं शुद्धं च पदार्थाभिधानपक्षे वाच्यमिति प्रकारद्वयेन द्रव्यस्य प्रवर्तनात् पक्षभेदः ।

तत्र शुद्धस्य स्वेनात्मनाभिधीयमानस्य यो धर्मो लिङ्गसङ्ख्ये, स न भवति सम्बन्धेनाविष्टस्याख्यायमानस्य, पररूपोपरागादिति लिङ्गसङ्ख्यातिदेशोऽत्र सफलः । पदार्थाभिधानपक्षे तु शुद्धस्य द्रव्यस्यान्यपदार्थस्य वर्तिपदार्थविशिष्टस्याभिधानाद् वर्तिपदार्थलक्षणाः सम्बन्धिनः प्रवृत्तिनिमित्तमिति द्रव्यधर्माहानिरुक्ता ॥ २४३ ॥

एतदेव वाच्यस्य प्रकारद्वयेन वर्तनं पक्षयोर्विभजति—

**द्रव्यमात्रस्य निर्देशे भेदोऽयमविवक्षितः ।**
**ग्रन्थे पूर्वत्र भेदस्तु द्वितीयेऽनुप्रदर्शितः ॥२४४॥**

---

इदं तु वक्तव्यम्—विभक्त्यर्थपक्षेऽपि = षष्ठीविभक्त्यर्थः संबन्धो बहुव्रीहिवाच्य इति पक्षेऽपि, सोऽयमित्यभिसंबन्धाद् विभक्त्यर्थसंवन्धाभिधानपक्षस्य संवन्धिनिष्ठत्वे = संबन्धिनि पर्यवसितत्वे सति कः पदार्थाभिधानपक्षाद् विभक्त्यर्थाभिधानपक्षस्य भेद इत्यत आह—विभक्त्यर्थेन चाविष्टमिति ।

अस्यार्थः—अन्यपदार्थभूतं बहुव्रीहिवाच्यं द्रव्यं द्विधा स्थितम्—विभक्त्यर्थेनाविष्टं, शुद्धञ्चेति । तत्र शुद्धस्य द्रव्यस्य यो धर्मो लिङ्गसंख्यादिः सोऽन्यधर्मणः = अन्यधर्मोपरक्तस्य द्रव्यस्य न स्यात् । विभक्त्यर्थसंबन्धाभिधानपक्षे संवन्धस्यासत्त्वभूतस्यालिङ्गासंख्यत्वेन तत्र लिङ्गाभावे सोऽयमित्यभिसंबन्धात् तदुपरक्ते द्रव्येऽपि तदभावः स्यादिति व्यक्तिवचनातिदेशो विभक्त्यर्थाभिधानपक्षे सार्थक इति पदार्थाभिधानपक्षाद् विभक्त्यर्थाभिधानपक्षस्य विशेष इति ।

अयं भावः—षष्ठीरूपविभक्तिवाच्येन संबन्धेन सह सोऽयमित्यभिसंबन्धादापादिताभेदं द्रव्यं विभक्त्यर्थाभिधानपक्षे वाच्यम्, अनन्योपरक्तं शुद्धन्तु पदार्थाभिधानपक्षे वाच्यमिति प्रकारद्वयेन द्रव्यस्य प्रवर्तनात् = द्रव्यस्य बोधनार्थं बहुव्रीहेः प्रवृत्तेः पक्षभेदः । तेन शुद्धस्य स्वेनात्मना = रूपेणाभिधीयमानस्य यो धर्मो लिङ्गसंख्यारूपः, स न भवति = सोऽयमित्यभिसंबन्धात् संबन्धेनाविष्टस्य बहुव्रीहिणाऽऽख्यायमानस्य, पररूपोपरागात् = असत्त्वभूतस्य संवन्धस्य धर्मेण लिङ्गाभावेन लिङ्गविरोधिना उपरागात् संबन्धादिति लिङ्गसंख्यातिदेशोऽत्र = विभक्त्यर्थाभिधानपक्षे सफलः । पदार्थाभिधानपक्षे शुद्धस्य द्रव्यस्यान्यपदार्थस्य बहुव्रीहिवाच्यस्य वर्तिपदार्थविशिष्टस्य = अवयवार्थविशिष्टस्य बहुव्रीहिणाऽभिधानाद् वर्तिपदार्थलक्षणाः = अवयवार्थरूपाः संबन्धिनो बहुव्रीहेः प्रवृत्तिनिमित्तमित्युभयोरपि संबन्धिनोर्लिङ्गसंख्यावत्त्वेन निमित्तानुविधानेऽपि द्रव्यधर्मस्य लिङ्गसंख्यारूपस्याहानिरुक्तात्रेति ॥ २४३ ॥

विभक्त्यर्थावेशलक्षणो यो विशेषः, द्रव्यमात्रस्य शुद्धस्य सम्बन्धानुपहितस्य निर्देशे प्रतिपादने पूर्वस्मिन् ग्रन्थे यत्रानुप्रयोगानुपपत्तिश्चोदिता 'न वाऽनभिहितत्वात्' इत्यादिना च प्रतिसमाहिता भाष्ये, तत्र पदार्थाभिधानपक्षे नाभिधातुमिष्टः।

'अथवा विभक्त्यर्थोऽभिधीयते' इत्यत्र तु द्वितीये भाष्यग्रन्थेऽयं विशेषः साक्षादेवोक्तः।

अत्रापि च विभक्त्यर्थाविष्टं द्रव्यमेवोच्यते, अन्यथा द्रव्यानभिधाने सर्वथैवासद्व्यक्तिवचनं कथमतिदेशादपि प्राप्येत। प्रधानं तु सम्बन्धोऽत्र विवक्षितः ॥ २४४ ॥

यद्येवं तेन संवृतस्वरूपत्वाद् द्रव्यस्याभिधानाभाव इति कथमिदमुक्तम्—'सद्रव्यः सलिङ्गः ससंख्यः' इत्यत आह—

द्रव्यस्य ग्रहणं चात्र लिङ्गसंख्याविशेषणम्।
द्रव्याश्रितत्वं हि तयोस्ततोऽन्यस्य न सिध्यतः ॥२४५॥

---

एतदेव वाच्यस्य प्रकारद्वयेन वर्तनम्=पदार्थाभिधानपक्षे शुद्धस्य संबन्धानुपहितस्य वर्तिपदार्थविशिष्टस्य द्रव्यस्याभिधानरूपम्, विभक्त्यर्थाभिधानपक्षे विभक्त्यर्थाविष्टस्य द्रव्यस्याभिधानरूपं वर्तनं द्वयोः पक्षयोर्विभजति=विभज्य दर्शयति—द्रव्यमात्रस्य निर्देशे इति।

अस्यार्थः—द्रव्यमात्रस्य निर्देशे शुद्धस्य द्रव्यस्य=प्रतिपादने, अयं भेदः विभक्त्यर्थावेशलक्षणो विशेषः, पूर्वत्र ग्रन्थे=पूर्वस्मिन् भाष्यग्रन्थे, यत्र बहुव्रीहावनुप्रयोगानुपपत्तिश्चोदिता, न वाऽनभिहितत्वात्'इत्यादिना प्रतिसमाहिता च तत्र पदार्थाभिधानपक्षेऽविवक्षितः=नाभिधातुमिष्टः।

द्वितीये तु—"अथवा विभक्त्यर्थोऽभिधीयते" इत्यत्र भाष्यग्रन्थेऽयं भेदः=अयं विभक्त्यर्थावेशलक्षणो विशेषः, अनुप्रवेशितः = पूर्वस्य भाष्यग्रन्थस्य पश्चात् साक्षादेवोक्त इति।

अयं भावः—विभक्त्यर्थावेशलक्षणो यो विशेषो द्रव्यमात्रस्य शुद्धस्य संबन्धानुपहितस्य निर्देशे प्रतिपादने पूर्वस्मिन् भाष्यग्रन्थे यत्र बहुव्रीहावप्रयोगानुपपत्तिश्चोदिता, "न वाऽनभिहितत्वात्" इत्यादिना च प्रतिसमाहिता तत्र पदार्थाभिधानपक्षे नाभिधातुमिष्टः। द्वितीये तु भाष्यग्रन्थे—"अथवा विभक्त्यर्थोऽभिधीयते" इत्यत्रायं विशेषः साक्षादेवोक्तः।

अत्रापि च=विभक्त्यर्थाभिधानपक्षेऽपि च विभक्त्यर्थाविष्टं द्रव्यमेवोच्यते, न तु विभक्त्यर्थरूपसंबन्धमात्रम् अन्यथा द्रव्यानभिधाने सर्वथैव अतद्व्यक्तिवचनम्=तस्य निमित्तस्य व्यक्तिवचनं न भवतीति अतद्व्यक्तिवचनम्, कथमतिदेशादपि बहुव्रीहौ क्रियादशायां प्राप्येत? प्रयोगे तु शाब्दबोधे प्रधानं संबन्धोऽत्र बहुव्रीहौ विवक्षित इति ॥ २४४ ॥

यद्येवम्=यदि द्वितीये भाष्यग्रन्थे विभक्त्यर्थाविष्टं द्रव्यमुच्यते, तदा तेन विभक्त्यर्थेन संवृतस्वरूपत्वाद् द्रव्यस्याभिधानाभाव इति कथमिदमुक्तम्—'सद्रव्यः, सलिङ्गः, ससंख्यः' इत्यत आह—द्रव्यस्य ग्रहणं चात्रेति।

यद्यपि लिङ्गसङ्ख्ययोर्द्रव्यं विशेष्यम्, तथापि तयोर्विशेषणमत्र द्रव्यग्रहणं बोद्धव्यम्। अन्यस्य गुणादेस्ताभ्यामयोगप्रतिपादनार्थं द्रव्याश्रितत्वमेवानयोरिति सम्बन्धाभिधानेऽपि लिङ्गसङ्ख्यासिद्ध्यर्थं सद्रव्य इत्युक्तम्।

सम्बन्धो हि षष्ठीवाच्यमुद्भूतमत्र रूपं हित्वा द्रव्याभेदेनाभिधीयमानः सद्रव्योऽभिहितो भवति। न तु द्रव्यस्यात्र गुणभावादनभिधानम्। आर्थेन हि रूपेण प्राधान्यं द्रव्यस्यैव। पक्षभेदार्थं तु सम्बन्धस्य शाब्दं प्राधान्यमाश्रितम्॥ २४५॥

---

अस्यार्थः—अत्र='सद्रव्यः, सलिङ्गः, ससंख्यः' इत्यत्र भाष्ये, द्रव्यस्य ग्रहणाच्च लिङ्ग-संख्याविशेषणम्। तथाहि—"अथवा विभक्त्यर्थोऽभिधीयते" इति भाष्ये कीदृशो विभक्त्यर्थोऽभिधीयत इति जिज्ञासायामुक्तम्—कृत्स्न इति। कश्च कृत्स्न इति जिज्ञासायामुक्तम्—'सद्रव्यः सलिङ्गः ससंख्यः' इति। अस्य चेदानीमयमर्थः।

यतः स्वस्मिन् विशेषणीभूतेन द्रव्येण सहितो विभक्त्यर्थः प्रक्रियावाक्येऽभिधीयते संबन्ध-रूपोऽतः सलिङ्गः=स्वस्मिन् लिङ्गाभावेऽपि द्रव्यलिङ्गेन सहितः स्वस्मिन् संख्याया अभावेऽपि द्रव्यसंख्यया सहितबहुव्रीहिप्रक्रियावाक्ययोरैकार्थ्यस्यौचित्यादिति।

एवमत्र भाष्ये द्रव्यग्रहणं तात्पर्यतो लिङ्गसंख्ययोर्विशेषणं भवति। हि=यतः, तयोः= लिङ्गसंख्ययोः, द्रव्याश्रितत्वम्=द्रव्यमात्रवृत्तित्वम्, ततः=तयोर्द्रव्यमात्राश्रितत्वात्। अन्यस्य= गुणादेः, ते=लिङ्गसंख्ये न सिद्ध्यतः। अतो द्रव्याश्रितत्वमेव लिङ्गसंख्ययोरिति प्रतिपादनद्वारा गुणादेर्लिङ्गसंख्याभ्यामयोगप्रतिपादनार्थम्। संबन्धाभिधानपक्षेऽपि बहुव्रीहिवाच्यस्य संबन्धस्य सोऽयमित्यभिसंबन्धपूर्वकं द्रव्यतादात्म्यारोपेण द्रव्यगते लिङ्गसंख्यासिद्ध्यर्थञ्च स द्रव्य इत्युक्तमिति।

अयं भावः—यद्यपि शाब्दबोधे द्रव्यं लिङ्गसंख्ययोर्विशेष्यम्, तथाप्यत्र=सद्रव्य' सलिङ्गः, ससंख्य इति भाष्ये लिङ्गशब्दो द्रव्यलिङ्गे संख्याशब्दश्च द्रव्यसंख्यायां लाक्षणिकः, संबन्धश्च तयोर्विशेष्य इति कृत्वा द्रव्यग्रहणम् तयोः=लिङ्गसंख्ययोः विशेषणमत्र = सद्रव्य इत्यादि-भाष्यवाक्ये बोद्धव्यम्। द्रव्याश्रितत्वमेवानयोः=लिङ्संख्ययोः इति प्रतिपादनद्वाराऽन्यस्य गुणादेस्ताभ्यामयोगप्रतिपादनार्थं संबन्धाभिधानपक्षेऽपि संबन्धेऽन्यपदार्थं बहुव्रीहिवाच्ये सोऽय-मित्यभिसंबन्धपूर्वकं द्रव्यगतलिङ्गसंख्यासिद्ध्यर्थञ्च सद्रव्य इत्युक्तम्।

संबन्धो हि प्रक्रियावाक्ये षष्ठीवाच्यमुद्भूतं स्वं रूपमत्र=बहुव्रीहौ हित्वा सोऽयमित्य-संबन्धेन द्रव्याभेदेनाभिधीयमानः स द्रव्योऽभिहितो भवति। न तु प्रक्रियावाक्ये द्रव्यस्य गुणभावा-दत्र=बहुव्रीहौ द्रव्यस्यानभिधानम्। आर्थेन हि रूपेण लिङ्गसंख्ययोर्द्रव्यमात्राश्रितत्वादन्यथानुप-पत्तिरूपार्थापत्तिप्रमाणलभ्येन हि रूपेणार्थं प्राधान्यम्। द्रव्यस्यैव बहुव्रीहौ पदार्थाभिधानम्, बहुव्रीहौ संबन्धाभिधानमिति पक्षभेदार्थं तु बहुव्रीहौ द्रव्याभेदेनाभिधीयमानस्य संबन्धस्य शाब्दं प्राधान्य-माश्रितमिति॥ २४५॥

तथाहि—

**सम्बन्धिभिन्नसम्बन्धपरिच्छिन्ने प्रवर्तते ।**
**समासो द्रव्यसामान्ये विशिष्टार्थानुपातिनि ॥२४६॥**

वर्तिपदार्थभूतैः सम्बन्धिभिर्विशेषितो यः सम्बन्धस्तेन परिच्छिन्ने स्वरूपसम्भेदेनावच्छिन्ने सम्बन्धिनि द्रव्यसामान्ये विभक्त्यर्थाभिधानपक्षे बहुव्रीहिर्वाचकत्वेन प्रवर्तते । सामान्य इति पदार्थविशेषाणामनभिहितानामनुप्रयोगोपपत्तिमत्रापि दर्शने पक्षान्तरवदाह ॥ २४६ ॥

अतश्च विशेषैः सामानाधिकरण्यात् तदनुपातित्वे फलमाह—

**द्रव्यधर्मानतिक्रान्तो भेदधर्मेष्ववस्थितः (ष्वशक्तितः) ।**
**भविष्यदाश्रयापेक्षे लिङ्गसङ्ख्ये प्रपद्यते ॥२४७॥**

---

तथाहि=पूर्वकारिकोक्तमेवार्थं विशदीकरोति—संबन्धिभिन्नसंबन्धपरिच्छिन्ने इति ।

अस्यार्थः—संबन्धिभिर्बहुव्रीहिघटकपदार्थैर्भिन्नो विशेषितो यः संबन्धस्तेन परिच्छिन्ने=स्वरूपतादात्म्येनावच्छिन्ने, द्रव्यसामान्ये वाचकत्वेन रूपेण बहुव्रीहिः समासः प्रवर्तते । प्रवृत्त्यनन्तरं तु विशेषैश्चैत्रमैत्रादिभिः सामानाधिकरण्ये सति विशिष्टार्थानुवर्तिनि=विशेषार्थरूपतामापद्यमाने इति ।

एवञ्च पदार्थाभिधानपक्ष इव संबन्धाभिधानपक्षेऽपि बहुव्रीहिणा द्रव्यसामान्यस्यैवाभिधानाद् विशेषार्थानभिधानेन न विशेषार्थाभिधायकशब्दानुप्रयोगानुपपत्तिरिति ।

अयं भावः—वर्तिपदार्थभूतैः=बहुव्रीहिघटकपदार्थरूपैः संबन्धिभिर्विशेषितो यः संबन्धः स्वामित्वादिः, तेन परिच्छिन्ने स्वरूपसंभेदेनावच्छिन्ने=स्वरूपतादात्म्येन संबन्धिनि द्रव्यसामान्ये विभक्त्यर्थसंबन्धाभिधानपक्षे बहुव्रीहिर्वाचकत्वेन प्रवर्तते । सामान्य इति=द्रव्यसामान्य इत्युक्त्या पदार्थविशेषाणां बहुव्रीहावनभिहितानां तत्रानुप्रयोगोपपत्तिमत्रापि दर्शने=विभक्त्यर्थाभिधानपक्षे पक्षान्तरवत्=पदार्थाभिधानपक्षवद् आहेति ॥ २४६ ॥

अतश्च=बहुव्रीहिवाच्यस्य द्रव्यसामान्यस्य विशिष्टार्थानुपातित्वाच्च विशेषैः सामानाधिकरण्यात् तदनुपातित्वे=विशिष्टार्थानुपातित्वे स्थिते फलमाह—द्रव्यधर्मानतिक्रान्त इति ।

अस्यार्थः—बहुव्रीहिः समासो द्रव्यसामान्यवृत्तित्वेन योग्यतामात्राद् द्रव्यधर्मं लिङ्गसंख्यालक्षणं तिरोहितमनतिक्रान्तं तेनाविरहितः, भेदधर्मेषु=द्रव्यविशेषधर्मेषु लिङ्गसंख्यालक्षणेषु अशक्तितः=असत्त्वभूतत्वेन लिङ्गसंख्यारहितविभक्त्यर्थसंबन्धस्वरूपाभेदेन द्रव्यसामान्यस्याभिधीयमानत्वाद् द्रव्यविशेषधर्मेषु लिङ्गसंख्यालक्षणेषु बोधनासामर्थ्याद्, भविष्यदाश्रयापेक्षे=द्रव्यविशेषवाचकपदानुप्रयोगे भाविनि भविष्यन् य आश्रयो द्रव्यविशेषस्तदपेक्षे=तमपेक्षमाणे लिङ्गसंख्ये प्रपद्येते समवलम्बते । समासोऽत्र कर्ता इति ।

द्रव्यसामान्यवृत्तित्वाद् योग्यतामात्राद् द्रव्यधर्मं लिङ्गसङ्ख्यालक्षणमनतिक्रान्तः समासो द्रव्यविशेषगतं च रूपाभेदादसमर्थो लिङ्गवचनं प्रतिपत्तुमिति "विशेषणानां" (पा० १।२।५२) इति शास्त्रसामर्थ्यात् पदान्तरप्रयोगावधृतद्रव्यविशेषाश्रयगते यथायथं लिङ्गसङ्ख्ये समवलम्बते। इत्यवसितविचारो बहुव्रीहिः ॥ २४७ ॥

क्रमप्राप्ते नञ्समासे लिङ्गवचनातिदेशं विचारयितुं भाष्योपक्षिप्तं पक्षत्रयं समर्थयते—

**शास्त्रप्रवृत्तिभेदेऽपि लौकिकार्थो न भिद्यते।**
**नञ्समासे यतस्तत्र त्रयः पक्षा विचारिताः ॥२४८॥**

एकत्र गुणप्राधानभावस्यानवस्थानात् कथं पक्षत्रयोपपत्तिः? अब्राह्मणादेर्ह्यन्यपदार्थस्यैव क्षत्रियादेरवधारणात् तत्प्रधानत्वमेव न्याय्यमि त चोदिते सतीदं समर्थनम्—'अर्थानादेशनात् तच्च लघ्वर्थम्'इति वदता स्थितलक्षणोऽर्थः प्रक्रियाभेदेऽप्यव्यभिचारी लौकिकः उक्तः।

---

अयं भावः—बहुव्रीहिः समासो पक्षद्वयेऽपि द्रव्यसामान्यवृत्तित्वेन योग्यतामात्राद् द्रव्यधर्मं-लिङ्गसंख्यालक्षणमनतिक्रान्तः=तेनाविरहितः, अनुप्रयुज्यमानपदवाच्यद्रव्यविशेषगतं च लिङ्गवचनं रूपाभेदाद्=स्ववाच्ये द्रव्यसामान्येऽसत्त्वभूतसंबन्धस्वरूपाभेदात् प्रतिपत्तुम्=प्राप्तुमसमर्थः, "विशेषणानाम्" (पा० १।२।५२) इति शास्त्रसामर्थ्यात् पदान्तरप्रयोगावधृतद्रव्यविशेषणाश्रयगते=द्रव्यविशेषवाचकपदान्तरप्रयोगेणावधृतो यो द्रव्यविशेषरूप आश्रयस्तद्गते लिङ्गसंख्ये यथायथं समवलम्बत इति। इत्यवसितविचारः=परिसमाप्तविमर्शो बहुव्रीहिः ॥ २४७ ॥

क्रमप्राप्ते=प्रातिलोम्यक्रमेण प्राप्ते नञ्समासे लिङ्गवचनातिदेशं विचारयितुं भाष्योपक्षिप्तं पक्षत्रयम्=उत्तरपदार्थप्रधानो नञ्समासः पूर्वपदार्थप्रधानः, अन्यपदार्थप्रधान इति पक्षत्रयं समर्थयते—शास्त्रप्रवृत्तिभेदेऽपि इति।

अस्यार्थः—यतो नञ्समासेऽब्राह्मणादौ शास्त्रप्रवृत्तिभेदेऽपि=शास्त्रप्रक्रियाभेदेऽपि, लौकिकार्थः=ब्राह्मण्येनावसितः क्षत्रियादिर्न भिद्यते, अतस्तत्र नञ्समासे, शास्त्रप्रवृत्तिभेदमाश्रित्य त्रयः पक्षाः—उत्तरपदार्थप्रधानो नञ्समासः, पूर्वपदार्थप्रधानः, अन्यपदार्थप्रधान इति त्रयः पक्षा विचारिता इति।

अयं भावः—गुणप्रधानभावस्यैकत्र विरोधेनानवस्थानात् कथं पक्षत्रयोपपत्तिः, अब्राह्मणादेर्ह्यन्यपदार्थस्य क्षत्रियादेरवधारणात् तत्प्रधानत्वमेव न्याय्यम्, न तूत्तरपदार्थप्रधानत्वम्, न वा पूर्वपदार्थप्रधानत्वमिति चोदिते सति इदं भाष्ये समर्थनम्—"अर्थानादेशनात्, तच्च लघ्वर्थम्" इति।

अस्यार्थः—नञ्समासेऽर्थस्यानादेशनाद् अनुपदेशात् पक्षत्रयोपपत्तिः, तच्च=नञ्समासेऽर्थस्यानादेशनञ्च, लघ्वर्थम्=लाघवेन शास्त्रप्रवृत्त्यर्थमिति। एवं वदता प्रक्रियाभेदेऽपि अव्यभिचारी स्थितलक्षणोऽर्थो लौकिक उक्तः।

तथाहि—यदान्यपदार्थः प्रधानम्, तदा व्यक्तिवचनमुत्तरपदम्, अविद्यमाना ब्राह्मणव्यक्तिराश्रयभूतास्मिन् क्षत्रिये क्षत्रियजाताविति।

यदा तु पूर्वपदार्थो नञर्थो निवृत्तिरूपः प्रधानम्, तदा तस्यासतः क्रियायोगाभावान्निषेधस्य प्रसङ्गपूर्वकत्वादुत्तरपदार्थसदृशमेव प्रतीयते।

एवमुत्तरपदार्थप्राधान्येऽपि ब्राह्मण्येनावसितः क्षत्रियादिरेवावगम्यत इति नास्ति भेदः स्थितलक्षणस्यार्थस्य। अपोद्धारपदार्थस्त्वन्वाख्यानाङ्गमिति प्रक्रियायां स भिद्यते।

तथा च 'किंप्रधानोऽयं समासः, उत्तरपदार्थप्रधानः, पूर्वपदार्थप्रधानः, अन्यपदार्थप्रधानो वा' इति पक्षत्रयमुपन्यस्य भाष्ये यस्मिन् पक्षे शास्त्रप्रक्रिया न विलुप्यते, तमवस्थापयितुं विचारो न विरुध्यते ॥ २४८ ॥

यद्यपि नापोद्धारपदार्थः प्रतिपादकशब्दनिष्ठः, तथापि—

**शब्दान्तरेऽपि चैकत्वमाश्रित्यैव विचारणा।**
**अब्राह्मणादिषु नञः प्रयोगो न हि विद्यते ॥२४९॥**

---

तथाहि—'अब्राह्मणः' इत्यादौ यदान्यपदार्थः प्रधानम्, तदा व्यक्तिवचनम्=व्यक्तिवाचकमुत्तरपदम्। अविद्यमाना आश्रयभूता ब्राह्मण्यव्यक्तिरस्मिन् क्षत्रिये क्षत्रियजाताविति।

यदा तु पूर्वपदार्थो नञर्थो निवृत्तिरूपः=निषेधरूपः प्रधानम्, तदा तस्यासतः क्रियायोगाभावान्निषेधस्य प्रसङ्गपूर्वकत्वाच्चोत्तरपदार्थसदृशमेव प्रतीयत इति सादृश्यं नञर्थः।

एवमुत्तरपदार्थप्राधान्येऽपि ब्राह्मण्येनावसितः=ब्राह्मणत्वेनावधृतः क्षत्रियादिरेवावगम्यत इति नास्ति भेदः स्थितलक्षणस्यार्थस्य, प्रतिपादकशब्दनिष्ठस्यापोद्धारपदार्थादन्वाख्येयशब्दनिष्ठात्।

अपोद्धारपदार्थस्तु अन्वाख्यानाङ्गम्=व्याकरणेन क्रियमाणस्य शब्दसंस्कारस्याङ्गम्=निमित्तमिति प्रक्रियायां स=अपोद्धारपदार्थो भिद्यते। तथा च "किंप्रधानोऽयं समासः, उत्तरपदार्थप्रधानः, पूर्वपदार्थप्रधानः, अन्यपदार्थप्रधानो वा" इति भाष्ये पक्षत्रयम्। तत्र द्वितीयतृतीयौ प्राग् दर्शितौ।

प्रथमपक्षोपपत्तिस्तु यदाऽरोपितत्वं नञर्थः, तदा अब्राह्मण इत्यस्य आरोपितो ब्राह्मण इत्यर्थः। इदञ्च पक्षत्रयं भाष्ये उपन्यस्य यस्मिन् पक्षे शास्त्रप्रक्रिया न विलुप्यते, तमवस्थापयितुं पक्षत्रयविचारो न विरुध्यते, लौकिकार्थस्तु क्षत्रियादिरेकरूपः पक्षत्रयेऽपि न भिद्यते इति ॥ २४८ ॥

यद्यपि नापोद्धारपदार्थः प्रतिपादकशब्दनिष्ठः, किन्तु अन्वाख्येयशब्दनिष्ठ एव, तथापि अन्वाख्येयप्रतिपादकशब्दयोर्भेदेऽपि तयोरैक्यमाश्रित्यैव पक्षत्रयविचारणा भाष्ये इत्याह—शब्दान्तरेऽपि इति।

अस्यार्थः—शब्दान्तरेऽपि शब्दान्तरत्वेऽपि अन्वाख्येयप्रतिपादकशब्दयोर्भेदेऽपि भावप्रधानो निर्देशः। तयोरेकत्वमाश्रित्यैव भाष्ये पक्षत्रयविचारणा। हि यतः, वस्तुतोऽब्राह्मणादिषु नञः प्रयोगो न विद्यत इति वस्तुतोऽन्वाख्येयप्रतिपादकशब्दयोर्भेद एवेति।

न ब्राह्मणोऽब्राह्मण इत्यादिपरिकल्पितावयवविभागप्रतिपादकशब्दनिष्ठं पूर्वपदोत्तरपदगतार्थविभागपरिकल्पनयान्वाख्येयस्थितलक्षणार्थशब्दानुशासनं क्रियते लाघवार्थम् ।

यथाहि—प्रक्रियायामपि वाक्याद् वृत्तेः शब्दान्यत्वेऽपि वाक्येन सहाभेदं परिकल्प्य परीक्षा विधीयते ।

तथा चाब्राह्मणादिषु समासेषु यद्यपि नञ् नाम न कश्चिद् दृश्यते, तथापि वाक्ये नञो दृष्टेस्तदभेदेन व्युत्पादनम् । सर्व एव हि वृत्तेः संसृष्टार्थाया विशेषणविशेष्यादिभेदोऽर्थानां वाक्याभेदसमाश्रयः, वाक्यार्थस्य वृत्तौ सम्प्रत्ययात् ।

ततश्च निवृत्तिलक्षणस्य नञर्थस्य संप्रत्ययादब्राह्मणादिष्वकाररूपमिदं नञ्-सम्बन्धीति निश्चीयते । अधिकापनयादिषु त्वकाररूपमेवानुवर्तते, न नञर्थः ।

परमार्थतस्त्वब्राह्मणादिर्निरस्तावयवविभागो मुण्डिसूत्र्यादिवदिति 'ब्राह्मणार्थो यथा नास्ति कश्चिद् ब्राह्मणकम्ब कम्बले, (वा०प० २।१४) इत्यादिना निर्णीतमेव ॥२४९॥

---

अयं भावः—'न ब्राह्मणो अब्राह्मणः' इत्यादौ परिकल्पितावयवविभागो यः प्रतिपादकशब्दस्तन्निष्ठं पूर्वपदोत्तरपदगतार्थविभागपरिकल्पनयाऽन्वाख्येयस्य स्थितलक्षणार्थकस्य च प्रतिपादकशब्दस्य अनुशासनं नञ्समासविधायकसूत्रेण "नभ्राण्नपान्नवेदाना०" (पा० ६।३।७५) इत्यादिसूत्रेण च क्रियते लाघवार्थम् । तथा हि—प्रक्रियायामपि वाक्याद् वृत्तेः शब्दान्यत्वेऽपि वाक्येन सह वृत्तेरभेदमर्थैक्यात् परिकल्प्य नञ्समासे पक्षत्रयपरीक्षा भाष्यकृता विधीयते ।

तथा चाब्रह्मणादिषु समासेषु यद्यपि नञ् नाम न कश्चिद् दृश्यते, तथापि वाक्ये नञो दृष्टेस्तदभेदेन=वाक्यभेदेन वृत्तेर्व्युत्पादनम् ।

वस्तुतः संसृष्टार्थायाः=संभिन्नार्थायाः एकार्थीभावापन्नाया अपि वृत्तेरर्थानां विशेषण-विशेष्यादिभेदो वृत्तेर्वाक्यभेदसमाश्रयः=वाक्याभेदनिमित्तको वाक्यार्थस्यैव वृत्तौ संप्रत्ययात् । ततश्च वृत्तौ अब्रह्मणादिषु निवृत्तिलक्षणस्य नञर्थस्य संप्रत्ययाद् अब्राह्मणादिषु अकाररूपमिदं नञ्सम्बन्धीति निश्चीयते । अधिकापनयादिषु तु अकाररूपमेवानुवर्तते, न नञर्थ इति न तत्र नञ्पदम्, न वा नञ्समासः ।

परमार्थतस्तु अब्राह्मणादिशब्दस्तदर्थश्च निरस्तावयवविभागो मुण्डिसूत्र्यादिधातुवदिति "ब्राह्मणार्थो यथा नास्ति कश्चिद् ब्राह्मणकम्बले ।" (वा० प० २।१४) इत्यादिना निर्णीतमेवेति ॥ २४९ ॥

एवं पक्षत्रयविचारोपपत्तिमुक्त्वा कीदृगर्थो वाक्ये नञो दृश्यते, तस्य तदभेदेन वृत्तौ व्युत्पाद्यमानायामनुगम इत्याह—

**प्राक् समासात् पदार्थानां निवृत्तिर्द्योत्यते नञा ।**
**स्वभावतो निवृत्तानां रूपाभेदादलक्षिता ॥२५०॥**

वाक्ये नञ्प्रयोगे निवृत्तिरवसीयते। सा च न स्वतन्त्रा, निर्विशेषणस्याभावस्याप्रतीतेरिति पदार्थनिष्ठासौ। तत्र सन् पदार्थो नञ्प्रयोगमात्रान्निवर्तितुं नोत्सहते। शब्दान्तरप्रयोगेऽपि च पदानां वाच्यस्य न्यूनतातिरेकयोरनुपपत्तिः। तस्मात् स्वभावेनैव निवृत्तानां नञ् द्योतको निवृत्तेः। निवृत्तास्तर्हि कथं शब्देनोच्यन्त इति चेद्, न वस्त्वर्थः शब्दार्थः। उपचारसत्ताश्रयस्तु भावाभावसाधारणः प्रतीतिप्रतिभासी शब्दवाच्य इति 'व्यपदेशे पदार्थानामन्या सत्तौपचारिकी' (वा०प० ३ सं० ३९) इति। कृतनिर्णयम्।

तथा च भावाभावसाधारण्यात् प्रयोगस्यानभिव्यक्ता निवृत्तिर्नञापि (वि) द्योत्यत इति परपदार्थनिष्ठस्यार्थस्यावेदनाद् द्योतकत्वमुच्यते ॥ २५० ॥

---

एवं नञर्थे पक्षत्रयविचारोपपत्तिमुक्त्वा नञः कीदृगर्थो वाक्ये दृश्यते, यस्यार्थस्य वाक्याभेदेन व्युत्पाद्यमानायां वृत्तावनुगम इत्याह—प्राक् समासादिति ।

अस्यार्थः—'अब्राह्मणः' इत्यादौ समासात् प्राग् वाक्ये स्वभावत एव निवृत्तानाम्, न तु स्वभावतो निवृत्तः पदार्थः शब्दप्रयोगान्निवर्तयितुं शक्यते, पदार्थानां रूपाभेदाद् भावाभावयोः स्वरूपसाधारण्याद्, अलक्षिता=अनभिव्यक्ता निवृत्तिर्नञा द्योत्यत इति ।

अयं भावः—न ब्राह्मण इति वाक्ये नञ्प्रयोगे निवृत्तिरवसीयते=निषेधो निश्चीयते । सा च न स्वतन्त्रा=केवला प्रतियोगिरहिता, निर्विशेषणस्य=निरूपकरूपविशेषणशून्यस्य अभावस्याप्रतीतेरिति पदार्थनिष्ठाऽसौ=निरूपकत्वेन पदार्थनिष्ठा निवृत्तिः । तत्र स्वभावतः सन् पदार्थो नञ्प्रयोगमात्रान्निवर्तितुं नोत्सहते । विधिवाक्यापेक्षया निषेधवाक्ये शब्दान्तरप्रयोगेऽपि च=शब्दान्तरस्य नञः प्रयोगेऽपि च पदानां वाच्यस्य न्यून्यतातिरेकयोः=न्यून्यत्वाधिक्ययोरनुपपत्तिः । पर्यायप्रयोगे तद्दर्शनम् । तस्मात् स्वभावेनैव निवृत्तानां निवृत्तेर्द्योतको नञ् । यदि निवृत्ताः, तर्हि कथं शब्देनोच्यन्त इति चेद्, न वस्त्वर्थः=वस्तुभूतोऽर्थः शब्दार्थः=शब्दवाच्यः । किन्तु उपचारसत्ताश्रयः=आरोपिता या सत्ता तदाश्रयः, अत एव भावाभावसाधारणः=वस्तुतः सत्त्वेऽसत्त्वे च साधारणः समानः प्रतीतिप्रतिभासी=रज्जुसर्पादिवत् प्रतीतिमात्रशरीरः अर्थो बौद्धः शब्दवाच्य इति व्यपदेशे=शाब्दे व्यवहारे पदार्थानामन्या सत्ता औपचारिकी=आरोपयुक्ता इति कृतनिर्णयम् ।

तथा च शब्दवाच्यस्यार्थस्य सत्ताया औपचारिकत्वे च शब्दप्रयोगस्य भावाभावसाधारण्यात् =स्ववाच्यार्थस्य सत्त्वासत्त्वयोः समानत्वाद् नञर्थे बुबोधयिषिते नञ्पदं विनाऽनभिव्यक्ता निवृत्तिर्नञा विद्योत्यत इति परपदार्थनिष्ठस्य=नञ्पदभिन्ननञ्पदसमभिव्याहृतपदार्थनिष्ठस्यार्थस्य निवृत्तिरूपस्य आवेदनाद्=ज्ञापनाद् नञो द्योतकत्वमुच्यत इति ॥ २५० ॥

यद्येवं नञः स्वतन्त्रः पदार्थ एव नास्ति, यः प्रधानं स्यात् ।

सति वा तस्मिन्नभावात्मना तेन विशेष्यमाण उत्तरपदार्थः स्वभावात् प्रच्युतः कथमसत्त्वात् प्राधान्यं प्रतिपद्येत ?

सति च वर्तिपदार्थयोरभिसम्बन्धे तदवच्छिन्नान्यपदार्थाभिधानमपि न कल्पेतेति कथं पक्षत्रयोपपत्तिः ।

अथोत्तरपदार्थगता क्रिया प्रतिषिध्यते, तदा समास एव नास्तीत्याह—

ब्राह्मणादिस्थया वाक्येष्वाख्यातपदवाच्यया ।
क्रियया यस्य सम्बन्धो वृत्तिस्तस्य न विद्यते ॥२५१॥

क्रिया प्रतिषिध्यमाना पदान्तरोपादाना वा स्याद्, वृत्तिपदवाच्या वा । प्रथमे कल्पे 'ब्राह्मणो न भुङ्क्ते, ब्राह्मणो नाधीते' इति तिङन्तपदप्रतिपाद्यया ब्राह्मणादिसमवायिन्या यस्य नञः क्रियया योगः, तस्योत्तरपदेनासामर्थ्यात् समासो नास्ति । क्रियया हि नञोऽत्र सम्बन्धः, न ब्राह्मणादिभिरुत्तरपदैः । ततश्च समासस्यैवात्राभावाद् गुणप्रधानभावविकल्पो वर्तिपदार्थानां निरालम्बनः । पदार्थात्मभूतया त्वस्ति-

---

यद्येवं=यदि नञः परपदार्थनिष्ठार्थद्योतकत्वम्, तदा नञः स्वतन्त्रः=पदान्तरानभिहितः, पदार्थ एव नास्ति, यः प्रधानं स्यादिति नास्ति पूर्वपदार्थप्रधानो नञ्समास इति पक्षः ।

सति वा तस्मिन् अभावात्मना=निवृत्तिरूपेण तेन निषेधप्रतियोगी ब्राह्मण इत्येवं विशेष्यमाण उत्तरपदार्थः स्वभावात् सत्त्वात् प्रच्युतः कथमसत्त्वात् प्राधान्यं प्रतिपद्येत इति नोपपद्यत उत्तरपदार्थप्रधानो नञ्समास इति पक्षः ।

असति च वर्त्तिपदार्थयोः=पूर्वोत्तरपदार्थयोः परस्परमभिसम्बन्धे तदवच्छिन्नान्यपदार्थाभिधानमपि न कल्पेत इति अन्यपदार्थप्रधानो नञ्समास इति पक्षानुपपत्तिरिति कथं नञ्समासे प्रागुक्तपक्षत्रयोपपत्तिः ।

अथोत्तरपदार्थगता क्रिया प्रतिषिध्यते, तदा नञ उत्तरपदेन साकमसम्बन्धेनासामर्थ्यात् तेन सह समास एव नास्ति इत्याह—ब्राह्मणादिस्थया इति ।

अस्यार्थः—'ब्राह्मणो न भुङ्क्ते' इत्यादिवाक्येषु ब्राह्मणादिस्थया=ब्राह्मणादिरूपकर्तृनिष्ठया, आख्यातपदवाच्यया भुङ्क्ते इत्यादितिङन्तपदवाच्यया क्रियया सह यस्य नञः सम्बन्धस्तस्य ब्राह्मणादिभिरुत्तरपदैः सह वृत्तिः समासो न विद्यते, ब्राह्मणादिना उत्तरपदेन सह नञोऽसम्बन्धेनासामर्थ्यादिति ।

अयं भावः—क्रिया प्रतिषिध्यमाना पदान्तरोपादाना=पदान्तराभिहिता वा स्याद्, 'ब्राह्मणो न भुङ्क्ते' इत्यादौ वृत्तिघटकपदवाच्या वा स्याद्, 'ब्राह्मणो नास्ति' इत्यादौ । प्रथमे कल्पे=पक्षे 'ब्राह्मणो न भुङ्क्ते-ब्राह्मणो नाधीते' इत्यादौ तिङन्तपदप्रतिपाद्यया ब्राह्मणादिसमवेतया क्रियाया यस्य नञो योगः, तस्योत्तरपदेन ब्राह्मणादिना असम्बन्धेनासामर्थ्यात् समासो नास्ति । क्रियया हि नञोऽत्र सम्बन्धो न ब्राह्मणादिभिरुत्तरपदैः । ततश्चात्र समास्यैवाभावात् पक्षत्रयनिमित्तभूतो वृत्ति.वर्त्तिपदार्थानां गुणप्रधानभावविकल्पो निरालम्बनः । वृत्तिवर्त्तिपदार्थात्मभूतया

क्रियया नञो योगे समासो भवत्येव। तदानीं ह्युत्तरपदार्थेनैव सामर्थ्यम्, ब्राह्मणो नास्तीति।

अव्यभिचारा हि सत्ता पदार्थस्याप्रयुज्यमानेऽपि क्रियापदे प्रतीयत इति सामर्थ्यलभ्यायास्तस्या निषेधे निवृत्तपदार्थकैरेवोत्तरपदैरुपात्तेऽर्थद्योतकस्य नञः प्रयोगात् सिद्धान्तयिष्यते समासः ॥ २५१ ॥

नन्वनेन न्यायेनोत्तरपदस्वीकृतयान्यया पि क्रियया नञः सामर्थ्ये भवतु समास इत्यत आह—

**पाचकादिपदस्था चेन्नञा सम्बध्यते क्रिया।**
**तत्र सत्तानुपादानात् त्रिपक्षी नोपपद्यते ॥२८२॥**

उत्तरपदेन पाचकादिना या गुणभावेन पच्यादिक्रियोपात्ता, सा यदि नञा द्योतकेन वाक्य इव युज्यते, तदा स्वार्थावच्छिन्नाया वाच्यत्वेन नञा सत्ताया परिग्रहात् पक्षत्रयं न घटते। द्योत्यार्थेनोत्तरपदेनैव सम्बन्धादुत्तरपदार्थप्राधान्यमेवैकं भवेत्।

---

त्वस्तिक्रियया नञो योगे समासो भवत्येव। तदानीं हि उत्तरपदार्थेनैव सामर्थ्यम्। अस्तिक्रियाया उत्तरपदार्थानतिरेकात्। ब्राह्मणो नास्ति-अब्राह्मणमिति।

अव्यभिचारा हि पदार्थस्य सत्ताऽप्रयुज्यमानेऽपि क्रियापदे प्रतीयत इति सामर्थ्यलभ्याया-स्तस्या निषेधे निवृत्तपदार्थकैः=निषेधार्थकैः एवोत्तरपदैः उपात्ते=अभिहितेऽर्थे द्योतकस्य नञः प्रयोगात् तत्र समासः सिद्धान्तयिष्यत इति ॥ २५१ ॥

ननु अनेन न्यायेन='ब्राह्मणो नास्ति' इत्यादौ दृष्टेन प्रकारेण 'न पाचकः' इत्यादौ उत्तरपदेन विशेषणेत्वेन स्वीकृतयाऽन्ययाऽपि = अस्त्यतिरिक्तयाऽपि पच्यादिक्रियया सह नञः सामर्थ्ये भवतु समास इत्यत आह—पाचकादिपदस्था चेदिति।

अस्यार्थः—चेद्=यदि, पाचकादिपदस्था=पाचकादिपदे गुणीभावेन स्थिता पच्यादिक्रिया 'न पाचकः' इत्यादौ नञा सम्बध्यते='न पचति' इत्यादौ वाक्य इव युज्यते, तत्र नञर्थावच्छिन्नायाः सत्ताया नञा वाच्यत्वेन अनुपादानात्=अपरिग्रहात् त्रिपक्षी=प्रागुक्तं पक्षत्रयं नोपपद्यते। पच्यादि-क्रियारूपोत्तरपदार्थप्राधान्यमेवैकं भवेत्। पूर्वपदार्थप्राधान्यम्, अन्यपदार्थप्राधान्यं वा न स्यात्। कर्तरि विशेषणीभूतायाः पचिक्रियायाः नञर्थे विशेषणत्वायोगात्। नञर्थावच्छिन्नायाः पचिक्रियायाः कर्तृविशेषणत्वेन अन्यपदार्थे विशेषणत्वाभावाच्चेति।

अयं भावः—उत्तरपदेन पाचकादिना या पच्यादिक्रिया गुणभावेन=विशेषणत्वेन उपात्ता=अभिहिता, सा यदि 'न पचति' इत्यादिवाक्य इव द्योतकेन नञा युज्यते, तदा स्वार्था-वच्छिन्नायाः=नञर्थावच्छिन्नायाः सत्ताया नञा वाच्यत्वेनापरिग्रहात् पूर्वपदार्थप्राधान्यादिरूपं पक्षत्रयं घटते। द्योत्यार्थकेन उत्तरपदेनैव धातुरूपेण नञः सम्बन्धादुत्तरपदार्थप्राधान्यमेवैकं भवेत्।

नहि नञः स्वतन्त्रः कश्चित् पदार्थः, यः प्रधानं, गुण इति वा निरूप्यते द्योतकत्वाद् द्योत्यार्थनिष्ठत्वात् ।

तथा च यत्र द्योत्येन क्रियालक्षणेनार्थेनास्ति सम्बन्धः, तत्र समासो न पाचकोऽपाचक इत्यादि । अत्र हि गुणभूतोत्तरपदेन क्रियाभिधीयत इति नञा निषेध्यतया तस्याः सम्बन्धः । ब्राह्मणादेस्तूत्तरपदस्य गुणभूतापि क्रिया न वाच्येति तेन नञः सम्बन्धाभावात् पूर्वोक्तपक्षत्रयानुपपत्तिः । तस्माद् द्योतकत्वं नञोऽनुपपन्नम् पक्षभेदानुपपत्तिप्रसङ्गादिति वृत्तिविषये वाचकत्वमभ्युपगमनीयम् ।

तथा चासत्तावचनत्वान्नञो निवृत्तपदार्थकैरुत्तरपदैर्ब्राह्मणादिभिरसम्बन्धात् पक्षत्रयमुपपद्यते । असत्तासामान्यवचनो हि नञ् तद्विशेषवचनैर्योगमनुभवन् यथाविवक्षं पूर्वोत्तरान्यपदार्थप्रधानेतरेतरभावसमाश्रयेण वृत्तिमापद्यते ॥ २५२ ॥

यद्येवम्—

**सत्तयैवाभिसम्बन्धो यदि सर्वत्र कल्प्यते ।**
**असन्निति समासेऽस्मिन् सत्तान्या परिकल्प्यताम् ॥२५३॥**

---

नहि नञः स्वतन्त्रः कश्चनार्थः, यः प्रधानं गुण इति वा निरूप्यते, नञो द्योतकत्वेन द्योत्यार्थनिष्ठत्वात् ।

तथा च यत्र स्वद्योत्येन क्रियारूपेणार्थेन नञः सम्बन्धोऽस्ति, तत्र समासो भवति, न पाचकोऽपाचक इत्यादि । अत्र हि गुणभूतेनोत्तरपदेन धातुरूपेण क्रियाऽभिधीयत इति तस्या नञा सह निषेध्यतयाऽस्ति सम्बन्धः । 'न ब्राह्मणः' इत्यादौ ब्राह्मणादेस्तूत्तरपदस्य गुणभूताऽपि क्रिया न वाच्येति । तेन = ब्राह्मणादिनोत्तरपदेन नञः सम्बन्धाभावात् पूर्वोक्तपक्षत्रयाऽनुपपत्तिः । तस्माद् द्योतकत्वं नञोऽनुपपन्नं पक्षभेदाऽनुपपत्तिप्रसङ्गादिति वृत्तिविषये नञो वाचकत्वं अभ्युपेयम् ।

तथा च नञोऽसत्तासामान्यवचनत्वाद् निवृत्तपदार्थकैः = निषेधप्रतियोग्यर्थकैः उत्तरपदभूतैर्ब्राह्मणादिभिरभिसम्बन्धात् पक्षत्रयमुपपद्यते । असत्तासामान्यवचनो हि नञ् असत्ताविशेषवचनैर्ब्राह्मणादिभिः सह योगमनुभवन् यथाविवक्षम् = तत्तदर्थविवक्षानुसारेण पूर्वोत्तरान्यपदार्थप्रधानेतरभावसमाश्रयेण नञ्समासरूपां वृत्तिमापद्यत इति ।

तदयमत्र निष्कर्षः—'न ब्राह्मणः' इत्यादौ ब्राह्मणे गुणीभूता अव्यभिचारिणी सत्तारूपा क्रिया नञा सम्बध्यत इति अपाचक इत्यत्रेव समासः, यद्वा ,नञर्थोऽसत्तासामान्यम्, ब्राह्मणपदार्थे गुणीभूतेनासत्ताविशेषेणाभेदेनान्वेति अब्राह्मण इत्यादौ समासोपपत्तिरिति ॥२५२॥

यद्येवमब्राह्मण इत्यादौ सर्वत्रैवाव्यभिचारिण्या सत्तयैव पदार्थात्मभूतया नञः सम्बन्धः परिकल्प्यते, तदाऽसन्नित्यत्रापि पदार्थात्मभूताऽन्या सत्ता परिकल्प्यताम्, एतत् त्वनुभवविरुद्धमित्याह—सत्तयैवाभिसम्बन्ध इति ।

सर्वपदार्थानां सत्तायोगस्याव्यभिचारात् सत्तयैव पदार्थात्मभूतया न क्रियान्तरेण व्यभिचारिणा यदि नञो योगः कल्प्यते, तदा असन्नित्यत्रापि नञ्समासे सत्ताया उत्तरपदनिबन्धनायाः सम्बन्धि सत्तान्तरं नञा प्रत्याख्यमानं न कल्पनीयमापतति। चैवं सत्ताभेदः प्रतीयते, एकस्या एवात्र निषिध्यमानायाः सत्ताया अवगमात् ॥२५३॥

अत्रैवापरं दोषमाह—

क्त्वान्ते च तुमुनन्ते च नञ्समासे न दृश्यते।
विशेषणविशेष्यत्वं नञा (नञः) सत्ताभिधायिना ॥२५४॥

अकृत्वा अकर्तुमित्यत्राख्यातेनेव कृत्वसुजादिसम्बन्धयोग्यतया साध्यस्यैवार्थस्य प्रधानत्वेनाख्यायमानस्यासन्नित्येवमर्थेन नञा करोतेरभिसम्बन्धोऽवच्छेद्यावच्छेदक-भावो नोपपद्यते। न हि सत्तां निषेधता नञा करोतेः सम्बन्धो युज्यते, प्रतिषेध्येनैव भवेदिति कथमभिसम्बन्धः।

---

अस्यार्थः—यदि पदार्थात्मभूतयाव्यभिचारिण्यासत्तयैव सर्वत्राब्राह्मणापाचकादौ नञोऽ-भिसम्बन्धः कल्प्यते, तदाऽसन्निति अस्मिन् समासेऽन्या सत्ता सत्पदार्थात्मभूता नञा निषेध्यत्वेन प्रत्याख्यमाना परिकल्प्यतामिति।

अयं भावः—"अस्तिर्भवन्तीपरः सर्वत्र प्रयुज्यते" इति भाष्यदर्शनेन सर्वपदार्थानां सत्ता-योगस्याव्यभिचारात् सत्तयैव पदार्थात्मभूतया, न तु क्रियान्तरेण व्यभिचारिणा पच्यादिना यदि नञो योगः कल्प्यते, तदाऽसन्नित्यत्रापि नञ्समासे सत्ताया उत्तरपदनिबन्धनायाः = असदिति समासे उत्तरपदभूतसत्पदप्रवृत्तिनिमित्तभूतायाः सम्बन्धिसत्तान्तरं नञा निषेध्यत्वेन प्रत्याख्यमानं कल्पनीयमापतति। किन्तु न चैवं सत्ताभेदः = सत्ताद्वयं प्रतीयते, एकस्या एवात्र = असन्नित्यत्र निषिध्यमानाया सत्ताया अवगमादिति ॥ २५३ ॥

अत्रैव = सत्तयैव पदार्थात्मभूतया नञो योगो न क्रियान्तरेण इत्यत्रैव पक्षे अपरं दोषमाह— क्तान्ते च तुमुनन्ते चेति।

अस्यार्थः—क्तान्ते च अकृत्वा इत्यादौ, तुमुन्नन्ते च अकर्तुमित्यादौ नञ्समासे नञः सत्ताभिधायिना सह विशेषणविशेष्यत्वम् अवच्छेद्यावच्छेदकभावेन दृश्यते, किन्तु करोत्यर्थेनैव तद् दृश्यत इति।

अयं भावः—'न करोति' इत्यादावाख्यातेनेव अकृत्वा अकर्तुमित्यत्र साध्यस्यैवार्थस्य प्रधानत्वेनाख्यायमानस्य कृत्वसुजादिसम्बन्धयोग्यतया असन्नित्येवमर्थेन = असत्तार्थकेन नञा करोतेरभिसम्बन्धोऽवच्छेद्यावच्छेदकभावरूपो नोपपद्यते। नहि सत्तां निषेधता नञा करोतेः सम्बन्धो युज्यते, प्रतिषेध्येनैव प्रतिषेधस्य सम्बन्धात्। करोतेश्च सत्तात्मकत्वाभावान्नात्र = करोतौ प्रतिषेध्यत्वं भवेदिति कथमभिसम्बन्धः ?

तस्मादसत्तावाचित्वे नञः उभयत्राप्यत्र नोपपत्तिरिति निषेधमात्रवचनोऽत्र नञ् ।

तथा चासन्नित्यत्रोत्तरपदार्थभूतां सत्तां निषेधतीति सम्बन्धोपपत्तिः । किंत्व-ब्राह्मणादावनुपपत्तिः, ब्राह्मणार्थस्य सतो निषेद्धुमशक्यत्वात् । अत्रापि सन्नन्तः करोत्यर्थश्च भावात्मकः कथं निषेद्धुं शक्यते ?

एवं तर्हि स्वभावतो निवृत्तस्यार्थस्य द्योतको नञ् वाक्य इव वृत्तौ प्रयुज्यते, तत्रापि द्वयी गतिः । क्रियायोगमन्तरेण पदार्थस्य केवलस्यानुपपत्तेर्विशिष्टक्रियाश्रयो वार्थात्मा स्वभावतो निवृत्तो द्योत्यताम्, क्रियासामान्याश्रयो वा ।

पूर्वत्र कल्पे सामर्थ्याभावाद् वृत्तिर्नास्ति । सति वा सामर्थ्ये पक्षत्रयानुपपत्तिरित्युक्तम् ।

द्वितीये पक्षे सत्तालक्षणस्य क्रियासामान्यस्य नञ्द्योत्यस्य सामान्यवाचिनैवोत्तरपदेन सम्बन्धेऽनवस्थोक्ता । विशेषवाचिना त्वसम्बन्ध इति द्योतकत्वमत्र नोपपद्यते । द्योतकत्वे हि द्योत्यार्थनिष्ठत्वात् सत्यपि सम्बन्धे उत्तरपदार्थप्राधान्यमेवैकं स्यात् ।

---

तस्मादसत्तावाचित्वे नञः उभयत्राप्यत्र = अकृत्वा अकर्तुमित्यत्र प्रागुक्तरीत्या नोपपत्तिरिति निषेधमात्रवचनोऽत्र नञ् ।

तथा चासन्नित्यत्र उत्तरपदार्थभूतां सत्तां नञ् निषेधतीति न द्वितीयसत्तापरिकल्पना आपतति । नञोऽसत्तावाचित्वे तु नञर्थस्य सत्ता उत्तरपदेन सम्बन्धे सा आपतेत् । 'अकृत्वा' इत्यादौ तु करोतिक्रियामेव निषेधतीति नञः करोतिक्रियया सम्बन्धोपपत्तिः । किन्तु अब्राह्मणादौ समासानुपपत्तिः, ब्राह्मणार्थस्य सतो निषेद्धुमशक्यत्वात् । अत्रापि = नञो निषेधमात्रवचनत्वपक्षेऽपि सन्नर्थः करोत्यर्थश्च भावात्मकः कथं निषेद्धुं शक्यते ?

एवं तर्हि स्वभावतो निवृत्तस्यार्थस्य द्योतको नञ् विग्रहवाक्य इव वृत्तौ प्रयुज्यते, तत्रापि द्वयी गतिः । क्रियायोगमन्तरेण पदार्थस्य केवलस्यानुपपत्तेर्विशिष्टक्रियाश्रयो वा = क्रियाविशेषणाश्रयो वा अर्थात्मा स्वभावतो निवृत्तो द्योत्यताम्, क्रियासामान्याश्रयो वा ।

पूर्वत्र कल्पे क्रियया सह सम्बन्धाभावेन सामर्थ्याभावाद् वृत्तिर्नास्ति । क्रियायोगमाश्रित्य सति वा सामर्थ्ये उत्तरपदार्थप्राधान्यमेवैकं स्यादिति पक्षत्रयानुपपत्तिरित्युक्तं प्राक् ।

द्वितीये पक्षे सत्तालक्षणस्य क्रियासामान्यस्य नञ्द्योत्यस्य = नञ्द्योत्यसत्ताघटकस्य सत्तासामान्यवाचिनैवोत्तरपदेन सम्बन्धेऽनवस्थोक्ता । अत्र पक्षे क्रियाविशेषवाचिना तु पाचकादिना तद्घटकपच्यादिना वा नञोऽसम्बन्ध इति नञो द्योतकत्वमत्र = द्वितीयपक्षे नोपपद्यते । द्योतकत्वे हि द्योतकस्य द्योत्यार्थनिष्ठत्वात् सत्यपि नञः क्रियाविशेषसम्बन्धे उत्तरपदार्थप्राधान्यमेवैकं स्यात् । इतरत् पक्षद्वयं तु न स्यादित्युक्तं प्राक्, त्रिपक्षी नोपपद्यत इति ।

तस्माद् वाचकत्वमभ्युपेयम् । तथा च नञः स्वतन्त्रोऽर्थ इति यथायोगं तस्य गुणप्रधानभावोपपत्तौ पक्षत्रयविचारः ॥ २५४ ॥

तत्रासत्तावचनो नञिति, यथा द्वितीया सत्ता नापतति, यथा चाकृत्वेत्यादौ संबन्धो युज्यते, तथोपपादयति—

**क्रियायाः साधनाधारसामान्ये नञ् व्यवस्थितः ।**
**ततो विशिष्टैराधारैर्युज्यते ब्राह्मणादिभिः ॥२५५॥**

सामान्याभिधानेऽपि नञोऽसत्तावचनत्वेन प्रस्तावात् सत्तालक्षणात्र क्रिया।

तथा ह्यभावात्मको नञोऽर्थो भावस्य सत्ताया निषेधरूपः, तस्याः साधनमकर्मकत्वात् कर्तृशक्तिः । निराश्रयायाः साधनभावानुपपत्तेः सामर्थ्यलभ्यस्तदाधार आश्रयोऽनाश्रितविशेषः सामान्यमस्तीत्येवंरूपोऽत्र निर्दिष्टः । तत्र वाचकत्वेन नञ् व्यवस्थितः प्रवृत्तः ।

---

तस्माद् नञो निषेधवाचकत्वमभ्युपेयम् । तथा च नञो निषेधरूपः स्वतन्त्रोऽर्थ इति यथायोगम् = यथासम्भवं तस्य नञर्थस्य गुणप्रधानभावोपपत्तौ भाष्ये पक्षत्रयविचारो युक्त इति ॥ २५४ ॥

तत्र असत्त्ववचनः = सत्तानिषेधवाची नञ् इति पक्षेऽसन्नित्यत्र यथा द्वितीया सत्ता नापतति, अत्रैव पक्षे यथा च अकृत्वाऽकर्तुमित्यादौ नञः करोतिना सम्बन्धो युज्यते, तथोपपादयति—क्रियायाः साधनाधारसामान्ये इति ।

अस्यार्थः—अभावो भावनिषेधः, भावः सत्ता सर्वभावाव्यभिचारिणी । तथा च सत्तानिषेधरूपे नञर्थे प्रतियोगिभूतायाः सत्तारूपायाः क्रियायाः साधनाधारसामान्ये, साधनं कर्तृशक्तिः, सत्ता क्रियाया अकर्मकत्वात् । तस्या आधारसामान्ये वाचकतया नञ् व्यवस्थितः । सत्तानिषेधरूपस्याभावस्याधिकरणात्मकत्वात् ।

ततः—नञः सत्ता क्रियाकर्तृशक्त्याधारसामान्यवाचित्वात्, विशिष्टैराधारैः = सत्ता क्रिया कर्तृशक्त्याधारविशेषैर्ब्राह्मणादिभिर्नञर्थो युज्यते, सामान्यविशेषयोरभेदान्वयस्यौचित्याद् ।

एवं न 'पाचकः' इत्यादौ 'निर्विशेषं न सामान्यम्' इति न्यायेन सत्तात्मन्येव पच्यादिक्रियाविशेषे नञर्थस्य निषेधस्यान्वयः । एवम् 'अकृत्वा अकर्तुम्' इत्यादावपि करोतिना = सत्तात्मनैव युज्यते नञर्थः । कृभ्वस्तयः क्रियासामान्यवचना इत्यभ्युपगमेन करोतेरपि अस्तेरिव क्रियासामान्यवचनत्वादिति ।

अयं भावः—नञो निषेधसामान्याभिधानेऽपि प्रस्तावात् = प्रकरणात् सत्ता निषेधरूपनिषेधविशेषात्मका सत्तावचनत्वेन अत्र = 'अब्राह्मणः' इत्यादौ सत्तालक्षणया क्रिया निषेध्या ।

तथा ह्यभावात्मको नञोऽर्थो भावपदवाच्यायाः सत्ताया निषेधरूपः । तस्याः = निषेध्यायाः सत्तायाः अकर्मकत्वात् साधनं कर्तृशक्तिः । निराश्रयायाः कर्तृशक्तेः साधनभावानुपपत्तेः सामर्थ्यलभ्यः = साधनभावानुपपत्तिरूपार्थापत्तिलभ्यः, तदाधारः आश्रयोऽनाश्रितविशेषः सामान्यरूपः अस्तीत्येवंरूपः = अस्तीत्येवं प्रतीयमानो नञर्थः । अत्र कारिकायां निर्दिष्टः, तत्र = तादृशेऽर्थे नञ्वाचकत्वेन व्यवस्थितः प्रवृत्तः ।

किं विद्यमानोऽर्थोऽस्तीत्येवंरूपो नञो वाच्यः। नेति ब्रूमः।

कथं तर्हि 'क्रियायाः साधनाधारसामान्ये नञ् व्यवस्थितः' इत्युच्यते ?

स्वार्थमभावात्मकं तत्र निवेशयतीत्येवमेतदुच्यते। ततश्चाभावोपरक्तमस्तिक्रियासाधनाधारसामान्यं वृत्तिविषये नञ् वाच्यमिति नास्तीत्येवंरूपो नञोऽर्थः।

तत्र किं नास्तीति विशेषाकाङ्क्षा तदुत्तरपदैः पूर्यते।

तथा च ततः सामान्यावस्थानाद्धेतोर्विलक्षणैः सत्ताविशेषसाधनाधारविशेषवचनैर्ब्राह्मणादिशब्दैः सम्बध्यते नञिति तदर्थयोः सामान्यविशेषभावेन विशेषणविशेष्यभावोपपत्तिः। सामान्यरूपं ह्यविद्यमानं विशिष्टैरविद्यमानैर्युज्यते, गोत्वं शाबलेयादिभिरिव। तत्र ब्राह्मणस्यासत्त्वमिति यदा कामचाराद् विशेषणविशेष्ययोर्विवक्षा, तदा पूर्वपदार्थप्रधानता। 'असन् ब्राह्मणः' इति तु सामानाधिकरण्ये स्वपदार्थविश्रान्तावुत्तरपदार्थप्रधानता। असद् ब्राह्मण्यमस्येत्येवमन्यार्थगामित्वे वर्तिपदार्थयोरन्यपदार्थप्राधान्योपपत्तिः।

एवं विशेषे सामान्यस्याव्यभिचारात् पाचकादौ पच्यादिक्रियाविशेषानुगतसत्तात्मकक्रियासामान्याश्रयपक्षभेदोपपत्तिः।

---

किं विद्यमानोऽर्थोऽस्तीत्येवंरूपः=अस्तीत्येवंरूपेण प्रतीयमानो नञो वाच्यः। नेति ब्रूमः।

कथं तर्हि—"क्रियायाः साधनाधारसामान्ये नञ् व्यवस्थितः।" इत्युच्यते ?

स्वार्थमभावात्मकं तत्र=साधनाधारसामान्ये नञ्विशेषयतीत्येवमेतदुच्यते। ततश्चाभावोपरक्तम्=अभावविशेष्यतापन्नम्, अस्तिक्रियासाधनाधारसामान्यं वृत्तिविषये नञ्वाच्यमिति नास्ति इत्येवंरूपः=नास्ति इत्येवंरूपेण प्रतीयमानः नञोऽर्थः।

तत्र किं तद्वस्तु यन्नास्ति इत्येवं प्रतीयत इति आधारविशेषाकाङ्क्षायां तदुत्तरपदैः=नञ्पदोत्तरपदैर्ब्राह्मणादिभिः पूर्यते।

तथा च ततः नञर्थस्य आधारसामान्यरूपेणावस्थानाद् हेतोः, विशिष्टैः विलक्षणैः सत्ताविशेषसाधनाधारविशेषवचनैर्ब्राह्मणादिशब्दैर्नञ् सम्बध्यत इति तदर्थयोः=नञर्थोत्तरपदार्थयोः सामान्यविशेषभावेन विशेषणविशेष्यभावोपपत्तिः। अविद्यमानं हि=असत्तावद् हि अविद्यमानैर्विशिष्टैः=विशेषैः युज्यते, गोत्वं सामान्यम्, शाबलेयादिभिरिव विशेषैः। शबलायाश्चित्रवर्णाया गोरपत्यं शाबलेयो गौरिति। तत्र ब्राह्मणस्यासत्त्वमिति यदा कामचाराद् विशेषणविशेष्ययोर्विवक्षा, तदा पूर्वपदार्थप्रधानता। 'असन् ब्राह्मणः इति तु सामानाधिकरण्ये स्वस्वपदार्थविश्रान्तावुत्तरपदार्थप्रधानता। असद्ब्राह्मण्यमस्येत्येवं समासान्तर्वर्तिपदार्थयोरन्यपदार्थगामित्वे=अन्यपदार्थविशेषणत्वे नञ्समासस्य अन्यपदार्थप्राधान्योपपत्तिः।

एवं विशेषे सामान्यस्याव्यभिचारात् पाचकादौ पच्यादिक्रिया विशेषानुगतसत्तात्मकक्रियासामान्याश्रयसम्बन्धिनः पक्षभेदस्य=पक्षत्रयस्य नञ्समासे उपपत्तिः।

एवं करोतिना सत्तात्मनैव युज्यते, न विशेषरूपेणेति विशेषे सत्तामेव समवायिनीं नञर्थोऽसत्सामान्यं निषेधयोग्यतयाकृत्वा कर्तुमित्यादावास्कन्दति।

असन्नित्यत्रापि प्रकरणाद् विशेषनिवेशिनीमेव सत्तामसत्तासामान्यं निषेध्यतयावलम्बते। अनवच्छिन्नविषयस्यासत्त्वस्य प्रयोजनाभावेनाप्रतिपाद्यत्वात्। ब्राह्मणादिरेव हि कश्चित् सन् निषेद्धमत्रोपादीयते, न सन् ब्राह्मण इति। प्रकरणात्तु विशेषावसाये ब्राह्मणादिपदप्रयोगानादरः।

तथा च ब्राह्मणादिरित्येवात्राप्यर्थ इति सामान्यविशेषयोरेवायं विशेषणविशेष्यभावः। न हि द्वयोः सामान्ययोः प्रयोगोऽस्ति, नैराकाङ्क्ष्यानुपपत्तेरिति सत्तान्तरपरिकल्पनादोषानवतारः। सर्वत्र चात्रोत्तरपदार्थसदृशप्रतिपत्तिः। अन्यत्राध्यारोपितस्य हि स्वतो निवृत्तस्य निषेधः सुवचः।

तदित्थं वाचकत्वमभ्युपगम्य सर्वमुपपद्यते ॥ २५५ ॥

द्योतकस्य तर्हि वाक्ये नञो वृत्तौ वाचकत्वं कथमुपपद्यत इति चेदाह—

**वृत्तौ यथा गताद्यर्थमुपादाय निरादयः।**
**युज्यन्ते साधनाधारैर्नञ्समासेऽपि स क्रमः ॥२५६॥**

---

एवं सत्तात्मनैव सामान्यरूपेण करोतिना सह युज्यते। नञर्थो न विशेषरूपेणेति क्रियाविशेषे समवायिनीम् = समवेताम्, सत्तामेव असतः सामान्यरूपो नञर्थः कृत्वा कर्तुमित्यादौ निषेधयोग्यतयाऽऽस्कन्दति = आक्रामति।

असन्नित्यत्रापि असत्ता सामान्यं प्रकरणाद् विशेषनिवेशिनीमेव सत्तां निषेध्यतयाऽवलम्ब्यते। अनवच्छिन्नविषयस्य = अनवधृताधारविशेषस्यासत्त्वस्य प्रयोजनाभावेनाप्रतिपाद्यत्वात्। 'न सन्' इत्यत्र हि ब्राह्मणादिरेव कश्चित् सन्निषेद्धुमुपादीयते, 'न सन् ब्राह्मणः' इति। प्रकरणात्तु विशेषावसाये = ब्राह्मणादिरूपसद्विशेषनिश्चये ब्राह्मणादिपदप्रयोगानादरः। न सन् असन् इत्येव तु प्रयोगः केवलः।

तथा च ब्राह्मणादिरित्येव अत्रापि = न सन् असन् इत्यत्र ब्राह्मणादिपदरहिते प्रयोगेऽपि अर्थ इति असत् सामान्यासद्विशेषयोरेवायं विशेषणविशेष्यभावः। नहि द्वयोः सामान्ययोः प्रयोगोऽस्ति, तथा सति नैराकाङ्क्ष्यानुपपत्तेरिति असन्नित्यत्र प्रागुक्तसत्तान्तरपरिकल्पनादोषानवतारः। सर्वत्र चात्र = नञ्समासे उत्तरपदार्थसदृशप्रतिपत्तिरपि, निषेधवत्सादृश्यस्यापि नञर्थत्वात्। अन्यत्र क्षत्रियादौ अध्यारोपितस्य हि ब्राह्मणत्वादेः स्वतोनिवृत्तस्य निषेधः सुवचः सतो निषेधायोगात्।

तदित्थं नञोऽसत्तासामान्यवाचकत्वमभ्युपगम्य सर्वमुपपद्यत इति ॥ २५५ ॥

तर्हि = नञोऽसत्त्ववाचकत्वमभ्युपगम्य सर्वोपपत्तिस्वीकारे वाक्ये द्योतकस्य नञो वृत्तौ वाचकत्वं कथमुपपद्यते इत्याशङ्क्याह—वृत्तौ यथा गताद्यर्थमिति।

अस्यार्थः—यथा निर्गतः कौशाम्ब्या इति विग्रहे निष्कौशाम्बिरिति वृत्तौ निरादयो गताद्यर्थं वाचकत्वेनोपादाय वाक्येऽसत्त्वप्रधाना अपि अभिधानस्वाभाव्याद् वृत्तौ सत्त्वप्रधानाः सन्तः अपादान-

निष्कौशाम्बिः अतिखट्वः प्रपर्ण इत्यादिवृत्तिपदेषु पूर्वपदभूता निरतिप्रभृतयोऽसत्त्ववचना अपि वाक्ये दृष्टाः सत्त्वभूतार्थाभिधायिनः।

तथाहि—गतक्रान्तादिससाधनक्रियावचनाः कौशाम्ब्यादिभिरपादानादिसाधनशक्त्याधारैर्द्रव्यैः सम्बध्यन्ते। यदि चासत्त्ववचना एव स्युः, तदा तैः सत्त्ववचनैः सम्बन्धो न स्यादिति तदन्यथानुपपत्त्या निष्क्रमणादिक्रियोपसर्जने साधनशक्त्याधारे द्रव्ये वृत्तिरेषामनुमीयते। वाक्यपरिदृष्ट एव च तत्र वृत्तिरभिधानशक्तिनियमादिति नातिप्रसङ्गः। यदाह वाक्यकारः—'तदर्थगतेर्वा' इति। येनार्थेन निरादेर्भवति कौशाम्ब्यादिना सामर्थ्यम्, तदन्यथानुपपत्त्या तस्यैव प्रतीतेरित्यर्थः।

एवं यथात्र वृत्तौ पूर्वपदं पदान्तरसम्भिन्नार्थतया वाक्यपरिदृष्टं विशेषमन्तर्भावयति, तथैवात्राह्मणादाविति साम्यम्।

अत्रापि ह्युत्तरपदार्थसम्बन्धान्यथानुपपत्त्या नञोऽसत्सामान्यवाचकत्वं परिकल्प्यत इति वाचकत्वोपाया सैवानुपूर्वी॥ २५६॥

---

त्वादिशक्तिरूपसाधनाधारै कौशाम्ब्यादिभिर्युज्यन्ते, स क्रमः=प्रकारो नञ्समासेऽपि। वाक्ये क्रियान्वयिनो नञोऽव्ययत्वात् सत्त्ववाचकत्वेन द्योतकत्वम्, वृत्तौ तु द्रव्यान्वयिनो वाचकत्वमिति।

अयं भावः—कौशाम्ब्या निर्गतो निष्कौशाम्बिः, खट्वामतिक्रान्तोऽतिखट्वः प्रपतितानि पर्णानि यस्य स प्रपर्णः इत्यदिषु वृत्तिपदेषु=समासपदेषु पूर्वपदभूतानि निरतिप्रभृतयो अव्ययत्वात् सत्त्ववचना अपि वाक्ये, वृत्तौ दृष्टा द्रव्यान्वयित्वेन सत्त्वभूतार्थाभिधायिनः।

तथा हि—गतक्रान्तादिससाधनक्रियावचनाः कौशाम्ब्यादिभिरपादानशक्त्याधारैर्द्रव्यैः वृत्तौ सम्बध्यन्ते। यदि चासत्त्ववचना एव निरतिप्रभृतयो वृत्तावपि स्युः, तदा तैः सत्त्ववचनैः कौशाम्ब्यादिभिः सम्बन्धो न स्यादिति तदन्यथाऽनुपपत्त्या=सत्त्ववचनैः सह सम्बन्धाऽन्यथानुपपत्त्या निष्क्रमणादिक्रियोपसर्जने साधनशक्त्याधारे द्रव्ये एषाम्=निरतिप्रभृतीनां वृत्तौ वृत्तिरनुमीयते। वाक्यपरिदृष्ट एव चार्थे तत्र वृत्तौ निरादीनां वृत्तिरभिधाशक्तिनियमादिति नातिप्रसङ्गः।
यदाह वाक्यकार.—"तदर्थगतेर्वा" इति। येनार्थेन हेतुना कौशाम्ब्यादिना सह निरादेः सामर्थ्यं भवति, तदन्यथाऽनुपपत्त्या=सामर्थ्याऽनुपपत्त्या तस्यैवार्थस्य प्रतीतेरित्येतदर्थः।

एवं यथाऽत्र=निष्कौशाम्ब्यादौ वृत्तौ पूर्वपदं निरतिप्रभृतिकं पदान्तरसम्भिन्नार्थतया=उत्तरपदसंसृष्टार्थतया वाक्यपरिदृष्टं विशेषं क्रान्तगताद्यर्थरूपमुत्तरपदार्थेऽन्तर्भावयति, तथैव नञ् स्वार्थमसत्त्वसामान्यरूपमब्राह्मणादावन्तर्भावयतीति साम्यम्।

अत्रापि हि=नञ्समासे अपि हि उत्तरपदार्थसम्बन्धाऽन्यथाऽनुपपत्त्या नञोऽसत्सामान्यवाचकत्वं परिकल्प्यत इति वाचकत्वोपाया=नञोऽसत्सामान्यवाचकत्वेनोपेया सैवानुपूर्वी=स एव क्रमः यो निरादीनां गताद्यर्थमादाय साधनाधारैर्योगे इति॥ २५६॥

एवमप्यसत्सामान्याभिधायित्वे कथं पक्षत्रयोपपत्तिः, पूर्वोत्तरपदार्थयोर्गुणप्रधानभावानियमे सति हि त्रयः पक्षा उपपद्येरन्। स तु कथमत्रानियम इत्याह—

**तत्रासति नञो वृत्तेर्ब्राह्मणक्षत्रियादिभिः।**
**विशेषणविशेष्यत्वं कल्प्यते कुब्जखञ्जवत् ॥२५७॥**

द्वयोरपि खञ्जकुब्जशब्दयोर्गुणनिमित्तत्वाद् विशेषणविशेष्यभावं प्रत्यनियम उक्तो भाष्ये—खञ्जकुब्जः कुब्जखञ्ज इति।

एवमसत्सामान्ये नञो वाचकत्वेन वर्तनात् तद्विशेषवचनैर्ब्राह्मणादिभिर्यथारुचि विशेषणविशेष्यत्वं गुणप्रधानभावः पर्यायेण घटते ॥ २५७ ॥

तथा चाब्राह्मणोऽक्षत्रिय इत्यादौ किं सिद्धमित्याह—

**कामचारे च सत्येवमसतः स्यात् प्रधानता।**
**गुणत्वमितरेषां च तेषां वा स्यात् प्रधानता ॥२५८॥**

---

नन्वेवं नञोऽसत्सामान्याभिधायित्वेऽपि कथं पक्षत्रयोपपत्तिः, पूर्वोत्तरपदार्थयोर्गुणप्रधानभावानियमे सति हि त्रयः पक्षा उपपद्येरन्, स तु कथमत्रानियम इत्याह—तत्रासति नञ् इति।

अस्यार्थः—तत्र अब्राह्मण इत्यादौ नञ्समासे, नञोऽसति, असत्सामान्ये वृत्तेर्ब्राह्मणक्षत्रियादिभिरुत्तरपदैः साकं तस्य कामचारेण विशेषणविशेष्यत्वं कुब्जखञ्जवत् कल्प्यते।

अत्र चायं फलितार्थः—यथा कुब्जखञ्जे पूर्वोत्तरपदयोर्गुणनिमत्तत्वाद् विशेषणविशेष्यभावं प्रत्यनियमः, खञ्जकुब्जः, कुब्जखञ्ज इति। तथाऽब्राह्मण इत्यादौ नञ्समासे पूर्वोत्तरपदार्थयोर्विशेषणविशेष्यभावं प्रत्यनियमः, असन् ब्राह्मणः, ब्राह्मणः असन् इति।

अयं भावः—द्वयोरपि खञ्जकुब्जशब्दयोः खञ्जत्व (पादविकलत्व) कुब्जत्वरूपगुणप्रवृत्तिनिमित्तकत्वाद् विशेषणविशेष्यभावं प्रत्यनियम उक्तो भाष्ये—खञ्जकुब्जः, कुब्जखञ्ज इति।

एवं असत्सामान्ये नञो वाचकत्वेन वर्तमानात् असद्विशेषवचनैर्ब्राह्मणादिभिर्यथारुचिविशेषणविशेष्यत्वं गुणप्रधानभावो नञः पर्यायेण घटते इति ॥ २५७ ॥

तथा चाब्राह्मणोऽक्षत्रिय इत्यादौ किं सिद्धमित्याह—कामचारे चेति।

अस्यार्थः—एवं प्रागुक्तरीत्या, अब्राह्मण इत्यादौ नञ्समासे पूर्वोत्तरपदार्थयोर्विशेष्यविशेषणभावं प्रति कामचारे च सति यदाऽसतो नञर्थस्य प्रधानता स्यात्, तदा इतरेषां ब्राह्मणादीनां च गुणत्वम्, वा अथवा, यदा तेषामितरेषां प्रधानता स्यात्, तदाऽसतो गुणत्वमिति शेषः। 'ब्राह्मणः असन् इति, असन् ब्राह्मणः' इति।

'सिद्धं तु विशेषणविशेष्ययोर्यथेष्टत्वात्' इति खञ्जकुब्जादिवदनियमे यदासत्सामान्यं नञर्थः प्राधान्येन विशेष्यतया विवक्ष्यते, तदा पूर्वपदार्थप्रधानता इतरेषामुत्तरपदार्थानां ब्राह्मणादीनां गुणत्वविवक्षायां सत्याम्। यदा तु तेषामुत्तरपदार्थानां प्राधान्यं विवक्ष्यते, तदोत्तरपदार्थप्रधानो नञ्समासः।

अत एव च पूर्वोत्तरपदयोरभिसम्बन्धेऽर्थान्तरविषये विवक्षिते अन्यपदार्थप्राधान्यमप्युक्तं भवति। वाक्ये तु निषेध्यनिष्ठतया निषेधस्यानवगतेर्न स्वतन्त्रो नञः पदार्थ इत्यवाचकत्वाद् द्योतकत्वम्।

अतश्च गुणप्रधानभावे विवक्षानियमाभावात् तत्र पक्षत्रयानुत्थानम्।

अत एव चादिवदलिङ्गासङ्ख्यत्वमव्ययधर्मो नञर्थस्य वाक्ये, न तु वृत्तौ, सत्त्वभूतार्थवाचित्वात्॥ २५८॥

इत्थं पक्षत्रयोपपत्तौ समर्थितायां प्रथमं भाष्य उपक्षिप्तमुत्तरपदार्थप्राधान्यं परीक्ष्यम्। तथाहि—विरोधादसता कथं ब्राह्मणादिर्विशेष्येतेत्यत आह—

**प्राधान्येनाश्रिताः पूर्वं श्रुतेः सामान्यवृत्तयः।**
**विशेष एव प्रक्रान्ता ब्राह्मणक्षत्रियादयः॥२५९॥**

---

अयं भावः—"सिद्धं तु विशेषणविशेष्ययोर्यथेष्टत्वाद्" इति भाष्योक्त्याऽब्राह्मण इत्यादौ नञ्समासे विशेषणविशेष्यभावस्य खञ्जकुब्जादिवद् अनियमे यदाऽसत्सामान्यं नञर्थः प्राधान्येन विशेष्यतया विवक्ष्यते, तदा इतरेषामुत्तरपदार्थानां ब्राह्मणादीनां गुणत्वविवक्षायां सत्यां पूर्वपदार्थप्रधानता। यदा तु तेषामुत्तरपदार्थानां ब्राह्मणादीनां प्राधान्यं विवक्ष्यते, तदोत्तरपदार्थप्रधानो नञ्समासः।

अत एव च—नञ्समासे विशेषणविशेष्यभावविषये कामचारादेव च पूर्वोत्तरपदयोरर्थान्तरविषयेऽभिसम्बन्धे विवक्षितेऽन्यपदार्थप्राधान्यमप्युक्तं भवति। वाक्ये तु न स्वतन्त्रो नञः पदार्थः, तत्र निषेधस्य निषेध्यनिष्ठतयाऽनवगतेरिति तत्र अवाचकत्वाद् द्योतकत्वम्।

अतश्च वाक्ये गुणप्रधानभावे विवक्षाया अनियमाभावात् तत्र पक्षत्रयानुत्थानम्।

अत एव वाक्ये नञर्थस्यालिङ्गासंख्यत्वमव्ययधर्मश्चादिवत्, न तु वृत्तौ—समासे सत्त्ववाचकोत्तरपदसामानाधिकरण्येन सत्त्वभूतार्थवचित्वादिति॥ २५८॥

इत्थं नञ्समासे पक्षत्रयोपपत्तौ समर्थितायां प्रथमं भाष्य उपक्षिप्तमुत्तरपदार्थप्राधान्यं प्रथमं परीक्ष्यम्। तथा हि—अब्राह्मण इत्यादौ असता पूर्वपदार्थेन नञर्थेन सममुत्तरपदार्थो ब्राह्मणादिः कथं विशेष्येत? भावाभावयोर्विरोधाद्, अविरोधे हि विशेषणविशेष्यभाव इत्यत आह—प्राधान्येनाश्रिता इति।

अस्यार्थः—वृत्तेः पूर्वं न ब्राह्मण इत्यादौ वाक्ये नञर्थनिरूपितेन प्राधान्येनाश्रिताः, भावेऽभावे च श्रुतेः, ब्राह्मणादिशब्दस्य साम्यात्, सामान्यवृत्तयो भावाभावसाधारणार्थवाचका ब्राह्मणक्षत्रियादयः शब्दा विशेष एव, असद्ब्राह्मणादिरूपेऽर्थे प्रक्रान्ताः समासस्य उपक्रम एव प्रतीताः।

सतो निषेद्धुमशक्यत्वान्निवृत्तिविशिष्ट एव विशिष्टेऽर्थे ब्राह्मणादयः शक्ता वाचकत्वेनात्रोपक्रम एव प्रवृत्ताः ।

यदा तु तेषां भावरूपेऽप्यर्थे श्रुतेः शब्दस्य रूपमीदृशमेव, तदासौ स्वार्थरूपा निवृत्तिर्द्योत्यते नञा । नञ्पदप्रयोगे हि स विशेषः प्रकाशत इति विरोधाभावात् कल्पते विशेषणविशेष्यभावः ॥ २५९ ॥

'प्राधान्येनाश्रिता' ( २५९ ) इत्युत्तरपदार्थप्राधान्यपक्षमवलम्बते । एतदेव निदर्शनेन व्युत्पादयति—

**यथा गौरादिभिस्तेषामवच्छेदो विधीयते ।**
**असताप्यनभिव्यक्तं तादात्म्यं व्यज्यते तथा ॥२६०॥**

गौरः शुक्लः कृष्णो ब्राह्मणः इत्यादौ यथा गौरादिभिर्विशेषणैरवच्छिद्यन्ते सामान्यभूता ब्राह्मणादयः, तथाऽसद्विशेषवचनाः श्रुतिसारूप्यादनवगतविशेषा नञा विशेष्यन्ते ॥ २६० ॥

---

अत्रायं निष्कर्षः—इह ब्राह्मणादिपदादुच्चरिताद् भावाऽभावसाधारणोऽर्थः प्रतीयते । तथा च 'अब्राह्मणः' इत्यादौ नञोऽसत्सामान्यमर्थः, ब्राह्मणपदस्य चासद्विशेषो ब्राह्मणादिरर्थः, सामान्यविशेष्ययोश्चाभेदान्वयोऽविरुद्धो दृष्ट इति ।

अयं भावः—सतो निषेद्धुमशक्यत्वाद् निवृत्तिविशिष्ट एव विशिष्टेऽर्थे=ब्राह्मणादि-रूपेऽर्थविशेषे ब्राह्मणादयः शब्दाः शक्ता इति अत्र=अब्राह्मण इत्यादौ उपक्रम एव वाच-कत्वेन प्रवृत्ताः ।

यदा तु तेषां=ब्राह्मणादिशब्दानाम् अभावे इव भावरूपेऽप्यर्थे श्रुतेः—ब्राह्मणादिशब्दरूपमी-दृशमेव=समानानुपूर्वीकमेव, तदाऽसौ ब्राह्मणादिपदस्य स्वार्थरूपा निवृत्तिर्नञा द्योत्यते । नञ्पद-प्रयोगे हि स विशेषः=निवृत्तिविशिष्टब्राह्मणादिरूपो विशेषः प्रकाशत इति सामान्यविशेषयोः पूर्वोत्तरपदार्थयोरभेदान्वये विरोधाभावात् कल्प्यते 'अब्राह्मणः' इत्यादौ पूर्वोत्तरपदार्थयो विशेषण-विशेष्यभाव इति ॥ २५९ ॥

प्राधान्येनाश्रिता इति पूर्वकारिकायामुक्तं वाक्यमुत्तरपदार्थप्राधान्यपक्षमवलम्बते । एतदेव नञ्समासे उत्तरपदार्थप्राधान्यमेव निदर्शनेन=दृष्टान्तेन व्युत्पादयति—यथा गौरादिभिरिति ।

अस्यार्थः—यथा गौरादिभिर्विशेषणैस्तेषां ब्राह्मणादीनामवच्छेदो व्यावृत्तिर्विधीयते वाक्ये वृत्तौ च, तथा असद्विशेषे ब्राह्मणक्षत्रियादिरूपेऽर्थेऽनभिव्यक्तं असता असत्सामान्येन सह तादात्म्यमपि नञाभिव्यज्यत इति ।

अयं भावः—गौरः शुक्लः कृष्णो 'ब्राह्मणः' इत्यादौ यथा गौरादिभिर्विशेषणैः सामान्यभूता ब्राह्मणादयः अवच्छिद्यन्ते=इतरस्माद् व्यावर्त्यन्ते, तथा असद्विशेषवचना ब्राह्मणादयः शब्दाः श्रुतिसारूप्यात्=भावाभावयोः शब्दानुपूर्वीसाम्यात्, अनवगतविशेषाः=अज्ञातार्थविशेषा नञा विशेषार्थद्योतकेन विशेष्यन्ते=विशेषार्थपरतया व्यवस्थाप्यन्त इति ॥ २६० ॥

ननु गौरादयो विद्यमानार्थगतमेव विशेषमादधाना युक्तं यद्विशेषणं स्युः। नञा उत्तरपदार्थोन्मूलकेन कथं विशेषणविशेष्यभावः ? नञ्प्रयोगे ह्युत्तरपदार्थोऽसन्नित्यवधार्यते। तथा चासत्त्वादुत्तरपदार्थस्याप्रयोग एव ब्राह्मणादिशब्दानां प्राप्नोतीत्याशङ्क्याह—

**यथा सत्ताभिधानाय सन्नर्थः परिकल्प्यते।**
**तथा सत्ताभिधानाय निरुपाख्यो विकल्प्यते ॥२६१॥**

इह पदादुच्चरिताद् भावाभावसाधारणोऽर्थः प्रतीयते। न चासौ तथाविधो बाह्यः, तस्य भावैकनिष्ठत्वात्। स एव चेच्छब्दैरुच्यते, तदा तस्य सत्ताऽव्यभिचारात् तां प्रत्याकाङ्क्षानुपपत्तेः सन् ब्राह्मण इति नावकल्पेत विशेषणविशेष्यभावः। अवकल्पते च।

तस्मादुपचारसत्तारूढोऽर्थः पदवाच्यत्वेन कल्प्यते सामान्येन भावाभावसम्बन्धक्षम इत्यसन् ब्राह्मण इत्यत्रापि परिकल्पितार्थनिष्ठत्वेन नञ्प्रयोगो न विरुध्यते। बुद्धिर्ह्यस्य बहिः सदसत्त्वमनपेक्ष्याकारं निरूपयन्ती विरोध्यविरोधिविशेषणसमन्वयक्षमं तं पदार्थीकरोतीति प्रागेव निर्णीतम्।

---

ननु गौरादयो विद्यमानार्थगतमेव विशेषमितरव्यावृत्तिरूपमादधाना विशेष्ये युक्तं यद् विशेषणं स्युः। नञा तु निषेधार्थकतयोत्तरपदार्थोन्मूलकेन सह कथमुत्तरपदस्य विशेषणविशेष्यभावः ? नञ्प्रयोगे हि उत्तरपदार्थोऽसन्नित्यवधार्यते। तथा चोत्तरपदार्थस्यासत्त्वादप्रयोग एव ब्राह्मणादिशब्दानां प्राप्नोति इत्याशङ्क्याह—यथा सत्ताभिधानायेति।

अस्यार्थः—इह पदादुच्चरिताद् भावाभावसाधारण आरोपितसत्तावानर्थो बौद्धः प्रतीयत इति स एव ब्राह्मणादिपदवाच्यः। तत्रैवं सति यथा सत्ताभिधानाय अर्थो ब्राह्मणादिः बुद्धया सन् परिकल्प्यते, तथाऽसत्ताभिधानायार्थो निरुपाख्य उपाख्यायते—इति उपाख्या स्वरूपम्= तद्रहितो निःस्वरूपः, असन् बुद्धया विकल्प्यते विशेषेण कल्प्यते, विकल्पवृत्तिगोचरः क्रियत इति वा।

अयं भावः—इह पदादुच्चरिताद् भावाभावसाधारणोऽर्थः प्रतीयते। न चासौ तथाविधः=भावभावसाधारणो बाह्यः, बाह्यस्य भावैकनिष्ठत्वात्, भावाभावसाधारणत्वायोगात्। स एव चेत्=भावैकनिष्ठो बाह्य एव चेत् शब्दैरुच्यते, तदा तस्य सत्ताऽव्यभिचारात् तां प्रति तस्य आकाङ्क्षानुपपत्तेः सन् ब्राह्मण इति विशेषणविशेष्यभावो नावकल्पेत, 'सम्भवव्यभिचाराभ्यां स्याद् विशेषणमर्थवत्' इत्यभ्युपगमात्। अवकल्पते च सः।

तस्मादुपचारसत्तारूढः=आरोपितसत्तावान् अर्थः पदवाच्यत्वेन कल्प्यते सामान्येन भावाभावसम्बन्धक्षमः=सत्त्वासत्त्वसम्बन्धयोग्य इति 'असन् ब्राह्मणः' इत्यत्रापि नञ्प्रयोगः परिकल्पितार्थनिष्ठत्वेन न विरुध्यते, परिकल्पितार्थस्यासत्त्वात्। अस्य=पदवाच्यस्यार्थस्य बौद्धस्य शब्दजन्या बुद्धिर्हि बहिः सदसत्त्वमनपेक्ष्यशाब्दबुद्धिगोचरं तत्तदाकारं सन्तमसन्तं वा निरूपयन्ती सदसत्त्वादिरूपविरोध्यविरोधिविशेषणसमन्वयक्षमं तम्=बौद्धमर्थं पदार्थीकरोति=बाह्ये शक्तिग्रहेणापदार्थमपि बौद्धबाह्ययोरर्थयोस्तादात्म्याध्यासेन पदार्थं पदाभिधं करोतीति प्रागेव निर्णीतम्।

तत्र यथा नीलोत्पलमिति बुद्ध्या भागभेदकल्पनया सामान्यात्मना वस्तु निरूपितं नीलविशेषणेन सम्बध्यते, तथा भावाभावसाधारण्येन बुद्ध्या गृहीतस्य निवृत्तिर्विशेषणं युज्यते। न ह्युत्पलं नाम किञ्चित् सामान्यं जगत्यस्ति वस्तु, यन्नील-सम्बन्धाद् विशेषमाश्रयेत। एकमेव हि तदपि निर्भागं नीलोत्पलमिति बुद्ध्यैव भागभेदोपपत्तिः।

एवमिहाप्यब्राह्मण इति निर्विषयस्य प्रतिषेधस्याप्रवृत्तेः सत्ता निषेध्यत्वेनोप-चर्यते। बुद्धिस्थायाश्च सत्ताया बाह्यत्वेनारोपाद् बाह्यसत्ताविषयः प्रतिषेधोऽवतिष्ठते।

तेनैतदचोद्यं बुद्धिप्रतिभासस्यापि स्वेनात्मना सत्ता कथं निषेध्या इति ॥२६१॥

एवं निवृत्तपदार्थकस्यापि ब्राह्मणशब्दस्य प्रयोग उपपादिते तत्सदृशाधिकरण-प्रतिपत्तिं नञ्समासे प्रतिपादयितुमाह—

**क्षत्रियादौ पदं कृत्वा बुद्धिः सत्तान्तराश्रया।**
**जात्या भिन्नां ततः सत्तां प्रसक्तामपकर्षति ॥२६२॥**

---

तत्र यथा नीलोत्पलमिति समासे बुद्ध्या पूर्वपदोत्तरपदरूपतत्तदर्थरूपभागभेदकल्पनया सामान्यात्मना निरूपितम् = गृहीतम् उत्पलरूपं वस्तु नीलरूपेण विशेषणेन संबध्यते, तथा भावाभावसाधारण्येन बुद्ध्या गृहीतस्य पदवाच्यस्यार्थस्य बौद्धस्य आरोपितसत्तावतो नञर्थरूपा निवृत्तिर्विशेषणं युज्यते। नह्युत्पलं नाम किञ्चित् सामान्यं जगत्यस्ति वस्तु, यन्नीलं सम्बन्धाद् इतरव्यावृत्तिरूपं विशेषमाश्रयेत वाक्यस्य समासस्य चाखण्डत्वेन तत्र विशिष्टस्यैवार्थस्य प्रतीतेः। एकमेव हि तदपि निर्भागं नीलोत्पलमिति स्थिते बुद्ध्यैव कल्पितस्य भागभेदस्योपपत्तिः, न तु वास्तवोऽत्र भागभेदः।

एवमिहापि अब्राह्मण इत्यत्र सतो ब्राह्मणस्य निषेध्यत्वायोगेन निर्विषयस्य प्रतिषेधस्या-प्रवृत्तेः सत्तानिषेध्यत्वेनोपचर्यते = बुद्ध्या ब्राह्मणे आरोप्यते। बुद्धिस्थायाश्च सत्ताया बाह्यत्वेना-रोपाद् बाह्यसत्ताविषयः प्रतिषेधोऽवतिष्ठते, उभयोः सत्तयोस्तदाश्रययोश्च तादात्म्याध्यासात्।

तेनैतदचोद्यम्—बुद्धिप्रतिभासस्याप्यर्थस्य सत्ता स्वेनात्मना कथं निषेध्या इति ॥ २६१ ॥

एवं निवृत्तपदार्थकस्यापि = निषेधविषयार्थकस्यापि ब्राह्मणशब्दस्य अब्राह्मण इत्यादौ नञ्-समासे घटकतया प्रयोग उपपादिते नञ्समासे तत्सदृशाधिकरणप्रतिपत्तिम् = निषेध्यसदृशद्रव्य-प्रतिपत्तिं प्रतिपादयितुमाह—क्षत्रियादौ पदमिति।

अस्यार्थः—यदा क्षत्रिये ब्राह्मणसत्ताविषया भ्रान्तिरूपा बुद्धिर्जायते, तदा तत्र ब्राह्मण इति प्रयोगः। यदा तु तत्त्वज्ञानात् तादृशी भ्रान्तिर्निवर्तते तदा अब्राह्मण इति तत्रैव प्रयोगः। एवञ्च सत्तान्तराश्रया ब्राह्मणसत्तातोऽतिरिक्ताया = क्षत्रियसत्तातदाश्रयातद्विषयाया अब्राह्मणोऽयं क्षत्रिय इति क्षत्रिये सम्यग् बुद्धिः सा पूर्वं क्षत्रियादौ पदं कृत्वा ततो जात्याभिन्नां ब्राह्मणत्वजातिसामा-नाधिकरण्येन क्षत्रियसत्तातो। भिन्नां क्षत्रिये ब्राह्मणसादृश्यप्रयुक्तया ब्राह्मणभ्रान्त्या प्रसक्तां ब्राह्मण-सत्तामपकर्षति क्षत्रियादितो निवारयतीति।

ब्राह्मणसत्ताविषया बुद्धिर्यदा कुतश्चिद् भ्रान्तिकारणात् क्षत्रिये प्रवर्तते, तदा ब्राह्मणशब्दस्तत्र प्रयुज्यते। सोऽयं मिथ्याध्यवसायो यदा तत्त्वज्ञानान्निवर्तते, तदा नञः प्रयोग इत्ययं विषयो नञ्समासस्य।

अब्राह्मणोऽयं क्षत्रिय इति क्षत्रियसामानाधिकरण्यात् तदवगतिः। एवञ्च नञ्प्रयोगादुपजाता सम्यग्बुद्धिर्ब्राह्मणत्वैकार्थसमवायिनीं सत्तां क्षत्रिये ब्राह्मणशब्द-प्रयोगात् प्रसक्तामपकर्षति ततो निवारयति।

नायं ब्राह्मणो मिथ्या त्वेवमवसितस्तत्सदृशोऽब्राह्मणोऽयमिति, सदृशः क्षत्रियादिरेव समासार्थः सम्पद्यते न लोष्टादि, समारोपनिबन्धनस्य सादृश्यादेरभावात्। तथा चोक्तम् 'नञिव युक्तमन्यसदृशाधिकरणे तथाह्यर्थगतिः' इति ॥ २६२ ॥

इह कथं नञ् समासः अभाव इति। न ह्यत्रोत्तरपदार्थसदृशार्थसंप्रत्ययः, अपि तु निषेधः प्रतीयते भावस्योत्तरपदार्थस्य, तस्य चासतः कथं भावशब्दविषयतेत्यत आह–

**अभाव इति भावस्य प्रतिषेधे विवक्षिते।**
**सोपाख्यत्वमनाश्रित्य प्रतिषेधो न कल्पते ॥२६३॥**

---

अयं भावः—यदा ब्राह्मणसत्ताविषया बुद्धिः कुतश्चिद् भ्रान्तिकारणात् = वेषभूषाभाषा-नित्यनैमित्तिककर्मानुष्ठानादितः क्षत्रिये प्रवर्तते, तदा तत्र ब्राह्मणशब्दः प्रयुज्यते। सोऽयं मिथ्या-ध्यवसायः = सेयं भ्रान्तिरूपा बुद्धिर्यदा तत्त्वज्ञानात् क्षत्रियोऽयमित्येवंरूपान्निवर्तते, तदा न ब्राह्मण इति, अब्राह्मण इति वा नञः प्रयोग इत्ययं विषयो नञ्समासस्य।

अब्राह्मणोऽयं क्षत्रिय इति क्षत्रियपदसामानाधिकरण्यात् तदवगतिः = क्षत्रियेऽब्राह्मणत्वाव-गतिः। एवं नञ्प्रयोगाद् अब्राह्मण इत्येवंरूपादुपजाता क्षत्रियत्वप्रकारिका सम्यग् बुद्धिर्ब्राह्मणत्वेन सह एकार्थसमवायिनीं सत्तां क्षत्रिये ब्राह्मणशब्दप्रयोगात् प्रसक्तामपकर्षति क्षत्रियान्निवारयति।

नायं ब्राह्मणो मिथ्या त्वेवमवसितः = निश्चितः, तत्सदृशः = ब्राह्मणसदृशः, अब्राह्मणोऽय-मिति सदृशः क्षत्रियादिरेव नञ्समासार्थः सम्पद्यते, नाब्राह्मणत्वाविशेषेऽपि लोष्टादि, ब्राह्मणत्वसमा-रोपनिबन्धनस्य सादृश्यादेस्तत्राभावात्।

तथा चोक्तं भाष्ये–नञिव युक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिरिति।

अस्यार्थः—नञ्युक्तमिव युक्तञ्च यत् किञ्चिद् दृश्यते तत् स्वार्थान्यस्मिन् स्वार्थसदृशे चाधि-करणे द्रव्ये वर्तते। तथा हि तेनैव प्रकारेण हि अर्थस्य गतिर्ज्ञानं ततः शब्दाद् भवतीति ॥ २६२ ॥

नन्वेवं निषेधवत् सादृश्यस्यापि नञर्थत्वे इह कथं नञ्समासः, अभाव इति। न हि अत्रोत्तरपदार्थसदृशार्थसंप्रत्ययः, अपि तूत्तरपदार्थप्रतियोगिको निषेधः प्रतीयते, तस्य च = निषेधस्योत्तरपदार्थस्य चासतः कथं भावशब्दविषयतेत्यत आह—अभाव इति भावस्येति।

अस्यार्थः—अभाव इति=इत्यत्र भावस्य सत्तायाः प्रतिषेधे विवक्षिते सति वस्तुगत्या निरुपाख्येऽपि प्रतिषेधे सोपाख्यत्वं भावरूपत्वम्, अनाश्रित्य अनारोप्य, अभाव इत्यत्र भावस्य प्रतिषेधो न कल्पते न प्रसिद्ध्यति, प्रतिषेधे नञर्थे भावसादृश्याभावात्।

प्रतिषेधविषयप्रक्लृप्त्यर्थमत्रापि बुद्ध्या निरूपितमाकारमवलम्ब्य भावशब्द-प्रयोगात् तस्य श्रुतिसाम्यादसद्विषयतानवगमात् तदवगमाय नञ्प्रयोग उपपद्यते। निरुपाख्ये हि व्यामोहाद् भावतत्त्वसमारोपे तत्त्वाध्यवसायान्नञ्प्रयोग इत्यर्थः ॥ २६३ ॥

एवं चैतत्। "अथवा सर्वे इमे शब्दा गुणसमुदाये वर्तन्ते' इति दर्शनमुपक्षिप्त-मत्र भाष्ये। तदवलम्बनेनाप्याह—

**अनेकधर्मवचनैः शब्दैः सङ्घाभिधायिभिः।**
**एकदेशेषु वर्तन्ते तुल्यरूपाः स्वभावतः ॥२६४॥**

जातिगुणक्रियालक्षणो धर्मोऽत्र गुणशब्देन विवक्ष्यत इति धर्मपदेनाह। समुदायस्य शब्दात् प्रतीतेः स एव शब्दार्थो न्याय्यः।

---

तथा च प्रतिषेधे भावत्वारोपे तत्र भावसादृश्यप्रतीतिः सुलभेति।

अयं भावः—अभाव इत्यत्र प्रतिषेधविषयप्रसिद्धयर्थमत्रापि = अभाव इत्यत्रापि बाह्यार्था-भावेऽपि बुद्धया निरूपितमाकारं बौद्धमवलम्ब्य भावशब्दप्रयोगात् तस्य = भावशब्दस्य भावेऽभावे च श्रुतिसाम्यादसद्विषयकत्वानवगमात् तदवगमाय = अभावशब्दघटकभावशब्दस्यासद्विषयकत्वावग-माय अभाव इत्यत्र नञ्प्रयोग उपपद्यते। निरुपाख्ये हि प्रतिषेधे व्यामोहाद् = भ्रान्तेर्भावतत्त्व-समारोपे सति तत्त्वाध्यवसायात् = तत्र भावत्वनिश्चयात् तन्निराकरणाय नञ्प्रयोग इति कारिकाशय इति ॥ २६३ ॥

अत्र भाष्ये "एवं वैतत्, अथवा सर्वे इमे शब्दा गुणसमुदाये वर्तन्ते" इति दर्शनमुप-क्षिप्तम्।

अस्यार्थः—एतत् = अब्राह्मण इत्यत्र ब्राह्मणप्रतिषेधोपपादनम्, एवं वा क्षत्रियादौ ब्राह्मण-त्वारोपेण वा, अथवा सर्वे इमे ब्राह्मणादयः प्रतिषेधप्रतियोगिवाचकाः शब्दा गुणसमुदाये जाति-श्रुतादिधर्मसमुदाये वर्तन्ते।

तथा च जातिश्रुतादिधर्मसमुदायपरिपूर्णे ब्राह्मणे ब्राह्मणशब्दस्य मुख्या वृत्तिः। धर्मैकदेश-वति च अमुख्या इति ब्राह्मणेऽब्राह्मणे च ब्राह्मणशब्दस्य प्रयोग उपपन्नः। किञ्च मुख्यस्य ब्राह्मण-त्वस्य क्षत्रिये प्रतिषेधोऽपि उपपन्न इति।

तद्भाष्यावलम्बनेनाप्याह—अनेकधर्मवचनैरिति।

अस्यार्थः—जातिगुणक्रियालक्षणानेकधर्मवचनैस्तद्धर्मसंघाभिधायिभिः शब्दैः स्वभावतः = स्वरूपतस्तुल्यरूपाः = तुल्यानुपूर्वीका एव ब्राह्मणादयः शब्दाः, तैलमात्रायां भुक्तायां तैलं भुक्तम्, घृतमात्रायां भुक्तायां घृतं भुक्तमितिवदेकदेशेषु अवयवेष्वपि वर्तन्ते। पूर्णगुणसमुदायस्य न्यूनगुण-समुदायोऽवयव इति।

अयं भावः—जातिगुणक्रियालक्षणो धर्मोऽत्र = गुणसमुदाये वर्तन्ते इत्यत्र भाष्ये, गुणशब्देन विवक्ष्यतं इति प्रकृतकारिकायामनेकधर्मवचनैरिति धर्मपदेनाह। गुणसमुदायस्य ब्राह्मणादिशब्दात् प्रतीतेः स एव = गुणसमुदाय एव शब्दार्थो न्याय्यः।

तच्च 'तपः श्रुतं च योनिश्चेत्येतद् ब्राह्मणकारकम्' इत्युक्तम्। यस्य परिपूर्णा धर्मा जात्यादयः श्रुतादयश्च स मुख्यो ब्राह्मणः। तदभिधायी ब्राह्मणशब्दो रूढः। तेन तुल्यश्रुतिरवयवे वर्तते।

समुदायेषु हि वृत्ताः शब्दा अवयवेष्वपि वर्तन्ते। तद् यथा—'तैलं भुक्तम् घृतं भुक्तम्' इत्युक्तम्। यद्यपि च सङ्घाभिधाय्येकदेशाभिधायी चार्थभेदात् स्वभावतोऽत्यन्तभिन्न एव शब्दः, तथापि श्रुतिसाम्यादर्वाग्दर्शना भेदं नावगच्छन्तीत्यभेदमाश्रित्य समुदायावयववृत्तित्वं कथ्यते।

तथा च ब्राह्मणजातिरहिते क्षत्रिये विद्याविनयलक्षणैकदेशाश्रयो ब्राह्मणशब्दप्रयोग इति तस्यैकदेशवृत्तिता श्रुतिसारूप्यादनवगता नञ् प्रयोगादवधार्यते।

'तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव सः'

इति वा ब्राह्मणक उच्यते, यो गुणहीनो जातिमात्रेण तु ब्राह्मणः।

इत्थं चात्र गुणसमुदायविषयत्वात् पूर्वोत्तरपदयोः सामानाधिकरण्यमुपपद्यते।

अत्र हि नञा यस्यैव गुणस्य स्वाभाविकी निवृत्तिः, सैव द्योत्यत इत्यवशिष्टानां गुणानामर्थात् सद्भावोऽवगम्यते। तत्र पूर्वमुपचारसत्ताश्रयेणोक्तम्।

---

ततश्च "तपः श्रुतञ्च योनिश्चेत्येतत् ब्राह्मणकारकम्" इति उक्तम्। तत्र तपः श्रुतञ्च ब्राह्मणस्य संस्कारकम्, योनिस्तु ब्राह्मणस्य कारिका इत्यवधेयम्। यस्य परिपूर्णा धर्मा जात्यादयः श्रुतादयश्च स मुख्यो ब्राह्मणः, तदभिधायी ब्राह्मणशब्दो रूढः। तेन तुल्यश्रुतिर्ब्राह्मणादिशब्दोऽवयवे=न्यूनगुणवति वर्तते।

समुदायेषु हि वृत्ताः=वृत्तिमन्तः शब्दा अवयवेष्वपि वर्तन्ते। तद् यथा 'तैलं भुक्तम्, घृतं भुक्तम्' इत्युक्तम्। यद्यपि च संघाभिधायी एकदेशाभिधायी च अर्थभेदात् शब्दोऽत्यन्तभिन्न एव, प्रत्यर्थं शब्दाभिनिवेश इत्यभ्युपगमात्, तथापि अर्वाग्दर्शनाः=अर्वाचीनदृष्टयः, तयोर्भेदं नावगच्छन्तीति तदभेदमाश्रित्य समुदायावयववृत्तित्वं कथ्यते।

तथा च ब्राह्मणजातिरहिते क्षत्रिये विद्याविनयरूपजात्यादिगुणसमुदायैकदेशनिमित्तको ब्राह्मणशब्दप्रयोग इति तस्यैकदेशवृतित्ता श्रुतिसाम्यादनवगता नञ्प्रयोगादवधार्यते। 'तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव सः' इति वा=च ब्राह्मणकः=कुत्सितो ब्राह्मण उच्यते, यो ब्राह्मणोचितविद्यावृत्तादिगुणहीनो जातिमात्रेण तु ब्राह्मणः।

इत्थञ्चात्र=अब्राह्मण इत्यत्र उत्तरपदस्य ब्राह्मणशब्दस्य गुणसमुदायविषयत्वात् अब्राह्मण इत्यत्र नञ्समासे पूर्वोत्तरशब्दयोः सामानाधिकरण्यमुपपद्यते।

अत्र हि नञा यस्यैव गुणस्य स्वाभाविकी निवृत्तिः सैव द्योत्यत इत्यवशिष्टानां गुणानामर्थात् सद्भावोऽवगम्यत इति सादृश्यावगमोऽप्यत्र। तत्र पूर्वम्=पूर्वकारिकासु उपचारसत्ताश्रयेण=आरोपितसत्तानिवृत्त्याश्रयेण उक्तम्।

इदानीं तु पारमार्थिकस्यैव कस्यचिद् धर्मस्य नञा निवर्तनेऽपि परिशिष्टमात्राकलापे समुदायाध्यासेन शब्दप्रवृत्तिर्न निर्विषयेत्येतदाख्यायते। उभयोरपि च तयोरवयवयोः समुदायात्मनाध्यासात् तस्यैव निषेधः, तत्रैव च शब्दप्रवृत्तिरिति ॥ २६४ ॥

नेदं चोद्यम्, उत्तरपदार्थानुपादानांशनिषेधात् कथमुत्तरपदेन समन्वय इति।

तथाहि—

**यथैकदेशकरणात् कृत इत्यभिधीयते।**
**अकृतश्चेति सङ्घातः स एवाब्राह्मणे क्रमः ॥२६५॥**

यथा एकदेशस्य निष्पत्तेस्तदपरस्य चैकदेशस्यानिष्पत्तेः कृताकृतः सङ्घातोऽभिधीयते। अवयवात्मकत्वात् समुदायस्यावयवधर्मोपचारो न विरुध्यते।

एवं गुणसमुदायस्यैकदेशे प्रवृत्तिनिवृत्तिभ्यां ब्राह्मणाब्राह्मणशब्दवाच्यता॥२६५॥

---

इदानीन्तु पारमार्थिकस्यैव कस्यचिद् धर्मस्य नञा विवर्तनेऽपि परिशिष्टमात्राकलापे = अवशिष्टावयवसमुदाये पूर्णसमुदायाध्यासेन ब्राह्मणादिशब्दप्रवृत्तिर्न निर्विषयेत्येतदाख्यायते। उभयोरपि च तयोः = निषेध्यानिषेध्ययोः अवयवयोः समुदायात्मना अध्यासात् तस्यैव अध्यस्तसमुदायस्यैव अब्राह्मण इत्यत्र निषेधः। तत्रैव च = अध्यस्तसमुदायकावयववति एव च क्षत्रियादौ ब्राह्मणोऽयमिति ब्राह्मणशब्दप्रवृत्तिरिति चेति ॥ २६४ ॥

उत्तरपदार्थानुपादानांशनिषेधात् = उत्तरपदस्य क्वचिदर्थो योऽनुपादानः उत्तरपदेनात्रानभिहितोंऽशस्तस्य निषेधात् कथमत्रोत्तरपदेन नञः समन्वय इतीदमत्र न चोद्यम्, तथादर्शनात्। तथाहि दर्शयति—यथैकदेशकरणादिति।

अस्यार्थः—सर्वं घटपटादिकं कार्यमवयवसमुदायात्मकम्। तथा च यथा एकदेशकरणाद् घटपटात्मकः संघातः कृत इति अकृत इति चाभिधीयते। स एव क्रमः-सैवाभिधानपरिपाटी अब्राह्मणे। तथा हि—क्षत्रिये जात्यादिगुणसमुदायैकदेशस्य जात्यादिरूपस्य निषेधादब्राह्मणोऽयमिति प्रयोगः। कस्यचिच्च तपःश्रुतादिरूपस्यैकदेशस्यानिषेधाद् ब्राह्मण इति क्षत्रियेऽपि प्रयोग इति।

अयं भावः—अवयवसमुदायात्मकघटपटादिरूपकार्यैकदेशस्य निष्पत्तेस्तदपरस्य चैकदेशस्यानिष्पत्तेः संघातः कृताकृत इत्यभिधीयते। समुदायस्यावयवात्मकत्वात् तत्रावयवधर्मयोः कृतत्वाकृतत्वयोरुपचारः = आरोपो न विरुद्धयते।

एवं जात्यादिगुणसमुदायस्यैकदेशेस्य प्रवृत्तिनिवृत्तिभ्यां यथायथं ब्राह्मणाब्राह्मणशब्दवाच्यता इति ॥ २६५ ॥

अत्र दोषमाह—

**ब्राह्मणोऽब्राह्मणस्तस्मादुपन्यासात् प्रसज्यते ।**
**अकृते वा कृतासङ्गादविशिष्टं कृताकृतात् ॥२६६॥**

एकदेशं सङ्घातात्मनावसाय ब्राह्मणोऽयमिति कथ्यते । एकदेशान्तरस्यासत्त्वात् पुनः स एवाब्राह्मण इति प्राप्नोतीति विरोधापत्तिः ।

यदि वा सर्वथैवाकृते समुदाये समर्थसाधनसन्निधेर्निर्वृत्तिसम्भावनया कृत-शब्दो यथा प्रयुज्यते, तद्वत् क्षत्रियादौ ब्राह्मणसमानधर्मदर्शनाद् ब्राह्मणशब्दवाच्य-मात्राकलापं प्रत्यस्य ब्राह्मणत्वसम्भावनया ब्राह्मणशब्दप्रयोगे सति यदा नञा मुख्यार्थता निवर्तनेन गौणार्थतेदृशी प्रकाश्यते, तदा कृताकृतशब्देन तुल्योऽयं नञ् समास इति द्वितीयार्धेन चोद्यं निवारितम् ॥ २६६ ॥

---

अत्र समाधाने पूर्वार्धेन दोषमाह, उत्तरार्धेन तु तदेव समाधानं दोषोद्धारेण समर्थयति— ब्राह्मणोऽब्राह्मण इति ।

अस्यार्थः—तस्मादुपन्यासात्, एकदेशस्य निष्पत्त्यनिष्पत्तिभ्यां कृतत्वाकृतत्वाभ्यां व्यवह्रिय-माणसंघातदृष्टान्तात्, ब्राह्मणोऽब्राह्मण इति प्रसज्यते । तथाहि—ब्राह्मणे जात्यादिगुणसमुदायैकदेशे तं समुदायमध्यारोप्य ब्राह्मणोऽयमिति प्रयोगः । तत्रैव च तादृशगुणसमुदायैकदेशान्तरस्यासत्त्वात् पुनः स एवाब्राह्मण इति प्राप्नोतीति विरोध आपद्यते ।

वा = अथवा सर्वथैवाकृते समुदाये समर्थसाधनसंनिधेर्निवृत्तिसम्भावनया कृता-सङ्गात् कृतत्वारोपात् हेतोः कृताकृताद् अविशिष्टम् = अविशेषः, तुल्यत्वम्, अब्राह्मण इत्यादौ नञ्समासे ।

तथा हि—क्षत्रिये ब्राह्मणसमानधर्माणां तपःश्रुतादीनां दर्शनाद् ब्राह्मणशब्दवाच्यं जात्यादिरूपावयवकलापं क्षत्रियेऽध्यारोप्य ब्राह्मणत्वसम्भावनया तत्र ब्राह्मणशब्दप्रयोगे सति नञा यदा ब्राह्मणशब्दस्य मुख्यार्थतानिवर्तनेन तस्य गौणार्थता प्रकाश्यते, तदा कृताकृततुल्यता नञ्समासे इति ।

अयं भावः—जात्यादि तपःश्रुतादिगुणसमुदायैकदेशं तपःश्रुतादिकं तादृशसंघातात्मनाऽ-वसाय = निश्चित्य क्षत्रियो ब्राह्मणोऽयमिति कथ्यते । एकदेशान्तरस्य जात्यादिगुणस्य स्वाभावि-कस्य क्षत्रियेऽसत्त्वात् पुनः स एवाब्राह्मण इति प्राप्नोतीति विरोधापत्तिः ।

यदि वा सर्वथैवाकृते समुदाये समर्थसाधनसन्निधेर्निर्वृत्तिसम्भावनया = निष्पत्तिसम्भाव-नया कृतशब्दो यथा प्रयुज्यते, तद्वत् क्षत्रियादौ ब्राह्मणसमानधर्माणां तपःश्रुतादीनां दर्शनाद् ब्राह्मणशब्दवाच्यं जात्यादिरूपं नैसर्गिकं मात्राकलापम् = अवयवसमुदायम्, तत्र प्रत्यस्य = अध्यारोप्य तत्र ब्राह्मणत्वसम्भावनया ब्राह्मणशब्दप्रयोगे सति यदा नञा तत्र ब्राह्मणशब्दस्य मुख्यार्थता निवर्तनेन तस्येदृशी गौणार्थता प्रकाश्यते, तदा कृताकृतशब्देन तुल्योऽयं नञ्समास इति द्वितीयार्धेन = अस्य पद्यस्योत्तरार्धेन पूर्वार्धोक्तं चोद्यं निवारितमिति ॥ २६६ ॥

एकदेशे च ब्राह्मणशब्दोऽमुख्य इति सादृश्यान्मुख्यभ्रान्तिः स्यात् । तामपाकर्तुं नञ् प्रयुज्यमानो भवति विशेषणमित्याह—

**अमुख्यसम्भवे तत्र मुख्यस्य विनिवृत्तये ।**
**शास्त्रान्वाख्यानसमये नञ् प्रयुक्तो विशेषकः ॥२६७॥**

उपक्रम एवामुख्येऽर्थे ब्राह्मणशब्दः प्रयुक्तोऽनधिगतविवक्षितार्थ इत्यब्राह्मणशब्दस्य लौकिकस्याखण्डस्यान्वाख्यानार्थमेवं विभागे विवक्षितार्थसिद्ध्यर्थमुपपद्यते नञ्प्रयोग इत्यर्थः ॥ २६७ ॥

अत्रोत्तरपदार्थप्राधान्ये भाष्ये चोदितम्—'अब्राह्मणमानयेत्युक्ते ब्राह्मणमात्रस्यानयनं प्राप्नोति'इति । तत् कथम् ? यावता राजपुरुषादिवत् पूर्वपदार्थोपहितविशेषस्योत्तरपदार्थस्य प्रतीतेरित्याशङ्क्य भाष्यकाराभिप्रायमाचष्टे—

**पदार्थानुपघातेन दृश्यते च विशेषणम् ।**

---

जात्यादितपःश्रुतादिरूपनैसर्गिकानैसर्गिकगुणसमुदायवति अर्थे ब्राह्मणशब्दस्य मुख्या वृत्तिः, तपःश्रुतादिरूपे च तादृशगुणसमुदायैकदेशे ब्राह्मणशब्दोऽमुख्य इति सादृश्यात् = श्रुतिसाम्यात् मुख्यभ्रान्तिः = उक्तरीत्या क्षत्रिये गुणसमुदायैकदेशमादाय प्रयुज्यमानो ब्राह्मणशब्दो मुख्य इति भ्रान्तिः स्यात् । तामपाकर्तुं प्रयुज्यमानो नञ्विशेषणं भवति उत्तरपदार्थस्येत्याह—अमुख्यसम्भवे तत्रेति ।

अस्यार्थः—तत्र = अब्राह्मणोऽयमित्यत्र, अमुख्यसम्भवे धर्मसाम्यादध्यारोपितस्य अत एवामुख्यस्य ब्राह्मणत्वस्य क्षत्रिये सम्भवे सति मुख्यस्य ब्राह्मणत्वस्य जात्यादिरूपस्य विनिवृत्तये शास्त्रान्वाख्यानसमये शास्त्रकरणका अब्राह्मणपदान्वाख्यानसमये नञ्विशेषकः उत्तरपदार्थस्य विशेषणरूपः । इदञ्च नञ्समासस्योत्तरपदार्थप्रधानत्वपक्षे उक्तमिति ।

अयं भावः—समासोपक्रम एव विग्रहवाक्ये अमुख्येऽर्थे ब्राह्मणशब्दः प्रयुक्तोऽनधिगतविवक्षितार्थः = अज्ञातविवक्षितामुख्यार्थक इत्यब्राह्मणशब्दस्य लौकिकस्य वस्तुगत्याऽखण्डस्यान्वाख्यानार्थम् = अनुशासनार्थम् । एवं विभागे = पूर्वोत्तरपदरूपाभ्यां विभागे विवक्षितार्थसिद्धचर्थम् = विवक्षितामुख्यार्थप्रसिद्धचर्थं नञ्प्रयोग उपपद्यत इति ॥ २६७ ॥

अत्रोत्तरपदार्थप्राधान्ये नञ्समासस्य भाष्ये चोदितम् 'अब्राह्मणमानयेत्युक्ते ब्राह्मणमात्रस्यानयनं प्राप्नोति' इति । तत् कथम् = तन्न सम्भवति यावता = यतो राजपुरुषादाविव पूर्वपदार्थोपहितविशेषस्य = पूर्वपदार्थापादितविशेषस्य उत्तरपदार्थस्य प्रतीतेः, अब्राह्मण इत्यादावपि अमुख्यब्राह्मणत्वनिवृत्तिमतो ब्राह्मणस्य प्रतीतेरित्याशङ्क्य भाष्यकाराभिप्रायमाचष्टे—पदार्थानुपघातेनेति ।

अस्यार्थः—राजपुरुषादौ समासे विशेष्यपदार्थानुपघातेन = विशेष्यपदार्थानुच्छेदेन च तु विशेषणम् = राजादिकं दृश्यते । नञ्समासे तु नञा उत्तरपदार्थस्योच्छेदो बोध्यत इति कथमसदर्थविशेषणत्वं नञर्थस्येति ।

राजपुरुषादौ राजाद्यर्थः पुरुषाद्यर्थस्यानुच्छेदेन विशेषोपसंहाराद् युक्तं विशेषणम्।

इह तु नञर्थ उत्तरपदार्थोच्छेदकः कथं विशेषणं स्यात्? अनर्थक एवात्र नञ्।

तथा च ब्राह्मणमात्रस्यानयनं स्यादिति भाष्यकाराभिप्राय इत्यर्थः॥

अथ न सर्वथोत्तरपदार्थनिवृत्तिरत्र, अपि तु—

**अथ जातिमतोऽर्थस्य कश्चिद् धर्मो निवर्तितः॥२६८॥**

नञेति शेषः। गुणसमुदाये जातेः प्रवृत्तिहेतुत्वात्। तद्वतः समुदायस्य प्रदेशमात्रस्य निवृत्तिर्नञा द्योत्यते। तदपरस्य तु प्रदेशस्य स्थितिरिति भवति विशेषावसायः॥ २६८॥

यद्येवम्—

**अवश्यं ब्राह्मणे कश्चित् क्वचिद् धर्मो न विद्यते।**
**विशेषावचनात् तत्र नञः श्रुतिरनर्थिका॥२६९॥**

---

अयं भावः—राजपुरुषादौ राजादिपदार्थः पुरुषपदार्थस्यानुच्छेदेन = उच्छेदकत्वाभावेन विशेषणसंहारात् = पुरुषपदार्थस्य विशेषे उपसंहारात् संकोचनाद् युक्तं विशेणषम्।

इह तु = अब्राह्मण इत्यादौ तु नञर्थ उत्तरपदार्थस्योच्छेदकः कथं विशेषणं स्यात्? तस्मादनर्थक एवात्र नञ्।

तथा चाब्राह्मणमानयेत्युक्ते ब्राह्मणमात्रस्यानयनं स्यादिति भाष्यकाराभिप्राय इति? पूर्वार्धार्थः।

अथ = यदि न सर्वथा उत्तरपदार्थनिवृत्तिरत्र, अपितु जातिमतोऽर्थस्य यत् किञ्चिद् धर्मनिवृत्तिरित्युच्यते तदपि दूषयितुमनुवदति—अथ जातिमत इति।

अस्यार्थः—अथ यदि ब्राह्मणत्वादिजतिमतोऽर्थस्य कश्चिद् धर्मो नञा निर्वतित इति परिशिष्टधर्मसत्तावगमे विशेषावसायेन नञो विशेषकत्वसंभव इत्युच्यत इति।

अयं भावः—निर्वति इत्यत्र नञति शेषः। ब्राह्मणादिशब्दानां गुणसमुदाये प्रवृत्तौ जातेर्हेतुत्वात् तद्वतः = जातिमतो गुणसमुदायस्य प्रदेशमात्रस्य = यत्किञ्चिदवयवस्य निवृत्तिर्नञा द्योत्यते, तदपरस्य तु प्रदेशस्य = अवयवस्य स्थितिरिति भवति नञा विशेषावसायेन तदर्थस्य विशेषत्वमिति॥ २६८॥

यद्येवमुच्यते तदाऽपि नञः श्रुतिरनर्थिकेत्याह—अवश्यं ब्राह्मणे इति।

अस्यार्थः—ब्राह्मणेऽवश्यं क्वचित् कश्चिद् धर्मो न विद्यते। तथा च सर्वत्रैव ब्राह्मणशब्दो विशेषवृत्तिरेवेति विशेषावचनात्, ब्राह्मणशब्दे नञ्प्रयुक्तस्य विशेषवचनत्वाभावात्, तत्र = अब्राह्मण इत्यदौ नञ्समासे, नञः श्रुतिरनर्थिका इति अब्राह्मणमानयेत्युक्ते ब्राह्मणमात्रस्यानयनं प्राप्नोतीति भाष्यकृदाशय इति।

नहि सर्वो ब्राह्मणः परिपूर्णगुणो लभ्यत इति ब्राह्मणशब्दः प्रदेशवृत्तिरेव सर्वः, पूर्णगुणेऽपि जातिमात्रसंस्पर्शेन प्रवृत्तेः। तथा च नञ् प्रयोगेऽपीत्यनर्थको नञ् ॥२६९॥

किञ्चास्मिन् पक्षे—

**अविशिष्टस्य पर्यायो नञ्विशिष्टः प्रसज्यते।**
**अन्वाख्यानाद्धि साधुत्वमेवम्भूते प्रतीयते ॥२७०॥**

य एवार्थो ब्राह्मणशब्दस्य निवृत्तैकदेशः स एवाब्राह्मणशब्दस्येति नञ्समासवचनेन प्रज्ञापितसाधुभावोऽब्राह्मणशब्दो ब्राह्मणशब्दस्य पर्यायः प्राप्नोति ॥ २७० ॥

एतत् समाधत्ते —

**पदार्थानुपघातेन यद्यप्यत्र विशेषणम्।**
**उपचारसतोऽर्थस्य सावस्था द्योत्यते नञा ॥२७१॥**

---

अयं भावः—न हि सर्वो ब्राह्मणः परिपूर्णगुणो लभ्यते = न हि कोऽपि ब्राह्मणः परिपूर्णगुणो लभ्यत इति सर्वोऽपि ब्राह्मणशब्दः प्रदेशवृत्तिरेव = अवयववृत्तिरेव। पूर्णगुणोऽपि ब्राह्मणे जातिमात्रसंस्पर्शेन = जातिमात्रसम्बन्धेन ब्राह्मणशब्दप्रवृत्तेः।

तथा च = तथैव नञ्प्रयोगेऽपि प्रागुक्तरीत्या प्रदेशवृत्तिरेव ब्राह्मणशब्द इत्यनर्थको नञ् इति भाष्याशय इति ॥ २६९ ॥

किञ्चास्मिन् पक्षे = नञा एकदेशनिवृत्तिः क्रियत इति पक्षे नञ्विशिष्टाविशिष्टयोः पर्यायत्वप्रसङ्ग इत्याह—अविशिष्टस्य पर्याय इति।

अस्यार्थः—नञ्विशिष्टः अब्राह्मणशब्दः, अविशिष्टस्य = नञा विरहितस्य ब्राह्मणशब्दस्य केवलस्य पर्यायः प्रसज्यते। तथा हि अब्राह्मणशब्देन निवृत्तैकदेशो य एवार्थः प्रतीयते, स एव निवृत्तैकदेश एव ब्राह्मणशब्देनापि प्रतीयते, क्वचिदपि ब्राह्मणस्य परिपूर्णगुणत्वाभावात्।

नन्वब्राह्मणशब्दस्य ब्राह्मणे निवृत्तैकदेशे साधुत्वं कथमित्याशङ्क्य समाधत्ते—अन्वाख्यानाद्धीति।

हि यतः, एवं भूतेऽर्थे = निवृत्तैकदेशे ब्राह्मणरूपेऽर्थे अब्राह्मणशब्दस्य साधुत्वम्, अन्वाख्यानात् = नञ्समासान्वाख्यानात् प्रतीयत इति।

अयं भावः—क्वचिदपि कस्यचिदपि ब्राह्मणस्य परिपूर्णगुणत्वाभावाद् य एवार्थो निवृत्तैकदेशो ब्राह्मणशब्दस्य स एवार्थोऽब्राह्मणशब्दस्येति नञ्समासवचनेन प्रज्ञापितसाधुभावोऽब्राह्मणशब्दो ब्राह्मणशब्दस्य पर्यायः प्राप्नोतीति ॥ २७० ॥

'अब्राह्मणमानय' इत्युक्ते ब्राह्मणमात्रस्यानयनं प्राप्नोतीत्येतद् भाष्यचोद्यं समाधत्ते—पदार्थानुपघातेनेति।

अस्यार्थः—यद्यपि 'राजपुरुषः' इत्यादौ विशेष्यपदार्थानुपघातेन राजादिकं विशेषणं दृष्टमिति उत्तरपदार्थोपघातकस्य नञर्थस्य विशेषणत्वं न सम्भवति, तथापि अत्र = अब्राह्मण इत्यादौ नञ्समासे उपचारसतः = उपचारेण क्षत्रियेऽध्यारोपेण सतो ब्राह्मणत्वरूपस्यार्थस्य सावस्था = उपचारावस्था नञा द्योत्यत इति अब्राह्मण इत्यादावपि पदार्थानुपघातेनैव नञो विशेषणत्वं बोध्यमिति।

एकदेशोऽप्यत्र न मुख्यो ब्राह्मणजातीय इति बुद्ध्या तमुपचर्य तच्छब्द-प्रयोगः। तथा चास्य सोपचरितलक्षणावस्था नञा प्रकाश्यत इति पदार्थानुपघातेनैवेदमपि विशेषणं युज्यत इत्यर्थः ॥ २७१ ॥

तथाहि—

**विशेष्येषु यथाभूतः पदार्थः समवस्थितः।**
**तथाभूते तथाभावो गम्यते भेदहेतुभिः ॥२७२॥**

राजपुरुषनीलोत्पलादावपि यथावस्थितविशेष्यपदार्थनिष्ठो विशेषणपदार्थ इति भेदहेतुभिर्विशेषणैर्यथायथमर्थोऽवगम्यते; एवमिहापि ब्राह्मणपदार्थो बुद्ध्योपचरितरूप इत्येवं नञ्पदप्रयोगादवगम्यत इति युक्तं विशेषणम्। तदुक्तं भाष्ये—

"अथेह 'राजपुरुषमानय' इत्युक्ते पुरुषमात्रस्यानयनं कस्मान्न भवति? अस्त्यत्र विशेषः। राजात्र विशेषकः प्रयुज्यते। तेन राजविशिष्टस्यानयनं भवति। इहापि तर्हि नञ् विशेषकः प्रयुज्यते। तेन नञ्विशिष्टस्यानयनं भविष्यति" इति ॥ २७२ ॥

---

अयं भावः—एकदेशोऽपि अत्र=क्षत्रिये न मुख्यो ब्राह्मणजातीय इति तम्=ब्राह्मण-जातीयं मुख्यमेकदेशम् उपचर्य=क्षत्रियेऽध्यारोप्य तच्छब्दप्रयोगः=क्षत्रिये ब्राह्मणशब्दप्रयोगः। तथा चास्य=ब्राह्मणत्वस्य सा उपचरितलक्षणा नञा प्रकाश्यत इति पदार्थानुपघातेनैवेदमपि विशेषणं युज्यत इति ॥ २७१ ॥

तथा हि=पूर्वकारिकोक्तमेवार्थं विशदीकरोति—विशेष्येषु यथाभूत इति।

अस्यार्थः—राजपुरुषनीलोत्पलादौ भेदसम्बन्धेन अभेदसम्बन्धेन वा विशेष्येषु यथाभूतो यादृशो विशेषणपदार्थः समवस्थितः, तथाभूते=तादृशविशेषणविशिष्टे तथाभावः=तथात्वम्, तादृशविशेषणविशिष्टत्वम्, भेदहेतुभिः=इतरव्यावृत्तिहेतुभिः, विशेषणपदैर्गम्यते प्रतीयते।

अत्रायं निष्कर्षः—यथा राजपुरुष इत्यत्र राजपुरुषविशेषणपदसन्निधानाद् राजकीय-पुरुषः प्रतीयते, न पुरुषमात्रम्, एवं नञ्समासेऽपि अब्राह्मण इत्यादौ ब्राह्मणपदार्थः क्षत्रिये बुद्ध्या उपचरितरूपः=आरोपितरूप इति नञ्पदप्रयोगादवगम्यत इति।

अयं भावः—राजपुरुषनीलोत्पलादावपि भेदसम्बन्धेन अभेदसम्बन्धेन वा यथावस्थित-विशेष्यपदार्थनिष्ठो विशेषणपदार्थ इति भेदहेतुभिः=इतरव्यावृत्तिहेतुभिर्विशेषणपदैर्यथायथमर्थोऽव-गम्यते विशेष्यभूतः, एवमिहापि=नञ्समासेऽपि ब्राह्मणपदार्थो बुद्ध्योपचरितरूपः क्षत्रिये इत्येवं नञ्प्रयोगादवगम्यत इति युक्तं नञर्थो विशेषणमिति। तदुक्तं भाष्ये—

"अथेह 'राजपुरुषमानय' इत्युक्ते पुरुषमात्रस्यानयनं कस्मान्न भवति। अस्त्यत्र विशेषः। राजाऽत्र विशेषकः प्रयुज्यते। तेन राजविशिष्टस्यानयनं भवति। इहापि तर्हि नञ्विशेषकः प्रयु-ज्यते। तेन नञ्विशिष्टस्यानयनं भविष्यति" इति।

अत्र पुरुषमात्रस्य इत्यस्य केवलस्य पुरुषस्य अविशिष्टस्येत्यर्थः। नञ्विशिष्टस्य इत्यस्य आरोपरूपनञर्थविशिष्टस्येत्यर्थः ॥ २७२ ॥

अत्र चोदितम्—'कः पुनरसौ'? तत्रोक्तम्—'निवृत्तपदार्थकः' इति। एतदाक्षिपति—

**निवृत्तेऽवयवस्तस्मिन् पदार्थे वर्तते कथम्।**
**नानिमित्ता हि शब्दस्य प्रवृत्तिरुपपद्यते ॥२७३॥**

बुद्धिपरिगृहीताकारेऽपि शब्दः प्रवर्तमानो बाह्यगतं बीजमवलम्बत एव। तथा च दृश्यविकल्पयोरेकत्वाध्यवसायाद् बाह्यमेव शब्दार्थं मन्यन्त इति क्षत्रियादौ ब्राह्मणादेरेकदेशवाचित्वादवयवशब्दस्य कथमसति निमित्ते प्रवृत्तिः। येन सावस्था नञा द्योत्यत इत्युच्यते ॥ २७३ ॥

अथ स्वाभाविकी निवृत्तिरिति क्षत्रियेऽपि ब्राह्मणशब्दः, तदा—

**आराच्छब्दवदेकस्य विरुद्धेऽर्थे स्वभावतः।**
**शब्दस्य वृत्तिर्यद्यस्ति नञः श्रुतिरनर्थिका ॥२७४॥**

---

अत्रारोपरूपं नञर्थमजानता चोदितम्—'कः पुनरसौ' इति। असौ इत्यस्य नञर्थ इत्यर्थः। तत्रोक्तम्—"निवृत्तपदार्थकः" इति।

अस्यार्थः—निवृत्तम् = निवृत्तिः। नपुंसके भावे क्तः। निवृत्तं पदार्थो यस्य स तथाभूतो नञ् इत्यर्थः। एतदाक्षिपति—निवृत्तेऽवयवस्तस्मिन्निति।

अस्यार्थः—निवृत्ते तस्मिन् पदार्थे ब्राह्मणपदवाच्येऽवयवपदार्थे बुद्धिपरिकल्पिताकारेऽपि बाह्यपदार्थस्य तद्गतबीजस्य च शब्दप्रवृत्तिनिमित्तस्याभावाद् अवयवः=अवयववाचको ब्राह्मणशब्दः कथं वर्तते, न प्रवर्तते। प्रवृत्त्यभावमेवोपपादयति—नानिमित्ता हीति।

हि=यतः, अनिमित्ता प्रवृत्तिनिमित्तरहिता शब्दस्य प्रवृत्तिर्नोपपद्यत इति।

अयं भावः—बाह्यार्थाभावाद् बुद्धिपरिकल्पिताकारेऽपि प्रवर्तमानोऽब्राह्मणपदघटको ब्राह्मणशब्दो बाह्यपदार्थगतं बीजम्=शब्दप्रवृत्तिनिमित्तम् अवलम्बत एव। यथा शुक्तिकायां रजतबुद्ध्या जायमाने इदं रजतमिति अभिलापवाक्ये बाह्यरजताभावेऽपि बुद्धिपरिकल्पिताकारे रजते प्रवर्तमानो रजतशब्दोऽन्यथावस्थितबाह्यसत्यरजतगतं रजतत्वरूपं शब्दप्रवृत्तिनिमित्तमवलम्ब्यैव प्रवर्तत इति।

तथा च दृश्यविकल्पयोः=बाह्यपरिकल्पिताकारयोः एकत्वाध्यवसायात्=तादात्म्यविभ्रमाद् बाह्यमेव शब्दार्थं मन्यन्ते प्रतिपत्तार इति असति निमित्ते ब्राह्मणादेः=ब्राह्मणादिशब्दस्य एकदेशवाचित्वादवयवशब्दस्य क्षत्रियादौ कथं प्रवृत्तिः, येन सावस्था=बुद्धिपरिकल्पितावस्था नञा द्योत्यत इत्युच्यत इति ॥ २७३ ॥

अथ=यदि स्वाभाविकी एव गुणसमुदायैकदेशनिवृत्तिः क्षत्रिये ब्राह्मणशब्देनोच्यत इति क्षत्रियेऽपि ब्राह्मणशब्दः प्रवर्तते, नञा तु स्वाभाविकी निवृत्तिरेवावद्योत्यत इति, तदा नञः श्रुतिरनर्थिकेत्याह—आराच्छब्दवदिति।

अस्यार्थः—यदेकस्यैव ब्राह्मणशब्दस्य आराच्छब्दवद् विरुद्धेऽर्थे गुणैकदेशे गुणैकदेशनिवृत्तौ च स्वभावतो वृत्तिरस्ति, तेन ब्राह्मणशब्दस्य क्षत्रियेऽपि प्रयोग उपपद्यत इत्युच्यते, तदा अब्राह्मण

यथा दूरान्तिकार्थवृत्तिराराच्छब्दः, तथा ब्राह्मणक्षत्रियवृत्तिः स्वभावतो ब्राह्मणशब्दो रूढ इत्युपगमे विनापि नञ्प्रयोगं प्रकरणादिवशात् क्षत्रियावगतिर्ब्राह्मणशब्दाद् भविष्यतीति किं नञा कृत्यम्, येन नञ्समासोऽन्वाख्यायते। नह्यवश्यमनेकार्थानां पदान्तरप्रयोगाभिव्यङ्ग्यविशेषत्वमुपलब्धम्। तदुक्तं भाष्ये—"यदि स्वाभाविकी निवृत्तिः, किं नञ् प्रयुज्यमानः करोति"इति ॥ २७४ ॥

अतोऽनन्तरमुक्तम्—'अथ वाचनिकी। तद् वक्तव्यं नञ् प्रयुज्यमानः पदार्थं निवर्तयति'इति। एतद् व्याचष्टे—

**अथ स्वभावो वचनादन्वाख्येयत्वमर्हति।**
**तद्वाच्यमप्रसिद्धत्वान्नञार्थो विनिवर्त्यते ॥२७५॥**

स्वभावोऽपि दुरवधारणत्वान्नञित्यनेन यदि शब्देन ज्ञाप्यते; तदेदमपि वचनेनान्वाख्येयं नञ्प्रयोगे पदानां प्रसिद्धोऽर्थो विनिवर्तत इति।

अथास्यायं स्वभावः प्रयोगपारम्पर्यावसेयः, तदा सर्वस्यैव स्वविषये व्यापारे शब्दान्तरानपेक्षणादुत्तरपदेनापि निवृत्त्यभिधाने नञ् नापेक्षितव्य इत्यर्थः ॥ २७५ ॥

---

इत्यत्र नञ्समासे, न ब्राह्मण इति वाक्ये च नञः श्रुतिरनर्थिका। न च निवृत्तिद्योतनार्थं नञः प्रयोग इति वाच्यम्, आराच्छब्दादिव ब्राह्मणशब्दादपि प्रकरणादित एव विरुद्धार्थबोधसंभवेन नञः श्रुतेरानर्थक्यादिति।

अयं भावः—यथाऽऽराद्दूरसमीपयोरिति कोशाद् दूरान्तिकार्थवृत्तिराराच्छब्दः, तथा प्रागुक्तरीत्या ब्राह्मणक्षत्रियवृत्तिः स्वभावतो ब्राह्मणशब्दो रूढ इत्युपगमे नञ्प्रयोगं विनापि ब्राह्मणशब्दात् क्षत्रियावगतिः प्रकरणादिवशाद् भविष्यतीति किं नञा कृत्यम्=कर्तव्यम्, येन नञ्समासोऽन्वाख्यायते=अनुशिष्यते। नहि अनेकार्थानां पदानामवश्यं पदान्तरप्रयोगाभिव्यङ्ग्यार्थविशेषवाचित्वमुपलब्धम् आरात्पदे सैन्धवादिपदेषु च व्यभिचारात्। तदुक्तं भाष्ये—

"यदि स्वाभाविकी निवृत्तिः, किं नञ्प्रयुज्यमानः करोति" इति ॥ २७४ ॥

अतो भाष्यादनन्तरमिदमुक्तं तत्रैव भाष्ये "अथ वाचनिकी। तद् वक्तव्यम्, नञ् प्रयुज्यमानः पदार्थं निवर्तयति" इति। एतद् भाष्यं व्याचष्टे—अथ स्वभाव इति।

अस्यार्थः—अथ यदि स्वभावः=नञ्समभिव्याहृतस्य ब्राह्मणशब्दस्यार्थस्वभावः, वचनाद्=नञ् समासविधायकसूत्रादन्वाख्येयत्वमर्हति, तत्तदा, इममपि वाच्यम्—अन्वाख्येयम्—अब्राह्मण इत्यादौ नञा प्रसिद्धोऽर्थो विनिवर्त्यत इति। इतरार्थस्याप्रसिद्धत्वात् प्रसिद्धार्थविनिवृत्त्यत्वाख्यानं विना तत्र तस्य मानासंभवादिति।

अयं भावः—अब्राह्मणशब्दघटकस्य ब्राह्मणशब्दस्यार्थस्वभावोऽपि अप्रसिद्धत्वेन दुरवधारणत्वाद् नञित्यनेन शब्देन यदि, तदा नञ्प्रयोगे पदानां प्रसिद्धोऽर्थो विनिवर्तत इतीदमपि वचनेन=सूत्रेण अन्वाख्येयं भवति, न चान्वाख्यातम्।

अथास्य=नञ्समभिव्याहृतस्योत्तरपदस्य अयं स्वभावः=अप्रसिद्धार्थबोधकत्वरूपः स्वभावः प्रयोगपारम्पर्येणावसेयः=निश्चेयः, न तु वचनेनान्वाख्येयः, तदा सर्वस्यैव अनेकार्थस्य

अतोऽनन्तरं 'कीलप्रतिकीलवद् वाचनिकी निवृत्तिः। यद्येवं नञो माहात्म्यम्, न जातुचिद् राजानो हस्त्यश्वं बिभृयुः' इति दूषयित्वा स्वाभाविकी निवृत्तिः सिद्धान्तिता। तत्र च नञ्निमित्ता तूपलब्धिः। तद्यथा—समन्धकारे द्रव्याणां प्रदीपनिमित्तं दर्शनम् इत्युक्तम्। एतद् व्याचष्टे—

**यद्यप्युभयवृत्तित्वं प्रधानं तु प्रतीयते।**
**प्रस्थानं गम्यते शुद्धे तदर्थेऽपि न तिष्ठतौ ॥२७६॥**

गतिनिवृत्तिवचनस्तिष्ठतिः प्रसिद्ध इत्यन्तरेण प्रशब्दमुपसर्गम् (स्थाधातुः) प्रस्थानार्थोऽपि तमर्थमवगमयितुमपर्याप्तो यथा, एवं क्षत्रियवचनोऽपि ब्राह्मणशब्दो

---

शब्दस्य स्वविषये व्यापारे = स्ववाच्यार्थाभिधाने शब्दान्तरानपेक्षणादुत्तरपदेनापि निवृत्त्यभिधाने नञ् नापेक्षितव्य इति नञः श्रुतिरनर्थिकाऽऽपद्यत इति निवृत्तिर्वाचनिक्यपि न भवतीति ॥२७५॥

अतोऽनन्तरम् "कीलप्रतिकीलवद् वाचनिकी निवृत्तिः" इत्युक्तम्। पूर्वं नञो निवृत्तिज्ञापकत्वमुक्तम्, निवृत्तिज्ञापकत्वञ्च तस्य वचनेनान्वाख्यायत इत्युक्तम्। इदानीन्तु कीलप्रतिकीलवद् नञो निवृत्तिकारकत्वमुच्यते। तस्य निवृत्तिकारकत्वञ्च वचनेनान्वाख्यायत इत्यप्युच्यत इति निष्कर्षः।

तदनन्तरमुक्तम्—"यद्येवं नञो माहात्म्यम्, न जातुचिदराजानो हस्त्यश्वं बिभृयुः" इति।

अत्र हेतुः—"नञैव उच्चारितेन शत्रुतद्गतिनिवृत्तिसंभवादिति। एवं वाचनिकीं निवृत्तिं दूषयित्वा स्वाभाविकी निवृत्तिर्नञर्थत्वेन सिद्धान्तिता। तत्र च = नञ्समासे च नञ्निमित्ता तु निवृत्तेरुपलब्धिर्द्योत्यत्वेन। तद्यथा "समन्धकारे द्रव्याणां प्रदीपनिमित्तं दर्शनम्" इत्युक्तम्। एतद् भाष्यं व्याचष्टे—यद्यप्युभयवृत्तित्वमिति।

अस्यार्थः—यद्यपि उभयवृत्तित्वम् = भावाभावोभयार्थकत्वम् अब्राह्मण इत्येतद्घटकस्य ब्राह्मणशब्दस्य, तथाप्यत्र प्रधानं तु = ब्राह्मणशब्दस्य मुख्योऽर्थस्तु प्रसिद्धत्वात् प्रतीयते, न त्वप्रधानं ब्राह्मणनिवृत्तिरूपम्, अप्रसिद्धत्वादिति। अत्र विवक्षितस्याप्रधानस्यार्थस्य प्रतिपत्तये द्योतकस्य नञः प्रयोग आवश्यकः। तत्रोदाहरणमाहोत्तरार्धेन—तदर्थेऽपि = प्रस्थानाऽर्थकेऽपि, तिष्ठतौ = स्थाधातौ शुद्धे अनुसृष्टे प्रस्थानं न गम्यते, प्रोपसृष्टे तु तस्मिन् प्रस्थानं गम्यते। एवं च यथा प्रतिष्ठत इत्यत्र स्थाधातोः प्रस्थानमर्थः, प्रोपसर्गस्य तु द्योतकत्वमिति, तथाऽब्राह्मण इत्यत्र ब्राह्मणशब्दस्यैव ब्राह्मणनिवृत्तिरर्थः, नञस्तु द्योतकत्वमिति।

अयं भावः—गतिनिवृत्तिवचनस्तिष्ठतिः = स्थाधातुः प्रसिद्ध इति प्रस्थानार्थोऽपि स्थाधातुः प्रशब्दमुपसर्गमन्तरेण = विना तमर्थम् प्रस्थानार्थम् अवगमयितुमपर्याप्तः = अशक्तो यथा, एवं तपः-

नञमन्तरेण न तदर्थनिश्चयाधायीत्यर्थः। न हि प्रशब्दस्य प्रस्थानमर्थः तिष्ठतेर्निरर्थकत्वप्रसङ्गादित्यसौ तिष्ठत्यर्थः। प्रशब्दस्तु द्योतकः। एवमत्रापि विज्ञेयम् ॥ २७६ ॥

ननु च यदि क्षत्रिये मुख्यो ब्राह्मणार्थो नास्ति, तदा किमर्थं सन्दिग्धार्थो ब्राह्मणशब्दस्तत्र वाचकोऽभ्युपगम्यते। तस्य चायममुख्योऽर्थो नञ् प्रयोगादवधार्यत इति। 'यदि पुनरयं निवृत्तपदार्थकः, किमर्थं ब्राह्मणशब्दः प्रयुज्यत' इत्युक्तं भाष्ये। तदाह—

**किमर्थमतथाभूते सति मुख्यार्थसम्भवे।**
**भेदे ब्राह्मणशब्दस्य वृत्तिरभ्युपगम्यते ॥२७७॥**

व्याख्यातार्थोऽयं श्लोकः ॥ २७७ ॥

अत्र परिहारभाष्यम्—"एवं यथा विज्ञायेत अस्य पदार्थो निवृत्त इति। नेति ह्युक्ते सन्देहः स्यात्—कस्य पदार्थो निवृत्त इति। तत्रासन्देहार्थं ब्राह्मणशब्दः प्रयुज्यते" इति। एतद् व्याचष्टे—

**अयं पदार्थ एतस्मिन् क्षत्रियादौ न विद्यते।**
**इति तद्वचनः शब्दः प्रत्ययाय प्रयुज्यते ॥२७८॥**

---

श्रुतादिना गुणेन क्षत्रियवचनोऽपि ब्राह्मणशब्दो नञ्मन्तरेण=नञशब्दं विना तदर्थनिश्चयानाधायी इति। नहि प्रतिष्ठते इत्यत्र प्रशब्दस्य प्रस्थानमर्थः, तिष्ठतेर्निरर्थकत्वप्रसङ्गादिति असौ=प्रस्थानम्, तिष्ठत्यर्थः। प्रशब्दस्तु तद्द्योतकः। एवत्रापि=अब्राह्मण इत्यत्रापि ब्राह्मणशब्दो ब्राह्मणनिवृत्तिवचनो नञ् तु तद्द्योतक इति ॥ २७६ ॥

ननु च यदि क्षत्रिये मुख्यो ब्राह्मणपदार्थो नास्ति, तदा किमर्थं संदिग्धार्थो ब्राह्मणशब्दः तत्र वाचकोऽभ्युपगम्यते, तस्य चायममुख्योऽर्थ ब्राह्मणशब्दस्य क्षत्रियोऽमुख्योऽर्थ इति नञ्प्रयोगादवधार्यत इति। यदि पुनरयम्=नञ् निवृत्तपदार्थकः, किमर्थमत्र ब्राह्मणशब्दः प्रयुज्यत इत्युक्तं भाष्ये, तदाह—किमर्थमतथाभूते इति।

अस्यार्थः—मुख्यार्थसम्भवे सति=क्षत्रिये मुख्यार्थकस्य क्षत्रियशब्दस्य प्रयोगसम्भवे सति, अतथाभूते=ब्राह्मणत्वाभाववति क्षत्रिये, भेदे ब्राह्मणाद् भेदवति, ब्राह्मणशब्दस्य किमर्थं वृत्तिः=शक्ति, अभ्युपगम्यत इति चोद्यम् ॥ २७७ ॥

अत्र परिहारभाष्यम् "एवं यथा विज्ञायेत अस्य पदार्थो निवृत्त इति। नेति ह्युक्ते संदेहः स्यात् कस्य पदार्थो निवृत्त इति। तत्रासन्देहार्थं ब्राह्मणशब्दः प्रयुज्यते" इति। एतद् भाष्यं व्याचष्टे—अयं पदार्थ इति।

अस्यार्थः—अयं पदार्थः=ब्राह्मणपदार्थः, एतस्मिन् क्षत्रियादौ न विद्यत इति प्रत्ययाय=ज्ञानाय तद्वचनः=निषेध्यब्राह्मणादिवाचकः शब्दः अब्राह्मण इत्यादौ प्रयुज्यत इति।

अयमर्थः—अज्ञानाद् दुरुपदेशाद् वा केनचिद् ब्राह्मणार्थः क्षत्रियेऽध्यवसितः। स एवं बोध्यते—नायं ब्राह्मणोऽब्राह्मणोऽयमिति। क्षत्रिय इति तूक्ते ब्राह्मणार्थस्य तत्र निषेधो न कृतः स्यादिति विवक्षितार्थो न प्रतीयेत।

तस्माद् बुद्ध्या तत्र ब्राह्मणार्थमाश्रित्य नञो विषयप्रक्लृप्तौ तदर्थनिवृत्तिः कथ्यत इति युक्तम्॥ २७८॥

बोद्धुश्च शब्दार्थः समारोपितरूपः सर्वत्र युज्यत एवेत्याह—

**बुद्धेर्विषयतां प्राप्ते शब्दादर्थे प्रतीयते।**
**प्रवृत्तिर्वा निवृत्तिर्वा श्रुत्या ह्यर्थोऽनुषज्यते॥२७९॥**

इह यः शब्दादर्थः प्रतीयते, स व्यवहाराङ्गं बहिः सदसत्त्वमनपेक्ष्येति 'शब्दादर्थाः प्रतायन्त' इत्यादिना पूर्वं निर्णीतम्। तथा च भावाभावसाधारणशब्दैः स्वार्थः समुल्लिख्यत इति तत्र-तत्र पदार्थेऽनवस्थिते यथायोगं भावरूपमभावरूपं वा विशेषणमुपकल्पत एव॥ २७९॥

---

अयं भावः—स्वस्याज्ञानात् परस्य दुरुपदेशाद्वा केनचिद् ब्राह्मणार्थः क्षत्रिये तादात्म्येनाध्यवसितः। स एवं बोध्यते—नायं ब्राह्मणोऽयमिति। क्षत्रिय इति तूक्ते ब्राह्मणार्थस्य तत्र=क्षत्रिये निषेधो न कृतः स्यादिति विवक्षितार्थो ब्राह्मणप्रतिषेधरूपो न प्रतीयते।

तस्माद् बुद्धचा तत्र=क्षत्रियादौ ब्राह्मणार्थमाश्रित्य तादात्म्येनाध्यवसाय नञो विषयप्रक्लृप्तौ=प्रतियोगिसिद्धौ तदर्थनिवृत्तिः=ब्राह्मणपदार्थनिवृत्तिः कथ्यत इति युक्तमिति॥२७८॥

बोद्धुश्च शब्दार्थः सर्वत्र=अर्थस्य बहिःसत्त्वेऽसत्त्वे वा बुद्धौ समारोपितरूपो युज्यत एवेत्याह—बुद्धेर्विषयतां प्राप्त इति।

अस्यार्थः—बहिः सति असति वार्थे बुद्धेर्विषयताप्राप्ते सति शब्दाद् ब्राह्मणोऽयमिति प्रवृत्तिः, न ब्राह्मणोऽब्राह्मणोऽयमिति निवृत्तिर्वा प्रतीयते। हि=यतः श्रुत्या=वाचकेन शब्देन, अर्थो वाच्योऽनुषज्यते सम्बध्यते। न बाह्यस्यार्थस्य शब्देन सह सम्बन्धः सम्भवतीति बौद्धयोरेव शब्दार्थयोर्वाच्यवाचकभावः। एवञ्च शब्देन भावाभावसाधारणः स्वार्थः समुल्लिख्यत इति भावोऽभावश्चोभयमपि ब्राह्मणशब्दार्थः। तत्र अब्राह्मण इत्यादौ अभावरूपो ब्राह्मणपदार्थो नञाऽभिव्यज्यत इति नञ्प्रयोगः सार्थक इति।

अयं भावः—इह शाब्दे व्यवहारे यः शब्दादर्थः प्रतीयते स व्यवहाराङ्गम्=लोकव्यवहारे प्रवृत्तिनिमित्तं बहिरर्थस्य सदसत्त्वमनपेक्ष्येति "शब्दादर्थाः प्रतायन्ते" इत्यादिना पूर्वं निर्णीतम्।

तथा च भावाऽभावसाधारणशब्दैः=भावाऽभावे च वाचकतया साधारणैः शब्दैः स्वार्थो भावरूपोऽभावरूपो वा तत्र तत्र समुल्लिख्यत इति स्थिते तत्र तत्र भावरूपेऽभावरूपे वा पदार्थेऽनवस्थिते=संशयादनवधृते यथायोगं नीलोत्पलादौ भावरूपम्, अब्राह्मण इत्यादौ चाभावरूपं विशेषणमुपकल्पत एव=प्रसिद्ध्यत्येवेति॥ २७९॥

तत्रोत्तरपदार्थप्रधाने नञ् समासे 'नञिव युक्तमन्यसदृशाधिकरणे तथाह्यर्थगतिः" इत्युक्तत्वाद् यत्रैव ब्राह्मणशब्दस्य भ्रान्त्या प्रयोगस्तत्रैव तदर्थनिषेधे तदधिकरण-सम्प्रत्ययो न सर्वत्रेत्यतिप्रसङ्गाभावार्थं 'सन्देहाद् दुरुपदेशाच्च ब्राह्मणशब्दो वर्तते' इत्यादि भाष्यम् । तद् व्याचष्टे—

**असम्यगुपदेशाद् वा निमित्तात् संशयस्य वा ।**
**शब्दप्रवृत्तिर्न त्वस्ति लोष्टादिषु विपर्ययम् ॥२८०॥**

दुरुपदेशात् क्षत्रिये ब्राह्मणशब्दप्रवृत्तिः पिङ्गलकेशादेरुपदिष्टस्य विषयविवेचनावधारणात् कस्यचिद् भवति । सन्देहनिमित्तं गुणः सन्देहशब्देनात्रोक्तः ।

तथाहि—सादृश्यलक्षणात् संशयनिमित्तात् तत्र शब्दप्रवृत्तिरित्यत्यन्तविसदृशेषु लोष्टादिषु ब्राह्मणशब्दप्रवृत्त्यभावादब्राह्मणशब्दादुत्तरपदार्थसदृश एव क्षत्रियोऽवगम्यते, न लोष्टादि । भ्रान्तिनिवारणाय हि नञः प्रयोगः । भ्रान्तिश्च सति निमित्ते, निर्बीजभ्रान्त्ययोगादिति सदृश एव तस्य ( नियमः ) विषयः ।

---

तत्रोत्तरपदार्थप्रधाने नञ्समासे अब्राह्मणादौ "नञिव युक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः" इति भाष्ये उक्तत्वाद् यत्रैव ब्राह्मणशब्दस्य क्षत्रियादौ भ्रान्त्या प्रयोगस्तत्रैव तदर्थनिषेधे =ब्राह्मणपदार्थनिषेधे तदधिकरणसंप्रत्ययः =ब्राह्मणपदार्थनिषेधाधिकरणसंप्रत्ययः, न सर्वत्र लोष्ठादौ, तत्र सादृश्याभावेन ब्राह्मणशब्दस्य भ्रान्त्या प्रयोगाभावादिति लोष्ठादौ अब्राह्मणशब्द-प्रयोगापत्तिरूपस्यातिप्रसङ्गस्य वारणार्थम् "सन्देहाद् दुरुपदेशाच्च ब्राह्मणशब्दो वर्तते" इत्यादि भाष्यम् । अत्र 'वर्तते' इत्यस्य क्षत्रियादौ प्रवर्तत इत्यर्थः । तद् भाष्यं व्याचष्टे—असम्यगुपदेशाद् वा इति ।

अस्यार्थः—असम्यगुपदेशात् =भ्रान्तिमज्ज्ञानादिमूलकाद् दुरुपदेशाद्वा, संशयस्य =ब्राह्मणोऽब्राह्मणो वा इति संशयस्य निमित्तात् सादृश्याद्वा, शब्दप्रवृत्तिः = ब्राह्मणशब्दस्य क्षत्रियादौ प्रवृत्तिः, सा तु ब्राह्मणशब्दस्य प्रवृत्तिर्लोष्ठादिषु नास्ति, विपर्ययात्—लोष्टादिसु दुरुपदेशसंशयनिमित्त-सादृश्ययोरभावादिति ।

अयं भावः—भ्रान्तिवज्ज्ञानादिमूलकाद् दुरुपदेशात् क्षत्रिये ब्राह्मणशब्दप्रवृत्तिः कस्यचिद् भवति, क्षत्रियादौ दुरुपदिष्टस्य तपसा पिङ्गलकेशादेर्ब्राह्मणधर्मस्य विषयविवेकानवधारणात् = सादृश्येन आश्रयभेदानिर्णयात् । अत्र कारिकायां संदेहनिमित्तं गुणः =क्षत्रियादौ ब्राह्मणोऽब्राह्मणो वा इति संशयनिमित्तं गुणः तपःश्रुतादिकं सन्देहशब्देन =संशयशब्देन उक्तः ।

तथा च संशयस्य =क्षत्रिये ब्राह्मणत्वसंशयनिमित्तस्य गुणस्य तपःश्रुतादेर्निमित्तात् = ज्ञापकनिमित्तात् सादृश्यादिति प्रकृतकारिकाया द्वितीयपदार्थः । कारिकायां संशयशब्दस्य संशय-निमित्तगुणे लक्षणाया अभावोऽपि =सादृश्यलक्षणात् संशयनिमित्तात् तत्र =क्षत्रियादौ ब्राह्मण-शब्दप्रवृत्तिरिति अर्थे स्थितेऽत्यन्तविसदृशेषु लोष्टादिषु ब्राह्मणशब्दप्रवृत्त्यभावादब्राह्मणशब्दादुत्तर-पदार्थसदृश एव क्षत्रियोऽवगम्यते, न लोष्टादि । क्षत्रियादौ ब्राह्मणभ्रान्तिनिवारणाय हि नञः प्रयोगः । भ्रान्तिश्च सति सादृश्यादिरूपे निमित्ते, निर्बीजभ्रान्त्ययोगादिति सदृश एव तस्य = ब्राह्मणशब्दस्य विषयः =वाच्यः, न लोष्टादिः ।

अत एव च नञा ब्राह्मणार्थे मुख्ये क्षत्रिये निवारिते तदधिकरणभूतः क्षत्रियोऽवस्थित एवेति प्रतिपद्यतेऽसौ क्रियासु साधनभावमब्राह्मणमानयेत्यादौ। प्रतिषेधमात्रोपक्षयत्वे तु नञ्समासस्यात्रासाधनः समासार्थः स्यादिति न समारोपितरूपप्रतिषेधमात्रेऽस्य व्यापारः।

समारोपस्य च प्रतिपत्तॄणां विपर्यासितदर्शनान्नियमाभाव इत्यसत्यपि सादृश्ये कुतश्चिद् भ्रान्तिकारणात् सर्वत्र प्रसिद्धे नञ्समासे समारोपोऽनुगन्तव्यः।

उपचरितोत्तरपदार्थप्रतिषेधेन ह्युत्तरपदार्थप्रधानो नञ्समास इत्यप्राणिनामस्त्रीविषयादयोपधादचित्तवत् कर्तृकादिति प्रयोगदर्शनात् समारोपनिमित्तानुसरणेनोत्तरपदार्थसदृशप्रतिपत्तिर्विज्ञेया ॥ २८० ॥

'इदं खल्वपि भूय उत्तरपदार्थप्राधान्ये सङ्गृहीतं भवति। किम्, अनेकम्' इति भाष्यम्। तद् व्याचष्टे—

**अनेकस्मादस इति प्राधान्ये सति सिध्यति।**
**सापेक्षत्वं प्रधानानामेवं युक्तं त्वतद्विधौ ॥२८१॥**

---

अत एव च नञा मुख्ये ब्राह्मणपदार्थे जात्यादिगुणवति क्षत्रियादौ निवारिते तदधिकरणभूतः=ब्राह्मणत्वनिषेधाधिकरणभूतः क्षत्रियोऽवस्थित एवेति असौ=क्षत्रियादिः 'अब्राह्मणमानय' इत्यादौ क्रियासु साधनभावं प्रतिपद्यते। नञ्समासस्य प्रतिषेधमात्रोपक्षयत्वे तु=प्रतिषेधमात्रपरिसमाप्तत्वे तु अत्र=अब्राह्मणादौ असाधनः=कारकशक्तिरहितः समासार्थः स्यादिति न समारोपितरूपप्रतिषेधमात्रे=क्षत्रियादौ समारोपितस्य ब्राह्मणत्वादिस्वरूपस्य निषेधमात्रे अस्य=नञः व्यापारः किन्तु उत्तरपदार्थसदृशपदार्थबोधनेऽपि नञो व्यापारः।

प्रतिपत्तॄणाञ्च विपर्यासितदर्शनात्=भ्रान्तिदर्शनात् क्षत्रियादौ ब्राह्मणत्वभ्रमदर्शनात् समारोपस्य क्षत्रियादौ ब्राह्मणत्वसमारोपस्य सादृश्यादिरूपनिमित्तनियमाभाव इत्यसत्यपि सादृश्ये कुतश्चिद् भ्रान्तिकारणात् सर्वत्र प्रसिद्धे नञ्समासे समारोपोऽनुगन्तव्यः, न तु अप्रसिद्धे लोष्टादौ अब्राह्मण इति नञ्समासे।

उपचरितोत्तरपदार्थप्रतिषेधेन हि=आरोपितोत्तरपदार्थनिषेधेन हि उत्तरपदार्थप्रधानो नञ्समासः, सादृश्यस्य समारोपस्य निवृत्तेर्वा नञर्थस्य पूर्वपदार्थस्य तत्र विशेषणत्वादिति 'अप्राणिनाम् अस्त्रीविषयात्, अयोपधात्, अचित्तवत्कर्तृकात्' इति प्रयोगदर्शनात् समारोपनिमित्तानुसरणेनोत्तरपदार्थसदृशप्रतिपत्तिर्विज्ञेया=समारोपनिमित्तानां सादृश्यादीनामनुसरणेन उत्तरपदार्थसदृशस्य द्रव्यस्य प्राधान्येन प्रतिपत्तिर्विज्ञेया इति ॥ २८० ॥

"इदं खल्वपि भूय उत्तरपदार्थप्राधान्ये संगृहीतं भवति। किम्, अनेकम्" इति भाष्यम्।

अस्यार्थः—नञ्समासस्योत्तरपदार्थप्राधान्ये इदं खल्वपि भूयः सङ्गृहीतं भवति। अत्र भूय इत्यस्य पुनरित्यर्थः, बहुतरमित्यर्थो वा। तत्र पक्षद्वयेऽपि अनेकमित्युदाहरणमुपलक्षणरूपम् अस इत्यादीनां सङ्ग्राहकमिति। एतद् भाष्यं व्याचष्टे—अनेकस्मादस इतीति।

एकशब्दार्थस्यात्र प्रधानत्वे तदाश्रयमेकसङ्ख्यत्वादेकवचनमनुपसर्जनत्वात् सर्वनामसंज्ञाकार्यं स्मायादि च भवति ।

यदि तु पूर्वपदार्थस्यान्यपदार्थस्य वा प्राधान्यं स्यात्, तदैकार्थस्योपसर्जनत्वात् 'संज्ञोपसर्जनप्रतिषेधः' इति सर्वनामसंज्ञा न स्यात् । तथा अस इत्यत्रान्तर्गणकार्यम्, "त्यदादीनामः" (पा०७।२।१०२) इत्येवमादि तदर्थस्य प्राधान्ये सिध्यति । गणपाठो हि सार्वार्थ्येन प्राधान्येन विशेष्यत इत्युक्तम्—'पाठात् पर्युदासः, पठितानां संज्ञाकरणं सर्वाद्यानन्तर्यकार्यार्थम्' इति ।

तथा 'त्वतल्भ्यां नञ्समासः पूर्वविप्रतिषिद्धः त्वतलोः स्वरसिद्ध्यर्थम्' इत्यस्य परिहारार्थं यदुक्तं भाष्ये—

---

अस्यार्थः—नञ्समासस्योत्तरपदार्थप्राधान्ये सति—अनेकस्मादिति, अस इति चात्र स्मादादेशोऽत्वसत्वादिकञ्च सिध्यति । अन्यथा नञ्समासस्य पूर्वपदार्थप्राधान्येऽन्यपदार्थप्राधान्ये वा प्रागुक्तरीत्याऽभ्युपगते एकतदाद्यर्थानां तत्रोपसर्जनत्वेन सर्वनामसंज्ञा सर्वाद्यन्तर्गणकार्यञ्च न स्यात् ।

एवं तस्य उत्तरपदार्थप्राधान्य एव 'अब्राह्मणत्वम्, अब्राह्मणता इत्यादौ त्वतल्विधौ प्रधानानां सापेक्षत्वं युक्तम् । अन्यथा पूर्वपदार्थप्राधान्ये उत्तरपदार्थप्राधान्ये वा उपसर्जनस्य पदार्थान्तरसापेक्षत्वे सापेक्षसमर्थवदिति न्यायेन सामर्थ्याभावात् नञ्समासस्त्वतलौ च न स्युरिति ।

अयं भावः—अनेकमित्यत्र नञ्समासे एकशब्दार्थस्य प्रधानत्वे एकसंख्यत्वात् तदाश्रयम्= एकशब्दार्थैकत्वसंख्यानिमित्तकम् एकवचनम्, अनुपसर्जनत्वात् सर्वनामसंज्ञाकार्यं स्मादादि च भवति ।

यदि तु अनेकमित्यत्र पूर्वपदार्थस्यान्यपदार्थस्य वा प्राधान्यं स्यात्, तदैकशब्दार्थस्योपसर्जनत्वात् "संज्ञोपसर्जनप्रतिषेधः" इति सर्वनामसंज्ञाप्रतिषेधात् सर्वनामसंज्ञाकार्यं न स्यात् । तथा 'असः' इत्यत्रान्तर्गणकार्यं 'त्यदादीनामः' (पा० ७।२।१०२) इत्येवमादि तदर्थस्य=उत्तरपदार्थस्य प्राधान्ये सिध्यति । सर्वादिगणपाठो हि प्राधान्येन सार्वार्थ्येन=सर्वार्थवाचकत्वेन विशेष्यते सर्वार्थवाचकाः सर्वादयः सर्वनामानि इत्यभिप्रेत्योक्तं भाष्ये—

"पाठात् पर्युदासः, पठितानां संज्ञाकरणं सर्वाद्यानन्तर्यकार्यार्थम्" इति ।

अस्यार्थः—संज्ञोपसर्जनप्रतिषेध इति वार्त्तिकेन उपसर्जनीभूतानां सर्वादीनां सर्वादिगणपाठात् पर्युदासः प्रतिषेधः । सर्वादिगणपठितानां सर्वनामसंज्ञाकरणं सर्वाद्यानन्तर्यकार्यार्थम्=सर्वादीनामानन्तर्येणाव्यवधानेन क्रियमाणं यद् विभक्तिकार्यं स्मादादिकं तदर्थमिति । तथा—

"त्वतल्भ्यां नञ्समासः पूर्वविप्रतिषिद्धः, त्वतलोः स्वरसिद्ध्यर्थम्" इति ।

अस्यार्थः—त्वतल्भ्यां पूर्वं नञ्समासो भवति, यतो नञ्समासः पूर्वविप्रतिषिद्धः=पूर्वविप्रतिषेधगोचर इति । अयञ्च पूर्वविप्रतिषेधस्त्वतलोः स्वरसिद्ध्यर्थं समाश्रितः । नञ्समासे पूर्वविप्रतिषेधानाश्रयणे हि परत्वात् त्वतलोः कृतयोः पश्चात् नञ्समासे सति विशिष्टस्वरस्य बलीयस्त्वेन नञ्समासस्यैव स्वरः श्रूयेत, न तु त्वतलोरिति । अस्य वचनस्य परिहारार्थं यदुक्तं भाष्ये—

'नात्र त्वतलौ प्राप्नुतः । किं कारणम् ? असामर्थ्यात्' इति ।

तदुत्तरपदार्थप्राधान्ये युज्यते ।

तथाहि—अब्राह्मणत्वमित्यस्य निरस्तावयवविभागस्य लौकिकस्य शब्दस्यान्वाख्यानाय यदा विभागः क्रियते, तदा नञर्थस्य प्रतिषेधस्य भावस्य चापोद्धृतस्य ब्राह्मणादन्यस्य भाव इति, यदा युगपद्विवक्षा, तदा परत्वात् त्वतलौ स्याताम् । तयोः कृतयोः पुनः प्रसङ्गविज्ञानान्नञ्समासे समासस्वरः स्यात् । सति शिष्टत्वादव्ययपूर्वपदप्रकृतिस्वरः, प्रत्ययस्वरश्चेष्यत इति पूर्वविप्रतिषेधेनात्र नञ्समासे चोदिते परिहारोऽयं भाष्येऽभिहितः—नात्रेत्यादि ।

ब्राह्मणादन्यस्य भाव इति प्रतिषेधमपेक्षमाणो ब्राह्मणार्थस्तद्धितेनैकार्थीभावमनुभवितुं पूर्वमसमर्थ इति प्रथममत्र नञ्समासः क्रियते ।

ननु च भावार्थमपेक्षमाणोऽपि ब्राह्मणार्थः सापेक्ष एवेति नञ्समासोऽपि न स्यात् । नैतदस्ति । प्रधानमिदानीं सापेक्षमिति भवति वृत्तिः ।

तद्धिते तु प्रकृत्यर्थस्योपसर्जनस्य सापेक्षत्वम् । तदेतत् कथमुपपद्यते, यद्युत्तरपदार्थप्रधानो नञ्समासः । पूर्वपदार्थान्यपदार्थप्राधान्ये तु अभावप्रत्यययोरेकयोगक्षेमो नञ्समासः स्यात् । उभयत्रापि गुणस्य सापेक्षत्वादिति परिहारभाष्यं नोपपद्येतेत्युत्तरपदार्थप्रधानताया उत्कर्षः ।

---

"नात्र त्वतलौ प्राप्नुतः । किं कारणम् ? असामर्थ्यात्" इति ।

तद् उत्तरपदार्थप्राधान्य एव युज्यते ।

तथा हि—अब्राह्मणत्वमित्यस्य लौकिकस्य शब्दस्य निरस्तावयवविभागस्य साधुत्वान्वाख्यानाय यदाऽवयवतदर्थविभागः क्रियते, तदा नञर्थस्य प्रतिषेधस्य भावस्य च त्वतलाद्यर्थस्य ब्राह्मणादन्यस्य भाव इत्येवमपोद्धृतस्य यदा युगपद्विवक्षा, तदा परत्वात् त्वतलौ स्याताम् । तयोः कृतयोः पुनः प्रसङ्गविज्ञानान्नञ्समासे सति शिष्टत्वादव्ययपूर्वपदप्रकृतिस्वरलक्षणः समासस्वरः स्यात्, प्रत्ययस्वरश्चेष्यत इति पूर्वविप्रतिषेधेनात्र नञ्समासे चोदिते परिहारोऽयं भाष्येऽभिहितः, नात्रेत्यादि ।

ब्राह्मणादन्यस्य भाव इति—प्रतिषेधमपेक्षमाणो ब्राह्मणपदार्थः तद्धितेनैकार्थीभावमनुभवितुं पूर्वमसमर्थ इति प्रथममत्र नञ्समासः क्रियते ।

ननु च भावार्थमपेक्षमाणोऽपि ब्राह्मणार्थः सापेक्ष एवेति असामर्थ्येन नञ्समासोऽपि न स्यादिति चेद्, नैतदस्ति, प्रधानमिदानीं सापेक्षमिति भवति वृत्तिः = नञ्समासः ।

तद्धिते तु तद्धितप्रकृत्यर्थस्य तद्धितार्थे उपसर्जनस्य सापेक्षत्वमित्यसामर्थ्येन अब्राह्मणत्वमित्यत्र तद्धितो न स्यात् । तदेतत् कथमुपपद्यते, यदि उत्तरपदार्थप्रधानो नञ्समासः स्यात् । पूर्वपदार्थान्यपदार्थप्राधान्ये तु अभावप्रत्यययोरेकयोगक्षेमः=अभावे प्रत्यये चोभयत्रापि अप्रधानस्यैव ब्राह्मणपदार्थस्य सापेक्षत्वेनासामर्थ्यात् समानाप्रवृत्तिकः नञ्समासः स्यात् । उभयत्रापि= अभावे प्रत्यये च गुणस्यैव=अप्रधानस्यैव ब्राह्मणपदार्थस्य सापेक्षत्वात्=सापेक्षत्वेनासामर्थ्या-

ननु च नित्यशब्ददर्शने विभज्यान्वाख्याननयेऽपि "वाह ऊठ्"(पा० ६-४- ३२) इति लिङ्गाद् युगपत्सन्निधानेऽप्यन्तरङ्गबहिरङ्गयोरन्तरङ्गं बलवदिति नञ्सम्बन्धमात्राश्रयो नञ्समास एव पूर्वं भवति। सत्यमेतत्। भावार्थं त्वपेक्षमाणो ब्राह्मण उद्भूतव्यतिरेको नञा सम्बध्यत इति प्रधानमत्र सापेक्षमित्येतदेव युक्तम्। पूर्वविप्रतिषेधवचनं तु ज्ञापकमुक्तम्—'अतोऽन्यो भावप्रत्ययो नञ्समासात् प्राग् भवति' इति। तथा च तत्रोत्तरपदवृद्धिर्नञ्स्वरश्च भवति॥ २८१॥

अतोऽनन्तरं भाष्यम्—'किमत्र सङ्गृहीतम्, एकवचनम्'इति। तद् व्याचष्टे—

**एकस्य च प्रधानत्वात् तद्विशेषणसन्निधौ।**
**प्रधानधर्माव्यावृत्तिरतो न वचनान्तरम्॥२८२॥**

एकार्थस्य प्रधानत्वात् तन्निषेधेनानेक इत्यत्र बहुष्वपि प्रतिपाद्येषु प्रधानार्थानुयाय्येकवचनमेव भवति, न तु बहुवचनमित्यर्थः॥ २८२॥

---

दिति परिहारभाष्यं नोपपद्येतेति नञ्समासे उत्तरपदार्थप्रधानतायाः पूर्वपदार्थप्राधान्यान्यपदार्थप्राधान्यापेक्षया उत्कर्षः।

ननु च नित्यशब्ददर्शने=नित्याः शब्दाः इति दर्शने कल्पनया पदविभज्यान्वाख्याननयेऽपि सूत्राणां क्रमिकप्रवृत्तावपि"वाह ऊठ्" (पा० ६।४।१३२) इति सूत्रे ऊठ्ग्रहणात् लिङ्गाद् युगपत् सूत्रद्वयसन्निधानेऽन्तरङ्गबहिरङ्गयोरन्तरङ्गं बलीय इति नञ्सम्बन्धमात्राश्रयो नञ्समास एवान्तरङ्गत्वात् पूर्वं भवतीति भाष्ये किं पूर्वविप्रतिषेधवचनेनेति चेत्, सत्यमेतत्। त्वतलप्रत्ययार्थं भावार्थं तु अपेक्षमाणो ब्राह्मणः प्रकरणादिना उद्भूतव्यतिरेको नञा सम्बध्यत इति प्रधानमत्र सापेक्षमित्येतदेव दर्शनं युक्तम्। पूर्वविप्रतिषेधवचनन्तु ज्ञापकमुक्तम्=ज्ञापनार्थमुक्तं भाष्ये— "अतोऽन्यो भावप्रत्ययो नञ्समासात् प्राग् भवतीति। तथा च तत्रोत्तरपदवृद्धिर्नञ्स्वरश्च भवति। उदाहरणन्तु 'अनैश्वर्यम्' इत्यादिकं बोध्यमिति॥ २८१॥

अतोऽनन्तरं भाष्यम्—"किमत्र संगृहीतम्, एकवचनम्" इति अत्रेत्यस्य अनेकमित्यत्र इत्यर्थः। तद्भाष्यं व्याचष्टे—एकस्य चेति।

अस्यार्थः—एकस्य च=एकशब्दार्थस्य च, प्रधानत्वात् तद्विशेषणसन्निधौ तस्य एकशब्दार्थस्य विशेषणस्य नञाद्यर्थस्य सन्निधौ प्रधानधर्मस्य· एकत्वस्य अव्यावृत्तिः, अतो न वचनान्तरम्, न द्विवचनबहुवचने भवत इति।

अयं भावः—एकशब्दार्थस्य प्रधानत्वात् तन्निषेधेनानेक इत्यत्र बहुष्वपि प्रतिपाद्येषु प्रधानार्थानुयायि एकवचनमेव भवति, न तु द्विवचनं बहुवचनं वा।

एकोऽन्यार्थे प्रधाने वा प्रथमे केवले तथा।
साधारणे समानेऽल्पे संख्यायाञ्च प्रयुज्यते॥

इति कोशानुसारेण संख्यातिरिक्तेऽर्थे एके अनेके इति भवत्येव। तथा च कवयः प्रयुञ्जते— 'पतन्त्येनेके जलधेरिवोर्मय' इति। अत्रानेके इत्यस्य अप्रधानाः, अप्रथमाः, असाधारणाः, असमाना अनल्पा वा इत्यर्थ इति॥ २८२॥

ननु च द्व्यादयोऽत्रैकशब्दवाच्याः समारोपितैकत्वा इति नञा तत्रैकार्थप्रतिषेधे तदाधारस्य द्व्यादेः सम्प्रत्ययात्। तद्गतमेव वचनं न्याय्यमित्याशङ्क्याह—

**प्रधानमत्र भेद्यत्वादेकार्थो विकृतो नञा।**
**हित्वा स्वधर्मान् वर्तन्ते द्व्यादयोऽप्येकतां गताः ॥२८३॥**

नञ्विशिष्टोऽनेक इत्यत्रैकार्थः प्रधानम् विशेष्यत्वादिति तदाच्छुरितरूपाः परित्यक्तस्वभावधर्माः द्व्यादयो निमित्तसरूपतामापन्ना निमित्तानुविधानादेकत्वेनैव प्रतीयन्त इत्येकवचनमेव न्याय्यम् ॥ २८३ ॥

विरुद्धेषु द्वित्वादिषु कथमेकत्वयोग इति चेदाह—

**ब्राह्मणत्वं यथापन्ना नञ्युक्ताः क्षत्रियादयः।**
**द्वित्वादिषु तथैकत्वं नञ्योगादुपचर्यते ॥२८४॥**

---

ननु च अनेकमित्यत्र समारोपितैकत्वाद् द्व्यादय एकशब्दवाच्य इति नञा तत्र=द्व्यादिषु एकार्थप्रतिषेधे तदाधारस्य = एकत्वाधारस्य द्व्यादेः संप्रत्ययात् तद्गतमेव न्याय्यमित्याशङ्क्याह— प्रधानमत्रेति।

अस्यार्थः—अत्र=अनेकमित्यत्र, एकार्थः = समरोपितैकत्वो द्व्यादिपदार्थः, नञा=नञर्थेन प्रतिषेधेन विकृतः=विशेषितः, भेद्यत्वात्=विशेष्यत्वात् प्रधानमिति समारोपेणैकतां गताः= एकतादात्म्येन प्रतीयमाना द्व्यादयोऽपि स्वधर्मान् द्वित्वादिकान् हित्वा वर्तन्त इति एकवचनमेव अनेकमित्यत्र न्याय्यमिति।

अयं भावः—अनेक इत्यत्र नञविशिष्टः=नञर्थप्रतिषेधविशिष्ट एकपदार्थः=समारोपितैकत्वो द्व्यादिपदार्थः प्रधानम् विशेष्यत्वादिति तदाच्छुरितरूपाः=तदात्मना प्रतीयमानस्वरूपाः परित्यक्तस्वभावधर्माः=परित्यक्तस्वाभाविकद्वित्वादिकधर्माः द्वादयः पदार्था निमित्तसरूपतामापन्नाः=अध्यारोपितस्वप्रवृत्तिनिमित्तभूतैकत्वसरूपतामापन्नाः निमित्तानुविधानात्=प्रवृत्तिनिमित्तैकत्वानुविधानादेकत्वेनैव प्रतीयन्ते, न तु द्वित्वादिना इत्येकवचनमेवन्याय्यमिति ॥ २८३ ॥

विरुद्धेषु द्वित्वादिषु कथमेकत्वयोग इति चेदाह—ब्राह्मणत्वं यथाऽऽपन्ना इति।

अस्यार्थः—यथा क्षत्रियादयो नञ्युक्ता =नञर्थप्रतिषेधयुक्ताः ब्राह्मणत्वमापन्नाः=ब्राह्मणत्वारोपं प्राप्ताः, तथा नञ्प्रयोगाद् द्वित्वादिषु एकत्वमुपचर्यते आरोप्यत इति।

नञ्प्रयोगाद् ब्राह्मणशब्दो यथाऽब्राह्मण इत्यत्र क्षत्रियवृत्तिरवधार्यते, तथानेक इत्यत्रापि द्व्यादिवृत्तिरेकशब्दः। प्रतीयते ह्युत्तरपदार्थसदृशोऽर्थः। तत्र चाध्यारोपितो दुरुपदेशादिना निमित्तेनोत्तरपदार्थ इति सर्वत्र समानम् ॥ २८४ ॥

तथाहि—

**एकत्वयोगमासज्य स धर्मः प्रतिषिध्यते ।**
**द्व्यादिभ्यस्तेषु तच्छब्दो वर्तते ब्राह्मणादिवत् ॥२८५॥**

भ्रान्त्या द्व्यादावेकत्वमारोपितं नञा निवार्यते, न त्वेकशब्दः। तथाहि भ्रान्तिनिवारणं विवक्षितं न प्रतीयेतेति क्षत्रियादौ ब्राह्मणादिशब्दवदेकशब्दोऽत्र प्रयोगार्हः। असति ह्येकशब्दे द्व्यादिष्वेकत्वारोपाभावात् किं बाधितुं नञ् प्रयुज्येत ॥ २८५ ॥

तस्मान्नञो विषयप्रक्लृप्त्यर्थमेकशब्दः प्रयुज्यमानः प्रधानार्थ इति स्वधर्माननुवर्तते वृत्तिवाक्ययोरविशेषेणेत्याह—

**आविष्टसङ्ख्यो वाक्येऽसौ यथा द्व्यादौ प्रयुज्यते ।**
**वृत्तौ तस्य प्रधानत्वात् सा सङ्ख्या न निवर्तते ॥२८६॥**

---

अयं भावः—यथा ब्राह्मण इत्यत्र ब्राह्मणशब्दो नञ्प्रयोगात् क्षत्रियवृत्तिरवधार्यते ब्राह्मणसादृश्यात्, तथाऽनेक इत्यत्र एकशब्दोऽपि द्व्यादिवृत्तिः। नञ्समासे हि प्रतीयते उत्तरपदार्थसदृशोऽर्थः। तत्र च=अब्राह्मण इत्यत्र क्षत्रियादौ अनेक इत्यत्र द्व्यादिषु च दुरुपदेशभ्रान्त्यादिना निमित्तेन उत्तरपदार्थः=ब्राह्मणपदार्थः एकपदार्थश्च यथायथम् अध्यारोपित इति सर्वत्र समानमिति ॥ २८४ ॥

तथाहि अनेक इत्यत्र द्व्यादिषु अध्यारोपितमेकत्वं नञा निवार्यते, न तु एकशब्दस्तत्र निषिध्यत इत्याह—एकत्वयोगमासज्येति ।

अस्यार्थः—अनेक इत्यत्र द्व्यादिषु एकत्वयोगमासज्य=एकत्वसम्बन्धमध्यारोप्य स धर्मः=एकत्वरूपो धर्मः द्व्यादिभ्यो नञा प्रतिषिध्यते । तच्छब्दस्तु=एकशब्दस्तु, तेषु द्व्यादिषु अब्राह्मण इत्यादौ ब्राह्मणादिवद् वर्तते, नञः शब्दप्रतिषेधकत्वाभावादिति ।

अयं भावः—अनेक इत्यत्र भ्रान्त्या द्व्यादावेकत्वमारोपितं नञा निवार्यते, न त्वेकशब्दो निषिध्यते । तथाहि—द्व्यादिषु एकत्वभ्रान्तिनिवारणं विवक्षितम् । तत्र न प्रतीयतेति क्षत्रियादौ ब्राह्मणादिशब्दवदेकशब्दोऽनेक इत्यत्र प्रयोगार्हः । असति ह्येकशब्दे द्व्यादिष्वेकत्वारोपाभावात् किं बाधितुम् = निषेद्धुं नञ् प्रयुज्येतेति ॥ २८५ ॥

तस्मान्नञो विषयप्रक्लृप्त्यर्थम्=निषेध्यप्रतियोगिप्रसिद्ध्यर्थम् अनेक इत्यत्रैकशब्दः प्रयुज्यमानः प्रधानार्थः=प्रधानार्थवाचक इति स्वधर्मान् एकवचनादिकान् वृत्तिवाक्ययोरविशेषेणानुवर्तते, न एक इति वाक्ये, अनेक इत्यत्र वृत्तौ चेत्याह—आविष्टसंख्य इति ।

अस्यार्थः—यथा नैकं द्व्यादय इत्यादौ वाक्येऽसौ एकशब्दो द्व्यादौ आविष्टसंख्यः=अध्यारोपितस्ववाच्यैकत्वसंख्यः प्रयुज्यते, तथा वृत्तौ=अनेक इत्यादौ समासे तस्य=एकपदार्थस्य प्रधानत्वात् सा संख्या=एकत्वसंख्या न निवर्तत इति अनेक इत्यत्रैकवचनमेव भवतीति ।

एकं चेन्नङित्किती, नैकं द्व्यादय इति यथा वाक्ये सङ्ख्यान्तरेऽप्येकशब्दोऽपरित्यक्तस्वसङ्ख्य एव प्रयुज्यते, तथा समासेऽपि तदर्थस्य प्रधानत्वादनेक इत्यत्र स्वसङ्ख्यापरित्यागो नास्ति ॥ २८६ ॥

तत्परित्यागे तु विवक्षितार्थाप्रतीतिरित्याह—

प्रतिषेध्यो यथाभूतस्तथाभूतोऽनुषज्यते ।
वचनान्तरयोगे हि न सोऽर्थः प्रतिषिध्यते ॥२८७॥

प्रतिषेधविषयप्रक्लृप्त्यर्थमसदर्थमप्युत्तरपदं प्रयुज्यत इति यादृशोऽध्यस्तः प्रतिषेध्यः, तादृशार्थाभिधानायोत्तरपदमुपादीयते। द्व्यादौ चैकत्वं प्रतिषेध्यमित्युत्तरपदस्यैकवचने सत्ययं विवक्षितः प्रतिषेधोऽवगम्यते । द्विवचनाद्युपादाने त्वेकत्वं प्रतिषिध्यमानं न प्रतीयेत । तस्माद् विवक्षितार्थौपयिकत्वादेकवचनमेव न्याय्यम् ॥ २८७ ॥

'कथं पुनरेकस्य प्रतिषेधे द्विबहूनां सम्प्रत्ययः' इति भाष्यमेकत्वनिवृत्तिमात्रं प्रसज्यप्रतिषेधरूपमभिप्रेत्य प्रवृत्तं पर्युदासाश्रयणेन समर्थयते—

अशुक्ल इति कृष्णादिर्यथार्थः सम्प्रतीयते ।
सङ्ख्यान्तरं तथानेक इत्यत्राप्यभिधीयते ॥२८८॥

---

अयं भावः—यथा एकं चेन् ङित्किती, नैकं द्व्यादय इति वाक्ये समानाधिकरणपदवाच्यसंख्यान्तरसत्त्वेऽपि एकशब्दोऽपरित्यक्तस्वसंख्य एव प्रयुज्यते, तथाऽनेक इत्यत्र नञ्समासेऽपि तदर्थस्य = एकशब्दार्थस्य प्रधानत्वात् स्वसंख्यापरित्यागो नास्तीति ॥ २८६ ॥

तत्परित्यागे तु=स्वसंख्यापरित्यागे तु विवक्षितार्थाप्रतीतिरित्याह—प्रतिषेध्यो यथाभूत इति ।

अस्यार्थः—यथाभूतः = यादृशः उत्तरपदार्थः=अनेकः इत्यत्रैकवचनान्तपदबोध्यः प्रतिषेध्यः, तथाभूतः=तादृश एव अनुषज्यते, नञर्थेन संबध्यते। हि=यतो वचनान्तरयोगे सोऽर्थो न प्रतिषिध्यते, एकत्वरूपोऽर्थोऽनेक इत्यत्र वृत्तौ न निषेध्यतया प्रतीयत इति ।

अयं भावः—अनेक इत्यत्र नञा उत्तरपदार्थस्य प्रतिषिद्धत्वेनासदर्थमपि उत्तरपदं प्रतिषेधविषयप्रक्लृप्त्यर्थं प्रतिषेधप्रतियोगिप्रसिद्ध्यर्थं प्रयुज्यत इति यादृशः अध्यस्तः=आरोपितार्थः प्रतिषेध्यः, तादृशार्थाभिधानाय उत्तरपदं वाक्ये वृत्तौ वा उपादीयते। अनेक इत्यत्र च द्व्यादौ एकत्वं प्रतिषेध्यमित्युत्तरपदस्यैकवचने सत्ययं विवक्षित एकत्वप्रतिषेधोऽवगम्यते । द्विवचनाद्युपादाने तु एकत्वं प्रतिषिध्यमानं न प्रतीयते । तस्माद् विवक्षितार्थौपयिकत्वाद् विवक्षितार्थस्य एकत्वस्य प्रतिपत्तिसाधनत्वादेकवचनमेव न्याय्यमिति ॥ २८७ ॥

"पतन्त्यनेके जलधेरिवोर्मयः" इत्यादिकविप्रयोगदर्शनात् "कथं पुनरेकस्य प्रतिषेधे द्विबहूनां संप्रत्ययः" इति भाष्यमेकत्वनिवृत्तिमात्रं प्रसज्यप्रतिषेधरूपमभिप्रेत्य प्रवृत्तं हरिः पर्युदासाश्रयणेन समर्थयते—अशुक्ल इति कृष्णादिरिति ।

पर्युदासे शुक्लनिवृत्त्या नीलादयोऽविशेषेणाशुक्लशब्दाद् यथा प्रतीयन्ते, तथा द्व्यादयोऽप्येकसङ्ख्यानिवृत्त्याऽविशेषेणानेकपदादवगम्यन्ते ॥ २८८ ॥

एतदेव समर्थयितुं भाष्यम्—'प्रसज्यायं क्रियां गुणं वा ततः पश्चान्निवृत्तिं करोति। तद्यथा—आसय भोजय शाययानेकम्' इति। तद्व्याचष्टे—

**क्रियाप्रसङ्गात् सर्वेषु कर्मस्वङ्गीकृतेषु च।**
**एकस्मिन् प्रतिषिद्धेऽपि प्राप्तमन्यत् प्रतीयते ॥२८९॥**

क्रियापदमर्थसामर्थ्यात् साधनान्याक्षिपत्यविशेषेण। तथासयेत्युक्ते कर्मसामान्यमवगम्यते। तत्र विधिपूर्वकत्वान्निवृत्तेः क्रियासामर्थ्याक्षिप्तनानासङ्ख्याश्रयकर्मप्रसङ्गे सत्येकप्रतिषेधादप्रतिषिद्धस्य सङ्ख्यान्तरयोगिन एव साधनत्वमवबुध्यते ॥ २८९ ॥

---

अस्यार्थः—यथाऽशुक्ल इति पर्युदासे शुक्लनिवृत्त्या कृष्णादिरर्थः अविशेषेण अशुक्ल इति वृत्तिपदात् संप्रतीयते, तथाऽनेक इत्यत्रापि एकसंख्यानिवृत्त्याऽनेकपदादविशेषेण संख्यान्तरं द्वित्वादिकमभिधीयत इति।

अयं भावः—अशुक्ल इति पर्युदासे शुक्लनिवृत्त्याऽर्थात् प्राप्तया यथाऽविशेषेण नीलादयोऽशुक्लपदात् प्रतीयन्ते, तथाऽनेक इत्यत्र पर्युदासे द्व्यादयोऽपि एकत्वसंख्यानिवृत्त्याऽर्थात् प्राप्तयाऽनेकपदादविशेषेणावगम्यत इति ॥ २८८ ॥

एतदेव—'द्व्यादयोऽप्येकत्वसंख्यानिवृत्त्याऽविशेषेणानेकपदादवगम्यन्ते' इत्येतदेव समर्थयितुं भाष्यम्—

"प्रसज्यायं क्रियां गुणं वा ततः पश्चान्निवृत्तिं करोति। तद् यथा—आसय, भोजय, शाययानेकम्" इति।

अत्र प्रसज्य इत्यस्य एकत्वं द्व्यादिषु अध्यारोप्य इत्यर्थः। एतद्भाष्यम् व्याचष्टे—क्रियाप्रसङ्गादिति।

अस्यार्थः—साध्यसाधनयोः परस्परमव्यभिचारेण आसय, भोजय, शाययानेकमित्यत्र आसनादिक्रियाप्रसंगादविशेषेण सर्वेषु कर्मस्वङ्गीकृतेषु च आसनादिक्रियाभिः स्वसाधनतया स्वीकृतेषु च अनेकमित्यत्र नञा एकस्मिन् कर्मणि प्रतिषिद्धेऽपि प्राप्तं प्रसक्तमन्यद्=द्व्यादिकं कर्म प्रतीयते, तस्याप्रतिषेधादिति।

अयं भावः—आसय, भोजयेत्यादिकं क्रियापदमर्थसामर्थ्यात्=अर्थापत्तिप्रमाणाद् अविशेषेण=सामान्येन साधनानि आक्षिपति=आपादयति। तथाऽऽसयेत्युक्ते कर्मसामान्यं पूर्वमवगम्यते। तत्र निवृत्तेर्विधिपूर्वकत्वाद् आसनादिक्रियासामर्थ्याक्षिप्तनानासंख्याश्रयककर्मप्रसंगे सति एकस्य कर्मणः प्रतिषेधाद् अप्रतिषिद्धस्य संख्यान्तरयोगिन एव साधनत्वमवबुध्यते इति ॥ २८९ ॥

एतच्च कस्मिन् पक्षे कथ्यत इत्याह—

**क्रिया श्रुतिश्च प्रक्रान्ते प्रसज्यप्रतिषेधने ।**
**पर्युदासे तु नियतं सङ्ख्येयान्तरमुच्यते ॥२९०॥**

प्रसज्यप्रतिषेधे प्रतिषेधोपक्षयत्वाच्छब्दस्य क्रियासामर्थ्यात् प्रतिषिद्धवर्जं साधनोपादानम्। पर्युदासे तु शब्दादेवानेकमित्यस्माद्दुत्तरपदार्थसदृशनियतसाधनोपादानमित्युक्तमेव ॥ २९० ॥

'आसय शायय भोजय' इति प्रयोज्यप्रयोजकप्रैषोपादानेन विरुद्धक्रियानिर्देशस्योपादाने भाष्यकारस्याभिप्रायं व्याचष्टे—

**धात्वर्थः कर्मविषयो व्यपदिष्टः स्वसाधनैः ।**
**अर्थात् सर्वाणि कर्माणि प्रागाक्षिप्यावतिष्ठते ॥२९१॥**

---

एतच्च=समनन्तरपूर्वकारिकोक्तञ्च कस्मिन् पक्षे=प्रसज्यप्रतिषेधपक्षे, पर्युदासपक्षे वा कथ्यत इत्याह—क्रियाश्रुतिश्चेति ।

अस्यार्थः—'आसय, भोजय, शाययानेकम्' इत्यत्र प्रसज्यप्रतिषेधने अनेकमित्यत्र नञः प्रसज्यप्रतिषेधार्थकत्वपक्षे—आसनादिरूपा क्रिया, अनेकमित्यत्र नञ्रूपा श्रुतिश्च एकत्वप्रतिषेधाय द्व्यादिरूपसंख्येयानन्तरबोधनाय च प्रक्रान्ते, प्रक्रमः=उत्साहस्तद्वती, परस्परसहकारेण तत्परे इति यावत्। पर्युदासे तु नियतं संख्येयान्तरमेवोच्यते, न तु पूर्ववदेकत्वप्रतिषेधोऽपि। तत्रासनादिक्रियार्थसामर्थ्यात् सर्वाणि कर्माणि प्रसञ्जयति । नञ्श्रुतिस्तु एकं कर्म प्रतिषेधति इति अवशिष्टं द्व्यादिकं कर्म यथायथं योग्यतया तत्तत्क्रियाभिः सम्बध्यत इति ।

अयं भावः—'आसय, भोजय, शाययानेकम्' इत्यत्र प्रसज्यप्रतिषेधे=नञः प्रसज्यप्रतिषेधार्थकत्वे शब्दस्य प्रतिषेधोपक्षयत्वात्=प्रकृतवाक्यरूपस्य एकप्रतिषेधे परिसमाप्तत्वात् प्रतिषिद्धवर्जम्=प्रतिषिद्धमेकं कर्मवर्जयित्वा साधनाव्यभिचारासनादिक्रियासामर्थ्यादवशिष्टद्व्यादिककर्मरूपसाधनोपादानमासनादिक्रियासु। पर्युदासपक्षे तु आसनादिक्रियासहकारविरहिताद् अनेकमित्यस्मात् शब्दादेव केवलात् उत्तरपदार्थसदृशद्व्यादिरूपनियतसाधनोपादानमित्युक्तमेवेति ॥ २९० ॥

आशय, शायय, भोजय इति प्रयोज्यप्रयोजकप्रैषोपादानेन=प्रयोज्यस्य, प्रयोजकस्य, प्रैषस्य च उपादानेन परस्परविरुद्धक्रियानिर्देशस्योपादाने भाष्यकारस्याभिप्रायं व्याचष्टे—धात्वर्थः कर्मविषय इति ।

अस्यार्थः—'आसय, शायय, भोजयानेकम्' इति वाक्ये साध्यस्य साधनाव्यभिचारेण कर्मविषयको धात्वर्थ आसनादिः, अर्थात्, अर्थापत्तिप्रमाणबलात् सर्वाणि कर्माणि निषेधमनिषेध्यानि च, एकनिषेधात् प्राग् आक्षिप्य आपाद्य स्वसाधनैः सामान्येन व्यपदिष्टो व्यवहृतः, साध्यस्य साधना-

सकर्मको धात्वर्थ आसनादिभेदभिन्नः पूर्वं यदा निर्दिष्टः प्रयोज्यप्रयोजकादिस्वसाधनावच्छिन्नो विरुद्धक्रियास्वभावः, तदा तस्य विरुद्धानेकस्वभावस्यैकेन साधनेन साध्यत्वायोगात् पूर्वमेवानेकं साधनमुपात्तमित्येकनिषेधेन तस्यैव सम्प्रत्ययः ॥२९१॥

अनन्तरं भाष्यम्—"यद्यपि तावदत्रैतच्छक्यते वक्तुम्, यत्र क्रियागुणौ प्रसज्येते। यत्र तु खलु न प्रसज्येते तत्र कथमनेकं तिष्ठति" इति।

तत्र परिहारः—'भवत्येवंजातीयकेष्वप्येकस्य प्रतिषेधे बहूनां सम्प्रत्ययः' इति।

अत्र चोद्यभाष्ये प्रसज्यप्रतिषेधे निषेधमात्रोपक्षयाद् द्व्यादीनामप्रतिपत्तिः स्यादित्यर्थः।

पर्युदासे समानजातीयस्य सङ्ख्यान्तरस्यैकत्वसमारोपास्पदत्वात् सिद्धः सम्प्रत्यय इति परिहाराभिप्रायः।

एतद् व्याचष्टे—

**निर्ज्ञातसाधनाधारे यत्राख्याते प्रयुज्यते।**
**अनेक इति पश्चाच्च तिष्ठतीत्यनुषज्यते ॥२९२॥**

---

व्यभिचारात्। पश्चादनेकपदसम्बन्धे एकनिषेधे सति अवशिष्टद्व्यादिकर्मविषयकत्वेन स एवावतिष्ठते। तथा चैकनिषेधात् पूर्वं आक्षिप्तस्यैव निषेध्यानिषेध्यकर्मविषयकस्य धात्वर्थस्यैकनिषेधे सति अवशिष्टद्व्यादिकर्मविषयकत्वेनावस्थानमिति निष्कर्ष इति।

अयं भावः—आसनादिभेदभिन्नः सकर्मको धात्वर्थं एकनिषेधात् पूर्वं यदा निर्दिष्टः=प्रयोज्यप्रयोजकादिस्वसाधनविशिष्टः परस्परविरुद्धक्रियास्वभावः, तस्य विरुद्धानेकस्वभावस्य धात्वर्थस्यैकेन साधनेन साध्यत्वासंभवाद् एकनिषेधात् पूर्वमेवानेकसाधनमुपात्तमिति एकनिषेधेन तस्यैव अवशिष्टस्य द्व्यादिरूपस्य कर्मणः संप्रत्यय इति ॥ २९१ ॥

तदनन्तरं भाष्यम्—

'यद्यपि तावदत्रैतच्छक्यते वक्तुम्, यत्र क्रियागुणौ प्रसज्येते। यत्र तु खलु न प्रसज्येते तत्र कथमनेकं तिष्ठति' इति। अत्र प्रसज्येते इत्यतः प्राक् 'प्राक्' इति शेषः। अनेकं तिष्ठति इत्यत्र हि तिष्ठतिक्रियायाः प्रागनुपादानाद् न तस्या एकस्मिन् कर्तरि प्रसङ्गो यस्तत्र निषिध्येतेत्याशयः।

तत्र परिहारः—

"भवत्येवं जातीयकेष्वपि एकस्य प्रतिषेधे बहूनां संप्रत्ययः" इति

अत्र चोद्यभाष्ये = आक्षेपभाष्ये प्रसज्यप्रतिषेधे निषेधमात्रोपक्षयाद्=नञ्घटितस्य वाक्यस्य निषेधमात्रे परिसमाप्तेर्वाचकशब्दाभावाद् द्व्यादीनामप्रतिपत्तिः स्यादित्यर्थः।

परिहाराभिप्रायस्तु—

पर्युदासे नञः सादृश्यार्थकत्वेन समानजातीयस्य संख्यान्तरस्य द्व्यादिसंख्यारूपस्यैकत्वसमारोपाधिष्ठानत्वात् सिद्धो बहूनां संप्रत्यय इति।

एतद् भाष्यं व्याचष्टे—'निर्ज्ञातसाधनाधारे' इति।

अस्यार्थः—यत्र निर्ज्ञातसाधनाधारे=निर्ज्ञातो निश्चितः साधनरूप आधारो यस्याख्यातस्य

**साध्यत्वात् तत्र सिद्धेन क्रिया द्रव्येण लक्ष्यते ।**
**प्रागेवाङ्गीकृतं द्रव्यमतः पूर्वेण भिद्यते ।।२९३।।**

यत्र कुतश्चिद्धेतोरेकतयावधृतः साधनशक्त्यधिकरणभूतो द्रव्यात्मा आख्याते, तद्वाच्यायां क्रियायां पुनरयथार्थतावसायादनेक इति प्रतिषिध्य पश्चात् क्रियापदं तिष्ठतीति प्रयुज्यते। तत्र प्रागवधृतस्य शक्तिमतो द्रव्यस्य परार्थमुपादीयमानत्वात् तदात्मानुरूपां साध्यामाक्षिपति क्रियां, न क्रियासामर्थ्येनाक्षिप्यते द्रव्यमिति पूर्वस्मादस्य भेदः।

अत्रापि च ज्ञातसाधनविषयोपनिपातादेकप्रतिषेधस्य प्रतिषिद्धपरिहारेण प्रतीयते साधनम् ।

तदेवमश्रुतेऽपि पूर्वं क्रियापदे नैकनिषेधमात्र एव वाक्यं पर्यवस्यति, क्रियाकाङ्क्षणादिति तत्राप्येकनिषेधे सङ्ख्यान्तरस्य साधनत्वमवगम्यते ।। २९२-२९३ ।।

---

तस्मिन् तथाभूते । शब्दार्थयोरभेदादाख्यातार्थे आख्यातव्यपदेशोऽत्र आख्याते प्रयोक्ष्यमाणे पूर्वं— अनेक इति प्रयुज्यते, पश्चाच्च तिष्ठति इति । तत्र अनुषज्यते अनुबध्यते अनुप्रयुज्यते । तत्र क्रियायाः साध्यत्वात् साधनस्य च द्रव्यस्य क्रियायाः प्राक्सत्त्वेन सिद्धत्वात्, सिद्धेन द्रव्येण साधनरूपेण साध्यरूपा क्रिया लक्ष्यतेऽनुमीयते, साध्यसाधनयोः परस्परमव्यभिचारात् । यत एवमनुमीयमानया क्रियया प्राक् प्रयुक्तं द्रव्यं तत्साधनभूतं स्वप्रयोगात् प्रागेव साधनत्वेनाङ्गीकृतम्, अतः पूर्वेण क्रियापदप्रयोगात् प्राक्प्रयुक्तपदबोध्येन अनेकमित्येकनिषेधे द्व्यादिरूपेण द्रव्येण सा प्रयोक्ष्यमाणपदबोध्या तिष्ठत्यादिरूपा क्रिया कर्तृभेदाद्भिद्यत इति ।

अयं भावः—यत्र कुतश्चित् हेतोर्दोषादितः साधनशक्त्यधिकरणभूतो द्रव्यात्मा एकतयावधृतः=एकत्वेन गृहीत आख्याते=आख्यातवाच्यायां क्रियायां कर्तृभूतः । तद्वाच्यायां क्रियायां पुनरयथार्थतावसायात्=अयथार्थकर्तृकत्वेनायथार्थत्वनिश्चयाद् अनेक इति द्व्यादिषु अध्यारोपितमेकत्वं प्रतिषिध्य पश्चात् क्रियापदं तिष्ठतीति प्रयुज्यते । तत्र प्रागेकत्वेनावधृतस्य=गृहीतस्य द्व्यादिरूपस्य साधनशक्तिमतो द्रव्यस्य परार्थम्=साध्यस्वरूपक्रियार्थम् उपादीयमानत्वात्, अत्र आत्मानुरूपां साध्यां क्रियां तद् आक्षिपति, साधनत्वात् । अत्र क्रियासामर्थ्येन द्रव्यं नाक्षिप्यते, किन्तु द्रव्येणैव साधनभूतेन साध्यस्वभावा क्रिया आक्षिप्यत इति पूर्वस्मात्=आसय, शायय, भोजयानेकमित्यस्माद् अस्य=अनेकं तिष्ठतीत्यस्य भेदः ।

अत्रापि च=अनेकं तिष्ठतीत्यत्रापि च एकप्रतिषेधस्य ज्ञातसाधनविषयोपनिपातात् प्रतिषेधप्रतियोगित्वेन ज्ञातो यः साधनरूपः प्रतिषेधविषयस्तत्सम्बन्धात् प्रतिषिद्धपरिहारेण=प्रतिषिद्धैकसाधनपरिहारेण द्व्यादिरूपं साधनं प्रतीयते ।

तदेवमनेकं तिष्ठतीत्यादौ पूर्वमश्रुतेऽपि क्रियापदे नैकनिषेधमात्र एव वाक्यं पर्यवस्यति, प्रागुपात्तस्य साधनस्य साध्यस्वभावक्रियाकाङ्क्षादिति तत्रापि=अनेकं तिष्ठत्यत्रापि एकनिषेधे संख्यान्तरस्य=संख्येयान्तरस्य द्व्यादिरूपस्य तिष्ठतिक्रियासाधनत्वमवगम्यत इति ।। २९२-९३।।

एवं यत्रापि हि क्रियोपदेशे नास्ति तात्पर्यम्, तत्रापि तावत्सङ्ख्यान्तरं प्रतीयत एवेति दृष्टान्तितं भाष्ये। 'तद्यथा न न एकं प्रियं, न न एकं सुखम्' इति। तद् व्याचष्टे—

**सङ्ख्यैव प्रतिषेधेन सङ्ख्यान्तरमपेक्षते ।**
**वाक्येऽपि तेन नैकत्वमात्रमेव निवर्त्यते ॥२९४॥**

"न न एकं प्रियं, न न एकं सुखम्" इत्येतद् वाक्यम्। "आबाधे च" (पा० ८।१।१०) इत्यत्र द्विर्वचनम्, शत्रोः सुखेन प्रियेण च प्रयोक्तुराबाधः।

अत्र च क्रियापदस्याश्रवणात् सुखप्रियप्रतिषेधमात्रव्यापारेऽपि वाक्ये सङ्ख्यान्तराध्यासितानि सुखानि प्रियाणि च प्रतीयन्ते। एकं शत्रोर्न सुखम्, अपि तु बहूनि। एवं प्रियाणीति।

अयं ह्यत्र वाक्यार्थः—विशेषप्रतिषेधस्य शेषाभ्यनुज्ञाविषयत्वात्। सर्वसुखप्रियनिषेध एकपदोपादानमनर्थकं स्यात्। एवञ्च यत्र वाक्येऽप्येतत्सामर्थ्यम्, तत्र वृत्तावुत्तरपदार्थसदृशस्यार्थस्य पर्युदासे प्रतीतौ का विचिकित्सा ? तत्र ह्येकपदमेव द्विबहूनाहेति नैकत्वमात्रे निवृत्तिः, अपि तु तन्निवृत्तिविशिष्टस्य द्व्यादेः प्रतिपत्तिः सिद्धा ॥२९४॥

---

एवम्=अनेकं तिष्ठतीत्यत्रेव यत्रापि हि क्रियोपदेशे नास्ति तात्पर्यम्, नापि क्रियापदश्रवणम्, तत्रापि तावत्संख्यान्तरं प्रतीयत एवेति दृष्टान्तितं भाष्ये—

"तद्यथा न न एकं प्रियम्, न न एवं सुखम्" इति।

अत्र हि शत्रोर्बहूनि प्रियाणि सुखानि चावेक्षमाणस्य आबाधे द्विरुक्तिः। शत्रोरेकं प्रियं सुखञ्च न, किन्तु बहूनि प्रियाणि सुखानि चेति। तद्भाष्यं व्याचष्टे—संख्यैव प्रतिषेधेनेति।

अस्यार्थः—'न न एकं प्रियम्, न न एकं सुखम्' इत्यादौ वाक्येऽपि एकत्वरूपा संख्यैव, प्रतिषेधेन नञ्वाच्येन विशेष्यभूतेन युक्ता सती संख्यान्तरं द्व्यादिकं शाब्दबोधे स्वविशेष्यतयाऽपेक्षते। तेन वृत्तौ अनेकमित्यादौ नञ्समभिव्याहृतेन उत्तरपदेन नैकत्वमात्रमेव निवर्त्यते, अपि तु उत्तरपदेन एकपदेन स्वार्थनिवृत्तिविशिष्टं द्व्यादिकं संख्यान्तरमपि प्रतिपाद्यत इति।

अयं भावः—'न न एकं प्रियम्, न न एकम् सुखम्' इत्येतद् वाक्यमत्रोदाहरणम्। "आबाधे" च (पा० ८।१।१०) इति सूत्रेणात्र नञो द्विरुक्तिः। शत्रोः सुखेन प्रियेण च प्रयोक्तुराबाधः=पीडा।

अत्र च क्रियापदस्य कस्यापि अश्रवणात् सुखप्रियप्रतिषेधमात्रव्यापारवत्यपि प्रकृते वाक्ये संख्यान्तराध्यासितानि=संख्यान्तरेण द्वित्वादिना अधिष्ठितानि विशिष्टानि सुखानि प्रियाणि च प्रतीयन्ते। शत्रोरेकं न सुखम्, अपि तु बहूनि। एवं शत्रोरेकं न प्रियम्, अपि तु बहूनि प्रियाणि इति।

अत्र हि=न न एकं प्रियम्, इत्यादिवाक्ये हि अयं प्रागुक्तो वाक्यार्थः। न न एकं इत्यत्र संख्याविशेषरूपैकत्वप्रतिषेधस्य शेषाभ्यनुज्ञाविषयकत्वात्। सर्वसुखप्रियनिषेधे एकपदोपादानमनर्थकं स्यात्। एवं च यत्र वाक्येऽप्येतत् सामर्थ्यम्, तत्र अनेकमित्यादिवृत्तौ पर्युदासपक्षे उत्तरपदार्थसदृशार्थस्य प्रतीतौ का विचिकित्सा ? तत्र हि=अनेकमित्यादिवृत्तौ हि एकपदमेव द्विबहूनाहेति नैकत्वमात्रनिवृत्तिः, अपि तु तन्निवृत्तिविशिष्टस्य द्व्यादेः संख्यान्तरस्य प्रतिपत्तिः सिद्धेति ॥ २९४ ॥

ननु कथं द्व्यादिरेव नियमेन प्रतीयते। एकप्रतिषेधेऽन्यदेव शेषरूपं प्रतीयतामित्याशङ्क्याह—

**स्नेहान्तरादवच्छेदो यस्तथासत्तेः प्रतीयते।**
**तैलेन भोजने प्राप्ते न त्वन्यदुपसेचनम् ॥२९५॥**

यथा भोजनमतैलेन विधेयमिति चोदिते तैलप्रतिषेधसामर्थ्यात् सर्पिरादिस्नेहान्तराद्धेतोरवच्छेदो विशेषणं भोजनस्य प्रत्यासत्तेरेकजातीयत्वात् प्रतीयते, न दध्ना पयसा वा, तथेहाप्येकप्रतिषेधे समानकार्यं सङ्ख्यान्तरमेव सङ्ख्याजात्या प्रत्यासन्नं प्रतीयते, न त्वविशेषेण यत्किञ्चिदेवान्यदिति स्थितमुत्तरपदार्थप्रधानतायां नञ्समासस्यानेकमित्यस्योपपत्तिरिति। कथं तर्हि "वृत्तिभेदप्रयोजकं चित्तमेकमनेकेषाम्" इति भगवतः पतञ्जलेः प्रयोगः ?

---

ननु न न एकं प्रियमित्यादिवाक्ये अनेकमित्यादिवृत्तौ च कथं द्व्यादिरेव संख्यारूपो नियमेन प्रतीयते, एकप्रतिषेधेऽन्यदेव शेषरूपं संख्याविजातीयं प्रतीयतामित्याशङ्क्याह—स्नेहान्तरादवच्छेद इति।

अस्यार्थः—यथा तैलेन भोजने प्राप्ते भोजनमतैलेन विधेयमिति चोदिते तैलप्रतिषेधसामर्थ्यात् सर्पिरादिरूपात् स्नेहान्तरात् तद्धेतुको भोजनस्य अच्छेदो विशेषणम्। आसत्तेः सर्पिरादीनां स्नेहजातीयत्वेन संनिधानात् प्रतीयते, न तु अन्यत् तैलातिरिक्तमुपसेचनं पयो ध्यादिकं करणत्वेन भोजनविशेषणतया प्रतीयते, तथा न न एकं प्रियमित्यादिवाक्ये, अनेकमित्यादिवृत्तौ च नञा एकप्रतिषेधे समानकार्यं समानजातीयञ्च संख्यान्तरमेव द्व्यादिकं प्रतीयत इति।

अयं भावः—यथा भोजनमतैलेन विधीयतामिति केनचिच्चोदिते=आज्ञप्ते तैलप्रतिषेधसामर्थ्यात् सर्पिरादिकात् स्नेहान्तराद् हेतोः=तद्धेतुकः करणत्वेन भोजनस्यावच्छेदो विशेषणम्, सर्पिरादेः तैलेन सह स्नेहैकजातीयत्वात् प्रत्यासत्तेः=सन्निधानात् प्रतीयते, न तु अत्र दध्ना पयसा वा उपसेचनेन भोजनस्यावच्छेदः प्रतीयते, दधिपयसोरस्नेहत्वात्। तथेहापि=न न एकं प्रियमित्यादिवाक्ये, अनेकमित्यादिवृत्तौ च एकप्रतिषेधे समानकार्यं संख्याजात्याप्रत्यासन्नम्=संख्याजातीयत्वेन सन्निहितं संख्यान्तरमेव द्व्यादिरूपं प्रतीयते, न त्वविशेषेण=सामान्येन यत्किञ्चिदेवान्यत्=संख्याविजातीयं गोघटादिकमिति नञ्समासस्योत्तरपदार्थप्रधानतायां अनेकमित्येकवचनस्योपपत्तिरितिस्थितम् ? कथं तर्हि "वृत्तिभेदप्रयोजकं चित्तमेकमनेकेषाम्" इति भगवतः पतञ्जलेर्योगसूत्रकृतः अनेकेषाम् इति बहुवचनान्तप्रयोगः।

अस्य सूत्रस्यार्थः—योगिनः कायव्यूहनिर्माणे अनेकेषां चित्तानां कायव्यूहे संगृहीतानां वृत्तिभेदप्रयोजकमेकं प्रधानं चित्तं स्वकीये मातापितृजे शरीरेऽवस्थितं वृत्तिभेदप्रयोजकमिति। एकशब्दे एकशेषाश्रयेणेति ब्रूम इति हेलाराजोऽत्र समाधानमाह। एवञ्चानेकेषामित्यस्य अप्रधानानां चित्तानामित्यर्थः।

एकशेषाश्रयेणेति भ्रमः। एकनिषेधेऽपि हि कुतश्चिन्निमित्तान्नियतामेव व्यक्तिं सम्भावयेदिति सम्प्रत्येकशेषो न्याय्यः। भाष्यकृता त्वेकवचनं समर्थितम्, न तु बहुवचनं निवारितम्॥ २ ५॥

इदानीमन्यपदार्थप्रधानपक्षविचारायाह—

**एकार्थे वर्तमानाभ्यामसता ब्राह्मणेन च।**
**यदा जात्यन्तरं बाह्यं क्षत्रियाद्यपदिश्यते॥२९६॥**

तदावकल्पतेऽन्यपदार्थप्रधानो नञ्समास इति प्रकरणादवसेयम्। इहाब्राह्मणादिभिर्नञ्समासैरुत्तरपदार्थविपरीतवस्तुप्रत्यायनं दृश्यते। तत्र चान्वाख्यानप्रक्रियायां यदोत्तरपदोपादानाः समारोपितब्राह्मणाद्यर्थाः क्षत्रियादय इति नयः, तदोत्तरपदार्थप्राधान्यं निर्णीतम् 'प्राधान्येनाश्रिताः पूर्वम्' इत्यादिना।

यदा त्वसत्सामान्यवृत्तिरप्ययं नञ् सद्विशेषानिबन्धनया ब्राह्मणश्रुत्या सामान्यविशेषभावेनैकाधिकरण्येन संबन्धमनुभूय तत्संबन्धप्रापितार्थातिशयं बाह्यं पदान्तरोपादानं क्षत्रियाद्यनुपतति, न तावत्येव विश्राम्यति तदान्यपदार्थप्रधानो नञ्समासः।

---

हेलाराजस्तु "एकशेषाश्रयेण" इति स्ववाक्यमन्यथाव्याचष्ट। तथाहि—एकनिषेधेऽपि हि कुतश्चिन्निमित्तात् नियतामेव व्यक्तिम् अनेकपदवाच्यतया सम्भावयेदिति अनेकपदघटकैकपदस्य व्यक्तिवाचित्वेऽपि व्यक्तिबहुत्वमादाय संप्रति एकशेषो न्याय्यः।

वस्तुतस्तु भाष्यकृता अनेकमित्यत्रैकवचनं समर्थितम्, न तु अनेकेषामनेके इति तत्र तत्र दृश्यमानं बहुवचनं निवारितमिति अनेकं अनेके इति द्वयोरपि उपपत्तिर्बोध्येति॥ २९५॥

इदानीमन्यपदार्थप्रधानो नञ्समास इति पक्षविचारायाह—एकार्थे वर्तमानाभ्यामिति।

अस्यार्थः—असन् अविद्यमानो ब्राह्मणो ब्राह्मणव्यक्तिराश्रयभूता यस्य क्षत्रियस्य क्षत्रियजातेरिति विग्रहे एकार्थे क्षत्रियरूपेऽन्यपदार्थे वर्तमानाभ्यामसता=असदर्थबोधकेन नञा, ब्राह्मणेन=ब्राह्मणपदेन च यदा बाह्यमन्यपदार्थभूतं ब्राह्मणापेक्षया जात्यन्तरं क्षत्रियादि अपदिश्यते=व्यवह्रियते तदाऽन्यपदार्थप्रधानो नञ्समास इति पक्षोऽवकल्पत इति प्रकरणादवसेयमिति।

अयं भावः—अस्याः कारिकाया अन्ते "तदावकल्पतेऽन्यपदार्थप्रधानो नञ्समासः" इति शेषः प्रकरणादवसेयः। इहाब्राह्मणादिभिर्नञ्समासैरुत्तरपदार्थभूतब्राह्मणादिविपरीतस्य क्षत्रियादेर्वस्तुनः प्रत्यायनं दृश्यते। तत्र च शब्दान्वाख्यानप्रक्रियायां यदा समारोपितब्राह्मणाद्यर्थाः क्षत्रियादयः उत्तरपदोपादानाः=बहुव्रीहिसमासे उत्तरपदवाच्या इति नयः=सिद्धान्तः, तदा उत्तरपदार्थप्राधान्यं नञ्समासस्य निर्णीतम्, प्राधान्येनाश्रिताः पूर्वमित्यादिना।

यदा त्वसत्सामान्यवृत्तिरपि=असत्सामान्याभिधायकोऽपि अयं नञ् सद्विशेषनिबन्धनया ब्राह्मणत्वरूपसद्विशेषात्मकप्रवृत्तिनिमित्तवत्या ब्राह्मणश्रुत्या सह सामान्यविशेषभावेन ऐकाधिकरण्येन=सामानाधिकरण्येन सम्बन्धमनुभूय तत्सम्बन्धप्रापितार्थातिशयम्=तत्सम्बन्धेन नञर्थसम्बन्धेन प्रापितोऽर्थातिशयो ब्राह्मण्याध्यारोपलक्षणो यस्य तम् बाह्यम्=अन्यपदार्थं पदान्तरोपादानम्=समासघटकपदापेक्षयाऽन्येन पदेनोपादीयमानमभिधीयमानं क्षत्रियादिकमर्थमनुपतति=

तथा ह्यविद्यमानो ब्राह्मणो ब्राह्मणव्यक्तिराश्रयभूता यस्य क्षत्रियस्य क्षत्रियजातेरित्यस्या अन्यपदार्थभूताया वर्त्तिपदार्थाभ्यामभावब्राह्मणाभ्यामवच्छेद इति जात्यन्तरं बाह्यं भवति ॥ २९६ ॥

उत्तरपदार्थप्राधान्ये तु क्षत्रियादौ समारोपिताया ब्राह्मणजातेः प्रतिषेधात्, सदृशं क्षत्रियादिजात्यन्तरमुत्तरपदवाच्यमेव न बाह्यं भवति, बहुव्रीहाविवान्यपदार्थ इत्यस्याश्रुतेरन्तरङ्गे स्वपदार्थ एव युक्ता वृत्तिरित्याशयैतत्सदृशतत्पुरुषान्तरनिदर्शनेन व्युत्पादयति—

**श्यामेव शस्त्री कन्येति यथान्यद् व्यपदिश्यते ।**
**असन् ब्राह्मण इत्याभ्यां तथान्ये क्षत्रियादयः ॥२९७॥**

शस्त्रीव श्यामा शस्त्रीश्यामा कन्येति श्यामाशब्दस्य शस्त्र्यां वृत्तौ समासवाच्यमुपमेयमुक्तमिति तत्र यथा वर्त्तिपदाभ्यामनभिधीयमानापि कन्या समासेनाभिधीयते ।

यतः कन्याशब्देन सामानाधिकरण्यं प्रतिपद्यते समासः, तथासन्निति नञाऽसदर्थेन ब्राह्मण इति च तद्विशेषवचनेनानभिधीयमानोऽपि क्षत्रियः समासेनाभिधीयते ।

---

वाच्यत्वेनानुसरति, न तावत्येव=क्षत्रियादावन्यपदार्थे एव विश्राम्यति, अपि तु उत्तरपदार्थेऽन्वितं स्वार्थमपि असद्रूपमभिधत्ते, तदाऽन्यपदार्थप्रधानो नञ्समासः ।

तथाहि—असन्=अविद्यमानो ब्राह्मणो ब्राह्मणव्यक्तिराश्रयभूता यस्य क्षत्रियस्य क्षत्रियजातेरिति अस्याः अन्यपदार्थभूतायाः क्षत्रियजातेर्वर्तिपदार्थाभ्याम्=अब्राह्मणपदरूपनञ्समासघटकनञ्पदब्राह्मणपदवाच्याभ्यामभावब्राह्मणाभ्यां विशेषणतयाऽवच्छेद इति क्षत्रियादिकं जात्यन्तरं बाह्यं भवतीति ॥ २९६ ॥

ननु उत्तरपदार्थप्राधान्ये नञ्समासस्याभ्युपगम्यमाने क्षत्रियादौ गुणसाम्येन समारोपिताया ब्राह्मणजातेः प्रतिषेधात्, सदृशं जात्यन्तरं क्षत्रियादि उत्तरपदवाच्यमेव भवति, न बाह्यम्, बहुव्रीहाविवान्यपदार्थे इत्यस्याश्रुतेः, अतोऽन्तरङ्गे स्वपदार्थे एव युक्ता नञ्समासरूपा वृत्तिः, नत्वन्यपदार्थे इत्याशङ्क्यैतत्सदृशतत्पुरुषान्तरनिदर्शनेन व्युत्पादयति=नञ्समासस्यान्यपदार्थप्राधान्यं ग्राहयति—श्यामेव शस्त्रीति ।

अस्यार्थः—यथा श्यामेव शस्त्री-शस्त्रीव श्यामा इति विग्रहे जायमाने उपमितसमासे वर्तिपदाभ्यामनधीयमानमपि कन्यारूपमन्यद् वस्तु समासेन कन्येति व्यपदिश्यते, तथा असन् ब्राह्मण इत्याभ्यां पदाभ्यामनभिधीयमाना अपि अन्ये अन्यपदार्थभूताः क्षत्रियादयो नञ्समासेनाभिधीयन्त इति=सामान्यविहितं बहुव्रीहिं विशेषविहितत्वेन प्रबाध्य वचनबलादन्यपदार्थेऽप्ययं तत्पुरुष इति।

अयं भावः—शस्त्रीव श्यामा इति विग्रहे शस्त्री श्यामा कन्येति समासप्रयोगे श्यामाशब्दस्य शस्त्र्यां वृत्तौ वर्तिपदयोः कन्यानभिधायकत्वेन समासवाच्यं कन्यारूपमुपमेयमुक्तमिति तत्र यथा समासघटकपदाभ्यामनभिधीयमानाऽपि कन्या समासेनाभिधीयते, यतः समासोऽत्र कन्याशब्देन

तथा च यथोपमानसमासो विशेषविहितः सामान्यविहितेन बहुव्रीहिणा न बाध्यते, तथा नञ् समासोऽपीति वचनादन्यपदार्थेऽप्ययं तत्पुरुष इत्यर्थः ॥२९७॥

अत्रैव निदर्शनान्तरमाह—

**असास्नो गौरिति यथा गवयो व्यपदिश्यते ।**
**जात्यन्तरं न गोरेव सास्नाऽभावः प्रतीयते ॥२९८॥**

गौरवश्यं सास्नासंबद्ध इत्यसास्न इत्युक्ते यदि परं सास्नामात्रमस्य नास्ति, परिशिष्टावयवसंनिवेशसाम्यमिति गोसदृशस्य गवयस्य प्रतिपत्तिः, न गोरेव प्रतिषिद्धसास्नायोगस्य, अतो वाक्यात् प्रतीतिर्गवयसामानाधिकरण्याद् । एवमब्राह्मण इत्युक्ते जात्यन्तरं क्षत्रियोऽवगम्यते । ब्राह्मणजातिमात्रनिषेधे परिशिष्टतद्धर्मसाम्यप्रतिपत्तेः ॥२९८॥

तथा—

**तुल्यरूपं यथाख्यातं कण्टकै(कङ्कटै)र्भेदहेतुभिः ।**
**खदिरं जातिभेदेन खर्जूरात् (बर्बुरात्) प्रतिपद्यते ॥२९९॥**

---

सामानाधिकरण्यं प्रतिपद्यते, तथासन्निति असदर्थेन नञा ब्राह्मण इति च तद्विशेषवचनेन = असदर्थविशेषब्राह्मणवाचिना ब्राह्मणशब्देन अनभिधीयमानोऽपि क्षत्रियः नञ्समासेनाभिधीयते ।

तथा च यथा उपमानसमासो विशेषविहितत्वाद् बहुव्रीहेर्बाधकः अन्यपदार्थे सामान्यविहितेन बहुव्रीहिणा न बाध्यते, तथा नञ्समासोऽपि इति वचनादन्यपदार्थेऽप्ययं नञ्समासरूपस्तत्पुरुष इति ॥ २९७ ॥

अत्रैव = पर्युदासार्थकनञ्समासेऽब्राह्मणः अनेक इत्यादौ एव निदर्शनान्तरम् = प्रसज्यप्रतिषेधार्थकनञ्समासरूपम् असास्नो गौरित्येवंरूपमन्यं दृष्टान्तं नञ्समासत्वेनैकजातीयम् आह—असास्नो गौरिति यथेति ।

अत्र गोपदं गौण्या लक्षणया गवयमाह, गोः सास्नासम्बन्धनियमात् ।

अस्यार्थः—यथा असास्नो गौरिति अत्र गोपदेन गौण्या लक्षणया गवयो जात्यन्तरं गुणसाम्येन गोत्वमारोप्य गौरिति व्यपदिश्यते । असास्न इति च, सास्नामात्रमस्य नास्तीति । न तु गोरेव सास्नाऽभावः प्रतीयत इति ।

अयं भावः—गौरवश्यं सास्नासम्बद्ध इति विज्ञातारं प्रति असास्न इत्युक्ते यदि परम् = केवलं सास्नामात्रमस्य नास्ति,' परिशिष्टावयवसन्निवेशसाम्यं त्वस्ति इति त्यागो सदृशस्य गवयस्य प्रतिपत्तिः, न गौरेव प्रतिषिद्धसास्नासम्बन्धस्यातो वाक्यात् प्रतीतिः, असास्नो गौरयमिति गवयसामानाधिकरण्यात्, एवमब्राह्मण इत्युक्ते ब्राह्मणजातिप्रतिषेधेन जात्यन्तरं क्षत्रियोऽवगम्यते, ब्राह्मणजातिमात्रनिषेधेन परिशिष्टब्राह्मणधर्मैः साम्यप्रतिपत्त्या तद्धर्माश्रयक्षत्रियस्य प्रतिपत्तिसम्भवादिति । अत्र जात्यन्तरस्य प्रतिपत्तिमात्रे दृष्टान्तदार्ष्टान्तिकभाव इति ॥ २९८ ॥

बहुधर्मसाम्येऽपि यत्किञ्चिद्धर्मव्यतिरेकेण जातिभेदमाने संप्रति दृष्टान्तमाह—तुल्यरूपं यथाऽऽख्यातमिति ।

खदिरखर्जूरौ (खदिरबर्बुरौ) गौरकाण्डौ सूक्ष्मपर्णावित्यभेदेन पूर्वमाख्याते सदृशौ खदिरखर्जूरौ (खदिरबर्बुरौ) प्रतिपद्य पश्चात् कण्टकवान् (कङ्कटवान्) खदिर इत्यभिधाने कङ्कटानां खर्जूरेऽभावात् (कङ्कटानां बर्बुरेऽभावात्) ततः खदिरस्य भेदहेतुभ्यस्तेभ्यो विशेषः प्रतिपद्यते। तथा च खदिरः खर्जूरादन्यः (बर्बुरादन्यः) एव, न तु कण्टकादि (कङ्कटादि) संबन्धमधिकं तस्यैव प्रतिपद्यते, तथा ब्राह्मणधर्मैः सादृश्यमवधार्य क्षत्रिये ब्राह्मणत्वावसायाद् ब्राह्मणशब्दे प्राप्ते कथ्यते नायं ब्राह्मण इति जातिभेदमात्रम्, अन्यत् सर्वं सदृशमिति जात्यन्तरमिति प्रतीयत इति ॥२९९॥

---

इयञ्च कारिका—"तथा" इत्येतावन्मात्रमुक्त्वाऽवतारिता हेलाराजेन। अस्याः पाठस्त्वेवं-विधो हेलाराजीये—

> तुल्यरूपं यथाऽऽख्यातं कण्टकैर्भेदहेतुभिः।
> खदिरं जातिभेदेन खर्जूरात् प्रतिपद्यते॥ इति।

एवंविधस्तु पाठो युक्तः—

> तुल्यरूपं यथाऽऽख्यातं कण्टकैर्भेदहेतुभिः।
> खदिरं जातिभेदेन बर्बुरात् प्रतिपद्यते॥ इति।

इयं च कारिका व्याख्याता हेलाराजेन।

तत्र एवं व्याख्यानं तु युक्तम् "खदिरबर्बुरौ गौरकाण्डौ सूक्ष्मपर्णावित्यभेदेन पूर्वमाख्यायते सदृशौ खदिरबर्बुरौ प्रतिपद्य पश्चात् कङ्कटवान् खदिरबर्बुरौ इत्यभिधाने कङ्कटानां बर्बुरेऽभावात् ततः खदिरस्य भेदहेतुभ्यस्तेभ्यो विशेषः प्रतिपद्यते। तथा च खदिरो बर्बुरादन्य एव, न तु कङ्कटादिसम्बन्धमधिकं तस्यैव प्रतिपद्यते" इति।

'तथा ब्राह्मणधर्मैः सादृश्यमवधार्यते' इत्यादिकः 'जात्यन्तरमिति प्रतीयते इति' इत्यन्तस्तु पाठः साधुरेव। खदिरबर्बुरौ गौरकाण्डौ सूक्ष्मपर्णौ, कंकटवान् खदिर इति भाष्यम्, लोकञ्चावेक्ष्येदं सर्वं मयोक्तम्।

लोके हि खदिरबर्बुरौ समानौ दृष्टौ, खदिरे तु कङ्कटो विशेषः। भिन्नाः शुष्काश्च त्वचः कङ्कटपदेनोच्यन्ते। बर्बुरः श्यामो गौरश्चेति द्विधा। तत्र श्यामबर्बुरे कङ्कटसम्भवेऽपि गौरबर्बुरे स नास्त्येव। श्यामबर्बुरस्तु खदिरात् श्यामत्वादेव भिद्यते।

अस्याः कारिकाया अयमर्थः—यथा गौरकाण्डत्वसूक्ष्मपर्णत्वादिभिर्धर्मैर्बर्बुरेण तुल्यरूपमाख्यातं खदिरं भेदहेतुभिः कङ्कटैः स्वगतैर्बर्बुराद् जातिभेदेन प्रतिपद्यते जनः, तथा बहुब्राह्मणधर्मसाम्येऽपि याजनाध्यापनाद्यभावाद् ब्राह्मणजातिभेदेन क्षत्रियं प्रतिपद्यते जन इति दार्ष्टान्तिके समन्वय इति। यत्तु "दार्ष्टाऽन्तिकमाह" इत्यग्रिमकारिकाया अवतरणमाह—हेलाराजः, तन्न; "तथा ब्राह्मणधर्मैः सादृश्यमवधार्यते" इत्यादिकेन दार्ष्टान्तिकपरेण स्वग्रन्थेन अत्रत्येन विरोधाद् इति॥ २९९॥

दार्ष्टान्तिकमाह—

**अविद्यमानब्राह्मण्यो यादृशो ब्राह्मणो भवेत् ।**
**अङ्गीकृतोपमानेन तथान्यार्थोऽभिधीयते ॥३००॥**

शस्त्री श्यामा कन्येति यथा वर्तिपदाभ्यामनुपात्ता कन्याभिधीयमानोपमानोपमेयभावमवगमयति, असास्नो गौरिति च सास्नावर्जमवयवसादृश्यं गोगवययोरर्थान्तराभिधाननिबन्धनम्, कङ्कटवर्जं च गौरकाण्डादिसादृश्यमेव विवक्षितमिति सर्वत्रोपमानगर्भमन्यार्थाभिधानम्, तथाऽब्राह्मण इत्यत्रापि । तथा च ब्राह्मणजातिवर्जमन्यैर्धर्मैः सादृश्यात् क्षत्रियादिरेवान्योऽर्थोऽभिधीयते ।

तथाहि—वैश्यः क्षत्रियो वा ब्राह्मण इवायमब्राह्मणः । तत्र सर्वथा भेदेऽभेदे वा नास्ति सादृश्यमिति गोगवयवत् कथञ्चिद्भेदाभेदावनुसर्तव्यौ ।

यथा हि ब्राह्मणः कुतश्चिन्निमित्तादपोद्धृतब्राह्मण्यसामान्यस्तथाजातीयकोऽयमित्यर्थः । ब्राह्मण्यस्यापि हि संबन्ध इत्यब्राह्मण इत्यभिधानं कथमिव क्षत्रियादेर्न स्यादि-

---

अब्राह्मण इत्यत्र नञ्समासेऽन्यार्थाभिधाने उपपत्त्यन्तरमाह—अविद्यमानब्राह्मण्य इति ।

अस्यार्थः—पूर्वपक्षिमसन्ध्योपासनापरित्यागात्, शूद्रायाः स्वशयनारोपणात्, अभक्ष्यभक्षणात्, अपेयपानात्, अगम्यागमनाद्वा कुतश्चिन्निमित्ताद् अविद्यमानब्राह्मण्यः, अविद्यमानब्राह्मणत्वजातिकः, ब्राह्मणत्वजात्यतिरिक्तैर्धर्मैर्यादृशो ब्राह्मणो भवेत्, तथा तादृशः, अङ्गीकृतोपमानेन विशिष्टोऽन्यार्थः क्षत्रियादिरभिधीयते । कुतश्चिन्निमिताद् ब्राह्मणत्वजात्यारहितोऽन्यैश्च ब्राह्मणधर्मैः सहितो यो ब्राह्मणः स इवायमब्राह्मणक्षत्रियादिरिति ।

अयं भावः—शस्त्रीश्यामा कन्या इत्यत्र यथासमासघटकाभ्यां शस्त्रीश्यामापदाभ्यामनुपात्ता=अवाच्या कन्यासमासेनाभिधीयमाना श्यामत्वेन साधारणगुणेन शस्त्रीकन्ययोरुपमानोपमेयभावमवगमति, असास्नो गौरिति च सास्नावर्जम्=सास्नां विहाय अवयवसादृश्यं गोगवयपदयोरर्थान्तराभिधाने निबन्धनम्=निमित्तम्, कङ्कटवर्जञ्च खदिरबर्बुरयोर्गौरकाण्डादिसादृश्यमेव विवक्षितमिति सर्वत्रोपमानगर्भमन्यार्थाभिधानम्, तत्राऽब्राह्मण इत्यत्रापि । तथा च ब्राह्मणजातिवर्जयित्वाऽन्यैधर्मैः तपःश्रुतादिभिः सादृश्यात् क्षत्रियादिरेवान्योऽर्थोऽभिधीयते ।

तथा हि—वैश्यः क्षत्रियो वा ब्राह्मण इवायमब्राह्मणः । ब्राह्मणत्वजातिरहितोऽप्ययं तपःश्रुतादिभिर्ब्राह्मण इवेत्यर्थः । तत्र सर्वथा भेदेऽभेदे वा नास्ति सादृश्यम्, सर्वथाभेदे वैधर्म्यात्, सर्वथाऽभेदे प्रतियोग्यनुयोगिरूपनिरूपकद्वयराहित्यात् । एवञ्च गोगवयवत् कथञ्चिद् भेदाभेदावनुसर्तव्यौ ।

यथा हि ब्राह्मणः कुतश्चिन्निमित्तात् प्रागुपवर्णिताद् अपोद्धृतब्राह्मणसामान्यः=निरस्तब्राह्मणजातिकः, तथाजातीयकोऽयम्=तादृशोऽयमिति । ब्राह्मणत्वजात्यभावेऽपि क्षत्रियत्वस्येव ब्राह्मण्यस्यापि हि=ब्राह्मणधर्मस्य तपःश्रुतादेरपि हि क्षत्रिये सम्बन्ध इति अब्राह्मण इत्यभिधानम्=नञा ब्राह्मणत्वजातिनिरासः, ब्राह्मणपदेन च ब्राह्मणधर्मस्य तपःश्रुतादिः सम्बन्धः

त्यतिशयोक्तिगर्भमेतदुक्तम् । तदेवमुपमानोपमेयभावमङ्गीकृत्य नञ्समासः क्षत्रियादिजातिभेदोपादानमर्थमासादयति । दृष्टश्च सादृश्यान्तर्भावो नञ्समासे । तद्यथा— 'अवर्षा हेमन्त' इति । अत्र हि नञ्समासे वर्षासदृशो हेमन्तोऽभिधीयते ॥३००॥

कथमत्र सादृश्यमित्याह—

**अवृष्टयो यथावर्षा नीहाराभ्रसमावृताः ।**
**तद्रूपत्वात् स हेमन्त इत्यभिन्नः प्रतीयते ॥३०१॥**

न वर्षा अवर्षा हेमन्तो वर्षासदृश इत्यर्थः । अविद्यमानवर्षणक्रिया यथा वर्षाः प्रकीर्यमाणनीहारनिकराः प्रलम्बमाननीलघनाच्छादितदिगन्तराः । तथायं हेमन्तस्तमःसन्ततितिरस्कृतालोक इत्येवंविधवर्षासादृश्याद् वर्षा इत्यभिधीयते । ताद्रूप्येण स्वपदार्थेऽपि ह्ययं तत्पुरुषो व्युत्पादितो गर्भीकृत्योपमामन्यपदार्थे वर्तते ।

---

प्रतीयते इत्यब्राह्मण इत्यभिधानम्, कथमिव क्षत्रियादेर्न स्यादितित्यतिशयोक्तिगर्भमेतदुक्तम्=ब्राह्मणत्वजात्यभावेऽपि तपःश्रुतादिभिर्ब्राह्मण इवेत्यर्थमवबोधयितुमविद्यमानब्राह्मण्यो यादृशो ब्राह्मणो भवेदित्यादिकमुक्तम् ।

तदेवमुपमानोपमेयभावमङ्गीकृत्य अब्राह्मण इति नञ्समासः क्षत्रियादिजातिभेदोपादानम्=क्षत्रियादिजातिभेदेन स्वविशेष्यतया उपादीयमानमर्थं वाच्यतयाऽऽसादयति । दृष्टश्च सादृश्यान्तर्भावो नञ्समासे । तद्यथा अवर्षा हेमन्त इति । आसारराहित्येन वर्षाभिन्नोऽपि तुषारपातेन वर्षासदृश इत्यर्थे हेमन्तोऽभिधीयत इति ॥ ३०० ॥

'अवर्षा हेमन्तः' इत्यत्र कथं सादृश्यं प्रतीयते इत्याशङ्क्याह—अवृष्टयो यथा वर्षा इति ।

अस्यार्थः—यथा अवृष्टयः=अविद्यमानवर्षणक्रियाः नीहाराभ्रसमावृताः, नीहारेण=मिहिकया, अभ्रेण च समावृताः-वर्षाः तथा तमःसन्ततितिरस्कृतालोको हेमन्तः, तद्रूपत्वात्=वर्षासादृश्यात् स इति वर्षा हेमन्त इति अभिन्नः प्रतीयते ।

तथा चायमत्र निष्कर्षः । स्वपदार्थे वर्षासादृश्यरूपे व्युत्पादितोऽयं नञ्समासः उपमानोपमेयभावं गर्भीकृत्यान्यपदार्थे वर्तत इति अन्यपदार्थे अस्य व्युत्पादनाभावात् नास्य बहुव्रीहिणा सह बाध्यबाधकभावचिन्तेति ।

अयं भावः—न वर्षा अवर्षा हेमन्तो वर्षासदृश इत्यर्थः । अविद्यमानवर्षणक्रियावर्षाः प्रकीर्यमाणनीहारनिकराः=पतन्मिहिकासाराः प्रलम्बमाननीलघनाच्छादितदिगन्तराः, तथायं हेमन्तस्तमःसन्ततितिरस्कृतालोक इत्येवंविध वर्षासादृश्याद्=तमःसन्ततितिरस्कृतालोकत्वरूपवर्षासादृश्याद् हेमन्तो वर्षा इत्यभेदेनाभिधीयते । अन्यपदार्थे इव ताद्रूप्येण =वर्षासादृश्येण स्वपदार्थेऽपि वर्षासादृश्यैः हृयं तत्पुरुषः प्रथमं व्युत्पादितो गर्भीकृत्योपमानं पश्चाद् अन्यपदार्थे वर्तते ।

न त्वविद्यमाना वर्षा वर्षात्वमस्येत्युपक्रम एवान्यपदार्थे व्युत्पाद्यते। उपसर्जनह्रस्वत्वप्रसङ्गात्। एवं गर्भीकृतोपमा नञ्समासाः प्रक्रियायामन्यपदार्थप्रधानविषया इत्येकेषां दर्शनम् ॥३०१॥

अपरे ब्राह्मणादीनां सर्वेषां जातिवाचिनाम्।
द्रव्यस्यान्यपदार्थत्वे नञा योगं प्रचक्षते ॥३०२॥

जातिपदार्थपक्षे ब्राह्मणादयः शब्दा जातिमेवाधारविविक्तां प्राधान्येनाचक्षत इति वर्तिपदेन द्रव्यस्यानुपादानात् तदभिधायी समासोऽन्यपदार्थप्रधानो भवति। असन् ब्राह्मणोऽविद्यमानं ब्राह्मण्यं क्षत्रियद्रव्यलक्षणेऽर्थेऽसावब्राह्मण इति जातिवाचिना ब्राह्मणशब्देन सह तत्पुरुषः।

तत्र ब्राह्मणजातेर्यत्राश्रयान्तरे संभाव्यते समवायस्तत्रैव निषेधः समुचितः, नात्यन्तविजातीय इति क्षत्रियादिद्रव्यमेवान्यपदार्थ उक्तः ॥३०२॥

---

नत्वविद्यमाना वर्षा वर्षात्वमस्येत्युपक्रम एव=प्रारम्भ एव; अन्यपदार्थे व्युत्पाद्यते। गोस्त्रियोरुपसर्जनस्य' (पा० १।२।४८) इत्युपसर्जनह्रस्वप्रसङ्गात्। एवं गर्भीकृतोपमाना नञ्समासा व्युत्पादनावसरे प्रक्रियायामन्यपदार्थप्रधानविषयाः=अन्यपदार्थप्रधानार्थवाचकाः, नतु सिद्धास्तथा इत्येकेषां दर्शनमिति ॥ ३०१ ॥

असन् ब्राह्मणो ब्राह्मण्यं क्षत्रियादिद्रव्ये इति स्वपदार्थ एव नञ्समासोऽन्यपदार्थस्तु उपाधिः समासवाच्य इति वर्तिपदयोरन्यपदार्थवृत्तित्वाभावाद् बहुव्रीहेरत्राप्राप्तिरित्यपरेषां मतं आह=अपरे ब्राह्मणादीनामिति।

अस्यार्थः—अपरे पुनर्द्रव्यस्य क्षत्रियादेरन्यपदार्थत्वे उपाधिभूते सति सर्वेषां जातिवाचिनां ब्राह्मणादिशब्दानां नञा योगं प्रचक्षत इति।

अयं भावः—जातिः पदार्थ इति पक्षे ब्राह्मणादय शब्दा आधारविविक्तां=आश्रयाद् बुद्धचा अपोद्धृतां जातिमेव प्राधान्येनाचक्षत इति वर्तिपदेन=समासघटकपदेन द्रव्यस्यानुपादानात्=अनभिधानात् तदभिधायी समासोऽन्यपदार्थप्रधानो भवति। असन् ब्राह्मणो अविद्यमानं ब्राह्मण्यं क्षत्रियद्रव्यरूपेऽर्थेऽसौ अब्राह्मणः अविद्यमानं ब्राह्मण्यम् अब्राह्मण इति जातिवाचिना ब्राह्मणशब्देन सह नञ्स्तत्पुरुषः।

तत्र ब्राह्मणजातेर्यत्राश्रयान्तरे ब्राह्मणसदृशे क्षत्रियादौ समवायः संभाव्यते तत्रैव तस्य निषेधः समुचितो नात्यन्तविजातीये लोष्टादौ इति क्षत्रियादिद्रव्यमेवान्यपदार्थ उक्तो न तु लोष्टादिरिति ॥ ३०२ ॥

अस्मिन् दर्शने बहुव्रीहिनञ्समासयोर्विषयविवेकोऽपि कल्पत इत्याह—

**न चैवंविषयः कश्चिद् बहुव्रीहिः प्रकल्पते ।**
**अगुरश्च इति व्याप्तिर्नञ्समासेन यस्य न ॥३०३॥**

एवंविषयो जात्यवच्छिन्नान्यपदार्थद्रव्याभिधायी नञ्समासवन्न कल्पते बहुव्रीहिः, मत्वर्थे भूमादौ बहुव्रीहिविधानात्। अविद्यमाना गावो यस्येत्यगुरयमश्व इत्ययं बहुव्रीहिर्यस्य नञ्समासेनानेन गोचरो नाक्रान्तः, स कल्पत इत्यर्थादुक्तं भवति। अविद्यमानो गौर्गोत्वमस्याश्वस्य सोऽयमगौरश्व इति हि नञ्समासप्रतिपत्तिः। उत्तरपदार्थविजातीयस्य नञ्समासेन स्वभावादभिधानात्। अविद्यमाना गावो यस्येति तु मत्वर्थे बहुव्रीहिरित्यनयोर्विषयविवेकः सिद्धः।

यदा तु 'नञोऽस्त्यर्थानां बहुव्रीहिर्वा चोत्तरपदलोपश्च' इति प्रतिपदविहितो नञाश्रयो बहुव्रीहिस्तदैवं व्याख्यायते नञ्समासेन यस्य न व्याप्तिरवकाशदानं स एवं

---

अस्मिन् दर्शने बहुव्रीहिनञ्समासयोर्विषयविभागोऽपि कल्पते इत्याह—न चैवं विषय इति।

अस्यार्थः—एवं विषयः=नञ्समासस्येव जात्येकत्वावच्छिन्नान्यपदार्थद्रव्याभिधायी कश्चित् कोऽपि बहुव्रीहिर्न प्रकल्पते, अविद्यमानो गौर्गोत्वमस्याश्वस्येति विग्रहे अगौरश्व इति नञ्समास एव न बहुव्रीहिः। मत्वर्थे भूमास्त्यर्थादौ उपाधिभूते सति बहुव्रीहिविधानात्। नञ्समासे च तदभावात्। यस्य नञ्समासेन न व्याप्तिः स बहुव्रीहिः प्रकल्पते। अविद्यमाना गावो यस्य समीपे सः अगुरश्व इति। समीप एवावयवत्वारोपेण समासः, 'अनेकान्ताः अनुबन्धाः' (प० ४) इति टित्किटादिवत् इति।

अयंभावः—एवंविषयो जात्येकत्वावच्छिन्नान्यपदार्थद्रव्याभिधायी नञ्समासवद् बहुव्रीहिर्न कल्पते। मत्वर्थे भूमास्त्यर्थादौ उपाधिभूते बहुव्रीहिविधानात्। अविद्यमाना गावो यस्य इति अगुरयमश्व इति अयं बहुव्रीहिर्यस्य गोचरो नञ्समासे नानेन नाक्रान्तः स प्रकल्पते इत्यर्थादुक्तम्=अर्थापत्त्या प्रमितम्, उत्तरार्धेनात्रोक्तं भवति। अविद्यमानो गौर्गोत्वमस्याश्वस्य सोऽयं अगौरश्व इति हि नञ्समासप्रतिपत्तिः=नञ्समासादर्थस्य प्रतिपत्तिः, उत्तरपदार्थविजातीयस्य=उत्तरपदार्थाद् भिन्नजातीयस्य अश्वादिरूपस्यार्थस्य नञ्समासेन स्वभावादभिधानात्। बहुव्रीहेस्तु नायं स्वभावः, अगुर्गौरित्यर्थस्यापि उत्तरपदार्थसजातीयस्य ततः प्रतिपत्तेः। अविद्यमाना गावो यस्येति तु मत्वर्थे भूम्नि बहुव्रीहिर्नञ्समासागोचरे इत्यनयोः=बहुव्रीहिनञ्समासयोः विषयविभागः सिद्धः।

यदा तु "नञोऽस्त्यर्थानां बहुव्रीहिर्वा चोत्तरपदलोपश्च" इति प्रतिपदविहितः-प्रतिपदविहितत्वेन नञ्समासस्य बाधकः नञाश्रयो=नञ्पदसम्बन्धनिमित्तकः बहुव्रीहिस्तदैवं व्याख्यायते नञ्समासेन यस्य न व्याप्तिः=नञ्समासेन यस्यावकाशदानं स एवंभूत विषयो जात्येकत्वा-

भूतविषयो न कश्चिद् बहुव्रीहिः प्रकल्पते। ततोऽनयोः समाने विषये प्राप्ते स्वाभाविको यथोपवर्णितो विषयविवेक इत्येतत् सामर्थ्याज्ज्ञेयम्। इत्थमर्थानुगुण्येऽप्यन्यपदार्थप्रधानतापक्षेऽत्र प्रक्रियायां दोष उक्तः॥ ३०३॥

"यद्यन्यपदार्थप्रधानः अवर्षा हेमन्त इति हेमन्तस्य यल्लिङ्गं वचनं च तत् समासस्य प्राप्नोति" इति भाष्येऽभिहितम्। एतद् व्याचष्टे—

द्वन्द्वैकदेशिनोरुक्ता परवल्लिङ्गता यतः।
अवर्षासु ततोऽसिद्धिरिष्टयोर्लिङ्गसंख्ययोः॥३०४॥

अवर्षा हेमन्त इत्यन्यपदार्थप्राधान्ये हेमन्तगतलिङ्गसंख्याप्रसङ्ग इतीष्टं बहुत्वं स्त्रीत्वं च न स्यात्।

न चापि "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः" (पा०२।४।२६) इति परवल्लिङ्गता भवति। एकदेशिसमास एव तत्पुरुषे परवल्लिङ्गता नियमिता, यतः तत्पुरुषमात्रे हि परवल्लिङ्गतायां प्राप्तजीविकादावतिप्रसङ्गः स्यात्।

तथा च वार्त्तिकम्' "प्राप्तादिषु चैकदेशिग्रहणात् सिद्धम्" इति।

---

वच्छिन्नान्यपदार्थद्रव्याभिधायी न कश्चिद् बहुव्रीहि: प्रकल्पते। ततोऽनयो:=बहुव्रीहिनञ्समासयो: समाने विषये प्राप्ते स्वाभाविको यथोपवर्णित:=प्रागुपर्वणितो विषयविभाग इत्येतद् वस्तुसामर्थ्याज्ज्ञेयम्। इत्थं नञ्समासस्य बहुव्रीह्यर्थानुगुण्येऽपि तस्यान्यपदार्थप्रधानतापक्षेऽत्र=अगौरित्यादौ नञ्समासे प्रक्रियायां दोष उक्त उपसर्जनह्रस्वत्वाख्य इति॥ ३०३॥

यद्यन्यपदार्थप्रधानो नञ्समासस्तदा अवर्षा हेमन्त इत्यत्र हेमन्तस्य विशेष्यस्य यल्लिङ्गं पुंस्त्वं यच्चैकवचनं तदवर्षा इति समासस्य प्राप्नोति इति भाष्येऽभिहितम्। एतद् भाष्यं व्याचष्टे— द्वन्द्वैकदेशिनोरुक्ता इति।

अस्यार्थ:— यतो द्वन्द्वैकदेशिनो:=द्वन्द्वसमासस्य एकदेशिसमासस्य च तत्पुरुषस्य परवल्लिंगता उक्ता, न तु तत्पुरुषमात्रस्य, तत: अवर्षा हेमन्त इत्यत्र नञ्समासस्यान्यपदार्थप्रधानत्वपक्षे परवल्लिङ्गतातिदेशाभावेनेष्टयोर्लिङ्गसंख्यो: स्त्रीत्वबहुत्वयोरसिद्धि:, विशेष्यहेमन्तगतलिङ्गसंख्याप्रसङ्गादिति।

अयं भाव:—नञ्समासस्यान्यपदार्थप्रधानत्वपक्षे अवर्षा हेमन्त इत्यत्र विशेष्यहेमन्तगतलिङ्गसङ्ख्याप्रसङ्ग इतीष्टं स्त्रीत्वं बहुत्वं च न स्यात्।

न चापि 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयो:' (पा० २।४।२६) इति परवल्लिङ्गता भवति। एकदेशिसमासे एव तत्पुरुषे परवल्लिङ्गताया अनेन नियमनात्। तत्पुरुषमात्रे हि परवल्लिङ्गतायां सत्यां प्राप्तो जीविकां प्राप्तजीविक इत्यत्र प्राप्ताजीविक इत्यस्य प्राप्त्यातिप्रसङ्ग: स्यात्।

तथा च वार्तिकम् "प्राप्तादिषु चैकदेशिग्रहणात् सिद्धम्" इति।

'उपसर्जनह्रस्वत्वमप्यत्र प्राप्नोति'इति। अवर्षा इति अगौरिति च, अन्यपदार्थ-प्रधानत्वाविशेषाद् बहुव्रीहिवत्।

न चापि 'परवल्लिङ्गमिति शब्दशब्दार्थौ' इत्यतः परिहर्तुं शक्यते। विशिष्टे तत्पुरुषेऽस्य वचनादित्यन्यपदार्थप्रधानपक्षो दुष्टः॥३०४॥

इदानीं पूर्वपदार्थप्राधान्यमधिकृत्याह—

विशेषणं ब्राह्मणादि क्रियासंबन्धिनोऽसतः।
यदा विषयभिन्नं तत् तदाऽसत्त्व प्रतीयते॥३०५॥

यदा नञ्पदोपादानोऽसदर्थः क्रियासंबन्धितया प्रक्रान्तः, तदोत्तरपदार्थेन ब्राह्मणेन स एवावच्छिद्यमानो विशिष्टः प्रतीयते। ब्राह्मणलक्षणेन विशेषणेन भिन्नमवच्छिन्नमसत्त्वं नञर्थः प्रतीयमानं प्रधानं भवतीति पूर्वपदार्थप्रधानतापक्षो जायते॥ ३०५॥

---

अस्यार्थः—'प्रासादिषु च' प्राप्तजीविकादिसमासगतप्रासादिषु च इष्टं लिङ्गं 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' (पा० २।४।२६) इत्यत्र तत्पुरुषपदेन एकदेशिसमासग्रहणात् सिद्धमिति। किञ्च नञ्समासस्यान्यपदार्थप्रधानत्वपक्षे उपसर्जनह्रस्वत्वमपि प्राप्नोति इति। अवर्षा इति, अगौरित्यत्र च। बहुव्रीहिवदन्यपदार्थप्रधानत्वाविशेषात्।

न चापि परवल्लिङ्गमित्यत्र परशब्देन शब्दशब्दार्थौ ग्राह्यौ, लिङ्गस्य शब्दगतत्वं शब्दार्थ-गतत्वं वा इति पक्षभेदेन, ततश्च द्वन्द्वतत्पुरुषयोः परशब्दस्येव परशब्दार्थस्येव वा लिङ्गमित्यर्थे अवर्षा इत्यत्र पुंस्त्वापत्तिः परिहर्तुं शक्यते। विशिष्टे तत्पुरुषे=तत्पुरुषविशेषे एकदेशिसमासरूपे परवल्लिङ्गताऽतिदेशस्य वचनादिति अन्यपदार्थप्रधानो नञ्समास इति पक्षो दुष्ट इति॥ ३०४॥

इदानीं नञ्समासस्य पूर्वपदार्थप्राधान्यमधिकृत्य=उद्दिश्य आह—विशेषणं ब्राह्मणादि इति।

अस्यार्थः—यदा अब्राह्मण इति नञ्समासप्रयोगो ब्राह्मणस्यासत्त्वमित्यर्थे क्रियते, अब्राह्मणोऽयमिति क्षत्रिये सामानाधिकरण्येन प्रयोगस्तु लक्षणादिना, अब्राह्मणमानय इत्यादौ च नञर्थस्य क्रियासम्बन्धिनः-बौद्धत्वेन भावरूपस्य बौद्धत्वेन भावरूपक्रियाविशेषणस्य असतो विशेषणं ब्राह्मणादि तदा विषयभिन्नम्=विषयेण विशेषणेन ब्राह्मणेन भिन्नम्=अवच्छिन्नम्, तत् नञर्थभूतम् असत्त्वम्, प्राधान्येन प्रतीयत इति।

अयं भावः—यदा नञ्पदोपादानः=नञ्पदेन वाच्यतया उपादीयमानः असदर्थः क्षत्रियादि-रूपः, ब्राह्मणरूपेण क्षत्रियस्यासत्त्वात् आनयनादिक्रियासम्बन्धितया प्रक्रान्तः, तदा उत्तरपदार्थेन ब्राह्मणेन स एवावच्छिद्यमानो विशिष्टः प्रतीयते=विलक्षणोऽवबुध्यते। ब्राह्मणरूपेण विशेषणेन भिन्नमवच्छिन्नमसत्त्वं नञर्थः प्रतीयमानं प्रधानं भवति इति पूर्वपदार्थप्रधानतापक्षो जायते॥ ३०५॥

ननु चासतः कथं क्रियासंबन्धित्वमित्याशङ्क्याह—

**ब्राह्मणत्वेन चासत्त्वादुच्यतेऽसत्तदन्यथा ।**
**असदित्यपि सत्त्वेन सतः सत्ता निवर्त्यते ॥३०६॥**

क्षत्रियादिरूपेण सन्नेवार्थो ब्राह्मण्येनासन्नित्येवं विशिष्टविषयमसत्त्वं नञुपादत्ते, न सर्वथासत्त्वमिति नास्ति क्रियासंवन्धविरोधः। अत एव सदृशार्थसंप्रत्ययोऽपि सिद्धः। असदित्यपि नञ्समासे सत्त्वेनेति। अत्राप्यन्यथेति संबध्यते। भावविशेषानुपहित-स्याभावस्याव्यवहार्यत्वात् प्रकारान्तरेण वस्तुत्वेनोपलक्षितस्य सत उत्तरपदार्थस्य विद्य-मानता निषिध्यते। तथा चास्य भावरूपानुपातिना क्रियाविशेषेण योगोऽस्त्येव॥३०६॥

---

ननु अब्राह्मणमानयेत्यादौ नञर्थस्य पूर्वपदार्थस्य प्रधानस्य असतः कथं क्रियासम्वन्धित्वम्, सदसतोरुपरागायोगादित्याशङ्क्याह—ब्राह्मणत्वेन चासत्त्वादिति ।

अस्यार्थः—क्षत्रियादिरूपेण सतोऽप्यर्थस्य ब्राह्मणत्वरूपेणासत्त्वात्तत् क्षत्रियादिकं वस्तु स्वरूपेण सदपि अन्यथा अन्येन रूपेण ब्राह्मणत्वेन रूपेण सदुच्यते । असदित्यपि नञ्समासे अन्यथा प्रकारान्तरेण वस्तुत्वरूपेण सत्त्वेन उपलक्षितस्य सत उत्तरपदार्थस्य सत्ता विद्यमानता रूपा सत्त्वेन-सत्यत्वरूपेण निषिध्यत इति । अत्रान्यथा इत्येकस्य=अन्यथाऽसदुच्यत इति, अन्यथा सत इत्यत्र च आवृत्त्या तन्त्रेण वा सम्बन्ध इति ।

अयं भावः—क्षत्रियादिरूपेण सन्नेवार्थो ब्राह्मण्येन=ब्राह्मणत्वेन रूपेण असन्नित्येवं विशिष्टविषयकम्=भावरूपविलक्षणाश्रयकम् । असत्त्वं नञ्वाच्यतया उपादत्ते=स्वीकरोति न सर्वथाऽसत्त्वमुपादत्ते इति स्वरूपेण सतोऽपि पररूपेणासत्त्वान्नास्ति आनयनादिक्रियासम्वन्धविरोधः । एकस्यैव स्वरूपपररूपाभ्यां सदसदुभयात्मकत्वात् । तदुक्तम्—

स्वरूपपररूपाभ्यां नित्यं सदसदात्मके ।
वस्तुनि ज्ञायते कैश्चित् किञ्चिद्रूपं कदाचन ॥ इति ।

अतएव=पररूपेणासतोऽपि स्वरूपेण सत्त्वादेव घटसदृशः पट इति सदृशार्थसंप्रत्ययोऽपि सिद्धः । असदित्यपि नञ्समासे सत्त्वेनेति । अत्रापि अन्यथेति सम्बध्यते । भावविशेषानुपहितस्य=भावविशेषेण घटपटादिनाऽनिरूपितस्य अभावसामान्यस्य अव्यवहार्यत्वात् प्रकारान्तरेण वस्तुत्वे-नोपलक्षितस्य सत उत्तरपदार्थस्य सत्ताविद्यमानतासत्त्वेन सत्यत्वेन रूपेण निषिध्यते । तथा चास्य=नञर्थस्य असतः भावरूपानुपातिना सम्बन्धार्थं भावरूपमनुसरता क्रियाविशेषेण योगोऽस्त्येव इति ॥ ३०६ ॥

तदेतस्मिन् पूर्वपदार्थप्रधानपक्षे भाष्ये चोदितम्—'अव्ययसंज्ञा प्राप्नोति। अव्ययं ह्यस्य पूर्वपदम्' इति। तद् व्याचष्टे—

सामान्यद्रव्यवृत्तित्वान्निमित्तानुविधायिनः ।
अयोगो लिङ्गसंख्याभ्यां स्याद् वा सामान्यधर्मता ॥३०७॥

उत्तरपदार्थविशिष्टो नञर्थः प्राधान्येनाभिधीयत इति तस्यात्र द्रव्यसामान्यरूपे क्षत्रियादौ शब्दप्रवृत्तिनिमित्तस्यालिङ्गसंख्यत्वान्निमित्तानुविधानान्निमित्तवतः स्वेन तत्त्वेनाव्यपदेशात् सत्यपि सत्त्वरूपत्वेऽव्ययधर्मोपपत्तिरित्यर्थमात्रलक्षणाव्ययसंज्ञाप्रसङ्गात् समासार्थोऽलिङ्गसंख्यः स्यात्। नञो हि वाक्येऽभावसामान्यमर्थोऽसत्त्वभूतो दृष्टः। स एवात्र वृत्तावुत्तरपदार्थविशिष्टः प्राधान्येनाभिधीयत इति कुतो लिङ्गसंख्ये स्याताम्।

अथ समासस्याव्ययेषु पाठाभावादव्ययसंज्ञाभावाद् विभक्तेर्लुङ् नास्तीत्युच्यते,

---

तदेतस्मिन् नञ्समासस्य पूर्वपदार्थप्राधान्यपक्षे भाष्ये चोदितम्—"अव्ययसंज्ञा प्राप्नोति। अव्ययं ह्यस्य पूर्वपदम्" इति।

अस्यार्थः—अब्राह्मण इत्यत्र अव्ययसंज्ञा प्राप्नोति। हि यतः, अस्य नञ्समासस्य पूर्वपदमव्ययम्। पूर्वपदार्थश्चासत्त्वं प्रधानम्, द्रव्यसामान्ये क्षत्रियादौ समासार्थे प्रवृत्तिनिमित्तमिति निमित्तवतः समासस्य निमित्तानुविधायित्वादव्ययसंज्ञा प्राप्नोतीति।

तदेतद् भाष्यं व्याचष्टे—सामान्यद्रव्यवृत्तित्वादिति।

अस्यार्थः—अब्राह्मण इत्यादेर्नञ्समासस्य सामान्यद्रव्यवृत्तित्वात्=सामान्यद्रव्ये क्षत्रियादौ वृत्तित्वात्, निमित्तानुविधायिनः=स्वप्रवृत्तिनिमित्तनञर्थासत्त्वानुविधायिनस्तस्य नञ्पदस्येव लिङ्गसङ्ख्याभ्यामयोगः स्यात्, अव्ययसंज्ञा च स्यात्, गणे पाठेनाव्ययसंज्ञाऽभ्युपगमेनाऽव्ययसंज्ञाया अभावेऽपि लिङ्गसामान्यधर्मता वा स्यात्। ततश्च अब्राह्मणमिति स्यात्। न तु अब्राह्मणः, अब्राह्मणाविति।

अयं भावः—उत्तरपदार्थब्राह्मणादिविशिष्टो नञर्थः असत्त्वरूपः प्राधान्येनाभिधीयत इति तस्यात्र=अब्राह्मण इत्यादौ नञसमासे द्रव्यसामान्यरूपे क्षत्रियादौ शब्दप्रवृत्तिनिमित्तस्य लिङ्गसङ्ख्यत्वाद् निमित्तवतो नञ्समासस्य स्वप्रवृत्तिनिमित्तासत्त्वानुविधानात् स्वेन तत्त्वेन क्षत्रियादिगतेन सत्त्वरूपेण अव्ययपदापदेशात् सत्त्वरूपत्वे सत्यपि अव्ययधर्मयोरलिङ्गत्वासंख्यत्वयोरुपपत्तिः इत्यर्थमात्रलक्षणाव्ययसंज्ञाप्रसङ्गात्=इत्यसत्त्वभूतार्थमात्रनिमित्तकाव्ययसंज्ञाप्रसङ्गाद् नञ्समासार्थोऽलिङ्गसङ्ख्यः स्यात्। नञो हि वाक्येऽभावसामान्यमर्थोऽसत्त्वभूतो दृष्टः। अत्र वृत्तौ=अब्राह्मण इत्यादिसमासे स एवार्थं उत्तरपदार्थविशिष्टः प्राधान्येनाभिधीयत इति कुतो लिङ्गसंख्ये स्याताम्।

अथ नञ्समासस्य अव्ययेषु पाठाभावाद् अव्ययसंज्ञाया आभावाद् विभक्तेर्लुङ् नास्ति

तथापि व्यपदेशनिवृत्तावपि वस्त्वर्थो न निवर्तेत इत्यव्ययधर्मा भवेयुरेव। तथा च भाष्यम् 'पाठेनाव्ययसंज्ञायां सत्यामभिधेयवल्लिङ्गवचनानि भवन्ति' इति। 'यश्चेहा-र्थोऽभिधीयते, न तस्य लिङ्गसंख्याभ्यां योगोऽस्ति' इति।

अननुविधीयमानेऽपि वा निमित्ते सत्त्वसामान्यगतं लिङ्गसर्वनाम स्यादेकत्व-संख्या चेत्यब्राह्मणमित्येव प्रयोगः स्यात्, न त्वब्राह्मणावब्राह्मणा इत्यादि। व्यक्ति-विशेषनिबन्धनो हि लिङ्गसंख्याभेदः। अत्र च व्यक्तिविशेषो न वाच्यः, क्रियायोग्ये सत्त्वमात्रे नञ्समासस्याभिधाव्यापारादविशेषस्याप्रतीतेः ॥३०७॥

अत्र परिहारो भाष्येऽभिहितः—'नेदं वाचनिकमलिङ्गता असंख्यता वा। किं तर्हि स्वाभाविकमेतत्' इत्यादि। 'तत्र किमस्माभिः शक्यं वक्तुम्, यन्नञः प्राक् समा-साल्लिङ्गसंख्याभ्यां योगो नास्ति, समासे तु भवति' इति। तद् व्याचष्टे—

**प्रागसत्त्वाभिधायित्वं समासे द्रव्यवाचिता।**
**निमित्तानुविधानं च न सर्वत्र स्वभावतः ॥३०८॥**

---

इत्युच्यते, तथापि अव्ययत्वव्यपदेशनिवृत्तावपि वस्त्वर्थः=वस्तुभूतोऽर्थो न निवर्तेत इत्यव्ययधर्मा अलिङ्गत्वासंख्यत्वादयो भवेयुरेव। तथा च भाष्यम्—"पाठेनाव्ययसंज्ञायां सत्यामभिधेयवल्लिङ्ग-वचनानि भवन्ति" इति।

अस्यार्थः—यथा उशीनरवन्मद्रेषु यवा इत्युक्ते गम्यते सन्ति, न सन्ति इति। अभिधेय-वल्लिङ्गवचनानि भवन्ति, न भवन्ति इति चेति।

एतदग्रे भाष्ये उक्तम्—"यश्चेहार्थोऽभिधीयते न तस्य लिङ्गसंख्याभ्यां योगोऽ-स्ति" इति।

अस्यार्थः—अब्राह्मण इत्यादौ नञ्समासे यश्चार्थोऽभावरूपो नञा पूर्वपदेनाभिधीयते तस्यासत्त्वभूतस्य लिङ्गसंख्याभ्यां योगो नास्तीति।

अथवा अननुविधीयमानेऽपि निमित्ते सत्त्वसामान्यगतम्=क्षत्रियादिरूपद्रव्यसामान्यगतं लिङ्गसर्वनामनपुंसकं स्याद् एकत्वसंख्या च इत्यब्राह्मणमित्येव प्रयोगः स्याद्, न त्वब्राह्मणाव-ब्राह्मणा इत्यादि। व्यक्तिविशेषनिबन्धनो हि लिङ्गसंख्याभेदः। अत्र च=नञ्समासे व्यक्तिविशेषो न वाच्यः, क्रियायोग्ये सत्त्वमात्रे=द्रव्यमात्रे नञ्समासस्याभिधाव्यापाराद् व्यक्तिविशेषस्याप्रतीतेरिति ॥ ३०७ ॥

अत्र परिहारो भाष्येऽभिहितः—"नेदं वाचनिकमलिङ्गता, असंख्यता वा। किं तर्हि स्वाभाविकमेतद्" इत्यादि। "तत्र किमस्माभिः शक्यं वक्तुम्, यन्नञः प्राक्समासाल्लिङ्गसंख्याभ्यां योगो नास्ति, समासे तु भवति" इति।

एतद्भाष्यं व्याचष्टे—प्रागसत्त्वाभिधायित्वमिति।

अस्यार्थः—समासात् प्राङ्नञोऽसत्त्वाभिधायित्वं वाक्ये, समासे तु तस्य वाचिता इत्येतद् द्वयं तस्य स्वभावतः, न तु वाचनिकम्। निमित्तानुविधानञ्च=अपि, न सर्वत्र, हरीतक्यादिषु

इहापौरुषेयी शब्दानामर्थप्रत्यायनशक्तिर्नियतविषया योग्यताभिधाना प्रयोगप्रामाण्यावसेयसतत्त्वा। तत्र वृत्तिवाक्ययोः शब्दभेदाद् भिन्नशक्तित्वे वाक्ये नञर्थोऽसत्त्वभूतोऽपि वृत्त्या सत्त्वभूतोऽभिधीयते। तथा च क्रियायोगो दृश्यते।

तथाहि—वाक्ये नञ्प्रतिषेध्याद् व्यतिरेकेण प्रतिषेधमाचष्ट इति प्राधान्येनाव्ययार्थस्याभिहितत्वाल्लिङ्गसङ्ख्यायोगो नास्ति। वृत्तौ तु प्रतिषेधोपसर्जनस्य प्रतिषेध्यस्य नञर्थत्वात् प्रतिषेध्यप्राधान्याल्लिङ्गसङ्ख्यायोग उपपद्यते।

न चावश्यकमन्यत्रापि निमित्तानुविधानम्, हरीतक्यादिषु व्यक्तिवचनयोर्व्यवस्थानदर्शनात्। ततश्च नञ्समासे लिङ्गसङ्ख्यायोगस्य दर्शनाच्छुक्लादिवन्निमित्तानुविधानं नास्तीत्यर्थः ॥३०८॥

तथाहि—

**निमित्तानुविधाने च क्रियायोगो न कल्पते।**
**तथाचाव्यपदेश्यत्वादुपादानमनर्थकम् ॥३०९॥**

---

प्रकृतिवल्लिङ्गवचनदर्शनेन फलगतधर्मरूपप्रवृत्तिनिमितानुविधानादर्शनात्। एतदपि स्वभावतः। तथा च नञ्समासेऽपि न प्रवृत्तिनिमित्तासत्त्वानुविधानमिति।

अयं भावः—इहापौरुषेयी=अकृत्रिमा स्वाभाविकी शब्दानामर्थप्रत्यायनशक्तिर्नियतविषया योग्यताऽभिधाना=योग्यतानाम्नी प्रयोगप्रामाण्यावसेयसतत्त्वा=प्रयोगप्रामाण्यप्रमेयस्वरूपा। तत्र वृत्तिवाक्ययोः शब्दभेदाद् भिन्नशक्तित्वे स्थिते वाक्ये नञर्थोऽसत्त्वभूतोऽपि वृत्त्या=समासेन सत्त्वभूतोऽभिधीयते। तथा च 'अब्राह्मणमानय' इत्यादौ नञर्थस्य क्रियायोगो दृश्यते।

तथाहि—वाक्ये नञ्प्रतिषेध्यात्=प्रतिषेधप्रतियोगिनो व्यतिरेकेण=पार्थक्येन प्रतिषेधमाचष्टे इति प्राधान्येनाव्ययार्थस्याभिहितत्वाल्लिङ्गसंख्यायोगो नास्ति, अव्ययार्थस्य प्राधान्येनोपस्थितस्यासत्त्वभूतत्वात्। वृत्तौ तु प्रतिषेधोपसर्जनस्य प्रतिषेध्यस्य=प्रतिषेधाश्रयस्य क्षत्रियादेर्नञर्थत्वात् प्रतिषेध्यप्राधान्यात्=प्रतिषेधाश्रयप्राधान्यात् लिङ्गसंख्यायोग उपपद्यते। नञ्समासस्य पूर्वपदार्थप्राधान्यपक्षे हि प्रतिषेधाश्रयस्यैव प्राधान्यमुपपद्यते, न तु प्रतिषेधप्रतियोगिनः।

न चावश्यकं नञ्समासादन्यत्रापि प्रवृत्तिनिमित्तानुविधानम्, हरीतक्यादिषु व्यक्तिवचनयोः=लिङ्गसंख्ययोः प्रकृतिवद्व्यस्थानदर्शनात्। ततश्च नञ्समासे लिङ्गसंख्या योगस्य दर्शनात् शुक्लादिवत्=शुक्लः पट इत्यादाविव निमित्तानुविधानं नास्तीति ॥ ३०८ ॥

तथा हि निमित्तानुविधानाभावमेवोपपादयति—निमित्तानुविधाने चेति।

अस्यार्थः—नञ्समासार्थस्य नञर्थप्रतिषेधरूपासत्त्वात्मकप्रवृत्तिनिमित्तानुविधाने च लिङ्गसंख्यायोगवद् 'अब्राह्मणमानय' इत्यादौ आनयनादिक्रियायां साधनभावरूपो योगो न कल्पते, असत्त्वरूपनिमित्तानुविधाने असत्त्वरूपत्वात्। तथा चाव्यपदेश्यत्वाद्=क्रियान्वयरहितस्याव्यवहार्यत्वात् शाब्दे व्यवहारे प्रयोगरूपं नञ्समासस्योपादानमनर्थकमफलमिति तस्य प्रयोगप्रामाण्यान्निमित्तानुविधानाभावं नञ्समासः सत्त्वभूतार्थाभिधायी सन् लिङ्गसंख्याभ्यां युज्यत इति।

नञर्थस्यासत्त्वरूपस्य निमित्तस्यानुविधाने समासार्थस्य लिङ्गसङ्ख्यायोगवद् 'अब्राह्मणमानय, पश्य वा' इत्यादिदर्शनादिक्रियासाधनभावो न स्यादित्यक्रियाङ्गस्य नामपदार्थस्य कीर्तनमफलमित्यनन्वाख्येयो नञ्समासः स्यात्। दृश्यते चास्य क्रियाङ्गभाव इति प्रयोगप्रामाण्यादननुविहितनिमित्तः सत्त्वभूतार्थाभिधायी युज्यते लिङ्गसङ्ख्याभ्यां नञ्समासः ॥३०९॥

इयता च लिङ्गसङ्ख्यासम्बन्धमात्रं स्वाभाविकताभिधानेन स्यात्, प्रयोगानुपाती तु यथायथं लिङ्गसङ्ख्याविशेषो विवक्षित इति तत्सिद्ध्यर्थं पक्षान्तरमत्र भाष्ये प्रतिपादितम्—'अथवा गुणवचनानां शब्दानामाश्रयतो लिङ्गवचनानि भवन्ति' इति। तद् व्याचष्टे—

**असत्सामान्यवृत्तिर्वा विशेषैः क्षत्रियादिभिः।**
**प्रयुक्तैराश्रयैर्भिन्नो याति तल्लिङ्गसङ्ख्यताम् ॥३१०॥**

उत्तरपदार्थविशिष्टमसत्सामान्यं समासार्थोऽनिर्ज्ञातविशेष इति तज्जिज्ञासायां विशेषप्रयोगे, तैर्विशेषैराश्रयैरसौ समासार्थो विशिष्टः प्रयोगयोग्य इति तल्लिङ्गसङ्ख्य

---

अयं भावः—नञर्थस्य असत्त्वरूपस्य=अद्रव्यरूपस्य नञ्समासप्रवृत्तिनिमित्तस्य नञ्समासार्थकर्तृकेऽनुविधाने नञ्समासार्थस्य लिङ्गसंख्यायोगवत् 'अब्राह्मणमानय, पश्य वा' इत्यानयनदर्शनादिक्रियासाधनभावो न स्यादित्यक्रियाङ्गस्य=क्रियाया असाधनस्य नामपदार्थस्य=नञ्समासार्थस्य कीर्तनमफलमित्यनन्वाख्येयो नञ्समासः स्यात्। दृश्यते चास्य=नञ्समासार्थस्य क्रियाङ्गभावः=क्रियासाधनत्वमिति नञ्समासप्रयोगप्रामाण्यादननुविहितनिमित्तः=अननुसृतप्रवृत्तिनिमित्तः। अत एव सत्त्वभूतार्थाभिधायी=द्रव्यरूपार्थवाचको नञ्समासो लिङ्गसंख्याभ्यां युज्यत इति ॥ ३०९ ॥

इयता च ग्रन्थेन नञ्समासस्य लिङ्गसंख्यासम्बन्धमात्रं स्वाभाविकताभिधानेन समर्थितं स्यात्। विशेष्यशब्दप्रयोगानुपाती तु यथायथं नञ्समासस्य लिङ्गसङ्ख्याविशेषो विवक्षित इति। तत्सिद्ध्यर्थं पक्षान्तरम्=स्वाभाविकत्वाभिधानादन्यः पक्षः, अत्र=नञ्समासे भाष्ये प्रतिपादितम्। "अथवा गुणवचनानां शब्दानामाश्रयतो लिङ्गवचनानि भवन्ति" इति। गुणवचनानाम्=विशेषणवचनानाम्, आश्रयतो विशेष्यत इति।

तद्भाष्यं व्याचष्टे—असत्सामान्यवृत्तिर्वा इति।

अस्यार्थः—वा इति पक्षान्तरे स्वाभाविकत्वाभिधानादन्यस्मिन्। उत्तरपदार्थविशिष्टमसत्सामान्यं नञ्समासार्थोऽनिर्ज्ञातविशेष इतिरीत्याऽसत्सामान्यवृत्तिनञ्समासार्थः प्रयुक्तैर्विशेषैः क्षत्रियादिभिराश्रयैर्विशेष्यैर्भिन्नः विशेषणविशेष्यभावे कामचारादवच्छिन्नः, तल्लिङ्गसङ्ख्यताम्=विशेष्यक्षत्रियादिलिङ्गसङ्ख्यावत्त्वं याति प्राप्नोतीति।

अयं भावः—उत्तरपदार्थविशिष्टं नञर्थासत्सामान्यं नञ्समासार्थोऽनिर्ज्ञातविशेष इति तज्जिज्ञासायाम्=विशेषजिज्ञासायां विशेषस्य=क्षत्रियादेः प्रयोगे सति, तैर्विशेषैराश्रयैः=विशेष्यैः क्षत्रियादिभिर्विशिष्टः परिच्छिन्नः, विशेषणविशेष्यभावे कामचारात्। असौ=नञ्समासार्थः प्रयोगयोग्य

एव न्याय्यः। अर्थानामितरेतराभावाव्यभिचाराद् ब्राह्मणादिनिवृत्तेः क्षत्रियादय एवाश्रय इति तद्गते एव लिङ्गसङ्ख्ये युक्ते।

सर्वमूर्तीनां च सर्वलिङ्गत्वाच्छब्दशक्तेर्लिङ्गप्रतिनियमे क्षत्रियः क्षत्रमिति यथा स एवार्थो भिन्नलिङ्गाभ्यां शब्दाभ्यामभिधीयते, एवमब्राह्मणः क्षत्रमित्यब्राह्मणशब्देन पुंस्त्वविशिष्टः सोऽर्थः प्रतिपाद्यते। निवृत्तिवचनेनाभेदोपचारात् तद्वत एवोपादानात्।

यथा चान्ये जातिशब्दा आविष्टलिङ्गसङ्ख्याः, तथा नञ्समासोऽपीति क्षत्रादिना भिन्नलिङ्गेनापि सामानाधिकरण्यमस्योपपन्नम्। एवमनापः पृथिवी' इत्याद्युपपत्तिः।

अत एव चात्रापि स्वाभाविकत्वमेव लिङ्गसङ्ख्याव्यवस्थाहेतुः। पूर्वत्र तु परिहारे द्रव्यवचनत्वे स्वाभाविकत्वं हेतुरित्येतावता विशेषः ॥३१०॥

ननु निर्विशेषस्य सामान्यस्याभावात् सामान्यशब्देनैवोपगृहीतो विशेष इति कथं तद्वाचिनः प्रयोग इत्याह—

**प्रागाश्रयो हि भेदाय प्रधानेऽभ्यन्तरीकृतः।**
**पुनः प्रत्यवमर्शेन विभक्त इव दृश्यते ॥ ३११ ॥**

---

इति तल्लिङ्गसंख्य एव=विशेष्यलिङ्गसंख्य एव न्याय्यः। अर्थानामितरेतराभावा व्यभिचारात्=इतरेतरनिवृत्तिरूपत्वनियमात्, ब्राह्मणादिनिवृत्तेः क्षत्रियादय एवाश्रय इति तद्गते एव लिङ्गसंख्येयुक्ते।

सर्वमूर्तीनाञ्च=सर्वभावानाञ्च सर्वलिङ्गत्वात् शब्दशक्तेर्लिङ्गप्रतिनियमे=लिङ्गव्यवस्थाने विवक्षिते सति यथा स एवार्थः=एक एवार्थो भिन्नलिङ्गाभ्यां शब्दाभ्यां क्षत्रियः क्षत्रमिति पुंस्त्वेन नपुंसकत्वेन चाभिधीयते, एवं ब्राह्मणः क्षत्रमिति अब्राह्मणशब्देन पुंस्त्वविशिष्टः सोऽर्थः प्रतिपाद्यते, यः क्षत्रशब्देन नपुंसकत्वेन प्रतिपाद्यते। ब्राह्मणनिवृत्तिवचनेनाब्राह्मणशब्देन निवृत्तेर्निवृत्तिमिति अभेदोपचारात् तद्वत एव=ब्राह्मणनिवृत्तिमत एव उपादानात्=बोद्धव्यत्वेन परिग्रहात्।

यथा चान्ये जातिशब्दाः=घटपटादयः शब्दा आविष्टलिङ्गसंख्याः=नियतलिङ्गसंख्याः, तथा नञ्समासोऽपि नियतलिङ्गसङ्ख्य इति क्षत्रादिना भिन्नलिङ्गेनापि सामानाधिकरण्यमस्य= अब्राह्मणशब्दस्योपपन्नम्। एवम् 'अनापः पृथ्वी' इत्यत्र आविष्टवचनत्वादेव नञ्समासस्य भिन्नवचनत्वोपपत्तिः।

अत एव=आविष्टलिङ्गसंख्यत्वादेव च, अत्रापि='अब्राह्मणः क्षत्रम्' इत्यादावपि स्वाभाविकत्वमेव लिङ्गसङ्ख्याव्यवस्थाहेतुः। पूर्वत्र तु नञ्समासस्य अलिङ्गत्वासङ्ख्यत्वाशङ्कापरिहारे तस्य द्रव्यवचनत्वे स्वाभाविकत्वं हेतुरित्येतावता विशेषः=स्वाभाविकत्वरूपस्य हेतोः कार्यभेदो ज्ञाप्यभेदो वा इति ॥ ३१० ॥

ननु निर्विशेषं न सामान्यमित्यभ्युपगमेन निर्विशेषस्य सामान्यस्याभावाद् नञ्समासेनैव सामान्यशब्देनोपगृहीतो विशेषः क्षत्रियादिरिति कथं तद्वाचिनः=विशेषवाचिनः प्रयोग इत्याह— प्रागाश्रयो हीति।

असत्सामान्ये समासवाच्ये प्रथमत एव यद्यपि विशेषः स्वाश्रयो गर्भीकृतः, तथापि सामान्यश्रुतेर्विशेषस्यावधारणाभावाद् विशेषशब्देन पुनरसौ प्रत्यवमृश्यत एव। तथा च सामान्याद् विशेषस्य विभाग इव शब्दनिबन्धन इत्याश्रयाश्रयिभाव-प्रतीतावाश्रयगतसङ्ख्यायोग उच्यते ॥ ३११ ॥

तथाहि—

**समासे श्रूयते स्वार्थो येन तद्वांस्तदाश्रयः।**
**द्रव्यं तु लिङ्गसङ्ख्यावदसताभ्यन्तरीकृतम् ॥ ३१२ ॥**

वृत्तौ नञः सत्त्वप्रधानार्थत्वाल्लिङ्गसङ्ख्यायोगि द्रव्यसामान्यमभावानुरक्तम्, तेनासतासद्वचनेनाभ्यन्तरीकृतं प्रतिपादितमिति पूर्वस्य परिहारस्य स्वाभाविकत्वदर्शन-

---

अस्यार्थः—हि=यतः, विशेषवाचकशब्दप्रयोगात् प्राग् आश्रयो विशेषरूपो विशेष्यः, भेदाय = समासवाच्यादसत्सामान्याद्भेदं विभागं लब्धुं प्रधाने = विशेषवाचकशब्दप्रयोगात् प्राक् प्राधान्ये-नोपस्थिते सामान्यवच्येऽसत्सामान्येऽभ्यन्तरीकृतः। अतः पश्चात् प्रयुक्ताद् विशेषवाचकशब्दाद-सत्सामान्येऽभ्यन्तरीकृतस्यैव सामान्यरूपेण परामृष्टस्य विशेषरूपेण पुनः प्रत्यवमर्शेन सामान्येऽ-भ्यन्तरीकृततयाऽविभक्तावपि विभक्त इव दृश्यत इति।

अयं भावः—समासवाच्येऽसत्सामान्ये प्रथमत एव=विशेषशब्दप्रयोगात् प्रागेव यद्यपि विशेषः स्वाश्रयः=सामान्यस्याश्रयः गर्भीकृतः, तथापि सामान्यश्रुतेः=सामान्यवाचकशब्दाद् विशेषस्यावधारणाभावाद् विशेषशब्देन पुनरसौ=विशेषः प्रत्यवमृश्यत एव। तथा च सामान्याद् विशेषस्य शब्दनिबन्धनो विभाग इव दृश्यत इति सामान्यविशेषयोराश्रयाश्रयिभावप्रतीतावाश्रयिणि असत्सामान्ये आश्रयगतसंख्यायोग उच्यत इति ॥ ३११ ॥

स्वाभाविकत्वदर्शने आश्रयगतलिङ्गसङ्ख्यायोगमाश्रयिणि पूर्वार्द्धेनोपपाद्य निगमयन् गुण-वचनदर्शने तमेवार्थमुत्तरार्धेनोपपादयति—समासे इति।

हेलाराजकृतम्—"तथाहि" इत्येतन्मात्रमवतरणन्तु पक्षद्वयोपपाद्यार्थाद्योतकत्वान्न वरमिति।

अस्यार्थः—वाक्ये नञोऽसत्त्वप्रधानार्थत्वेऽपि वृत्तौ नञः सत्त्वप्रधानार्थत्वं स्वाभाविकमिति पक्षे नञ्समासे 'अब्राह्मण' इत्यादौ स्वार्थः प्रवृत्तिनिमित्तं ब्राह्मणत्वनिवृत्तिरूपं श्रूयते, येन तदाश्रयः ब्राह्मणत्वनिवृत्तिरूपस्य स्वार्थस्याश्रयः क्षत्रियादिः, तद्वान्=ब्राह्मणत्वनिवृत्तिरूपस्वार्थवान् अवधार्यत इति गुणवचनदर्शने द्वितीये परिहारपूर्वार्धेनेदमुक्तम्। लिङ्गसंख्यायोगिद्रव्यसामान्यं ब्राह्मणत्वा-भावानुरक्तम् असद्वचनेन नञ्समासेनाऽभ्यन्तरीकृतं प्रतिपादितमिति स्वाभाविकं नञ्समासस्य सत्त्व-वचनत्वमिति पूर्वस्य परिहारस्य स्वाभाविकत्वदर्शनस्यार्थो निगमित उत्तरार्धेनेति।

अयं भावः—वाक्ये नञोऽसत्त्वप्रधानार्थत्वेऽपि वृत्तौ नञः सत्त्वप्रधानार्थत्वाल्लिङ्गसंख्या-योगिद्रव्यसामान्यमभावानुरक्तं तु तेनासता=असद्वचनेन नञाऽभ्यन्तरीकृतं=प्रतिपादितमिति पूर्वस्य

स्यार्थो निगमितः । गुणवचनदर्शने तु द्वितीये परिहारे समासे स्ववाच्योऽर्थः प्रतीयते, येनासत्सामान्येन क्षत्रियादिस्तद्वान् निवृत्तिविशिष्टोऽवधार्यते तस्याधार इति ॥ ३१२ ॥

निमित्तनो निमित्तानुविधाने गुणवचनवल्लिङ्गसंख्यायोगः कथितः, स्वपदार्थः अन्यपदार्थो वा क्षत्रियादिः कथम्, येन पक्षद्वयोपपत्तिरित्याह—

**एकार्थविषयौ शब्दौ तस्मिन्नन्यार्थवर्तिनौ ।**
**असतैव तु भेदानां सर्वेषामुपसंग्रहः ॥ ३१३ ॥**

प्राक् समासान्नञ् वाक्ये निवृत्तिद्योतकः, ब्राह्मणशब्दश्च निवृत्तिविशिष्टार्थाभिधायी । एवमन्यार्थवर्तिनावेतौ शब्दौ । तस्मिन् समासे उत्तरपदार्थेनावच्छिन्नो नञर्थ एकः प्रतिपाद्यः, ययोस्तावेकार्थविषयौ, उपसर्जनसम्भिन्नस्यैकस्यैव नञर्थस्य वाच्यत्वात् । सर्वेषां तु भेदानां क्षत्रियादीनामभावेन नञर्थेनैव स्वीकारादुत्तरपदस्य तद्द्योतनमात्रे व्यापारात् पूर्वपदार्थप्राधान्यम् ॥ ३१३ ॥

---

परिहारस्य स्वाभाविकत्वदर्शनस्यार्थो निगमितः=निगमनेन उपसंहारेणोपवर्णित उत्तरार्धेन । 'गुणवचनानां शब्दानामाश्रयतो लिङ्गवचनानि भवन्ति' इति । गुणवचनदर्शने तु द्वितीये परिहारे नञ्समासे स्ववाच्योऽर्थः प्रतीयते, येनासत्सामान्येन तद्वान् निवृत्तिविशिष्टोऽर्थः क्षत्रियादिरवधार्यते, तस्यासत्सामान्यस्य विशेषणस्य विशेष्यतया विशेषरूपतया चाधार इति पूर्वार्धार्थ इति ॥ ३१२ ॥

निमित्तिनः=ब्राह्मणत्वनिवृत्तिमतोऽर्थस्य अब्राह्मणेति नञ्समासवाच्यस्य ब्राह्मणत्वनिवृत्तिरूपप्रवृत्तिनिमित्तानुविधाने शुक्लः पट इत्यादौ गुणवचनशुक्लादिशब्दवल्लिङ्गसंख्यायोगः 'अब्राह्मणः क्षत्रियः' इत्यादौ कथितः, एवञ्च स्वपदार्थः=समासघटकपदार्थः, अन्यपदार्थो वा क्षत्रियादिः कथम्, येन पक्षद्वयोपपत्तिः=पूर्वपदार्थप्रधानोऽन्यपदार्थप्रधानो वा नञ्समास इति पक्षद्वयोपपत्तिरिति प्राप्ते आह—एकार्थविषयाविति ।

अस्यार्थः—वाक्ये अन्यार्थवर्त्तिनौ नञ्शब्दब्राह्मणशब्दौ, वाक्ये नञ्शब्दो निवृत्तिद्योतकः, ब्राह्मणशब्दश्च निवृत्तिविशिष्टार्थाभिधायी इत्येवमन्यार्थवर्तिनौ=परस्परभिन्नार्थवर्तिनौ । तस्मिन् समासे एकार्थविषयौ=उत्तरपदार्थेनावच्छिन्नो नञर्थ एकोऽर्थो ययोस्तौ । एवमपि असता अभावेन नञर्थेनैव तु सर्वेषां भेदानां विशेषाणां क्षत्रियादीनामुपसंग्रहः सामान्यरूपेण स्वीकारः । उत्तरपदस्य ब्राह्मणादेस्तद्द्योतनमात्रे व्यापार इति पूर्वपदार्थप्राधान्यं नञ्समास इति ।

अयं भावः—समासात् प्राग् वाक्ये नञ्निवृत्तिद्योतकः, ब्राह्मणशब्दश्च निवृत्तिविशिष्टार्थाभिधायी । एवम् अन्यार्थवर्तिनौ=परस्परभिन्नार्थवर्तिनौ एतौ शब्दौ=नञ्शब्दब्राह्मणशब्दौ तस्मिन् समासे=नञ्समासे उत्तरपदार्थेनावच्छिन्नः=विशिष्टो नञर्थरूप एकः प्रतिपाद्यः, ययोस्तावेकार्थविषयौ, उपसर्जनसंभिन्नस्य=उत्तरपदार्थरूपोपसर्जनविशिष्टस्य एकस्यैव नञर्थस्य वाच्यत्वात् । सर्वेषां भेदानाम्=विशेषाणां क्षत्रियादीनां भावेन नञर्थेनैव स्वीकारात्=स्वात्मनि समावेशनाद् उत्तरपदस्य तद्द्योतनमात्रव्यापारात् पूर्वपदार्थप्राधान्यमिति ॥ ३१३ ॥

यदा त्वन्यपदार्थप्राधान्यम्, तदाह—

**ते क्षत्रियादिभिर्वाच्या वाच्या वा सर्वनामभिः ।**
**यान्तीवान्यपदार्थत्वं नञो रूपाविकल्पनात् ॥ ३१४ ॥**

क्षत्रियो वैश्य इत्येवमादयः शब्दा अब्राह्मण इत्यत्रत्यान् विशेषान् स्फुटमितरेतर-विवेकेन गमयन्ति प्रयुक्ताः सन्तः । तदप्रयोगे तु सर्वनामपदं सामान्यरूपेण तदर्थमाह ।

एवञ्च कृत्वा वर्तिपदाभ्यामुपगृहीतोऽप्ययमर्थो न शक्यतेऽवधारयितुं पदान्त-प्रयोगमन्तरेणेति शब्दशक्तिमनवधारयन्तोऽन्यपदार्थत्वम्, क्षत्रियादेरवगच्छन्तोऽन्य-पदार्थप्रधानत्वं नञ्समासस्याहुः ।

नञ्पदं हि प्रतिषेधमाह, ब्राह्मणपदं तु स्वजातीयमर्थमिति क्षत्रियोऽन्यपदार्थ इति भ्रान्ताः । शब्दशक्त्यनुसारिणां तु स्वपदार्थ एवात्र सदृशलक्षणोऽर्थ इतीव-शब्दः ।

---

यदा त्वन्यपदार्थप्राधान्यं नञ्समासस्य, तदाऽऽह—ते क्षत्रियादिभिर्वाच्या इति ।

अस्यार्थः—ते=उपसर्जनसंभिन्ननञर्थरूपाः क्षत्रियादयो नञ्समासार्थाः क्षत्रियादिभिः= उपप्रयुक्तैः क्षत्रियादिशब्दैर्वाच्याः, तदभावे सर्वनामभिर्वा तदिदमादिभिरुपप्रयुक्तैर्वाच्याः सन्तः अन्यपदार्थत्वं यान्ति इव । क्षत्रियादीनामर्थानां क्षत्रियादिशब्दप्रयोगाभावेऽपि ब्राह्मणत्वनिवृत्तिमत्त्वेन सामान्यरूपेण अब्राह्मणशब्देनैव पूर्वं प्रतिपादनादिवशब्दप्रयोगः । नञो रूपस्य अर्थस्य ब्राह्मणत्व-निवृत्तिमद्रूपस्य अविकल्पनाद् नञा विशेषरूपेण क्षत्रियत्वादिना कल्पनाभावात् । ब्राह्मणत्वनिवृत्ति-मत्त्वेन सामान्यरूपेणैव नञा क्षत्रियादेः स्ववाच्यत्वेन कल्पनादिति ।

अयं भावः—क्षत्रियो वैश्य इत्येवमादयः शब्दा, अब्राह्मणादिरूपनञ्समासपदसमीपे प्रयुक्ताः सन्तः अब्राह्मण इत्यत्रत्यान् विशेषान् क्षत्रियादिपदार्थरूपान् स्फुटमितरेतरविवेकेन गमयन्ति= ज्ञापयन्ति नञ्समाससमीपे प्रयुक्ताः सन्तः । तदप्रयोगे तु=विशेषवाचकक्षत्रियादिपदाप्रयोगे तु सर्वनामपदं सामान्यरूपेण तमर्थमाह ।

एवञ्च कृत्वा सामान्यरूपेण नञ्समासवर्तिपदाभ्यामुपगृहीतोऽपि=संगृहीतोऽपि अयमर्थो न शक्यते विशेषरूपेण वर्तिपदाभ्यामवधारयितुं विशेषवाचकपदान्तरप्रयोगमन्तरेणेति वर्तिशब्द-शक्तिमनवधारयन्तः क्षत्रियादेरन्यपदार्थत्वमवगच्छन्तो नञ्समासस्यान्यपदार्थप्रधानत्वमाहुः ।

नञ्पदं हि प्रतिषेधमाह, ब्राह्मणपदं तु स्वसजातीयमर्थमिति क्षत्रियोऽन्यपदार्थ इति भ्रान्ताः । शब्दशक्त्यनुसारिणां तु स्वपदार्थ एवात्र सदृशलक्षणोऽर्थः, नञोऽन्यसदृशार्थकत्वादिति इवशब्दः कारिकायां प्रयुक्तः ।

तथाहि—नञो रूपमीदृशमत्र न विकल्प्यते न विशेषेणानुगम्यते यैः, यदुतोत्तरपदार्थाभावविशिष्टमसत्सामान्यं क्षत्रियाद्याश्रयभेदोपकल्पितविशेषं नञर्थ इति तेषां भ्रान्तिः। पूर्वपदार्थप्रधानतायां लिङ्गवचनातिदेशस्योपयोगः ॥ ३१४ ॥

अत्र पक्षे दोषमुद्भावयति—

**विशेषस्याप्रयोगे तु लिङ्गसङ्ख्ये न सिध्यतः।**
**अवर्षादिषु दोषश्च हेमन्तोऽन्याश्रयो यतः ॥ ३१५ ॥**

असत्सामान्यस्योत्तरपदार्थोपकृतस्य समासवाच्यत्वेऽत्र यदा क्षत्रियादयो विशेषाः प्रयुज्यन्ते, तदा तैः प्रयुक्तैराश्रयैर्विशिष्टलिङ्गसंख्यासिद्धिरस्तु। तदप्रयोगे तु व्यक्तिविशेषनिबन्धने लिङ्गसङ्ख्ये न सिध्यत इति सामान्याश्रये एव नपुंसकैकत्वलक्षणे ते स्याताम्। अवर्षा हेमन्तः, अनापः पृथिवी, अपञ्चाला जनपदः, अगोदौ ग्रामः, अतेजः सिकता, अनर्थो गृहाः, अनिदाघो वर्षा इत्यादिषु चेष्टलिङ्गसङ्ख्या-

---

तथाहि—नञो रूपम्=अर्थः=ईदृशम् क्षत्रियत्वादिजातिमद् अत्र=नञ्समासे न विकल्प्यते=न विशेषेणानुगम्यते यैः, यदुत=उत्तरपदार्थाभावविशिष्टमसत्सामान्यं क्षत्रियादिरूपाश्रयविशेषोपकल्पितविशेषं नञर्थ इति, इति तेषां भ्रान्तिः।

एवं नञ्समासेऽन्यपदार्थ प्राधान्यपक्षस्याभावेऽपि तस्य पूर्वपदार्थप्राधानतायामाश्रयतो लिंगवचनातिदेशस्योपयोग इति स एव पक्षः स्थित इति ॥ ३१४ ॥

अत्र पक्षे=नञ्समासस्य पूर्वपदार्थप्राधान्यपक्षे दोषमुद्भावयति—विशेषस्याप्रयोगे तु इति।

अस्यार्थः—अब्राह्मण इत्यादिके नञ्समासे सामान्यवाचके प्रयुज्यमाने सति तत्समभिव्याहारे विशेषस्य विशेषवाचकस्य क्षत्रियादिशब्दस्य अप्रयोगे तु व्यक्तिविशेषनिबन्धने लिंगसंख्ये न सिध्यतः, किन्तु सामान्याश्रये एव नपुंसकैकत्वलक्षणे ते स्याताम्। 'अवर्षा हेमन्त' इत्यत्र 'अनापः पृथिवी' इत्यादौ च दोषश्च=दोषोऽपि इष्टलिङ्गवचनाभावप्रसङ्गलक्षणः। यतो हेमन्तोऽन्याश्रयः=अन्यलिङ्गसंख्याश्रय इति।

अयं भावः—असत्सामान्यस्य नञर्थस्य उत्तरपदार्थोपकृतस्य समासवाच्यत्वेऽत्र=अब्राह्मण इत्यादिके नञ्समासे प्रयुक्ते यदा क्षत्रियादयो विशेषाः प्रयुज्यन्ते, तदा तैः प्रयुक्तैराश्रयैर्विशिष्टलिङ्गसंख्यासिद्धिरस्तु, तदप्रयोगे तु=विशेषवाचकक्षत्रियादिशब्दाप्रयोगे तु व्यक्तिविशेषनिबन्धने लिङ्गसंख्ये न सिध्यत इति सामान्याश्रये एव नपुंसकैकत्वलक्षणे ते=लिङ्गसंख्ये स्याताम्। अवर्षा हेमन्तः, अनापः पृथिवी, अपञ्चाला जनपदः, अगोदौ ग्रामः, अतेजः सिकता, अनर्थो गृहाः, अनिदाघो वर्षा इत्यादिषु च विशेषणेषु विशेष्येषु वा आविष्टलिङ्गेषु प्रयुक्तेषु सत्सु नञ्समासेषु

सिद्धिर्न स्यात्। यस्माद्वर्षाभ्योऽन्यो हेमन्तोऽत्राश्रयः समासार्थस्येत्यवर्षा इति हेमन्त-गतलिङ्गसङ्ख्याप्रसङ्गः।

एवमन्यत्र योज्यम्। हेमन्तग्रहणस्योपलक्षणार्थत्वात्, पूर्वपदार्थप्राधान्याच्च वर्षार्थस्योपसर्जनत्वाद्ध्रस्वप्रसङ्ग इति पूर्वपदार्थप्रधानपक्षोऽपि दुष्टः।

उत्तरपदार्थप्राधान्यमेव त्वत्र सिद्धान्तः। तथा च यथायथमुत्तरपदार्थगतलिङ्ग-सङ्ख्यासिद्धिः। अतिदेशस्य तु नायं विषयः। ये हि बाह्यपदार्थसम्बन्धे भेदे विपरि-वर्तन्ते, ते गुणवचनाः स्वाश्रयतो लिङ्गसङ्ख्ये प्रतिपद्यन्ते। तद्यथा शुक्लादयः, यथा बहुव्रीहिः समासः। नञ्समासस्तूपात्तलिङ्गसङ्ख्याभेदापरित्यागेनात्यन्तमनुवर्तते वर्षादिष्विति जातिशब्दानामिवाविष्टलिङ्गत्वान्नाश्रयतो लिङ्गानुगमोऽत्र क्रियते। तथाह्यब्राह्मणः क्षत्रम्, अब्राह्मणः क्षत्रिय इत्युत्तरपदार्थसमवाय्येव लिङ्गं दृश्यते। अत एव स्वाभाविकमेतदित्युक्तम्।

सङ्ख्याप्यवर्षादिषूत्तरपदार्थसमवेतैवेति सापि स्वाभाविकी। अब्राह्मणावित्यादौ तु क्वचिद् बाह्यपदार्थापेक्षा सङ्ख्या। यद्येवं शब्दशक्तिप्रतिनियमादप्रयोगेऽपि विशेषस्य विशिष्टे लिङ्गसङ्ख्ये सिध्यत एवेति पूर्वपदार्थप्रधानपक्षोऽपि न त्याज्यः।

---

इष्टलिङ्गसंख्यासिद्धिर्न स्यात्। यस्माद् वर्षाभ्योऽन्यो हेमन्तोऽत्र=अवर्षा हेमन्त इति वाक्ये नञ्समासार्थस्याश्रयः=विशेष्य इति अवर्षा इत्यत्र हेमन्तगतलिङ्गसंख्याप्रसङ्गः।

एवम् अनापः पृथिवी इत्यादौ योज्यम्, हेमन्तग्रहणस्य प्रकृतकारिकागतस्योपलक्षणार्थत्वात्। नञ्समासस्य पूर्वपदार्थप्राधान्याच्च वर्षार्थस्योपसर्जनत्वाद् गोस्त्रियोः' (पा० १।२।४८) इति ह्रस्वत्वप्रसङ्ग इति नञ्समासस्यान्यपदार्थप्राधान्यपक्षवत् पूर्वपदार्थप्रधानपक्षोऽपि दुष्टः।

नञ्समासस्योत्तरपदार्थप्राधान्यमेव तु अत्र सिद्धान्तः। तथा च यथायथमुत्तरपदार्थगतलिङ्ग-संख्यासिद्धिः। लिङ्गवचनातिदेशस्य तु नायम्=अवर्षाः अनापः इत्यादिर्विषयः 'आविष्टलिङ्गत्वात्। ये हि गुणवचनाः बाह्यपदार्थसम्बन्धे सति भेदे=विशेषरूपविशेष्यगतलिङ्गसंख्याविशेषे विपरि-वर्तन्ते=विशेष्यगतलिंगसंख्यासम्बन्धितया परिणमन्ति, ते गुणवचनाः स्वाश्रयतो लिङ्गसंख्ये प्रति-पद्यन्ते=प्राप्नुवन्ति। तद्यथा शुक्लादयः शब्दाः, यथा वा बहुव्रीहिः समासः, नञ्समासस्तु अवर्षा इत्यादिषु उत्तरपदोपात्तलिङ्गसंख्याविशेषापरित्यागेन उत्तरपदलिङ्गमत्यन्तमनुवर्तत इति जातिशब्दानामिव नञ्समासस्यापि आविष्टलिङ्गत्वान्नाश्रयतो लिङ्गानुगमः=लिङ्गातिदेशः, अत्र= नञ्समासे क्रियते। तथाहि अब्राह्मणः क्षत्रम्, अब्राह्मणः क्षत्रियः इत्यादौ उत्तरपदार्थ-समवेतमेव लिङ्गं नञ्समासे दृश्यते।

अत एव स्वाभाविकमेतदुक्तम्। अवर्षादिषु संख्यापि लिङ्गवदुत्तरपदार्थसमवेतैवेति सापि=संख्यापि स्वाभाविकी। अब्राह्मणावित्यादौ तु क्वचिद् बाह्यपदार्थापेक्षासंख्या, अनाथ इत्यादौ तु न तथा सा। यद्येवं शब्दशक्तिप्रतिनियमात्=शब्दशक्तेर्नियतात्स्वभावात् विशेषवाच-कस्य क्षत्रियादिशब्दस्याप्रयोगेऽपि विशिष्टे लिंगसंख्ये=लिंगसंख्याविशेषौ सिद्ध्यत एवेति नञ्समा-सस्य पूर्वपदार्थप्राधान्यपक्षोऽपि न त्याज्यः। विशेषशब्दाप्रयोगेऽपि शब्दशक्तिस्वभावादेवेष्टलिङ्ग संख्यासिद्धेः।

अत एव भाष्ये चोद्यप्रतिसमाधानेन समर्थित एवायम्। असः असर्वस्मा इति च सर्वनामकार्यं भवत्येव, नञर्थस्याव्यतिरेककरत्वात् समानाधिकरणत्वात्। अतिसर्वायेत्यादावेव हि व्यधिकरणविशेषणविषये सर्वाद्यर्थस्याप्राधान्यम्, न तु समानाधिकरणे नञ्समासे।

वाक्य इव स्वार्थापरित्यागेनैव हि नञ्समासे सर्वादयो नञर्थविशेषणं भवतीति प्रवर्तत एव सर्वनामकार्यम्। अत एव प्रधानसामानाधिकरण्यान्नानाविभक्तित्वादप्रथमानिर्देशाच्चासत्युपसर्जनत्वे ह्रस्वत्वमपि न प्राप्नोति।

न चोपसर्जनकार्येषु पारिभाषिकसम्भवे लौकिकमुपसर्जनमुपादेयम्।

तस्मादुपपन्नं पूर्वपदार्थप्राधान्यदर्शनम्। तदेवं नञ्समासादौ लिङ्गसङ्ख्यातिदेशो यथाभाष्यमनुसृतः ॥ ३१५ ॥

यथा नञ्समासादौ, एवम् 'आकृत्यभिधानाद्वैकं विभक्तौ वाजप्यायनः' इति

---

अत एव भाष्ये चोद्यप्रतिसमाधानेन="नेदं वाचनिकमलिङ्गता, असंख्यता वा। किन्तर्हि स्वाभाविकमेतद्" इत्येवंरूपचोद्यप्रतिसमाधानेन समर्थित एवायम्=पूर्वपदार्थप्राधान्यपक्षः। असः, असर्वस्मै इति च पूर्वपदार्थप्राधान्यपक्षेऽपि भवत्येव। न सः-असः,न सर्वस्मै असर्वस्मै इत्येवं परिनिष्ठितविभक्त्या विग्रहेण जायमाने नञ्समासे नञर्थस्य उत्तरपदार्थसमानाधिकरणत्वेन पूर्वोत्तरपदार्थयोरव्यतिरेकपरत्वात्=अभेदपरकत्वात्। व्यधिकरणविशेषणविषये एव हि अतिसर्वाय इत्यादौ सर्वाद्यर्थस्याप्राधान्यम्, तत्प्रयुक्तः सर्वनामसंज्ञाऽभावः, तत्कार्याभावश्च, न तु समानाधिकरणे नञ्समासे तथा।

वाक्य इव स्वार्थापरित्यागेनैव हि नञ्समासे सामानाधिकरण्येन सर्वादयो नञर्थविशेषणानि भवन्तीति प्रवर्तत एव नञ्समासे सर्वनामकार्यम्। अत एव प्रधानसामानाधिकरण्यात्=प्रधानसामानाधिकरण्येन अप्रधानत्वरूपलौकिकोपसर्जनत्वाभावात् नानाविभक्तिकत्वात् = नानाविभक्तिकत्वेन शास्त्रीयोपसर्जनत्वप्रयोजकविग्रहवाक्याधिकरणकनियतविभक्तिकत्वाभावाद्, अप्रथमानिर्देशाच्च=प्रथमानिर्दिष्टत्वाभावेन शास्त्रीयोपसर्जनत्वाभावाच्च उपसर्जनत्वे असति पूर्वपदार्थप्राधान्यपक्षे अवर्षा इत्यादौ ह्रस्वत्वमपि न प्राप्नोति।

किञ्च 'कृत्रिमाऽकृत्रिमयोः कृत्रिमस्यैव ग्रहणम्' इति न्यायेन उपसर्जनकार्येषु पारिभाषिकसंभवे लौकिकमुपसर्जनं नोपादेयम्।

तस्मादुपपन्नं नञ्समासस्य पूर्वपदार्थप्राधान्यदर्शनम्, उत्तरपदार्थप्राधान्यदर्शनन्तु सिद्धान्तभूतं तिष्ठत्येव। तस्मादन्यपदार्थप्राधान्यदर्शनमेवैकं प्रत्याख्यातमिति। तदेवं नञ्समासादौ लिङ्गसंख्यातिदेशो यथा भाष्यमनुसृत इति ॥ ३१५ ॥

यथा नञ्समासादौ प्रागुक्तरीत्या प्रागुक्ता लिङ्गवचनसिद्धिः, एवम् "आकृत्यभिधानाद्वैकं विभक्तौ वाजप्यायन" इति।

जातिपदार्थपक्षाश्रयेणैकशेषप्रत्याख्याने 'लिङ्गवचनसिद्धिर्गुणस्यानित्यत्वात्' इत्युक्तम्। गुणो द्वित्वस्त्रीत्वादिकः। स चैकार्थसमवायाज्जातेरवच्छेदकः। नियतलिङ्गसंख्यैश्च जातिशब्दैर्जातिः प्रत्याय्यत इति शब्दशक्तिस्वभावापेक्षयाऽनित्यत्वं तस्य कथ्यते।

काचित् किल जातिः स्त्रीत्वयुक्तेन शब्देन प्रत्याय्यते, काचित् पुंस्त्वयुक्तेनेत्यादि। तथा काचिदेकत्वयुक्तेनेत्याद्यपीत्यनित्यत्वम्। अत एव 'गुणविवक्षानित्यत्वाद्' इति भाष्ये पाठः। अत्रैव पक्षान्तरमभिहितम् 'गुणवचनवद् वा' इति। लिङ्गवचनसिद्धिरित्येव।

तदेतद् व्याख्यातुमुपक्रमते—

**आकृतिः सर्वशब्दानां यदा वाच्या प्रतीयते।**
**एकत्वादेकशब्दत्वं न्याय्यं तस्यां च वर्ण्यते॥ ३१६॥**

---

अस्यार्थः—वा=अथवा आकृत्यभिधानात्=आकृतेः शब्दवाच्यत्वात्, विभक्तौ परतः, विभक्तौ विवक्षितायां वा व्यक्त्यपेक्षया बहूनां प्रयोगे प्राप्ते शब्दार्थभूताया आकृतेरेकत्वेन एकं पदं प्रयुज्यते, नानेकमिति वाजप्यायन आहेति। इति भाष्यकृतवाक्ये जातिपदार्थपक्षाश्रयेणैकशेषप्रत्याख्याने लिङ्गवचनसिद्धिर्गुणस्यानित्यत्वादित्युक्तम्। गुणो द्वित्वस्त्रीत्वादिको लिङ्गवचनरूपः। अनित्यत्वादित्यस्य अनियतत्वादित्यर्थः। स च लिङ्गवचनरूपो गुणो जात्या सहैकार्थसमवायाज्जातेरवच्छेदकः। नियतलिङ्गसंख्यैश्च जातिशब्दैर्जातः प्रत्याय्यत इति यः शब्दः शक्तिस्वभावस्तदपेक्षयाऽनित्यत्वमनियतत्वञ्च तस्य=गुणस्य कथ्यते।

काचित् किल जातिः स्त्रीत्वयुक्तेन शब्देन प्रत्याय्यते, यथा खट्वा इति। काचित् पुंस्त्वयुक्तेन, यथा दारा इति। इत्यादि। तथा काचिदेकत्वयुक्तेन, चन्द्र इति। काचिद् द्वित्वयुक्तेन, गोदौ ग्राम इति। काचिद् बहुत्वयुक्तेन सुमनसः, आपः, असवः इति अनित्यत्वं जातिसमानाधिकरणस्य संख्यारूपस्य गुणस्य। अत एव=गुणस्यानित्यत्वादेव गुणविवक्षाऽनित्यत्वादिति भाष्ये पाठः। गुणविवक्षाऽनित्यत्वगुणानित्यत्वयोः समनियतत्वात्। अत्रैव पक्षान्तरमभिहितम् "गुणवचनवद्वा"। अस्य लिङ्गवचनसिद्धिरिति शेषः। यद्यपि जातिशब्दानामाश्रयतो लिङ्गवचनानि गुणवचनवद् नोपपद्यन्ते, जातिशब्दानां स्वयं आश्रयरूपत्वात्=विशेष्यरूपत्वात्, तथापि सर्वत्र विशेष्यविशेषणभावे कामचारादुपपादनीयम्।

तदेतद् भाष्यं व्याख्यातुमुपक्रमते—आकृतिः सर्वशब्दानामिति।

अस्यार्थः—यदा आकृतिर्जातिः सर्वशब्दानां वाच्या प्रतीयते, न व्यक्तिः। यदा च जातेरेकत्वात् न्याय्यम्=समुचितम्, तस्यां जातौ एकशब्दत्वम्=एकशब्दवाच्यत्वं वर्ण्यते, तदा इति अग्रिमकारिकया सम्बन्ध इति।

'प्रख्याऽऽविशेषादाकृतिसद्भावे चोदनासु च तस्यारम्भाद् ज्ञायते चैकोपदिष्टम्' इति तस्या एव शब्दार्थत्वं निर्णीतम्। तथाचैकशब्दत्वे तदाश्रये सिद्धे प्रत्याख्यात एकशेषः। आकृतेरेकत्वात् तत्र सम्बन्धग्रहणोपपत्तेः सैव शब्दवाच्या। न च प्रतिनियतो विशेषः शब्दात् प्रतीयत इति सामान्याभिधानमेव। आश्रयभेदापायोपजनेष्वपि चैकप्रख्यानिबन्धनाया जातेर्भेदापायोपजनाभावात् तत्प्रयुक्तः शब्द एक एव न्याय्यः।

अर्थभेदे हि शब्दानां भेदः। अर्थश्च प्रधानभूतो जातिरेकेत्येक एव शब्दः ॥ ३१६ ॥

एवमुपक्षिप्य लिङ्गं तावद् विचार्यते। तथाहि—इयमाकृतिः शब्दैरभिधीयमाना आविष्टलिङ्गोक्ता। आविष्टं लिङ्गं यया सा आविष्टलिङ्गा नियतलिङ्गेत्यर्थः। सर्वत्र

---

अयं भावः—"प्रख्याविशेषादाकृतिसद्भावे चोदनासु च तस्यारम्भाद् ज्ञायते चैकोपदिष्टम्" इति भाष्यम्।

अस्यार्थः—वर्णवयःसंस्थानभिन्नास्वपि गोषु गौर्गौरिति प्रख्यायाः=प्रत्ययस्य अविशेषात् समानत्वाद् आकृतिसद्भावे जातिसत्त्वे सिद्धे सति "जात्याख्यायामेकस्मिन्, बहुवचनमन्यतरस्याम्" (पा० १।२।५८) इत्यादिकासु चोदनासु च तस्यारम्भाद्=तस्य बहुत्वरूपस्य गुणस्य आरम्भाद्= विधानाज्जातौ एकोपदिष्टञ्च=एकस्य शब्दस्य उपदिष्टम्=उपदेशः, उच्चारणम्, प्रयोगश्च ज्ञायते= अनुमीयत इति एकशेषसूत्रं न कर्तव्यमिति। एतद्भाष्याच्च तस्या एव=जातेरेव शब्दार्थत्वम्= सर्वशब्दवाच्यत्वं निर्णीतम्। तदा च तदाश्रये=जात्याश्रये द्रव्ये एकशब्दत्वे एकशब्दवाच्यत्वे सिद्धे प्रत्याख्यातमेकशेषसूत्रम्। व्यक्तिभेदेऽपि जातेरेकत्वात् तत्र सम्बन्धग्रहणोपपत्तेः=शक्तिग्रहसम्भवात् सैव=जातिरेव शब्दवाच्या, न व्यक्तिः, आनन्त्यव्यभिचारदोषात्। रामौ रामा इत्यादौ च प्रतिनियतो विशेषः=दाशरथित्वजामदग्न्यत्वादिरूपो रामशब्दाद् न च प्रतीयत इति अत्र रामशब्दार्थसामान्याभिधानमेव, न तु विशेषाऽभिधानम्। आश्रयभेदापायोपजनेष्वपि च= जात्याश्रयद्रव्याणां विभागविनाशोत्पत्तिष्वपि च एकप्रख्यानिबन्धनायाः=एकप्रत्ययज्ञाप्याया- जातेरेकत्वेन नित्यत्वाद् भेदापायोपजनाभावात्=विभागविनाशोत्पत्त्यभावात् तत्प्रयुक्तः=जात्येकत्वप्रयुक्तः, जातिवाचक एक एव शब्दो न्याय्यः।

अर्थभेदे हि तद्वाचकशब्दभेदः। अर्थश्च सर्वेषां शब्दानां प्रधानभूतो जातिरेका इत्येक एव शब्द एकशेषविषये प्रयोक्तव्य इति ॥ ३१६ ॥

एवं जातेः शब्दार्थत्वे एकशेषप्रत्याख्यानमुपक्षिप्य तत्र लिङ्गं तावद्विचार्यते। लिङ्गं हि शब्दशक्तिस्वभावमात्रापेक्षमन्तरङ्गम्, संख्या तु एकत्वरूपा अनेकत्वाभावसापेक्षा, द्वित्वादिकापि एकत्वादिसापेक्षा इति बहिरङ्गा, शब्दशक्तिस्वभावापेक्षत्वन्तु उभयोः समानमिति।

तत्रायं लिङ्गविमर्शोपक्रमः—इयमाकृतिः=जातिः शब्दैरभिधीयमाना आविष्टलिङ्गा उक्ता। अविष्टं लिङ्गं यया सा आविष्टलिङ्गा=आविष्टं आवेशगोचरीकृतं नियमविषयीकृतं नियमितम्, स्वलिङ्गं यया शब्दविशेषणाभिधीयमानया सा आविष्टलिङ्गा नियमितलिङ्गा नियतलिंगा

सर्वेषां लिङ्गानां सद्भावेऽपि केनचिच्छब्देन किञ्चिल्लिङ्गं प्रत्याय्यत इति शब्दविशेषापेक्षया आविष्टलिङ्गत्वमुच्यते। तदेतदाह—

**आविष्टलिङ्गता तस्यां स्याद् ग्राम्यपशुसङ्घवत्।**
**द्रव्यभेदेऽपि चैकत्वात् तत्रैकवचनं भवेत्॥ ३१७॥**

"ग्राम्यपशुसङ्घेष्वतरुणेषु स्त्री" (पा० १।२।७३) इति जातिपदार्थे प्रत्याख्याते सूत्रे स्वभावात् प्रतिनियतलिङ्गभेदोपग्रहः। तथाहि—तत्र मूलोदाहरणविषयेषु स्त्रीत्वमेव गाव इमा इति। प्रत्युदाहरणविषयेषु तु पुंस्त्वमेव तरुणेष्विति। एवं जातिशब्दानां नियतलिङ्गता स्वभावात्।

जातिपदार्थदर्शनाश्रयेण हि सूत्रप्रत्याख्याने शब्दशक्तिभेदाश्रयो लिङ्गनियमः। तथा च ब्राह्मणो ब्राह्मणीत्यादावपि जात्यभिधाने शब्दशक्तिनिमित्तमेवोभयलिङ्गाभिधानम्। वृक्ष इत्यादौ तु पुंस्त्वमेव नियतम्, जातेरेव चाभिधीयमानत्वात्। अनुमीयमानद्रव्यभेदेऽपि तस्य शब्देनानुपादानादभिधीयमानजातिबन्धनमेकवचनमेव भवेदिति जात्याख्यायामेकस्मिन् बहुवचनमारभ्यते। पूर्वश्लोके यद् यदेति, तत्सम्बन्धादिह तदेति योज्यमिति समन्वयोपपत्तिः॥ ३१७॥

---

इति तु निष्कर्षः। सर्वत्र सर्वेषां लिङ्गानां सद्भावेऽपि केनचिच्छब्देन किञ्चिल्लिङ्गं प्रत्याय्यत इति शब्दविशेषापेक्षया आविष्टलिङ्गत्वं जातेरुच्यते। तदेतदाह—आविष्टलिंगता तस्यामिति।

अस्यार्थः—तस्यां जातौ ग्राम्यपशुसंघवत्। ग्राम्यपशुसंघे इव, उदाहरणे गाव इमा इत्यत्रेव, प्रत्युदाहरणे वत्सा इमे इत्यत्रेव च आविष्टलिङ्गता नियतलिङ्गता स्यात्। तत्र जातौ, एकवचनञ्च=तु, द्रव्यभेदेऽपि जात्याश्रयव्यक्तिभेदेऽपि जातेरेकत्वाद् भवेदिति।

अयं भावः—जातिपदार्थे=जातिः पदार्थ इति पक्षे "ग्राम्यपशुसंघेष्वतरुणेषु स्त्री" (पा०१।२।७३) इत्येकशेषसूत्रे प्रत्याख्याते स्वभावात् शब्दशक्तिस्वभावात् प्रतिनियतलिङ्गभेदोपग्रहः। तथा हि तत्र=ग्राम्यपशुसंघेष्वतरुणेषु स्त्री इति सूत्रे मूलोदाहरणविषयेषु स्त्रीत्वमेव, गाव इमा इति। प्रत्युदाहरणविषयेषु तु पुंस्त्वमेव तरुणेषु वत्सा इमे इति। एवम्=ग्राम्यपशुसंघेष्विव जातिशब्दानां नियतलिङ्गता शब्दशक्तिस्वभावात्।

जातिः पदार्थ इति दर्शनसमाश्रयेण हि एकशेषसूत्रप्रत्याख्याने शब्दशक्तिविशेषाश्रयो लिङ्गनियमः। तथा च ब्राह्मणो ब्राह्मणी इत्यादावपि जात्यभिधाने शब्दशक्तिनिमित्तकमेवोभयलिङ्गाभिधानम्। वृक्ष इत्यादौ तु पुंस्त्वमेव नियतम्, जातेरेव चाभिधानत्वात्। जात्याश्रयतयाऽनुमीयमानद्रव्यभेदेऽपि तस्य=जात्याश्रयद्रव्यभेदस्य शब्देनानुपादानात्=शब्देनानभिधानात् शब्देनाभिधीयमानजातिनिबन्धनमेकवचनमेव भवेदिति जात्याख्यायामेकस्मिन् बहुवचनमारभ्यते। पूर्वश्लोके यदा इति यदभिहितं तत्सम्बन्धादिह श्लोके तदा इति योज्यमिति पूर्वोत्तरश्लोकद्वये समन्वयोपपत्तिः=सम्बन्धोपपत्तिरिति॥ ३१७॥

यदि तर्हि लिङ्गभेदेन योगः, कथमाविष्टलिङ्गता जातेरित्यत आह—

**आश्रयाणां हि लिङ्गैः सा नियतैरेव युज्यते ।**
**तथा च युक्तवद्भावे प्रतिषेधो निरर्थकः ॥ ३१८ ॥**

एकार्थसमवायादाश्रयगतलिङ्गोपादाना जातिः शब्दशक्त्यनुसारेण नियममङ्गीकृतवती ।

तथाहि—वृक्षः पादपस्तरुरिति वृक्षत्वजातिराश्रयगतं पुंस्त्वमेवोपादत्ते, न कदाचिदत्र स्त्रीत्वनपुंसकत्वे दृश्येते । शिंशपादयः स्त्रीत्वमेवाश्रयन्ते । पनसमित्यादयस्तु नपुंसकत्वमेव । इष्वशनिप्रभृतयो द्विलिङ्गाः, पद्मशङ्खादयश्च । तटादयस्त्रिलिङ्गाः । ब्राह्मणो ब्राह्मणीति च द्विलिङ्गः ।

न ह्यत्र लिङ्गव्यतिकरः कदाचिदपि दृश्यत इति शब्दशक्तिभेदापेक्षो लिङ्गनियमोऽयमाविष्टलिङ्गता जातेर्विवक्षिता । अत एव च "विशेषणानां चाजातेः" ( पा० १।२।५२ ) इति जातिप्रतिषेधो निष्फलः । जातिशब्दा हि स्वसामर्थ्यानुरोधेन लिङ्गोपादायिनो न युक्तस्य लिङ्गमनुरुध्यन्ते ॥ ३१८ ॥

---

यदि तर्हि वृक्षः शिंशपा इत्यादौ जातेर्लिङ्गभेदेन योगः, तदा कथमाविष्टलिङ्गता जातेरित्यत आह—आश्रयाणां हि इति ।

अस्यार्थः—सा जातिर्हि शब्दशक्त्या नियतैरेव स्वाश्रयाणां लिङ्गैर्युज्यते, एकार्थसमवायात् । तथा च=तथा स्थिते च विशेषणानां चाजातेरित्यत्र युक्तवद्भावे जातेः प्रतिषेधो निरर्थकः । शब्दशक्त्यैवेष्टस्य जातिलिङ्गस्य नियमनादिति ।

अयं भावः—जातेर्लिङ्गेन सह एकार्थसमवायाद् आश्रयगतलिङ्गोपादाना=आश्रयगतं लिङ्गमभिदधाना जातिः शब्दशक्त्यनुसारेण लिङ्गनियममङ्गीकृतवती ।

तथा हि—वृक्षः पादपस्तरुरिति तत्तच्छब्दैरभिधीयमाना वृक्षत्वजातिराश्रयगतं पुंस्त्वमेवोपादत्ते । न कदाचिदत्र स्त्रीत्वनपुंसकत्वे दृश्येते । शिंशपादयः शब्दाः स्त्रीत्वमेवाश्रयन्ते । पनसमित्यादयस्तु नपुंसकत्वमेव । इष्वशनिप्रभृतयः पद्मशङ्खादयश्च द्विलिङ्गाः । तटादयस्त्रिलिङ्गाः । ब्राह्मणो ब्राह्मणीति च दर्शनाद् द्विलिङ्गो ब्राह्मणशब्दः ।

नह्यत्र लिङ्गव्यतिकरः=नहि ब्राह्मणशब्दे लिङ्गत्रयसंकरः कदाचिदपि दृश्यत इति शब्दशक्तिभेदापेक्षः=शब्दशक्ति विशेषापेक्षः लिङ्गनियमोऽयमाविष्टलिङ्गता = नियतलिङ्गता जातेर्विवक्षिता । अत एव च=जातेर्नियतलिङ्गत्वादेव च विशेषणानाञ्चाजातेरित्यत्र सूत्रे जातिप्रतिषेधो निष्फलः । जातिशब्दा हि स्वसामर्थ्यानुरोधेन लिङ्गोपादायिनः=लिङ्गाभिधायिनः, न युक्तस्य=लुप्तप्रत्ययप्रकृतिभूतस्य प्रातिपदिकस्य लिङ्गमनुरुध्यन्त इति ॥ ३१८ ॥

नन्वेवं गुणवचनवदाश्रयगतलिङ्गपरिग्रहे न जातेः स्वतो लिङ्गयोगः कश्चिद्, द्रव्यधर्मत्वाल्लिङ्गस्य। सत्यमेतत्। प्रभूतोऽयं प्रयोग इति तु शब्दसंस्कारमात्रमत्र लिङ्गम्। आविष्टलिङ्गो वा पादपशब्दोऽनुभवति भिन्नलिङ्गेन सामानाधिकरण्यम्। तद्यथा—ब्राह्मणोऽयं नपुंसकमिति। प्रवृत्तिमन्तो हि सर्वेऽर्थास्तिसृभिः प्रवृत्तिभिरवियुक्ता इति यथायथं शब्दैरनुगम्यन्ते। अत एव चैतदाविष्टलिङ्गत्वं जातेः स्तनकेशादिव्यञ्जनलौकिकलिङ्गपरिग्रहे नोपपद्यत इत्याह—

**सर्वत्राविष्टलिङ्गत्वं लोकलिङ्गपरिग्रहे।**
**विरोधित्वात् प्रसज्येत नाश्रितं तच्च लौकिकम्॥ ३१९॥**

लोकव्यवहारनिरूढे लिङ्गे समाश्रीयमाणे स्तनादीनां व्यञ्जकानां प्रतिनियमात् तद्व्यङ्ग्यस्य स्त्रीत्वादेरेकार्थसमवायविरोधात् सर्वस्मिन्नर्थे नियतलिङ्गत्वमेतच्छब्दानां

---

नन्वेवं गुणवचनवदाश्रयगतलिङ्गपरिग्रहे=विशेष्यगतलिङ्गपरिग्रहे न जातेः स्वतो लिङ्गयोगः कश्चिद्, लिङ्गस्य सत्त्वभूतद्रव्यधर्मत्वात्, जातेश्चासत्त्वभूतत्वेन लिङ्गराहित्यात्। तथा च कथं जातिशब्दे लिङ्गप्रयुक्तः संस्कारः। सत्यमेतत्। प्रभूतोऽयं जातेर्लिङ्गप्रयुक्तसंस्कारवान् प्रयोग इति तु विज्ञाय प्रवृत्तं शब्दसंस्कारमात्रमत्र=स्वतो जातेर्लिङ्गयोगाभावेऽपि गुणवचनवदाश्रयगतलिङ्गपरिग्रहे लिङ्गम्=गमकम्। आविष्टलिङ्गो वा=नियतलिङ्गो वा पादपशब्दोऽनुभवति भिन्नलिङ्गेन सामानाधिकरण्यम्। अत्र वने पनसमेव पादपः, न त्वाम्रादिः। यथा वा ब्राह्मणोऽयं नपुंसकम्, पराभवेऽपि पराक्रमराहित्यादिति। अत्र पूर्वत्र च विशेषणविशेष्ययोरुभयोरपि आविष्टलिङ्गत्वेन भिन्नलिङ्गत्वम्। गुणानां सततं परिणामित्वेन सततं प्रवृत्तिमन्तो हि सर्वे गुणविकारभूता अर्थाः तिसृभिः प्रवृत्तिभिः=आविर्भावतिरोभावस्थितिलक्षणाभिः क्रियाभिर्लिङ्गरूपाभिः अवियुक्ता इति यथायथं तत्तच्छब्दैरनुगम्यन्ते=तत्तल्लिङ्गयुक्तो अनुस्त्रियन्ते।

अत एव च=सर्वेषामर्थानां गुणपरिणामरूपत्वेन आविर्भावादिरूपप्रवृत्तित्रयात्मकलिङ्गत्रयवत्त्वादेव च एतद्जातेराविष्टलिङ्गपरिग्रहेनोपपद्यत इति स्फुटमेवेत्याह—सर्वत्राविष्टलिङ्गत्वमिति।

अस्यार्थः—लोकलिङ्गपरिग्रहे लोके प्रसिद्धस्य स्तनकेशादिलक्षणस्य स्त्रीत्वादिव्यञ्जनस्य परिग्रहे व्याकरणशास्त्रे शब्दसंस्कारार्थं स्वीकारे क्रियमाणे सर्वत्र सर्वेष्वर्थेष्वाविष्टलिङ्गत्वं नियतलिङ्गत्वं प्रसज्यते, विरोधित्वात्=स्तनकेशादिलक्षणस्य लौकिकस्य लिङ्गस्य स्त्रीत्वादेरेकार्थसमवायविरोधात्। चो हेतौ। यतो लोकलिङ्गपरिग्रहे सर्वत्राविष्टलिङ्गत्वं प्रसज्यते, अतस्तत्=स्तनादिलक्षणम्, लौकिकं लिङ्गमत्र व्याकरणे शब्दसंस्कारार्थं नाश्रितम्। लोकलिङ्गपरिग्रहे हि योषित् स्त्रीलिङ्गेनैव शब्देन व्यपदिश्यते, न तु दारकलत्रादिशब्दैः पुंनपुंसकलिङ्गैः। योषिदर्थे लौकिकस्य स्त्रीत्वपुंस्त्वादेरभावादिति।

अयं भावः—लोकव्यवहारप्रसिद्धे लिङ्गे समाश्रीयमाणे स्तनादीनां स्त्रीत्वादिव्यञ्जकानां योषिदाद्यर्थविशेषं प्रति प्रतिनियमात् स्तनादिव्यङ्ग्यस्य स्त्रीत्वादेरेकार्थसमवायविरोधात् सर्वस्मि-

प्राप्नुयात्। स्तनकेशयोगाभिव्यक्तस्त्रीत्वा योषित् स्त्रीलिङ्गेनैव शब्देन व्यपदिश्येत, न दारकलत्रशब्दाभ्यां पुंनपुंसकलिङ्गाभ्याम्। अश्वादयश्च नपुंसकेन वाहनशब्देन नोच्येरन्। तस्मादात्मीयः सिद्धान्तः शब्दार्थोऽर्थो यथा नानालिङ्ग उपपद्यते, स प्रतिज्ञेयः। अर्थव्यक्तिवस्तुशब्दैः सर्वार्थानां व्यवहाराद् यथा त्रिलिङ्गता सम्पद्यते, तथा परिभाषणीयम्।

तथा च भाष्यम्—'तस्मान्न वैयाकरणैः शक्यं लौकिकं लिङ्गमास्थातुम्। अवश्यं कश्चित् स्वकृतान्त आस्थेयः' इति ॥ ३१९ ॥

तथाहि—

**सामान्यमाकृतिर्भावो जातिरित्यत्र लौकिकम्।**
**लिङ्गं न सम्भवत्येव तेनान्यत् परिगृह्यते ॥ ३२० ॥**

सामान्यादयः शब्दाः पदार्थमेकमाचक्षते भिन्नलिङ्गाः। न च तस्य पदार्थस्य लौकिकमस्ति लिङ्गमित्यलिङ्गास्तदाश्रयणे प्रसज्यन्त एते शब्दाः। तस्मादन्यत् व्यापकं शास्त्रीयं लिङ्गमाश्रीयते ॥ ३२० ॥

---

न्नर्थे नियतलिङ्गत्वमेतच्छब्दानाम्=एतदर्थवाचकशब्दानां प्राप्नुयात्। स्तनकेशसंबन्धाभिव्यक्तस्त्रीत्वा योषित् स्त्रीलिंगेनैव शब्देन व्यपदिश्येत=व्यवह्रियेत, न दारकलत्रशब्दाभ्यां यथायथं पुंनपुंसकलिङ्गाभ्याम्। अश्वादयश्च नपुंसकेन वाहनशब्देन नोच्येरन्, पुंस्त्वव्यञ्जकलिङ्गत्वात्। तस्मादात्मीयः सिद्धान्तः शब्दार्थोऽर्थः=शब्दवाच्योऽर्थः यथा नानालिङ्ग उपपद्यते, तथा स प्रतिज्ञेयः। अर्थव्यक्तिवस्तुशब्दैः सर्वार्थानां व्यवहाराद् यथा तेषां त्रिलिङ्गता संपद्यते, तथा परिभाषणीयम्।

तथा च भाष्यम्—"तस्मान्न वैयाकरणैः शक्यं लौकिकं लिङ्गमास्थातुम्, अवश्यं कश्चित् स्वकृतान्त आस्थेयः" इति। अत्र कृतान्तः सिद्धान्तः ॥ ३१९ ॥

तथाहि—एकस्मिन् पदार्थे भिन्नलिङ्गत्वं दृश्यत इति लौकिकाल्लिगादन्यल्लिगमास्थेयमित्याह—सामान्यमाकृतिरिति।

अस्यार्थः—'सामान्यमाकृतिर्भावो जातिः' इत्यत्रैकस्मिन्नर्थे लिङ्गत्रयं दृश्यते तच्च लौकिकं न संभवत्येव, विरोधित्वात्। तेन लौकिकाल्लिगादन्यत् पारिभाषिकं लिङ्गमविरोधिव्याकरणशास्त्रे परिगृह्यत इति एकत्रार्थे लिङ्गत्रयसिद्धिरिति।

अयं भावः—सामान्यादयः शब्दाभिन्नलिंगाः पदार्थमेकमाचक्षते, न च तस्य पदार्थस्य लौकिकं लिंगमस्तीति तदाश्रयणे=लौकिकलिङ्गाश्रयणे एते शब्दा अतिलिङ्गाः प्रसज्यन्ते। तस्माल्लौकिकाल्लिङ्गादन्यद् व्यापकम्=सर्वेष्वर्थेष्वनुगतम्, शास्त्रीयम्=शास्त्रे परिभाषितं लिङ्गमाश्रीयतेऽत्र शास्त्रे शब्दसंस्कारायेति ॥ ३२० ॥

किं तदित्युक्तं भाष्ये 'संस्त्यानप्रसवौ लिङ्गम्' इति। तद् व्याख्यातुमाह—

**प्रवृत्तिरिति सामान्यं लक्षणं तस्य कथ्यते।**
**आविर्भावस्तिरोभावः स्थितिश्चेत्यथ भिद्यते ॥ ३२१ ॥**

अजस्रपरिणामिनां गुणानां परिणामविशेषानादरेण प्रवृत्तिः परिणाम इत्येव सामान्यं लिङ्गलक्षणम्। तथाहि 'कस्य पुनः संस्त्यानं स्त्री प्रवृत्तिर्वा पुमान्' इति चोदयित्वा 'गुणानां रूपादीनाम्' इति भाष्यम्। सत्त्वरजस्तमस्संनिवेशानां रूपादीनां संस्त्यानं संहननं विवेकेनावस्थाय धर्माणां केषाञ्चित् प्रकृतौ प्रविलयस्तिरोधानं स्त्रीत्वम्। अपरेषां प्रसवो धर्मिणि उद्भव अविर्भावः पुंस्त्वम्। रजसः प्रवृत्तिधर्मणोऽङ्गितायां प्रादुर्भावः। गुणानां चात्यन्तमितरेतरसाहचर्यात् तमस

---

"किं तच्छास्त्रीयं लिङ्गम्" इति पृष्टे उक्तं भाष्ये—"संस्त्यानप्रसवौ लिङ्गम्" इति।

अस्यार्थः—संस्त्यानम्=संहननं तिरोभावः स्त्रीत्वं लिङ्गं तिरोधानरूपम्। प्रसवो गुणानामाविर्भावरूपः परिणामः पुंस्त्वम्। संस्त्यानप्रसवावस्थाव्यापिका स्थितिर्नपुंसकमिति अन्वर्थनाम्ना स्त्रीपुंसनिषेधरूपतयैव गम्यमानत्वान्न भेदेनात्र भाष्ये लक्षितमिति। तदेतद् भाष्यं व्याख्यातुमाह—प्रवृत्तिरिति सामान्यमिति।

अस्यार्थः—तस्य=लिङ्गस्य प्रवृत्तिरिति सामान्यलक्षणं कथ्यते। सततं सजातीयरूपेण विजातीयरूपेण वा परिणामिनां गुणानां या परिणामविशेषानादरेण परिणामसामान्यरूपा प्रवृत्तिः सा लिङ्गस्य सामान्यलक्षणम्, त्रिषु लिङ्गेषु परिणामविशेषरूपेष्वनुगमात्। अथ परस्परसहचरितगुणपरिणामेषु भावेषु तमस उद्भूतत्वे रजसः प्रवृत्त्यनुरोधेन कस्यचिद् धर्मस्य तिरोभावः स्त्रीत्वम्, अपरस्य तु धर्मस्य प्रादुर्भावः पुंस्त्वम्, तिरोभूतधर्मावस्थायां धर्मिरूपस्यापि अनुवृत्तिः स्थितिर्नपुंसकम्, तमसः सत्त्वधर्मोपरागात्। एवमाविर्भावः, तिरोभावः, स्थितिश्चेति स्त्रीपुंनपुंसकरूपं लिङ्गत्रयं परस्परं भिद्यत इति।

अयं भावः—अजस्रपरिणामिनाम्=चलञ्च गुणवृत्तमिति अभ्युपगमेन सततं परिणामशीलानां गुणानां सत्त्वरजस्तमसामाविर्भावादिरूपपरिणामविशेषानादरेण प्रवृत्तिः परिणाम इत्येव सामान्यं लक्षणम्।

तथाहि—"कस्य पुनः संस्त्यानं स्त्रीप्रवृत्तिर्वा पुमान्" इति चोदयित्वा=आशङ्क्य "गुणानां रूपादीनाम्" इति भाष्यम्।

अत्र भाष्ये—प्रवृत्तिः प्रसव आविर्भावः पुंस्त्वमित्यर्थः। सत्त्वरजस्तमःसन्निवेशानाम्=सत्त्वादिगुणपरिणामानां रूपादीनां संस्त्यानं संहननम्—स्वाश्रयाद् विवेकेनावस्थाय=विवेकेनावस्थितिपूर्वकं विज्ञानगोचरीभूय केषाञ्चिद् धर्माणां प्रकृतौ प्रविलयः तिरोधानं स्त्रीत्वम्। अपरेषां धर्माणां प्रसवो धर्मिणि उद्भव आविर्भावः पुंस्त्वम्। अयञ्च धर्मान्तरप्रादुर्भावः प्रवृत्तिधर्मणोरजसोऽङ्गितायाम्=उद्भूतत्वेन प्राधान्ये सति इतरयोश्च गुणयोः सत्त्वतमसोरङ्गत्वे

उद्भूतस्याङ्गभूतरजोधर्मप्रवृत्त्यनुरोधे तिरोभावः। धर्मिरूपस्यापि तिरोभूतधर्माव-स्थायामनुवृत्तिः, तमसः सत्त्वधर्मोपरागात् स्थितिर्नपुंसकं स्त्रीपुंसनिषेधरूपतयैव गम्यमानत्वान्न भेदेन लक्षितम्। अत एव संस्त्यानप्रसवावस्थाव्यापित्वात् स्थितेर्लिङ्ग-सर्वनाम नपुंसकम्। स्थितितिरोभावावस्थयो रजोधर्मस्य प्रवृत्तेर्गुणान्तरेऽप्यनुवेधा-दन्वयित्वे सति लिङ्गानां सामान्यमेतत्॥ ३२१॥

अनेन लिङ्गेन सर्वे पदार्था व्याप्ता इत्युक्तं भाष्ये 'प्रवृत्तिः खल्वपि नित्या। नहि कश्चित् स्वस्मिन्नात्मनि मुहूर्तमप्यवतिष्ठते' इत्यादि। तद् व्याचष्टे—

**प्रवृत्तिमन्तः सर्वेऽर्थास्तिसृभिश्च प्रवृत्तिभिः।**
**सततं न वियुज्यन्ते वाचश्चैवात्र सम्भवः॥ ३२२॥**

---

सति भवति। गुणानाञ्चात्यन्तमितरेतरसाहचर्यात्=अविनाभावात्, उद्भूतस्य तमसोऽङ्गिनोऽङ्ग-भूतरजोधर्मप्रवृत्त्यनुरोधे=तादृशप्रवृत्त्यनुसारित्वे पूर्वावस्थितधर्माणां रूपादीनां तिरोभावः। धर्मिरूपस्यापि पूर्वावस्थितस्य तिरोभूतधर्मावस्थायामनुवृत्तिः, न त्वभावः, तमसः=तमःपरिणाम-रूपस्य तिरोभूतधर्मावस्थामापन्नस्य धर्मिरूपस्य तमोऽविनाभूतसत्त्वधर्मस्थित्युपरागाद् अनुवृत्तिरूपा स्थितिर्नपुंसकम्, तच्च स्त्रीपुंसनिषेधरूपतयैवान्वर्थेन नपुंसकपदेन स्वघटकस्त्रीपदाभावेऽपि स्त्रीत्वोप-लक्षणपरपुंपदघटितेन गम्यमानत्वान्न भेदेन लक्षितम्। अत एव=प्रागुक्तयुक्तेरेव प्रागुक्तायाः स्थिते-र्नपुंसकलिङ्गरूपायाः प्रागुक्तरीत्या संस्त्यानप्रसवावस्थाव्यापित्वाद् नपुंसकं लिङ्गसर्वनाम कथ्यते। धर्माणां स्थितितिरोभावावस्थयोः सत्त्वतमःपरिणामरूपयो रजोधर्मस्य प्रवृत्तेर्गुणान्तरेऽपि=सत्त्वे तमसि च, अनुवेधात्=गुणानामविनाभावित्वेन संबन्धात् अन्वयित्वे सति एतत्=स्थितिरूपं नपुंसकम्, लिङ्गानां सामान्यमिति।

अयमत्र निष्कर्षः—सर्वेषां पदार्थानां गुणत्रयपरिणामत्वेन गुणत्रयात्मकत्वम्। गुणत्रयस्य च सततपरिणामित्वेन पदार्थधर्माणां पदार्थस्य धर्मस्याविर्भावतिरोभावस्थितिरूपलिङ्गत्रयवत्वम्। तेन सर्वे पदार्था लिङ्गत्रयवन्त इति स्थितम्। तत्र लिङ्गत्रयं सर्वपदार्थगतं तत्तत्पर्यायशब्दैरभि-धीयते। तद् यथा—एकस्यामेव योषायां योषिद्दारकलत्रशब्दैर्नियतया स्वशक्त्या तत्तल्लिङ्गमभि-धीयत इति॥ ३२१॥

अनेन लिङ्गेन प्राग् लक्षितसामान्यविशेषविभागवता सर्वे पदार्था व्याप्तास्त्रिगुणात्मकत्वात्, इत्युक्तं भाष्ये—"प्रवृत्तिः खल्वपि नित्या। नहि कश्चित् स्वस्मिन्नात्मनि मुहूर्तमप्यवतिष्ठते" इत्यादि।

अस्यार्थः—गुणानां सत्त्वरजस्तमसां प्रवृत्तिः सजातीयाकारेण विजातीयाकारेण वा परिणतिः खल्वपि नित्या प्रवाहरूपेण शाश्वतिकी यतोऽतो न हि कश्चित् स्वस्मिन्नात्मनि स्वस्वरूपे मुहूर्तमप्यवतिष्ठति इति। तद्भाष्यं व्याचष्टे—प्रवृत्तिमन्त इति।

अस्यार्थः—चो हेतौ। यतः सर्वेऽर्थास्त्रिगुणात्मकत्वात् प्रवृत्तिमन्तः=सततं परिणामवन्तः, अतः तिसृभिः प्रवृत्तिभिः=आविर्भावतिरोभावस्थितिलक्षणाभिः सततं न वियुज्यन्ते। वाचश्च=

'वर्धते यावदनेन वर्धितव्यमपायेन वा युज्यते' इत्यनुग्रहोपघातनिमित्तसान्निध्ये भावानां परिणाममनुभवतामाविर्भावादिलक्षणाभिर्विशेषप्रवृत्तिभिरजस्रमवियोगः। तथाहि—प्रतिकलमवस्थान्तरावधारणान्यथानुपपत्त्या समुन्नीयते परिणामः।

तदुक्तं भाष्ये—'सर्वाश्च पुनर्मूर्तय एवमात्मिकाः संस्त्यानप्रसवगुणाः' इति। एवंरूपाश्च पदार्थाः शब्दैरनुगम्यन्ते। न हि शुद्धं परिणामि वस्तुतत्त्वमभिधानविषयः, आकारोपग्रहेण शब्दवाच्यत्वादिति सर्वशब्दानां स्वशक्त्यनुसारी लिङ्गनियमः समञ्जसः॥ ३२२॥

तत्र प्रकृतेस्त्रिगुणाया रजसानवरतमस्तु प्रवृत्तिशीलता, तद्विकाराणां च भोग्यात्मकानाम्। यस्तु भोक्ता पुरुषश्चेतनः, सोऽत्यन्तविधर्मा भोग्यजातान्निर्गुणः प्रवृत्तिमननुभवन् कथमात्मा चैतन्यं चितिरिति लिङ्गविशेषनियताभिधानविषयतामनुभवतीत्याशङ्क्याह—

**यश्चाप्रवृत्तिधर्मार्थश्चितिरूपेण गृह्यते।**
**अनुयातीव सोऽन्येषां प्रवृत्तीर्विष्वगाश्रयाः॥ ३२३॥**

---

वाचोऽपि, शब्दस्यापि, अत्रैव=विजातीयाकारेण प्रवृत्तिमत्सु पदार्थेष्वेव प्रवृत्तिसंभवः, न तु अव्यक्ते त्रिगुणात्मके सजातीयाकारेण परिणामिनि। अव्यक्तस्य अस्फुटाकारस्य वागगोचरत्वात्, सर्वस्यैवार्थस्य आकारोपग्रहेणैव शब्दवाच्यत्वादिति।

अयं भावः—"वर्धते यावदनेन वर्धितव्यमपायेन वा युज्यते" इति। अत्र वृद्धेराविर्भावेऽन्तर्भावः, अपायस्य तिरोभावे। एवं भावानामनुग्रहोपघातनिमित्तसांनिध्ये परिणाममनुभवताम्=अनुग्रहनिमित्तसानिध्ये आविर्भावरूपं परिणामम्, उपघातनिमित्तसानिध्ये तिरोभावरूपं परिणाममनुभवताम्, आविर्भावतिरोभावस्थितिलक्षणाभिर्विशेषप्रवृत्तिभिः सततमवियोगः।

तथाहि—भावानां प्रतिक्षणमवस्थान्तरम्=अन्या चान्या चावस्था अवधार्यते, परिणामं विना च तदन्यथाऽनुपपत्त्या तेषां परिणामः समुन्नीयते=कल्प्यते।

तदुक्तं भाष्ये—"सर्वाश्च पुनर्मूर्तय एवमात्मिकाः संस्त्यानप्रसवगुणाः" इति। अत्र मूर्तयः पदार्थाः। एवमात्मिका इत्यस्य व्याख्यानम्=संस्त्यानप्रसवगुणा इति। एवंरूपाश्च=संस्त्यानप्रसवगुणाश्च पदार्थाः शब्दैः स्वशक्त्या तत्तल्लिङ्गाभिधायिभिरनुगम्यन्ते=अभिधीयन्ते। न हि शुद्धम्=विकारशून्यं सजातीयाकारेण परिणामि अव्यक्तं प्रकृतिरूपं त्रिगुणात्मकं वस्तुतत्त्वमभिधानविषयः, आकारोपग्रहेण शब्दवाच्यत्वात्, प्रकृतेश्चाव्यक्तत्वादिति सर्वशब्दानां स्वशक्त्यनुसारी लिङ्गनियमः समञ्जसः=उपपन्न इति॥ ३२२॥

तत्र प्रकृतेस्त्रिगुणात्मिकायाः, तद्विकाराणां च तादृशानां भोग्यात्मकानां रजसाऽनवरतं प्रवृत्तिशीलताऽस्तु। यस्तु भोक्ता पुरुषश्चेतनः स भोग्यजातादत्यन्तविधर्मा निर्गुणः, अतः प्रवृत्तिम्=परिणामम् अननुभवन् कथमात्मा चैतन्यं चितिरिति लिङ्गविशेषनियताभिधानविषयताम्=लिङ्गविशेषस्य=स्त्रीत्वपुंस्त्वनपुंसकत्वलक्षणस्य लिङ्गत्रयस्य यन्नियतमभिधानं तद्विषयताम् अनुभवति इत्याशङ्क्याह—यश्चाप्रवृत्तिधर्मेति।

बुद्धिदर्पणे चिच्छायासङ्क्रान्त्या भोगनिष्पत्तेर्भोग्यभावशबलितमेव चैतन्यं व्यवहारेऽध्यक्ष्यते। तदेव च शब्दगोचरोऽत्यन्ताज्ञातस्याभिधानयोगात्। तथा चान्येषां भोग्यानां पृथगपरिमितपदार्थरूपानुगताः प्रवृत्तीः परिणामविशेषाननुगच्छतीत्याभासगतलिङ्गभेदोपचारो निराभासेऽपि चैतन्ये ॥ ३२३ ॥

तथाहि—

**तेनास्य चितिरूपं च चितिकालश्च भिद्यते।**
**तस्य स्वरूपभेदस्तु न कश्चिदपि विद्यते ॥ ३२४ ॥**

तेन बुद्धिदर्पणसंक्रान्तेन भोग्यजातेनास्य भोक्तुश्चितिक्रिया भिद्यते प्रतिभोग्यं विवेकेन गृह्यते। विषयरूपानुकारेण हि ज्ञानमन्यथा प्रविभज्यते। अत एवाविच्छिन्नापीयं चितिक्रिया चेत्यगतकालभेदोपचारात् प्रविभक्तकालेवावधार्यते।

---

अस्यार्थः—यश्च निर्गुणत्वेन अप्रवृत्तिधर्मा अपरिणामी चैतन्यरूपोऽर्थः चितिरूपेण ज्ञानरूपेण गृह्यते, स बुद्धिदर्पणे संक्रान्तः सन् तत्र संक्रान्तानामन्येषां स्वातिरिक्तानां त्रिगुणत्वेन सततपरिणामिनां भावानां विश्वगाश्रयाः=सर्वभावाश्रिताः, प्रवृत्तीः परिणामान् अनुयातीव अनुगच्छतीव इत्यनेन प्रकारेण आभासचैतन्यगतलिङ्गभेदारोपो निराभासरूपे चैतन्ये इति।

अयं भावः—बुद्धिदर्पणे चिच्छायासंक्रान्त्या विषयच्छायासंक्रान्त्या च चिदाभासवद् बुद्धिरूपस्यात्मनो योगनिष्पत्तेर्भोग्या ये भावास्तैः शबलितम्=मिश्रितम्=संबद्धम् एव चैतन्यं व्यवहारेऽध्यक्ष्यते=शाब्दे व्यवहारेऽनुभूयते। तदेव च=भोग्यभावशबलितमेव च चैतन्यं शब्दगोचरः, निर्गुणस्यासंगस्य भोग्यभावाशबलितस्यात्यन्ताज्ञातस्याभिधानायोगात्। तथा चान्येषां भोग्यानां चिदात्मनः पृथग्भूता परिमितपदार्थस्वरूपानुगताः प्रवृत्तीः परिणामविशेषान् अनुगच्छति आभासरूपं चैतन्यमिति आभासगतलिङ्गभेदारोपो निराभासेऽपि चैतन्ये निर्गुणेऽसंगे इति ॥३२३॥

तथाहि—पूर्वोक्तप्रकारेण हि पर्यवसितमर्थं दर्शयति—तेनास्य चितिरूपञ्चेति।

अस्यार्थः—तेन=बुद्धिदर्पणसंक्रान्तेन भोग्यजातेन=भोग्यरूपादिविषयसमूहेन अस्य=भोक्तुश्चिदाभासवद् बुद्धिरूपस्य चितिरूपञ्च=चितिक्रिया च अभिन्नापि भिद्यते=भोग्यभेदात् प्रतिभोग्यं भेदेन गृह्यते, चितिकालश्च चितेरेकत्वादभिन्नोऽपि चेत्य=भोग्यविषयगतकालभेदस्य चितावारोपाद् भिद्यते।

वस्तुतः चैतन्यमात्ररूपस्य तस्य भोक्तुः स्वरूपभेदस्तु कश्चिदपि न विद्यत इति।

अयं भावः—तेन बुद्धिदर्पणसंक्रान्तेन भोग्यजातेन=भोग्यसमूहेन अस्य भोक्तुः चिदाभासवद् बुद्धिरूपस्य चितिक्रिया ज्ञानरूपा भिद्यते=प्रतिभोग्यं विवेकेन=भेदेन गृह्यते।

ज्ञानं हि परमार्थत एकमपि भिन्नविषयानुकारेण अन्यथा - अनेकधा प्रविभाज्यते=प्रविभागेण भेदेन गृह्यते। अत एव=विषयरूपानुकारादेव अविच्छिन्नाऽपि=वस्तुतोऽभिन्नकालाऽपि इयं चितिक्रिया चेत्यगत ( भोग्यविषयगत ) कालभेदारोपात् प्रविक्तकालेवावधार्यते।

परमार्थतः पुनश्चैतन्यमात्ररूपस्य भोक्तुर्न कश्चन स्वरूपतो देशतः कालतो वा भेदः। चितिक्रियापि न ततो भिन्ना, निराभाससंविन्मात्ररूपत्वात् तस्य।

पुरुषस्य चैतन्यमिति तु विकल्पकल्पिताकारो भेदो राहोः शिर इत्यादिवत्। अनुत्पन्नविवेकख्यातयोऽर्वाग्दर्शना गुणपुरुषयोः स्वरूपमेलनेन व्यवहरन्ति ॥ ३२४ ॥

इत्थञ्च कृत्वा पारमार्थिकेन चैतन्यरूपेण व्यवहाराभाव इत्याह—

**अचेतनेषु संक्रान्तं चैतन्यमिव दृश्यते।**
**प्रतिबिम्बकधर्मेण यत्तच्छब्दनिबन्धनम् ॥ ३२५ ॥**

बुद्ध्याकारसंनिविष्टेषु सत्त्वादिगुणेषु जडेषु सत्त्वधर्मस्वच्छत्वातिशयवशेन चैतन्योपराग इति तत्रादर्शतलप्रख्ये प्रतिसङ्क्रान्तं बिम्बं व्यावहारिकं चैतन्यमभिधानविषय इति तदन्येषां प्रवृत्तीरनुविदधदनुभवति लिङ्गयोगमित्यर्थः।

यत्तु परं स्वयं ज्योतिरपेतविकारग्रन्थि तदपरिणामि नावतरति व्यवहारम्। तदुक्तम् 'चितिशक्तिरपरिणामिनी' इत्यादि ॥ ३२५ ॥

---

परमार्थतस्तु—चैतन्यमात्ररूपस्य भोक्तुर्न स्वरूपतो देशतः कालतो वा कश्चन भेदः। चितिक्रियाऽपि न ततः=भोक्तुः भिन्ना, तस्य निराभाससंविन्मात्ररूपत्वात् तस्य भोक्तुः, आभासभिन्नबिम्बमात्रात्मकज्ञानस्वरूपत्वात्।

पुरुषस्य चैतन्यमिति अभेदेऽपि भेदव्यवहारस्तु 'राहोः शिरः' इत्यादिवद् विकल्पकल्पिताकारः="शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः" (यो० सू०) इति योगसूत्रोक्तलक्षणलक्षितेन विकल्पप्रत्ययेन कल्पितो भिन्न आकारो यस्य स तथाभूतः। अनुत्पन्नप्रकृतपुरुषविवेकख्यातयोऽर्वाग्दर्शनाः=बाह्यदृष्टयः गुणपुरुषयोः=प्रकृतिपुरुषयोर्मेलनेन=तादात्म्याध्यासेन व्यवहरन्ति। आत्मा चैतन्यम्, चितिरिति। अत्रात्माबुद्धितादात्म्यापन्नो भोक्ता व्यवह्रियते, न तु बुद्धितो विविक्तो निर्गुण इति, अभिधानागोचरत्वादिति ॥ ३२४ ॥

इत्थञ्च कृत्वा=आत्मनो निर्गुणस्य गुणत्रयपरिणामरूपलिङ्गत्रययोगासंभव इति कृत्वा पारमार्थिकेन चैतन्यरूपेण व्यवहाराभाव इत्याह—अचेतनेषु संक्रान्तमिति।

अस्यार्थः—अचेतनेषु=बुद्ध्याकारसंनिविष्टेषु सत्त्वादिगुणेषु जडेषु, संक्रान्तं यत् प्रतिबिम्बरूपं सदचैतन्यमपि चित्प्रतिबिम्बरूपतया चैतन्यमिव दृश्यते, तत् प्रतिबिम्बकधर्मेण=प्रतिबिम्बधर्मेण=बिम्बसादृश्यरूपेणाक्रान्तं सत् शब्दनिबन्धनम्। अत्र बहुव्रीहिणा शब्दो निबन्धनमभिधाननिमित्तं यस्य तत् तथा शब्दानां लिङ्गवत्तयाऽभिधेयमित्यर्थ इति।

अयं भावः—बुद्ध्याकारसंनिविष्टेषु सत्त्वादिगुणेषु जडेषु सत्त्वधर्मस्य स्वच्छत्वातिशयस्य वशेन चैतन्योपरागः=चैतन्यस्य प्रतिबिम्बनमिति तत्र=सत्त्वादिगुणत्रये बुद्ध्याकारेण परिणते आदर्शतलप्रख्ये प्रतिसंक्रान्तम्=प्रतिबिम्बितं चैतन्यं व्यावहारिकचैतन्यरूपं सद् अभिधानविषय इति तदन्येषां भावानां बुद्धौ प्रतिसंक्रान्तानां प्रवृत्तीः=परिणामविशेषान् लिङ्गाख्यान् अनुविदधत्=अनुकुर्वत् लिङ्गयोगमनुभवतीति।

तदेवं व्यवहारे चैतन्येऽपि लिङ्गयोगाद्—

**अवस्था तादृशी नास्ति या लिङ्गेन न युज्यते ।**
**क्वचित्तु शब्दसंस्कारो लिङ्गस्यानाश्रये सति ॥ ३२६ ॥**

भोक्तृभोग्ययोर्लिङ्गभेदानुगमस्य साधितत्वात् तद्व्यतिरेकेण पदार्थान्तराभावान्न काचिदसौ पदार्थावस्था, यस्या लिङ्गसम्बन्धो नास्तीति व्यापकमिदं लिङ्गलक्षणं जातावप्यन्वयि । अवस्थात्रयस्यावियोगात् सर्वभावानां नित्याया अपि जातेस्तदनपायात् । सम्भवदपि चेदं लिङ्गं क्वचिदविवक्षयापाकीर्यते ।

तदाह भाष्यकारः—'तच्चोभयं सर्वत्र । यद्युभयं सर्वत्र, कुतो व्यवस्था । विवक्षातः । स्त्यानविवक्षायां स्त्री, प्रसवविवक्षायां पुमान्, उभयोरविवक्षायां नपुंसकम्' इति ।

---

यत्तु परं चैतन्यं विम्बभूतं स्वयं ज्योतिः=स्वप्रकाशम् अपेतविकारग्रन्थि=विकाररहितम्, अविद्यावासनारूपहृदयग्रन्थिरहितञ्च, तद् निर्गुणत्वेनापरिणामि अतो नावतरति=नानुभवति लिङ्गव्यवहारभू इति । तदुक्तम्—'चितिशक्तिरपरिणामिनी' इति ॥ ३२५ ॥

तदेवमाभासगतलिङ्गभेदोपचारेण निर्गुणे चैतन्येऽपि व्यवहारे लिङ्गयोगाद् न क्वापि लिङ्गव्यवहारानुपपत्तिरित्याह—अवस्था तादृशीति ।

अस्यार्थः—कस्यापि भावस्य तादृशी परिणामावस्था नास्ति, या लिङ्गेन=स्त्रीत्वादिना न युज्यते । क्वचित्तु मित्रकलत्रादिशब्दे लिङ्गप्रयुक्तः शब्दसंस्कारो लिङ्गस्य आविर्भावरूपस्य पुंस्त्वस्य तिरोभावरूपस्य च स्त्रीत्वस्याविवक्षयाऽनाश्रये सति लिङ्गसामान्यरूपनपुंसकलिङ्गविवक्षया भवतीति इति हेलाराजीयं व्याख्यानम् । वयं तु ब्रूमः—क्वचित्तु—अव्ययपदे शब्दसंस्कारो लिङ्गत्रयस्यानाश्रये सति लिङ्गाभावेऽपि भवतीति ।

अयं भावः—भोक्तृभोग्ययोर्लिङ्गभेदानुगमस्य=लिङ्गविशेषसंबन्धस्य साधितत्वात् तद्व्यतिरेकेण=भोक्तृभोग्यभेदेन उपलक्षितस्य पदार्थान्तरस्याभावान्न काचिदसौ पदार्थावस्थाऽस्ति, यस्यालिङ्गसम्बन्धो नास्तीति व्यापकमिदं लिङ्गलक्षणम्=आविर्भावाद्यवस्थात्रयलक्षणं स्त्रीत्वादिलिङ्गत्रयलक्षणम्, नित्यत्वेनाभिमतायां जातावप्यन्वयि=अनुगतम् । सर्वभावानामाविर्भावाद्यवस्थात्रयस्यावियोगात् । सजातीयप्रवाहरूपेण नित्यायाः=नित्यत्वेनाभिमताया जातेरपि व्यक्तिसामान्यरूपायाः तदनपायात्=आविर्भावाद्यवस्थात्रयानपायात् । सर्वत्र संभवदपि चेदं लिङ्गम्=आविर्भावाद्यवस्थाद्वयलक्षणं लिङ्गद्वयं क्वचित्=मित्रकलत्रादिपदे अविवक्षया=आविर्भावतिरोभावयोरविवक्षया अपाकीर्यते=निरस्यते ।

तदाह भाष्यकारः—"तच्चोभयं सर्वत्र । यद्युभयं सर्वत्र कुतो व्यवस्था ? विवक्षातः । स्त्यानविवक्षायां स्त्री, प्रसवविवक्षायां पुमान् । उभयोरविवक्षायां नपुंसकमिति । अत्र उभयमित्यस्य

तथा च शब्दसंस्कारमात्रम् 'न केवला प्रकृतिः प्रयोक्तव्या' इति लिङ्गप्रत्ययस्तत्र। यथोच्यते 'तद्धितार्थनिर्देशे लिङ्गवचनमप्रमाणं तस्याविवक्षितत्वात्' इति ॥ ३२६ ॥

यदुक्तम्—'अवस्था तादृशी नास्ति या लिङ्गेन न युज्यत' ( ३२६ ) इति। तदेव व्यक्तयति—

**कृत्तद्धिताभिधेयानां भावानां न विरुध्यते।**
**शास्त्रे लिङ्गं गुणावस्था तथा चाकृतिरिष्यते ॥ ३२७ ॥**

पाकः पक्तिः पचनमिति कृदभिहितो भावोऽवस्थाभेदेन भिद्यमानस्तदनुगतं लिङ्गभेदमनुभवन्नियतलिङ्गैः शब्दैर्विषयीक्रियते। एवं गरिमा गुरुता गुरुत्वमित्यादिस्तद्धिताभिधेयः।

---

आविर्भावतिरोभावरूपमुभयमित्यर्थः। तथा च तत्र=यत्र क्वचन अर्थनिर्देशः "न केवला प्रकृतिः प्रयोक्तव्या" इत्यभ्युपगमेन लिङ्गप्रत्ययः शब्दसंस्कारमात्रम्, न तु विवक्षितः। यथोच्यते—तद्धितार्थनिर्देशे लिङ्गवचनमप्रमाणं तस्याविवक्षितत्वात्" इति।

अस्यार्थः—"तेन निर्वृत्तम्" [ पा० ४।२।६८ ] इत्यादौ तद्धितार्थनिर्देशे 'तेन' इत्यत्र पुंस्त्वमेकवचनञ्च, 'निर्वृत्तम्' इत्यत्र नपुंसकत्वमेकवचनञ्चाप्रमाणम्, तस्य लिङ्गवचनस्य अविवक्षितत्वादिति।

तथा च कुशाम्बेन निर्वृत्ता नगरी='कौशाम्बी' इति सिद्धम्। एवमन्यदप्युदाहरणमूह्यमिति ॥ ३२६ ॥

यदुक्तम्—"अवस्था तादृशी नास्ति या लिङ्गेन न युज्यते" [ वा० प० ३ वृ० ३२६ ] इति। तदेव व्यक्तीकरोति—कृत्तद्धिताभिधेयानामिति।

अस्यार्थः—कृत्तद्धिताभिधेयानाम्='पाकः, पक्तिः, पचनम्' इत्यादिकृदभिधेयानां भावानाम्, "औपगवः कटः, औपगवी शाटी, औपगवं वस्त्रम्" इत्यादीनाञ्च तद्धिताभिधेयानां भावानां शास्त्रे परिभाषितं गुणानामाविर्भावाद्यवस्थारूपं लिङ्गं न विरुध्यते, तत्तदवस्थारूपस्य लिङ्गस्य तत्तच्छब्देन नियततया स्वशक्त्या यथायथमभिधानात्। तथा च एवं सति, गुणपरिणामानां रूपादीनामाविर्भावाद्यवस्थाप्रवृत्तिसामान्यरूपा आकृतिः=लिङ्गजातिरिष्यते=अभ्युपगम्यते इति।

अयं भावः—'पाकः, पक्तिः, पचनम्' इत्यादौ कृदभिहितो भावो गुणानामाविर्भावाद्यवस्थाभेदेन भिद्यमानस्तदनुगतम्=आविर्भावाद्यवस्थाभेदानुगतम्, लिङ्गभेदमेक एवानुभवन् नियतलिङ्गैः पाकादिशब्दैरभिधीयते। एवम् 'गरिमा, गुरुता, गुरुत्वम्' इत्यादिस्तद्धिताभिधेयोऽपि भावस्तथैवाभिधीयते।

एकापि हि यावदवस्थावस्थान्तरमनुभवत्येव। न हि कश्चित् स्वस्मिन्नात्मनि मुहूर्तमप्यवतिष्ठते यतः। तथा च संस्त्यानं संस्त्यायः संस्त्येति धातूपादानैकाप्यवस्था लिङ्गभेदनिबन्धनैः शब्दैः प्रत्याय्यते। तदेवं गुणावस्थालक्षणं शास्त्रे परिभाषितं लिङ्गं न विरुध्यते कृत्तद्धिताभिधेयानां भावानां भिन्नमपि। अन्यथैकत्वाद् भावस्य किञ्चिदेकमेव लिङ्गं युज्येत।

तदित्थं सिद्धेऽस्य लिङ्गलक्षणस्य व्यापित्वे, उपसंहरति—तथा चाकृतिरिष्यत इति।

तथा च एवं सति गुणानां रूपादीनां सत्त्वादिगुणपरिणामरूपाणामाविर्भावाद्यवस्था प्रवृत्तिसामान्यरूपा लिङ्गजातिरभ्युपगम्यत इत्युपसंहारः कृतः॥ ३२७॥

इत्थञ्च जातिशब्दानां लिङ्गव्याप्तिसिद्धेर्द्रव्यपदार्थकेन यत्र लिङ्गासिद्धिः प्रसञ्जिता, सा प्रतिसमाहिता भवतीत्याह—

**लिङ्गं प्रति न भेदोऽस्ति द्रव्यपक्षेऽपि कश्चन।**
**तस्मात् सप्त विकल्पा ये सैवात्राविष्टलिङ्गता॥ ३२८॥**

---

किञ्च यावद्=यत एकाऽपि हि स्त्रीत्वरूपा तिरोभावावस्था अवस्थान्तरम्=स्त्रीत्व-पुंस्त्वादिरूपमाविर्भवतिरोभावादिकम् अनुभवत्येव। यतश्च नहि कश्चित् स्वस्मिन् आत्मनि मूहूर्तमप्यवतिष्ठते, चलं गुणवृत्तमित्यभ्युवगमात्। तथा च—'संस्त्यानम्, संस्त्यायः, संस्त्या इति धातूपादाना=धातुनाऽभिधीयमाना एकापि अवस्थातिरोधानरूपा स्वशक्त्या नियतया लिङ्ग-भेदे ज्ञापकनिमित्तैः शब्दैः प्रत्याय्यते। तदेवं कृत्तद्धिताभिधेयानां भावानां भिन्नमपि शास्त्रे परि-भाषितं गुणावस्थालक्षणं लिङ्गं न विरुध्यते। अन्यथा 'पाकः, पक्तिः, पचनम्' इत्यादौ भावस्यैक-त्वात् किञ्चिदेकमेव लिङ्गमत्र युज्येत, न तु लिङ्गत्रयम्।

तदित्थं सिद्धेऽस्य=गुणानामाविर्भावाद्यवस्थालक्षणस्य लिङ्गलक्षणस्य व्यापित्वे प्रकृतमुप-संहरति—तथा च कृतिरिष्यत इति।

तथा च=एवं सति च, गुणानाम्=सत्त्वादिगुणपरिणामरूपाणां रूपादीनामाविर्भावाद्य-वस्था प्रवृत्तिसामान्यरूपा=परिणामसामान्यरूपा लिङ्गजातिरभ्युपेयत इत्युपसंहारोऽत्र कृत इति॥ ३२७॥

इत्थञ्च=प्रागुक्तप्रकारेण च जातिवाचकशब्दानां लिङ्गव्याप्तिसिद्धेर्द्रव्यपदार्थकेन=द्रव्यं पदार्थं इति वादिना याऽत्र=जातिशब्दे लिङ्गासिद्धिः प्रसञ्जिता, सा प्रतिसमाहिता भवति, आकृतिपदार्थनये द्रव्यपदार्थपक्षे वा लिङ्गस्वरूपे भेदाभावात्! उभयत्रापि पक्षे गुणावस्था रूपस्यैव लिङ्गस्याभ्युपगमादित्याह—लिङ्गं प्रति न भेदोऽस्ति इति।

अस्यार्थः—आकृतिः पदार्थ इति पक्षे, द्रव्यपक्षेऽपि=द्रव्यं पदार्थ इति पक्षे च लिङ्गं प्रति लिङ्गप्रतियोगिको लिङ्गानुयोगिकश्च कश्चन भेदो नास्ति। पक्षद्वयेऽपि गुणावस्थारूपस्यैव लिङ्गस्याभ्युपगमात्। आकृतिपदार्थनयेऽपि ता एव त्यक्तभेदा व्यक्तयो जातिरित्यभ्युपगमेन गुणावस्थारूपस्यैव लिङ्गस्य द्रव्यपदार्थपक्ष इवं संभवात्।

द्रव्यपदार्थपक्षेऽपि गुणावस्था लिङ्गम् । आकृतिपदार्थनयेऽपि ता एव त्यक्तभेदा व्यक्तयो जातिरिति गुणावस्थासम्भवाद् यथायथं स्वशक्त्यनुसारेण शब्दैर्नियत-लिङ्गा जातिर्द्रव्यं वा नियतलिङ्गं प्रतिपाद्यत इति दर्शनद्वयेऽपि लिङ्गं प्रति भेदभावः ।

कथं न भेदो यावता जातिराविष्टलिङ्गा, द्रव्यं पुनरनियतलिङ्गमित्याशङ्क्य निगमयति—तस्मादिति ।

द्वित्र्येकलिङ्गतया 'उपादानविकल्पाश्च लिङ्गानां सप्त दर्शिताः' इति जातिशब्दैस्तदुपग्रहे नियतैरेवासङ्करेण लिङ्गोपादानादाविष्टलिङ्गता जातेः कथिता । न त्वेकलिङ्ग-परिग्रह एवेति पक्षद्वयसाम्यम् ।

वैयाकरणैर्हि न वस्तुधर्मो लिङ्गमिष्यते । अपि तु शब्दार्थस्य लिङ्गयोगः । प्रतीयते च शब्देभ्यो जातिरुपगृहीतलिङ्गसम्बन्धा । तेन जातेः स्वमेव लिङ्गम् । अत

---

तस्मात्=पक्षद्वयेऽपि लिङ्गस्वरूपे भेदाभावाद्, जातिराविष्टलिङ्गा, द्रव्यं तु अनियतलिङ्ग-मित्येतं धर्मभेदमाश्रित्यापि न पक्षद्वये लिङ्गभेदः, यतो ये सप्त लिङ्गविकल्पाः—"स्तनकेशादि-संबन्धो गुणावस्था गुणस्तथा" [ वा० प० ३ लिङ्ग १ ] इत्यादिना "उपादानविकल्पाश्च लिङ्गानां सप्त दर्शिताः" [ वा० प० ३ लिङ्ग० ३ ] इत्यन्तेन लिङ्गसमुद्देशे उक्ताः, सैव जातिशब्दैर्लिङ्गो-पादाने नियतैर्लिङ्गान्तरेणासंकरेण तत्तल्लिङ्गोपादानमेव अत्र=जातिशब्देषु आविष्टलिङ्गता= नियतलिङ्गता उक्ता, न त्वेकलिङ्गपरिग्रह एव, जातिर्भावः सामान्यमिति जातावपि द्रव्य इव लिङ्गत्रयदर्शनादिति ।

अयं भावः—द्रव्यपदार्थपक्षेऽपि=द्रव्यं पदार्थ इति पक्षेऽपि गुणावस्था आविर्भावादिरूपा लिङ्गम् । आकृतिपदार्थनयेऽपि=जातिः पदार्थ इति पक्षेऽपि ता एव त्यक्तभेदा व्यक्तयो जातिरिति गुणावस्थारूपस्यैव लिङ्गस्य संभवाद् यथायथं नियतलिङ्गा जातिर्द्रव्यं वा नियतलिङ्गं स्वशक्त्यनु-सारेण शब्दैः प्रतिपाद्यत इति दर्शनद्वयेऽपि=आकृतिः पदार्थ इति, जातिः पदार्थ इति पक्षद्वयेऽपि लिङ्गं प्रति भेदाभावः=लिङ्गविषयकस्य भेदस्याभावः ।

ननु कथं न पक्षद्वये लिङ्गभेदः, यावता=यतः जातिराविष्टलिङ्गा=नियतलिङ्गा, द्रव्यं तु अनियतलिङ्गमिति आशङ्क्य निगमयति=प्रकृतमुपसंहरति—तस्मादिति ।

जातिशब्दैर्द्वित्र्येकलिङ्गतया तदुपग्रहे=लिङ्गबोधने नियतैरेव असंकरेण=उपादान-विकल्पाश्च लिङ्गानां सप्त दर्शिता इत्युक्तलिङ्गोपादानात् लिङ्गविकल्पोपादानाद् जातेराविष्टलिङ्गता कथिता । असंकरेण लिङ्गविकल्पोपादायकत्वमेव जातेराविष्टलिङ्गत्वमिति यावत् । न त्वेकलिङ्ग-परिग्रह एव जातेराविष्टलिङ्गत्वमिति जातिपदार्थवादद्रव्यपदार्थवादरूपपक्षद्वयसामान्यमिति न पक्षद्वये लिङ्गभेदः । किञ्चान्यथाऽपि द्रव्य इव जातावपि लिङ्गयोग उपपादयितुं शक्यते ।

तथाहि—वैयाकरणैर्हि न बाह्यवस्तुधर्मो लिङ्गमिष्यते । येन जातेर्नित्याया गुणावस्थारूप-लिङ्गयोगासंभवः संभाव्येत । अपि तु शब्दार्थस्य बौद्धस्य लिङ्गयोगः । एवञ्च बुद्धेस्त्रिगुणत्वेन तत्परिणामभूताया जातेरपि शब्दवाच्यायास्तत्त्वेन गुणावस्थारूपलिङ्गसंभवः । प्रतीयते च शब्देभ्यो जातिरूपगृहीतलिङ्गसंबन्धा । तेन=जातेरपि प्रागुक्तरीत्या लिङ्गयोगसंभवेन जातेः स्वमेव=

आश्रयलिङ्गेन लिङ्गवत्त्वे नाभिनिविश्यते ।

अत एव गुणविवक्षानित्यत्वादित्येतदभ्युपपद्यते, द्रव्यव्यभिचारेण जातेरपि गुणस्य स्त्रीत्वादेर्विवक्षाप्रक्लृप्तेः ॥ ३२८ ॥

एवं स्वपक्षे द्रव्यपक्षसाम्यं लिङ्गं प्रति समर्थितं जातिपदार्थकेन, सम्प्रति वचनं समर्थयितुमाह—

**वचने नियमः शास्त्राद् द्रव्यस्याभ्युपगम्यते ।**
**यतस्तदाकृतौ शास्त्रमन्यथैव समर्थ्यते ॥ ३२९ ॥**

द्रव्यपदार्थदर्शनेऽपि "बहुषु बहुवचनम्" ( पा० १।४।२१ ) इत्यादिशास्त्रसामर्थ्याद् वचननियमः, न तु द्रव्यस्य सङ्ख्यास्तीत्येव, साङ्कर्यपरिहारार्थं ह्यवश्यं वचनमारम्भणीयम् । एवञ्चेच्छास्त्रशरणा व्यवस्था तदा जातावपि पदार्थे तच्छास्त्रमन्यथा वर्ण्यते ॥ ३२९ ॥

---

स्वकीयमेव लिङ्गम् । अतः स्वाश्रयद्रव्यलिङ्गेन लिङ्गवत्त्वेन सा नाभिनिविश्यते=नाभिनिवेशेन प्रतिपाद्यते ।

अत एव=जातेः स्वकीयलिङ्गवत्त्वादेव गुणविवक्षानित्यत्वादित्येतदभ्युपपद्यते । गुणे लिङ्गविवक्षाया नित्यत्वादिति तदर्थः । जातेः स्वकीयलिङ्गाभावे तु तत्रारोपितस्य द्रव्याश्रितस्य लिङ्गस्य विवक्षाया नित्यत्वं न स्यात् । कारणसन्निधानासंनिधानाभ्याम् आरोपस्यानित्यत्वात् । जातेः स्वकीयलिङ्गसत्त्वे तु द्रव्यव्यभिचारेण=द्रव्याविशेषणतया स्वप्रधान्येन प्रतीयमानाया जातेरपि गुणस्य=अन्यत्र गुणत्वेन दृष्टस्य स्त्रीत्वादेर्नित्यनियतविवक्षाप्रक्लृप्तेः स्त्री, 'संस्त्या, संस्त्यायः' इत्यादिप्रयोगोपपत्तिरिति ॥ ३२८ ॥

एवं जातिपदार्थकेन वादिना स्वपक्षे लिङ्गं प्रति द्रव्यपक्षसाम्यं समर्थितम् । संप्रति वचनं समर्थयितुमाह—वचने नियम इति ।

अस्यार्थः—यतो द्रव्यस्य पदार्थत्वपक्षे शास्त्रात्—"बहुषु बहुवचनम्" ( पा० १।४।३१ ) इति शास्त्रारम्भसामर्थ्यात्—'वचने नियमः विभक्तिसांकर्ये प्रसक्ते "बहुषु बहुवचनम्" ( पा० १।४।२१ ) एवेत्येवंरूपो वचनविषयको नियमः, अभ्युपगम्यते, तत्=तस्मात्, आकृतौ=आकृतिपदार्थदर्शनेऽपि शास्त्रम्="बहुषु बहुवचनम्" ( पा० १।४।२१ ) इत्यादिकं शास्त्रम्, अन्यथैव समर्थ्यते=यो जातिलक्षणोऽर्थो बहुषु वर्तते तस्य आधारभेदो विवक्षिते बहुवचनमेवेति । एतच्च उत्तरकारिकायां स्पष्टीक्रियते इति ।

अयं भावः —'द्रव्यं पदार्थः' इति दर्शनेऽपि "ङ्याप् प्रातिपदिकात्" ( पा० ४।१।१ ) "स्वौजसमौट्" ( पा० ४।१।२ ) इत्यादिनैव सामान्यसूत्रेण परस्परमेकवाक्यतापन्नेन बहुवचनसिद्धौ "बहुषु बहुवचनम्" ( पा० १।४।२१ ) इत्यादिशास्त्रारम्भसामर्थ्याद् वचननियमः, बहुषु बहुवचनमेवेति, न तु द्रव्यस्य संख्याऽस्तीत्येव वचनविधिरिति । विभक्तिसाङ्कर्यपरिहारार्थं हि अवश्यम् "बहुषु बहुवचनम्" (पा० १।४।२१) इत्यादिकं वचनमारम्भणीयम् । एवञ्चेच्छास्त्रशरणा व्यवस्था, तदा जातावपि पदार्थे तच्छास्त्रम्="बहुषु बहुवचनम्" इत्यादिशास्त्रम् अन्यथा=उत्तरकारिकोक्तेन प्रकारेण वर्ण्यत इति ॥ ३२९ ॥

कथमित्याह—

**वर्तते यो बहुष्वर्थो भेदे तस्य विवक्षिते।**
**स्वाश्रयैर्व्यपदिष्टस्य शास्त्रे वचनमुच्यते ॥ ३३० ॥**

यो जातिलक्षणो बहुषु वर्तते, तस्य भेदे भिन्नाधारसमवाये विवक्षिते, बहुष्विति स्वाश्रयैः शास्त्रे कथितस्य बहुवचनं विधीयते। एवं द्वयोरिति व्यपदिष्टस्य द्विवचनमित्यादि वाच्यम्।

तदयमर्थः—द्वित्वसङ्ख्यावच्छिन्नव्यक्तिविशेषाधिकरणा जातिर्द्विवचनान्तेन शब्देन प्रत्याय्यते, बहुत्वसङ्ख्यावच्छिन्नाधारसमवेता तु बहुवचनान्तेन, एकसङ्ख्याधारावच्छिन्ना त्वेकवचनान्तेन। तदेतदुक्तं भाष्ये—

"अथ यस्य द्रव्यं पदार्थः, कथं तस्यैकवचनद्विवचनबहुवचनानि। एवं स वक्ष्यति 'एकस्मिन्नेकवचनम्, द्वयोर्द्विवचनम्, बहुषु बहुवचनम्' इति। यदि तर्हि, तस्यापि वाचनिकानि, न स्वाभाविकानि। अहमप्येवं वक्ष्यामि—एकस्मिन्नेकवचनम्, द्वयोर्द्विवचम्न, बहुषु बहुवचनमिति।" एकस्मिन् या वर्तते जातिरित्याद्यर्थः।

---

ननु कथमन्यथा तच्छास्त्रं समर्थ्यत इति चेदाह—वर्तते यो बहुष्वर्थ इति।

अस्यार्थः—योऽर्थो जातिरूपो बहुषु आधारेषु वर्तते, तस्य=जातिरूपस्यार्थस्य भेदे=आधारभेदे विवक्षिते सति स्वाश्रयैर्बहुभिर्बहुत्वेन व्यपदिष्टस्य एकस्यापि जातिलक्षणस्यार्थस्य स्वाश्रयभेदेन बहुत्वेन व्यवहृतस्य "बहुषु बहुवचनम्" ( पा० १।४।२१ ) इति शास्त्रे बहुवचनमुच्यते=जातेरेकत्वादेकवचनप्राप्तौ तत्र बहुवचनं विधीयत इति।

अयं भावः—यो जातिलक्षणोऽर्थो बहुषु आधारेषु वर्तते, तस्यार्थस्य जातिलक्षणस्य भेदे भिन्नाधारसमवाये विवक्षिते सति स्वाश्रयैः=स्वाश्रयभेदैर्भेदेन कथितस्य व्यवहृतस्यैकस्यापि जातिलक्षणस्यार्थस्य बहुष्विति शास्त्रे="बहुषु बहुवचनम्" ( पा० १।४।२१ ) इति शास्त्रे वचनमुच्यते =एकवचनप्राप्तौ बहुवचनं विधीयत इति। एवमाश्रयद्वित्वे न द्वयोरिति व्यपदिष्टस्य द्वित्वेन व्यवहृतस्य जातिलक्षणस्यार्थस्यैकस्यापि संबन्धि द्विवचनमित्यादि वाच्यमिति।

तदयं कारिकार्थः—द्वित्वसंख्यावच्छिन्ने व्यक्तिविशेषरूपेऽधिकरणे समवेता जातिर्द्विवचनान्तेन शब्देन प्रत्याय्यते। बहुत्वसंख्यावच्छिन्ने आधारे समवेता तु बहुवचनान्तेन, एकसंख्याकेन आधारेण विशेषणतयाऽवच्छिन्ना तु एकवचनान्तेन प्रत्याय्यते, तदेतदुक्तं भाष्ये—

"अथ यस्य द्रव्यं पदार्थः, कथं तस्यैकवचनद्विवचनबहुवचनानि। एवं स वक्ष्यति—एकस्मिन्नेकवचनम्, द्वयोर्द्विवचनम्, बहुषु बहुवचनमिति। यदि तर्हि तस्यापि वाचनिकानि, न स्वाभाविकानि। अहमप्येवं वक्ष्यामि, एकस्मिन्नेकवचनम्, द्वयोर्द्विवचनम्, बहुषु बहुवचनमिति"।

एवं स वक्ष्यति इत्यत्र स इत्यस्य द्रव्यपदार्थक इत्यर्थः। अग्रे=तस्यापि वाचनिकानि इत्यत्र तस्यापि इत्यस्य द्रव्यपदार्थकस्यापि इत्यर्थः। अग्रे=अहमप्येवं वक्ष्यामि इत्यत्र अहमित्यस्य—जातिपदार्थक इत्यर्थः। अत्र—एकस्मिन् आश्रये या जातिर्वर्तते तस्यामेकवचनमित्याद्यर्थः।

केचिदकारप्रश्लेषेणाभेदे तस्येति पठन्तस्तस्यैकशब्दतार्थमेकत्वे सहजे शब्देन प्रतिपादयितुमिष्ट इति व्याचक्षते ।

एवमनधिगतभेदायामेव जातावाश्रयतो वचनमुपपद्यते ॥ ३३० ॥

**यदा स्वाश्रयभेदेन भेद एव प्रतीयते ।**
**आकृतेर्द्रव्यपक्षेण तदा भेदो न विद्यते ॥ ३३१ ॥**

आश्रयभेदेन जातेर्भेदानुविधाने वचनभेदः स्वगत एव । तथा चानेकशब्दत्वमपीति एकशेष आरभ्यत एवेति द्रव्यपदार्थपक्षेण जातिपदार्थपक्षस्य भेदो नास्ति । उभयत्रापि प्रत्यर्थं शब्दनिवेशात् । एतच्च दर्शनं भाष्ये हेयत्वेनोक्तम् । "यदि कदाचिदाकृतिरेकत्वेन विवक्षिता, कदाचिद् द्वित्वेन, कदाचिद् बहुत्वेन एका आकृतिरिति प्रतिज्ञा हीयते । यच्चास्य पक्षस्योपादाने प्रयोजनमुक्तम्—एकशेषो न वक्तव्य इति, स इदानीं वक्तव्यो भवति" इति ॥ ३३१ ॥

---

केचिदत्र=कारिकायाम्=-'बह्वर्थो भेदे तस्य" इत्यत्र अकारप्रश्लेषेण अभेदे तस्येति पठन्तः तस्य=अभेदे इत्यस्य एकशब्दतार्थम्=एकस्मिन् एकवचनम् इत्येतद्घटकैकशब्दवाच्यत्वार्थं जातेरेकत्वे सहजे=स्वाभाविके गवादिशब्देन प्रतिपादयितुमिष्टे एकवचनमुच्यत इति रीत्या कारिकापूर्वार्धं व्याचक्षते ।

एवम्=एतद् व्याख्यानमिव व्याख्यानान्तरमपि, तथाहि—तस्य जातिलक्षणस्यार्थस्याभेदे भेदाभावे स्वाश्रयेण सह विवक्षिते आश्रयगतसंख्यानुसारं द्विवचनं बहुवचनञ्च उच्यत इत्यर्थः । तथा चात्र व्याख्याने आश्रयतोऽनधिगतभेदायाम्=अभिन्नायाम् एव जातौ वचनम्=द्विवचनम्, बहुवचनं वा उपपद्यत इति ॥ ३३० ॥

स्वाश्रयभेदेन जातेर्भेदानुविधाने द्रव्यपदार्थपक्षेण सह जातिपदार्थपक्षस्य भेदो नास्तीति जातिपक्षे द्रव्यपक्षवद् वचनसिद्धावपि तत्पक्ष इवात्रापि पक्षे एकशेषशास्त्रमारम्भणीयमिति द्रव्यपदार्थपक्षं परित्यज्य जातिपदार्थपक्षस्योपादाने नास्ति किमपि फलमित्याह—यदा स्वाश्रयभेदेनेति ।

अस्यार्थ :—यदा तु स्वाश्रयभेदेनैव आकृतेर्भेदः प्रतीयते, तदा जातिपक्षस्य द्रव्यपक्षेण सह भेदो न विद्यत इति एका आकृतिरिति प्रतिज्ञा हीयते, यच्च जातिपक्षस्योपादाने प्रयोजनमुक्तम्, अस्मिन् पक्षे एकशेषो नारब्धव्य इति तदपि नैवं सति संभवतीति ।

अयं भावः—स्वाश्रयभेदेन जातेर्भेदानुविधाने वचनभेदः=संख्याभेदः स्वगत एव । तथा चानेकशब्दत्वमपि जातिपक्षे इति एकशेष आरभ्यत एवात्रापि पक्षे इति द्रव्यपदार्थपक्षेण सह जातिपदार्थपक्षस्य भेदो नास्ति । उभयत्रापि पक्षद्वयेऽपि प्रत्यर्थं शब्दनिवेशात् । एतच्च दर्शनम् =आश्रयभेदेन जातेर्भेदानुविधाने वचनभेद इति दर्शनं, भाष्ये हेयत्वेनोक्तम् ।

"यदि कदाचिदाकृतिरेकत्वेन विवक्षिता, कदाचिद् द्वित्वेन, कदाचिद् बहुत्वेन, एका आकृतिरिति प्रतिज्ञा हीयते । यच्चास्य पक्षस्योपादाने प्रयोजनमुक्तम् एकशेषो न वक्तव्य इति स इदानीं वक्तव्यो भवतीति ॥ ३३१ ॥

तस्मात् प्रागुक्तमेव युक्तमित्युपसंहरति—

**अभेदे त्वेकशब्दत्वाच्छास्त्राच्च वचने सति।**
**एकशेषो न वक्तव्यो वचनानां च सम्भवः ॥ ३३२ ॥**

व्यक्तिनिबन्धनभेदानुविधानाभावेऽपि स्वाश्रयभेदनिबन्धनम् "बहुषु बहुवचनम्" ( पा० १।४।२१ ) इत्यादिशास्त्राद् यथोक्तेन न्यायेन यदा जातिर्वचनभेदं प्रतिपद्यते, तदा प्रयोजकस्यार्थस्यैकत्वादेकशब्दत्वे सिद्धे प्रत्याख्यायते सूत्रमेकशेषलक्षणम् ॥ ३३२ ॥

अत्र चोदयति—

**ननु चानभिधेयत्वे द्रव्यस्य तदपाश्रयः।**
**आकृतेरुपकारोऽयं द्रव्याभावान्न कल्पते ॥ ३३३ ॥**

आकृतेः शब्दार्थत्वे द्रव्यस्यानभिधीयमानत्वात् तदाश्रयलिङ्गसंख्यासिद्धिः कथम् ? शब्दार्थनिमित्तो हि शब्दसंस्कारः। अनभिधीयमानस्य च वस्तुतः सत्त्वेऽपि संस्कारं प्रत्यसत्त्वमेव ॥ ३३३ ॥

---

तस्मात्=आश्रयभेदेन जातेर्भेदानुविधाने एका आकृतिरिति प्रतिज्ञाहानिरूपस्य, एकशेषशास्त्रारम्भप्रसङ्गरूपस्य च दोषस्य सत्त्वात् प्रागुक्तमेव=जातेर्व्यक्तिनिबन्धनभेदानुविधानाभावः, स्वाश्रयभेदनिबन्धनञ्च वचनमिति प्रागुक्तनेव युक्तमित्युपसंहरति—अभेदे त्विति।

अस्यार्थः—अभेदे तु जातेर्व्यक्तिभेदनिबन्धनभेदानुविधानाभावे तु, एकशब्दत्वात्=जातेरेकत्वेनैकशब्दवाच्यत्वेनैकशब्दप्रयोगात्, जातिपदार्थदर्शने एकशेषो न वक्तव्यः। शास्त्राच्च=बहुषु आधारेषु जातेः सत्त्वे बहुवचनम् इत्याद्यर्थकाद् बहुषु बहुवचनमित्यादि शास्त्राच्च वचने सिद्धे सति वचनानाञ्च संभव इति।

अयं भावः—जातेर्व्यक्तिनिबन्धनभेदानुविधानाभावेऽपि स्वाश्रयभेदनिबन्धनं बहुषु आश्रयेषु जातेः सत्त्वे तद्वाचकाद् बहुवचनमित्याद्यर्थकात् "बहुषु बहुवचनम्" ( पा० १।४।२१ ) इत्यादिशास्त्राद् यथोक्तेन न्यायेन=प्रकारेण यदा जातिवाचकः शब्दो वचनभेदं प्रतिपद्यते, तदा शब्दप्रयोजकस्यार्थस्यैकत्वाद् जातेरेकशब्दवाच्यत्वेनैकशब्दप्रयोगे सिद्धे एकशेषलक्षणम्=एकशेषविधायकं सूत्रं जातिपदार्थदर्शने प्रत्याख्यायत इति ॥ ३३२ ॥

अत्र=जातिपदार्थदर्शने चोदयति=दोषं शङ्कते—ननु चानभिधेयत्वे इति।

अस्यार्थः—ननु आकृतिपदार्थदर्शने द्रव्यस्यानभिधेयकत्वे च=तु तदपाश्रयः=अनभिधीयमानद्रव्यनिमित्तकः; अयम्=अनुभूयमानः, आकृतेरुपकारः=द्रव्याश्रितलिङ्गसंख्यासिद्धिरूपो न कल्पते=द्रव्याभावात्=अनभिधीयमानस्य द्रव्यस्य सत्त्वेऽपि असत्त्वप्रायत्वात्। शब्दसंस्कारस्य लिङ्गवचनसिद्धिरूपस्य शब्दार्थनिमित्तकत्वादिति।

अयं भावः—आकृतेः शब्दार्थत्वपक्षे द्रव्यस्यानभिधीयमानत्वात् कथमाकृतेः तदाश्रयलिङ्गसंख्यासिद्धिः=द्रव्याश्रितलिङ्गसंख्यासिद्धिः ? शब्दार्थनिमित्तको हि शब्दसंस्कारः। तेनाभिधीयमानस्य च द्रव्यस्य वस्तुतः सत्त्वेऽपि शब्दसंस्कारं प्रति असत्त्वमेवेति ॥ ३३३ ॥

एतत् परिहर्तुमाह—

**व्यपदेशोऽभिधेयेन न शास्त्रे कश्चिदाश्रितः ।**
**द्रव्यं नाम पदार्थो यो न च स प्रतिषिध्यते ॥ ३३४ ॥**

"बहुषु बहुवचनम्" (पा०१।४।२१) इत्यादिशास्त्रेऽभिधीयमानाश्रयभेदनिबन्धनानि वचनानीति न वचनमस्ति। किन्तु सामान्येनैतदुच्यते। तथा च भिन्नाधारा जातिर्वचनभेदं प्रतिपद्यत एव।

न च जातिपदार्थदर्शने द्रव्यं नाम पदार्थो नास्ति। तथा च भाष्यम्—'न ह्याकृतिपदार्थकस्य द्रव्यं न पदार्थो, द्रव्यपदार्थकस्य वाकृतिर्न पदार्थः' इति। आकृतिपदार्थवादिनो द्रव्यं नाम यः पदार्थो न स नास्ति। अपि तु विद्यमान एवेति भिन्नद्रव्यसम्बद्धाया जातेराश्रयगतो वचनभेदोऽविरुद्धः ॥ ३३४ ॥

अतोऽनन्तरं भाष्यम्—'कस्यचित्तु किञ्चित् प्रधानभूतम्, किञ्चिद् गुणभूतम्' इत्यादि। तद् व्याचष्टे—

**गुणभावोऽभिधेयत्वं प्रति द्रव्यस्य नाश्रितः ।**
**उपकारी गुणः शेषः पदार्थ इति कल्पना ॥ ३३५ ॥**

---

एतं दोषं परिहर्तुमाह—व्यपदेशोऽभिधेयेनेति ।

अस्यार्थः—"बहुषु बहुवचनम्' ( पा० १।४।२१ ) इत्यादिके शास्त्रे अभिधेयेन=पदाभिधेयहेतुकः, कश्चिद् व्यपदेशः=व्यवहारो वचनसिद्धिरूपो नाश्रितः, अभिधीयमानाश्रयभेदनिमित्तकानि वचनानि इति तत्र नोक्तम्। किञ्च लोके द्रव्यं नाम यः पदार्थो जात्याश्रयीभूतः स न च=नापि, प्रतिषिध्यते, आकृतिपदार्थदर्शने द्रव्यं नाम पदार्थो नास्तीति । तथा च जातिपदार्थदर्शनेऽनभिधीयमानद्रव्यरूपाश्रयनिबन्धनानि वचनानि सिद्ध्यन्तीति निष्कर्षः ।

अयं भावः—"बहुषु बहुवचनम्" ( पा० १।४।२१ ) इत्यादिशास्त्रे अभिधीयमानद्रव्यरूपाश्रयभेदनिमित्तकानि वचनानि भवन्तीति वचनं नास्ति, किन्तु सामान्येनैतदुच्यते=बहुषु आश्रयेष्वभिधीयमानेषु अनभिधीयमानेषु वा सत्सु बहुवचनमिति। तथा चाधारगतमभिहितत्वमनभिहितत्वं वा विशेषमपहाय भिन्नाधारा जातिर्वचनभेदं प्रतिपद्यत एव ।

न च जातिपदार्थदर्शने द्रव्यं नाम पदार्थो नास्ति, प्रतिषेधावचनात्। तथा च भाष्यम्—

"न ह्याकृतिपदार्थकस्य द्रव्यं न पदार्थः, द्रव्यपदार्थकस्य वाऽऽकृतिर्न पदार्थः" इति ।

अस्यार्थः—आकृतिपदार्थवादिनो द्रव्यं नाम यः पदार्थः स नास्तीति न, अपि तु विद्यमान एवेति भिन्नाधारगताया जातेराश्रयगतो वचनभेदोऽविरुद्ध इति ॥ ३३४ ॥

अतोऽनन्तरम्=नह्याकृतिपदार्थकस्येत्यादिभाष्यादनन्तरम्, भाष्यम्—"कस्यचित्तु किञ्चित् प्रधानभूतम्, किञ्चिद् गुणभूतम्" इत्यादि। तत्र द्रव्यस्य जातिं प्रति गुणत्वेनाभिधानमाशङ्क्य तत्प्रतिषेद्धुं तद्भाष्यं व्याचष्टे—गुणभावोऽभिधेयत्वं प्रतीति ।

जातिपदार्थकस्य जातिः प्रधानं शब्दवाच्या, द्रव्यं तु गुणत्वेन शब्दवाच्यमिति न विवक्षितमत्र। अपि त्वनभिधीयमानस्यापि द्रव्यस्योपकारित्वाज्जातिं प्रति गुणमुच्यते।

तथाहि—लोके यो यस्योपकारी, स तदर्थः शेषभूतो गुण इति कल्प्यते। तथाच द्रव्यं जाताविति तत्सम्बन्धेन तद्गतवचनभेदप्रतिपत्तिरित्युक्तं भवति॥ ३३५॥

कथमभिधेयत्वं प्रति गुणभावो द्रव्यस्यात्र भाष्ये स्पष्टो न व्याख्यायत इत्यत आह—

**द्रव्ये न गुणभावोऽस्ति विना द्रव्याभिधायिताम्।**
**आकृतौ वा प्रधानत्वमत एवं समर्थ्यते॥ ३३६॥**

द्रव्याभिधायितां विनेति। अत्रासति द्रव्याभिधाने यस्माद् द्रव्ये गुणभावो नास्ति, जातेर्वा प्राधान्यम्, तस्मादेवमेतद् भाष्यं व्याख्यायते—गुणत्वमुपकारित्वेन

---

अस्यार्थः—जातेरभिधेयत्वं प्रति=अभिधेयत्वनिरूपितम्=अभिधीयमानप्राधान्यनिरूपितम्, द्रव्यस्य गुणभावो गुणत्वं प्रकृतभाष्ये नाश्रितम्। किन्तु लोके उपकारी यः पदार्थः स गुण इति शेष इति चोच्यत इति या कल्पना सैवात्राश्रिता इति।

अयं भावः—जातिपदार्थकस्य=जातिः पदार्थ इति वादिनो जातिः प्रधानं शब्दवाच्या, द्रव्यं तु गुणत्वेन=जातिपदार्थं प्रति तद्विशेषणत्वरूपेणाप्राधान्येन शब्दवाच्यमिति न विवक्षितमत्र। अपि तु अनभिधीयमानस्यापि द्रव्यस्य जातिं प्रति उपकारित्वात्=शब्दसंस्कारे निमित्तभूतस्वगतलिङ्गसंख्याभ्यां जात्यभिधायकशब्दसंस्कारहेतुतया जात्युपकारित्वात्, जातिं प्रति गुणत्वमुच्यते।

तथाहि—लोके यो यस्योपकारी स तदर्थः, तादर्थ्येन च तस्य शेषभूतः=अङ्गभूतो गुण इति कल्प्यते। तथा च=तथैव द्रव्यम्=जातौ गुणः शेषभूतश्चेति तत्संबन्धेन=द्रव्यसंबन्धेन जातौ तद्गतवचनभेदप्रतिपत्तिः=द्रव्यगतसंख्याविशेषप्रतिपत्तिः इत्युक्तं भवतीति॥ ३३५॥

ननु कथं जातेरभिधेयत्वं प्रति द्रव्यस्य गुणभावोऽत्र भाष्ये स्पष्टमुक्तो न व्याख्यायत इत्यत आह=द्रव्येन गुणभावोऽस्ति इति।

अस्यार्थः—शब्दस्य द्रव्याभिधायितां विना द्रव्येऽनभिहिते विशेषणतया गुणभावो नास्ति, आकृतौ वा शब्दाभिहितायां तन्निरूपितं प्रधानत्वं नास्ति, अतो हेतोरेवं समर्थ्यते, द्रव्यजात्योर्लोके इव शेषशेषिभावलक्षणा गुणप्रधानभावकल्पना, न तु विशेष्यविशेषणभावलक्षणेति। अभिहितयोरेव द्वयोर्विशेष्यविशेषभावः, न तु अभिहितानभिहितयोर्द्वयोरित्यभ्युपगमादिति।

अयं भावः—अत्र अद्रव्याभिधायितां विनेति पदच्छेदो हेलाराजीये दृश्यते, स तु असाधुः, अर्थासंगतेः।

अत्र=जातिपदार्थदर्शनेऽसति द्रव्याभिधाने यस्माद् द्रव्ये गुणभावो नास्ति, जातेर्वा

द्रव्यस्य नाभिधीयमानत्वेनेति। अभिधीयमानतायां हि द्रव्यस्याकृतिरवच्छेदिका स्यादिति तदेव प्रधानमभिधीयमानं स्यात्। आकृतिस्त्ववच्छेदोपयोगिनी गुण एव स्यात्, न प्रधानम्।

तथा च यथा राजपुरुष इत्यत्र राजार्थो न संख्याभेदं प्रधानगतमवलम्बते, तथा जातिरपि नावलम्बेत। सत्यपि तु गुणत्वे तदनुवृत्तौ वचनभेदापत्तेरेकशेषप्रत्याख्यानमयुक्तं स्यात्।

यदा तु नाभिधीयते द्रव्यम्, तदानभिधीयमानमभिधीयमानाया जातेर्गुडशब्द इव (गुड इव) माधुर्यादेर्भेदकमित्यात्माधारलिङ्गसंख्योपहारेणोपकारित्वाद् गुण इति युज्यते वक्तुम्॥ ३३६॥

केचिदभिधीयमानयोरपि जातिद्रव्ययोर्गुणप्रधानभावं समर्थयन्त इत्याह—

**कैश्चिद् गुणप्रधानत्वं नामाख्यातवदिष्यते।**
**न वृत्तिवत् परार्थस्य गुणभावस्तु वर्ण्यते॥ ३३७॥**

---

तन्निरूपितं प्राधान्यं नास्ति, तस्मादेवं द्रव्यस्य गुणत्वमुपकारित्वेन नाभिधीयमानत्वेनेत्येवम् एतद् भाष्यम् = कस्यचित्तु किञ्चिदित्यादि भाष्यं व्याख्यायते। द्रव्यस्याभिधीयमानतायां हि आकृतिरवच्छेदिका तस्य स्यादिति तदेव=द्रव्यमेवाभिधीयमानं प्रधानं स्यात्। आकृतिस्तु अवच्छेदोपयोगिनी = विशेषणतया व्यावृत्त्युपयोगिनी गुण एव स्यात्, न प्रधानम्।

तथा च यथा—'राजपुरुषः' इत्यत्र राजपदार्थो न प्रधानभूतपुरुषगतं संख्याभेदम्= संख्याविशेषम् अवलम्बते। तथा जातिरपि संख्याभेदं नावलम्बेतेति वचनानुपपत्तिः। सत्यपि तु जातेर्गुणत्वे तदनुवृत्तौ=प्रधानभूतपुरुषगतसंख्याविशेषानुवृत्तौ वचनभेदापत्तेरनेकशब्दत्वे सति एकशेषप्रत्याख्यानमयुक्तं स्यात्।

यदा तु द्रव्यं नाभिधीयते तदाऽनभिधीयमानं द्रव्यम् अभिधीयमानाया जातेर्भेदकम्, अभिधीयमानो गुड इवानभिधीयमानस्य माधुर्यादेरिति आत्माधारलिङ्गसंख्योपहारेण=स्वगतलिङ्गसंख्याप्रदानेन उपकारित्वाद् द्रव्यं गुण इति वक्तुं युज्यत इति॥ ३३६॥

केचिदभिधीयमानयोरपि जातिद्रव्ययोर्गुणप्रधानभावं जातिपदार्थदर्शने=जातिः प्राधान्येन शब्दवाच्या इति दर्शने समर्थयन्त इत्याह—कैश्चिद् गुणप्रधानत्वमिति।

अस्यार्थः—कैश्चिद् जातिपदार्थदर्शने जातिद्रव्ययोर्गुणप्रधानत्वं नामाख्यातवदिष्यते। तथाहि—यथा 'पाचकः' इत्यादिनामसु, 'पचति' इत्यादिषु आख्यातेषु चाभिधीयमानयोरेव क्रियाकारकयोर्गुणप्रधानभावो विशेषणविशेष्यभावरूपः, तथा रूढेर्गोघटादिपदैरभिधीयमानयोरेव जातिद्रव्ययोर्गुणप्रधानभाव इति।

परार्थस्य=प्रधानोपकारकस्य वृत्तिवद्='राजपुरुषः' इत्यादिवृत्ताविव परोपकारकत्वलक्षणो गुणभावस्तु नात्र भाष्ये वर्ण्यते, अभिहितानभिहितयोर्गुणप्रधानभावेन संबन्धस्य क्वचिदपि शाब्दे व्यवहारेऽदर्शनादिति।

पाचकः पचतीति यथाभिधीयमानयोरेव क्रियाकारकयोर्गुणप्रधानभावः, तथात्रापि। तथाहि—नामपदेन क्रियाकारकसम्बन्धोपसर्जनः साधनाश्रयः प्राधान्येनाभिधीयते, धात्वर्थस्यात्र प्रत्ययार्थविशेषणत्वात्। तेन चात्र भूतेन भाविनापि च स विशेष्यत इति न क्रिया प्रधानम्, भाव्यावस्थायामेव तथात्वात्। अत एवात्र सम्बन्धे भावप्रत्ययः, तस्यैव प्रवृत्तिनिमित्तत्वात्।

क्रिया त्वत्र गुणभूतापि भेदेनावसीयते। आख्यातपदेन तु साधनविशेषप्रतिलब्धानुग्रहा क्रिया प्राधान्येनोच्यते। भाव्यमानावस्था ह्यत्र क्रिया व्याप्रियमाणेन साधनेन विशेष्यते प्रत्ययार्थेनापि सता। कर्तृव्यापाररूपा हि भावना भाव्यरूपधात्वर्थनिष्ठेति प्रधानभूतव्यापारावेशेन कर्तुर्य एवावगमः, स एव परार्थस्यापि प्राधान्यावगमहेतुः। तदेवं गुणभूतमप्यत्र साधनं भेदेनावधार्यते। तथा च विशेषणैर्युज्यते देवदत्तः पचतीति।

---

अयं भावः—यथा='पाचकः, पचति' इति नामाख्यातयोर्धातुप्रत्ययाभ्यामभिधीयमानयोरेव क्रियाकारकयोर्गुणप्रधानभावः, तथाऽत्रापि=गोघटादिरूढशब्देष्वपि। तथाहि=पाचकादिनो नामपदेन पाकादिरूपक्रिया काष्ठदर्व्यादिरूपकारकसंबन्धोपसर्जनः कर्तृसाधनरूप आश्रयः प्राधान्येनाभिधीयते। अत्र=पाचकादिनामपदे पाकादिरूपस्य धात्वर्थस्य प्रत्ययार्थकर्तृविशेषणत्वात्। तेन च=धात्वर्थस्य प्रत्ययार्थविशेषणत्वेन च अत्र=पाचकादिनामपदे भूतेन भाविनाऽपि च क्रियारूपेण धात्वर्थेन सः=साधनरूप आश्रयो विशेष्यत इति न क्रिया प्रधानम्, भाव्यावस्थायामेव तथात्वात्=क्रियात्वात्। अत एव=क्रियाकारकसंबन्धोपसर्जनस्य साधनरूपस्याश्रयस्य प्राधान्येनाभिधानादेव अत्र=पाचकादिपदे पाचकत्वमिति संबन्धे भावप्रत्ययः, तस्यैव=क्रियाकारकसंबन्धस्यैव प्रवृत्तिनिमित्तत्वात्।

क्रिया त्वत्र=पाचकादिनामपदे प्रत्ययार्थे=आश्रये गुणभूताऽपि भेदेन=पार्थक्येन अवसीयते, न तु 'राजपुरुषः' इत्यादिवृत्तौ राजादिरिव संसृष्टतया। तथा सति तत्रैवात्रापि क्रियाया विशेषणसंबन्धो न स्यात्, भवति तु काष्ठैः स्थाल्यामोदनस्य पाचक इति। 'काष्ठैः स्थाल्यां पचति' इत्याद्याख्यातपदेन तु काष्ठादिरूपसाधनविशेषप्राप्तानुग्रहा पाकादिक्रियाप्राधान्येनोच्यते। अत एव तस्याः काष्ठादिसाधनरूपविशेषणयोगः। अत एव च भावप्रधानमाख्यातमिति यास्कः। भाव्यमानावस्था=साध्यमानावस्था हि अत्र=पचतीत्यादौ क्रिया व्याप्रियमाणेन=व्यापारवता साधनेन विशेष्यते प्रत्ययार्थेन सता विशेष्यत्वयोग्येनापि। कर्तृव्यापाररूपा हि भावना भाव्यरूपधात्वर्थनिष्ठा=भाव्यरूपे धात्वर्थे प्राधान्येनान्तर्गता इति प्रधानभूतभावनारूपव्यापाराविष्टतया य एव कर्तुरवगमः, स एव परार्थस्यापि तस्य आर्थप्राधान्यावगमहेतुः। तदेवं गुणभूतमप्यत्र=पचतीत्यादौ आख्याते साधनं भेदेन=धात्वर्थात् पार्थक्येन अवधार्यते, न तु राजपुरुषादिवृत्ताविव संसृष्टतया। तथा च तद्विशेषणैर्देवदत्तादिभिर्युज्यते। 'देवदत्तः पचति' इत्यादि।

अत एव स्वसंख्यया क्रियामुपकरोति पचतः पचन्तीति।

एवं जातिपदार्थकानां जातिः प्राधान्येन शब्दवाच्या। द्रव्यपदार्थकानां जातिरप्राधान्येन शब्दवाच्या। द्रव्यपदार्थकानां तु द्रव्यम्, विवक्षानियमेन हि युज्यते गुणप्रधानभावः। यथा तु राजपुरुषादौ वृत्तिपदे परार्थस्योपसर्जनपदार्थस्य गुणभावोऽप्रधानत्वम्, नैवं नामाख्यातयोः साध्यसाधनभावस्य कथ्यते।

तथाहि – वृत्तावुपसर्जनार्थस्य प्रधानेन सम्भेदापत्तेर्विवेकाग्रहणात् स्वप्रयुक्तसंस्कारनिमित्तता नोपपद्यते। शाब्द एव हि गुणभावस्तस्य।

तथा च ऋद्धादि विशेषणं न युज्यते। पाचकः पचतीति तूभयत्रापि साध्यसाधनभावावच्छेदेनोभयमपि क्रियाकारकरूपं प्रतीयत एव। केवलं सामर्थ्याद् गुणप्रधानभावः प्रतीयते यथायोगम्।

तथाहि भूतं भव्यायेति परिनिष्ठितरूपं साधनं परार्थम्, परिनिष्ठितत्वादेवान्यस्योपकारायोपादीयमानत्वात्। यदुद्दिश्य च तत्प्रवृत्तिस्तत् साध्यं प्रधानमाख्यातपदे। नामपदे तु कारकशक्तिः प्रवृत्तिनिमित्तमिति तदाधारः प्राधान्येनाभिधीयते। एवमिह

---

अत एव=विशेषणयोगादेव साधनं स्वसंख्यया वचनोत्पत्तिद्वारा क्रियामुपकरोति, 'पचतः, पचन्ति' इति।

एवं जातिपदार्थवादिनां जातिः प्राधान्येन शब्दवाच्या। द्रव्यपदार्थवादिनां तु जातिरप्राधान्येन शब्दवाच्या। द्रव्यपदार्थवादिनां तु द्रव्यं प्राधान्येन शब्दवाच्यम्। विवक्षानियमेन हि युज्यते गुणप्रधानभावः। यथा तु वृत्तिपदे राजपुरुषादौ परार्थस्योपसर्जनपदार्थस्य राजादेर्गुणभावोऽप्राधान्यं पारार्थ्यरूपम्, नैवं नामाख्यातयोः साध्यसाधनभावस्य कथ्यते, किन्तु विशेषणत्वरूपम्।

तथाहि—राजपुरुषादिवृत्तौ उपसर्जनार्थस्य राजादेः प्रधानेन सह संभेदापत्तेः=संसृष्टत्वापत्तेर्विवेकाग्रहणात्=भेदाग्रहणात् स्वप्रयुक्ते संस्कारे यथा प्रधानार्थस्य विवेकेन गृह्यमाणस्य निमित्तता, तथा उपसर्जनार्थस्य नोपपद्यते। तस्य=उपसर्जनार्थस्य हि शाब्द एव गुणभावः, न तु वस्तुतः।

तथा च=वस्तुतो गुणत्वाभावेन च तस्य ऋद्धादिविशेषणं न युज्यते, विवेकेनाग्रहणात्। 'पाचकः, पचति' इति तु उभयत्रापि=नामाख्यातयोर्द्वयोरपि साध्यसाधनभावावच्छेदेन उभयमपि क्रियाकारकरूपं भेदेन प्रतीयत एव। केवलं सामर्थ्याद् गुणप्रधानभावस्तयोः प्रतीयते यथायोगम्।

तथा हि—'भूतं भव्याय उपदिश्यते' इति परिनिष्ठितरूपं साधनं परार्थम्=क्रियार्थम्, परिनिष्ठितत्वादेवान्यस्योपकाराय उपादीयमानत्वात्। यदुद्दिश्य च तत्प्रवृत्तिः=परिनिष्ठितरूपस्य साधनस्य प्रवृत्तिः, तत्साध्यं प्रधानमाख्यातपदे पाचकादिनामपदे तु कारकशक्तिः प्रवृत्तिनिमित्त-

दर्शनभेदेऽपि द्वयोरपि शब्दार्थत्वेन यदाकृतेराधारप्रकल्पितातिशयसम्पादनाय द्रव्योपादानम्, तदाकृतिः प्रधानं विशेष्यत्वेनोपक्रमात्। यदा तु व्यक्तिविशेषावच्छेदपरमाकृत्युपादानम्, तदा विपर्ययः ॥ ३३७ ॥

यद्येवमाकृतिपक्षेऽपि द्रव्यस्याभिधीयमानत्वात् तद्गतवचनभेदवच्छब्दभेदप्रसङ्ग इत्यारब्धव्योऽत्राप्येकशेष इत्याशङ्क्याह—

**गुणभूतस्य नानात्वादाकृतेरेकशब्दता ।**
**सिद्धो वचनभेदश्च द्रव्यभेदसमन्वयात् ॥ ३३८ ॥**

आकृतिपदार्थकानां द्रव्यं गुणभूतं भिन्नमिति न गुणभूतशब्दार्थभेदापेक्षमनेकशब्दत्वम्। अपि तु प्रधानभूतशब्दार्थाभेदापेक्षमेकशब्दत्वमेव न्याय्यमिति नार्थ एकशेषेण। वचनभेदस्तत्र सुतरां सिद्धोऽभिधेयेन द्रव्येण भिन्नेन योगात्।

अयमभिप्रायः—भेदाभेदयोर्गुणप्रधानभूतयोर्विरोधात् प्रधाने युक्तमेवैकशब्दत्वम्। नहि प्रधानमनादृत्य गुणविधानं युक्तम्। स्वनिमित्तं तु संस्कारं प्रधानानुग्रहाय गुणो वचनभेदलक्षणं प्रधानानुपरोधिनं प्रापयतु, कोऽत्र विरोधः ॥ ३३८ ॥

---

मिति तदाधारः कारकं प्राधान्येनाभिधीयते। एवमिह दर्शनभेदेऽपि=जातिपदार्थद्रव्यपदार्थविषयके दर्शनद्वयेऽपि द्वयोरपि जातिद्रव्ययोः शब्दार्थत्वेन यदाऽऽकृतेराधारप्रकल्पितातिशयसंपादनाय द्रव्योपादानम्, तदाऽऽकृतिः प्रधानम्, विशेष्यत्वेन तस्या उपक्रमात्।

यदा तु व्यक्तिविशेषाणामवच्छेदपरम्=व्यावृत्तिपरम् आकृत्युपादानम्, तदा विपर्ययः, विशेषणत्वं जातेः=विशेषणत्वेन आकृतेरुपक्रमादिति ॥ ३३७ ॥

यद्येवम्=अभिधीयमानयोरेव जातिद्रव्ययोर्गुणभावः, तदा आकृतिपक्षेऽपि द्रव्यस्याविधीयमानत्वात् तद्गतवचनभेदवत्=आकृतौ द्रव्यगतवचनभेदवद् आकृतौ द्रव्यगतभेदसमन्वयात् शब्दभेदप्रत्यङ्ग इति आरब्धव्योऽत्रापि=जातिपदार्थदर्शनेऽपि एकशेष इत्याशङ्क्याह—गुणभूतस्य नानात्वादिति।

अस्यार्थः—आकृतौ गुणभूतस्य द्रव्यस्य नानात्वात् प्रधानीभूताया आकृतेरेकशब्दता=एकशब्दवाच्यता सिद्धा। गुणभूतद्रव्यसमन्वयाच्च आकृतौ वचनभेदः सिद्ध इति।

अयमत्र निष्कर्षः—प्रधानभूतशब्दार्थाभेदापेक्षमेकशब्दत्वमेवाकृतौ न्याय्यं लाघवात्। आकृतौ वचनभेदस्तु संस्काररूपो गुणभूतद्रव्यं भेदनिबन्धनः, गुणस्य प्रधानोपकारकत्वादिति।

अयं भावः—आकृतिपदार्थवादिनां द्रव्यं गुणभूतमाकृतौ भिन्नञ्चेति न गुणभूतशब्दार्थभेदापेक्षमनेकशब्दत्वम्, आकृतौ गौरवात्। अपि तु प्रधानभूतशब्दार्थभेदापेक्षमेकशब्दत्वमेव न्याय्यं लाघवादिति नार्थ एकशेषेण। वचनभेदस्तत्र=आकृतौ सुतरां सिद्धः, अभिधेयेन भिन्नेन द्रव्येण योगात्।

अयमत्राभिप्रायः—भेदाभेदयोर्गुणप्रधानगतत्वेन गुणप्रधानभूतयोर्विरोधात् प्रधाने आकृतिरूपे शब्दार्थे युक्तमेवैकशब्दत्वम्=एकशब्दवाच्यत्वम्। न हि प्रधानमनादृत्य=प्रधानभूतशब्दार्थाभेदानुरोधेनाकृतौ एकशब्दत्वविधानमनावृत्य गुणविधानम्=गुणभूतशब्दार्थभेदानुरोधेन अनेक-

तथाहि—

**साधनं गुणभावेन क्रियाया भेदकं यथा ।**
**आख्यातेष्वेकशब्दाया जातेर्द्रव्यं तथोच्यते ॥ ३३९ ॥**

क्रियाप्राधान्येऽप्याख्यातस्य यथा गुणभूतसाधनाश्रयो वचनभेदः पचतः पचन्तीति, तथैकशब्दवाच्यायाः प्रधानभूताया जातेस्तेनैव शब्देन द्रव्यस्याभिधाने सन्निहितोऽभिधीयमानो गुणोऽसावात्माधारं संख्याभेदं तत्र कल्पयति । येन हि गुणधर्मेण प्रधानस्योपरोधो न भवति, तं प्रधानोपकारायोपस्थापयत्येव गुणः ।

अन्यथा गुणत्वमेवास्य हीयेत । यत उपकारप्रभावितत्वात् तस्य । इत्थं च नामाख्यातवदिति निदर्शनं सुसदृशमुक्तम्, न वृत्तिवदिति । नहि राजपुरुषे राजार्थनिमित्तः कश्चिद् वचनभेदादिः संस्कारोऽत्यन्तमभेदापत्तेः प्रधानार्थेनोपसर्जनार्थस्य ।

अत्र च साधनं क्रियायां न भिन्नां संख्यामुपहरति । अपि त्वविद्यमानभेदापि स्वतः क्रियाश्रयगतवचनभेदापेक्षया पचतः पचन्तीति तिङन्तेनाभिधीयत इत्युच्यते ।

---

शब्दत्वविधानं युक्तम् । स्वनिमित्तकं तु वचनभेदलक्षणं संस्कारं प्रधानानुपरोधिनम्=प्रधानानुपघातकं प्रधानानुग्रहाय गुणः प्रापयतु, कोऽत्र विरोध इति ॥ ३३८ ॥

तथाहि—=गुणस्य वचनभेदहेतुत्वे दृष्टान्तं दर्शयति—साधनं गुणभावेनेति ।

अस्यार्थः—यथाऽऽख्यातेषु साधनं गुणभावेन स्वगतेन भेदेन क्रियाया भेदकम्, अत एव क्रियावाचकाद् धातोर्द्विवचनबहुवचने 'पचतः पचन्ति' इति । तथा एकशब्दाया=एकत्वेन एकशब्दवाच्याया जातेर्द्रव्यं स्वगतेन भेदेन भेदकमुच्यते, अत एव जातिवाचकाद् द्विवचनबहुवचने जातेरेकशब्दत्वेऽपि उपपद्येते इति ।

अयं भावः—'भावप्रधानमाख्यातम्' इति यास्कवचनानुरोधेन आख्यातस्य क्रियाप्राधान्येऽपि यथा क्रियायां गुणभूतसाधनाश्रयो वचनभेदः—'पचतः, पचन्ति' इति, तथा एकत्वेनैकशब्दवाच्यायाः प्रधानभूताया जातेस्तेनैव शब्देन=जातिवाचकेनैव शब्देन द्रव्यस्याभिधाने सन्निहितोऽभिधीयमानो गुणोऽसौ=द्रव्यरूपः आत्माधारम्=स्वगतं संख्याभेदं तत्र=जातौ कल्पयति । येन हि गुणधर्मेण प्रधानस्योपरोधः=उपघातो न भवति, तं धर्मं स्वगतं प्रधानोपकाराय तत्रोपस्थापयत्येव गुणः ।

अन्यथा पारार्थ्यरूपं गुणत्वमेवास्य हीयेत । यतो गुणत्वस्य प्रधानोपकारप्रभावितत्वात्=प्रधानोपकारप्रयुक्तत्वात् । इत्थञ्च नामाख्यातवदिति निदर्शनम्=दृष्टान्तः सुसदृशमुक्तम्, न वृत्तिवदिति । न हि गुणभूतराजार्थनिमित्तकः कश्चिद् वचनभेदादिः संस्कारो राजपुरुषे, प्रधानार्थेन राजार्थस्योपसर्जनस्यात्यन्तमभेदापत्तेः । भेदेनोपस्थितयोरेव हि गुणप्रधानभाव इति ।

अत्र च=आख्याते च साधनं क्रियायां न स्वगतसंख्यातो भिन्नां संख्यामुपहरति, अपि तु स्वतोऽविद्यमानभेदाऽपि क्रिया स्वाश्रयगतवचनभेदापेक्षया=स्वाश्रयगतसंख्याभेदापेक्षया 'पचतः,

तथा च गुणभूतसाधनभेदादेव निर्ज्ञातभेदत्वान्न तिङन्तान्येकशेषारम्भं प्रयोजयन्तीति भाष्येऽभिहितम् ॥ ३३९ ॥

तदेवं जातिविशिष्टस्य द्रव्यस्याभिधानेऽपि प्राधान्याज्जातिपदार्थाभ्युपगमे लिङ्गवचनसिद्धिरुपपादिता लिङ्गवचनसिद्धिर्गुणस्यानित्यत्वादिति। गुणोऽत्र द्रव्यं विवक्षितम्। यदा तु जातिमात्राभिधानमेव, तदा गुणवचनवदाश्रयतो लिङ्गवचनानि व्याख्यातुमाह—

**एकत्वे तुल्यरूपत्वाच्छब्दानां प्रतिपादने।**
**निमित्तात् तद्वतोऽर्थस्य विशिष्टग्रहणे सति ॥ ३४० ॥**

**सोऽयमित्यभिसम्बन्धादाश्रयैराकृतेः सह।**
**प्रवृत्तौ भिन्नशब्दायां लिङ्गसंख्ये प्रसिध्यतः ॥ ३४१ ॥**

---

पचन्ति' इति तिङन्तेनाभिधीयत इत्युच्यते। तथा च गुणभूतसाधनभेदादेव निर्ज्ञातभेदत्वान्न तिङन्तान्येकशेषारम्भं प्रयोजयन्तीति भाष्येऽभिहितम्। स्वतो निर्ज्ञातभेदत्वाभावेनानेकशब्दत्वाभावादिति ॥ ३३९ ॥

तदेवं प्रायेण जातिविशिष्टस्य द्रव्यस्य शब्दैरभिधानेऽपि कदाचित् प्राधान्याज्जातिपदार्थाभ्युपगमे लिङ्गवचनसिद्धिरुपपादिता—"लिङ्गवचनसिद्धिर्गुणस्यानित्यत्वात्" इति। अत्र भाष्ये—"गुणविवक्षाऽनित्यत्वात्" इति पाठः।

अस्यार्थः—जातेः प्राधान्यविवक्षायां गुणस्य द्रव्यस्य प्राधान्यविवक्षाया अनित्यत्वाद् जातौ लिङ्गवचनसिद्धिरूप उपकारः स्वगतलिङ्गवचनसंपादनद्वारा गुणेन द्रव्येण क्रियत इति।

अत्र भाष्यवाक्ये गुणो द्रव्यम्। यदा तु जातिमात्राभिधानमेव, न तु विशिष्टाभिधानम्, तदा 'शुक्लः पटः' इत्यादौ गुणवचनवदाश्रयतो लिङ्गवचनानि व्याख्यातुम्=विशेषरूपेणाख्यातुम् आह—एकत्वे तुल्यरूपत्वादिति।

अस्यार्थः—एकत्वे=स्वाश्रयैः सह जातेरभेदे धर्मधर्मिणोरभेदोपचारेण गृहीते सति, निमित्तात्=जातिरूपं निमित्तमाश्रित्य, तद्वतोऽर्थस्य जातिविशिष्टस्यार्थस्य, जातिविशिष्टद्रव्याभिधायिभिः शब्दैः प्रतिपादने=प्रत्यायने क्रियमाणे, शब्दानाम्=जातिविशिष्टद्रव्याभिधायिनां जातिमात्राभिधायिनाञ्च शब्दानां तुल्यरूपत्वात्=शब्दतोऽर्थतश्च तुल्यस्वरूपत्वात्, विशिष्टग्रहणे सति—जातिविशिष्टस्य द्रव्यस्य ग्रहणे=ज्ञाने सति, आकृतेः=जातेः, आश्रयैः द्रव्यैः सह, 'सोऽयम्' इत्यभिसंबन्धात्=अभेदारोपात्, भिन्नशब्दायामपि शब्दप्रवृत्तौ लिङ्गसंख्ये प्रसिध्यत इति।

अयमत्र निष्कर्षः—एकत्र जातिविशिष्टस्य द्रव्यस्य शब्देन प्रतिपादनम्, अपरत्र तु तत्तुल्येनैव शब्देन जातिमात्राभिधानमिति भिन्नशब्दाप्रवृत्तिः। यदा तु जातितद्वन्तौ द्वावपि एकशब्दवाच्यौ तदैकशब्दाप्रवृत्तिर्व्याख्याता इति।

आधारैः सह जातेरभेदे सति शब्दैः प्रत्यायने क्रियमाणे ये जातिविशिष्टद्रव्याभिधायिनः, ये च जातिमात्राभिधायिनः शब्दास्ते तुल्यरूपत्वादभेदेनाध्यवसीयन्ते।

तथाहि, स्वार्थप्रतिपादने जातिशब्दैर्जातिलक्षणं निमित्तं तद्वति द्रव्येऽध्यारोपितमाश्रित्य जातिविशिष्टस्य द्रव्यस्याभेदेन प्रत्यायनमिति तैराश्रयभूतैर्द्रव्यैः सह जातेः सोऽयमित्यभेदप्राप्तौ निमित्तानुविधानेन निमित्तिनोऽप्यभिधानात् तद्गतलिङ्गसंख्योपादानं शुक्लादिवदविरुद्धं भिन्नशब्दायामपि प्रवृत्तौ। यदा हि जातितद्वन्तौ द्वावप्येकशब्दवाच्यौ, तदैकशब्दा प्रवृत्तिर्व्याख्याता।

इह तु जातिमात्रस्य शब्देन प्रतिपादने भिन्नशब्दा प्रवृत्तिः। अत्रापि च निमित्तसरूपप्रत्ययोपजननाद् यथाप्रत्ययं च शब्देनाभिधानान्निमित्तसंक्रान्त्यैव शब्दप्रवृत्तिः।

तथा ह्यस्य गौरिति व्यतिरेको न दृष्ट इत्यभेदोपचारादाश्रयलिङ्गवचनसिद्धिः। एवञ्च फलतः पक्षयोरभेदः। पूर्वत्र तु गुणप्रधानभावेन द्वयोरभिधानम्, इह त्वभेदोपचारादित्येतावान् विशेषः॥ ३४०, ३४१॥

यद्वा पूर्वत्रानभिधीयमानमपि द्रव्यमुपकारकं विवक्षितम्। तथा च चोदितम्—

---

अयं भावः—स्वाधारैः सह जातेरभेदे सति शब्दैस्तत्तदर्थस्य प्रत्यायने क्रियमाणे ये जातिविशिष्टद्रव्याभिधायिनः शब्दास्ते शब्दाः, ये च जातिमात्राभिधायिनः शब्दतोऽर्थश्च तुल्यरूपत्वादभेदेनावसीयन्ते।

तथाहि—शब्दैः स्वार्थप्रतिपादने क्रियमाणे शब्दैर्जातिलक्षणं शब्दस्य प्रवृत्तिनिमित्तं तद्वति द्रव्येऽभेदेनाध्यारोपितमाश्रित्य जातिशब्दैर्जातिविशिष्टस्य द्रव्यस्य जात्यभेदेन प्रत्यायनमिति तैः स्वाश्रयभूतैर्द्रव्यैः सह जातेः सोऽयमित्यभिसंधानेनाभेदप्राप्तौ जातिरूपप्रवृत्तिनिमित्तानुविधानेन निमित्तिनो द्रव्यस्यापि अभिधानात् तद्गत( द्रव्यगत )लिङ्गसंख्योपादानं शुक्लादिगुणवदविरुद्धं भिन्नशब्दायामपि शब्दप्रवृत्तौ। यदा हि जातितद्वन्तौ द्वावप्येकशब्दवाच्यौ तदेकशब्दाशब्दप्रवृत्तिर्व्याख्याता।

इह तु=जातिपदार्थवादे तु जातिमात्रस्य शब्देन प्रतिपादने भिन्नशब्दाशब्दस्य प्रवृत्तिः। अत्रापि च=भिन्नशब्दायामपि प्रवृत्तौ जातिविशेषणतया द्रव्यरूपनिमित्तसरूपप्रत्ययोपजननाद् यथा प्रत्ययञ्च शब्देनाभिधानाद् द्रव्यरूपप्रवृत्तिनिमित्तसंक्रान्त्यैव शब्दप्रवृत्तिः।

तथाहि—अस्य गौरिति जातिद्रव्ययोर्व्यतिरेकः=भेदो न दृष्ट इति जातिद्रव्ययोरभेदोपचारादाश्रयगतलिङ्गवचनयोः सिद्धिर्जातौ। एवञ्च फलतः पक्षयोः=जातिपदार्थद्रव्यपदर्थयोः अभेदः। तत्र पूर्वत्र तु=द्रव्यपदार्थपक्षे तु गुणप्रधानभावेन द्वयोरभिधानम्, इह तु = जातिपदार्थपक्षे तु जातिव्यक्त्योरभेदोपचारादभिधानमित्येतावान् विशेष इति॥ ३४०॥ ३४१॥

यद्वा जातिपदार्थवादेऽनभिधीयमानमपि द्रव्यमभिधीयमानाया जातेरुपलक्षणतयोपकारकं

'ननु चानभिधेयत्व' इत्यादि। जातिलक्षणनिमित्तानुविधानमन्तरेण च न व्यक्तयो यथास्वं विशेषेण व्यवहारमवतरन्तीत्याह—

**प्राक् च जात्यभिसंबन्धात् सर्वनामाभिधेयता।**
**वस्तूपलक्षणाः सत्त्वे प्रयुज्यन्ते त्यदादयः॥ ३४२॥**

यावज्जातिरूपमाधारे न प्रत्यस्यते, तावद्व्यक्तीनां रूपानवसायादनिरूपणमेव विशेषणम्। आरूपिका हि जातिराधारं निरूपयन्ती व्यवहारयति यथास्वं विशेषशब्दै-र्विशिष्टजातिरूपणाभावे तु विशेषशब्दानामगोचरः पदार्थ इति सत्त्वे द्रव्ये सिद्धस्वभावे वस्तुमात्रोपलक्षणाः सर्वनामशब्दास्त्यदादयः प्रयुज्यन्ते। ते हि वस्तु किञ्चिदिति सामान्यमात्रतया पदार्थमवगमयन्ति।

तस्माद् विशेषप्रत्यायनाय जातिरूपाध्यासेन निमित्तरूपतां प्राप्ताः पदार्था यथायथं जातिशब्दैरभिधीयन्ते गवादिभिरित्यभेदोपचाराज्जातिशब्दानां द्रव्याभिधानं न गौणम्, अपि तु मुख्यमेवेत्याश्रयलिङ्गवचनसिद्धिरुक्ता॥ ३४२॥

---

पूर्वत्रग्रन्थे विवक्षितम्। तथा च चोदितम्—"ननु चानभिधेयत्वे" इत्यादि। जातिलक्षणनिमित्तानु-विधानमन्तरेण च न व्यक्तयो द्रव्यरूपा तथास्वं विशेषेण व्यवहारमवतरन्ति इति कथं जाति-पदार्थदर्शनेऽनभिधीयमानस्य द्रव्यस्य जातिलक्षणनिमित्ताननुविधातुर्जातिरूपकारत्वव्यवहारेऽवतार इत्याशङ्क्याह—प्राक् च जात्यभिसंबन्धादिति।

अस्यार्थः—व्यतिरूपस्य द्रव्यस्य जात्यभिसंबन्धात् प्राक् च=तु सर्वनामाभिधेयता, त्यदादिसर्वनामपदवाच्यता। यतः—सत्त्वे द्रव्ये सिद्धस्वभावे, वस्तूपलक्षणाः=वस्तु उपलक्षणं येषामर्थानां ते वस्तूपलक्षणास्त्यदादयः सर्वनामशब्दाः प्रयुज्यन्ते। ते हि "वस्तु किञ्चित्" इत्येवं सामान्यमात्ररूपतया पदार्थमवगमयन्तीति।

अयं भावः—यावज्जातिरूपं स्वाधारे तादात्म्येन न प्रत्यस्यते=आरोप्यते, तावद् व्यक्तीनां रूपानवसायात्=स्वरूपानिश्चयाद् जातिरूपं विशेषणमनिरूपणमेव=व्यक्तेरनिरूपकमेव। आरूपिका हि= निरूपका हि जातिराधारं निरूपयन्ती यथास्वं विशेषशब्दैर्व्यवहारयति= आधार-रूपद्रव्यविषयकं विशेषशब्दकरणकं व्यवहारं प्रयोजयति। विशिष्टजातिरूपणाभावे तु=जाति-विशेषकृतनिरूपणाभावे तु विशेषशब्दानाम्=सर्वनामातिरिक्तशब्दानाम् अगोचरः पदार्थ इति सत्त्वे द्रव्ये सिद्धस्वभावे वस्तुमात्रोपलक्षणाः सर्वनामशब्दास्त्यदादयः प्रयुज्यन्ते। ते हि=सर्वनाम-शब्दास्त्यदादयो हि "वस्तु किञ्चित्" इत्येवं सामान्यमात्रतया=सामान्येनैव रूपेण पदार्थं जाते-राधारभूतमवगमयन्ति।

तस्मात् पदार्थविशेषप्रत्यायनाय तादात्म्येन जातिरूपाध्यासेन निमित्तरूपतां प्राप्ताः प्रदार्था यथायथं जातिशब्दैर्गवादिभिरभिधीयन्त इति द्रव्ये जात्यभेदोपचाराज्जातिशब्दानां द्रव्याभिधानं न गौणम्, अपि तु मुख्यमेव, गौणे शब्दाव्यवहारे 'सिंहो माणवकः' इत्यादौ दृष्टस्य भेदग्रहस्यात्राभावादित्येवं जातिपदार्थदर्शने जातौ आश्रयतो लिङ्गवचनसिद्धिरुक्ता इति॥ ३४२॥

अत्रैव मतान्तरमाह—

**पाकौ पाका इति यथा भेदकः कैश्चिदाश्रयः ।**
**इष्यते चानुपादानो धर्मोऽसौ गुणवाचिनाम् ॥ ३४३ ॥**

पाकशब्दः क्रियाधर्मवचनो नोपादत्ते तदाश्रयम् । अनुपादानोऽपि चात्र क्रियाश्रयो भेदकः । तथाहि द्विवचनबहुवचने भवतः, कर्मस्थत्वात् पचिक्रियायास्तद्भेदे पाकभेदाभिधानमत्र ।

एवं गुणवाचिनां शब्दानां सोऽयमिति सम्बन्धाश्रयानुपादानेऽप्यनुपादानोऽसावाश्रयो भेदक इति जातिशब्दानां गुणवचनत्वादनुपात्तद्रव्याणामपि वचनभेदः सेत्स्यतीति कैश्चिदभ्युपगम्यते ।

एतत्तु न युक्तम् । पाकौ पाका इति सोऽयमित्यभिसम्बन्धेनाश्रयोपादानस्यादृष्टेः युक्तं यदाश्रयभेदेन पाकभेदाद् भिन्नशब्दाभिधेयत्वे स्वत एव वचनभेदः । न ह्ययमाश्रयगतः । आश्रयभेदेनाश्रितस्य भेदादाश्रितभेदोऽनुयाय्येव ।

---

अत्रैव=जातिपदार्थदर्शन एव आश्रयतो लिङ्गवचनसिद्धौ मतान्तरमाह=पाकौ पाका इति यथेति ।

अस्यार्थः—यथा='पाकौ, पाकाः' इति=इत्यत्र, अनुपादानोऽपि=न उपादानं=शब्देनाभिधानं यस्य स तथा भूतोऽपि, अनभिधीयमानोऽपि, आश्रयः=पाकक्रियाया आश्रयो द्रव्यरूपः, कैश्चिद् भेदक इष्यते, पाकक्रियाया एकत्वेऽपि 'पाकौ, पाकाः' इति द्विवचनबहुवचनदर्शनात्, असौ=अनुपादानादपि आश्रयतो लिङ्गवचनग्रहणम्, जातिरूपगुणवाचिनां धर्मः स्वभाव इति ।

अयं भावः—पाकशब्दः क्रियाधर्मवचनः=क्रियारूपद्रव्यधर्मवचनः तदाश्रयम्=क्रियाश्रयं द्रव्यं नोपादत्ते=नाभिदधाति । अनुपादानोऽपि चात्र='पाकौ पाकाः' इत्यत्र क्रियाश्रयः क्रियाया भेदकः । तथा हि द्विवचनबहुवचने भवतः । कर्मणि क्रियाकृतविशेषदर्शनेन पचिक्रियायाः कर्मस्थत्वात् तद्भेदे=कर्मभेदे पाकभेदाभिधानमत्र='पाकौ, पाकाः' इत्यत्र ।

एवं जातिद्रव्ययोः सोऽयमिति संबन्धाद् गुणवाचिनां शब्दानामाश्रयानुपादानेऽपि=आश्रयानभिधानेऽपि अनुपादानोऽपि=अनभिधीयमानोऽपि असावाश्रयो जातेर्भेदक इति जातिशब्दानां धर्ममात्रस्य गुणत्वेन गुणवचनत्वाद् अनुपात्तद्रव्याणामपि=अनभिहितद्रव्याणामपि वचनभेदः सेत्स्यतीति कैश्चिदभ्युपगम्यते ।

एतत्तु न युक्तम्—'पाकौ, पाकाः' इत्यत्र 'सोऽयम्' इत्यभिसंबन्धेन=क्रियाद्रव्ययोरभेदोपचारेण आश्रयोपादानस्य=आश्रयाभिधानस्यादृष्टेर्युक्तं यदाश्रयभेदेन पाकभेदात् तस्य भिन्नशब्दाभिधेयत्वे स्वगत एव=पाकक्रियागत एव वचनभेदः=संख्याभेदः, न ह्ययम्=संख्याभेद आश्रयगतः, किन्तु आश्रयभेदेनाश्रितस्य भेदाद् आश्रितभेदोऽनुयाय्येव=आश्रयभेदानुगाम्येव ।

तथा च गुडतिलतण्डुलौदानानां पाक इत्याश्रयभेदावगमादेवाश्रितभेदप्रतीतेर्न बहुवचनम्। शुक्लादिशब्दानां तु सोऽयमिति सम्बन्धेन दृष्टमाश्रयोपादानम्। त एव च जातिशब्दानां भाष्ये निदर्शनत्वेनोपन्यस्ता 'गुणवचनवद्' इति।

तथाहि—जातिशब्दा अप्याश्रयमभेदोपचारादुपाददत एव। आश्रितमात्रश्च गुणो विवक्षित इति जातिरपि तथा प्रसिद्धवस्तु। गुणवचनत्वेन शुक्लादिरित्युपमानम्।

न चाधारभेदेऽपि जातिभेदः पाकादिवदित्यभिन्नशब्दत्वे प्रत्याख्याते एकशेषेऽभेदोपचारेण तद्वृत्तिवृत्ते लिङ्गवचनसिद्धिरत्र विवक्षिता, न त्वाश्रयानुपादानेन ॥ ३४३ ॥

तथाहि—

**आश्रयस्यानुपादाने केवलं लभते यदि।**
**आधारधर्मान् सामान्यं पुरस्तात् तद्विचारितम् ॥ ३४४ ॥**

---

तथा च 'गुडतिलतण्डुलौदनानां पाकः' इत्यत्राश्रयभेदावगमादेवाश्रितभेदप्रतीतेराश्रयसंबन्धात् पूर्वं जातस्य संस्कारस्य निवृत्त्यभावेन न बहुवचनम्। शुक्लादिशब्दानां तु 'सोऽयम्' इति संबन्धेन दृष्टमाश्रयोपादानम्=आश्रयाभिधानम्। त एव च=शुक्लादयो गुणशब्दा एव च जातिशब्दानां निदर्शनत्वेनोपन्यस्ता भाष्ये="गुणवचनवत्" इति।

तथाहि—जातिशब्दा अपि गुणशब्दवत् स्ववाच्याभेदोपचारादाश्रयमुपाददत एव=अभिदधत एव। आश्रितमात्रश्च=धर्ममात्रश्च गुणशब्देन अत्र भाष्ये विवक्षित इति जातिरपि तथा=गुणत्वेन प्रसिद्धवस्तु। गुणवचनत्वेन शुक्लादिरित्युपमानम्=मुख्यगुणवचनत्वेन शुक्लादिशब्द उपमानम्।

न चाधारभेदेऽपि जातिभेदः पाकादिवत्, किन्तु 'सोऽयम्' इत्यभिसंबन्धेनाभेदोऽपि इत्यभिन्नशब्दत्वे स्थिते प्रत्याख्याते चैकशेषे जातिव्यक्त्योरभेदोपचारेण तद्वृत्तिवृत्ते अत्र=विशिष्टद्रव्यविषयकवृत्त्यावृत्त्ये-वृत्तिमति, अत्र=जातिशब्दे लिङ्गवचनसिद्धिः=आश्रयगतयोर्लिङ्गवचनयोर्जातौ सिद्धिर्विवक्षिता, न त्वाश्रयानुपादानेन=न त्वाश्रयानभिधानेन, जातिपदार्थदर्शनेऽपि जातिव्यक्त्योरभेदोपचारेण जातिवद् द्रव्यस्यापि अभिधानादिति ॥ ३४३ ॥

तथाहि=( जातिपदार्थदर्शने जातिव्यक्त्योरभेदोपचारेण जातिशब्दानां द्रव्याभिधानं मुख्यम्, तेन च जातिशब्दे लिङ्गवचनसिद्धिर्विवक्षिता, न त्वाश्रयानुपादानेन इत्येतदेव हि ) दर्शयति=आश्रयस्यानुपादाने इति।

अस्यार्थः—यदि 'पाकौ, पाकाः' इत्यत्रेव आश्रयस्यानुपादाने केवलम् अनुपात्ताधारं शुद्धमेव सामान्यं जातिशब्देनाभिहितं सद् आधारधर्मान् लिङ्गसंख्यालक्षणान् लभते, तदा तद् पुरस्ताद् विचारितम्="लिङ्गवचनसिद्धिर्गुणस्यानित्यत्वात्" इत्यत्रेति पुनरत्र तद्विचारो निष्फलः, पुनरुक्तश्चेति।

अनुपात्ताधारं शुद्धमेव जातिशब्देन सामान्यमभिहितमित्याधारगताल्लिङ्ग-संख्यालक्षणान् धर्मान् प्रतिपद्यत इति नेदं गुणवचनवदित्यत्र परिहारे व्याख्यातुं युज्यते। एतद्धि पूर्वत्र परिहारे 'लिङ्गवचनसिद्धिर्गुणस्यानित्यत्वात्' इत्यत्र पक्षान्तरं व्याख्यातम्।

तथाहि—तत्र 'ननु चानभिधेयत्वे' इत्यादिना चोदयित्वा 'व्यपदेशोऽभिधेयेन न शास्त्रे कश्चिदाश्रित' इति परिहृतम्ः।

द्वितीयश्चापि पक्षोऽत्र व्याख्यातः 'कैश्चिद् गुणप्रधानत्वमि' त्यादिना द्वयोरप्य-भिधीयमानत्वलक्षणो गुणप्रधानभावेन। अस्मिंस्तु परिहारे जातेरेवाभिधेयता। अभेदोपचारात्तु तदाश्रयोपादाने तद्धर्मसिद्धिः॥ ३४४॥

तत्र कथमभेदोपचार इत्युक्तं भाष्ये—'सामान्ये वृत्तस्य वृत्तिरुपजायते' इति। तदुपपादयितुमाह—

**जातौ पूर्वं प्रवृत्तानां शब्दानां जातिवाचिनाम्।**
**अशब्दवाच्यात् सम्बन्धाद् व्यक्तिरप्युपजायते॥ ३४५॥**

---

अयं भावः—अनुपात्ताधारम्=अनभिहिताधारं शुद्धमेव सामान्यं जातिशब्देनाभिहित-मिति तदेवानभिहिताधारगतान् लिङ्गसंख्यालक्षणान् धर्मान् प्रतिपद्यत इतीदम् "गुणवचनवत्" इत्यत्र परिहारे व्याख्यातुं न युज्यते। एतद्धि="लिङ्गवचनसिद्धिर्गुणस्यानित्यत्वात्" इत्यत्र पूर्वत्र परिहारे पक्षान्तरं व्याख्यातम्।

तथाहि—तत्र=शुद्धा जातिः पदार्थं इति दर्शने "ननु चानभिधेयत्वे" इत्यादिना चोदयित्वा=आशङ्क्य "व्यपदेशोऽभिधेयेन न शास्त्रे कश्चिदाश्रितः' इति परिहृतम्।

शुद्धा जातिः पदार्थ इति पक्षाद् द्वितीयश्चापि पक्षोऽत्र=लिङ्गवचनसिद्धिर्गुणस्यानित्यत्वादि-त्यत्रव्याख्यातो हरिणा 'कैश्चिद् गुणप्रधानत्वम्' इत्यादिना द्वयोरपि जातिद्रव्ययोर्गुणप्रधानभा-वेनाभिधीयमानत्वलक्षणः। अस्मिंस्तु परिहारे=व्यपदेशोऽभिधेयेन न शास्त्रे कश्चिदाश्रित इत्यत्र परिहारे तु, जातेरेवाभिधेयता। जातिव्यक्त्योर्यथायथमभिहितानभिहितयोरभेदोपचाराद् तु तदाश्रयोपादाने=अनभिहितस्यापि जात्याश्रयस्यार्थापत्त्या परिग्रहे जातौ तद्धर्मसिद्धिः=लिङ्ग-संख्यालक्षणाश्रयधर्मसिद्धिर्जातौ इति॥ ३४४॥

तत्र=जातौ द्रव्यस्य कथमभेदोपचार इत्याशङ्क्योक्तं भाष्ये—"सामान्ये वृत्तस्य वृत्तिरुपजायते" इति।

अस्यार्थः—पूर्वं सामान्ये वृत्तस्य=वृत्तिमतः शब्दस्य द्रव्यरूपे विशेषे अशब्दवाच्यात् संबन्धाद् वृत्तिरुपजायते इति।

एतदुपपादयितुमाह=जातौ पूर्वं प्रवृत्तानामिति।

अस्यार्थः—व्यक्तिभानाद् पूर्वं जातौ प्रवृत्तानाम्=जातिविषयकं ज्ञानं जनयितुं प्रवृत्तानाम्, जातिवाचिनां शब्दानां व्यक्तौ अशब्दवाच्यात् संबन्धाद् जातिमत्संबन्धलक्षणात् सामर्थ्याद् व्यक्तिरुपजायते=प्रत्ययपथमारोहतीति।

निमित्तपुरस्सरा निमित्तिनो वृत्तिरिति पूर्वं निमित्तभूतायां जातौ शब्दप्रवृत्तिः। सा च जातिर्निराश्रया न सम्भवतीति शब्देनाभिधायकेनाविषयीकृतादपि तद्वत्सम्बन्धलक्षणात् सामर्थ्याद् व्यक्तिस्तद्वान् प्रत्ययपथमुपारोहति। तथा चाह— 'अधिकरणगतिः साहचर्यात्' इति ॥ ३४५ ॥

प्रत्ययानुसारेण च शब्दाः प्रवर्तन्त इति क्रमोऽप्यत्रोपपन्न इत्याह—

**सोऽयमित्यभिसम्बन्धाज्जातिधर्मोपचर्यते।**
**द्रव्यं तदाश्रयो भेदो जातेश्चाभ्युपगम्यते ॥ ३४६ ॥**

अभेदाध्यासाज्जातेरिव धर्मोऽस्येति द्रव्यं जातिशब्देनोच्यते। जात्यात्मकत्वापत्तेः। निमित्तरूपाच्छुरितस्य पदार्थस्यावगमात् तथैवाभिधानप्रवृत्तिरिति जातिलक्षणनिमित्तं व्यक्तावध्यस्य तदभेदेन शब्दस्तत्र वर्तते।

तथा च द्रव्यस्यापि निमित्ताच्छुरितस्य निमित्तनिबन्धनेन शब्देनाभिधानमर्थतो जायत इति तदाश्रयः संख्याभेदो निमित्तेऽपि प्रतिज्ञायते, न हि जातिशब्देन द्रव्यं

---

अयं भावः—निमित्तपुरस्सरा निमित्तिनो वृत्तिः, पूर्वं प्रवृत्तिनिमित्तमभिधाय पश्चान्निमित्तिनमभिदधाति शब्द इति यावदिति हेतोर्व्यक्तिभानात् पूर्वं प्रवृत्तिनिमित्तभूतायां जातौ शब्दप्रवृत्तिः।

सा च जातिर्निराश्रया न संभवतीति शब्देन जात्यभिधायकेन विषयीकृतादपि तद्वत् संबन्धलक्षणात्=जातिमत्संबन्धरूपात् सामर्थ्याद् व्यक्तिस्तद्वान्=जातिमान् पदार्थः प्रत्ययपथमुपारोहति। तथा चाह भाष्यकारः=''अधिकरणगतिः साहचर्यात्'' इति।

अस्यार्थः—जात्यधिकरणस्य द्रव्यस्य गतिर्ज्ञानम्, साहचर्याद् द्रव्ये जात्यविनाभावरूपात् साहचर्यादिति ॥ ३४५ ॥

प्रत्ययानुसारेण च शब्दाः प्रवर्तन्ते इति क्रमोऽपि अत्र=जातिव्यक्त्योर्बोधे उपपन्न इत्याह—सोऽयमित्यभिसंबन्धादिति।

अस्यार्थः—सोऽयमित्यभिसंबन्धात्=अभेदाध्यासात्, द्रव्यं जातिधर्मंजातेरिव धर्मो यस्य तत्तथाभूतम्, उपचारेण=अभेदारोपेण जातिशब्देनोच्यते। अभेदाध्यासेन जात्यात्मकत्वापत्तेः। तत्त्वादेव च तदाश्रयः=द्रव्यनिमित्तकः, भेदो जातेरभ्युपगम्यत इति जातौ लिङ्गवचनसिद्धिरिति।

अयं भावः—जातिव्यक्त्योरभेदाध्यासाज्जातेरिव धर्मो यस्येति द्रव्यं जातिशब्देनोच्यते। जात्यात्मकत्वापत्तेः। निमित्तरूपाच्छुरितस्य=निमित्तरूपरूषितस्य पदार्थस्य तदाश्रयस्यावगमात् तथैव=पदार्थावगमानुसारेणैव अभिधानप्रवृत्तिरिति जातिलक्षणनिमित्तं व्यक्तावध्यस्य तदभेदेन=जात्यभेदेन शब्दस्तत्र=व्यक्तौ वर्तते।

तथा च=तेनैव प्रकारेण च द्रव्यस्यापि निमित्ताच्छुरितस्य निमित्तनिबन्धनेन=निमित्तप्रयुक्तेन शब्देनाभिधानमर्थतो जायत इति तदाश्रयः=द्रव्यनिमित्तकः संख्याभेदो जातिरूपे

स्वेन रूपेणाभिधीयते, अपि तु निमित्तस्य तत्र सन्निधानान्निमित्तमभिदधता शब्देन सामर्थ्यान्निमित्त्युपादानम्, निमित्तिनो निमित्तस्य निष्कृष्टस्याभावात्। तथा च प्रयोजकीकृतं निमित्तमेवाभिधान इति तदभेदात् तदेकत्वं न्याय्यम्। उपात्तनिमित्तिगतस्तु धर्मप्रतिलम्भः। विरम्य व्यापारायोगाच्च शब्दस्य नायमभिधायां क्रमः।

प्रतिपत्तारस्तु—तमेकमेव संसृष्टमर्थं स्वकल्पनाभिर्विभजन्त इति तदभिप्रायेण सामान्ये वृत्तस्येति भाष्ये क्रम उक्तः॥ ३४६॥

एतदेव निदर्शनेन साधयति—

**मञ्चशब्दो यथाऽऽधेयं मञ्चेष्वेव व्यवस्थितः।**
**तत्त्वेनाह तथा जातिशब्दो द्रव्येषु वर्तते॥ ३४७॥**

मञ्चाः क्रोशन्तीति क्रियासम्बन्धस्याधेये मञ्चस्थे प्राणिन्युपपत्तेराधाररूपाभेदेनाधारवचनोऽपि मञ्चशब्दस्तदाधेयवचन इति निश्चीयते। एवमानीयन्तां गाव इति क्रियासम्बन्धस्य जातावनुपपत्तेस्तदभेदापन्ना व्यक्तयः क्रियासमन्वयसमर्था जातिनिबन्धनेन शब्देनोपादीयन्त इत्यवगमः॥ ३४७॥

---

निमित्तेऽपि प्रतिज्ञायते, न हि जातिशब्देन द्रव्यं स्वेन रूपेण=द्रव्यत्वेन रूपेण अभिधीयते, अपि तु जातिरूपस्य निमित्तस्य तत्र=द्रव्ये संनिधानान्निमित्तमभिदधता शब्देन सामर्थ्यान्निमित्त्युपादानम्, निमित्तिनो निकृष्टस्य निमित्तस्याभावात्। तथा च निमित्तमेव प्रयोजकीकृतमभिधाने इति तदभेदात्=जातिरूपनिमित्ताभेदात् तदेकत्वं द्रव्यैकत्वं जातिपदार्थपक्षे न्याय्यम्। जात्यभेदादेव च विशेषणरूपशब्दान्तरोपात्तनिमित्तिगतस्तु धर्मप्रतिलम्भो जातौ। शब्दबुद्धिकर्मणां विरम्य व्यापारायोगाच्च नायमभिधायां जातिव्यक्त्योर्बोधे क्रमः।

प्रतिपत्तारस्तु—तमेकमेव जातिसंसृष्टमर्थं स्वकल्पनाभिर्विभजन्ते इति तदभिप्रायेण=प्रतिपत्तृकल्पनाभिप्रायेण "सामान्ये वृत्तस्य वृत्तिरुपजायते" इति भाष्ये क्रम उक्त इति॥ ३४६॥

एतदेवोदाहरणेन प्रकाशयति—मञ्चशब्दो यथेति।

अस्यार्थः—यथा मञ्चशब्दो मञ्चेष्वेवाभिधया व्यवस्थितः सन् मञ्चाभेदारोपेण आधेयं मञ्चस्थं पुरुषं तत्त्वेन मञ्चत्वेनाह, तथा जातिशब्दो जात्यभेदेन द्रव्येषु वर्तते इति।

अयं भावः—'मञ्चाः क्रोशन्ति' इत्यत्र क्रोशनक्रियासंबन्धस्य आधेये मञ्चस्थे प्राणिनि उपपत्तेराधाराधेयभावसंबन्धमूलकाधाराभेदारोपेणाधारवचनोऽपि मञ्चशब्दस्तदाधेयपुरुषवचन इति निश्चीयते, [एवम् 'आनीयन्तां गावः' इत्यत्रानयनक्रियासंबन्धस्य गोत्वजातावनुपपत्तेरभेदाध्यारोपेण तदभेदापन्ना व्यक्तयः क्रियायां सम्यगन्वयसमर्था जातिनिबन्धनेन=जातिप्रवृत्तिनिमित्तकेन शब्देन उपादीयन्ते=अभिधीयन्ते इत्यवगम एतत्कारिकातो भवति॥ ३४७॥

यद्येवं कथं जातिरेव पदार्थ इत्यत आह—

**तत्र जातिपदार्थत्वं तथैवाभ्युपगम्यते ।**
**जातिरुत्सृष्टसङ्ख्या तु द्रव्यात्मन्यनुषज्यते ॥ ३४८ ॥**

यथाधेयाभिधानेऽपि मञ्चशब्दस्तदाधारवचन इत्युच्यते, तथैव सत्यप्याश्रयद्रव्योपादाने जातिशब्दो जातिपदार्थ एव व्यवस्थाप्यते । द्रव्यमपि हि नासौ स्वरूपेणाचष्टे, अपि तु जातिरूपाध्यासेनेत्युपचरितं जातिरूपसमावेशाद् द्रव्याभिधानं वाहीकाभिधानवत् । मुख्यं तु जात्यभिधानमेव । निरूढत्वाच्च नोपचारप्रतीतिः ।

यद्येवं निमित्ताभिधानं मञ्चादिवदेव स्यात् । तथा चैकजात्याच्छुरिता व्यक्तयः सर्वा ऐक्येनाभिधीयेरन्निति वचनभेदो न स्यादित्याशङ्क्योक्तं—जातिरुत्सृष्टसङ्ख्येत्यादि ।

---

यद्येवम् = यद्यनेन प्रकारेण उभयोरभिधेयत्वम्, तदा कथं जातिरेव पदार्थ इत्यत आह—तत्र जातिपदार्थत्वमिति ।

अस्यार्थः—तत्र जातिशब्दे जातिपदार्थत्वम्=जातिरूपार्थवाचकत्वम्, तथैव मञ्चशब्दवदेव, अभ्युपगम्यते=स्वीक्रियते । यथा मञ्चशब्दः='मञ्चाः क्रोशन्ति' इत्यत्राधेयाभिधानेऽपि आधारवचन इत्युच्यते, तथा जातिशब्दो जात्यभेदाध्यासेन द्रव्याभिधानेऽपि जातिपदार्थक एवाभ्युपगम्यते ।

यद्येवं जातिशब्दस्य द्रव्याभिधानेऽपि जातिपदार्थकत्वम्, तदा जातिगतमेकत्वमेव द्रव्येषु प्रतीयेतेत्याशङ्क्योत्तरार्धेन समाधानमाह=जातिरुत्सृष्टसंख्या तु इति ।

स्वतः संख्यारहितत्वादुत्सृष्टसंख्या तु निरस्ताध्यारोपितसंख्या तु जातिर्द्रव्यात्मनि द्रव्यस्वरूपेऽध्यस्यत इति न जात्याश्रिता संख्या द्रव्ये प्राप्नोतीति ।

अयं भावः—यथाऽऽधेयाभिधानेऽपि=मञ्चे क्रोशनक्रियाकर्तृत्वानुपपत्त्या मञ्चाधेयपुरुषाभिधानेऽपि मञ्चशब्दस्तदाधारवचनः=मञ्चरूपाधारवचन इत्युच्यते, तथैव जातिशब्दः सत्यपि आश्रयद्रव्योपादाने=जात्याश्रयरूपद्रव्याभिधाने जातिपदार्थक एव व्यवस्थाप्यते । असौ=जातिशब्दो द्रव्यमपि हि न स्वरूपेण=द्रव्यत्वेन रूपेण आचष्टे, अपि तु जातिरूपाध्यासेन=जातिस्वरूपस्य तत्राभेदारोपेण इत्युपचरितम्=गौणम्, जातिरूपसमावेशात्=जातिरूपाभेदारोपाद् द्रव्याभिधानम्, बाहीकाभिधानवत् । मुख्यन्तु जात्यभिधानमेव । निरूढत्वाच्च=द्रव्याभिधाने जातिशब्दस्य निरूढत्वाच्च नोपचारप्रतीतिः=न जात्यभेदारोपमूलकगौणत्वप्रतीतिः । यथा सार्षपादिस्नेहेषु तैलशब्दस्य निरूढत्वान्नोपचारप्रतीतिः ।

यद्येवम्=यदि मञ्चादिशब्देष्विव जातिशब्देषु उपचरितं द्रव्याभिधानं तदा मञ्चादिशब्दवदेव जातिशब्देषु द्रव्याभिधानेऽपि जातिरूपप्रवृत्तिनिमित्ताभिधानं स्यात् । तथा चैकजात्याच्छुरिताः=एकत्वसंख्याविशिष्टजातितादात्म्येन प्रतीता व्यक्तयः सर्वा ऐक्येन=एकत्वसंख्यावत्त्वेनाभिधीयेरन्निति वचनभेदो न स्यादित्यशङ्क्योक्तम्—जातिरुत्सृष्टसंख्येत्यादि ।

जातेः स्वतः सङ्ख्यारहितत्वान्निरस्तसङ्ख्यास्वरूपेण केवलमसौ द्रव्येऽध्यस्यत इति न तदाश्रया काचिदत्र सङ्ख्या प्राप्नोति। नापि लिङ्गमलिङ्गत्वात् तस्या इत्याधारगतलिङ्गसङ्ख्योपग्रह एव न्याय्यः ॥ ३४८ ॥

तदेवमुपपन्नो जातिशब्दानां लिङ्गवचनयोगः, शुक्लादिशब्दवत्। तत्र शुक्लादिशब्दानां मतुब्लोपादभेदोपचाराद् वा तद्वति वृत्तिः। जातिशब्दानां तु व्यतिरेकस्य कदाचिदप्यदर्शनान्मतुब्लोपेन नार्थोऽभेदोपचारादेव तद्वति वृत्तिः। तथापि च तद्वदभिधानमात्रं समानमाश्रित्य उपायभेदानादरेण शुक्लादीनां दृष्टान्ततोपपत्तिरत्रेत्याह—

**अस्येदमिति वा यत्र सोऽयमित्यपि वा श्रुतिः।**
**वर्तते परधर्मेण तदन्यदभिधीयते ॥ ३४९ ॥**

मत्वर्थीयवशेनाभेदोपचारेण वा शब्दोऽन्यत्र वर्तताम्। निमित्तरूपाध्यासेन तु निमित्तिनोऽभिधानं तुल्यम्। इयता चेह प्रयोजनमित्यर्थः।

इत्थञ्च यथा गुणशब्दत्वं द्रव्यवाच्यत्वेऽपि शुक्लादीनामुच्यते, तथा गवादीनां जातिशब्दत्वेऽपि न कापि हानिः ॥ ३४९ ॥

---

जातेः 'स्वतःसंख्यारहितत्वात् केवलमसौ=जातिः निरस्तसंख्यास्वरूपेण द्रव्येऽध्यस्यते इति न तदाश्रया=जात्याश्रिता काचित् संख्याऽत्र=द्रव्ये प्राप्नोति। नापि जातिलिङ्गद्रव्येषु प्राप्नोति, जातेरलिङ्गत्वादिति आधारगतलिङ्गसंख्योपग्रह एव जातितादात्म्येन प्रतीयमानेषु द्रव्येषु न्याय्य इति ॥ ३४८ ॥

तदेवं जातिशब्दानां शुक्लादिशब्दवद् आश्रयतो लिङ्गवचनयोग उपपन्नः। तत्र गुणगुणिनोर्भेदे शुक्लादिशब्दानां मतुब्लोपादभेदोपचाराद् वा तद्वति=शुक्लादिगुणवति वृत्तिः। जातिजातिमतोर्व्यतिरेकस्य=भेदस्य कदाचिदप्यदर्शनाद् जातिशब्दानां मतुब्लोपेन नार्थः, अपि त्वभेदोपचारादेव तेषां तद्वति वृत्तिः। तथापि च=एवं शुक्लादिशब्दजातिशब्दयोरुपायभेदेऽपि च तद्वदभिधानमात्रं समानमाश्रित्योपायभेदानादरेण शुक्लादिशब्दानां दृष्टान्ततोपपत्तिरत्र=जातिशब्देषु इत्याह=अस्येदमिति वेति।

अस्यार्थः—अस्येदमिति वा मत्वर्थीयप्रत्ययवशेन वा='सोऽयम्' इत्यपि वा, अभेदारोपेण वा, यत्र श्रुतिः—शब्दः, परधर्मेण=प्रवृत्तिनिमित्तरूपेण परधर्मेण तदध्यासेन वर्तते=वृत्तिमान् भवति, तद्='मञ्चाः क्रोशन्ति' इत्यादौ आधेयरूपं शक्यार्थादन्यद् वस्तु, 'शुक्लः पटः' इत्यादौ आधाररूपमन्यद् वस्तु निमित्तरूपमभिधीयत इति।

अयं भावः—मत्वर्थीयवशेन अभेदोपचारेण वा शुक्लादिगुणशब्दो जातिशब्दो वा मञ्चादिराधारे आधेये वाऽन्यत्र वर्तताम्। प्रवृत्तिनिमित्तरूपाध्यासेन निमित्तिन आधारस्य आधेयस्य वाऽभिधानं जातिशब्दशुक्लादिशब्दयोस्तुल्यम्। इयता चैवेह प्रयोजनम्।

इत्थमेव च शुक्लादिशब्दानां द्रव्यवाचित्वेऽपि गुणशब्दत्वमुच्यते, निमित्तभूतगुणरूपाध्यासेन निमित्तिनो द्रव्यस्याभिधानात्, तथा गवादिशब्दानां जातिशब्दत्वेऽपि न काऽपि हानिरिति ॥३४९॥

तथाहि—

**यत् प्रधानं न तस्यास्ति स्वरूपमनिरूपणात् ।**
**गुणस्य चात्मना द्रव्यं तद्भावेनोपलक्ष्यते ॥ ३५० ॥**

निरुपाधेरर्थस्य द्रव्यात्मनः क्रियासम्बन्धक्षमस्य शुद्धं रूपं व्यवहारे नास्ति शाब्दे वैकल्पिके वा निरूपणपूर्वको हि व्यवहारः ।

तच्च निरूपणमर्थस्योपाधिरूपाच्छुरणेनैव । ततश्च गुणस्य यथायथं शुक्लजात्यादेर्विशेषणस्यात्मना स्वरूपेण द्रव्यं व्यवहारे तद्भावं गुणात्मतामिवोपगतमुपलक्ष्यते । निमित्तसरूपतां प्राप्तं निमित्तीत्यर्थः ॥ ३५० ॥

एवमपि च जातिप्राधान्यं न त्रुट्यतीत्याह—

**गुणस्य भेदकाले तु प्राधान्यमुपजायते ।**
**संसर्गश्रुतिरर्थेषु साक्षादेव न वर्तते ॥ ३५१ ॥**

---

तथाहि=जातिशब्दगुणशब्दयोर्निमित्तरूपाध्यासेन निमित्तिनोऽभिधानमेवोपपादयति यत्प्रधानं न तस्यास्ति इति ।

अस्यार्थः—यद् वस्तुगत्या जात्यपेक्षया प्रधानं द्रव्यं तस्य स्वरूपं शाब्दे व्यवहारे वैकल्पिके वा व्यवहारे नास्ति, जातिपदार्थवादे तत्स्वरूपस्य जात्या प्रधानत्वेन अनिरूपणात् । गुणस्य च=गुणस्य तु जात्यादेः, आत्मना स्वरूपेण द्रव्यं तद्भावेन अभेदाध्यासाज्जात्यादिरूपेण उपलक्ष्यते=प्रतीयत इत्येवं निमित्तरूपाध्यासेन निमित्तिनोऽभिधानं जातिशब्दगुणशब्दयोस्तुल्यमिति ।

अयं भावः—निरुपाधेः=जातिगुणादिरूपविशेषणरहितस्य अर्थस्य द्रव्यात्मनः तत्तत्क्रियासंबन्धक्षमस्य शुद्धं रूपम्=विशेष्यविशेषणभावानापन्नम्, गुणप्रधानभावानापन्नञ्च रूपं शाब्दे वैकल्पिके वा व्यवहारे नास्ति, विशेष्यविशेषणभावगुणप्रधानभावाभ्यां निरूपणपूर्वको हि सव्यवहारः ।

तच्च निरूपणमर्थस्योपाधिरूपाच्छुरणेनैव=जात्यादिरूपोपाधितादात्म्याध्यासेनैव । ततश्च गुणस्य यथायथम्=यथासंभवं शुक्लजात्यादेर्विशेषणस्य आत्मना स्वरूपेण द्रव्यं शाब्दे व्यवहारे तद्भावम् शुक्लजात्यादिरूपगुणात्मतामिवोपगतमुपलक्ष्यते=प्रतीयते । निमित्ताध्यासेन निमित्तसरूपतां प्राप्तं निमित्तिरूपं द्रव्यं प्रतीयत इति यावदिति ॥ ३५० ॥

एवमपि च=जातिपदार्थवादे जात्यात्मना द्रव्यमानेऽपि च जातिप्राधान्यं न नश्यति इत्याह—गुणस्य भेदकाले तु इति ।

अस्यार्थः—गुणस्य शुक्लजात्यादेरन्यस्माद् भेदकाले तु स्वगतसामान्यावेशेन प्राधान्यमुपजायते=उपजायमानं प्रतीयते, यतः संसर्गश्रुतिः=धर्मान्तरसंसर्गरूपप्रवृत्तिनिमित्तकः शब्दः, साक्षादेव शुद्ध एव द्रव्ये धर्मान्तरसंसर्गरहिते न वर्तते=न प्रवर्तते । अतो यदा जातिरेव स्वगतसामान्यावेशरहिता प्राधान्येनाभिमता, तदापि जातेः शब्दस्वरूपाध्यासेनाभिधानमिति ।

यदा द्रव्यं प्राधान्येन विवक्षितं भवति, तदा जात्युपधीयमानं तदभिधीयते। यदा तु गुणस्यान्यस्माद् भेदेनाख्यानं प्रधानतया, तदा स्वसामान्यावेशेन तदभेद-प्राप्तस्य तस्य प्रत्यायनम्। यदा तु जातिरेव प्राधान्येनाभिमता, तदा तस्याः शब्द-स्वरूपाध्यासेनाभिधानम्।

तथाहि—धर्मान्तरसंसर्गोपहितविशेषं वस्तु शब्दाः शक्नुवन्त्यभिधातुं, न शुद्धम्। अत एव संसर्गनिमित्ता श्रुतिः शब्दः संसर्गश्रुतिरित्युच्यते।

सा च धर्मान्तरमुखेनार्थेषु निविशते, नोपधानत्यागेन साक्षान्निरुपाधेरनिरू-पणान्निरूपणपूर्वकाणां शब्दानामविषयत्वात्॥ ३५१॥

एवं तावज्जातिपदार्थताप्रसङ्गाद् द्रव्यपदार्थतापि कथं भवतीत्याह। यदि वा सोऽयमिति सम्बन्धाद् द्रव्याभिधानेऽपि यदि जातिपदार्थता, कथं तर्हि द्रव्यपदार्थते-त्याह—

**जातौ वृत्तो यदा द्रव्ये स शब्दो वर्तते पुनः।**
**जातेरेव पदार्थत्वं न तदाभ्युपगम्यते॥ ३५२॥**

---

अयं भावः—यदा द्रव्यं जात्यादिनिरूपितेन प्राधान्येन विवक्षितं भवति, तदा जात्युपधीय-मानम्=जात्या विशेष्यमाणं तदभिधीयते। यदा तु गुणस्य=शुक्लजात्यादेः अस्माद् भेदेनाख्यानं प्रधानतया=अन्यप्रतियोगिकभेदप्रकारकप्रतीतिविशेष्यतया, तदा स्वगतसामान्यधर्मावेशेन= तदध्यासेन=तदभेदप्राप्तस्य तस्य=गुणस्य जात्यादेः प्राधान्येन प्रत्यायनम्। यदा तु जातिरेव स्वगतसामान्यावेशरहिता प्राधान्येनाभिमता वक्तुम्, तदाऽपि तस्याः स्ववाचकशब्दस्वरूपाध्यासेना-भिधानम्।

तथा हि—धर्मान्तरसंसर्गोपहितविशेषम्=धर्मान्तरसंसर्गरूपोपाधिकृतविशेषम् वस्तु-शब्दाभिधातुं शक्नुवन्ति, न शुद्धम्=तादृशविशेषरहितम्। अत एव संसर्गनिमित्ता=धर्मान्तर-संसर्गप्रवृत्तिनिमित्तिका श्रुतिः=शब्दः संसर्गश्रुतिरित्युच्यते।

सा च=तादृशी श्रुतिश्च धर्मान्तरमुखेनार्थेषु निविशते=प्रवर्तते, नोपधानत्यागेन=न धर्मान्तररूपोपाधिपरित्यागेन साक्षात्, निरुपाधेरर्थस्यानिरूपणात्, निरूपणपूर्वकाणाम्=निरूपण-पूर्वकप्रवृत्तिकानां शब्दानामविषयत्वान्निरुपाधीनामर्थानामिति॥ ३५१॥

एवं तावज्जातिपदार्थताम्=जातिः पदार्थ इति मतम् उक्त्वा तत्प्रसङ्गाद् द्रव्यपदार्थताऽपि कथं भवतीत्याह—जातौ वृत्त इति।

यदि वा=अथवा सोऽयमिति संबन्धाद् द्रव्याभिधानेऽपि यदि जातिपदार्थता=जातिः पदार्थ इति मतम्, कथं तर्हि द्रव्यपदार्थता=द्रव्यं पदार्थ इति मतोपपत्तिरित्याह—जातौ वृत्त इति।

अस्यार्थः—यदा यः शब्दो जातौ वृत्तः=जातिविषयकवृत्तिमान्, स एव शब्दो यदा पुनर्द्रव्ये वर्तते, तदा जातेरेव पदार्थत्वं नाभ्युपगम्यत इत्येवं तदा द्रव्यपदार्थतोपपत्तिरिति।

जातौ वर्तित्वा तद्विशिष्टं यदा द्रव्यमप्याह, न जातावेवाभिधाविरामः शब्दस्य, तदा जातेरेव केवलाया न पदार्थत्वम्। अभेदोपचाराच्च सोऽयमिति सम्बन्धेन यथासमर्थितं न द्रव्योपादानमभ्युपगम्यते। अपि तु तद्वत्पक्षोऽयं पूर्वत्र परिहारेऽभिहित इत्यर्थः ॥ ३५२ ॥

ननु च विरम्य व्यापारानुपपत्तेः शब्दानां कथं जातौ वर्तित्वा स एव शब्दो द्रव्ये वर्तते। दर्शनभेदेन हि भिन्ना एव शब्दा जातिमात्रवचनास्तद्वचनाश्चेत्यत आह—

प्रवृत्तानां पुनर्वृत्तिरेकत्वेनोपवर्ण्यते ।
प्रतिपत्तेरुपायेषु न तत्त्वमनुगम्यते ॥ ३५३ ॥

सादृश्यादभेदावसायेनैवमेकत्वेन व्यवहारः प्रतिपादनोपायः। संसृष्टार्थाभिधानं ह्यक्रममप्येवं कल्पनया क्रमेण प्रतिपाद्यते।

---

अयं भावः—यः शब्दो यदा जातौ वर्तित्वा तद्विशिष्टं द्रव्यमप्याह, न जातावेव यदा तस्य शब्दस्याभिधारूपव्यापारविरामः, तदा जातेरेव केवलाया न पदार्थत्वम्, 'सोऽयम्' इति संबन्धेन जात्यभेदारोपाच्च यथा समर्थितं न द्रव्योपादानम्=द्रव्याभिधानमपि केवलमभ्युपगम्यते, अपि तु तद्वत्पक्षोऽयम्=जातिविशिष्टपदार्थत्वपक्षोऽयम् पूर्वत्र परिहारे=पूर्वस्मिन् भाष्यपरिहारेऽभिहितोऽत्रापि पूर्वग्रन्थे इति ॥ ३५२ ॥

ननु "शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः" इत्यभ्युपगमेन शब्दानां विरम्य व्यापारानुपपत्तेः कथं जातौ वर्तित्वा स एव शब्दो द्रव्ये वर्तते? प्रत्यर्थं शब्दाभिनिवेश इत्यभ्युपगमादर्थदर्शनभेदेन हि भिन्ना एव शब्दा जातिमात्रवचनास्तदवचनाश्चेत्यत आह—प्रवृत्तानां पुनर्वृत्तिरिति।

अस्यार्थः—जातौ प्रवृत्तानां शब्दानां द्रव्ये पुनर्वृत्तिः प्रवृत्तिः शब्दयोरेकत्वाध्यासेन एकत्वेनोपवर्ण्यते।

वस्तुतस्तु अस्ति अर्थभेदेन शब्दयोः प्रवृत्तिद्वयम्। ननु प्रमारूपायाः प्रतिपत्तेरुपायेषु कथमेवमसत्यत्वमिति प्राप्ते आह—प्रतिपत्तेरुपायेष्विति।

अस्यार्थः—परप्रतिपत्तेरुपायेषु=जातिविशिष्टार्थप्रतिपत्तेर्वस्तुतोऽक्रमाया उपायेषु शब्दतत्प्रवृत्त्यादिषु न तत्त्वं सत्यत्वमनुगम्यते। रेखागवयादिन्यायेनासताऽपि सतोऽर्थस्य ज्ञापनसंभवादिति।

अयं भावः—जातितदाश्रयरूपार्थभेदेन भिन्नयोः शब्दयोः सादृश्यादभेदाध्यवसायेन एकमेकत्वेन व्यवहारो जातिविशिष्टार्थप्रतिपादनोपायः। संसृष्टार्थाभिधानं हि=जातिविशिष्टार्थाभिधानं हि अक्रममपि एवं कल्पनया=शब्दानां प्रवृत्तिद्वयकल्पनया क्रमेण प्रतिपाद्यते।

न च परप्रतिपत्त्युपायानां परमार्थानुगमो न्याय्यो हेयत्वात् तेषाम् । तथा च तद्वदभिधाननयेऽक्रममेवोभयाभिधानम् ।। ३५३ ।।

अत्रापि चोभयाभिधाने प्राधान्याप्राधान्यविवक्षावशेन जातिपदार्थता द्रव्यपदार्थता च दर्शनभेदेन समुत्तिष्ठत इत्याह—

अपृथक्छब्दवाच्यस्य जातिराश्रीयते यदा ।
द्रव्यस्य सति संस्पर्शे तदा जातिपदार्थता ।। ३५४ ।।

एकशब्दोपादानत्वेऽपि जातिद्रव्ययोर्यदा जातिराधारभेदप्रकल्पितभेदा कार्यप्रवृत्तौ प्राधान्येनाश्रीयते, ब्राह्मणाः शुश्रूषितव्याः, योऽयं पानीयं पिबति स गौः पदा न स्प्रष्टव्यः, गौरनुबन्ध्य इत्यादौ, तदा सत्यपि द्रव्यस्य शब्देन संस्पर्शे जातिपदार्थपक्ष एव, जातिभेदप्रतिपादनमात्रोपक्षयत्वाद् द्रव्यस्य ।। ३५४ ।।

द्रव्यस्य सति संस्पर्शे द्रव्यमाश्रीयते यदा ।
वाच्यं तेनैव शब्देन तदा द्रव्यपदार्थता ।। ३५५ ।।

---

न च परप्रतिपत्त्युपायानाम्=जातिविशिष्टार्थप्रतिपत्त्युपायानां परमार्थानुगमो न्यायः, तेषाम्=तादृशोपायानां हेयत्वात् । 'उपादायापि ये हेयास्ते ह्युपायाः प्रकीर्तिताः' इत्यभियुक्तोक्तेः। तथा च तद्वदभिधाननये=जातिविशिष्टार्थाभिधानपक्षे अक्रममेव उभयाभिधानम्=जातितदाश्रयाद्रव्योभयाभिधानमिति ।। ३५३ ।।

अत्रापि=तद्वदभिधाननयेऽपि च उभयाभिधाने=जातिद्रव्योभयाभिधाने तयोः प्राधान्याप्राधान्यविवक्षावशेन जातिपदार्थता द्रव्यपदार्थता च दर्शनभेदेन=मतभेदेन समुत्तिष्ठत इत्याह—अपृथक्शब्दवाच्यस्येति ।

अस्यार्थः—अपृथक्शब्दवाच्यस्य=एकशब्दवाच्यस्य जात्यभिधायिशब्दवाच्यस्य, द्रव्यस्य सति जात्या सह विशेषणतया संस्पर्शे संबन्धे जातिर्यदा प्राधान्येनाश्रीयते, तदा जातिपदार्थता, जातेः प्राधान्येनाभिधानादिति ।

अयं भावः—जातिद्रव्ययोरेकशब्दोपादानत्वेऽपि=एकशब्दाभिधेयत्वेऽपि यदा जातिः स्वाधारभेदप्रकल्पितभेदाकार्यप्रवृत्ती=क्रियासंबन्धे प्राधान्येनाश्रीयते, "ब्राह्मणाः शुश्रूषितव्याः, गौः पदा न स्प्रष्टव्यः, गौरनुबन्ध्यः" इत्यादौ, तदा सत्यपि द्रव्यस्य शब्देन संस्पर्शे=विशेषणतयाऽभिधाने जातिपदार्थतैव । अन्यथा द्रव्यपदार्थतायां शास्त्रस्य सकलव्यक्तिविषयकत्वं हीयेत ।

किञ्च, स्वभेदप्रयुक्तजातिभेदप्रतिपादनमात्रोपक्षयत्वाद् विशेषणतया जातिव्यावृत्तिप्रतिपादनोपक्षयत्वाद्वा द्रव्यस्य नात्र द्रव्यपदार्थतापक्षोऽभिप्रेत इति ।। ३५४ ।।

अस्यार्थः—द्रव्यस्य शब्देन सह संस्पर्शे सति अभिधावृत्तिरूपे संबन्धे सति यदा वाच्यं द्रव्यं तेनैव शब्देन=जातिवाचिनैव शब्देन प्राधान्येनाश्रीयते, तदा द्रव्यपदार्थता इति ।

जात्युपादायिनैव शब्देन द्रव्योपादाने सत्यपि तस्याभिधेयतयैव सम्बन्धे संस्पर्शे यदा द्रव्यं प्राधान्येन कार्यसम्बन्धितयाश्रीयते, जातिस्तद्विशेषणमात्रोपक्षया, ब्राह्मणमिमं भोजयेत्यादौ, द्रव्यपरायां चोदनायां, तदा द्रव्यपदार्थपक्षः ।

तदेतदुक्तं 'कस्यचित् तु किञ्चित् प्रधानम्' इति ॥ ३५५ ॥

जातिपरायामपि चोदनायां क्रियासम्बन्धक्षमत्वाद् द्रव्यमेव तात्पर्यदृशा पदार्थोऽवतिष्ठत इत्याह—

**अपृथक्च्छब्दवाच्यापि भेदमात्रे प्रवर्तते ।**
**यदा सम्बन्धवज्जातिः सापि द्रव्यपदार्थता ॥ ३५६ ॥**

द्वयोरपि शब्दोपादानत्वे कार्यप्रतिपत्त्ययोग्यत्वादनादृत्य जातिं द्रव्यमेव पदार्थमातिष्ठन्ते व्यालिप्रभृतयः । यदाहुः—'चोदनासु च तस्यारम्भाद्' इति ।

जातिस्तु भेदमात्रे स्वाश्रयव्यवच्छेदमात्र एव तत्र प्रवर्तते शब्दाभिधेयापि ।

---

अयं भावः—जात्युपादायिनैव शब्देन=जात्यभिधायिनैव शब्देन द्रव्योपादाने = द्रव्याभिधाने सत्यपि तस्य=द्रव्यस्य अभिधेयतया शब्देन सह संस्पर्शे संबन्धे सति यदा द्रव्यं प्राधान्येन कार्यसंबन्धितया=विधेयक्रियाद्यन्वयितया आश्रीयते, जातिस्तु तद्विशेषणमात्रोपक्षया=जातिस्तु द्रव्यविशेषणत्वमात्रे विश्रान्ता 'ब्राह्मणमिमं भोजयेत्' इत्यादौ द्रव्यपरायां चोदनायाम्=द्रव्यपरे विधौ, तदा द्रव्यपदार्थतापक्षः ।

तदेतदुक्तम्—"कस्यचित्तु किञ्चित् प्रधानम्" इति ।

अस्यार्थः—कस्यचित्तु पदार्थस्य संबन्धि किञ्चिद् वस्तु प्रधानमिति । यद्वा कस्यचित्तु मते किञ्चित्=जातिर्वा द्रव्यं वा प्रधानमिति ॥ ३५५ ॥

'गौरनुबन्ध्यः' इत्यादौ जातिपरायामपि चोदनायां तात्पर्यदृष्टया द्रव्यमेव पदार्थोऽवतिष्ठते, द्रव्यस्यैव क्रियासंबन्धक्षमत्वादित्याह—अपृथक्शब्दवाच्याऽपीति ।

अस्यार्थः—अपृथक्शब्दवाच्याऽपि=एकशब्दवाच्यापि, द्रव्यवाचकशब्दवाच्याऽपि जातिर्यदा 'राजपुरुषः' इत्यादौ राजसंबन्धवद्भेदमात्रे=स्वाश्रयव्यवच्छेदमात्रे प्रवर्तते, न तु विधेयान्वयिनी, साऽपि तदा द्रव्यपदार्थता इति ।

अयं भावः—जातिव्यक्त्योर्द्वयोरपि शब्दोपादानत्वे=शब्दाभिधेयत्वे जातेः कार्यप्रतिपत्त्ययोग्यत्वाद्=विधेयक्रियाद्यन्वयप्राप्त्ययोग्यत्वाद् जातिमनादृत्य द्रव्यमेव पदार्थमातिष्ठन्ते=प्रतिजानन्ति व्याडिप्रभृतयो महावैयाकरणाः। यदाहुः—"चोदनासु च तस्यारम्भात्" इति ।

अस्यार्थः—चोदनासु च=विधिषु च, तस्य=द्रव्यस्य, आरम्भात्=विधेयान्वयित्वेन प्रवृत्तेरिति ।

जातिस्तु भेदमात्रे—विशेषणतया स्वाश्रयव्यावृत्तिमात्रे एव, तत्र=चोदनासु प्रवर्तते

तद्यथा—राजपुरुष इत्यत्र समासवाच्योऽपि सम्बन्धः सम्बन्धिस्वरूपावच्छेदमात्रोपयोगीत्युत्तरपदार्थप्रधान एव समासः, न सम्बन्धप्रधानः।

एवं गवादिशब्दा जात्यभिधायिनोऽपि तद्वत्प्रधानाः। यथा च राजपुरुषादयः शब्दाः सम्बन्धोपाधिमर्थं सकृदेवाभिदधति, तथा जातिशब्दाः जातिविशिष्टम्। नात्र क्रम इत्यपृथक्च्छब्दवाच्येत्यनेनाह।

दृश्यते च केषाञ्चित् क्रमः। यथा गर्गशब्दो मूलप्रकृतिमुक्त्वा गर्गा इति वृत्तावपत्यमाहेत्यतो वैधर्म्यं सूचयितुमेवमत्राभिधानम्। एवं दर्शनभेदेन पदार्थद्वयं विभक्तम्॥ ३५६॥

केषाञ्चित्तु शुद्धैव जातिः शब्दवाच्येति जातिपदार्थपक्षे, शुद्धं च द्रव्यं शब्दवाच्यमिति द्रव्यपदार्थपक्ष इतीदमपरं पक्षद्वयमित्याह—

**अत्यन्तभिन्नयोरेव जातिद्रव्याभिधायिनोः।**
**अवाच्यस्योपकारित्व आश्रिते तूभयार्थता॥ ३५७॥**

केवलजात्यभिधायी शब्दोऽन्य एव। अन्यश्च केवलद्रव्याभिधायी। उभयत्रापि

---

शब्दाभिधेयाऽपि। तद् यथा—"राजपुरुषः" इत्यत्र समासवाच्योऽपि संबन्धः संबन्धिस्वरूपव्यावृत्तिमात्रोपयोगीत्युत्तरपदार्थप्रधान एव समासः, न संबन्धप्रधानः।

एवं गवादिशब्दा विशेषणतया जात्यभिधायिनोऽपि तद्वत्प्रधानाः=जातिमत्प्रधानाः। यथा च राजपुरुषादयः शब्दाः संबन्धोपाधिकमर्थम्=संबन्धविशिष्टमर्थं सकृदेवाभिदधति, न तु संबन्धाभिधानक्रमेण। तथा जातिशब्दा जातिविशिष्टमर्थम्। नात्र क्रम इत्यपृथक्शब्दवाच्या इत्यनेनाह।

दृश्यते च केषाञ्चिदर्थानामभिधाने क्रमः। यथा गर्गशब्दो मूलप्रकृतिमुक्त्वा गर्गा इत्यत्र यञ्लुगन्तवृत्तौ अपत्यमाह—इत्यतो वैधर्म्यम्=वैसादृश्यं सूचयितुमेवमत्राभिधानम्=अपृथक्शब्दवाच्याऽपीत्यभिधानम्। यद्यत्र जातिव्यक्त्योरभिधाने क्रमः स्यात्, तदाऽपृथक्शब्दवाच्यत्वं जातेर्न स्यात्, शब्दबुद्धिकर्मणां विरम्य व्यापाराभावात्। एवं दर्शनभेदेन=मतभेदेन जातिव्यक्तिरूपं पदार्थद्वयं विभक्तमिति॥ ३५६॥

केषाञ्चित्तु मते शुद्धैव जातिर्द्रव्यरूपविशेषणरहिता गवादिशब्दवाच्येति जातिपदार्थपक्षे, शुद्धञ्च द्रव्यं जातिरूपविशेषणरहितं गवादिशब्दवाच्यमिति द्रव्यपदार्थपक्ष इतीदं पूर्वोक्तपक्षद्वयादपरं पक्षद्वयमित्याह—अत्यन्तभिन्नयोरेवेति।

अस्यार्थः—वाच्यं हि प्रधानं भवति, अवाच्यं तु अप्रधानं वाच्यस्य प्रधानस्योपकारकमिति स्थिते अवाच्यस्य जातेर्द्रव्यस्य वा वाच्योपकारित्वे आश्रिते त्वर्थभेदेन अत्यन्तभिन्नयोरेव जातिद्रव्याभिधायिनोः शब्दयोरुभयार्थता=जातिपदार्थता द्रव्यपदार्थता चेति।

अयं भावः—द्रव्यानभिधायकत्वेन केवलजात्यभिधायी शब्दोऽन्य एव। अन्यश्च जात्यनभि-

चानभिधीयमाना जातिर्द्रव्यं वा यथायोगमाधारभेदप्रकल्पनेन स्वगतलिङ्गसङ्ख्यादि-धर्मप्रकल्पनेन चोपकरोतीति भगवतः पाणिनेराचार्यस्यायं पक्षः सर्वपश्चान्निर्दिष्टः। तथा च विषयभेदेन क्वचिज्जातिपदार्थता मद्रह्रदादिसिद्ध्यर्थमाश्रिता।

क्वचिद् द्रव्यपदार्थता दध्युदकादिसिद्ध्यर्थम्। अत एव "जात्याख्यायां…" (पा० १।२।५८) "सरूपाणाम्" (१-२-६४) इति च योगद्वयमारब्धवानाचार्यः ॥ ३५७॥

तदेवं प्रसङ्गाद् दर्शनभेदोपक्षेपः। प्रकृतमुपसंहरति—

**आश्रिते त्वाश्रयकृतं भेदमभ्युपगच्छता।**
**पुनश्चाप्येकशब्दत्वं जातिशब्देऽनुवर्णितम् ॥ ३५८ ॥**

व्यक्तिविशेषाश्रितायां जातौ शब्देनाभिधीयमानायां संनिहिताश्रयनिबन्धनं शब्दसंस्कारनिमित्तं लिङ्गवचनभेदमङ्गीकुर्वता प्रयोजकस्य शब्दार्थस्याभेदादेकशब्दत्वं जातिपदार्थवादेऽत्र पूर्वस्मिन् पक्षे भाष्यकारेण 'यदि तस्यापि वचनानि वाचनिकान्य-

---

धायकत्वेन केवलद्रव्याभिधायी शब्दः। उभयत्रापि च = जातिः पदार्थ इति पक्षे, द्रव्यं पदार्थ इति पक्षेऽपि च अनभिधीयमाना = अवाच्या जातिर्द्रव्यं वा यथायोगं जातिराधारभेदप्रकल्पनेन = विशेषणतया स्वाश्रयव्यावृत्तिप्रकल्पनेन द्रव्यं तु जातौ स्वगतलिङ्गसंख्यादिधर्मप्रकल्पनेन चोपकरोति इति भगवतः पाणिनेराचार्यस्यायं पक्षः सर्वपश्चान्निर्दिष्टः। तथा च विषयभेदेन क्वचिज्जाति-पदार्थता मद्रह्रदादिसिद्धयर्थम् = तथाहि—मद्रह्रदादौ विशेषणविशेष्ययोरेकवचनसिद्धयर्थम् आश्रिता।

क्वचिद् द्रव्यपदार्थता दध्युदकादिसिद्धयर्थम् = द्रव्यविवक्षायां दध्युदके इत्यत्र जातिर-प्राणिनामिति एकवद्भावाप्रवृत्यर्थम् आश्रिता। अत एव = पक्षद्वयसत्त्वादेव जातिः पदार्थ इति पक्षे "जात्याख्यायाम्" इति योगम्, द्रव्यं पदार्थ इति पक्षे तु "सरूपाणाम्" इति योगमारब्ध-वानाचार्यः पाणिनिरिति ॥ ३५७ ॥

तदेवं जातिपदार्थत्वद्रव्यपदार्थत्वाभ्यां दर्शनभेदोपक्षेपः। इदानीं प्रकृतं पक्षद्वयेऽपि एक-शब्दत्वं सरूपसूत्रप्रत्याख्यानबीजमुपसंहरति—आश्रिते त्विति।

अस्यार्थः—आश्रिते तु = व्यक्तिविशेषाश्रिते तु जातिरूपे पदार्थे शब्देनाभिधीयमानेऽनभि-धीयमानसंनिहिताश्रयनिबन्धनं शब्दसंस्कारे निमित्तं लिङ्गवचनभेदमभ्युपगच्छता शब्दार्थस्य जाति-रूपस्याभेदाद् जातिशब्दे एकशब्दत्वं पूर्वपरिहारेऽभिहितं पुनश्चापि द्वितीयस्मिन्नपि परिहारे भाष्येऽनुवर्णितमिति।

अयं भावः—व्यक्तिविशेषाश्रितायां जातौ शब्देनाभिधीयमानायामनभिधीयमान-संनिहिताश्रयनिबन्धनं शब्दसंस्कारे निमित्तं लिङ्गवचनभेदमङ्गीकुर्वता प्रयोजकस्य = शब्दप्रयोगे निमित्तस्य शब्दार्थस्य जातिरूपस्याभेदादेकशब्दत्वं जातिपदार्थवादेऽत्र = भाष्ये पूर्वस्मिन् पक्षे

हमप्येवं वक्ष्ये बहुषु योऽर्थो वर्तते तत्र बहुवचनम्' इति ब्रुवता वर्णितमभिहितम्। तथा चैकशेषः प्रत्याख्यायते। प्राधान्येन जातिः शब्देनाभिधीयत इति सिद्ध एकस्तदभिधायी शब्दो व्यक्तिभेदेऽपि।

ये तु सम्बन्धिनो जातेस्ते भिद्यमाना भेदनिबन्धनं संस्कारं शब्दस्यैकस्य निर्वर्त्तयन्ति। द्वितीयस्मिन्नपि पक्षेऽत्र 'गुणवचनवदाश्रयतो लिङ्गवचनानि'इति गुणभूतस्याभिधीयमानस्यापि द्रव्यस्य शब्दभेदप्रयोजकत्वाभावात् तदेवैकशब्दत्वमुपपादितम्। सम्बन्धिनो हि जातेः सामर्थ्याद् वा सन्निहिता निमित्तरूपाच्छुरिता वोपादीयन्त इति परिहारद्वयतात्पर्यं व्याख्यातम्॥ ३५८॥

तदेवं वृत्तिविचारप्रसङ्गागतं गुणवचनानां शब्दानामाश्रयतो लिङ्गवचनसिद्धिविचारं भाष्यप्रदेशानुवादेन यथायथं परिसमाप्योपमानसमासविचारायोपक्रमते। तत्र प्रथमं तावदुपमानलक्षणोपयोगि भाष्यम्—'मानं हि नामानिर्ज्ञातज्ञानार्थमुपादीयते। अनिर्ज्ञातमर्थं ज्ञास्यामि'इति। एतद् व्याचष्टे—

**अनिर्ज्ञातस्य निर्ज्ञानं येन तन्मानमुच्यते।**
**प्रस्थादि तेन मेयात्मा साकल्येनावधार्यते॥ ३५९॥**

---

भाष्यकारेण—"यदि तस्यापि वचनानि वाचनिकानि अहमप्येवं वक्ष्ये—बहुषु योऽर्थो वर्तते तत्र बहुवचनम्" इति ब्रुवताऽनुवर्णितमभिहितम्। तथा चैकशेषः प्रत्याख्यायते। जातिः शब्देन प्राधान्येनाभिधीयत इति सिद्ध एको जात्यभिधायी शब्दो व्यक्तिभेदेऽपि = गुणीभूतव्यक्तिभेदाभिधानेऽपि।

ये तु जातेः संबन्धिनो गुणभूता द्रव्यरूपाः पदार्थाः, ते भिद्यमाना भेदनिबन्धनम्—भेदहेतुकम्, शब्दस्यैकस्य संस्कारं निवर्तयन्ति = निष्पादयन्ति। द्वितीयस्मिन्नपि पक्षेऽत्र = भाष्ये—"गुणवचनवदाश्रयतो लिङ्गवचनानि" इति गुणभूतस्याभिधीयमानस्यापि द्रव्यस्य गुणभूतत्वेनैव शब्दप्रयोजकत्वाभावात् तदेव = पूर्वोक्तमेव एकशब्दत्वमुपपादितम्। जातेरभिधीयमानायाः संबन्धिनो हि द्रव्यरूपाः पदार्था जातेः सामर्थ्याद् वा अवाच्या अपि संनिहिता इत्युपादीयन्ते शाब्दबुद्धौ, वाच्या अपि ते जातिरूपशब्दप्रवृत्तिनिमित्ताच्छुरिता वा = जात्यभेदाध्यासमापन्ना वा तत्रोपादीयन्त इति परिहारद्वयतात्पर्यं व्याख्यातमिति॥ ३५८॥

तदेवं वृत्तिविचारप्रसङ्गागतं गुणवचनानां शब्दानामाश्रयतो लिङ्गवचनसिद्धिविचारं भाष्यप्रदेशानुवादेन = भाष्यवाक्यानुवादेन यथायथं परिसमाप्योपमानसमासविचारायोपक्रमते, उपमानसमासविचारस्य बहूनामन्यसमासविचाराणां तद्धितवृत्तिविचाराणाञ्चाग्रे वक्ष्यमाणानामुपयोगित्वात्। तत्र प्रथमं तावदुपमानलक्षणोपयोगिभाष्यम्—"मानं हि नामानिर्ज्ञातज्ञानार्थमुपादीयते अनिर्ज्ञातमर्थं ज्ञास्यामि" इति। 'ज्ञास्यामि' इत्यस्यादौ अनेन इति शेषः। एतद् भाष्यं व्याचष्टे—अनिर्ज्ञातस्येति।

मीयते परिच्छिद्यते येन तन्मानमिति सामान्येनावधारितस्य पदार्थस्य निश्चयेन विशेषरूपेणावधारणनिबन्धनं साकल्येन परिच्छेदकं प्रस्थः खारी आढकमित्यादि मानं कथ्यते। एतच्च मानसामान्यलक्षणमिति। प्रस्थादीत्यादिग्रहणात् प्रमाणोन्मानादयोऽपि गृह्यन्ते। मानस्य ह्युत्रपरिभिर्विशेषणम्। तत्र प्रस्थादि परिमाणम्, दिष्ट्यादि प्रमाणम्, पलाद्युन्मानम् ॥ ३५९ ॥

मानसमीपमुपमानं व्याख्यातुमाह—

**अनिर्ज्ञातं प्रसिद्धेन येन तद्धर्म गम्यते।**
**साकल्येनापरिज्ञानादुपमानं तदुच्यते ॥ ३६० ॥**

प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम्। तथा ह्यप्रसिद्धमनिर्ज्ञातं गवयादि प्रसिद्धेन गवा सादृश्यतस्तद्धर्म तस्येव धर्मो यस्य तदिवेति परिच्छिद्यते। सादृश्य-मात्रेण परिच्छेदो नारोहपरिणाहतः साकल्येन विशेषात्मनापि। अत एव सादृश्यं

---

अस्यार्थः—अनिर्ज्ञातस्य व्रीहियवादेर्निर्ज्ञानम् = निश्चयेन विशेषरूपेणावधारणम्, साकल्येन परिच्छेदो वा येन यत्करणकं तन्मानमुच्यते। मीयते विशेषरूपेण प्रमीयते साकल्येन परिच्छिद्यते वा वस्तुव्रीहियवादिकं येन यत्करणकं तत् प्रस्थादिकं मानमुच्यते। एतदेवोदाहरति—मेयात्मा = परिच्छेद्यस्वरूपो व्रीहियवादिः प्रस्थादिकेन साकल्येन = सर्वात्मनाऽऽरोहतः परिणाहतश्चावधार्यते परिच्छिद्यते, अतः प्रस्थाढकादिमानमित्युच्यत इति।

अयं भावः—सामान्येनावधारितस्य पदार्थस्य व्रीहियवादेर्निश्चयेन 'प्रस्थः खारी आढकम्' इत्यादिना विशेषरूपेणावधारणनिबन्धनं साकल्येन = सर्वात्मना परिच्छेदकं मानं कथ्यते, मीयते परिच्छिद्यते येन तन्मानमिति व्युत्पत्तेः। एतच्च मानसामान्यलक्षणमिति। कारिकायां प्रस्थादिकेन इत्यत्रादिग्रहणाद् प्रमाणोन्मानादयोऽपि गृह्यन्ते। मानस्य हि उत्त्रपरिभिर्विशेषणम्, उन्मानम्, प्रमाणम्, परिमाणम् इति।

तदुक्तम्—

ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः।
आयामस्तु प्रमाणं स्यात् संख्या बाह्या तु सर्वतः॥ इति।

तत्र पलमाषादिकमुन्मानम्। प्रस्थाढकादिपरिमाणम्। शमदिष्टिवितस्तिहस्तादिकं प्रमाणम् इति॥ ३५९ ॥

मानस्य समीपमुपमानमिति व्युत्पन्नं व्याख्यातुमाह—अनिर्ज्ञातमिति।

अस्यार्थ—साधारधर्मवत्तया प्रसिद्धेन येन वस्तुना अनिर्ज्ञातं वस्तु तद्धर्म = तस्येव धर्मो यस्य तत्, तद्धर्म गम्यते—ज्ञायते, तदुपमानमुच्यते, उपमेयस्य साकल्येन उपमानवृत्तिसकल-धर्मवत्तयाऽपरिज्ञानादिति।

अयं भावः—प्रसिद्धसाधर्म्यात् साध्यसाधनम् = साध्यस्य साधकम् उपमानम्। तथाहि—अप्रसिद्धमनिर्ज्ञातं गवयादिकं प्रसिद्धेन गवा सादृश्यतः तद्धर्म = तस्येव धर्मो यस्य तदिवेति परि-च्छिद्यते = निश्चीयते। उपमानेन खलु सादृश्यमात्रेण उपमेयस्य परिच्छेदो नारोहपरिणाहतः =

प्रत्यक्षेण स्फुटमत्रावधार्यत इति तदपेक्षोपमानस्येति नेदं मानम्, अपितु तस्य समीपम्, किञ्चिद्रूपतया परिच्छेदात्। अत एवोपमानस्य प्रामाण्येऽपि विवदन्ते किल।

प्रत्यायितार्थकं वाक्यमेव प्रमाणम्। सादृश्यकथनं तूपाय इति। उपमीयतेऽनेनेति च करणव्युत्पत्त्या सदृशज्ञानमुपमानम्। साक्षात् तेनोपमेयपरिच्छेदात्। संज्ञासंज्ञिसम्बन्धप्रतिपत्तिः फलं केषाञ्चित्।

अन्येषामनेन सदृशी मदीया गौरिति फलम्। गवादिस्तूपमानं परम्परयोपयोगाद् व्यवह्रियते, चक्षुरादीव प्रमाणशब्देन ॥ ३६० ॥

एवमुपमाने व्याख्याते सामर्थ्यादुपमेयमपि व्याख्यातं भवति, उपमितिक्रियाया उपमेयविषयत्वात्। ततश्च सामान्यधर्मव्याख्यानोपक्रमं सूत्रार्थं व्याचष्टे—

**द्वयोः समानो यो धर्म उपमानोपमेययोः।**
**समास उपमानानां शब्दैस्तदभिधायिभिः ॥ ३६१ ॥**

---

औन्नत्यविशालत्वाभ्याम् साकल्येन विशेषात्मनापि यतः सादृश्यमत्र=उपमानोपमेययोः प्रत्यक्षेण स्फुटमवधार्यते, अत एव तदपेक्षा=सादृश्यापेक्षा अनिर्ज्ञातार्थसाधने उपमानस्येति नेदम्=उपमानम् मानम्=प्रमाणम्, अपि तु मानस्य समीपम्, तेन उपमेयस्य किञ्चिद्रूपतया परिच्छेदात्, साकल्येन परिच्छेदाभावच्च। अत एव साकल्येन=परिच्छेदाभावादेव उपमानस्य प्रामाण्येऽपि विवदन्ते किल वैशेषिकादयः।

तदुक्तम्—

शब्दोपमानयोर्नैव पृथक् प्रामाण्यमिष्यते।
अनुमानगतार्थत्वादिति वैशेषिकं मतम् ॥ इति।

प्रत्यायितार्थकम्=प्रमापितार्थकं वाक्यमेव प्रमाणम्। सादृश्यकथनं तु प्रमाजनने उपायः प्रमाणस्य सहकारिकारणभूत इति च नोपमानं प्रमाणम्। उपमीयतेऽनेनेति च करणव्युत्पत्त्या सदृशज्ञानम्=सादृश्यज्ञानम् उपमानम्। साक्षात् तेनोपमेयस्य परिच्छेदात्=अवधारणात्। केषाञ्चिन्मते=नैयायिकानां मते संज्ञासंज्ञिसंबन्धस्याभिधारूपस्य प्रतिपत्तिः "अयं गवयपदवाच्यः" इति ज्ञानमुपमानस्य फलम्।

अन्येषां तु=मीमांसकानाम् मते—'अनेन सदृशी मदीया गौः' इति प्रतिपत्तिः। गवादिस्तु प्रमायां परम्परयोपयोगाद् उपमानं व्यवह्रियते, चक्षुरादीव प्रमाणशब्देनेति ॥ ३६० ॥

एवमुपमाने व्याख्याते उपमानत्वस्य सनिरूपकत्वेनोपमेयं विना उपमानत्वानुपपत्तिसामर्थ्यादुपमेयमपि व्याख्यातं भवति। उपमानफलभूताया उपमितिक्रियाया उपमेयविषयकत्वात्। ततश्च उपमानानि सामान्यवचनैरिति सूत्रार्थं सामान्यधर्मव्याख्यानोपक्रमम् = सामान्यधर्मव्याख्यानम् उपक्रमः—उपक्रम्यमाणं यत्रेति व्याचष्टे इति क्रियाविशेषणम् व्याचष्टे—द्वयोः समान इति।

अस्यार्थः—द्वयोः उपमानोपमेययोः समानः साधारणो यो धर्मस्तदभिधायिभिः शब्दैः सह उपमानानाम्—उपमानवाचिनां शब्दानां समासो भवति इति कारिकार्थः सूत्रार्थश्च। उदाहरणं यथा—'शस्त्री श्यामा' इति। अत्र श्यामत्वं साधारणो धर्मः। शस्त्री इत्युपमानमिति।

येन निमित्तेनोपमानोपमेयभावोऽर्थयोरसाववश्यसन्निधिरत्र धर्मः सादृश्यं सामान्यमुच्यते। द्विवृत्तित्वात् सामान्यं ब्रुवन्ति सामान्यवचनाः। तैः शब्दैरुपमानवचनानां समास इति सूत्रार्थः। शस्त्रीश्यामा। शरकाण्डगौरीति ॥ ३६१ ॥

ननु चात्र श्यामत्वादिगुणः प्रत्याश्रयसमवेतत्वाद् भिन्न एवेति कथं सामान्यमित्याशङ्क्याह—

**आधारभेदाद् भेदो यः श्यामत्वे सोऽविवक्षितः।**
**गुणोऽसावाश्रितैकत्वो भिन्नाधारः प्रतीयते॥ ३६२ ॥**

आश्रयभेदाच्छ्यामत्वगुणस्य यो भेदः, सोऽत्र सामान्यवचनैरिति वदतो नाभिधित्सितः। आश्रयविशेषसमवेतोऽप्यपेक्षितमेकत्वं येन स तथाभूतः सामान्यवचनसामर्थ्यादेवावगम्यते गुणः। भिन्नाश्रयत्वेऽपि हि गुणस्यान्वयि रूपमस्त्येव। यद्वशाच्छ्याम इत्यभिन्नाभिधानप्रत्ययसम्भवः। न चात्राभेद एव विवक्षितः ॥ ३६२ ॥

---

अयं भावः—येन निमित्तभूतेन धर्मेण श्यामत्वादिना अर्थयोरुपमानोपमेयभावोऽसौ अत्र =उपमानसमासे अवश्यसन्निधिः=अवश्यं संनिहितो धर्मः श्यामत्वादिसादृश्यं सामान्यमुच्यते। द्विवृत्तित्वात्=उपमानोपमेयोभयवृत्तित्वात्। सामान्यं ब्रुवन्ति सामान्यवचनाः, तैः शब्दैः उपमानवाचिनां शब्दानां समास इति सूत्रार्थः। शस्त्री इव श्यामा 'शस्त्री श्यामा', शरकाण्डगौरी देवदत्ता इत्युदाहरणमिति ॥ ३६१ ॥

ननु चात्र ( शस्त्री श्यामा इत्यादौ ) श्यामत्वादिगुणो जातिभिन्नत्वे सति भिन्नाश्रयसमवेतत्वाद् भिन्न एवेति कथं सामान्यम्, अनुभयवृत्तित्वाद् इत्याशङ्क्याह—आधारभेदादिति।

अस्यार्थः—श्यामत्वे=श्यामरूपे गुणे, आधारभेदाद् यो भेदः स वर्तमानोऽपि अविवक्षितः। प्रत्युत असौ श्यामरूपात्मको गुणो भिन्नाधारः = भिन्नाश्रयवृत्तिरपि, आश्रितैकत्वः, समाश्रितस्वजातिगतैकत्वकः प्रतीयते। आश्रयभेदाद् भिद्यमानोऽपि श्यामरूपात्मको गुणः श्यामः श्याम इत्यभिन्नाभिधानप्रत्ययनिमित्तभूतस्वगतश्यामत्वजातिगतैकत्वाध्यारोपेण एकः प्रतीयत इति रीत्या श्यामरूपस्य गुणस्य सामान्यधर्मत्वोपपत्तिरिति निष्कर्षः।

अयं भावः—स्वाश्रयभेदात् श्यामत्वगुणस्य यो भेदः, सोऽत्र="उपमानानि सामान्यवचनैः" इति सूत्रे सामान्यवचनैरिति वदतः पाणिनेराचार्यस्य न विवक्षितः। अपि तु आश्रयविशेषसमवेतोऽपि स गुणः सामान्यवचनपदसामर्थ्यादेव अपेक्षितमेकत्वं स्वजातिगतं येन स तथाभूतोऽवगम्यते। श्यामरूपस्य गुणस्य भिन्नाश्रयवृत्तित्वेऽपि हि अन्वयिरूपम्=सर्वश्यामरूपानुगतं श्यामत्वं जातिरूपमस्त्येव, यद्वशात् श्यामः श्याम इति भिन्नाभिधानप्रत्ययसंभवः। न चात्र श्यामरूपेऽभेद एव वस्तुभूतो विवक्षितः, किन्तु जातिगतोऽत्राध्यारोपित इति ॥ ३६२ ॥

अपि तु—

गुणयोर्नियतो भेदः गुणजातेस्तथैकता ।
एकत्वेऽत्यन्तभेदे वा नोपमानस्य सम्भवः ॥३६३॥

अत्यन्तैकत्वे भेदाधिष्ठानस्य सादृश्यस्याभावान्नोपमानोपमेयभावः । न हि भवति गौरिव गौरिति । नात्यन्तभेदेऽन्वयिनो रूपस्याभावे हिमवानिव लोष्ट इत्युपमास्ति । तस्माद् भेदाभेदविमर्शेनोपमायामाधारभेदाद् भेदं स्वालक्षण्येनान्वयिरूपवशेन चाभेदमाश्रित्य गुणोऽत्र सव्यापारः ।

एवंविध एव चार्थात्मा शब्दवाच्यः । न हि शब्दाः स्वालक्षण्येन भेदमर्थानामावेदयन्ते । सामान्य एव सम्बन्धग्रहणात् ॥ ३६३ ॥

मा भूदत्यन्तभेदे उपमा । अभेदे तु कथं न भवति । गुणो ह्येको द्वयोरुपमानोपमेयभावं वर्तयत्येवेत्याशङ्क्याह—

---

श्यामरूपे गुणे आधारभेदाद् यो भेदः स न विवक्षितः, अपि तु भिन्नाधारगतयोर्भिन्नयोः श्यामगुणयोर्यो नियतो भेदः, यच्च गुणयोरध्यारोपितं जातिगतमेकत्वं तदुभयं विवक्षितमित्याह— गुणयोर्नियतो भेद इति ।

अस्यार्थः—भिन्नाधारसमवेतयोर्गुणयोर्यो नियतो भेदः, तथा गुणयोरध्यारोपिताया गुणजातेरेकता तदुभयं शस्त्रीश्यामेत्यादावुपमानसमासे विवक्षितम् । यतो भिन्नाधारसमवेतस्य श्यामत्वादिगुणस्यैकत्वेऽत्यन्तभेदे वा नोपमानस्य संभवः । तथा हि नैकस्मिन् उपमानोपमेयभावसंभवः, सादृश्यस्य भेदघटितत्वात् । न चात्यन्तभेदे उपमानोपमेयभावसंभवः, सामान्यधर्माभावासंभवादिति ।

अयं भावः—भिन्नाधारसमवेतस्य श्यामत्वादिगुणस्य अत्यन्तैकत्वे भेदाधिष्ठानकस्य सादृश्यस्याभावान्नोपमानोपमेयभावसंभवः । न हि भवति 'गौरिव गौः' इति । नापि तयोरत्यन्तभेदेऽन्वयिनो रूपस्याभावे=उभयानुगतस्य सामान्यधर्मस्याभावे हिमवानिव लोष्ट इत्युपमाऽस्ति । तस्माद् गुणयोर्भेदाभेदविमर्शेन उपमायामभ्युपगम्यमानायाम्-स्वालक्षण्येन= व्यक्तिस्वरूपेण आधारभेदाद् भेदम्, अन्वयिरूपवशेन च ( भिन्नाधारसमवेतत्वेन भिन्नश्यामादिगुणसमवेतश्यामत्वादिरूपान्वयिरूपवशेन च ) अभेदमाश्रित्यात्र ( शस्त्रीश्यामेत्यादौ ) श्यामत्वादिर्गुणः सव्यापारः=उपमानोपमेयभावप्रयोजकव्यापारवान् ।

एवंविध एव च=अन्वयिधर्मप्रयुक्ताभेदवानेव च अर्थात्मा श्यामादिशब्दवाच्यः । न हि शब्दाः अर्थानां स्वालक्षण्येन=व्यक्तिस्वरूपेण भेदमावेदयन्ते=बोधयन्ति । व्यक्तीनामानन्त्येन सामान्य एव संबन्धग्रहणात्=शक्तिग्रहादिति ॥ ३६३ ॥

ननु मा भूद् गुणयोरत्यन्तभेदे उपमा, अभेदे तु कथं न भवति, आधारभेदेऽपि गुणो ह्येको द्वयोरुपमानोपमेयभावं प्रवर्तयत्येवेत्याशङ्क्याह— जातिमात्रव्यपेक्षायामिति ।

**जातिमात्रव्यपेक्षायामुपमार्थो न कश्चन ।**
**श्यामत्वमेकं गुणयोरुभयोरपि वर्तते ॥३६४॥**

अनाश्रिताधारभेदस्य श्यामतामात्रस्य विवक्षायां शस्त्रीदेवदत्तयोः श्यामगुणसमवेतमेकं श्यामत्वं सामान्यमित्येव वचनव्यक्तिः । तथा च सादृश्येन परिच्छेदाभावः ॥ ३६४ ॥

तथाहि—

**येनैव हेतुना श्यामा शस्त्री तत्र प्रवर्तते ( प्रतीयते ) ।**
**स हेतुर्देवदत्तायाः प्रत्यये न विशिष्यते ॥३६५॥**

येनैव अभिन्नसामान्यानुगतेन श्यामगुणेन समवेतेन शस्त्री श्यामेति समधिगम्यते । तेनैव चाभिन्नसामान्याधारेण गुणेन देवदत्तापि श्यामेति प्रत्ययमुपारोहतीत्युभयोः श्यामत्वमेकमित्येव प्रतीतिर्नोपमार्थः कश्चिदत्र ॥ ३६५ ॥

---

अस्यार्थः—श्यामरूपे गुणे आधारभेदप्रयुक्तभेदस्य अविवक्षायां जातिमात्रव्यपेक्षायाम्—श्यामरूपानुगतश्यामत्वजातिमात्रविवक्षायां सत्याम्, उपमार्थः=उपमाप्रयोजनम्, न कश्चन—न किमपि । यतो जातिमात्रव्यपेक्षायाम् उभयोरपि गुणयोरेकं श्यामत्वं वर्तते इत्येव प्रतीयेत, गुणद्वयाधारद्वयस्य परस्परमुपमानोपमेयभावस्तु न प्रतीयेत, सादृश्येन परिच्छेदाभावादिति ।

अयं भावः—अनाश्रिताधारभेदस्य आधारभेदप्रयुक्तभेदानाश्रयस्य श्यामतामात्रस्य=श्यामत्वगुणस्यैव केवलस्य विवक्षायाम् 'शस्त्रीदेवदत्तयोः' श्यामगुणसमवेतमेकं श्यामत्वं सामान्यमित्येव वचनव्यक्तिः='शस्त्रीश्यामा' इति पदाद् बोधः, न तु ततः शस्त्रीदेवदत्तयोरुपमानोपमेयभावबोधः, सादृश्येन=सदृशत्वेन शस्त्रीदेवदत्तयोः परिच्छेदाभावादिति ॥ ३६४ ॥

तथाहि—( पूर्वकारिकोक्तमेवार्थं दर्शयति )—येनैव हेतुनेति ।

अस्यार्थः—येनैव अभिन्नश्यामत्वसामान्यवता श्यामगुणेन हेतुना तत्र—शस्त्रीश्यामा इत्यत्र, शस्त्रीश्यामा प्रतीयते । सः—अभिन्नश्यामत्वसामान्यवान् श्यामगुणरूपो हेतुः देवदत्तायाः श्यामत्वेन प्रत्ययेन विशिष्यते=न भिद्यते । तेनैव हेतुना—देवदत्ता श्यामेति प्रत्ययो भवतीति निष्कर्षः ।

अयं भावः—येनैव अभिन्नसामान्यानुगतेन=उभयश्यामगुणसमवेतैकश्यामत्वजातिमता श्यामगुणेन स्वसमवेतेन शस्त्री श्यामेति प्रतीयते । तेनैव चाभिन्नश्यामत्वसामान्याधारेण श्यामगुणेन देवदत्ताऽपि श्यामेति प्रत्ययमुपारोहति इत्युभयोः=शस्त्रीदेवदत्तसमवेतयोः श्यामगुणयोः श्यामत्वमेकमित्येव प्रतीतिः, नोपमार्थः=नोपमाप्रयोजनम् कश्चिदत्र='शस्त्रीश्यामा' इत्यत्र इति ॥ ३६५ ॥

तस्मात्,

**आश्रयाद् यो गुणे भेदो जातेर्या चाविशिष्टता ।**
**ताभ्यामुभाभ्यां द्रव्यात्मा सव्यापारः प्रतीयते ॥३६६॥**

आधारभेदनिमित्तो यो गुणे विवेकोऽन्वयिरूपहेतुकश्चाविवेकस्ताभ्यां गणगताभ्यां भेदाभेदाभ्यां कारणभूताभ्यां द्रव्यस्वभाव उपमानाख्यः परिच्छेदकरणे उपमेयस्य व्यापृतोऽवधार्यते । ततश्चोपमानोपमेयप्रक्लृप्तौ तयोरुपमानोपमेयलक्षणः सम्बन्धोऽवतिष्ठते ॥ ३६६ ॥

ननु भेदाभेदौ विरुद्धौ कथमेकत्र व्यापृतौ स्यातामित्याशङ्कयाह—

**सोऽयमेकत्वनानात्वे व्यवहारः समाश्रितः ।**
**भेदाभेदविमर्शेन व्यतिकीर्णेन वर्तते ॥३६७॥**

सोऽयमित्यनुभवसिद्धत्वेनाप्रत्याख्येयत्वमाह किल । भेदाभेदावयमाश्रितः सादृश्यव्यवहारः सङ्कीर्णेनैकत्वनानात्वरूपेण हेतुनावतिष्ठमानो बुद्धावुपारोहतीति

---

तस्माद् आधारभेदप्रयुक्तं गुणयोर्भेदम्, उभयगुणानुगतश्यामत्वगतैकत्वप्रयुक्तञ्च तयोरभेदञ्चोपादायैव उपमानाख्यं द्रव्यं शस्त्रीरूपस्योपमेयस्य परिच्छेदकरणे=शस्त्रीरूपोपमेयावधारणे व्यापृतं भवतीत्युपसंहरति—आश्रयाद् यो गुणे भेद इति ।

अस्यार्थः—आश्रयाद्=आधारभेदाद् यः श्यामगुणे भेदः, या च तत्रैव जातेः=जातिप्रयुक्ता, अविशिष्टता अभेदः, ताभ्यामुभाभ्यां भेदाभेदाभ्यां श्यामगुणगताभ्यामुपमेयपरिच्छेदकरणे कारणभूताभ्यां द्रव्यात्मा = द्रव्यस्वभावः उपमानाख्यः शस्त्रीपदार्थः उपमेयस्य परिच्छेदकरणे सव्यापारः व्यापृतः प्रतीयते, इति ।

अयं भावः—आश्रयभेदहेतुको यः श्यामगुणे भेदः, यश्च तत्र श्यामत्वरूपसामान्यरूपान्वयिरूपहेतुकश्चाभेदः, ताभ्यां श्यामगुणगताभ्यां भेदाभेदाभ्यामुपमेयस्य परिच्छेदकरणे कारणभूताभ्यां द्रव्यस्वभाव उपमानाख्यः शस्त्रीपदार्थ उपमेयस्य परिच्छेदकरणे व्यापृतोऽवधार्यते । ततश्चोपमानोपमेयप्रसिद्धौ तयोः=शस्त्रीदेवदत्तयोरुपमानोपमेययोः उपमानोपमेयलक्षणः=उपमानोपमेयभावरूपः संबन्धोऽवतिष्ठते = व्यवस्थितो भवति इति ॥ ३६६ ॥

ननु भेदाभेदौ विरुद्धौ कथमेकत्र गुणे स्थित्वा व्यापृतौ=उपमानोपमेयव्यवहारानुकूलव्यापारवन्तौ स्यातामित्याशङ्कयाह—सोऽयमेकत्वनानात्वे इति ।

अस्यार्थः—सोऽयमनुभवसिद्धत्वेनाप्रत्याख्येयः, एकत्वनानात्वे भेदाभेदौ हेतुतया समाश्रितः सादृश्यव्यवहारः, व्यतिकीर्णेन—संकीर्णेन, भेदाभेदविमर्शेन बुद्धौ वर्तते=उपारोहति इति नात्र भेदाभेदयोर्गुणे एकत्र वृत्तौ विरोधइति ।

अयं भावः—आधारभेदेऽपि गुणे एकत्वस्य सोऽयमित्यनुभवसिद्धत्वेनाप्रत्याख्येयत्वमाह किल । गुणगतौ भेदाभेदौ निमित्ततया आश्रितोऽयं शस्त्रीदेवदत्तयोः सादृश्यव्यवहारः संकीर्णेन=समानाधिकरणेन एकत्व-नानात्व-रूपेण हेतुनाऽवतिष्ठमानः=व्यवस्थितः बुद्धौ उपारोहतीति

को विरोधः। तथाह्यत्यन्ताभेदे स एवायमिति बुद्धिः। अत्यन्तभेदे त्वन्यदेवेदमिति। सदृश इति तु बुद्धिर्भेदाभेदोभयरूपसम्भिन्ना जायते। तथा च जातिसमुद्देशेऽभिहितम्—

"सकृत्प्रवृत्तावेकत्वमावृत्तौ सदृशात्मताम्।
भिन्नात्मिकानां व्यक्तीनां भेदापोहात् प्रपद्यते ॥" इति ॥ ३६७ ॥

एतदेव व्यतिरेकमुखेनोपपादयति—

**श्यामेत्येवाभिधीयेत जातिमात्रे विवक्षिते।**
**शस्त्र्यादीनामुपादाने तत्र नास्ति प्रयोजनम् ॥३६८॥**

---

को विरोधः। एकत्वस्य गुणगतजातिगतस्य गुणयोरध्यारोपात्। नानात्वस्य च तयोर्वास्तवत्वात्।

तथाहि—अत्यन्ताभेदे स एवायमिति बुद्धिर्भवति। अत्यन्तभेदे तु अन्यदेवेदमिति बुद्धिर्भवति। अयमेतस्य सदृश इति बुद्धिस्तु साधारणधर्मयोर्भेदाभेदोभयसंभेदे=संभेदे मिश्रणे जायते। तथा च जातिसमुद्देशेऽभिहितम्—

सकृत्प्रवृत्तावेकत्वमावृत्तौ सदृशात्मताम्।
भिन्नात्मिकानां व्यक्तीनां भेदापोहात् प्रपद्यते ॥ इति

( वा० प० ३ जाति० ९८ )

अस्यार्थः—व्यक्तिः पदार्थ इति पक्षे व्यक्तिरूपोऽर्थो जात्याऽनुगतीकृतो जात्येकत्वस्याध्यारोपेण भिन्नात्मिकानां व्यक्तीनां भेदापोहात् शब्दस्य सकृत्प्रवृत्तौ एकत्वं प्रपद्यते। वस्तुभूतं व्यक्तिरूपपदार्थगतं नानात्वमादाय प्रत्यर्थं शब्दाभिनिवेश इत्यभ्युपगमेन शब्दस्यावृत्तौ तु सदृशात्मतां प्रपद्यत इति।

एवमत्र व्यक्तिरूपेऽर्थे भेदाभेदयोः सत्यत्वासत्यत्वाभ्यामविरोधः, व्यक्तिद्वये सादृश्यञ्चोपपादितं भेदाभेदमूलकमिति ॥ ३६७ ॥

एतदेव=भेदाभेदयोः सादृश्यव्यवहारप्रयोजकत्वमेव व्यतिरेकमुखेन=सादृश्यव्यवहारप्रयोजकभेदाभेदाभावरूपव्यतिरेकमुखेन उपपादयति—श्यामेत्येवाभिधीयेतेति।

अस्यार्थः—तत्र 'शस्त्रीश्यामा' इत्यादौ, आधारभेदाद् भिन्नयोः श्यामगुणयोः साधारणधर्मत्वप्रयोजके श्यामत्वलक्षणे जातिमात्रे विवक्षिते 'श्यामादेवदत्ता:' इत्येवाभिधीयेत, तत्र शस्त्र्यादीनामुपमानपदानामुपादाने प्रयोजनं नास्ति। जातिमात्रविवक्षणे तत्प्रयुक्तात्यन्ताभेदविवक्षणे च सादृश्यव्यवहाराभावादिति।

श्यामत्वसामान्यानुगतस्य गुणमात्रस्याधारविशेषणत्वेऽभिधित्सिते श्यामेयं देवदत्तेत्येव वक्तव्यं स्याद्, एतावताविशिष्टजातीयेन सम्बन्धस्य प्रतिपादनात्। तत्र किमर्थं शस्त्रीवेत्युच्यते। अविशिष्टगुणयोगस्य गुणपदादेव प्रतीतेर्न कञ्चनातिशयमुपमानशब्दाः प्रत्याययन्तीति निष्प्रयोजनमेषामुपादानम् ॥ ३६८ ॥

नन्वेवं भेदाभेदविमर्शेनोपमानोपमेयभावेऽतिप्रसङ्गः। तथाहि—श्यामगुणः सकलाश्रयवर्त्यप्याधारभेदाद् भिन्नो जात्येकत्वाच्चैक इति कथं शस्त्र्येवोपमानमित्याशङ्क्य स्वालक्षण्येन गुणयोरुपमाविषययोस्तावद् विशेषमाह—

**अशब्दवाच्यो यो भेदः श्याममात्रे न वर्तते।**
**श्यामेषु केषुचिद् वृत्तिर्यस्य सोऽत्र व्यपेक्ष्यते ॥३६९॥**

प्रत्याधारं सूक्ष्माणां भेदानामसाधारणः=भेदानामाधारः स्ववाचकासम्भवादसंविज्ञानपदः श्यामगुणविशेषो वाचकाभावेऽपि वाच्यानपायादस्ति स सर्वस्मिन्ननन्वयी क्वचिदेव वर्तमानोऽस्मिन्नुपमानोपमेयसम्बन्धे व्यपेक्ष्यते—सव्यापारत्वेनाश्रीयते।

---

अयं भावः—श्यामत्वजात्याऽनुगतीकृतस्य श्यामगुणमात्रस्याधारेण अव्यवच्छिन्नस्याधारविशेषणत्वे=उपमेयविशेषणत्वे अभिधित्सिते श्यामेयं देवदत्ता इत्येव वक्तव्यं स्यात्। एतावतैव विशिष्टजातीये=श्यामत्वजातीयेन श्यामगुणेन सह देवदत्तानुयोगिकस्य संबन्धस्य प्रतिपादनात्। तत्र किमर्थं 'शस्त्री' इत्युच्यते। अविशिष्टगुणयोगस्य=श्यामगुणसामान्यप्रतियोगिकसंबन्धस्य गुणपदादेव=श्यामपदादेव प्रतीतेर्न कञ्चनातिशयमुपमानशब्दाः शस्त्र्यादयः प्रत्याययन्ति इति निष्प्रयोजनमुपमानशब्दानां शस्त्रीश्यामा इति समासे उपादानमिति ॥ ३६८ ॥

नन्वेवं भेदाभेदविमर्शेनोपमानोपमेयभावे स्वीकृतेऽपि अतिप्रसङ्गः=देवदत्तायामपि उपमानत्वप्रसङ्गः। तथाहि—श्यामगुण उपमानोपमेयरूपोभयाधारवर्ती अपि आधारभेदाद् भिन्नः श्यामत्वरूपजात्येकत्वाच्च तदध्यारोपेणैक इति कथं शस्त्र्येवोपमानम्, न देवदत्ता इत्याशङ्क्य उपमाविषययोः श्यामगुणयोः स्वालक्षण्येन=श्यामगुणरूपव्यक्तिगतासाधारणधर्मेण तावद् विशेषम्=वैलक्षण्यम् आह—अशब्दवाच्यो य इति।

अस्यार्थः—उपमानगते श्यामगुणे उपमेयगतश्यामगुणाद् यो भेदः=विशेषः, श्याममात्रे—सर्वस्मिन् श्यामगुणे न वर्तते, यस्य भेदस्य केषुचित् श्यामेषु उपमानगतेष्वेव वृत्तिः स भेदोऽत्र 'शस्त्रीश्यामाः' इत्यत्र शस्त्र्या उपमानत्वसंपत्तये व्यपेक्ष्यते विशेषेण अपेक्ष्यते।

तथा च श्यामगुणविशेषः उपमेयेऽवर्तमानः शस्त्र्या एवोपमानत्वं प्रयोजयतीति।

अयं भावः—प्रत्याधारं भेदाभेदाभ्यामुपलक्षितः श्यामगुणविशेषः स्वगतानां सूक्ष्माणां भेदानाम्=विशेषाणामाधारः शस्त्रीश्यामेत्यादौ स्ववाचकासंभवादसंविज्ञानपदो वाचकाभावेऽपि वाच्यानपायात्=वाच्यस्य सत्त्वात् अस्ति सः=श्यामगुणविशेषः सर्वस्मिन् श्यामगुणे अनन्वयी=अवर्तमानः क्वचिदेव श्यामगुणे वर्तमानोऽस्मिन्='शस्त्रीश्यामा' इत्यादौ उपमानोपमेयसंबन्धे व्यपेक्ष्यते=विशेषणापेक्ष्यते सव्यापारत्वेनाश्रीयते। शस्त्र्या उपमानत्वसंपत्तये व्यापृतत्वेनाश्रीयते इति शस्त्र्येवात्रोपमानम्, न देवदत्ता।

तथाहि शस्त्रीश्यामेति वृत्तिपदादेवोपमानोपमेययोः श्यामगुणो विलक्षणः प्रतीयते। योऽन्यत्रासम्भवीति नातिप्रसङ्गः।

इत्थं चाधारभेदादन्योऽपि कयाचित् स्वरूपप्रतिपत्त्यानवसितविवेकत्वाद् गुण एव सामान्यं भेदाभेदरूपाभ्यामौपम्यमवस्थापयतीत्युक्तं भवतीति ॥ ३६९ ॥

गुणजातेरपि न सर्वस्या अत्र व्यापार इत्याह—

**श्यामेषु केषुचित् किञ्चित् किञ्चित् सर्वत्र वर्तते।**
**सामान्यं कश्चिदेकस्मिन् श्यामे भेदो व्यवस्थितः ॥३७०॥**

किञ्चिदपरसामान्यं केषुचिच्छ्यामगुणेषु वर्तते तदुपमायां सव्यापारम्।

किञ्चित् तु सर्वत्र वर्तते महासामान्यम्। तदविशेषादुपमानिमित्तं न भवति।

कश्चित् तु श्यामे गुणे प्रतिनियते भेदो विशेषो वर्तते। सोऽप्यतिशयप्रख्यापनायोपमाननिमित्तं भवत्येव। तद्यथा—चन्द्रमसः कान्तिविशेषः कन्यावदनस्योपमा-

---

तथाहि—शस्त्रीश्यामेति वृत्तिपदादेवोपमानोपमेययोः श्यामगुणो विलक्षणः प्रतीयते, योऽन्यत्रासंभवीति नातिप्रसङ्गः। येन शस्त्रीश्यामेत्यादौ शस्त्रीदेवदत्तयोरेवोपमानोपमेयभावः, नान्ययोः। शस्त्रीदेवदत्तयोरपि प्रत्येकं विलक्षण एव श्यामगुण इति उत्कृष्टश्यामगुणवत्याः शस्त्र्या उपमानत्वम्, निकृष्टश्यामगुणवत्या देवदत्तायास्तु उपमेयत्वमिति।

इत्थञ्चाधारभेदादन्योऽपि श्यामगुण एव सामान्यम्, कयाचित् स्वरूपप्रतिपत्त्याऽनवसित-विवेकत्वात्=अगृहीतभेदत्वाद् भेदाभेदरूपाभ्यामौपम्यम्=शस्त्रीदेवदत्तयोरुपमानोपमेयभावं व्यवस्थापयतीत्युक्तं भवतीति ॥ ३६९ ॥

श्यामगुणगता श्यामत्वजातिर्द्विविधा, एका सकलश्यामगुणगता व्यापिका, अपरा च श्याम-विशेषगता व्याप्या। तत्र श्यामगुणगतायाः सर्वस्या अपि जातेर्न अत्र=शस्त्रीदेवदत्तयोरुपमानोप-मेयभावे व्यापारः। अपि तु श्यामविशेषगतया एवेत्याह—श्यामेषु केषुचिदिति।

अस्यार्थः—केषुचित् श्यामेषु—श्यामगुणविशेषेषु किञ्चित् सामान्यं=श्यामत्वरूपं व्याप्यं सामान्यं वर्तते। किञ्चित् सामान्यं व्यापकं श्यामत्वजातिरूपम्, सर्वत्र—सकलेषु श्यामगुणेषु वर्तते। तयोर्मध्ये यः कश्चिदेकस्मिन् श्यामे श्यामगुणविशेषे भेदः श्यामत्वरूपो जातिविशेषो व्यवस्थितः, स एव स्वाश्रयोत्कर्षाधानद्वारा शस्त्र्या उपमानत्वप्रयोजक इति।

अयं भावः—किञ्चिदपरसामान्यम्=व्याप्यं श्यामत्वरूपं सामान्यम् केषुचित् श्यामगुणेषु वर्तते तदुपमायाम्=शस्त्रीदेवदत्तयोरुपमानोपमेयव्यवहारे सव्यापारम्=प्रयोजकम्।

किञ्चित्तु सर्वत्र=सर्वेषु श्यामगुणेषु वर्तते तत्परं महासामान्यं व्यापकं श्यामत्वजातिरूपम्। तदुपमानिमित्तं न भवति, उपमानोपमेयगुणयोरविशेषात्=अविशेषेण वर्तमानत्वात्।

कश्चित् तु भेदो विशेषः=श्यामत्वजातिविशेषः प्रतिनियते श्यामे गुणे वर्तते। सोऽपि= श्यामगुणविशेषे वर्तमानो जातिविशेषः श्यामत्वरूपः उपमानगतश्यामगुणातिशयप्रख्यापनद्वारा शस्त्र्या उपमानत्वे निमित्तं भवत्येव। तद् यथा चन्द्रमसः कान्तिविशेषः चन्द्रे कन्यावदनस्योपमानत्वे

निमित्तमतिशयाध्यारोपात्। उत्कृष्टगुणेन हि न्यूनगुणस्योपमानादुत्कर्षसमारोपात् प्रशंसा जायते। पूर्वं तु निरतिशयो भेदो नोपमानाङ्गमित्युक्तम् ॥ ३७० ॥

गुणसामान्यव्यतिरेकेणापरा जातिरत्र नावधार्यत इत्याशङ्क्य तामुपपादयितुमाह—

**तथाहि सति सौरभ्ये भेदो जात्युत्पलादिषु ।**
**गन्धानां सति भेदे तु सादृश्यमुपलभ्यते ॥३७१॥**

जात्युत्पलादिगन्धानां गन्धत्वमहासामान्यव्यतिरेकेण सौरभ्ये शोभनामोदत्वलक्षणेऽपरसामान्ये सति भेदोऽवधार्यते। येषां सौरभ्यं नास्ति, ततो व्यतिरेको लक्ष्यते।

तथाह्युत्पलगन्धमाघ्राय सन्तमसेऽपि प्रत्यभिजानात्युत्पलमिदमिति। एवं जातिगन्धाद्यपि। ततश्च सुरभित्वमपरसामान्यमाधारविशेषनियतमस्तीति निश्चयो यत्सम्बन्धात् सुरभीणि सुगन्धीनीमानि द्रव्याणीति निरूपणा। सत्यपि चैवं सौरभ्येण गन्धानां विशेषे केषाञ्चित् सादृश्यमप्यस्ति।

---

निमित्तम्। स्वाधारभूते चन्द्रे स्वगतस्यातिशयस्याध्यारोपात्। उत्कृष्टगुणेन सह हि निकृष्टगुणस्य उपमानात्=सादृश्यबोधनाद् न्यूनगुणे उपमेये उपमानगतस्य उत्कर्षस्य समारोपात् उपमेयस्य न्यूनगुणत्वेऽपि प्रशंसा जायते। पूर्वं तु उपमाननिमित्तत्वेनोक्तो भेदः श्यामत्वजातिरूपः साधारणो धर्म उपमानोपमेययोर्निरतिशय इति न तत्रोपमानत्वप्रयोजकत्वसंभव इति विचिन्त्य श्यामत्वजातिविशेषस्य श्यामगुणविशेषगतस्योपमाननिमित्तत्वमुक्तमिति ॥ ३७० ॥

सकलश्यामगुणगतश्यामत्वरूपसामान्यं विहाय अत्र = उपमानगते श्यामगुणविशेषे अपरा जातिः श्यामत्वरूपा नावधार्यते इति आशङ्क्य तां जातिं तत्रोपपादयितुमाह—तथा हि सतीति।

अस्यार्थः—तथा हि सति सकलश्यामगुणे श्यामत्वरूपं महासामान्यम्, केषुचित् श्यामगुणेषु श्यामत्वरूपमपरं सामान्यमित्यभ्युपगमे सत्येव हि, जात्युत्पलादिषु नानाजातीयेषु गन्धसामान्यसत्त्वेऽपि सौरभ्ये भेदोऽनुभूयते। जात्युत्पलादिषु गन्धानां भेदे सत्येव तु=च, परस्परं सादृश्यमुपलभ्यते। एतद्गन्धसदृश एतद्गन्ध इति। गन्धैक्ये तु सादृश्यं नानुभूयेत। गौरिव गौरिति यथा नानुभूयते इति।

अयं भावः—जात्युत्पलादिगन्धानां गन्धत्वमहासामान्यव्यतिरेकेण शोभनामोदत्वलक्षणे सौरभ्येऽपरसामान्यरूपे सति तद्गन्धानां परस्परं भेदोऽवधार्यते। येषां च कटादीनां सौरभ्यं नास्ति, ततोऽपि जात्युत्पलादीनां संतमसे भेदो गन्धविशेषाघ्राणेन लक्ष्यते, नायं कटो जातिरियमिति।

तथाहि—उत्पलगन्धमाघ्राय संतमसेऽपि प्रत्यभिजानाति—उत्पलमिदमिति। एवं जातिगन्धाद्यपि प्रत्यभिजानाति। ततश्च गन्धत्वसामान्यापेक्षया सुरभित्वमपरसामान्यं जात्युत्पलादिरूपाधारविशेषनियतमस्तीति निश्चयः, यत्संबन्धात् सुरभीणि सुगन्धीनि इमानि द्रव्याणि इति निरूपणा जायते। सत्यपि चैवं सौरभ्येण=(सौरभ्याभिन्ने) गन्धानां विशेषे केषाञ्चिद् गन्धानां परस्परं सादृश्यमप्यस्ति।

५०

तथाहि—गन्धयुक्तद्रव्यैर्नखशैलेयादिभिर्गन्धद्रव्ययुक्तैर्न शैलेयादिभिरवान्तर-भेदभिन्नसुरभिगन्धैरपि कयाचित् स्वभावप्रत्यासत्त्या पद्मादिसुरभिसदृशगन्धं द्रव्यान्तरं निर्वर्त्यते, पद्मगन्धि किञ्जल्कगन्धि मालतीगन्धि इत्यादि। एवं गन्धवद्रूपस्याप्य-वान्तरजातिभेदो न्याय्य इति श्यामेषु केषुचित् वर्तमानं सिद्धं प्रतिनियतगुणवृत्त्यपर-सामान्यमिति ॥ ३७१ ॥

गुणानां प्रतिनियमः किंकृत इत्याह—

**गुणानामाश्रयाद् भेदः स्वतो वाप्यनुगम्यते।**
**अनिर्देश्याद् विशेषाद् वा सङ्कराद् वा गुणान्तरैः ॥३७२॥**

स्वकारणादासादितभेदाद् द्रव्यलक्षणादाधारात् कश्चिद् गुणानां विशेषः। तद्यथा— उत्पलतमालादिगतस्य श्यामत्वस्य। तथा चात्र स्वभावसाम्यादुपमाप्रवृत्तिः—

---

तथाहि—गन्धद्रव्ययुक्तैर्नरशैलेयादिभिः कयाचित् स्वभावप्रत्यासत्त्याऽवान्तरभेदभिन्न-सुरभिगन्धवद्भिरपि पद्मादिसुरभिगन्धसदृशगन्धवद् द्रव्यान्तरं निर्वर्त्यते, तथा चानुभवः—'पद्म-गन्धि, किञ्जल्कगन्धि, मालतीगन्धि इत्यादि। एवं श्यामरूपस्याप्यवान्तरजातिभेदो गन्धवन्न्याय्य इति श्यामेषु केषुचिद् वर्तमानं सिद्धं प्रतिनियतश्यामगुणवृत्त्यपरसामान्यमिति ॥ ३७१ ॥

श्यामादिगुणानामुपमानोपमेयगतानां प्रतिनियमः = विशेषः किंकृत इत्याशङ्क्य तद् हेतु-चातुर्विध्यमाह—गुणानामाश्रयाद् भेद इति।

अस्यार्थः—गुणानां श्यामरूपविशेषगन्धविशेषादीनां क्वचिदाधाराद् भेदः, आधारभेदाद् भेदः, यथा उत्पलतमालादिगतस्य श्यामत्वस्य। वा = अथवा, क्वचित् स्वतोऽपि आधारद्रव्यस्वभावादपि तेषां भेदो विशेषः, अनुगम्यते = अनुभूयते, यथा एकजातीयाधारसमवायेऽपि धूसरत्वादिर्गुणो महिष्यादीनां स्वाभाविकः। अनिर्देश्याद् विशेषाद्वा कारणद्रव्यगताद् आधारद्रव्यगताद् वा गुणानां भेदः।

यथा—सुरादीनां परिणामविशेषः कालपरिवासहेतुकोऽनिर्देश्यः, तस्मात् सुरा रसगन्धयो-र्विशेषः। द्रव्यान्तरगतगुणैःसंकराद्वा द्रव्यान्तरगतगुणसंमिश्रणाद् वा गुणानां विशेषः। यथा सह-कारगन्धाधिवासितस्यासवस्य गन्धविशेष इति।

अयं भावः—स्वकारणाद् गुणाधारद्रव्ये भेदः, आधारभेदाच्च गुणानां कश्चिद् विशेषः। तद् यथा—उत्पलतमालादिगतस्य श्यामत्वस्य आधारभेदाद् भेदः। तथा च = आधारभेदात् श्यामत्वस्य भेदे च अत्र = वक्ष्यमाणेषु रोलम्बादिश्यामलं नभ इत्यादिषु स्वभावसाम्याद् = उपमानोपमेयगतश्यामगुणस्वरूपसाम्याद् उपमाप्रवृत्तिः, न तु आधारसाम्यात्, आधारभेद-प्रयुक्तगुणभेदाभ्युपगमेन आधारद्वये एकस्य साधारणधर्मस्याभावात्। तथा चाधारभेदाद् गुणभेद-स्योदाहरणम्—

"रोलम्बगरलव्यालतमालश्यामलं नभः।
नभोनिर्मलनिस्त्रिंशव्यग्रपाणय आहवे॥" इति।

एकजातीयाधारसमवायेऽपि कश्चित् स्वरूपादेवाचिन्त्यवैभवाद् गुणानां विशिष्टानामेवोत्पत्तेर्विशेषोऽध्यक्ष्यत एव धूसरत्वादिः।

कश्चित् पुनरसंविज्ञानपदः कारणमात्रादनुत्पन्नः कालपरिवासहेतुको विशेषो गुणानाम्। तद्यथा—सुरादीनां परिणामविशेषासादनेन रसगन्धवैचित्र्योत्पत्तिः।

तथाहि तत्र सामग्र्या खण्डशः कार्यानुत्पादात् सामग्र्यन्तर्गतात् कारणादयमतिशय इति निर्देष्टुं न शक्यते। द्रव्यान्तरगतगुणसम्मिश्रणाद् वा विशेषो गुणानाम्।

तद्यथा—सहकारगन्धाधिवासस्यासवस्य मालतीकुसुमाधिवासितस्य च तैलस्य। तदेवमुपात्तभेदानां गुणानां कयाचित् प्रत्यासत्त्या केषाञ्चिदपरसामान्यसद्भावे सामान्यवचनेनोपमानवचनस्य समाससिद्धिः॥ ३७२॥

न च नियोगतो गुणानां साम्यमेवोपमाहेतुः। अपितूत्कृष्टगुणमुपमानमित्याह—

---

"रोलम्बगरलव्यालतमालश्यामलं नभः।
नभोनिर्मलनिस्त्रिंशव्यग्रपाणय आहवे॥" इति।

एकजातीयाधारसमवायेऽपि=क्वचिद् गुणानामेकजातीयाधारसमवायेनाधारभेदप्रयुक्तभेदाभावेऽपि, अचिन्त्यवैभवात्=अचिन्त्यसामर्थ्यात् तेषां स्वरूपादेव तेषां विशिष्टानाम्=विलक्षणानाम् एवोत्पत्तेस्तेषां धूसरत्वादिर्विशेषोऽध्यक्ष्यत एव=प्रत्यक्षीक्रियत एव।

कश्चित्तु गुणानां विशेषः=असंविज्ञानपदः=असंविज्ञातवाचकपदः—पदावाच्यः, कारणमात्रादनुत्पन्नः=कारणसामग्र्यन्तर्गतकारणविशेषादनुत्पन्नः, केवलं स्वाधारस्य कालपरिवासहेतुकः। तद् यथा सुरादीनां कालपरिवासमूलकपरिणामविशेषासादनेन रसगन्धवैचित्र्योत्पत्तिः।

तथाहि—तत्र सामग्र्या खण्डशः कार्यानुत्पादात् सामग्र्यन्तर्गताद् कारणादयं सुरादीनां रसगन्धाद्यतिशय इति निर्देष्टुं न शक्यते इति अनिर्देश्याद् विशेषाद्वा इत्युक्तं कारिकायाम्। अत्र विशेषादित्यस्य कारणविशेषादित्यर्थः। द्रव्यान्तरगतगुणसंमिश्रणाद् वा गुणानां विशेषः।

तद्यथा—सहकारगन्धाधिवासितस्यासवस्य, मालतीकुसुमाधिवासितस्य च तैलस्य। तदेवं कयाचित् स्वरूपप्रत्यासत्त्या उपात्तभेदानाम्=गृहीतभेदानाम् केषाञ्चिद् गुणानामपरसामान्यसद्भावे दृढीकृते सामान्यवचनेन सह उपमानवचनस्य 'शस्त्रीश्यामा' इत्यादौ समाससिद्धिरिति॥ ३७२॥

न च नियोगतः=नियमतः गुणानां साम्यमेवोपमाहेतुः = उपमानोपमेयभावप्रयोजकः, अपि तु उत्कृष्टगुणकमुपमानमित्याह—उपमानं प्रसिद्धत्वादिति।

उपमानं प्रसिद्धत्वात् सर्वत्र व्यतिरिच्यते।
उपमेयत्वमाधिक्ये साम्ये वा न निवर्तते ॥३७३॥

व्यतिरेकोऽत्राधिक्यं विवक्षितम्, तेनाधिकगुणमुपमानमित्यर्थः। तच्चाधिक्यं वास्तवेन रूपेण भवतु मा वा भूत्। किन्तु प्रसिद्धत्वात् प्रतीतत्वाद् ज्ञापकत्वेनोपमेयं प्रत्याश्रीयमाणं प्रसिद्धमेव न्याय्यमिति तद्गुणस्योत्कर्षः प्रसिद्धतैव।

तथा च न्यूनगुणमपि शृङ्गाररसपरिपोषणपरतया नारीमुखं शशिबिम्बस्योपमानत्वेन निर्दिशन्ति। कामिनां हि प्रेयसीमुखमुत्कृष्टगुणत्वेन प्रसिद्धम्। यथा—

"ईर्ष्यावशेन कलुषत्वमुपागतस्य
दूरान्मुखस्य तव सुन्दरि! साम्यमेत्य।
चेतःप्रहर्षभरपूरितपूर्णदेहः
स्वाङ्गेष्वपि प्रसभमद्य न माति चन्द्रः॥"

---

अस्यार्थः—उपमानं सर्वत्र वस्तुगत्या उत्कृष्टत्वे न्यूनत्वे वा, प्रसिद्धत्वात्—उत्कृष्टत्वेन प्रतीतत्वाद्, व्यतिरिच्यते=उत्कृष्टगुणकं भवति। वस्तुगत्याऽधिक्ये साम्ये वा सत्यपि प्रसिद्धया उत्कृष्टत्वाभावे न्यूनगुणकत्वे च सति उपमेयत्वं न निवर्तते। प्रसिद्धया उत्कृष्टगुणकमुपमानम्, प्रसिद्धया न्यूनगुणकञ्चोपमेयमिति निष्कर्षः।

अयं भावः—अत्र=कारिकायाम्—व्यतिरिच्यते इत्यत्र व्यतिरेक आधिक्यं विवक्षितम्, तेनाधिकगुणकमुपमानमित्यर्थः। तच्चाधिक्यं वास्तवेन रूपेण भवतु मा वा भूत्, किन्तु प्रसिद्धत्वात्—प्रतीतत्वाद् आधिक्यं ग्राह्यम्। उपमेयं प्रति ज्ञापकत्वेनाश्रीयमाणमुपमानमुत्कृष्टगुणकत्वेन प्रसिद्धमेव न्याय्यम्, अप्रसिद्धस्य ज्ञापकत्वासंभवाद् इति तद्गुणस्य=उपमानगुणस्य उत्कर्षः प्रसिद्धतैव।

तथा च=उत्कृष्टगुणकत्वेन प्रसिद्धस्योपमानत्वे च वस्तुतः चन्द्राद् न्यूनगुणकमपि नारीमुखं शृङ्गाररसपरिपोषणपरतया शशिबिम्बस्योपमानत्वेन निर्दिशन्ति। प्रेयसीमुखं हि उत्कृष्टगुणकत्वेन कामिनां प्रसिद्धम्।

यथा—

ईर्ष्यावशेन कलुषत्वमुपागतस्य
दूरान्मुखस्य तव सुन्दरि साम्यमेत्य।
चेतः प्रहर्षभरपूरितपूर्णदेहः
स्वाङ्गेष्वपि प्रसभमद्य न माति चन्द्रः॥ इति।

अत्र हि—कामिनीमुखे ईर्ष्याकालिककालुष्यवर्णनमुखेन अन्यदा तत्र—कलङ्कराहित्येन चन्द्रादुत्कृष्टगुणकत्वं कामिनीमुखे कविनिबद्धवक्त्रा उपवर्णितम्।

इत्थञ्च कृत्वा परिपूर्णगुणेन न्यूनगुणमुपमीयत इति यथाप्रसिद्धि परिपूर्णगुणता व्याख्येया। अत एवाह—सर्वत्रेति।

न केवलं वस्तुतो यत्रोत्कृष्टो गुणस्तदुपमानं यावन्न्यूनगुणमपि स्वप्रसिद्ध्या-श्रयेणोपमानं व्यतिरिच्यते गुणाधिक्येन व्यवतिष्ठते।

उपमेयभावस्तु गुणस्य वस्तुत आधिक्येऽतिरेके साम्ये तुल्यत्वे वा न निवर्तते नापैति। उपमानं नियोगतोऽधिकगुणमेव विवक्षितम्। उपमेये त्वनियम इत्यर्थः ॥३७३॥

इदानीं प्रकारान्तरेणोपमानं लक्षयितुं मानलक्षणभाष्यमन्यथा व्याचष्टे—

**अन्यैस्तु मानं जात्यादि भेद्यस्यार्थस्य वर्ण्यते।**
**अनिर्ज्ञातस्वरूपो हि ज्ञेयोऽर्थस्तेन मीयते ॥३७४॥**

भेद्यस्यावच्छेद्यस्य द्रव्यस्योपाधिविविक्तस्य प्रतीत्यनुपारोहात् प्रतीतये जाति-गुणक्रियाः समाश्रीयमाणा मानव्यपदेशमासादयन्ति ॥ ३७४ ॥

---

इत्थञ्च कृत्वा परिपूर्णगुणकेन न्यूनगुणकमुपमीयत इति यथाप्रसिद्धि परिपूर्णगुणता व्याख्येया। अत एवाह—सर्वत्रेति।

वस्तुगत्याऽऽधिक्ये, न्यूनगुणकत्वेन न्यूनत्वे, साम्ये चेत्यर्थः। न केवलं वस्तुतो यत्रोत्कृष्टो गुणस्तदेवोपमानम्, यावन्न्यूनगुणकमपि उत्कृष्टगुणतया स्वप्रसिद्ध्याश्रयेण उपमानं व्यतिरिच्यते—गुणाधिक्येन व्यवतिष्ठते।

उपमेयभावस्तु गुणस्य वस्तुत आधिक्ये—अतिरेके, साम्ये—तुल्यत्वे च, न निवर्तते—नापैति। उपमानं नियोगतः=नियमतः अधिकगुणकमेव विवक्षितम्। उपमेये तु न्यूनगुणकमेवोप-मेयमिति नियमो न, गुणसाम्येऽप्युपमेयत्वसंभवादिति ॥ ३७३ ॥

इदानीं मानशब्दस्य भेदकपरत्वमाश्रित्य प्रकारान्तरेणोपमानं लक्षयितुम्—"मानं हि नामानिर्ज्ञातज्ञानार्थमुपादीयते, अनिर्ज्ञातमर्थं ज्ञास्यामि इति" एतद् मानलक्षणभाष्यमन्यथा व्याचष्टे—अन्यैस्तु मानमिति।

अस्यार्थः—अन्यैस्तु मानलक्षणभाष्यमन्यथा वर्ण्यते, व्याख्यायते भेद्यस्यार्थस्य—व्यावर्त्यस्यार्थस्य, भेदकं व्यावर्तकं जात्यादिमानमिति। हि=यतः, अनिर्ज्ञातविशेषस्वरूपः सामान्यभूतो ज्ञेयोऽर्थस्तेन विशेषरूपतया इतरव्यावृत्या मीयते=प्रमीयत इति।

अयं भावः—भेद्यस्य अवच्छेद्यस्य=व्यावर्त्यस्य द्रव्यस्य उपाधिविविक्तस्य=जातिगुण-क्रियादिरूपभेदकधर्मरहितस्य प्रतीत्यनुपारोहात् तत्प्रतीतये जातिगुणक्रिया, भेदकत्वेन समाश्रीयमाणा मानव्यपदेशमासादयन्ति—लभन्ते इति ॥ ३७४ ॥

**मितस्तु स्वेन मानेन प्रसिद्धो यो गुणाश्रयः ।**
**आश्रयान्तरमानाय स्वधर्मेण प्रवर्तते ॥३७५॥**
**रूपान्तरेण संस्पर्शो रूपान्तरवतां सताम् ।**
**भिन्नेन यस्य भेद्यानामुपमानं तदुच्यते ॥३७६॥**

स्वेनात्मीयेन जात्यादिमानेन परिच्छिन्नो यो गुणविशेषाधारः प्रसिद्धः—प्रतीतः सोऽप्रतीतगुणान्तरप्रज्ञापनाय स्वसमवेतेनैव गुणेन यदा व्याप्रियते, तदा तेन रूपान्तरेण भिन्नेन रूपान्तरवता भिन्नानामपि भेद्यानां—परिच्छेद्यानां परिच्छेदकं तदुपमानमुच्यते ।

तत्र संस्पर्शः सम्बन्धोऽत्यन्तभिन्नानां नोपपद्यत इत्यर्थादन्वयिधर्माक्षेपः । ततश्च भेदाभेदविमर्शेनैतदप्युपमानम् । सादृश्यमात्रेण च परिच्छेदान्नात्यन्ताय मानमुपमानमिति लक्षणमवस्थापितम् । तत्र शस्त्रीदेवदत्तयोर्गुणः श्यामत्वमुपमानोपमेयभावनिबन्धनं शस्त्रीश्यामेति ॥ ३७५, ३७६ ॥

यदा तु श्यामत्वमिदमनेन सदृशमित्युच्यते तदा—

**धर्मः समानः श्यामादिरुपमानोपमेययोः ।**
**आश्रीयमाणप्राधान्यो धर्मेणान्येन भिद्यते ॥३७७॥**

---

मानं लक्षयित्वा उपमानं लक्षयति द्वाभ्याम्—मितस्तु स्वेनेति । रूपान्तरेणेति च ।

अस्य पद्यद्वयस्यार्थः—यस्तु स्वेन—स्वकीयेन मानेन मितः शस्त्र्यादिरुपमानत्वेनाभिमतः पदार्थः श्यामत्वगुणाश्रयः प्रसिद्धः, यदा श्यामत्वगुणस्य यदाश्रयान्तरं देवदत्तादि तस्य मानाय परिच्छेदाय प्रवर्तते, तदा रूपान्तरवताम्—श्यामत्वगुणान्तरवतां सतां देवदत्तादीनां भेद्यानां यस्य भिन्नेन—देवदत्तागतश्यामत्वगुणाद् भिन्नेन श्यामरूपान्तरेण संस्पर्शः संबन्धस्तदुपमानमुच्यत इति ।

अयं भावः—स्वेनात्मीयेन जात्यादिरूपेण मानेन परिच्छिन्नो यः शस्त्र्यादिरूप उपमानत्वेनाभिमतः पदार्थः, श्यामगुणविशेषाधारः प्रसिद्धः—प्रतीतः, स उपमेये देवदत्तादौ अप्रतीतस्य श्यामगुणान्तरस्य प्रज्ञापनाय स्वसमवेतेनैव श्यामगुणेन यदा व्याप्रियते, तदा तेन स्वगतेन श्यामरूपान्तरेण देवदत्तागतश्यामरूपाद् भिन्नेन श्यामरूपान्तरवतां भिन्नानामपि भेद्यानां परिच्छेद्यानां परिच्छेदकं तदुपमानमुच्यते ।

तत्र संस्पर्शस्तादात्म्यलक्षणः संबन्धोऽत्यन्तभिन्नानां नोपपद्यत इति अर्थादन्वयिधर्मापेक्षः ततश्चैतदपि उपमानं गुणयोर्भेदाभेदविमर्शेनैव । नात्यन्तायमानमुपमानमिति चात्र पक्षे उपमानलक्षणमवस्थापितम् । उपमानसादृश्यमात्रेणैव उपमेयस्य परिच्छेदात् । स्वरूपतोऽपरिच्छेदात् । तत्र शस्त्री देवदत्तयोर्गुणः श्यामत्वमुपमानोपमेयभावनिबन्धनं शस्त्रीश्यामा इत्यत्रेति ॥ ३७५–३७६ ॥

यदा तु श्यामत्वमिदमनेन सदृशम्—देवदत्तश्यामत्वं शस्त्रीश्यामत्वेन सदृशम् इत्युच्यते तदाऽऽह—धर्मः समान इति ।

उपमानोपमेयभावव्यवस्थापको यः श्यामादिर्धर्मः स यदोपकारित्वव्युदासेनाश्रयभिन्नः प्राधान्येनोपमेयतयोपादीयते, तदाद्रव्यायमाणत्वात् तस्यापरेण स्वगतेन धर्मेण विशेष्यमाणत्वमित्यन्यो धर्मोऽत्रोपमानोपमेयभावनिबन्धनम् ॥ ३७७ ॥

एतदेवोदाहरति—

**शस्त्रीकुमार्योः सदृशः श्याम इत्येवमाश्रिते ।**
**व्यपदेश्यमनेनेति निमित्तं गुणयोः स्थितम् ॥३७८॥**

अनेन करणभूतेन धर्मेण दीप्त्यादिना श्यामगुणगतेन तुल्योऽयं श्यामगुण इति निरूपणीयम् । तत्रापि च श्यामगुणयोरयं दीप्त्याख्यो धर्मः समान इति प्राधान्ये धर्मस्य धर्मान्तरमुपमायां सव्यापारमन्वेष्यमित्यनवस्थैवात्र ब्रह्मकाण्डे प्रतिपादिता—

"सामान्यमाश्रितं यद्यदुपमानोपमेययोः ।
तस्य तस्योपमानेषु धर्मोऽन्यो व्यतिरिच्यते ॥इति ॥ ३७८ ॥

---

अस्यार्थः—यदा उपमानोपमेययोः समानो धर्मः श्यामादिर्विशेषणतया उपकारित्वं विहाय अश्रीयमाणप्राधान्यः—देवदत्ताश्यामत्वं शस्त्रीश्यामत्वेन सदृशमिति तदाऽन्येन स्वगतेन धर्मेण दीप्त्याख्येन भिद्यत इति ।

अयं भावः—शस्त्रीदेवदत्तयोरुपमानोपमेयभावव्यवस्थापको यः श्यामादिर्धर्मः स यदाऽऽश्रयभेदभिन्नो विशेषणतयोपकारित्वं विहाय प्राधान्येन उपमेयतया उपादीयते, तदा द्रव्यायमाणत्वात् तस्यापरेण स्वगतेन धर्मेण दीप्त्याख्येन विशेष्यमाणत्वमिति अन्यो धर्मो दीप्त्याख्योऽत्र =इदं श्यामत्वमनेन सदृशमित्यत्र उपमानोपमेयभावनिमित्तमिति ॥ ३७७ ॥

एतदेव=पूर्वकारिकोक्तमर्थमेव उदाहरति=उदाहरणेन बोधयति 'शस्त्री कुमार्योः' इति ।

अस्यार्थः—शस्त्री कुमार्योः श्यामः सदृश इत्येव नाश्रिते शाब्दे व्यवहारे—अनेन करणभूतेन दीप्त्याख्येन धर्मेणेति व्यपदेश्यं व्यवहार्यं पूर्वोक्तव्यवहारे निमित्तं दीप्तिरूपमुपमानोपमेयागतयोः श्यामयोर्गुणयोः साधारणधर्मरूपतया स्थितम् इति ।

अयं भावः—अनेन धर्मेण दीप्त्यादिना श्यामगुणगतेन करणभूतेन उपमानगतश्यामगुणतुल्योऽयमुपमेयगतश्यामगुण इति व्यवहारे करणतया निरूपणीयं दीप्तिरूपं सामान्यं निमित्तम् । तत्रापि च श्यामगुणयोरयं दीप्त्याख्यो धर्मः समान इति व्यवहारे दीप्तिरूपस्य धर्मस्य प्राधान्ये दीप्तिरूपधर्मगतं धर्मान्तरं साधारणधर्मरूपमुपमायां सव्यापारमन्वेष्यमित्यनवस्थैवात्र ब्रह्मकाण्डे प्रतिपादिता—

"सामान्यमाश्रितं यद् यद् उपमानोपमेययोः ।
तस्य तस्योपमानेषु धर्मोऽन्यो व्यतिरिच्यते ॥" ( वा० प० १।६३ ) इति ।

यावच्चात्र विवक्षा तावदपर्यवसाना धर्माणां विवक्षा, विरामे तु विरतिः, एतच्चोपमानमुपमेयाद् भेदेन यदा विवक्ष्यते, तदोपमानोपमेयभावः शाब्द इत्याह—

**यदा निमित्तैस्तद्वन्तो गच्छन्तीव तदात्मताम् ।**
**भेदाश्रयं तदाख्यानमुपमानोपमेययोः ॥३७९॥**

उपमानोपमेयभावे यन्निमित्तं गुणः श्यामादिस्तेन यदा तौ निमित्तिनावुपमानोपमेयावैकात्म्यमिव प्रतिपद्येते गुणगुणिनोरभेदोपचारात्, तदा भेदाधीनो व्यपदेशो विवेकेनोपमानस्योपमेयस्य च। तथा च तत्रोपमानोपमेयभावलक्षणसम्बन्धद्योतकमिवादिपदमुपादीयत इति परिपूर्णेयमुपमा। देवदत्ता शस्त्री यथा श्यामा। गौरिव गवयः। शैला इव वलाहका इति।

---

अस्यार्थः—यद् यद् उपमानोपमेययोः सामान्यम्—साधारणो धर्म आश्रितः। तस्य तस्य सामान्यस्य धर्मस्योपमानेषु—उपमितिषु, व्यवह्रियमाणेषु ततस्ततोऽन्यो धर्मो व्यतिरिच्यते —उपमानोपमेयभावे पूर्वस्मान्निमित्तादधिकं निमित्तं भवति। श्यामगुणयोः साम्यनिरूपणे दीप्तिरूपो धर्मः करणरूपतया निमित्तमित्यनया कारिकया प्रतिपादितं भवति ॥ ३७८ ॥

यावच्चात्र=शस्त्री इव श्यामा देवदत्ता इत्यादौ उपमानोपमेयभावविवक्षा, तावदपर्यवसाना धर्माणां विवक्षा। यथा—शस्त्री इव श्यामा देवदत्ता इति। अत्र श्यामत्वं साधारणो धर्मः। शस्त्रीश्यामत्वमिव देवदत्ताश्यामत्वमिति। अत्र श्यामगुणगता दीप्तिः साधारणो धर्मः। शस्त्रीश्यामत्वदीप्तिरिव देवदत्ताश्यामत्वदीप्तिरिति।

अत्र दीप्तिगतं चाकचिक्यं साधारणो धर्म इत्यादि। उपमानोपमेयभावविरामे तु साधारणधर्मविवक्षाविरतिः। एतच्चोपमानमुपमेयाद् यदाऽभेदेन भेदेन च विवक्ष्यते, तदोपमानोपमेयभावः शाब्द इत्याह—यदा निमित्तैरिति।

अस्यार्थः—यदा उपमानोपमेयभावे निमित्तैः श्यामत्वादिभिः सामान्यधर्मैः—तद्वन्तः श्यामत्वादिसाधारणधर्मवन्तः, तदात्मताम् अभेदम्, गच्छन्तीव, शस्त्रीत्वदेवदत्तात्वाभ्यां वस्तुतो भेदाद् अत्रेव शब्दप्रयोगः। तदा उपमानतावच्छेदकोपमेयतावच्छेदकरूपाभ्यां भेदाश्रयं भेदनिमित्तकम्, उपमानोपमेययोराख्यानं कर्तव्यम्। तदा उपमानोपमेयभावो व्यवहर्तव्य इति।

अयं भावः—शस्त्रीश्यामा देवदत्ता इत्यादौ उपमानोपमेयभावे यन्निमित्तं श्यामादिर्गुणः तेन करणभूतेन यदा तौ निमित्तिनौ उपमानोपमेयौ ऐकात्म्यमिव=तादात्म्यमिव प्रतिपद्येते, गुणगुणिनोरभेदोपचारात्, तदा भेदाधीनो विवेकेन व्यपदेशः=शाब्दो व्यवहार उपमानस्य उपमेयस्य च। तथा च तत्रोपमानोपमेयभावरूपसंबन्धद्योतकमिवादिपदमुपादीयत इति परिपूर्णेयमुपमा। उपमानोपमेयसादृश्यवाचके वादिसाधारणधर्माणां चतुर्णामुपादाने हि परिपूर्णोपमा। यथा—देवदत्ताशस्त्री यथा श्यामा। गौरिव गवयः संस्थानेन। शैला इव वलाहका औन्नत्यश्यामत्वस्थूलत्वादिभिः इति।

अत्र ह्युपमानोपमेयभावसम्बन्धहेतोर्गुणस्य तद्वताऽभेदेन निर्देशे सम्बन्धश्चाभिहित इति प्रथमा। अभिहितः—सोऽर्थोऽन्तर्भूतः प्रातिपदिकार्थः सम्पन्न इति न्यायात् तद्वाचिकाया विभक्तेरभावात् प्रथमान्तयोः समन्वयो न स्यादिति द्योतकमिवाद्युपादीयते समन्वयार्थमित्युपमानोपमेयतद्भावद्योतकपदसाधारणधर्मवाचकपदप्रयोगात् परिपूर्णत्वम् ॥ ३७९ ॥

यदा तु सादृश्यहेतुकोऽभेदाध्यारोपः, तदोपमानोपमेयभावस्य गर्भीकार इत्याह-

**तत्त्वासङ्गविवक्षायां येषु भेदो निवर्तते।**
**लुप्तोपमानि तान्याहुस्तद्धर्मेण समाश्रयात् ॥३८०॥**

उपमानोपमेययोस्तत्त्वासङ्गोऽभेदाध्यारोपो यदा विवक्ष्यते, तदा भेदस्य निवृत्तत्वात् तदधीन उपमानोपमेयभावोऽपि तिरोधीयते। गौर्वाहीकः, सिंहो माणवक इति। परार्थे शब्दप्रयोगान्यथानुपपत्त्या चात्र कार्यात् कारणानुमानेन यास्कप्रभृतय आचार्याः समानधर्मान्तर्भावनेन लुप्तोपमानीमान्युपमानान्याचक्षते। लुप्ता साक्षादनवधार्यमाणा उपमा येषाम्। तद्धर्मेण समाश्रयादिति। तेन समानेन धर्मेण गर्भीकृतेन सता उपमानशब्देनोपमेयस्य परिग्रहादित्यर्थः ॥ ३८० ॥

---

अत्र ह्युपमानोपमेयभावसंबन्धहेतोर्गुणस्य साधारणधर्मरूपस्य तद्वता सहाभेदेन निर्देशे उपमानोपमेयभावसंबन्धश्चाभिहित इति प्रथमा। अभिहितः सोऽर्थोऽन्तर्भूतः प्रातिपदिकार्थः संपन्न इति न्यायात्। तद्वाचिकायाः=उपमानोपमेयभावरूपसंबन्धवाचिकायाः षष्ठीविभक्तेरभावात् प्रथमान्तयोः समन्वयो न स्यादिति तद् द्योतकमिवाद्युपादीयते समन्वयार्थमित्युपमानोपमेयतद्भावद्योतकपदसाधारणधर्मवाचकपदप्रयोगादुपमायाः परिपूर्णत्वमिति ॥ ३७९ ॥

यदा तु सादृश्यहेतुक उपमानोपमेययोरभेदाध्यारोपः, तदा उपमानोपमेयभावस्य तादात्म्यसंबन्धमूलकेन = विशेषणविशेष्यभावसंबन्धेन गर्भीकार इत्याह—तत्त्वासङ्गविवक्षायामिति।

अस्यार्थः—येषु=गौर्वाहीकः, सिंहो माणवक इत्यादिषु वाक्येषु, तत्त्वासङ्गविवक्षायाम्=उपमानोपमेययोरभेदाध्यारोपविवक्षायाम्, उपमानोपमेययोर्भेदो निवर्तते, तानि, वाक्यानि लुप्तोपमानानि आहुः, तद्धर्मेण=उपमानासाधारणधर्मेण सिंहत्वादिना, उपमेयस्य माणवकादेः समाश्रयात्=परिग्रहादिति।

अयं भावः—उपमानोपमेययोस्तत्त्वासङ्गोऽभेदाध्यारोपो यदा विवक्ष्यते, तदा भेदस्य=भेदबुद्धेः निवृत्तत्वात् तदधीन उपमानोपमेयभावोऽपि निवर्तते। गौर्वाहीकः, सिंहो माणवक इति। परार्थे परशब्दप्रयोगान्यथाऽनुपपत्त्या चात्र=सिंहो माणवक इत्यादौ कार्यात् परार्थे परशब्दप्रयोगरूपात् कारणानुमानेन=उपमानोपमेययोरभेदाध्यारोपरूपकारणानुमानेन यास्कप्रभृतय आचार्याः समानधर्मान्तर्भावनेन लुप्तोपमानि इमानि उपमानानि=सिंहादीनि आचक्षते। लुप्ता—इवादिशब्देन साक्षादनवधार्यमाणा उपमा येषामिति विग्रहः। तद्धर्मेण समाश्रयादिति। तेन समानेन धर्मेण उपमानशब्देन गर्भीकृतेन सता उपमेयस्य परिग्रहादित्यर्थं इति ॥ ३८० ॥

एवञ्च कार्यस्य नियतकारणपूर्वकत्वमुक्तम्। 'अन्यैस्तु मानं जात्यादीत्यनेन प्रकारेण यन्नात्यन्ताय मिमीते तदुपमानम्' इति भाष्यं तात्पर्येण व्याचष्टे—

**शस्त्र्यां प्रसिद्धं श्यामत्वं मानं सा तेन मीयते।**
**अन्या श्यामा तु तद्रूपा (त्वतद्रूपा) तेनात्यन्तं न मीयते ॥३८१॥**

साकल्येन परिच्छेदकं मानम्। तच्च शस्त्रीगतं श्यामत्वम्। तद्धि तत्र प्रसिद्धं परिच्छेदकम्। अन्या तु देवदत्ता श्यामापि न प्रसिद्धेति तेन श्यामत्वेन करणभूतेन परिच्छिद्यते। एवमपि परिच्छिद्यमाना नात्यर्थं सर्वतः परिमीयते। नहि धर्मसामान्यानुगममात्रात् सर्वात्मनार्थोऽवधारयितुं पार्यते ॥ ३८१ ॥

तदेवं शस्त्रीगतेन श्यामत्वेन देवदत्ता यदा नात्यन्ताय परिच्छिद्यते, तदा नात्यन्ताय मानमुपमानं शस्त्री सम्पद्यत इत्याह—

**शस्त्रीं स्वेन गुणेनातो मिमानामाश्रयान्तरम्।**
**असमाप्तगुणं सिद्धेरुपमानं प्रचक्षते ॥ ३८२ ॥**

---

एवञ्च=कार्यात् कारणानुमाने च कार्यस्य नियतकारणपूर्वकत्वमुक्तं भवति। अथाधुना—"अन्यैस्तु मानं जात्यादि" इत्युक्तेन प्रकारेण "यन्नात्यन्ताय मिमीते तदुपमानम्" इति भाष्यं तात्पर्येण व्याचष्टे—शस्त्र्यां प्रसिद्धमिति।

अस्यार्थः—शस्त्र्यां प्रसिद्धं श्यामत्वं मानम्, यतस्तेन श्यामत्वेन सा शस्त्री मीयते, परिच्छिद्यते। अन्या श्यामा तु=देवदत्तारूपा उपमेयभूता श्यामा तु, अतद्रूपा=श्यामत्वेनाप्रसिद्धस्वरूपा, तेन शस्त्र्यां प्रसिद्धेन श्यामत्वेन गुणेन मीयमानाऽपि अत्यन्तं न मीयते, अत्यन्तं न परिछिद्यते। यतः सामान्यधर्मानुगममात्रेण सर्वात्मनाऽर्थो नावधार्यत इति।

अयं भावः—साकल्येन=सर्वात्मना परिच्छेदकं मानम्। तच्च शस्त्रीगतं श्यामत्वम्। तद्धि तत्र प्रसिद्धं परिच्छेदकम्। अन्या तु देवदत्ता श्यामाऽपि न श्यामत्वेन प्रसिद्धेति तेन श्यामत्वेन करणभूतेन शस्त्र्यां प्रसिद्धेन देवदत्तागतश्यामत्वेन सह एकतयाऽध्यस्तेन परिच्छिद्यते। एवमपि परिच्छिद्यमाना नात्यर्थं सर्वतः=सर्वात्मना परिमीयते। न हि धर्मसामान्यानुगममात्राद् अर्थः सर्वात्मनाऽवधारयितुं शक्यत इति ॥ ३८१ ॥

तदेवं शस्त्रीगतेन श्यामत्वेन देवदत्ताय दानात्यन्तं परिच्छिद्यते, तदा नात्यन्तं मानमुपमानमिति व्युत्पत्या शस्त्री श्यामत्वगुणेन उपमानं संपद्यत इत्याह—शस्त्रीं स्वेनेति।

अस्यार्थः—अतः=नात्यन्ताय मानमुपमानमिति व्युत्पत्तिस्वीकारात्, स्वेन=निजेन, प्रसिद्धेन श्यामगुणेन असमाप्तगुणम्=अप्रसिद्धगुणम्, आश्रयान्तरम्—देवदत्तालक्षणम्, मिमाना परिच्छिन्दानां शस्त्रीं सिद्धेः=परिपूर्णगुणत्वसिद्धेर्हेतोरुपमानं प्रचक्षत इति।

निजेन समाप्तफलेन श्यामगुणेनासमाप्तगुणमाधारान्तरं देवदत्तालक्षणं परिच्छिन्दतीं शस्त्रीमुपमानमाहुः—सिद्धेरिति। परिपूर्णगुणत्वादित्यर्थः ॥ ३८२ ॥

एवं प्रकारद्वयेनोपमानोपमेयौ व्याख्याय सामान्यवचनत्वं विचार्यते। तथा हि निमित्ताभेदापन्नस्य निमित्तिनोऽभिधानादुपमानगतं वा तदभेदापन्नं निमित्तमुच्यते, तदुपमेयगतं वा, न तूभयगतं सकृदभिधातुं शक्यत इत्यनन्वयात् कथं सामान्यवचनत्वमित्याशङ्क्याह—

**उपमेये स्थितो धर्मः श्रुतोऽन्यत्रानुमीयते।**
**श्रुतोऽथवोपमानस्थ उपमेयेऽनुमीयते ॥ ३८३ ॥**

इह साधारणधर्मप्रयुक्त उपमानोपमेयभावः। तत्र च युगपदुभयगतत्वेन साधारणधर्मस्याभिधानं न सम्भवतीति शस्त्रीश्यामा देवदत्तेत्युक्ते श्रुतेनैव श्यामत्वेन

---

अयं भावः—निजेन समाप्तकालेन=परिपूर्णावयवेन, परिपूर्णेनेति यावत् श्यामगुणेन असमाप्तगुणम्=अप्रसिद्धगुणम्, अपरिपूर्णगुणम्, आधारान्तरं देवदत्तालक्षणं परिच्छिन्दतीं शस्त्रीं प्रागुक्तव्युत्पत्त्योपमानमाहुः—सिद्धेरिति। शस्त्र्याः परिपूर्णगुणत्वस्य प्राक् सिद्धत्वादित्यर्थ इति ॥ ३८२ ॥

एवमुपमानोपमेयौ प्रकारद्वयेन भाष्यव्याख्यानेन व्याख्याय उपमानसमासनिमित्तं सामान्यवचनत्वं विचार्यते। तथा हि—उपमानोपमेयभावनिमित्तेन श्यामत्वगुणेन प्रसिद्धेन सहाभेदापन्नस्य श्यामत्वगुणस्याप्रसिद्धस्य उपमेयगतस्य निमित्तिनः श्यामत्वगुणस्य वाक्ये समासे च उपात्तेन श्यामपदेनाभिधानात्, एतद्विपर्ययेण वा स्थितस्य तथाभूतस्य तेनाभिधानात्, उपमानगतं वा तदभेदापन्नम्=उपमेयगतश्यामत्वाभेदापन्नम्, उपमानोपमेयभावे निमित्तं श्यामत्वं श्यामपदेन उच्यते, उपमेयगतं वा तत्तेनोच्यते, न तूपमानोपमेयोभयगतं श्यामत्वमेकेन श्यामपदेन सकृदभिधातुं शक्यते, 'सकृदुच्चरितः शब्दः सकृदर्थं गमयति' इति न्यायात्, इत्येवं श्यामत्वगुणस्य युगपदुपमानोपमेययोरनन्वयात् कथं श्यामशब्दस्य सामान्यवचनत्वम्, तदभावे च कथं तेन सह शस्त्र्याः समास इत्याशङ्क्याह—उपमेये स्थित इति।

अस्यार्थः—यदि उपमेये स्थितः साधारणो धर्मः श्यामत्वादिः श्रुतः=शब्दोपात्तः, तदाऽन्यत्रोपमाने सोऽनुमीयते। अनुमानाकारश्च श्यामत्वमुपमानवृत्तिः, उपमेयवृत्तित्वात्, यन्नैवं तन्नैवं यथा—अनुभयवृत्तिर्धर्म इति।

अथवा उपमानस्थः श्रुतः साधारणो धर्म उपमेयेऽनुमीयते। अनुमानाकारश्च हेतुसाध्यविपर्ययेण पूर्ववदूह्य इति।

अयं भावः—इह=शस्त्रीश्यामा इत्यादौ साधारणधर्मप्रयुक्त उपमानोपमेयभावः। तत्र च युगपदुभयगतत्वेन साधारणधर्मस्य श्यामत्वादेरभिधानं न संभवति, 'सकृदुच्चरितः शब्दः सकृदर्थं गमयति' इति न्यायादिति शस्त्रीश्यामा देवदत्ता इत्युक्ते श्रुतेनैव शस्त्रीगतेन श्यामत्वगुणेन

समन्वयादश्रुतकल्पनायोगादेकत्रोपक्षयेऽपि शब्दस्यार्थान्तरेऽप्यनुमानाद् गुण-सम्बन्धावसाय इति यो दृष्टः समानो गुणस्तस्यैकतरोपक्षयेऽप्यभिधाने सामान्य-वचनत्वोपपत्तिः ॥ ३८३ ॥

तत्रोपमेये श्रुतेर्निदर्शनमाह—

**अधीयते ब्राह्मणवत् क्षत्रिया इति दृश्यते ।**
**उपमेयस्य भिन्नत्वाद् वचनं क्षत्रियाश्रयम् ॥ ३८४ ॥**

उपमेयानां क्षत्रियाणां बहुत्वाद् बहुवचनमत्र श्रूयमाणमध्ययनस्य साधारणस्य धर्मस्योपमेयगतत्वमावेदयते । सामर्थ्यात् पुनरुपमानैर्ब्राह्मणैरस्य सम्बन्धः प्रतीयते । उपमानस्य पुनरुपकारित्वात् तद्गतः श्रुतो धर्म उपमेये नियोगतोऽवगन्तव्य इति न तत्रोदाहृतम् ॥ ३८४ ॥

इत्थं चोभयगतत्वेनानभिधानेऽपि सामान्यवचनत्वमुपपद्यत इत्याह—

**साधारणं ब्रुवन् धर्मं क्वचिदेव व्यवस्थितम् ।**
**सामान्यवचनः शब्द इति सूत्रेऽपदिश्यते ॥ ३८५ ॥**

---

उपमेयभूताया देवदत्तायाः समन्वयात्=संबन्धात् अश्रुतकल्पनायोगात् श्यामाशब्दस्यैकत्र=देव-दत्तागतश्यामत्वे शस्त्रीगतश्यामत्वे वा उपक्षयेऽपि=क्षीणशक्तिकत्वेऽपि अर्थान्तरेऽप्यनुमानाद् गुणसंबन्धावसायः=श्यामत्वगुणसंबन्धानुमितिरिति यो दृष्टः समानो गुणस्तस्यैकतरोपक्षयेऽपि= एकत्रार्थे क्षीणशक्तिकत्वेऽपि अभिधाने=साधारणधर्माभिधायके शब्दे सामान्यवचनत्वोपपत्तिः, श्रुतानुमानाभ्यामधिगतस्यार्थस्य सामान्यधर्मरूपस्य वाचकत्वादिति ॥ ३८३ ॥

तत्रोपमेये साधारणधर्मश्रुतेर्निदर्शनम्=दृष्टान्तम्, आह—अधीयते ब्राह्मणवदिति ।

अस्यार्थः—'क्षत्रिया ब्राह्मणवदधीयते' इत्यत्र क्षत्रियरूपस्य उपमेयस्य भिन्नत्वाद् भेदव-त्त्वात्—अनेकत्वात्, बहुत्वादिति यावत् । क्षत्रियाश्रयम्=बहुत्वविशिष्टक्षत्रियरूपकर्तृनिमित्त-कम्—अधीयते इत्यत्र बहुवचनं दृश्यते इति ।

अयं भावः—'अधीयते ब्राह्मणवत् क्षत्रियाः' इत्यत्रोपमेयानां क्षत्रियाणां बहुत्वाद् बहुवचनमत्र=अधीयते इत्यत्र श्रूयमाणमध्ययनस्य साधारणधर्मस्य उपमेयक्षत्रियगतत्वमावेदयते । सामर्थ्यात् पुनः=उपमानेषु अध्ययनरूपसाधारणधर्मसंबन्धं विना उपमानोपमेयभावानुपपत्ति-सामर्थ्यात्तु उपमानैर्ब्राह्मणैरस्य=अध्ययनस्य संबन्धः प्रतीयते । उपमानस्य तु साधारणधर्मद्वारा इतरव्यावृत्तिरूपोपमेयोपकारसंपादकत्वात् तद्गतः=उपमानगतः श्रुतो धर्म उपमेये नियोगतः= नियमतोऽवगन्तव्य इति न तत्र=उपमानगतसामान्यमुदाहृतमिति ॥ ३८४ ॥

इत्थञ्च साधारणधर्मस्योभयगतत्वेनानभिधानेऽपि तद्वाचकशब्दस्य सामान्यवचनमुपपद्यते इत्याह—साधारणं ब्रुवन्निति ।

अस्यार्थः—क्वचिदेव उपमान एव, उपमेय एव वा, व्यवस्थितं साधारणं धर्मं ब्रुवन् शब्दः श्रुतानुमानाभ्यामुभयत्राधिगतस्य साधारणधर्मस्यैकत्राभिधानेऽपि "उपमानानि सामान्यवचनैः" इति सूत्रे सामान्यवचन इत्यपदिश्यत इति ।

अन्यतरगतत्वेनापि शब्देनाभिधीयमानो धर्मो वास्तवेन रूपेण भेदापरामर्शात् सामान्यमिति तमभिदधद् भवति सामान्यवचनः शब्दः। नहि यतः शब्दो वक्त्युभयगतत्वेनातः साधारणो धर्मो भवति। विशेषस्य ब्राह्मणादेः शब्देन सामान्येनाभिधानेऽपि साधारणत्वाभावात्। तस्माद् वास्तवेन रूपेण साधारणं श्यामत्वसामान्यमेकगतत्वेनाप्यभिधीयमानमन्यत्रानुमानात् साधारणमेवाभिहितं भवति ॥ ३८५ ॥

तदेवं गुणजातौ वृत्तः सामान्यवचनः। यदापि गुणः श्यामादिस्तत्रापि वर्तमानः श्यामादिः शब्दः सामान्यवचन एवेत्याह—

**नाभेदेन न भेदेन गुणो द्विष्ठोऽभिधीयते।**
**भिन्नयोर्धर्मयोरेकः श्रूयतेऽन्यः प्रतीयते ॥ ३८६ ॥**

द्वयोरुपमानोपमेययोर्वर्तमानो गुणः श्यामलक्षणो नाभेदेनान्वयिरूपावेशेनाभिधीयते शब्देन। यस्मादुपमानेनावच्छिद्यते उपमेयेन वा। तथा चैकगतत्वेन विशिष्ट इति नाभेदेनाभिधानम्, नापि सहजेन व्यावृत्तेनात्मनाभिधीयते।

---

अयं भावः—शब्देनोपमानोपमेयान्यतरगतत्वेनाभिधीयमानो धर्मो वास्तवेन रूपेण स्थितस्य भेदस्याभेदाध्यासवशेनापरामर्शात् सामान्यमिति तदभिदधद् भवति सामान्यवचनः शब्दः। यतः शब्दो यं धर्ममुभयगतत्वेन वक्ति, अतः स साधारणधर्मो नहि भवति, वर्णविशेषस्य ब्राह्मणादेः 'ब्राह्मणमानय' इत्यादौ ब्राह्मणशब्देन सामान्येनाभिधानेऽपि साधारणत्वाभावात्। तस्माद् वास्तवेन रूपेण साधारणं श्यामत्वसामान्यमेकगतत्वेनापि अभिधीयमानमन्यत्रानुमानादधिगतं साधारणमेवाभिहितं भवति। उभयगतत्वेन ज्ञातस्यैकत्राभिधानादिति ॥ ३८५ ॥

तदेवं श्यामगुणगतश्यामत्वजातौ वर्तमानः श्यामशब्दः सामान्यवचनो विचारतो वृत्तः समासः। यदाऽपि गुणः श्यामादिसाधारणो धर्मः, तत्रापि वर्तमानः श्यामादिशब्दः सामान्यवचन एव, उभयानुगतस्य श्रुतानुमानाभ्यामुभयानुगतत्वेन ज्ञातस्य च एकत्रस्थितस्य सामान्यभूतस्य वाचकत्वादित्याह नाभेदेन न भेदेनेति।

अस्यार्थः- -द्विष्ठः=उपमानोपमेयोभयगतः श्यामत्वादिर्गुणः साधारणधर्मभूतो वस्तुगत्या उभयत्र भिन्नोऽपि अभेदेन नाभिधीयते, भेदेन नाभिधीयते, किन्तु स्वरूपतोऽभिधीयते। किन्तु उपमानोपमेयगतयोर्भिन्नयोर्धर्मयोरेक उपमानगत उपमेयगतो वा श्रूयते, शब्दात् प्रतीयते, अन्यस्तु अनुमानादितः प्रतीयत इति।

अयं भावः—-द्वयोरुपमानोपमेययोर्वर्तमानः साधारणो गुणः श्यामलक्षणः अन्वयिरूपावेशेन=द्वयोः श्यामरूपयोरन्वयि यद्रूपं श्यामत्वं जातिरूपं तदाविष्टतया श्यामशब्देनाभेदेन नाभिधीयते। यस्मादयं साधारणो गुणः श्यामादिरुपमानेनावच्छिद्यते उपमानगतम्, उपमेयेन वाऽवच्छिद्यते उपमेयगतम्। तथा चैकगतत्वेन=उपमानोपमेययोरन्यतरगतत्वेन विशिष्टः=परस्परं विलक्षणः श्यामगुण उभयगत इति वाभेदेन तस्याभिधानं श्यामशब्देन, नापि सहजेन=स्वाभाविकेन परस्परं व्यावृत्तेन आत्मना=स्वरूपेणाभिधीयते।

न हि स्वालक्षण्येन भेदं शब्दाः स्पृशन्ति, सामान्यवचनत्वात् ।
नापि व्यावृत्तेनात्मना उपमायामुपयोगः ।

तस्माच्छ्यामशब्देव तावद् गुणोऽविशेषेण कथ्यते, अन्यतरसम्बन्धाद् अवच्छिद्यमानोऽपि सामर्थ्यादितरगतत्वेनावधार्यत इति भवति तच्छब्दः सामान्यवचनः ॥ ३८६ ॥

एवं तात्पर्यतो भाष्यं व्याख्याय पाठपूर्वकं साक्षाद् व्याचष्टे—

**नात्यन्ताय मिमीते यत् सामान्ये समवस्थितम् ।**
**सादृश्यादुपमेयार्थः समीपे परिकल्प्यते ॥ ३८७ ॥**

यदत्यन्ताय मेयशरीरं परिच्छिनत्ति तन्मानं प्रस्थादि जात्यादि वा व्याख्यातम् । तत्समीपे यत् तदुपमानम्, अत्र च तदित्यनेन प्रज्ञापनीयत्वेनाधिकृतत्वात् प्रधानमुपमेयं प्रत्यवमृश्यते । तस्योपमेयस्य यत् समीपे, तदुपमानम् । सामीप्यं च धर्मप्रत्यासत्ति-

---

न हि स्वालक्षण्येन=स्ववाच्यव्यक्तेरसाधारणधर्मरूपेण परस्परस्य भेदं शब्दा अभिधया स्पृशन्ति=बोधयन्ति, सामान्यवचनत्वात् ।

नापि परस्परं व्यावृत्तेनात्मना उपमायां श्यामादिगुणस्योपयोगः । तथा सति साधारणधर्मत्वस्य उपमाप्रयोजकस्य क्षतेः ।

तस्माच्छ्यामशब्देन तावत् श्यामगुणोऽविशेषेण उभयत्र कथ्यते । उपमानोपमेययोरन्यतरसंबन्धात् श्रुत्या अवच्छिद्यमानोऽपि सामर्थ्याद् उपमानोपमेयभावसामर्थ्यादितरगतत्वेनावधार्यत इति भवति तच्छब्दः=श्यामशब्दः सामान्यवचन इति ॥ ३८६ ॥

एवमुपमानलक्षणपरं भाष्यं तात्पर्यतो व्याख्याय पाठपूर्वकं तत् साक्षाद् व्याचष्टे—नात्यन्ताय मिमीत इति ।

अस्यार्थः—सामान्ये—उपमानोपमेययोरुपमानोपमेयभावरूपसंबन्धहेतौ साधारणे धर्मे, समवस्थितम्=तदपेक्षं यद् अत्यन्ताय यन्न मिमीते, तत्समीपे, तस्य उपमेयस्य यत्समीपे धर्मतस्तदुपमानम् ।

अत्र पूर्वार्धे सकृत्पठितं यदिति पदं तन्त्रेणावृत्त्या वा मानक्रियायाः कर्तृतया कर्मतया च संबध्यते । उपमानलक्षणभाष्यगतस्य तत्समीपे इति पदस्य व्याख्यानमुत्तरार्धे—सादृश्यादिति ।

उपमेयार्थः सादृश्यात्=उपमानसादृश्यात्, समीपेऽर्थे निरूपकं परिकल्प्यते । तथा च तत्समीपे इत्यस्य—तस्य उपमेयस्य सादृश्यात् समीपे यत् तदुपमानमित्यर्थ इति ।

अयं भावः—यदत्यन्ताय मेयशरीरम्=परिमेयशरीरं प्रमेयशरीरं वा परिच्छिनत्ति तन्मानम्=प्रस्थादि जात्यादि वा तत्र प्रस्थादिपरिमाणम्, जात्यादिप्रमाणम् । एतच्च प्राग्व्याख्यातम् । "तत्समीपे यत्तदुपमानम्" अत्र च=अस्मिन् भाष्यवाक्ये च तदित्यनेन प्रज्ञापनीयत्वेनाधिकृतत्वात् प्रधानमुपमेयं प्रत्यवमृश्यते । तस्योपमेयस्य यत्समीपे मानं तदुपमानम् । उपमेयसामीप्य-

क्तम्। तथा च सादृश्येन परिच्छेदकत्वात् सामान्ये साधारणे धर्मे सम्बन्धहेतावव-स्थितं तदपेक्षमुपमानं नात्यर्थं परिच्छिनत्ति।

यो हि साधारणो धर्मस्तावतोपमेयस्यात्र परिच्छेदो विधीयते उपमानेन, न त्वन्येन धर्मेण। शस्त्र्या हि श्यामगुणतयावच्छिद्यते देवदत्ता, न तु संस्त्यानादिरूपेणेत्य-परिपूर्णमिदं मानमुपमेयसमीपवर्ति ॥ ३८७ ॥

तत्समीप इत्यस्य भाष्यस्य व्याख्यानान्तरमाह—

**मानं प्रति समीपं वा सादृश्येन प्रतीयते।**
**परिच्छेदाद्धि सादृश्यमिह मानोपमानयोः ॥ ३८८ ॥**

इह यदा प्रधानानुग्रहाय गुणो व्याप्रियते, तदास्योपसर्जनत्वात् परामर्शो मा भूत्; इह तु मेयं प्रति परिच्छेदोपयोग्यपि मानं स्वरूपे लक्ष्यमाणे प्रधानमिति तदेव तच्छब्देन परामृश्यते।

तथा च मानस्य यत्समीपं तदुपमानम्। सामीप्यं च समानधर्मयोगात्। अस्ति चेह सादृश्यं परिच्छेदहेतुत्वं नाम मानोपमानयोः। एकमत्यन्ताय परिच्छेदकम्।

---

क्षोपमाने साधारणधर्मसंनिधानप्रयुक्तम्। तथा चोपमानस्य स्वसादृश्येन उपमेयपरिच्छेदकत्वात् सामान्ये साधारणे धर्मे उपमानोपमेयभावसंबन्धहेतौ अवस्थितम्—तदपेक्षम् उपमानं नात्यर्थमुप-मेयार्थं परिच्छिनत्ति।

यो हि साधारणो धर्मस्तावतैवात्रोपमेयस्य परिच्छेदो विधीयते उपमानेन, न त्वन्येन धर्मेण। शस्त्र्या हि श्यामगुणतयाऽवच्छिद्यते देवदत्ता, न तु संस्त्यानादिरूपेणेत्यपरिपूर्णमिदं मान-मुपमेयसमीपवर्ति इति ॥ ३८७ ॥

तत्समीपे इति भाष्यपदस्य उपमेयसमीप इत्यर्थं व्याख्याय मानस्य समीपे इति व्याख्या-नान्तरमाह—मानं प्रति समीपं वा इति।

अस्यार्थः—वा=अथवा, मानं प्रतिपरिच्छेदहेतुत्वरूपेण सादृश्येन समीपमुपमानं प्रतीयते, मानोपमानयोरुभयोरपि मेयरिच्छेदहेतुत्वात्। तत्र मानमत्यन्ताय परिच्छेदहेतुः, उप-मानं तु नात्यन्तायेति विशेषः। उपमाने मानसामीप्यप्रयोजकं सादृश्यं मेयपरिच्छेदहेतुकमिति दर्शयति उत्तरार्धेन—परिच्छेदाद्धि इति।

अस्यार्थः—इह शस्त्री श्यामा इत्यादौ समासे वाक्ये वा मानोपमानयोः सादृश्यं मेय-परिच्छेदात्—मेयपरिच्छेदहेतुकमिति।

अयं भावः—इह=शाब्दे व्यवहारे यदा गुणः प्रधानानुग्रहाय व्याप्रियते, तदाऽस्य=गुणस्य उपसर्जनत्वात् सर्वनाम्ना परामर्शो मा भूत्, इह तु=तत्समीपे इति भाष्यपदे तु मेयं प्रति परिच्छेदोपयोग्यपि मानं नोपसर्जनम्, किन्तु स्वरूपे लक्ष्यमाणे=स्वरूपस्य लक्ष्यमाणत्वेन प्रधान-मिति तदेव=मानमेव तत्समीपे इति भाष्यपदे तच्छब्देन परामृश्यते।

तथा च मानस्य यत्समीपं तदुपमानम्। तत्सामीप्यञ्च तस्य तत्समानधर्मयोगात्। अस्ति चेह परिच्छेदहेतुत्वरूपं सादृश्यं मानोपमानयोः। तत्रैकम्=मानम्, अत्यन्ताय परिच्छेदकम्।

अपरं नात्यन्तायेति भेदः ॥ ३८८ ॥

एवमुपमानलक्षणार्थं 'मानं हि नामानिर्ज्ञातज्ञानार्थमुपादीयते—अनिर्ज्ञातमर्थं ज्ञास्यामीति। तत्समीपे यन्नात्यन्ताय मिमीते तदुपमानम्' इति भाष्यं व्याख्यातम्। अतः पूर्वं तूपमानलक्षणप्रस्तावहेतुः प्रश्नभाष्यम्, 'किं यदेवोपमेयम्, आहोस्विदन्यदुपमानमन्यदुपमेयम्' इत्यस्ति।

तद् व्याचष्टे—

**एकजातिव्यपेक्षायां तदेवेत्यवसीयते।**
**भेदस्यैव व्यपेक्षायामन्यदेवेति गम्यते॥ ३८९ ॥**

इह यथाप्रत्ययमर्था व्यवहार्यतामापद्यन्ते। तत्र यदोपमानोपमेययोरभिन्नमन्वयिरूपं व्यक्तिभेदतिरोधानेनैकगुणजात्यात्मकमभिसंहितम्, तदा तदेकरूपाध्यासादनयोरभेदो निश्चीयत इति तदेवेत्युच्यते।

यदा तु निजो भेदो व्यावृत्तिर्व्यक्तिरूपनिरूपणेनाभिसंहिता, तदार्थान्तरत्वस्यैव प्रसिद्धस्यावधारणादन्यदेवेति भणितिः। किमुपमानत्वेऽत्यन्ताभेद उपयुज्यते, किं वात्यन्तभेद इत्यभिप्रायः॥ ३८९ ॥

---

अपरम्=उपमानं नात्यन्ताय परिच्छेदकम्। यत् किंचित् समानधर्मपुरस्कारेणैव परिच्छेदकत्वादिति विशेष इति॥ ३८८ ॥

तदेवमुपमानलक्षणार्थं प्रवृत्तम्—"मानं हि नामानिर्ज्ञातज्ञानार्थमुपादीयते—अनिर्ज्ञातमर्थं ज्ञास्यामि" इति। "तत्समीपे यन्नात्यन्ताय मिमीते तदुपमानम्" इति भाष्यं व्याख्यातम्। अतो भाष्यात् पूर्वं तु उपमानलक्षणप्रस्तावहेतुः=उपमानलक्षणप्रसञ्जनहेतुः प्रश्नभाष्यम्—"किं तदेवोपमानं तदेवोपमेयम्, आहोस्विदन्यदुपमानम्, अन्यदुपमेयम्" इत्यस्ति। तद् भाष्यं व्याचष्टे—एकजातिव्यपेक्षायाम्।

अस्यार्थः—एकजातिव्यपेक्षायाम्=एकस्या जातेर्व्यक्त्योरभेदप्रत्यये निमित्तत्वेन व्यपेक्षायाम्, तदेवेत्यभिधीयते—तदेवेति व्यक्त्योरभेदेनाभिधानं भवति। तदेवेत्यवसीयत इति पाठेऽवसायो निश्चयः। व्यक्त्योर्भेदेन व्यवहारे व्यक्त्योर्भेदस्यैव निमित्तत्वेन व्यपेक्षायां तु अन्यदेवेति गम्यत इति।

अयं भावः—इह=शब्दे व्यवहारे अर्था यथाप्रत्ययं व्यवहार्यताम्=व्यवहारगोचरताम् आपद्यन्ते। तत्र यदोपमानोपमेययोरभिन्नमन्वयिरूपम्=अनुगतं साधारणधर्मरूपं व्यक्तिभेदतिरोधानेनैकगुणजात्यात्मकमभिसंहितम्=विवक्षितम्, तदा तदेकरूपाध्यासात्=तदेकरूपाध्यारोपाद् अनयोः=उपमानोपमेयव्यक्त्योः अभेदो निश्चीयत इति तदेवेत्युच्यते।

यदा तु निजो भेदो व्यावृत्तिरूपो व्यक्तिस्वरूपनिरूपणेनाभिसंहितः, तदा तयोरर्थान्तरत्वस्यैव प्रसिद्धस्यावधारणादन्यदेवेति प्रयोगः। किमुपमानत्वे उपमानस्योपमेयेन सह अत्यन्ताभेद उपयुज्यते, किं वा तस्य तेन सहात्यन्तभेद इत्यभिप्राय इति॥ ३८९ ॥

ननु चोपमानमुपमेयमिति साधनविभागानुरोधी व्यपदेश एवानयोर्भेदं दर्शयति । कर्मकरणसाधनौ हि प्रत्ययौ भिन्नार्थाविति कथमभेदाशङ्केति ।

एतदभ्युपगच्छति—

**कर्मत्वं करणत्वं च भेदेनैवाश्रितं यतः ।**
**अत्यन्तैकत्वविषयान्न स्यात् तेनात्र संशयः ॥ ३९० ॥**

प्रत्ययाभ्यां विभागेन यस्मात् कर्मत्वं करणत्वं चोपात्तम्, तस्मादत्र निरस्ताशेषभेदनिबन्धनं वास्तवं यदेकत्वं तत् संशयस्य पक्षो विषयो नोपपद्यत इति भिन्नयोरेव सामान्यधर्मोपाधिकमेकत्वं संशयविषयो न विरुध्यते ॥ ३९० ॥

दृश्यते चैवंविधेन भिन्नानामपि काल्पनिकेनाभेदेन व्यवहार इत्याह—

**भेदेन तुल्यरूपत्वाच्छालींस्तानिति दृश्यते ।**
**जात्यभेदात् स एवायमिति भिन्नोऽभिधीयते ॥ ३९१ ॥**

---

ननु चोपमानमुपमेयमिति कर्मत्वकरणत्वाभ्यां साधनविभागानुरोधी व्यपदेश एवानयोः= उपमानोपमेययोर्भेदं दर्शयति । कर्मकरणसाधनौ हि यल्ल्युट्प्रत्ययौ भिन्नार्थाविति कथमत्राभेदाशङ्केति ।

एतदभ्युपगच्छति—कर्मत्वं करणत्वञ्चेति ।

अस्यार्थः—यतः कर्मत्वं करणत्वञ्च 'यल्ल्युट्'प्रत्ययाभ्यां भेदेनैव=विभागेनैव आश्रितम् =उपात्तम्, तेन अत्र=उपमानमुपमेयमित्यत्र, भेदाभेदसंशयो न स्यात्, भेदस्यावधृतत्वात् । भेदाभेदसंशयस्य अत्यन्तैकत्वविषयकत्वाच्चेति । अत्र कारिकायाम्-अत्यन्तैकत्वविषयादित्यत्र भावप्रधानो निर्देशः ।

अयं भावः—यस्मादुपमानमुपमेयमित्यत्र यल्ल्युट्प्रत्ययाभ्यां विभागेन=भेदेन कर्मत्वं करणत्वञ्चोपात्तम्, तस्मादत्र = उपमानमुपमेयमित्यत्र निरस्ताशेषभेदनिबन्धनम् = दूरीकृताखिलभेदनिमित्तं वास्तवं यदेकत्वं तत्संशयस्य पक्षः = एकतरकोटिभूतं विषयो नोपपद्यत इति अत्यन्तैकत्वविषयादित्युक्त्या भिन्नयोरेव सामान्यधर्मोपाधिकमेकत्वं स्थाणुर्वा पुरुषो वा इति संशयविषयीभूतं न विरुध्यत इति ॥ ३९० ॥

दृश्यते चैवंविधेन वास्तवेन भेदेन भिन्नानामपि तुल्यरूपत्वजात्यभेदाभ्यां काल्पनिकेनाभेदेन व्यवहार इत्याह—भेदेन तुल्यरूपत्वादिति ।

अस्यार्थः—भेदेनावधृतानपि शालीन् तुल्यरूपत्वात् तानेव अभुञ्ज्महि इति व्यवहारो दृश्यते । भिन्नोऽपि पटादिः जात्यभेदात्=जात्येकत्वात्, स एवायं पट इति अभिधीयत इति । एवञ्चोपमानोपमेययोर्जातिभेदेऽपि साधारणधर्मप्रयुक्ततुल्यरूपत्वाद् अभेदव्यवहारोपपत्तिः । तथा चेयं कस्यचित् कविनिबद्धस्य प्रौढोक्तिः—

किमिह सखे परदेशे गमयसि दिवसानुपार्जने सक्तः ।
वर्षति मौक्तिकधारां तव भवनद्वारि काञ्चनी लतिका ॥ इति ।

अवधृतात्मभेदा अपि शालयो रूपसामान्यापहृतभेदैः प्रत्ययैरभेदेनावसाय त एव भुज्यन्त इति व्यपदिश्यते।

एवम् 'तान्येव वासांसि परिधीयन्त' इति च। एतच्च सादृश्यपर्यायं रूपसामान्यमभेदनिबन्धनमुक्तं शास्त्रे, 'रूपसामान्याद् वा' इत्याकरवार्त्तिके। तदेवोपपादयितुं 'तानेव शालीन् भुञ्ज्महे ये मधुरायां दृष्टाः' इति दृष्टान्तितम्। न केवलं च सादृश्यमात्रनिमित्तोऽभेदावसायो यावज्जात्यभेदनिबन्धनोऽपि। तथा ह्येकसामान्याध्यासिता व्यक्तयोऽभेदेन व्यपदिश्यन्ते। 'चत्वारो ब्राह्मणा उदकुम्भानाहरेयुः' इत्यादौ।

अत्र हि माठरादिभेदेऽपि ब्राह्मण्येनाभेद उपात्तः। एवमिहाप्युपमानोपमेययोः सदृशधर्मनिमित्तया प्रत्यासत्त्या तद्गतैकजातिसमावेशनाद् वाऽभेदस्य युज्यते संशयविषयता ॥ ३९१ ॥

भेदस्यापि युज्यत इत्याह—

**कथं ह्यवयवोऽन्यस्य स्यादन्य इति चोच्यते।**
**अत्यन्तभेदे नानात्वं यत्र तत्त्वं न विद्यते ॥ ३९२ ॥**

---

अत्र अश्रुबिन्दवो मौक्तिकधारात्वेन नायिका चोपमानभूता काञ्चनलतिकात्वेन अभेदेन निर्दिष्टा। उपमानोपमेययोर्भेदेन निर्देशश्चोपमाऽलङ्कारे प्रसिद्धः—'चन्द्र इव मुखम्' इति। एवञ्च द्वयमपि=उपमानोपमेययोर्भेदोऽभेदश्चेति अभ्युपगतम्।

प्रकृतपद्यस्यायं भावः। अवधृतात्मभेदा अपि=निर्धारितस्वरूपभेदा अपि शालयो रूपसामान्यापहृतभेदैः=संस्थानसादृश्याविज्ञातभेदैः प्रत्ययैरभेदेनावसाय=निश्चित्य त एव शालयो भुज्यन्त इति व्यपदिश्यते=व्यवह्रियते।

एवम् "तान्येव वासांसि परिधीयन्ते" इति च। एतच्च सादृश्यपर्यायं रूपसामान्यमभेदनिमित्तमुक्तं शास्त्रे—"रूपसामान्याद् वा" इत्याकरवार्तिके। तदेवोपपादयितुम्=रूपसामान्यप्रयुक्तमभेदमेवोपपादयितुम्—"तानेव शालीन् भुञ्ज्महे ये मधुरायां दृष्टाः" इति सिद्धान्तितम्। न केवलं सादृश्यमात्रनिमित्तकोऽभेदावसायो यावज्जात्यभेदनिमित्तकोऽपि। तथा हि—एकसामान्याध्यासिताः=एकजात्याविष्टा व्यक्तयोऽभेदेन एकरूपेण व्यपदिश्यन्ते घटा इति। "चत्वारो ब्राह्मणा उदकुम्भानाहरेयुः" इत्यादौ च।

अत्र हि माठरत्वकौण्डिन्यत्वादिना भेदेऽपि ब्राह्मणत्वेन रूपेणाभेद उपात्तः। एवमिहापि उपमानोपमेययोः सदृशधर्मनिमित्तिकया प्रत्यासत्त्या तद्गतैकजातिरूपसदृशधर्मसमावेशनाद्वा उपमानोपमेययोरभेदस्य संशयविषयता युज्यत इति ॥ ३९१ ॥

अथ तयोर्भेदस्यापि संशयविषयता युज्यत इत्याह—कथं हीति।

अस्यार्थः—"हलन्ताच्च' (पा० १।२।१०) इति सूत्रे भाष्ये इदं चोदितम्—"कथं हि इको नाम हल् अन्तः स्यादन्यस्यान्यः" इति। अनेन भाष्येण—कथं हि अन्यस्यान्योऽवयवः स्यादिति च=तु अत्यन्तभेदे नानात्वम्=अन्यत्वमुच्यते, यत्र तत्त्वम्=अभेदो न विद्यते इति।

हलन्ताच्च ( पा० १।२।१० ) इत्यत्रान्तशब्दमवयवमाश्रित्य हल् अन्ते यस्येकः तस्मादिति व्याख्यायमाने चोदितमिदम्। 'कथं हि इको नाम हल् अन्तः स्यादन्यस्यान्यः' इति। अत्र चावयवावयविनोरन्यत्व एवोपपत्तिरित्यत्यन्तभेदोऽयं विवक्षितः।

तथा ह्यत्यर्थेन ययोर्भेदो यत्र न कथञ्चित् तत्त्वमभेदः सम्भवति। तस्मिन् सति यन्नानात्वमत्यन्तं तदभिसन्धायैतदुक्तमन्यस्यान्य इति।

उभाभ्यामन्यशब्दाभ्यामैकान्तिकमन्यत्वं निर्दिशति। अवयवस्त्ववयविनः कथञ्चिदनन्यः, समवायेन तिरोहितभेदत्वात्। वर्णस्तु वर्णान्तरस्यानारम्भकत्वात् सर्वथैव भिन्नो नावयवो युज्यते।

तदेवमत्र यथाकथञ्चिदनन्यत्वेऽप्यवयवस्यात्यन्तभेदाभिप्रायमनुपपत्तिरुक्ता। एवमिहाप्युपमानोपमेययोर्जात्यभेदाद् रूपसामान्याद्वा कथञ्चिदभेदेऽपि तदनादरेणात्यन्तभेदमाश्रित्यान्यदेवेति संशयविषयता कथिता ॥ ३९२ ॥

तत्रावयवावयविनोरेवाभेदसम्भवो भिन्नयोरपि, न तु वर्णयोः परस्परमनारम्भकयोरित्याह—

अभेदस्य विवक्षायामेकत्वं सङ्घसङ्घिनोः।
सङ्घिनोर्न त्वभेदोऽस्ति तथान्यत्वमुदाहृतम् ॥ ३९३ ॥

---

तेनात्रोपमानोपमेययोश्चन्द्र इव मुखमित्यादौ भेददर्शनेन काञ्चनी लतिका इत्यादौ नायिकायां प्रयोगे रूपके अभेददर्शनेन अनयोर्भेदाभेदसत्त्वे अत्यन्तभेदाभावेनान्यत्वे संशय इति।

अयं भावः—'हलन्ताच्च' ( पा० १।२।१० ) इत्यत्र अन्तशब्दवाच्यमवयवमाश्रित्य हल् अन्ते यस्येकः तस्मादिति व्याख्यायमाने इदं चोदितं भाष्ये—"कथं हि इको नाम हल् अन्तः स्यादन्यस्यान्यः' इति। अत्र चावयवावयविनोरन्यत्वे एवोपपत्तिर्न त्वेकत्वे, भेदाधिष्ठानकत्वादवयवावयविभावस्येति अत्यन्तभेदोऽत्र भाष्ये हलिकोर्विवक्षितः।

तथा हि—अत्यर्थेन=अत्यन्तं ययोर्भेदः, यत्र न कथञ्चित् तत्त्वमभेदः संभवति, तस्मिन् सति यदत्यन्तं नानात्वं तदभिसंधायैतदुक्तमन्यस्यान्य इति।

अत्रोभाभ्यामन्यशब्दाभ्यामैकान्तिकम्=नियतम् अन्यत्वं निर्दिशति भाष्यकारः। अवयवस्तु अवयविनः कथञ्चिदनन्यः=अभिन्नः, समवायेन तिरोहितभेदत्वात्। वर्णस्तु वर्णान्तरस्यानारम्भकत्वात् सर्वथैव भिन्नः=आत्यन्तिकभेदवान् नावयवो युज्यते।

तदेवमवयवस्य यथाकथञ्चिदवयविनोऽभिन्नत्वेऽपि वर्णस्य वर्णान्तरानवयवत्वेनात्र भाष्येऽत्यन्तभेदाभिप्रायेणावयवार्थकान्तपदप्रयोगानुपपत्तिरुक्ता। एवमिहापि उपमानोपमेययोर्जात्यभेदाद् रूपसामान्याद्वा कथञ्चिदभेदेऽपि तदनादरेण तयोरत्यन्तभेदमाश्रित्य—अन्यदेवेति भेदस्य संशयविषयता कथिता भाष्ये। तत्र जात्यभेदे उपमानोपमेयभावो यथा—बाहुलेय इव शाबलेयः। रूपसामान्यादभेदे—गौरिव गवय इति ॥ ३९२ ॥

सङ्घोऽवयवी, सङ्घिनोऽवयवाः, तेषां समवायादपोदितभेदानां यदा विवक्षा, तदाऽभेद एवाभिमतः। सङ्घः समुदायो वा वनादिः। तद्वन्तः समुदायिनो वृक्षादयः, तेषां समुदायेन सहाभेदेन अव्यतिरेकेऽभिधित्सिते वनं वृक्षा ब्राह्मणाः सङ्घ इत्येकत्वमभेदो भवति। तथाहि—वनादिशब्दाः सङ्घात्मना तान् समुदायिनः प्रतिपादयन्ति। वृक्षादयस्तु जातिभेदानुरागेण तानेवेत्यस्ति भिन्ननिमित्तप्रयुक्तयोः शब्दयोरेकत्र वृत्तिः सामानाधिकरण्यम्।

यदा तु भेदविवक्षात्र, तदा वनादिशब्दाः सङ्घलक्षणधर्ममात्रवचना इति तदुपजनितव्यतिरेकाणां सङ्घिनामभिधानम्—वृक्षाणां वनम्, ब्राह्मणानां सङ्घ इति। एवं सङ्घसङ्घिनोर्भेदाभेदौ। सङ्घिनोः—समुदायिनोस्तु न कदाचिदभेदो भवति, असम्बन्धात्।

तथा हि शिंशपायाः पलाशस्य वा नाभेदप्रतिपत्तिः। माठरस्य कौण्डिन्यस्य च। एवं वर्णा अपि परस्परमनारम्भात् सङ्घिनोऽत्यन्तभिन्नाः परस्परेणाभेदं न योग्याः प्रतिपत्तुमित्यन्यत्वमेव कथितम्। तथा च भेदाभेदावन्योन्यानुविद्धौ शुद्धौ च सम्भवत

---

तत्रावयवावयविनोरेव भिन्नयोरपि अभेदसंभव आरम्भकत्वात्, न तु वर्णयोः परस्परमनारम्भकयोरित्याह—अभेदस्य विवक्षायामिति।

अस्यार्थः—अभेदस्य विवक्षायां सङ्घसङ्घिनोः=अवयवावयविनोः, तत्र संघोऽवयवी, संघिनोऽवयवाः। एकत्वमभेदो व्यपदिश्यते। वनम्, वृक्षाः, ब्राह्मणाः, सङ्घः इत्यादि। सङ्घिनोर्द्वयोरवयवयोस्तु परस्परमभेदो नास्ति, तथा सत्येव हलिकोः परस्परमन्यत्वमुदाहृतं हलन्ताच्च ( पा० १।२।१० ) इति सूत्रे भाष्ये।

अयं भावः—सङ्घोऽवयवी, सङ्घिनोऽवयवाः, तेषां समवायादपोदितभेदानाम्=तिरोहितभेदानाम्। यदाऽभेदविवक्षा, तदा तयोरभेद एवाभिमतः। सङ्घः समुदायो वा वनादिः। तद्वन्तः समुदायिनो वृक्षादयः, सङ्घरूपवनावयवत्वात्। तेषां समुदायेन वनादिना सहाभेदेन अव्यतिरेके=अभेदे अभिधित्सिते—वनं वृक्षाः, ब्राह्मणाः सङ्घ इत्येकत्वमभेदरूपं भवति। तथा हि—वनादिशब्दाः सङ्घात्मना तान्=वृक्षादिरूपान् समुदायिनः प्रतिपादयन्ति। वृक्षादयस्तु शब्दा जातिभेदानुरागेण=आम्रत्वादिरूपजातिविशेषोपधानेन तानेवेत्यस्ति भिन्ननिमित्तप्रयुक्तयोः=भिन्ने भिन्ने प्रवृत्तिनिमित्ते प्रयुक्तयोः शब्दयोरेकत्रार्थे वृत्तिरूपं सामानाधिकरण्यम्।

यदा तु भेदविवक्षाऽत्र=वनवृक्षादिषु यथायथं सङ्घसङ्घिरूपेषु, तदा वनादिशब्दाः सङ्घलक्षणधर्ममात्रवचनाः=समूहरूपधर्ममात्रवाचिन इति तदुपजनितव्यतिरेकाणाम्=समूहरूपधर्मोत्पादितभेदानाम्, सङ्घिनामभिधानम्=वृक्षाणां वनम्, ब्राह्मणानां संघ इति। एवं सङ्घसङ्घिनोर्भेदाभेदौ। सङ्घिनोः समुदायिनोऽस्तु परस्परं न कदाचिदभेदो भवति, मिथोऽसंबन्धात्।

तथा हि—शिंशपावृक्षस्य पलाशवृक्षस्य वा=च नाभेदप्रतिपत्तिः। माठरस्य कौण्डिन्यस्य च ब्राह्मणविशेषस्य। एवं वर्णा अपि सङ्घिनः परस्परमनारम्भाद् अत्यन्तभिन्नाः परस्परेण सहाभेदं न योग्याः प्रतिपत्तुमित्यन्यत्वमेव कथितं हलन्ताच्च ( पा० १।२।१० ) इति सूत्रे भाष्ये पूर्वोदाहृते।

इतीह शुद्धौ विहायेतरौ विवक्षिताविति भेदाश्रयः प्रत्ययभेदोऽभेदाश्रयश्चैकत्वेन प्रश्न उपपद्यत एव ।

अथवोपमानमुपमेयमिति यत् प्रसिद्धं लोके तत् किमेकमुतानेकमिति विचार-विषयत्वेन प्रसिद्धभेदानुवादः ।। ३९३ ।।

एतदनन्तरम् 'किञ्च भोः' इत्युपक्रम्येदं भाष्यम् "यदि यदेवोपमानं तदेवोपमेयं क इहोपमार्थो गौरिव गौः, अथाप्यन्यदुपमानमन्यदुपमेयं क इहोपमार्थो गौरिवाश्वः" इति ।।

एतत् क्रमेण व्याचष्टे—

**तत्राभिन्नव्यपेक्षायामुपमार्थो न विद्यते ।**
**यो हि गौरिति विज्ञाने हेतुः सोऽस्ति गवान्तरे ।। ३९४ ।।**

इह येन धर्मेण यः प्रसिद्धः, तेनाप्रसिद्धं ज्ञापयन्नौपम्यमनुभवति । अभिन्नस्य तु सामान्यस्योपमाहेतुत्वेनापेक्षायां न किञ्चित् फलमुत्पश्यामः ।

तथा हि—गौरिव गौरिति यदेव जातिरूपमुपमानावसाये निबन्धनम्, तदेवो-पमेयाभिमतेऽपीत्यज्ञातस्योपमेयस्य ज्ञापनाभावान्नोपमानोपमेयभावः ।

---

तथा च भेदाभेदौ अन्योऽन्यानुविद्धौ=समानाधिकरणौ शुद्धौ चेति द्विधा संभवत इतीह शुद्धौ=आत्यन्तिकौ विहायेतरौ=परस्परं संकीर्णौ विवक्षिताविति भेदाश्रयः प्रत्ययभेदः=उपमानमिति, उपमेयमिति । अभेदाश्रयश्चैकत्वेन प्रश्नः=किं यदेवोपमानं तदेवोपमेयमिति उपपद्यत एव ।

अथवोपमानमुपमेयमिति यल्लोके प्रसिद्धं तत् किमेकमुतानेकमिति विचारविषयत्वेन प्रसिद्ध-भेदानुवादः, न तु संकीर्णौ भेदाभेदौ तत्र व्यवस्थापयितुमेवं संशय उपन्यस्त इति ।। ३९३ ।।

एतद् भाष्यानन्तरम्—"किञ्च भोः" इत्युपक्रम्येदं भाष्यम्—"यदि यदेवोपमानम्, तदे-वोमेयम्, क इहोपमार्थो गौरिव गौः, अथाप्यन्यदुपमानमन्यगुपमेयं क इहोपमार्थो गौरिवाश्वः" इति ।

एतद् भाष्यं क्रमेण कारिकाद्वयेन व्याचष्टे—तत्राभिन्नव्यपेक्षायामिति ।

अस्यार्थः—तत्र=उपमानोपमेयभावे, अभिन्नव्यपेक्षायाम्=अभिन्नस्य धर्मस्य निमित्ततया व्यपेक्षायाम्, उपमार्थः—उपमानोपमेयभावस्य प्रयोजनं किमपि नास्ति, 'गौरिव गौः' इत्यत्र प्रसिद्धेन धर्मेण अप्रसिद्धस्य ज्ञापनाभावात् ।

तथा हि—यो हि 'गौः' इति उपमानविज्ञाने हेतुर्जातिरूपः स एव गवान्तरेऽपि उपमेयत्व-विज्ञानेऽस्तीत्यज्ञातस्योपमेयस्य ज्ञापनाभावान्नोपमानोपमेयभाव इति ।

अयं भावः—इह=व्यवहारे येन धर्मेण यः प्रसिद्धः, सोऽप्रसिद्धं वस्तु तेन धर्मेण ज्ञापय-न्नौपम्यम्=उपमानत्वम् अनुभवति । अभिन्नस्य तु सामान्यधर्मस्य उपमाहेतुत्वेनापेक्षायां न किञ्चित् फलमुत्पश्यामः=उत्प्रेक्षामहे ।

तथा हि—गौरिव गौरित्यत्र यदेवं गोत्वं जातिरूपमुपमानावसाये=गोरुपमानत्वनिश्चये निमित्तम्, तदेवोपमेयाभिमतेऽपि=तदेव गवान्तरस्योपमेयत्वाधिगमेऽपि इत्याज्ञातस्योपमेयस्य ज्ञापनाभावान्नोपमानोपमेयभावः ।

एवञ्च गोगवययोरप्यन्वयिधर्ममात्रापेक्षायां नोपमार्थ इत्युक्तं भवति ॥ ३९४ ॥

अत्यन्तभेदेऽपि नोपमार्थं इति विवृणोति—

**व्यावृत्तानां विशेषाणां व्यापारे तु विवक्षिते ।**
**न कश्चिदुपकारोऽस्ति बुद्धेर्बुद्ध्यन्तरं प्रति ॥ ३९५ ॥**

अन्वयिना धर्मेणाननुगतानामप्यत्यन्तव्यावृत्तानां भेदानामपेक्षणे नोपकारः कश्चिदुपमानप्रतीतेरुपमेयप्रतीतौ धर्मसामान्यमन्तरेण समन्वयाभावाद् गोऽश्वयोः ॥ ३९५ ॥

अत्र हि परिहारभाष्यम्—'एवं तर्हि यत्र किञ्चित् सामान्यं कश्चिच्च विशेषस्तत्रोपमानोपमेयभावः' इति ।

एतद् व्याचष्टे—

**किञ्चिद् यत्रास्ति सामान्यं यदि भेदाश्च केचन ।**

तत्रोपमानोपमेयभाव इति शेषः ।

तथा च प्रागेव व्याख्यातम् ।

---

एवञ्च गोगवययोर्विजातीययोरपि अन्वयिधर्ममात्रापेक्षायाम्=अन्वयिधर्ममात्रस्य पशुत्वादेरपेक्षायाम् गोत्वगवयत्वादीनाञ्च परस्परव्यावृत्तानां विशेषधर्माणामनपेक्षायां नोपमार्थ इत्युक्तं भवतीति ॥ ३९४ ॥

अत्यन्ताभेदवदत्यन्तभेदेऽपि नोपमार्थ इति विवृणोति—व्यावृत्तानामिति ।

अस्यार्थः—परस्परव्यावृत्तानां विशेषाणां तु अन्वयिना धर्मेणाननुगतानामत्यन्तव्यावृत्तानां व्यापारे तु उपमानोपमेयभावं प्रतिनिमित्ततया विवक्षिते उपमानबुद्धेर्बुद्ध्यन्तरम्=उपमेयबुद्धिं प्रति कश्चिदुपकारो नास्ति । बुद्धिद्वयविषययोः परस्परं सम्बन्धाभावे बुद्ध्योरपि परस्परमसम्बन्धादिति ।

अयं भावः—अन्वयिना धर्मेणाननुगतानामत्यन्तव्यावृत्तानां भेदानाम्=विशेषाणामपि उपमानोपमेयभावं प्रति निमित्ततयाऽपेक्षणे उपमानप्रतीतेरुपमेयप्रतीतौ न कश्चिदुपकारः, विजातीययोर्गोऽश्वयोर्धर्मसामान्यमन्तरेण समन्वयाभावादिति ॥ ३९५ ॥

अत्र हि=अत्यन्ताभेदेनोपमार्थः, अत्यन्तभेदेऽपि नोपमार्थ इत्यत्र हि परिहारभाष्यमिदमस्ति—"एवं तर्हि यत्र किञ्चित् सामान्यं कश्चिच्च विशेषस्तत्रोपमानोपमेयः" इति ।

एतद् भाष्यं व्याचष्टे—किञ्चिद् यत्रास्तीति ।

अस्यार्थः—यत्र किञ्चित् सामान्यमस्ति, यदि केचन भेदाश्च विशेषा अपि तत्र सन्ति तत्रोपमानोपमेयभाव इति शेषः ।

तथा च=तेन प्रकारेण च प्रागेव व्याख्यातमुपमानत्वमुपमेयत्वञ्च इति ।

एवञ्च कृत्वा द्वयोरपि गवोः सामान्यविशेषापेक्षो भवत्येवोपमानोपमेयभाव इत्याह—

**गोत्वं गोष्वस्ति सामान्यं भेदाश्च शबलादयः ॥ ३९६ ॥**

ततश्च शाबलेय इव च बाहुलेय इति शाबलेयत्वाद्यवान्तरजातिभिन्नयोरप्येकार्थकारित्वादिनैकजातीयत्वेन प्रत्यासत्तौ भवत्येवोपमानोपमेयभाव इत्यर्थः ॥ ३९६ ॥

यद्वा यत्र किञ्चित् सामान्यमित्यादिभाष्यस्यायमाक्षेपः—सर्वत्र पदार्थेषु सामान्यविशेषयोगादौपम्यं स्यादित्यतिप्रसङ्गो मेरुरिव सर्षप इत्यपि स्यात्, गौरिव गौरिति चेति श्लोकार्धस्यार्थः। अत एवैतच्चोद्यप्रतिसमाधानत्वेन वक्ष्यमाणोऽयं ग्रन्थ उपपद्यते। तथा हि—न महासामान्यमत्र विवक्षितं, किन्तर्हि—

**सामान्यं श्यामताद्येव तद्धि साधारणं द्वयोः ।**
**तदेव सिद्ध्यसिद्धिभ्यां भेद इत्यपदिश्यते ॥ ३९७ ॥**

---

एवञ्च कृत्वा द्वयोरपि गवोः सामान्यविशेषभावापेक्षी भवत्येवोपमानोपमेयभाव इत्याहोत्तरार्धेन—गोत्वं गोष्वस्तीति ।

अस्यार्थः—यदि गोषु गोत्वं सामान्यमस्ति तदा तत्र शबलादयः—शबलात्वबहुलात्वादयो भेदाश्च विशेषा अपि सन्तीति भवत्येवैकजातीययोरपि उपमानोपमेयभावः—शबलेय इव बाहुलेय इति ।

अयं भावः—ततश्च =एकजातीययोरपि सामान्यविशेषसत्त्वाच्च शाबलेय इव च बाहुलेय इत्यत्र शाबलेयत्वाद्यवान्तरजातिभिन्नयोरपि पयोदानादिरूपैकार्थक्रियाकारित्वादिना एकजातीयत्वेन प्रत्यासत्तौ=गोत्वजातीयत्वेनोपस्थितौ भवत्येवोपमानोपमेयभाव इति ॥ ३९६ ॥

यद्वा "यत्र किञ्चित् सामान्यम्" इत्यादिभाष्यस्यायमाक्षेपः—किञ्चिद् यत्रास्ति सामान्यमिति । सर्वत्र पदार्थेषु सामान्यविशेषयोगसत्त्वादौपम्यम्=उपमानोपमेयभावः स्यादित्यतिप्रसङ्गो मेरुरिव सर्षप इत्यपि स्यात्, 'गौरिव गौः' इति चेति उक्तश्लोकार्धस्यार्थः। अत एवैतदाक्षेपप्रतिसमाधानत्वेन वक्ष्यमाणोऽयं ग्रन्थ उपपद्यते—सामान्यं श्यामताद्येवेति ।

तथा हि—न गोत्वादिकं महासामान्यमत्र =उपमानोपमेयभावे निमित्ततया विवक्षितम्, किन्तर्हि—द्विष्ठं श्यामताद्येव सामान्यमत्रोपमानोपमेयभावे निमित्ततया विवक्षितमित्याह—सामान्यं श्यामताद्येवेति ।

अस्यार्थः—न महासामान्यं जातिरूपमत्र भाष्ये सामान्यशब्देन विवक्षितम्, किं तर्हि श्यामताद्येव द्विष्ठमुपमानोपमेयगतं सामान्यमत्र विवक्षितम्, तद्धि—श्यामतादिकं हि, द्वयोरुपमानोपमेययोः साधारणं यतः, तदेव द्वयोः साधारणं श्यामतादिकमेव, सिद्ध्यसिद्धिभ्याम्=प्रसिद्धयप्रसिद्धिभ्यामुपलक्षितं व्यावृत्तं सद् भेदो विशेष इति "कश्चिच्च विशेषः" इति भाष्ये अपदिश्यते=व्यवह्रियत इति ।

'यत्र किञ्चित् सामान्यम्' इत्यत्र भाष्ये सामान्यशब्देन न जातिरभिधित्सिता, अपि तु ततोऽर्थान्तरं श्यामत्वादि। तच्च द्वयोरुपमानोपमेययोरन्वयि साधारणमिति सामान्यमुच्यते।

तथा ह्युत्तरत्र भाष्यमस्ति—'न चावश्यं स एव सामान्यवचनो यो बहूनां सामान्यमाह, द्वयोरपि यः सामान्यमाह सोऽपि सामान्यवचनः' इति।

एवञ्च द्विवृत्तिः श्यामत्वादिरत्र सामान्यमिति गम्यते। तदेव च सामान्यमपि व्यावृत्तेरपि भावाद् विशेष इत्युच्यते 'कश्चिच्च विशेषः' इत्यत्र भाष्ये।

तथा हि—यथोपमाने तत्प्रसिद्धं न तथोपमेये, न्यूनत्वादित्यस्ति भेदः। एवञ्च जातेरन्यत् सादृश्यं भेदाभेदानुस्यूतमिह सामान्यशब्देन साधारणपर्यायेण कथितमिति, ययोः साधारणो धर्मः प्रसिद्धाप्रसिद्धदर्शनः, तयोरुपमानोपमेयभावस्तदुपनिबन्धन इत्युक्तं भवति।

एवञ्च कृत्वा सजातीययोरपि संस्थानादिधर्मसादृश्यकृतः शाबलेयबाहुलेययोरुपमानोपमेयभावो नैकजातिनिबन्धनो द्वयोर्गौरिव गौरिति॥ ३९७॥

---

अयं भावः—"यत्र किञ्चित् सामान्यम्" इत्यत्र भाष्ये सामान्यशब्देन न महासामान्यरूपा जातिरभिधित्सिता, अपि तु ततोऽर्थान्तरं श्यामत्वादिष्टः साधारणो धर्मः। तच्च द्वयोरुपमानोपमेययोरन्वयि=अनुगतम्, साधारणमिति सामान्यमुच्यते।

तथा हि—उत्तरत्र भाष्यमस्ति—"न चावश्यं स एव सामान्यवचनो यो बहूनां सामान्यमाह—द्वयोरपि यः सामान्यमाह सोऽपि सामान्यवचनः" इति।

एवञ्च द्विवृत्तिः श्यामत्वादिरत्र सामान्यमिति गम्यते। तदेव च द्विवृत्तित्वात् सामान्यमपि प्रसिद्ध्यप्रसिद्धिभ्यां व्यावृत्तेरपि भावाद् विशेष इत्युच्यते "कश्चिच्च विशेषः" इत्यत्र भाष्ये।

तथा हि—यथा=यादृशमुत्कृष्टम् उपमाने तत्=श्यामत्वादिकं सामान्यं प्रसिद्धम्, न तथा=तादृशम् उपमेये, न्यूनत्वात्=अपकृष्टत्वादित्यस्ति भेद उपमानोपमेयगतयोः श्यामत्वयोः। एवञ्च जातेरन्यत् श्यामत्वादिरूपं सादृश्यं सामान्यविशेषरूपतया भेदाभेदाभ्यामनुस्यूतम्, इह साधारणपर्यायेण सामान्यशब्देन कथितमिति ययोः पदार्थयोः साधारणो धर्मः प्रसिद्धाप्रसिद्धदर्शनः, तयोरुपमानोपमेयभावस्तदुपनिबन्धनः=तादृशसादृश्यनिमित्तक इत्युक्तं भवति।

एवञ्च कृत्वा सजातीययोरपि शाबलेयबाहुलेययोः संस्थानादिरूपधर्मरूपसादृश्यकृत उपमानोपमेयभावः, नैकजातिनिबन्धनस्तु द्वयोर्व्यक्त्योरुपमानोपमेयभावः, गौरिव गौरिति॥ ३९७॥

अत्रैव मतान्तरमाह—

**श्यामत्वमेव सामान्यमन्येषामुभयोः स्थितम् ।**
**सम्पूर्णत्वात् तदन्यस्माद् विशेष इति गम्यते ॥ ३९८ ॥**

पूर्वं प्रसिद्ध्यप्रसिद्धिभ्यां भेद उक्तः । इदानीं सम्पूर्णासम्पूर्णतयेति विशेषः । तथाहि—श्यामत्वलक्षणो गुण एव द्विवृत्तिराश्रयभेदाद् भिन्नोऽपि सौक्ष्म्यादलक्षितविवेकः सामान्यमित्युक्तः । स एवोपमाने सर्वात्मना परिसमाप्तत्वाद् उपमेये तु केनचिदंशेन न्यूनत्वादनाश्रितेऽप्याधारभेदोपाधौ भेदे विशेष्यमाणो विशेष इत्युक्तः । तथाच भेदाभेदाभ्यामवधार्यमाणो गुण एव सादृश्यं न ततोऽर्थान्तरम् ॥ ३९८ ॥

यद्वा जातिरप्यस्तु उपमायां सव्यापारा, न त्वभेदेनैवावसीयमाना, किन्तु भेदेनापीत्याह—

**आकृतौ वापि सामान्ये क्वचिदेव व्यवस्थिताः ।**
**श्यामादयोऽवसीयन्ते विशेषास्त इहाश्रिताः ॥ ३९९ ॥**

---

अत्रैव=सामान्यं श्यामताद्येव इति पक्ष एव, मतान्तरम्=सिद्ध्यसिद्धिभ्यां भेद इति मतापेक्षयाऽन्यन्मतं सम्पूर्णासम्पूर्णतया विशेष इत्येवंरूपम् आह—श्यामत्वमेव सामान्यमिति ।

अस्यार्थः—अन्येषां वादिनां मते उभयोः=उपमानोपमेययोः, स्थितं श्यामत्वं सामान्यमेव सम्पूर्णत्वात् तदन्यस्मात्=संपूर्णत्वान्यस्माद् असंपूर्णत्वाच्च, संपूर्णत्वासंपूर्णत्वाभ्यामिति यावत् । विशेष्यमाणत्वाद् विशेष इति गम्यत इति ।

अयं भावः—पूर्वं प्रसिद्ध्यप्रसिद्धिभ्यां भेद उक्तः । इदानीं संपूर्णत्वासंपूर्णत्वाभ्यामिति विशेषः । तथा हि—श्यामत्वलक्षणो गुण एव द्विवृत्तिः=उपमानोपमेयोभयवृत्तिः, आश्रयभेदाद् भिन्नोऽपि सौक्ष्म्यात्=तद्विवेकस्यातीन्द्रियत्वात्, अलक्षितविवेकः=अज्ञातभेदः सामान्यमित्युक्तः । स एव=श्यामत्वादिर्गुण एव उपमाने सर्वात्मना परिसमाप्तत्वात्=सर्वैः स्वधर्मैः संपूर्णत्वाद् उपमेये तु केनचिदंशेन=केनचिद् धर्मेण न्यूनत्वात्=रहितत्वाद् अनाश्रितेऽपि आधारभेदोपाधौ =आधारभेदनिमित्तके भेदे संपूर्णत्वासंपूर्णत्वाभ्यां विशेष्यमाणत्वाद् विशेष इत्युक्तः । तथा च भेदाभेदाभ्याम्=विशेषात्मना भेदेन सामान्यात्मनाऽभेदेन च अवधार्यमाणो विज्ञायमानो गुण एव श्यामत्वादिः सादृश्यं न ततोऽर्थान्तरम्, गौरवादिति ॥ ३९८ ॥

गुणवद् गुणगता जातिरप्यस्तु उपमायाम्=उपमानोपमेयभावे सव्यापारा=प्रयोजिका, किन्तु नाभेदेनैवावसीयमाना, अपि तु आधारभेदप्रयुक्तभेदेनापि इत्याह—आकृतौ वाऽपि सामान्ये इति ।

अस्यार्थः—वा=अथवा, आकृतौ सामान्येऽपि जातिरूपे सामान्ये उपमानोपमेयभावप्रयोजके स्वीक्रियमाणेऽपि ये श्यामादयः क्वचिदेव प्रतिनियते आधारे उपमाने उपमेये वा

जात्येकार्थसमवायिनो ये सूक्ष्मा विशेषाः प्रतिनियते क्वचिदेव जात्याधारेऽवस्थिताः, ते जातेर्भेदहेतवो यदा समाश्रीयन्ते, तदा तैर्विशिष्टा जातिः क्वचिदेव समवेता सव्यापारा भवत्युपमानोपमेयभावलक्षणे सम्बन्धे।

तथा हि—शस्त्रीदेवदत्तागतयोः श्यामगुणयोर्या गुणजातिः, साश्रयविशेषगतकान्तिमत्त्वादिधर्मविशेषैरनुरज्यमाना भेदानुवेधात् सादृश्यप्रत्ययं प्रसूयते। गौरिव गौरित्यत्र विद्यमानो हि विशेषो जातेर्भेदकः शब्दान्नावधार्यत इति न भवत्युपमा। शस्त्रीश्यामा देवदत्ता, शाबलेय इव वाहुलेय इत्यादौ तु गुणाधारभेदादेवावधार्यते विशेषः॥ ३९९॥

इत्थं भाष्यग्रन्थं व्याख्याय पिण्डितार्थमाह—

**जातेरभेदे भेदे वा सादृश्यं तत् प्रचक्षते।**
**कश्चित् कदाचिदर्थात्मा तथाभूतोऽपदिश्यते॥ ४००॥**

---

व्यवस्थिता अवसीयन्ते, ते अत एव इह—उपमानोपमेयभावे तद्व्यवहारे च विशेषा आश्रिता इति योजना।

अयं भावः—जात्येकार्थसमवायिनः = श्यामत्वादिरूपगुणगतजात्या सहैकार्थसमवायिनः ये सूक्ष्मा विशेषाः श्यामादिगुणगताः कान्तिमत्त्वादयः प्रतिनियते क्वचिदेव जात्याधारे श्यामादिगुणेऽवस्थितास्ते यदा श्यामत्वादेर्गुणगतजातेः सामान्यरूपत्वेनाभिन्नाया भेदहेतवः समाश्रीयन्ते, तदा सामानाधिकरण्यसंबन्धेन तैः सूक्ष्मैर्विशेषैर्विशिष्टा जातिः क्वचिदेव प्रतिनियते आधारे समवेता भेदमुपागताभेदाभेदाभ्यामुपमानोपमेयभावलक्षणे संबन्धे सव्यापारा = प्रयोजिका भवति।

तथा हि—शस्त्रीश्यामा देवदत्ता इत्यत्र शस्त्रीदेवदत्तागतयोः श्यामगुणयोर्या गुणजातिः सा स्वाश्रयविशेषगतकान्तिमत्त्वादिरूपधर्मविशेषैरनुरज्यमाना = सामानाधिकरण्येन संबध्यमाना भेदानुवेधात् = भेदारोपात् शस्त्रीश्यामा देवदत्ता इति सादृश्यप्रत्ययं प्रसूयते। गौरिव गौरित्यत्र विद्यमानो हि गोत्वजातेर्भेदको विशेषः शुक्लादिवर्णरूपः प्रकृते शब्दान्नावधार्यत इति न भवत्युपमा। यत्र तु शब्दाद् भेदोऽवधार्यते, तत्र भवत्युपमा—एषा गौः एतद्गौरिव,

गगनं गगनाकारं सागरः सागरोपमः।
रामरावणयोर्युद्धं रामरावणयोरिव॥

इत्यादावनन्वयविषये। अत्र च कालकृतोऽवस्थाकृतो व्यक्तिभेदकृतो वा भेदः। अत्र व्यक्तिभेदो रामरावणयोर्युद्धे-युद्धक्रियाणां बहुत्वात्।

शस्त्रीश्यामा देवदत्ता, शाबलेय इव वाहुलेय इत्यादौ तु गुणाधारभेदादेव = शाबलेयत्ववाहुलेयत्वगुणयोर्यौ आधारौ तद्भेदादेव अवधार्यते गोत्वजातेः सामान्यरूपाया विशेषः = भेदः इति भेदाभेदाभ्यां गोत्वजातिरेवात्रोपमानोपमेयभावप्रयोजिकेति॥ ३९९॥

इत्थं भाष्यग्रन्थं प्रकृतं व्याख्याय प्रकरणपिण्डितार्थमाह—जातेरभेदे भेदे वा इति।

जातेरभेदेऽनन्यत्वेऽप्येकार्थसमवेतविशेषाहिते च भेद इत्यनन्तरोक्तार्थानुवादः। भेदे वेति 'सामान्यं श्यामताद्येवे'ति पूर्वोक्तार्थानुवादः।

एवं यत् सामान्यमुक्तं तत् सादृश्यमित्याहुः। तेन च सादृश्येन कश्चिदेव न सर्वोऽर्थात्मोपमेयस्तथाभूतः सदृश इति कथ्यते निरूप्यते चाभिधानस्य निरूपणपूर्वकत्वात्।

इत्थं च सत्त्वज्ञेयत्वादि न सादृश्यम्, ततः सदृशप्रत्ययाभावादिति सामान्यधर्मयोगादेवौपम्ये नातिप्रसङ्गः ॥ ४०० ॥

इदानीं सदृशप्रत्ययस्य विषयं व्यवस्थापयितुं तत्प्रत्यनीकभूतं प्रत्ययान्तरमुदाहरति—

**यत्रार्थे प्रत्ययाभेदो न कदाचिद् विकल्पते।**
**अविद्यमानभेदत्वात् स एक इति गम्यते ॥ ४०१ ॥**

---

अस्यार्थः—जातेरभेदे श्यामादिगुणगताया जातेः सामान्यरूपाया अभेदे, जात्येकार्थसमवेतकान्तिमत्त्वादिधर्मविशेषाहिते जातेर्भेदे च इत्यध्याहृत्यानन्तरोक्तार्थानुवादः। भेदे वा इति "सामान्यं श्यामताद्येव" इति पूर्वोक्तार्थाऽनुवादः। एवं यत्सामान्यमुक्तं तत्साहश्यं प्रचक्षते, काणादाः सप्तपदार्थीवादिनः, न ततोऽन्यत् सादृश्यम्, तैः सप्तपदार्थेष्वेव सर्वेषामन्तर्भावस्वीकारात्। तेन च सादृश्येन कश्चिदेवार्थात्मा उपमेयः, न सर्वः, कदाचिदेव, शब्दाद् विशेषावधारणदशायामेव, न तु सर्वदा, तथाभूतः सदृश इति, अपदिश्यते निरूप्यते।

अत्रापदिशेः कथने शक्तस्य निरूपणे लक्षणा। कथनस्य निरूपणपूर्वकत्वादिति।

अयं भावः—जातेरभेदेऽनन्यत्वेऽपि श्यामत्वादिजात्येकार्थसमवेतकान्तिमत्त्वादिधर्मविशेषाहिते भेदे च इत्यनन्तरोक्तार्थानुवादः। भेदे वेति "सामान्यं श्यामताद्येव" इति पूर्वोक्तार्थानुवादः।

एवं यत्सामान्यं प्रागुक्तं तत्सादृश्यमित्याहुः काणादाः। तेन च सादृश्येन कश्चिदेवार्थात्मा उपमेयः, न सर्वः, कदाचिदेव, न सर्वदा, तथाभूतः सदृश इति अपदिश्यते = कथ्यते, निरूप्यते इति यावत्, अभिधानस्य निरूपणपूर्वकत्वात्।

इत्थं च सत्त्वज्ञेयत्वादि न सादृश्यम्, तस्य केवलान्वयितया तद्भेदकधर्मविशेषाभावेन ततः सदृशप्रत्ययाभावादिति सामान्यधर्मयोगादेवौपम्ये स्वीक्रियमाणेऽतिप्रसङ्गो न भवति इति ॥ ४०० ॥

इदानीं सदृशप्रत्ययस्य विषयं व्यवस्थापयितुं तत्प्रत्यनीकभूतं प्रत्ययान्तरम् = एक इति प्रत्ययम्, स एवायमिति प्रत्यभिज्ञाप्रत्ययञ्च उदाहरति—यत्रार्थे प्रत्ययाभेद इति।

अस्यार्थः—यत्रार्थे = यस्मिन् वस्तुनि प्रत्ययाभेदः = प्रत्ययस्याकाराभेदः, कदाचिद् भेदप्रत्ययेन सह न विकल्पते = पर्यायं नापद्यते, सोऽर्थः अवस्थानानात्वेऽपि अविद्यमानभेदत्वाद् एक इति गम्यते = ज्ञायते। तद् यथा—'घटः' इति प्रत्ययाभेदः कदाचिद् भेदप्रत्ययेन सह न विकल्पते इति घटपदार्थ एको नवत्वपुराणत्वाद्यवस्थाभेदेऽपि। मृदिति प्रत्ययाभेदस्तु घटो मणिको मल्लिक उदञ्चन इति भेदप्रत्ययैः सह विकल्पते इति मृत्पदार्थो नैक इति।

यस्मिन् वस्तुनि प्रत्ययस्याकाराभेदो न कदाचिद्विकल्पते भेदप्रत्ययेन सह पर्यायं नापद्यते, सदैवाभेदाकारेणोत्पत्तेः, तद्वस्तु धर्मिरूपमवस्थानानात्वेऽपि तत्कृतस्य भेदस्यासंविदितत्वाद् व्यवहारे प्रतिभातस्य सत्कल्पत्वादविद्यमानभेदमेक इति प्रत्ययविषयः ॥ ४०१ ॥

प्रत्यभिज्ञाप्रत्ययमुदाहरति—

**योऽर्थ आश्रितनानात्वः स एवेत्यपदिश्यते ।**
**व्यापारं जातिभागस्य तत्रापि प्रतिजानते ॥ ४०२ ॥**

प्रसिद्धभेदोऽपि यः पदार्थः स एवेति प्रत्यभिज्ञायते, तत्र जात्यंशस्य व्यापार इत्याहुः । जातेर्व्यक्तिभिरैकात्म्यापत्तौ भागवाचोयुक्तिः । एवञ्च केवलाया जातेः प्रत्यभिज्ञाप्रत्यये व्यापारः, न सदृशप्रत्यये ।

यत्र च सादृश्यनिबन्धनात् तत्त्वसमारोपात् प्रत्यभिज्ञा, भ्रान्तिरसौ लूनपुनर्जातकेशेष्विव जात्यापादिता । भेदानां तु तत्त्वनिबन्धनैव प्रत्यभिज्ञा ॥ ४०२ ॥

---

अयं भावः—यस्मिन् वस्तुनि = यद्वस्तुविषयकः प्रत्ययस्याकाराभेदो न कदाचिद् विकल्पते = भेदप्रत्ययेन सह पर्यायं नापद्यते, सदैवाभेदाकारेण = एकाकारेण उत्पत्तेः, तद्वस्तु-धर्मिरूपमवस्थानानात्वेऽपि तत्कृतस्य = नवत्वाद्यवस्थाकृतस्य भेदस्यासंविदितत्वाद् व्यवहारे शाब्दे आर्थे वा प्रतिभातस्य अनिर्वाच्यत्वेऽपि सत्कल्पत्वादविद्यमानभेदमेक इति प्रत्ययविषय इति ॥ ४०१ ॥

तत्रैकप्रत्ययमुदाहृत्य प्रत्यभिज्ञाप्रत्ययमुदाहरति—योऽर्थ आश्रितनानात्व इति ।

अस्यार्थः—योऽर्थः प्रसिद्धचा आश्रितनानात्वः = आश्रितभेदः, स एवेत्यपदिश्यते, य एव शालयो वङ्गे भुक्तास्त एव बलियामण्डलान्तर्गते छाताग्रामे भुज्यन्त इति । तत्रापि = तस्मिन्नपि प्रत्यभिज्ञाप्रत्यये व्यवहारे शाब्दे वा जातिभागस्य प्रयुक्तिरूपं व्यापारं निमित्ततया प्रतिजानते इति ।

अयं भावः—प्रसिद्धभेदोऽपि यः पदार्थो जातिव्यक्तिसमुदायात्मकः स एवेति प्रत्यभिज्ञायते । तत्र = प्रत्यभिज्ञायां जात्यंशस्य व्यापारः प्रयुक्तिरूपो निमित्तमित्याहुः । जातेर्व्यक्तिभिरैकात्म्यापत्तौ = तदात्म्यापत्तौ भागवाचोयुक्तिर्न विरुध्यते । एवञ्च केवलाया जातेः प्रत्यभिज्ञाप्रत्यये व्यापारो न सदृशप्रत्यये । सदृशप्रत्यये तु श्यामादिगुणगताजातिः स्वसमानाधिकरणकान्तिमत्त्वादिधर्मविशेषा सव्यापारेत्यभिहितं प्राक् ।

यत्र च सादृश्यहेतुकात् तत्त्वसमारोपात् = उपमानतावच्छेदकारोपात् प्रत्यभिज्ञा, 'चन्द्र एवेदम्' इत्येवंरूपा, असौ भ्रान्तिरेव, लूनपुनर्जातकेशेष्विव जात्या आपादिता । भेदानान्तु = शाल्यादिरूपाणां व्यक्तिविशेषाणां तु तत्त्वनिबन्धनैव = जातिनिबन्धनैव प्रत्यभिज्ञा, न तु तत्त्वसमारोपनिबन्धनेति न भ्रान्तिरिति ॥ ४०२ ॥

वस्तुनि हि संविदा भेदाभेदसंस्पर्शः कथमित्याह—

जातिभागाश्रया प्रख्या तत्राभिन्ना प्रवर्तते ।
व्यक्तिभागाश्रया बुद्धिस्तत्र भेदेन जायते ॥ ४०३ ॥

जात्यंशस्य व्यापारादभेदेनैकजातीयः परामृश्यते, गौरेवायमिति । व्यक्तिरूपाश्रया तु तत्र संविद्भेदोपलक्षिता प्रभवति ॥ ४०३ ॥

इदानीं सदृशप्रत्ययं लक्षयति—

अन्यत्र वर्तमानं सद् भेदाभेदसमन्वितम् ।
निमित्तं पुनरन्यत्र नानात्वेनेव गृह्यते ॥ ४०४ ॥
आधारेषु पदन्यासं कृत्वोपैति तदाश्रयम् ।
स सादृश्यस्य विषय इत्यन्यैरपदिश्यते ॥ ४०५ ॥

---

ननु एकरूपे हि वस्तुनि कथं संविदा भेदाभेदसंस्पर्शः क्रियते इत्याशङ्क्याह—जातिभागाश्रयेति ।

अस्यार्थः—तत्र-भेदप्रत्ययाभेदप्रत्यययोर्मध्ये वस्तुनि इति वा, जातिभागाश्रया, जात्यंशनिमित्तिका अभिन्नाप्रख्या=अभेदविषयकः प्रत्ययः प्रवर्तते । तत्र=वस्तुनि, भेदेनोपलक्षिता बुद्धिर्व्यक्तिभागाश्रया=व्यक्त्यंशनिमित्तिका जायते इति ।

अयं भावः—एकजातीयः पदार्थः सर्वोऽपि जात्यंशस्य व्यापारादभेदेन परामृश्यते । गौरेवायमिति । व्यक्तिभागाश्रया=व्यक्तिभागविषयिका तु संवित् तत्र भेदोपलक्षिता एव प्रभवति, व्यक्तीनां बहुत्वादिति ॥ ४०३ ॥

इदानीं सदृशप्रत्ययं लक्षयति—अन्यत्र वर्तमानमिति ।

अस्यार्थः—यत्सदृशप्रत्ययस्य निमित्तं श्यामत्वाख्यं सामान्यम्-अन्यत्र आधारे शस्त्रीगते श्यामरूपात्मके गुणे वर्तमानं सत्-पुनः=भूयः, अन्यत्र=आश्रयान्तरे देवदत्तागुणे श्यामरूपे वर्तमानं नानात्वेनेव=भेदेनेव, गृह्यते=परिच्छिद्यते, तेन देवदत्तागतश्यामगुणरूपेणाश्रयान्तरेणावच्छेदात् । अभेदेनापि समन्वयादिव शब्दोऽत्र । अत एव भेदाभेदसमन्वितमित्युक्तम् । तदेवंविधं निमित्तं श्यामत्वाख्यम् ।

आधारेषु स्वाश्रयेषु गुणेषु उपमानगतेषु उपमेयगतेषु च पदन्यासं कृत्वा=विधाय स्वहेतुकं सादृश्यप्रत्ययं स्वाधारगुणेषु उत्पाद्य, तदाश्रयम्=तस्य-श्यामगुणस्य य आश्रयो द्रव्यं तदुपैति=तत्प्राप्नोति । तत्र समवेतसमवायात् सादृश्यप्रत्ययं जनयति । तथाच स श्यामगुणाश्रयः सादृश्यस्य विषय इत्यन्यैरपदिश्यत इति ।

निमित्तं प्रकृतत्वात् सदृशप्रत्ययस्य श्यामत्वाख्यमन्यत्राधारे शस्त्रीगते गुणे वर्तमानं सद् भूय आश्रयान्तरे देवदत्तागुणे वर्तमानं नानात्वेनेव भेदेनेव परिच्छिद्यते, तेनाश्रयान्तरेणावच्छेदात्। अभेदेनापि तु समन्वयादिवशब्दः।

अत एव भेदाभेदसमन्वितं सामान्यविशेषरूपसम्बद्धमित्यर्थः। तदेवंविध-निमित्तमाधारेषु स्वाश्रयेषु गुणेषु पदन्यासं विधाय तदालम्बनं सादृश्यप्रत्ययमुत्पाद्य तस्य गुणस्य य आधारो द्रव्यं तत् प्राप्नोति, समवेतसमवायात् तत्र सदृशप्रत्ययं जनयति।

तथा च स गुणाश्रयः सादृश्यस्य विषयः। तत्र सादृश्यनिमित्त उपमानोपमेय-भाव इत्यर्थः।

इत्थञ्चेदं सादृश्यं भेदाभेदसमन्वयाज्जातेरन्यदभेदात्मिकायाः। जातिश्चान्यत्र नानात्वेन न गृह्यते। अपि त्वेकत्वेनैव। अनेन च ग्रन्थेनैकीयमतेन 'यत्र किञ्चित् सामान्यं कश्चिच्च विशेषः' इति भाष्यमन्यथा व्याख्यातम्।

तथा हि—पूर्वं यत्राधारे किञ्चित् सामान्यं कश्चिच्च विशेषस्तत्रोपमानोपमेये भवत इति भवितृभ्यां भावस्योपलक्षणात् तत्रोपमानोपमेयभाव इत्यर्थोऽभीष्टः।

---

अयं भावः—प्रकृतत्वात् सदृशप्रत्ययस्य निमित्तं श्यामत्वाख्यं सामान्यम् अन्यत्राधारे शस्त्रीगते श्यामगुणे वर्तमानं सद् भूय आश्रयान्तरे देवदत्तागुणे वर्तमानं नानात्वेनेव=भेदेनेव गृह्यते=परिच्छिद्यते। तेनाश्रयान्तरेण=देवदत्तागतश्यामगुणरूपेणाश्रयान्तरेण अवच्छेदात्। स्वरूपतोऽभेदेनापि समन्वयात्=संबन्धाद् इव शब्दोपपत्तिः।

अत एव भेदाभेदसमन्वितम्=सामान्यरूपेण अभेदसंबन्धम्, आश्रयभेदाद् भेदेन विशेष-रूपेण भेदसंबन्धमित्यर्थः। तदेवंविधं निमित्तं श्यामत्वाख्यम् आधारेषु=स्वाश्रयेषु गुणेषु पदन्यासं विधाय=तदालम्बनम् विशेष्यतया प्रकारतया च स्वाश्रयगुणविषयकं सादृश्यप्रत्ययमुत्पाद्य, तस्य गुणस्य य आधारो द्रव्यं तत्प्राप्नोति। समवेतसमवायात्=द्रव्यसमवेते श्यामगुणे श्यामत्वस्य समवायात् तत्र = द्रव्ये सदृशप्रत्ययं जनयति।

तथा च स गुणाश्रयो द्रव्यं सादृश्यस्य विषयः। तत्र=द्रव्ये सादृश्यनिमित्तक उपमानोप-मेयभाव इत्यर्थः।

इत्थञ्चेदं सादृश्यं भेदाभेदसमन्वयात्=भेदाभेदसामानाधिकरण्याद् अभेदात्मिकाया जातेरन्यत् पदार्थान्तरम्। जातिश्चान्यत्र नानात्वेन न गृह्यते, अपि त्वेकत्वेनैव स्वाभाविकेन। सादृश्यं तु भेदाभेदसामानाधिकरण्याद् नानात्वेनापि गृह्यते। अनेन च ग्रन्थेनैकीयमतेन "यत्र किञ्चित् सामान्यं कश्चिच्च विशेषः" इति भाष्यमन्यथा व्याख्यातम्।

तथा हि—पूर्वं-यत्राधारे किञ्चित् सामान्यं कश्चिच्च विशेषः, तत्रोपमानोपमेये भवतः। यथा शस्त्रीश्यामा देवदत्ता,इत्यत्र श्यामत्वं सामान्यं शस्त्रीत्वं देवदत्तात्वञ्च देवदत्तापदवाच्यत्वं वा देवदत्ताशब्दरूपं वा विशेष इति भवितृभ्यामुपमानोपमेयाभ्यां भावस्य उपलक्षणात्=लक्षणा-वृत्त्या प्रधानतया निर्देशात्। तत्रोपमानोपमेयभाव इत्यर्थोऽभीष्टः।

इह तु यत्र निमित्ते भेदाभेदसमन्विते सति सामान्यविशेषावभासप्रत्ययो द्रव्ये भवति, तत्र निमित्ते सत्युपमानोपमेये द्वे द्रव्ये भवतः। तन्निमित्तरूपस्य सादृश्यस्य तत्र पारम्पर्येण समवायादित्यर्थः।

अत्रापरं भाष्यम्—'किं वक्तव्यमेतत्। नहि। कथमनुच्यमानं गंस्यते। मानं हि नाम' इत्यादि। तत् प्रागेव सूत्रार्थौपयिकत्वेनोपमानलक्षणरूपं व्याख्यातम् ॥ ४०४, ४०५ ॥

अतोऽनन्तरं भाष्यम्—'कामं तर्ह्येतेनैव हेतुना यस्य गवयो निर्ज्ञातः गौरनिर्ज्ञातः' तत्कर्तव्यं स्याद् गवय इव गौरिति। बाढं कर्तव्यमि'त्यनेनोपमानोपमेययोरव्यवस्थाभ्युपगता।

तां निदर्शनेन व्युत्पादयितुमाह—

**परापेक्षे यथा भावे कारणाख्या प्रवर्तते।**
**तथान्याधिगमापेक्षमुपमानं प्रचक्षते ॥ ४०६ ॥**

---

इह तु यत्र भेदाभेदसमन्विते निमित्ते सति द्रव्ये सामान्यविशेषावभासरूपः प्रत्ययो भवति, तत्र निमित्ते सति उपमानोपमेये द्वे द्रव्ये भवतः। तन्निमित्तरूपस्य=उपमानोपमेयभावनिमित्तरूपस्य सादृश्यस्य तत्र द्रव्ये पारम्पर्येण=समवेतसमवायरूपेण परम्परासंबन्धेन समवायादित्यर्थः।

अत्रापरं भाष्यम्—"किं वक्तव्यमेतत्। नहि। कथमनुच्यमानं गंस्यते। मानं हि नाम" इत्यादि। तत्प्रागेव सूत्रार्थौपयिकत्वेन="उपमानानि सामान्यवचनैः' इति सूत्रार्थविचारसाधनत्वेन उपमानलक्षणरूपं व्याख्यातमिति ॥ ४०४–४०५ ॥

अतोऽनन्तरं भाष्यम्—"कामं तर्ह्येतेनैव हेतुना यस्य गवयो निर्ज्ञातः गौरनिर्ज्ञातः, तत्कर्तव्यं स्याद् गवय इव गौरिति। बाढं कर्तव्यम्" इति। अत्र=एतेन इत्स्मय निर्ज्ञातमुपमानम्, अतिर्ज्ञातमुपमेयम् इत्यभ्युपगमरूपेणेत्यर्थः। अनेन भाष्यवाक्येन उपमानोपमेययोरव्यवस्था=अनियमोऽभ्युपगता। ता निदर्शनेन=उदाहरणेन व्युत्पादयितुम्=ग्राहयितुम् आह—परापेक्षे यथेति।

अस्यार्थः—यथा परापेक्षे=कार्यापेक्षे कार्यं निरूपकतयाऽपेक्षमाणे भावे कारणाख्या=कारणेति संज्ञा प्रवर्तते। न च परापेक्षत्वेऽपि कार्यकारणभावसंकरः, निरूपकभेदात्। तथाऽन्याधिगमापेक्षम्=उपमेयापेक्षयाऽन्यस्य उपमानत्वेनाभिमतस्य योऽधिगमः प्रसिद्धिस्तदपेक्षमुपमानं प्रचक्षते। तथा च प्रसिद्धमुपमानम्, अप्रसिद्धमुपमेयमिति फलितम् इति।

कार्यापेक्षं कारणत्वमित्यन्यापेक्षत्वेऽपि न कार्यकारणभावसङ्करः। नहि यमेव प्रति कार्यं तमेव प्रति कारणम्।

एवमप्रसिद्धमुपमेयं प्रसिद्धमुपमानं तदपेक्षया यद्यपि व्यवह्रियते, तथापि प्रसिद्ध्यप्रसिद्ध्योः सङ्कराभावान्नोपमानोपमेयभावविपर्यास इत्यर्थः॥ ४०६॥

अत्रैव निदर्शनान्तरम्—

**गुरुशिष्यपितापुत्रक्रियाकालादयो यथा।**
**व्यवहारास्तथौपम्यमप्यपेक्षानिबन्धनम्॥ ४०७॥**

---

अयं भावः—कार्यपेक्षम्=कार्यनिरूपितम् कारणत्वमिति कारणत्वस्य परापेक्षत्वेऽपि न कार्यकारणभावसंकरः। न हि यमेव प्रति कार्यं तमेव प्रति कारणम्=न हि यन्निरूपितं कार्यत्वं तन्निरूपितमेव कारणत्वम्। एवमप्रसिद्धमुपमेयम्, प्रसिद्धमुपमानं तदपेक्षया=अप्रसिद्धोपमेयापेक्षया यद्यपि व्यवह्रियते, तथापि प्रसिद्धयप्रसिद्धयोः पुरुषभेदेन संकराभावान्नोपमानोपमेयभावविपर्यास एकस्मिन्नेकस्य इति॥ ४०६॥

उपमानोपमेयभावस्य परस्परापेक्षत्वेऽपि निरूपकभेदेन नैकत्र संकर इत्यर्थे निदर्शनान्तरमाह—गुरुशिष्यपितेति।

अस्यार्थः—यथा गुरुशिष्यपितापुत्रक्रियाकालादयो व्यवहारा अपेक्षानिबन्धनाः=परापेक्षानिमित्तकाः, निरूपकसापेक्षा, तथा औपम्यमपि=उपमानोपमेयभावोऽपि, अपेक्षानिबन्धनम्=परापेक्षानिमित्तकम्।

तद् यथा—गुरुत्वं न स्वगुरुनिरूपितं किन्तु स्वशिष्यनिरूपितमेव। शिष्यत्वञ्च न स्वशिष्यनिरूपितम्, किन्तु स्वगुरुनिरूपितम्। एवं पितापुत्रयोरपि परापेक्षो निरूप्यनिरूपकभावोऽवगन्तव्यः। क्रियाऽपि स्वसाधनापेक्षया साध्या, न तु क्रियान्तरनिरूपितमस्याः साध्यत्वम्। साध्यस्य क्रियान्तरस्य साधनत्वायोगात्।

न चैवम् 'पचति भवति, पश्य मृगो धावति' इत्यादौ साध्यस्वभावयोः क्रिययोः कथं साध्यसाधनभाव इति वाच्यम्। 'यत्पचति तद् भवति, यन्मृगो धावति तत्पश्य' इत्येवं सर्वनाम्ना उपस्थापितायाः क्रियायाः साधनत्वसंभवात्। तिङन्तोपस्थाप्याया एव क्रियायाः साध्यत्वं स्वभावः, न तु नामपदोपस्थाप्यायाः। विशेषणविशेष्यभावादेः परापेक्षस्यादिपदात् संग्रहः। एवं प्रसिद्धपरिमाणा क्रिया परिच्छेद्यक्रियान्तरं प्रति कालः, तद्यथा भागवते—

"स गोदोहनमात्रं हि गृहेषु गृहमेधिनाम्।
आस्ते गायन् हरेर्गाथां तीर्थीकुर्वन् तदाश्रमम्"॥ इति।

अत्र प्रसिद्धपरिमाणा गोदोहनक्रिया परिच्छेद्याया शुकदेवस्थितेः कालः। न तु परिच्छेद्यक्रिया परिच्छेद्यक्रियान्तरं प्रति कालः, उभयोः परिच्छेद्यत्वेन परिच्छेदकान्तरापेक्षणात्। एवमुपमानोपमेयभावस्य परापेक्षत्वेऽपि प्रसिद्धमुपमानम्, अप्रसिद्धमुपमेयमिति प्रसिद्धयप्रसिद्धिभ्यामुपमानोपमेयभावव्यवस्था, न तु उपमानत्वमुपमेयत्वं वा क्वचिन्नियतमस्ति इति।

न गुरुर्गुर्वन्तरापेक्षया। शिष्योऽपि, न स्वशिष्यापेक्षया शिष्यः। पिता न पित्रन्तरापेक्षया। पुत्रोऽपि न स्वपुत्रं प्रति पुत्रः। क्रिया स्वसाधनापेक्षया साध्या न हि क्रियान्तरं प्रति। साधनमपि न तु स्वसाधनापेक्षयैव।

यथोक्तं—

"तत्र यं प्रति साध्यत्वमसिद्धा तं प्रति क्रिया।
सिद्धा तु यस्मिन् साध्यत्वं न तमेव पुनः प्रति" ॥ इति ॥
(वा० प० ३ क्रिया ५०)

प्रसिद्धपरिमाणा क्रिया परिच्छेद्यक्रियान्तरं प्रति कालः, परिच्छेदकत्वात्। न तु परिच्छेद्याया एव परिच्छेद्या। आदिग्रहणात् विशेषणविशेष्यभावादेरापेक्षिकस्य सङ्ग्रहः।

एवं यस्य गवयः प्रसिद्धस्तस्यासावुपमानं वनेचरस्य, गौरप्रसिद्ध उपमेयः।

---

अयं भावः—न गुरुर्गुर्वन्तरापेक्षया=गुर्वन्तरं न स्वगतस्य गुरुत्वस्य निरूपकम्, अपितु शिष्यः। शिष्योऽपि न स्वशिष्यापेक्षया शिष्यः=स्वस्मिन् शिष्यत्वमपि न स्वशिष्यनिरूपितम्, अपितु स्वगुरुनिरूपितम्। पिता न पित्रन्तरापेक्षया=स्वस्मिन् पितृत्वं न पित्रन्तरनिरूपितम्, अपितु स्वपुत्रनिरूपितम्। पुत्रोऽपि न स्वपुत्रं प्रति पुत्रः=स्वस्मिन् पुत्रत्वमपि न स्वपुत्रनिरूपितम्, अपितु स्वपितृनिरूपितम्। क्रिया स्वसाधनापेक्षया साध्या, न हि क्रियान्तरं प्रति=क्रियायाः साध्यत्वं स्वसाधननिरूपितम्, न हि क्रियान्तरनिरूपितम्, क्रियान्तरस्यापि साध्यत्वेनासाधनत्वात्। साधनमपि न तु स्वसाधनापेक्षयैव=स्वस्मिन् साधनत्वमपि न स्वसाधननिरूपितम्, अपितु स्वसाध्यनिरूपितम्। यथोक्तम्—

तत्र यं प्रति साध्यत्वमसिद्धा तं प्रति क्रिया।
सिद्धा तु यस्मिन् साध्यत्वं न तमेव पुनः प्रति ॥ इति।
(वा० प० ३ क्रिया ५०)

अस्यार्थः—तत्र=क्रियायां साध्यत्वसाधनत्वयोः परापेक्षत्वे स्थिते यं प्रति यन्निरूपितम्, क्रियायाः साध्यत्वम्, तं प्रति क्रिया असिद्धा=तन्निरूपितं क्रियायाः साधनत्वं न भवति, यतस्तं प्रति क्रिया असिद्धा=साध्या। सिद्धा तु यस्मिन्=यन्निरूपितं तु क्रियायाः सिद्धत्वेन साधनत्वम् तमेव प्रति पुनः न तस्याः साध्यत्वम्=तन्निरूपितमेव तु न तस्याः साध्यत्वम् सिद्धत्वेन साधनत्वात् इति। प्रसिद्धपरिमाणा क्रिया परिच्छेद्यक्रियान्तरं प्रति कालः, परिच्छेदकत्वात्। यथा—'गोदोहमास्ते' इति। न तु परिच्छेद्याया एवाप्रसिद्धपरिणामायाः क्रियायाः परिच्छेद्या क्रिया कालः, परिच्छेद्यत्वेन परिच्छेदकत्वासंभवात्। आदिग्रहणाद् विशेषणविशेष्यभावादेरापेक्षिकस्य=परापेक्षनिरूपकत्वस्य संग्रहः।

एवञ्च यस्य यं प्रति यदा विशेषणत्वम्, न तस्य तदैव तं प्रत्येव विशेष्यत्वम्, विरोधादित्यादिकमवगन्तव्यम्। एवं यस्य वनेचरस्य गवयः प्रसिद्धस्तस्य गवय उपमानम्, गौरप्रसिद्धस्तस्योपमेयः। गवय इव गौरिति।

नागरकस्य तु विपर्ययः। अत एव कामिनः शृङ्गाररसपरिपोषणपरतया नारीमुखमुत्कृष्टगुणत्वेन प्रसिद्धमिति शशिबिम्बस्योपमानं भवतीत्युक्तम्।। ४०७ ।।

अतः परमिदं भाष्यं 'किं पुनरिहोदाहरणम्। शस्त्रीश्यामा। क्व पुनरयं श्यामाशब्दो वर्तते। शस्त्र्यामित्याह। केनेदानीं देवदत्ताभिधीयते। समासेने'ति।

एतद् व्याचष्टे—

**श्यामत्वमुपमाने चेद् वृत्तं वृत्तौ प्रयुज्यते।**
**उपमेयं समासेन बाह्यं तत्राभिधीयते ।। ४०८ ।।**

पक्षान्तरस्यापि वक्ष्यमाणत्वाच्चेदित्यस्य पक्षस्याभ्युपगमं द्योतयति। उपमाने शस्त्र्यां यदि श्यामत्वं वृत्तौ समासे स्थितमभ्युपगम्यते, तदा वर्तिपदयोरुपमानवृत्तित्वात् ततो बाह्यं ताभ्यामनुपगृहीतमुपमेयं समासेनाभिधीयत इत्यायातम्। तथाचान्यपदार्थप्रधानोऽयं समासस्तत्पुरुषोऽपि।

नहि तस्योत्तरपदार्थप्राधान्यनियमः, नञ्समासे पक्षत्रयविचारानुपपत्तिप्रसङ्गात्। न चार्थादेशनं वचनानुसारि, लोकप्रसिद्धार्थस्यानुवादात्।

---

नागरकस्य तु विपर्ययः—गौः प्रसिद्ध उपमानम्, गवयस्तु तस्याप्रसिद्ध उपमेयः।

अत एव नारीमुखमुद्दीपनविभावत्वेन शृङ्गाररसपरिपोषणपरतया कामिन उत्कृष्टगुणत्वेन प्रसिद्धमिति शशिविम्बस्योपमानं भवति। 'मुखमिव चन्द्रः' इति। इत्युक्तम्—उपमानं प्रसिद्धत्वात् सर्वत्र व्यतिरिच्यते इति कारिकाव्याख्यावसरे इति ।। ४०७ ।।

अतः परमिदं भाष्यम्—"किं पुनरिहोदाहरणम्। 'शस्त्री श्यामा'। क्व पुनरयं श्यामा शब्दो वर्तते। शस्त्र्यामित्याह। केनेदानीं देवदत्ताऽभिधीयते। समासेन" इति। एतद् भाष्यं व्याचष्टे—श्यामत्वमुपमाने इति।

अस्यार्थः—चेत्=यदि, श्यामत्वमुपमाने वृत्तम्=वर्तमानम्, वृत्तौ=शस्त्रीश्यामा इत्यादौ समासे प्रयुज्यते, तदा तत्र वर्तिपदद्वयाद् बाह्यम्=तेनानभिधेयम्, देवदत्तारूपमुपमेयम्, समासेन=समासशक्त्याऽभिधीयत इति।

अयं भावः—कारिकायां चेदिति पदमस्य पक्षस्य=श्यामत्वमुपमाने वृत्तमित्यस्य पक्षस्य अभ्युपगमं द्योतयति। 'कृत्वा चिन्ता' न्यायवत् 'चेत् स्यात् चेन्न स्यात्' इत्येवं चेत्शब्दस्य विधिनिषेधोभयपरत्वेनात्र प्रकरणपर्यालोचनया एतत्पक्षविधिपरत्वात्। पक्षान्तरस्यापि वक्ष्यमाणत्वात्। यदि वृत्तौ=समासे, श्यामत्वमुपमाने शस्त्र्यां स्थितमभ्युपगम्यते, तदा शस्त्री श्यामेति समासान्तर्वर्तिपदयोरुपमानवृत्तित्वात् ततो बाह्यम् पदद्वयानभिधेयत्वेन ततो बाह्यम्=ताभ्याम् वर्तिपदाभ्यां स्वाभिधेयतयाऽस्वीकृतमुपमेयं समासेनाभिधीयते इत्यायातम्। तथा चायं समासः तत्पुरुषः सन्नपि बहुव्रीहिवदन्यपदार्थप्रधानः। न हि तत्पुरुषस्योत्तरपदार्थप्राधान्यनियमः। भाष्ये नञ्समासे पक्षत्रयविचारानुपपत्तिप्रसङ्गात्। न चार्थादेशनम्=लोकेऽर्थविषयको व्यवहारः वचनानुसारि (शास्त्रमनुसरति) लोकप्रसिद्धार्थस्य शास्त्रवचनेनानुवादात्।

तथाचेह समानाधिकरणसमासानुरोधाद् वृत्तौ शस्त्रीशब्दसमानाधिकरणत्वेनापि श्यामाशब्दस्य प्रयोगे भवत्युपमेयस्य सम्प्रत्ययं इत्यन्यपदार्थप्रधानत्वेन व्यवस्था ।

यद्येवमनेनैव न्यायेन बहुव्रीहावन्यपदार्थप्राधान्यसिद्धेः किमन्यपदार्थग्रहणेन । सत्यम् । किन्तु न सर्वं प्रत्याख्येयं प्रयोगानुसारेणेत्यन्तरङ्गे स्वपदार्थे सम्प्रत्ययाशङ्कापनोदाय युक्तमन्यपदार्थग्रहणम् । तत्र शेषाधिकारविहितत्वाच्च बहुव्रीहेर्न तेनास्य बाधः ।

अन्यथा बहुव्रीहिसंज्ञायां गुणवचनस्य श्यामाशब्दस्य विशेषणत्वात् पूर्वनिपातः स्यात् । क्लृप्तव्यवस्थितविभाषाविज्ञानादपि परिह्रियते । स्वरस्त्वभिन्नः, तत्पुरुषेऽप्यत्रोपमानाश्रय एव पूर्वपदप्रकृतिस्वरो भवति ।

ननु च बहुव्रीहौ शस्त्री श्यामा यस्येत्येवं सम्बन्धे न भवेदौपम्यप्रतीतिः । नैतदस्ति । शस्त्री श्यामा यस्या देवदत्ताया इति सम्बन्धसामान्ये बहुव्रीहिः । सामान्यं च विशेषनिष्ठम् । कश्चात्र सम्बन्धविशेष इत्युपमानोपमेयभाव एव प्रतीयेतान्यस्यायोगात् । तस्माच्छेषवचनाद् बहुव्रीहेरयं न विषयः ।

---

तथा चेह=‘शस्त्रीश्यामा’ इत्यत्र समानाधिकरणसमासानुरोधाद् वृत्तौ=समासे ‘शस्त्री’ शब्दसमानाधिकरणत्वेनापि ‘श्यामा’ शब्दस्य प्रयोगे भवत्युपमेयस्य सम्प्रत्ययः समासेन इत्यन्यपदार्थप्रधानत्वेन व्यवस्थाऽस्य समासस्य ।

यद्येवमनेनैव न्यायेन बहुव्रीहावन्यपदार्थप्राधान्यसिद्धेः किं सूत्रेऽनेकपदार्थग्रहणेनासत्यम् । किन्तु न सर्वं प्रत्याख्येयम्, प्रयोगानुसारेण लक्षणं विना प्रयोगाणां लक्षणैकचक्षुष्कैर्दुर्विज्ञेयत्वात् । इत्यन्तरङ्गे स्वपदार्थे बहुव्रीहिसंप्रत्ययाशङ्कापनोदाय युक्तमन्यपदार्थग्रहणम् । तत्र बहुव्रीहेः “शेषे” (पा० ४।३।९२) इत्यधिकारविहितत्वाच्च न बहुव्रीहिणा अस्यान्यपदार्थे जायमानस्य तत्पुरुषस्य बाधः ।

अन्यथाऽस्य बहुव्रीहिसंज्ञायां गुणवचनस्य श्यामाशब्दस्य विशेषणत्वात् सप्तमीविशेषणे बहुव्रीहाविति पूर्वनिपातः स्यात् । बहुव्रीहेः क्लृप्तव्यवस्थितविभाषाज्ञानादपि ‘शस्त्रीश्यामा’ इत्यत्र बहुव्रीहिः परिह्रियते । स्वरस्तु द्वयोरपि समासयोरभिन्नः, बहुव्रीहौ हि—‘बहुव्रीहौ प्रकृत्या पूर्वपदम्’ ( पा० ६।३।१ ) इति पूर्वपदप्रकृतिस्वरः तत्पुरुषेऽपि ‘तत्पुरुषे तुल्यार्थतृतीया सप्तम्युपमानाव्ययद्वितीया कृत्याः’ ( पा० ६।२।२ ) इति उपमानाश्रय एवात्र पूर्वपदप्रकृतिस्वरः ।

ननु च बहुव्रीहौ शस्त्री श्यामा यस्येत्येवं सम्बन्धे औपम्यप्रतीतिः=उपमानोपमेयभावप्रतीतिः न भवेत् । नैतदस्ति । शस्त्री श्यामा यस्या देवदत्ताया इति सम्बन्धसामान्ये बहुव्रीहिः । यत्सम्बन्धिनी शस्त्री श्यामा इत्यर्थः । यस्या देवदत्ताया उपमानोपमेयभावरूपसम्बन्धवती शस्त्री श्यामा इति फलितार्थः । सामान्यञ्च विशेषनिष्ठम् । कश्चात्र सम्बन्धविशेष इति प्रश्ने उपमानोपमेयभाव एव प्रतीयते, अन्यस्य सम्बन्धस्यानयोरयोगात् । तस्माच्छेषवचनात् शस्त्री श्यामा इत्ययं बहुव्रीहेर्न विषयः ।

अथ 'सङ्ख्यासमानाधिकरणनञ्समासेषु दोषः' इति यदा शेषवचनं प्रत्याख्यायते, तदा कथम्। तदापि 'प्राकडारात् परं कार्यम्' इत्यत्र दर्शने वचनसामर्थ्यादयं तत्पुरुषो भवति। अनवकाशोऽयमिति परमेवेति नियमानुपपत्तिः।

यदापि 'प्राक् कडारादेका संज्ञे'ति दर्शनं तदाप्यनेन विशेषविधिनोपमानानि सामान्यवचनं च विशेषमाश्रित्य प्रवृत्तेरुपमेयलक्षणान्यथानुपपत्त्या सादृश्यमन्तर्भाव्योपमेयमाचष्टे, यथा शस्त्री श्यामा तथा देवदत्तेति शस्त्रीश्यामा कथ्यते। शस्त्रीव श्यामा देवदत्तेति वाक्ये श्यामाशब्दस्योपमेयाभ्यां सम्बन्धयोग्यत्वादेकतरोपक्षयत्वे तदितरो वाक्यार्थः।

समासे तु समानाधिकरणप्रस्तावादुपमान एव सामान्यवचनः सकृदुच्चरित इत्युपमेयः समासार्थो वर्ण्यत इति विशिष्यवृत्तावित्याह॥ ४०८॥

अतोऽनन्तरमिदं भाष्यं 'यद्येवं शस्त्रीश्यामो देवदत्त इति केन टाप्न श्रूयते' इति।

---

अथ शेषग्रहणे क्रियमाणे संख्यासमानाधिकरणनञ्समासेषु दोषः, यथा-'संख्यासमासः— 'पञ्चगवम्', समानाधिकरणसमासः— शस्त्रीश्यामा, नञ्समासः—अब्राह्मणः' इत्यत्र दोषः। अत्र संख्यासमासे-समाहारोऽन्यपदार्थः, समानाधिकरणसमासे—देवदत्तादिरन्यपदार्थः। नञ्समासे-प्रागुक्तरीत्या संबन्धी अन्यपदार्थ इति समासत्रयेऽप्यपदार्थस्योक्तत्वात् शेषत्वाभावोऽन्यपदार्थस्येति यदा शेषवचनं प्रत्याख्यायते, तदा कथम्? तदाऽपि 'प्राक्कडारात् परं कार्यम्' इत्यत्र दर्शने= इति सूत्रपाठपक्षे परत्वाद् बहुव्रीहौ प्राप्ते वचनसामर्थ्यादयं तत्पुरुषो भवति। अनवकाशोऽयम्= 'तत्पुरुषः इति परमेव'इति नियमानुपपत्तिः।

यदाऽपि ''आकडारादेकासंज्ञा'' (प० १।४९) इति दर्शनं तदाऽपि अनेन='उपमानानि सामान्यवचनैः' (पा० २।१।५५) इति सूत्ररूपेण विशेषविधिना कृतस्य समासस्योपमानानि सामान्यवचनं च विशेषमाश्रित्य प्रवृत्तेरुपमेयलक्षणान्यथानुपपत्या=उपमेयस्वरूपान्यथानुपपत्त्या सादृश्यमन्तर्भाव्योपमेयमाचष्टेऽयं समासः। यथा-'शस्त्री श्यामा' तथा-'देवदत्तेति शस्त्रीश्यामा देवदत्ता समासेन कथ्यते। 'शस्त्रीव श्यामा' इति वाक्ये तु श्यामा शब्दस्योपमानोपमेयाभ्यां संबन्धयोग्यत्वाद् एकतरोपक्षयत्वे=एकस्मिन् क्षीणशक्तिकत्वे तदितरो वाक्यार्थः।

समासे तु समानाधिकरणप्रस्तावात्=समानाधिकरणाधिकारात्, उपमाने एव 'श्यामा' शब्दः सामान्यवचनः सकृदुच्चरित इत्युपमेयः समासार्थो वर्ण्यते इति विशिष्य=वाक्याद् विशेषं मत्वा कारिकायां वृत्तावित्याहेति॥ ४०८॥

अतोऽनन्तरमिदं भाष्यम्—''यद्येवं 'शस्त्रीश्यामो देवदत्तः' इति केन टाप् न श्रूयते'' इति।

एतद् विवृणोति—

**टाबन्त एव चैत्रादौ श्यामाशब्दस्तथा भवेत् ।**
**सूत्रे च प्रथमाभावान्न श्यामाद्युपसर्जनम् ॥ ४०९ ॥**

शस्त्र्यां वर्तमानः श्यामाशब्दो गुणवचनानामाश्रयतो लिङ्गवचनभावात् स्त्रीवृत्तिष्टाबन्त इति समासवाच्यत्वे चैत्रादेरुपमेयस्य शस्त्रीश्यामा चैत्र इति स्यात् । सामान्यवचनैरिति च तृतीयानिर्देशात् प्रथमानिर्दिष्टमित्युपसर्जनसंज्ञाऽभावे ह्रस्वत्वमत्र नास्ति । उपमेयवृत्तित्वे तु तल्लिङ्गं सिध्यति ॥ ४०९ ॥

अतोऽनन्तरं भाष्यम् 'उपसर्जनह्रस्वत्वमत्र भविष्यती'ति तत्र प्रथमानिर्देशाभावे 'एकविभक्ति—' (पा० १।२।४४) इत्युपसर्जनत्वं स्यात् । अन्वर्थत्वेन वाऽप्रधानत्वात् । तथाचानन्तरं चोद्यभाष्यं—'यदि तर्ह्युपसर्जनान्येवञ्जातीयकानि भवन्ति, तित्तिरिकल्माषी, कुम्भकपाललोहिनीत्यनुपसर्जनलक्षण ईकारो न प्राप्नोतीति ।

---

अत्र केन इत्यस्य हेतुना इति शेषः । एतद् भाष्यं व्याचष्टे — टाबन्त एवेति ।

अस्यार्थः—तथा सति=समासे श्यामाशब्दस्योपमानवाचित्वे सति, चैत्रादौ समासेनाभिधीयमाने सति समासघटकः श्यामाशब्दष्टाबन्त एव भवेत् । 'शस्त्रीश्यामा चैत्रः' इति । 'शस्त्रीश्यामश्चैत्रः' इति तु इष्यते । "उपमानानि सामान्यवचनैः" (पा० २।१।५५) इति सूत्रे च प्रथमाभावात्=सामान्यस्य श्यामत्वादेः प्रथमान्तपदेन निर्दिश्यमानत्वाभावात्, श्यामादिरूपं सामान्यं नोपसर्जनम् इति "गोस्त्रियोरुपसर्जनस्य" (पा० १।२।४८) इति ह्रस्वत्वाप्राप्तिरिति ।

अयं भावः—सामान्यवचनानां शब्दानामुपमानवृत्तित्वे शास्त्र्यां वर्तमानः श्यामाशब्दो गुणवचनानामाश्रयतो लिङ्गवचनभावात् स्त्रीवृत्तिष्टाबन्त इति चैत्रादेरुपमेयस्य समासवाच्यत्वे 'शस्त्रीश्यामा चैत्रः' इति स्यात् । "सामान्यवचनैः" इति च तृतीयानिर्देशात् प्रथमानिर्दिष्टमित्युक्त्या उपसंज्ञाया अभावे श्यामाशब्दस्य उपसर्जनह्रस्वत्वमत्र नास्ति । सामान्यवचनानामुपमेयवृत्तित्वे तु तल्लिङ्गम्=उपमेयलिङ्गम् 'शस्त्री श्यामश्चैत्रः' इति सिद्धचति ॥ ४०९ ॥

अतोऽनन्तरं भाष्यम्—"उपसर्जनह्रस्वत्वमत्र भविष्यति" इति । अत्र इत्यस्य 'शस्त्रीश्यामश्चैत्रः' इत्यत्रेत्यर्थः । तत्र=(पा० २।१।५५) उपमानानि सामान्यवचनैः, इत्यत्र सामान्यवचनानां प्रथमानिर्देशाभावे—"एकविभक्ति" (पा० १।२।४४) इत्युपसर्जनत्वं स्यात् । अन्वर्थत्वेन=अर्थानुगमेन वा उपसर्जत्वम्=अप्रधानत्वम् । तथा चानन्तरं चोद्यभाष्यम्=आक्षेपभाष्यम्—"यदि तर्हि उपसर्जनानि एवं जातीयकानि भवन्ति, तित्तिरिकल्माषी, कुम्भकपाललोहिनी इत्यनुपसर्जनलक्षण ईकारो न प्राप्नोति" इति ।

तदेतद् व्याचष्टे

**अथवैकविभक्तित्वाद् गुणत्वाद् वोपसर्जनम् ।**
**नैव तित्तिरिकल्माष्यामिष्टः स्त्रीप्रत्ययो भवेत् ॥ ४१० ॥**

प्रतियोगिनः पदस्य नानाविभक्तियोगेऽपि यदभिन्नविभक्ति तदुपसर्जनमुक्तं कौशाम्ब्यादि । इहापि समासे कर्तव्यत्वेन विषयभूते यत् प्रक्रियावाक्यं, तत्र प्रधानमन्यपदार्थं पदं नानाक्रियावेशादनेकविभक्तीति तदपेक्षया गुणवचनं भवत्येवैकविभक्ति । प्रधानस्य नानाक्रियावेशेऽपि हि न गुणः स्वरूपादपैति । तथाच 'बहुव्रीहावनेकवचनमुपसर्जनार्थं नवैकविभक्तित्वादिति प्रत्याख्यातम् । तत्र च प्रधानस्यान्यपदार्थस्म पदस्य नानाविभक्तित्वमाश्रित्यैकविभक्ति वर्त्तिपदम् । एवमिहापि

---

अत्र—"एवं जातीयकानि" इत्यस्य सामान्यवचनत्वे सति उपमानवचनानि इत्यर्थः । तदेतद् भाष्यं भावतो व्याचष्टे—अथवैकविभक्तित्वादिति ।

अस्यार्थः—अथवा इति पक्षान्तरे, 'शस्त्रीश्यामश्चैत्रः' इत्यत्रोपमानवाची श्यामाशब्दः एकविभक्तित्वाद्, गुणत्वाद्, अप्रधानत्वाद् वा उपसर्जनमपि संभवति इत्यर्थः । 'शस्त्री श्यामा यस्याः' इति विग्रहे प्रागुक्तेऽन्यपदार्थकस्य समासस्यानेकक्रियायोगितया प्रथमान्तत्व-द्वितीयान्तत्वादिनाऽनियतविभक्तिकत्वेऽपि सामान्यवचनस्य 'श्यामा'शब्दस्यैकविभक्तिकत्वमेवेति तस्योपसर्जनत्वम् । अथवाऽन्यपदार्थे गुणत्वात् श्यामाशब्दस्योपसर्जनत्वम् इति यद्युच्यते तदातित्तिरिकल्माष्यामिष्टः स्त्रीप्रत्ययः अनुपसर्जनलक्षण ईकारो नैव भवेदिति ।

अयं भावः—प्रतियोगिनः-यत्किञ्चिन्निष्ठगुणत्वनिरूपकस्य 'निष्कौशाम्बिः, शस्त्रीश्यामा' इत्यादौ निरादेः समासपदस्य च नानाक्रियान्वयित्वेन नानाविभक्तियोगेऽपि यदभिन्नविभक्ति तदुपसर्जनमुक्तं कौशाम्बी श्यामादि ।

इहापि 'शस्त्रीश्यामा' इत्यादौ समासे कर्तव्यत्वेन विषयभूते=विवक्षिते यत् प्रक्रिया वाक्यम्=शस्त्री श्यामा यस्या इति प्रागुक्तम्, तत्र प्रधानमन्यपदार्थकं यत्पदं तदर्थस्य नाना क्रियावेशात् तत्पदमनेकविभक्तिकमिति तदपेक्षयागुणवचनं पदं भवत्येवैकविभक्तिकम् । अत्र प्रधानस्य नानाक्रियावेशेऽपि हि न गुणः स्वरूपादपैति=न गुणवाचकं पदमेकविभक्तिकत्वलक्षणात् स्वरूपाद् बहिर्गच्छति । तथा च "बहुव्रीहावनेकवचनमुपसर्जनार्थम्, न वैकविभक्तित्वात्'इति "अनेकमन्यपदार्थे" ( पा० २।२।२४ ) इति सूत्रेऽनेकग्रहणं प्रत्याख्यातं भाष्ये ।

अस्य भाष्यस्यायमर्थः—बहुव्रीहौ=बहुव्रीहिविधायके सूत्रे, अनेकवचनं कर्तव्यम् । उपसर्जनार्थम् प्रथमानिर्देशादुपसर्जनसंज्ञा यथा स्यात्, न वा, एतदर्थं बहुव्रीहिविधायके सूत्रेऽनेकग्रहणं न कर्तव्यम्, वर्तिपदस्यैकविभक्तित्वात्, "एकविभक्ति चापूर्वनिपाते" ( पा० १।२।४४ ) इति उपसर्जनसंज्ञा भविष्यति इति । तत्र च प्रधानस्यान्यपदार्थकस्य पदस्य नानाक्रियायोगित्वेन नानाविभक्तिकत्वमाश्रित्यैकविभक्ति वर्तिपदम्=समासघटकं पदम् । एवनिहापि='शस्त्री-

भविष्यतीत्यस्त्येकविभक्तित्वादुपसर्जनत्वम् । अन्यत्र तु समानाधिकरणसमासेऽनिष्टप्रसङ्गो नास्त्युत्तरपदार्थप्रधानत्वाद्, यथायथं क्रियायोगे तत्रोत्तरपदस्य नानाविभक्तित्वाद् 'उभयगतिरिह शास्त्रे सम्भवति (परि० ९) इत वा न्यायादन्वर्थत्वेऽप्रधानमुपसर्जनम्, अन्यपदार्थप्राधान्याच्चोत्तरपदार्थो गुणः ।

न चैवं लौकिकेऽर्थे समाश्रीयमाणे संज्ञाकरणमफलम्, प्रधानस्यापि कस्यचित् पूर्वनिपातार्थं संज्ञाविषयत्वात् । तद्यथा—पुरुषव्याघ्रः, पाचकवृन्दारिका, पूर्वकायः, अर्धपिप्पलीति । अत्र पूर्वपदार्थः प्रधानमिति समासशास्त्रे प्रथमानिर्देशादुपसर्जनसंज्ञा सफला । विषयभेदेन च कृत्रिमाकृत्रिमयोः शास्त्रे समाश्रयणान्नात्र लौकिकमुपसर्जनमाश्रीयते ।

तथाच पूर्वनिपाताव्यवस्थाभावः, राज्ञो गोः क्षीरमिति समासशास्त्रे द्वयोः षष्ठीति प्रथमानिर्देशादुपसर्जनत्वेऽन्वर्थत्वाश्रयमेकस्यैव तद्व्यवस्थानम् ।

एवञ्च कौशाम्ब्यादीनां समासे परार्थत्वादेवोपसर्जनत्वे सिद्धेऽप्येकविभक्तेः कृत्रिमतासिद्ध्यर्थमुपसर्जनसंज्ञा अपूर्वनिपातार्थं युज्यत एव । कृत्रिमाकृत्रिमत्वेऽप्युप-

---

श्यामश्वैत्रः' इत्यादावपि भविष्यतीत्यस्त्येकविभक्तित्वादुपमर्जनत्वम् । उपमानसमासादन्यत्र तु 'कृष्णा कुमारी कृष्णकुमारी' इत्यादौ समानाधिकरणसमासेऽनिष्टप्रसङ्गः=उपसर्जनत्वातिव्याप्तिः नास्ति, उत्तरपदार्थप्रधानत्वात्=उत्तरपदार्थस्य प्रधानत्वेनानुपसर्जनत्वात् 'कृष्णकुमारीं पश्य, कृष्णकुमार्या कृतम्' इत्यादौ यथायथं क्रियायोगे तत्रोत्तरपदस्य अप्रधानत्वरूपोपसर्जनत्वेऽपि नानाविभक्तित्वात् एकविभक्तित्वप्रयुक्तोपसर्जनत्वाभावः । तथा चात्र 'कृत्रिमाकृत्रिमयोः कृत्रिमस्यैव ग्रहणम् (परि० ११५) इति न्यायाद् लौकिकोपसर्जनत्वप्रयुक्तस्य ह्रस्वत्वस्याभावः । शस्त्रीश्यामश्वैत्रः' इत्यादौ 'उभयगतिरिह संभवति' (परि० ९) इति न्यायादन्वर्थत्वे वाऽप्रधानमुपसर्जनम्, अन्यपदार्थप्राधान्याच्चात्रोत्तरपदार्थो गुण इति भवत्यत्रोपसर्जनह्रस्वत्वम् ।

न चैवं लौकिकोपसर्जनत्वरूपेऽर्थे समाश्रीयमाणे शास्त्रे उपसर्जनसंज्ञाकरणमफलम्, प्रधानस्यापि कस्यचित् 'पुरुषव्याघ्रः, अर्धपिप्पली' इत्यादौ "उपसर्जनं पूर्वम्" (पा० २।२।३०) इति पूर्वनिपातार्थं संज्ञाविषयत्वावश्यकत्वात् । तद्यथा="पुरुषव्याघ्रः, पाचकवृन्दारिका, पूर्वकायः, अर्धपिप्पली" इति । अत्र पूर्वपदार्थः सर्वत्र प्रधानमिति समासशास्त्रे प्रथमानिर्देशादुपसर्जनसंज्ञासफला । इष्टानुरोधेन विषयभेदेन च कृत्रिमाकृत्रिमयोः शास्त्रे समाश्रयणान्नात्र= 'पूर्वकायः' इत्यादौ पूर्वपदार्थप्रधाने समासे लौकिकमुपसर्जनमाश्रीयते ।

तथा चात्र पूर्वनिपाताव्यवस्थाऽभावः=पूर्वनिपातविकल्पाभावः । 'राज्ञो गोः क्षीरम्' इत्यत्र समासशास्त्रे षष्ठीति प्रथमानिर्देशाद् द्वयोः षष्ठ्यन्तयोरुपसर्जनत्वेऽपि उपसर्जनपदस्य अन्वर्थत्वाश्रयमेकस्यैव=गोरेव तद् व्यवस्थानम्=पूर्वनिपातव्यवस्था ।

एवञ्च कौशाम्ब्यादीनां समासे 'निष्कौशाम्बिः' इत्यादौ परार्थत्वादेव=विशेषणतया परव्यावृत्त्यर्थत्वेनाप्रधानत्वादेव उपसर्जनत्वे सिद्धेऽपि एकविभक्तेरुपसर्जनसंज्ञायाः कृत्रिमतासिद्ध्यर्थं कौशाम्ब्यादीनामुपसर्जनसंज्ञा अपूर्वनिपातार्थम्=पूर्वनिपाताभावार्थम् युज्यत एव ।

सर्जनस्य पूर्वनिपाते कृत्रिमस्यैवाश्रयणम्। उभयोः कृत्रिमत्वेऽन्वर्थत्वेन व्यवस्था। ह्रस्वविधौ तु व्याप्तेर्न्यायादुभयोराश्रयणम्। 'लुक् तद्धितलुकि' (पा० १।२।४९) इति स्त्रीप्रत्ययान्तरस्योत्तरपदत्वेन प्रथमानिर्देशाभावेऽपि तद्धितार्थविशेषणत्वादन्वर्थमुपसर्जनत्वम्।

तदेवमत्र श्यामादेरुपसर्जनत्वमुपपद्यत इति ह्रस्वः सिध्यति। उपमेयस्यान्यपदार्थस्य नानाविभक्तित्वेऽप्येकविभक्तित्वं तदपेक्षम्, उपमानस्य चोपमेयार्थत्वाद् गुणभाव इत्युपमानापेक्षमत्र श्यामादेर्गुणत्वमिति विकल्पः समर्थनीयः। अन्यथोपमेयापेक्ष एव गुणत्वे तेनैवैकविभक्तिरिति विकल्पो नोपपद्येत।

एवमनेन प्रकारेण ह्रस्वसिद्धावपि तित्तिरिकल्माषीत्यत्र 'अन्यतो ङीप्' (पा० ४।१।४०) इति स्त्रीप्रत्ययोऽभिमतो न स्यात्।

तथाह्यत्र पूर्वं स्त्रीप्रत्यये तित्तिरिणोपमानेन पुल्लिङ्गेन कल्माषीशब्दस्य सामानाधिकरण्यं न स्यादिति पूर्वमकृत्वैव स्त्रीप्रत्ययं सामानाधिकरण्यादुपमानवृत्तित्वे

---

उपसर्जनस्य कृत्रिमाकृत्रिमत्वेऽपि पूर्वनिपाते कृत्रिमस्यैवाश्रयणम्। 'राज्ञो गोः क्षीरम्' इत्यादौ "षष्ठीति प्रथमानिर्देशात्" उभयोः कृत्रिमत्वेऽन्वर्थत्वेन एकस्यैव पूर्वनिपातव्यवस्था। 'शस्त्रीश्यामश्वैत्रः' इत्यादौ "गोस्त्रियोरुपसर्जनस्य" इति ह्रस्वविधौ तु व्याप्तिरूपान् न्यायादुभयोः=कृत्रिमाकृत्रिमयोः, प्रागुक्तरीत्या आश्रयणम्। "आपिशलिनाप्रोक्तां शाखामधीते वेद वा आपिशला परमा आपिशला=परमा पिशलाब्राह्मणी' इत्यत्र "प्रोक्ताल्लुक्" (पा० ४।२।६४) इति अध्येतृवेदित्रन्यतरार्थकप्रत्ययस्य लुकि 'लुक्तद्धितलुकि' (पा० १।२।४९) इति स्त्रीप्रत्ययस्यापि अणन्ताज्जातस्य ङीपो लुकि स्त्रीप्रत्ययान्तस्योत्तरपदत्वेन प्रथमानिर्देशाभावेऽपि अध्येतृतद्धितार्थविशेषणत्वादन्वर्थमुपसर्जनत्वम्, तेन प्रोक्ताणन्तादनुपसर्जनलक्षण ईकारो न भवति, किन्तु टावेव, 'परमापिशला ब्राह्मणी' इति।

तदेवमत्र='शस्त्रीश्यामश्वैत्रः' इत्यादौ श्यामादेरप्रधानत्वलक्षणमकृत्रिमत्वम्, एकविभक्तित्वलक्षणञ्च कृत्रिममुपसर्जनत्वमुपपद्यते इति 'शस्त्रीश्यामश्वैत्रः' इत्यादौ उपसर्जनत्वप्रयुक्तो ह्रस्वः सिद्ध्यति। उपमेयस्यान्यपदार्थस्य नानाक्रियायोगितया नानाविभक्तिकत्वेऽपि=एव श्यामादौ साधारणधर्मे एकविभक्तित्वं तदपेक्षम्=उपमेयापेक्षम्, न तूपमानापेक्षम्। उपमानस्यापि एकविभक्तिकत्वात्। उपमानस्य चोपमेयार्थत्वाद् गुणभाव इत्युपमानापेक्षमत्र='शस्त्रीश्यामश्वैत्रः' इत्यादौ श्यामादेर्गुणत्वमिति उपसर्जनत्वस्वरूपविकल्पः समर्थनीयः। अन्यथोपमेयापेक्षे एव गुणत्वे तेनैव=उपमेयापेक्षगुणत्वेनैव हेतुना, एकविभक्तिरिति विकल्पो नोपपद्येत।

एवमनेन प्रकारेण 'शस्त्रीश्यामश्वैत्रः' इत्यादौ ह्रस्वसिद्धावपि 'तित्तिरिकल्माषी' इत्यत्र अन्यतो ङीप् (पा० ४।१४०, इति स्त्रीप्रत्ययोऽभिमतो न स्यात्।

तथा ह्यत्र पूर्वं स्त्रीप्रत्यये तित्तिरिणोपमानेन पुंलिङ्गेन कल्माषीशब्दस्य सामानाधिकरण्यं न स्यादिति पूर्वमकृत्वैव स्त्रीप्रत्ययं सामानाधिकरण्यात् कल्माषशब्दस्योपमानवृत्तित्वे

वर्तिपदयोः समासः क्रियते। समासवाच्या चोपमेया स्त्रीति स्त्रियामनुपसर्जनाधिकारान्ङीष् न स्यात्। कल्माषस्योपमेये गुणत्वात्। ततश्च टावत्र स्त्रीप्रत्ययः प्रसज्येत।

एवं कुम्भकपाललोहिनीति 'वर्णादनुदात्तात्—' (पा० ४।१।३९) इति ङीप् न स्यादित्यर्थः। एवं सत्युपसर्जनत्वेऽनिष्टमिदमभ्युपगम्योक्तम्। न त्वत्रोपसर्जनत्वं न्याय्यम्।

कृत्रिमे हि सम्भवति ह्रस्वविधौ तस्यैव सम्प्रत्ययो युक्तः। 'लुक् तद्धितलुकि' (पा० १।२।४९) इत्यत्र प्रकृतस्य कृत्रिमस्यासम्भवादनुवृत्तिसामर्थ्याल्लौकिकमन्वर्थमाश्रीयते। ततोऽन्यत्र त्वकृत्रिमाश्रयमेव युक्तम्। अत्र च कृत्रिमत्वं नास्ति।

'एकविभक्ति' (पा० १।२।४७) इति ह्येवं व्याख्यायते—समास इत्याधारसप्तमी, न विषयसप्तमी। तेन समासाधारं यदेकविभक्ति तत्रैव प्रतियोगिनो नानाविभक्तित्वे तदुपसर्जनसंज्ञमिति।

---

वर्तिपदयोः=समासघटकपदयोः समासः क्रियते। समासवाच्या चोपमेया स्त्रीति अनुपसर्जनाधिकारात् स्त्रियां ङीप् न स्यादिति कारिकाशयः।

एवमुपसर्जनत्वे सति अनिष्टमिदं तित्तिरिकल्माष्यां ङीषोऽप्राप्तिरूपमभ्युपगम्योक्तम्। किन्तु 'तित्तिरिकल्माषी' इत्यत्र नोपसर्जनत्वं न्याय्यम्-तित्तिरिरिव कल्माषी इति विग्रहे उत्तरपदार्थस्य प्रधानत्वात्।

ह्रस्वविधौ तु कृत्रिमे हि संभवति तस्यैव संप्रत्ययो युक्तः। 'कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यं संप्रत्ययः' इति न्यायात् इति एकविभक्तिकत्वरूपे कृत्रिमे उपसर्जनत्वे सति ह्रस्वत्वेन शस्त्रीश्यामश्चैत्र इति प्रयोगोपपत्तिः। 'लुक् तद्धितलुकि' (पा०१।२।४९) इत्यत्र तु प्रकृतस्य कृत्रिमस्य एकविभक्तिकत्वरूपस्यासंभवात् अनुवृत्तिसामर्थ्यात्="टिड्ढाणञ्" इत्यत्रानुपसर्जनादित्यस्यानुवृत्तिसामर्थ्यात्, अन्वर्थमप्रधानत्वरूपमुपसर्जनत्वमाश्रीयते। तेन=आपिशला परमापिशला इत्यादौ अनुपसर्जनलक्षण ईकारो=ङीप् 'टिड्ढाणञ्' (पा० ४।१।१५) इति विहितो न। ततोऽन्यत्र तु=ह्रस्वविधेरन्यत्र तु अकृत्रिमाश्रयणमेव युक्तम्, इष्टप्रयोगानुरोधात्। अत्र च=ह्रस्वविधेरन्यत्र च कृत्रिमत्वम्=कृत्रिमोपसर्जनत्वं नास्ति।

यतः "एकविभक्ति" (पा० १।२।४४) इति सूत्रमेवं व्याख्यायते—समासे इत्याधारसप्तमी, न तु विषयसप्तमी, आपिशलादेरपि अकृत्रिमोपसर्जनस्य क्वचिद् बहुव्रीह्यादिसमासविषये एकविभक्तित्वसंभवेन कृत्रिमत्वोपसर्जनत्वापत्तेः। तत्रेष्टाऽकृत्रिमोपसर्जनत्वव्यवस्था भज्येत। एवम् 'राजकुमारी' इत्यादौ 'कुमारी' पदस्यापि क्वचिद् बहुव्रीहिविषये एकविभक्तित्वसंभवेन उपसर्जनह्रस्वत्वापत्तेः। समासपदेन चात्र यत्समासघटकपदे एकविभक्तित्वमानेयम्, स एव भावतो गृह्यते। तेनान्यसमासाधारकमेकविभक्तित्वमादाय न राजकुमारीत्यादावतिप्रसङ्गः।

तेनायमर्थः संपद्यते—समासाधारम्=समासघटकं सद् यदेकविभक्तिः तत्रैव, न तु समासविषये प्रतियोगिनः=विशेष्यत्वप्रतियोगिवाचकपदस्य नानाविभक्तित्वे तदुपसर्जनसंज्ञमिति।

अत्र स समासस्थस्य प्रतियोगिनः पदस्य विभिन्नविभक्तियोगाभावः समानाधिकरणसमासो ह्ययमिति कथं भिन्नविभक्तियोगः स्यात् ।

अत एव भाष्यकारेणारुचिरत्र सूचिता 'यदि पुनरुपसर्जनान्येवञ्जातीयकानि भवन्ती'ति । नैवंविधेषूपसर्जनसंज्ञावकल्पत इत्यर्थः । तस्मादुपसर्जनत्वाभावाद्ध्रस्वत्वमत्र न स्यादिति स्थितमेतत्—

'टाबन्त एव चैत्रादौ श्यामाशब्दस्तथा भवेत्' ( वा० प० वृ० ४०९ ) इति ।

यत्तु चोदितं कैश्चित्—सत्यपि चोपसर्जनह्रस्वत्वे 'परवल्लिङ्गं—' (पा०२।४।२६) इति शब्दार्थातिदेशात् पुनराकारप्रसङ्ग इति ।

तदनुपपन्नम् । दत्ता युवतीत्यत्र शब्दातिदेशे द्वितीयस्य तिशब्दस्य प्रसङ्गात् । प्रत्याख्यातं तदिति, कुतः पुनराकारप्रसङ्गः ॥ ४१० ॥

अभ्युपगम्योपसर्जनत्वं स्त्रीप्रत्यये दोष उक्तः । तत्र समाधानं शङ्कित्वा दोषान्तरप्रसङ्गेन निराकरोति—

---

अत्र च='शस्त्रीश्यामा' इत्यादौ च समासस्थस्य प्रतियोगिनः पदस्य भिन्नविभक्तियोगाभावः, समानाधिकरणसमासो ह्ययम् इति कथं भिन्नविभक्तियोगः स्यात् ।

अत एव भाष्यकारेणात्र='शस्त्रीश्यामा' इत्यत्र श्यामाशब्दस्योपसर्जनत्वे अरुचिः सूचिता—"यदि पुनरुपसर्जनान्यप्येवजातीयकानि भवन्ति" इत्यत्र यदि शब्दोपादानेन । नैवंविधेषु उपसर्जनसंज्ञाऽवकल्पते, समानाधिकरणसमासत्वेनैकविभक्तित्वायोगात् । एकविभक्तित्वासंभवश्च प्रतियोगिनः समासघटकपदस्य नियतविभक्तित्वाभावात् । प्रतियोगिनः पदस्य अनियतविभक्तिकत्वाभावश्च समानाधिकरणसमासत्वात् । तस्मादुपसर्जनत्वाभावात् ह्रस्वत्वमत्र='शस्त्रीश्यामश्चैत्रः' इत्यादौ न स्यादिति स्थितमेतत्—

"टाबन्त एव चैत्रादौ श्यामाशब्दस्तथा भवेत्" इति ॥ ( वा० प० वृ० ४०९ ) ॥

यत्तु चोदितम्=आक्षिप्तम् कैश्चित्-'शस्त्रीश्यामश्चैत्रः' इत्यादौ सत्यपि चोपसर्जनह्रस्वत्वे-"परवल्लिङ्गम्" ( पा० २।४।२६ ) इति सूत्रेण शब्दार्थातिदेशात् पुनराकारप्रसङ्गः= आकारो वर्णः इति ।

तदनुपपन्नम्—'दत्ता युवती' इत्यत्र विग्रहे 'दत्ता'शब्दस्य यौगिकस्य नित्यं साधनसापेक्षत्वेन युवतीशब्देन सह समानाधिकरणसमासे परवल्लिङ्गमिति द्वितीयस्य पदस्य शब्दातिदेशे तिशब्दस्य प्रसङ्गाद् ।

किञ्च प्रत्याख्यातं तत्="परवल्लिङ्गम्" ( पा० २।४।२६ ) इति सूत्रम् 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य' इति कुतः पुनराकारप्रसङ्ग इति ॥ ४१० ॥

तित्तिरिः कल्माषो यस्या इति विग्रहे उपमानवृत्तेः साधारणधर्मस्य उपसर्जनत्वमभ्युपगम्य तित्तिरिकल्माषीशब्दे स्त्रीप्रत्यये दोष उक्तः—"नैव तित्तिरिकल्माष्यामिष्टः स्त्रीप्रत्ययो भवेत्" इति । तत्र समासस्य वर्णवाचित्वमनुपसर्जनत्वञ्चाश्रित्य स्त्रीप्रत्ययोपपत्तिरूपं समाधानं शङ्कित्वा तथापि इष्टस्य उपमानस्वरस्यासिद्धिरिति दोषान्तरप्रसङ्गेन निराकरोति—साधारणधर्मवाचक-

**सति शिष्टबलीयस्त्वाद् बाह्ये ङीषि च सत्यपि ।**
**उपमानस्वरो न स्यात् तस्मात् स्त्र्यन्तः समस्यते ॥ ४११ ॥**

कृते समासे तस्योपमेयार्थवृत्तेरनुपसर्जनत्वात् तस्मात् समासाद् बहिर्भूतः स्त्रीप्रत्ययोऽत्र भविष्यति। तित्तिरिकल्माषकुम्भकपाललोहितादयो हि समुदाया एव वर्णविशेषवाचिनो रूढाः। कल्माषादीनामेव तु वर्णवाचित्वे ग्रहणवता प्रातिपदिकेन तदन्तविधेः प्रतिषेधात्, समुदायादत्र स्त्रीप्रत्ययोऽभ्युपपगम्याप्युच्यते। अत एवाह—सत्यपि ङीषि चेति।

यद्वा 'अनुपसर्जनात् (पा० ४।१।१४) इति प्रधानेन तदन्तविध्यर्थो योगो व्याख्यातः। अत्र च नैवञ्जातीयकान्युपसर्जनानीति भाष्याभिप्रायाद् वर्णवाचिना प्रधानेन तदन्तविधेः समासात् स्त्रीप्रत्ययो जायते। एवमप्युपमानपूर्वपदप्रकृतिस्वरोऽत्रेष्टो न स्यात्।

---

पदस्य उपमानवृत्तित्वं पुंलिङ्गे न च समास इतीदं द्वयमपि समाधानबीजं निरस्यति—सति शिष्टबलीयस्त्वादिति।

अस्यार्थः—पुंलिङ्गेन कल्माषपदेन सह समासं कृत्वा उपमेयार्थवृत्तेः समासादनुपसर्जनात् समासबाह्ये ङीषि सत्यपि च सति शिष्टस्य ङीष्स्वरस्य आद्युदात्तलक्षणस्य बलीयस्त्वात् उपमानस्वरः=पूर्वपदप्रकृतिस्वरो न स्यात्, तस्माद्धेतोः स्त्र्यन्तः कल्माषीशब्दः समस्यते। एवं कृते उपमानस्वर एव ङीष् स्वरापेक्षया सति शिष्टः बलीयानिति उपमानस्वर इष्टः प्रसिध्यतीति, एतच्चोपमाने सामान्यवचनस्य वृत्तौ न लभ्यते, तित्तिरिणा पुंसा कुम्भकपालेन नपुंसकेन च सामानाधिकरण्यात् स्त्रीप्रत्ययानुत्पत्तेरिति।

एवञ्च=उपमाने सामान्यवचनस्य वृत्तौ च 'शस्त्रीश्यामश्चैत्रः' इत्यत्र ह्रस्वत्वानुपपत्तिरूपो दोषस्तदवस्थ एवेति।

अयं भावः—तित्तिरिशब्देन कल्माषशब्दस्य समासे कृते तस्य=समासस्य उपमेयार्थवृत्तेरनुपसर्जनाद् तस्माद् समासात् बहिर्भूतः स्त्रीप्रत्ययोऽत्र भविष्यति। तित्तिरिकल्माषकुम्भकपाललोहितादयो हि समुदाया एव न, न तु तदेकदेशकल्माषलोहितादयः, वर्णविशेषवाचिनो रूढाः। कल्माषादीनामेव तु वर्णवाचित्वे ग्रहणवता प्रातिपदिकेन तदन्तविधेः प्रतिषेधात् समुदायादत्र स्त्रीप्रत्ययोऽभ्युपगम्यापि उच्यते, न तु समुदायात् स्त्रीप्रत्ययस्य प्राप्तिरस्ति, अत एवाह—ङीपि च सत्यपीति।

यद्वा प्रधानेन वर्णादिवाचिना प्रातिपदिकेन सह तदन्तविध्यर्थोऽनुपसर्जनादिति योगो व्याख्यातः। अत्र च=तित्तिरिकल्माषीत्यत्र च नैवंजातीयकानि उपसर्जनानि भवन्ति इति भाष्याभिप्रायाद् वर्णवाचिना प्रधानेन तदन्तविधेः संभवात् समासात् स्त्रीप्रत्ययो जायते ग्रहणवतेति निषेधस्तु प्रागुक्तभाष्याभिप्रायादप्रधानेन तदन्तविधिनिषेधपरः।

एवमपि=तित्तिरिकल्माष्यामिष्टस्त्रीप्रत्ययसिद्धावपि 'तत्पुरुषे तुल्यार्थ (पा० ६।२।२) इत्यादि सूत्रेण उपमानपूर्वपदप्रकृतिस्वरोऽत्रेष्टो न स्यात्।

तथाहि—कृते समासे पूर्वपदप्रकृतिस्वरस्तावत्येव प्रवर्तते। पदग्रहणं हि परिमाणार्थमित्युक्तं, न सुबन्ततिङन्तपरिग्रहार्थम्। तत्र स्त्रीप्रत्यये प्रत्ययस्वरः सतिशिष्टत्वादुपमानपूर्वपदप्रकृतिस्वरं बाधेत। ङीषि चायं दोषः। तत्र स्वरस्य प्रत्ययोदात्तस्य भावात्। ङीषि त्वनुदात्तत्वादुपमानस्वर एवावशिष्यत इति विशेष्य ङीषीत्युक्तम्।

यत एवं स्वरदोषस्तस्मात् पूर्वमकृते समासे स्त्रीप्रत्यये कृते तदन्तस्य सामान्यवचनस्योपमानेन समासः कार्यः।

तथा च सतिशिष्टत्वादुपमानस्वर एवेष्टः सिध्यति। एतच्चोपमाने सामान्यवचनस्य वृत्तौ न लभ्यते, तित्तिरिणा पुंसा कुम्भकपालेन नपुंसकेन च सामानाधिकरण्यात् स्त्रीप्रत्ययानुत्पत्तेरिति सामान्यवचनस्योपमाने वृत्तावयं दोषः॥ ४११॥

किञ्च—

**गुणे न चोपमानस्थे सापेक्षत्वं प्रकल्पते।**
**प्राधान्यस्य (प्रधानस्य) तथा न स्याद् व्याघ्रादौ लिङ्गदर्शनम्॥४१२॥**

---

ननु तत्पुरुषे तुल्यार्थेत्यादि सूत्रे पदग्रहणमनुवर्तते, तच्च सुबन्ततिङन्तपरिग्रहार्थमिति समुदायात् स्त्रीप्रत्यये 'सुपि च' (पा० ७।३।१०२) सत्येव पदत्वसंपत्त्या इष्ट उपमानस्वरः सिद्धयतीति चेत्; अत्रोच्यते। पदग्रहणं हि स्वरभाक्त्वेन परिच्छेद्यस्य परिमाणार्थम्=परिच्छेदार्थम् इत्युक्तम्, न सुबन्ततिङन्तपरिग्रहार्थम्।

एवं सति तित्तिरिकल्माषात् स्त्रीप्रत्यये प्रत्ययस्वरः सति शिष्टत्वादुपमानपूर्वपदप्रकृतिस्वरं बाधेत। पुंयोगे ङीषि चायं दोषः। तत्र स्वरस्य प्रत्ययोदात्तस्य भावात्। ङीपि त्वनुदात्तत्वादुपमानस्वर एवावशिष्यत इति विशेष्य=विशेषं विचिन्त्य ङीषि च सत्यपीत्युक्तम्, न तु ङीपि चेति।

यत एवं पूर्वं समासे पश्चात् ङीषरूपस्त्रीप्रत्ययकरणे स्वरदोषो भवति। तस्मात् पूर्वं समासेऽकृते स्त्रीप्रत्यये ङीषि च कृते तदन्तस्य सामान्यवचनस्योपमानेन सह समासः कार्यः।

तथा च सति शिष्टत्वादुपमानस्वर एवेष्टः सिध्यति। एतच्च=तित्तिरिकल्माष्यामुपमानस्वरसिद्धिरूपं फलञ्च उपमाने सामान्यवचनस्य वृत्तौ न लभ्यते। तित्तिरिणा पुंसा कुम्भकपालेन नपुंसकेन च सामानाधिकरण्यान् स्त्रीप्रत्ययानुत्पत्तेरिति सामान्यवचनस्योपमाने वृत्तावयं दोषः=स्त्रीप्रत्ययानुत्पत्तिलक्षणो दोष इति॥ ४११॥

किञ्च सामान्यवचनास्योपमाने वृत्तावयमपरोऽपि दोष इत्याह—गुणेन चोपमानस्थे इति।

अस्यार्थः—गुणे=सामान्यधर्मे, व्याघ्रादौ उपमानस्थे, सामान्यवचनस्योपमानवृत्ताविति यावत्। प्रधानस्य पुरुषादेः शूरत्वादिसामान्यधर्मसापेक्षत्वं 'पुरुषोऽयं व्याघ्र इव शूरः पुरुषव्याघ्रः' इत्यादावुपमितसमासे न प्रकल्पते, सामान्यधर्मस्य शूरत्वादेरुपमानगतत्वात्, तथा

पुरुषोऽयं व्याघ्र इव शूरः पुरुषव्याघ्र इति 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' (पा०२।१।५६) इति समासे सामान्यवाचिनः शूरादेः शब्दस्य प्रयोगे तत्सापेक्षत्वादसामर्थ्यादेव समासो न भविष्यतीति किं सामान्याप्रयोग इति वचनेन।

तत्तु ज्ञापयति—भवति प्रधानस्य सापेक्षस्यापि समास इति व्यवस्थापितं लिङ्गदर्शनम्। एतच्च गुणे सामान्यधर्मे शौर्यादौ व्याघ्राद्युपमानगते पुरुषादेः प्रधानस्य तदपेक्षत्वं न स्याद्, उत्तरस्योपसर्जनस्य सापेक्षत्वादिति नोपपद्यते विवक्षितार्थज्ञापनम्।

उपमेयवृत्तौ हि गुणस्यैतद् ज्ञापकं युज्यते, नोपमानवृत्ताविति प्रदेशान्तरपर्यालोचनयापि नोपमानस्थत्वं गुणवचनस्य युक्तम्॥ ४१२॥

उपसर्जनत्वेन ह्रस्वसमर्थनमनुपपन्नमितीमं पक्षं हेयतयोपसंहर्तुमाह—

---

सति-सामान्यधर्मस्य उपमानगतत्वे सति-'पुरुषोऽयं व्याघ्र इव शूरः पुरुषव्याघ्रः' इति "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" ( पा० २।१।५६ ) इति सूत्रेण समासे सामान्यवाचिनः शूरादेः शब्दस्य प्रयोगे तत्सापेक्षत्वादसामर्थ्यादेव समासो न भविष्यति इति किं सामान्याप्रयोग इति वचनेन ? तत्तु ज्ञापयति—भवति प्रधानस्य सापेक्षस्यापि समास इति व्यवस्थापितं लिङ्गदर्शनम्=ज्ञापकदर्शनम् न स्यात्। सामान्यधर्मस्य शूरत्वादेरुपमानगतत्वेन उपमेयस्य प्रधानस्य पुरुषादेस्तत् सापेक्षत्वाभावादिति।

अयं भावः—'पुरुषोऽयं व्याघ्र इव शूरः पुरुषव्याघ्रः' इति "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" ( पा० २।१।५६ ) इति सूत्रेण समासे सामान्यवाचिनः शूरादेः शब्दस्य प्रयोगे पुरुषादेः प्रधानस्य तत्सापेक्षत्वादसामर्थ्यादेव समासो न भविष्यति इति, किं सूत्रे सामान्याप्रयोग इति वचनेन।

तत्तु व्यर्थीभूय ज्ञापयति-भवति प्रधानस्य सापेक्षस्यापि समास इति व्यवस्थापितं लिङ्गदर्शनम्=सामान्याप्रयोगे इति विवक्षितार्थे ज्ञापकमिति दर्शनम्। एतच्च विवक्षितार्थदर्शनं नोपपद्यते।

तथाहि—गुणे सामान्यधर्मे शौर्यादौ व्याघ्राद्युपमानगते प्रधानस्य पुरुषादेः तदपेक्षत्वम्=शौर्यादिसामान्यधर्मापेक्षत्वं न स्यात्, उत्तरपदार्थस्य व्याघ्रादेरुपसर्जनस्य तत् सापेक्षत्वादिति।

गुणस्य शौर्यादेः सामान्यधर्मरूपस्य उपमेयवृत्तौ हि एतद् ज्ञापकं युज्यते, नोपमानवृत्ताविति रीत्या प्रदेशान्तरपर्यालोचनयाऽपि नोपमानगतत्वं, गुणवचनस्य युक्तमिति॥ ४१२॥

'शस्त्रीश्यामस्त्रैत्रः' इत्यादौ उपसर्जनत्वेन ह्रस्वसमर्थनमनुपपन्नम्, साधारणधर्मस्य उपमानवृत्तित्वेऽप्राधान्ये सत्यपि शस्त्रीव श्यामेति विग्रहान्तरे प्राधान्यात्, उपमानवृत्तित्वेऽपि च समासेनोपमेयस्याभिधानाद् वस्तुतः प्राधान्यमेव साधारणधर्मस्येति इमं पक्षम्=साधारणधर्मस्योपमानवृत्तित्वपक्षम् हेयतयोपसंहर्तुमाह—तस्मात् सतीति।

**तस्मात् सति गुणत्वेऽपि प्राधान्यं विग्रहान्तरे ।**
**नैवञ्जातीयकं शास्त्रे सम्भवत्युपसर्जनम् ॥ ४१३ ॥**

उपमानवृत्तेरुपमेयविशेषणत्वात् सत्यप्यप्राधान्ये श्यामादेर्विग्रहान्तरे प्राधान्यमस्ति, यदोपमेयवृत्तिर्गुणस्तदा यद् वाक्यं तत्र । तथाहि—शस्त्रीव देवदत्ता श्यामेत्यत्र उपमेयवृत्तेः श्यामस्य प्राधान्यम् । उपमानवृत्तित्वेऽपि च समासेनोपमेयस्याभिधानाद् वस्तुतः प्राधान्यमेव धर्मस्य, प्रक्रियावाक्यापेक्षया तु गुणत्वम् ।

तथाचैवंप्रकारं वस्तुतः प्रधानं शास्त्रेऽपि नोपसर्जनमुपपद्यते । प्रक्रियाभेदेऽपि हि लौकिकोऽर्थः शास्त्रेणानुविधेयः । लोके च प्रधानमेवेदमित्यन्वर्थमपि शास्त्रे लोकसिद्धार्थानुवादके नास्त्युपसर्जनत्वम् । अत एव 'उपसर्जनान्यप्येवञ्जातीयकानी'ति भाष्येऽरुचिः सूचितेत्युक्तम् ॥ ४१३ ॥

---

अस्यार्थः—तस्मात्=साधारणधर्मस्योपमानवृत्तित्वे 'तित्तिरिकल्माषी' इत्यादौ पूर्वपदेन पुंसा सामानाधिकरण्यात् स्त्रीप्रत्ययानुत्पत्तिप्रसङ्गरूपात् कारणात्, किञ्च 'शस्त्रीव श्यामा' इति विग्रहान्तरे साधारणधर्मस्य प्राधान्यात्, किञ्च साधारणधर्मस्य शस्त्री श्यामा यस्य इति विग्रहे उपमानवृत्तित्वेऽपि समासेनोपमेयाभिधानाद् वस्तुतः साधारणधर्मस्य प्राधान्यात्, इत्येवं कारणत्रितयसत्त्वात् शस्त्री श्यामा यस्या इति विग्रहे साधारणधर्मस्योपमानवृत्तित्वेन गुणत्वे सत्यपि 'शस्त्रीव श्यामा' इति विग्रहान्तरे प्राधान्यमस्त्येवेति 'शस्त्री श्यामश्चैत्रः' इत्यादौ नोपसर्जनत्वप्रयुक्तस्य ह्रस्वत्वस्य प्राप्तिः । तस्मादेवं जातीयकम्, उपमानोपमेयसाधारणधर्मत्वजातीयकम्, उपमानसमासे उपसर्जनं न संभवतीति ।

अयं भावः—उपमानवृत्तेः श्यामदेर्गुणस्य साधारणधर्मरूपस्य उपमेयविशेषणत्वाद् अप्राधान्ये सत्यपि 'शस्त्रीव श्यामा देवदत्ताः' इत्यादौ विग्रहान्तरे उपमेयवृत्तित्वेन प्राधान्यमस्ति, यदा उपमेयवृत्तिर्गुणस्तदा यद् वाक्यं तत्र ।

तथाहि—'शस्त्रीव देवदत्ता श्यामाः' इत्यत्र उपमेयवृत्तेः श्यामगुणस्य प्राधान्यम् । उपमानवृत्तित्वेऽपि च तस्य समासेनोपमेयस्याभिधानाद् वस्तुतः प्राधान्यमेव श्यामगुणरूपस्य धर्मस्य, अलौकिकप्रक्रियावाक्यापेक्षया तु गुणत्वम् ।

तथा चैवंप्रकारम्=एवंविधम्, प्रक्रियावाक्ये गुणभूतमपि उपमानसमासे वस्तुतः प्रधानं शास्त्रेऽपि नोपसर्जनमुपपद्यते । शस्त्री श्यामा यस्याः, शस्त्रीव श्यामा इत्येवंप्रक्रियाभेदेऽपि हि लौकिकोऽर्थः शास्त्रेणानुविधेयः । लोके च उपमानसमासस्य प्रयोगे प्रधानमेवेदं साधारणधर्मरूपं श्यामत्वमिति अन्वर्थमपि=अप्रधानत्वरूपार्थानुगतमपि उपसर्जनत्वं लोकसिद्धार्थानुवादके शास्त्रे नास्ति ।

अत एव—"उपसर्जनान्यप्येवं जातीयकानि" इति भाष्ये श्यामगुणस्योपसर्जनत्वे अपिनाऽरुचिः सूचिता इत्युक्तं प्रागिति ॥ ४१३ ॥

तदेवमुपमानवृत्तित्वं गुणवचनस्यानुपपन्नमुक्त्वातोऽनन्तरं भाष्येऽभिहितम्—'एवं तर्हि शस्त्र्यामेव शस्त्रीशब्दो वर्तते। देवदत्तायां श्यामशब्द इत्युपमेयवृत्तित्वमाख्यातम्।

अत्र तु चोदितम्—"एवमपि गुणोऽनिर्दिष्टो भवति। बहवश्च शस्त्र्यां गुणाः सूक्ष्मा मृदुतरी" इति। उपमेये सामान्यवचनस्य वृत्तेर्यथायथं तल्लिङ्गपरिग्रहः सिद्धः। प्रकृतं चोत्तरपदार्थप्राधान्यमेव निर्वाहितं भवति।

किन्तु शस्त्रीव श्यामा देवदत्तेति श्यामगुणोपलक्षितस्योपमेयस्य निर्देशादुपमानगतस्य गुणस्य स्त्रीशब्देन जातिविशिष्टार्थाभिधायिना नियतस्यासंस्पर्शादौपम्यहेतोर्धर्मस्य प्रतिनियतस्य प्रज्ञापनं न स्यादिति भाष्यार्थः॥

अत्र परिहारभाष्यम्—'अनिर्दिश्यमानस्यापि गुणस्य भवति लोके सम्प्रत्ययः' इति।

एतद् विवृणोति—

**उपमेयात्मनि श्यामे वर्तमानोऽभिधीयते।**
**उपमानेष्वनिर्दिष्टः सामर्थ्यात् सम्प्रतीयते॥ ४१४॥**

---

तदेवं गुणवचनस्य शब्दस्योपमानवृत्तित्वमनुपपन्नमित्युक्त्वाऽतोऽनन्तरं भाष्येऽभिहितम्—एवं तर्हि शस्त्र्यामेव शस्त्री शब्दो वर्तते, देवदत्तायां श्यामाशब्द इति गुणवचनस्योपमेयवृत्तित्वमाख्यातम्।

अत्र तु=गुणवचनस्योपमेयवृत्तित्वे तु चोदितं भाष्ये—"एवमपि गुणोऽनिर्दिष्टो भवति। बहवश्च शस्त्र्यां गुणाः, सूक्ष्मा मृदुतरीति"।

अस्यार्थः—एवमपि=गुणवचनस्योपमेयवृत्तित्वे उपमेये साधारणधर्मस्य निर्देशेऽपि, उपमानशस्त्रीगतो गुण उपमानत्वप्रयोजकोऽनिर्दिष्टो भवति। किञ्च शस्त्र्यां बहवो गुणाः सूक्ष्मत्वमृदुतरत्वादयः सन्ति, तत्र को गुणः शस्त्र्या उपमानत्वप्रयोजकत्वेन विवक्षित इति न निर्दिष्टम् इति।

अस्य भाष्यस्य परमार्थस्तु—उपमेये सामान्यवचनस्य=साधारणधर्मवाचकस्य शब्दस्य वृत्तेर्यथायथं तल्लिङ्गपरिग्रहः='तित्तिरिकल्माषी' देवदत्ता, 'शस्त्रीश्यामश्चैत्रः' इत्यादौ उपमेयलिङ्गपरिग्रहः सिद्धः। प्रकृतञ्च उपमानसमासस्य तत्पुरुषसंज्ञकस्योत्तरपदार्थप्राधान्यमेवं सति=सामान्यवचनस्योपमेयवृत्तित्वे सति निर्वाहितं भवति।

किन्तु शस्त्रीव श्यामा देवदत्तेति विग्रहे श्यामगुणोपलक्षितस्य उपमेयस्य निर्देशादुपमानगतस्य नियतस्य गुणस्य 'शस्त्री'शब्देन जातिविशिष्टार्थाभिधायिनाऽसंस्पर्शात्=असम्बन्धादौपम्यहेतोः=सादृश्यप्रयोजकस्य उपमाने प्रतिनियतस्य साधारणधर्मस्य 'शस्त्री'शब्देन प्रज्ञापनं न स्यादिति।

अत्र परिहारभाष्यम्—"अनिर्दिश्यमानस्यापि गुणस्य भवति लोके संप्रत्ययः" इति।

एतत् भाष्यं विवृणोति—उपमेयात्मनि श्याम इति।

अस्यार्थः—उपमेयात्मनि=उपमेयस्वरूपे, वर्तमान श्यामो गुणः स्वशब्देन अभिधीयते=

यद्यपि साधारणो धर्मः श्यामादिरुपमेयस्थः स्वशब्देन प्रत्याय्यते। सकृद-भिधाव्यापाराच्च शब्दस्य तदुपक्षयत्वमेव। तथाप्युपमाने समानधर्मस्यान्यस्याश्रुतेः संनिधानात् साकाङ्क्षत्वाच्च श्रुतेनैव योगः परिकल्प्यते, अश्रुतपरिकल्पनायाः श्रुत-सम्बन्धस्य न्याय्यत्वात् ॥ ४१४ ॥

अत्रैव दृष्टान्तभाष्यं—'तद्यथा—चन्द्रमुखी देवदत्तेति। बहवश्च चन्द्रे गुणाः। या चासौ प्रियदर्शनता, सा गम्यते' इति।

एतद् व्याचष्टे—

द्रव्यमात्रेऽपि निर्दिष्टे चन्द्रवक्त्रेऽनुगम्यते।
विशिष्ट एव चन्द्रस्थो गुणो नोपप्लवादयः ॥ ४१५ ॥

---

अभिधया वृत्त्या बोध्यते। उपमाने तु स्वशब्देन उपमानशब्देन वाऽनिर्दिष्टोऽपि सामर्थ्यात् उपमा-त्वान्यथाऽनुपपत्तिलक्षणात् अर्थापत्याप्रमाणेन संप्रतीयत इति।

अयं भावः—यद्यपि साधारणो धर्मः श्यामादिः उपमेयगतः स्वशब्देन श्यामादिशब्देन अविधया वृत्त्या प्रत्याय्यते। 'सकृदुच्चरितः शब्दः सकृदर्थं गमयति' इत्यनुभवप्रमितसिद्धान्तेन शब्दस्य सकृदभिधाव्यापाराभ्युपगमाच्च तदुपक्षयत्वमेव = उपमेयवृत्तित्वमेव सामान्यवचनस्य। तथापि उपमाने शस्त्र्यादौ साधारणधर्मस्य श्यामादेरन्यस्याश्रवणात् उपमानत्वस्य स्वसिद्धौ साधारणधर्मसाकाङ्क्षत्वाच्च संनिधानात् = संनिधिरूपात् शाब्दबोधे सहकारिकारणात् श्रुतेनैव श्यामादिगुणेन साधारणधर्मरूपेणोपमानस्य योगः, न त्वनुमितेन सूक्ष्मत्वमृदुतरत्वादिना योगः परिकल्प्यते। 'श्रुतानुमितयोः श्रुतसंबन्धो बलीयान्' इति न्यायात्। अश्रुतसंबन्धपरिकल्पना-पेक्षया श्रुतसंबन्धस्य न्याय्यत्वादिति ॥ ४१४ ॥

अत्रैव = उपमानेष्वनिर्दिष्टस्य गुणस्य साधारणधर्मरूपस्य उपमानत्वप्रयोजकस्य सामर्थ्यात् संप्रत्यय एव। दृष्टान्तभाष्यम्—''तद् यथा—चन्द्रमुखी देवदत्तेति। बहवश्चन्द्रे गुणाः। या चासौ प्रियदर्शनता, सा गम्यते'' इति।

अस्यार्थः—यद्यपि चन्द्रे बहवो गुणास्तथापि—या चासौ चन्द्रे प्रियदर्शनता गुणः सैव चन्द्रे उपमानत्वान्यथानुपपत्तिसामर्थ्याद् गम्यत। इति। एतद् व्याचष्टे—द्रव्यमात्रेऽपि निर्दिष्टे इति।

अस्यार्थः—चन्द्रवक्त्रे 'चन्द्रमुखी देवदत्ता इत्यत्र चन्द्रसदृशवक्त्ररूपे, द्रव्यमात्रे— साधारणधर्मनिर्देशरहिते केवले द्रव्ये निर्दिष्टेऽपि, विशिष्ट एव—चन्द्रस्थासाधारणधर्मेभ्यो विल-क्षण एव चन्द्रस्थः साधारणो गुणः प्रियदर्शनताख्यः चन्द्रे उपमानत्वान्यथानुपपत्तिसामर्थ्यादनुग-गम्यते = प्रतीयते, न त्वन्ये चन्द्रधर्मा उपप्लवादयः प्रतीयन्ते। अत्रोपप्लवः शशाख्यो मलः। आदिग्रहणाद् वृद्धिक्षययोग इति।

चन्द्रमुखीति सामान्यधर्ममन्तरेणोपमानभूतद्रव्यमात्रोपादानेऽपि प्रसिद्धेरुपमानहेतुराह्लादकत्वादिः साधारणो धर्मोऽनुवर्त्यते, न त्वन्ये चन्द्रधर्मा उपप्लवादयः। उपप्लवः शशाख्यो मलः। आदिशब्दाद् वृद्धिक्षययोगः।

अन्ये तु वृद्धिक्षययोगो नित्यप्रवृत्तगतित्वं वोपप्लवः। आदिशब्दाच्छशलाञ्छनत्वादय इति व्याचक्षते।

इत्थञ्च यत्र नामानिर्दिष्टो गुणः प्रसिद्धेरुपमानहेतुर्विशिष्टः प्रतीयते, तत्रैकत्र श्रुतोऽपि सामर्थ्यादन्यत्र कथं न प्रतीयेतेत्यतिशयो निदर्शने गर्भीकृतः॥ ४१५॥

तदेवमुपमेयवृत्ति सामान्यवचनमित्ययं पक्षः। एतच्चात्र प्रक्रियायां नानात्वं विचार्यते। परमार्थतस्तु लौकिकः शस्त्रीश्यामादिरखण्डः शब्दो विशिष्टोपमेयार्थवाचीत्याह—

**भेदभावनयैतच्च समासेऽप्युपवर्ण्यते।**
**विशिष्टगुणभिन्नेऽर्थे पदमन्यत् प्रयुज्यते॥ ४१६॥**

---

अयं भावः—'चन्द्रमुखी' इत्यत्र सामान्यधर्ममन्तरेण=उपमानोपमेययोरुभयोरप्यौपम्यप्रयोजकसाधारणधर्मनिर्देशमन्तरेण उपमानभूतचन्द्ररूपद्रव्यमात्रोपादानेऽपि उपमानहेतुः=चन्द्रे उपमानत्वप्रयोजकः आह्लादकत्वादिः साधारणो धर्मोऽनुवर्त्यते=प्रयोक्त्रा संप्रत्ययगोचरतां तादृशप्रयोगद्वारा प्राप्यते, न त्वन्ये चन्द्रधर्मा उपप्लवादयोऽनुगम्यन्ते। उपप्लवः शशाख्यो मलः। आदिशब्दाद् वृद्धिक्षययोगः परिगृह्यते।

अन्ये तु वृद्धिक्षययोगः, सितासितपक्षभेदेन नित्यप्रवृत्तगतित्वं वा उपप्लवः।

आद्ये उपप्लवो विकारः, अन्त्ये गतिविशेषरूपः, प्लवतेर्गत्यर्थत्वात्। आदिग्रहणात् शशलाञ्छनत्वादय इति व्याचक्षते।

वस्तुतस्तु लाञ्छनरूपः शश उपप्लवपदेन परिग्रहार्हं इति नासावादिपदेन परिग्राह्य इति।

इत्थञ्च यत्र नासौ अनिर्दिष्ट उपमानहेतुर्विशिष्टो गुणः प्रसिद्धेः प्रतीयते, तत्रैकत्र श्रुतोऽपि सामर्थ्यादन्यत्र कथं न प्रतीयेतेत्यतिशयो निदर्शने=दृष्टान्ते गर्भीकृतः=निगूहितः कैमुतिकन्यायेन व्यञ्जनावृत्तिसहकारिणा प्रतीयत इति॥ ४१५॥

तदेवमुपमेयवृत्तिसामान्यवचनं पदमित्ययं पक्षः स्थितः। एतच्चात्र पक्षे प्रक्रियायां नानात्वं विचार्यते।

वस्तुतस्तु लौकिकः शस्त्रीश्यामादिरखण्डः शब्दः शस्त्रीश्यामत्वादि विशिष्टोपमेयार्थवाचीत्याह—भेदभावनयैतच्चेति।

अस्यार्थः—शस्त्री श्यामा यस्याः, शस्त्रीव श्यामा इति विग्रहवाक्यद्वये यथायथमुपमानार्थकत्वमुपमेयार्थकत्वमित्येवं भूतस्य भेदस्य नानात्वस्यानुभवेन जनितया भावनया वाक्यसामानार्थकत्वं समासस्यावसायसमासेऽपि एतच्च=सामान्यवचनस्योपमानोपमेयार्थत्वञ्च उपवर्ण्यते=अभि-

उपमानवृत्तित्वे सामान्यवचनस्यैकं वाक्यम्, उपमेयवृत्तित्वे तु द्वितीयमिति वाक्ये भेदस्य नानात्वस्योपमानार्थत्वमुपमेयार्थत्वमित्येवम्भूतस्यानुभवेन याहिता वासना संस्कारस्तया हेतुभूतया वाक्यसमानार्थत्वं वृत्तेरवसाय तत्राप्येतदुपमानोपमेयार्थवचनत्वं सामान्यवचनस्य कथ्यते। उपमानोपहितभेदश्यामादिगुणविशिष्टे तूपमेये निरंशं समासपदं वाक्यादन्यदेवोच्चार्यते। तदन्वाख्यानोपायपरिकल्पना तु प्रक्रियानुरोधाद् यथान्यद् दोषजातं नापतति तथा कर्तव्येति सम्प्रत्युपमेयवृत्ति सामान्यवचनं स्थितम्।

एवं हि शस्त्रीश्यामो देवदत्त इति सिध्यति। तित्तिरिकल्माषीति चेष्टः स्त्रीप्रत्ययो भवति॥ ४१६॥

अत्रापि पक्षे चोद्यभाष्यम्—'एवमपि सामानाधिकरणेनेति वर्तते। व्यधिकरणानां समासो न प्राप्नोती'ति। उपमेयवृत्तित्वे श्यामाशब्दस्य शस्त्रीशब्देन सामानाधिकरण्याभावात् समानाधिकरणप्रकरणं नानुगृह्यतेत्यर्थः।

---

धीयते। उपमानरूपोपाधिभेदभिन्नश्यामादिगुणविशिष्टे तूपमेयरूपेऽर्थे वाक्यादन्यद् निरंशं समासपदं प्रयुज्यते। तेन वृत्तिवाक्ययोः समानार्थकत्वमास्थाय वाक्य इव वृत्तावपि सामान्यवचनस्योपमानवृत्तित्वम्, उपमेयवृत्तित्वमित्येवंभूता भेदकल्पना न युक्ता। किन्तूपमेयार्थवृत्तित्वमेव समासस्येति युक्तमिति।

अयं भावः—शस्त्रीश्यामा देवदत्ता इत्यादौ सामान्यवचनस्य उपमानवृत्तित्वे एकं वाक्यम्, तस्योपमेयवृत्तित्वे तु द्वितीयं वाक्यम् इत्येवं वाक्ये भेदस्य नानात्वस्य उपमानार्थकत्वमुपमेयार्थकत्वमित्येवंभूतस्यानुभवेन आहिता जनिता या भावना वासना संस्काररूपा तया हेतुभूतया वाक्यसमानार्थत्वं समासस्यावसाय=अवधार्य तत्राप्येतत् सामान्यवचनस्योपमानोपमेयार्थकत्वं कथ्यते। उपमानोपहितभेदश्यामादिगुणविशिष्टे=उपमानरूपोपाधिभेदप्रयुक्तभेदवत् श्यामादिगुणविशिष्टे तूपमेये निरंशम्=अखण्डम् समासपदं वाक्यादन्यदेव=वाक्यघटकपदाघटितमेव उच्चार्यते। समासान्वाख्यानोपायपरिकल्पना तु प्रक्रियानुरोधाद् यथाऽन्यद् दोषजातं नापतति तथा कर्तव्येति संप्रत्युपमेयवृत्तिसामान्यवचनं पदमिति स्थितम्।

एवं हि विशेष्यानुरोधात् पुंस्त्वेन 'शस्त्रीश्यामः' इति विनैवोपसर्जनह्रस्वत्वं सिध्यति। तत एव तित्तिरिकल्माषीति चेष्टः स्त्रीप्रत्ययो भवति इति॥ ४१६॥

अत्रापि पक्षे=उपमेयवृत्तिसामान्यवचनमित्यत्रापि पक्षे चोद्यभाष्यम्=आक्षेपभाष्यम्—"एवमपि समानाधिकणेनेति वर्तते। व्यधिकरणानां समासो न प्राप्नोति" इति।

अस्यार्थः—एवमपि=उपमेयवृत्तिसामान्यवचनमिति पक्षे सर्वदोषनिवृत्तौ सकलेष्टसिद्धावपि, 'उपमानानि सामान्यवचनैः' (पा० २।१।५५) इत्यत्र समानाधिकरणेनेति अनुवर्तते। ततो व्यधिकरणानां पदानां समासो न प्राप्नोति। अस्ति चोपमेयवृत्तिसामान्यमित्यत्र पक्षे शस्त्री श्यामा पदयोर्वैयधिकरण्यं भिन्नार्थवृत्तित्वरूपमिति।

व्याख्यातं चैवमेतद् भाष्यं श्रीहेलाराजेन—"उपमेयवृत्तित्वे श्यामाशब्दस्य शस्त्रीशब्देन सामानाधिकरण्याभावात् समानाधिकरणप्रकरणं नानुगृह्यतेत्यर्थः" इति।

अत्र परिहारोऽभिहितः—'किं हि वचनान्न भवती'ति। अन्यत्र कृतार्थत्वाद् दुर्बलतरमत्र प्रकरणमकृतार्थतया श्रुत्या बाध्यत इत्याशयो भाष्यकारस्य।

ननु चोपमानवृत्तित्वे सामान्यवचनस्यास्ति वचनस्यावकाशः। तथाच प्रकरणानुग्रहोऽपि कृतो भवति। नैतदस्ति।

विशिष्टार्थवृत्तेः पदस्यान्वाख्याने शास्त्रप्रक्रियाभङ्गाय यः प्रभवति, असावपोद्धारपदार्थो नाश्रयणीयः। उपमानविषये च सामान्यवचने द्वयोरपि पदयोरुपमेयं प्रति गुणत्वात् सापेक्षत्वेऽसामर्थ्याद् वृत्तिर्न स्यात्।

उपमेयवृत्तित्वे तु संन्निहितोभयाधिकरणः सम्बन्धो निराकाङ्क्षो वर्तते। तथाच सामर्थ्यमिति व्यधिकरणयोरपि गमकत्वाद् वचनं विधत्ते वृत्तिम्।

---

अत्र परिहारोऽभिहितः—"किं हि वचनान्न भवति" इति।

अस्यार्थः—सर्वं वचनाद् भवति, समासवचनसामर्थ्याद् व्यधिकरणानामपि समासो भवतीति यावत्। अन्यत्र नीलोत्पलादौ कृतार्थत्वात् स्वतः श्रुत्यपेक्षया दुर्बलमपि समानाधिकरणप्रकरणं सावकाशत्वाद् दुर्बलतरमत्र=उपमानसमासे स्वभावतः प्रबलयाऽपि अकृतार्थतया प्रबलतरतया श्रुत्या उपमानसमासवचनरूपया बाध्यते इति भाष्यकारस्याशयः।

तथा च पारमर्षं सूत्रम्—"श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्" ( मीमां० सू० ) इति।

ननु च सामान्यवचनस्योपमानवृत्तित्वेऽस्ति श्रुतिरूपस्योपमानसमासवचनस्यावकाशः, शस्त्री श्यामा यस्या इति विग्रहे सामान्यवचनस्योपमानवृत्तित्वसाधके प्रागुक्ते शस्त्री श्यामा पदयोः सामानाधिकरण्यात्, समानाधिकरणप्रकरणं तु नीलोत्पलादौ कृतार्थमपि उपमानसमासरूपे श्रुतेः समानविषयेऽप्यविरोधादनुगृहीतं भवति इति उपमानवृत्तित्वमेव सामान्यवचनस्य युक्तमिति चेत्, नैतदस्ति।

वस्तुतो विशिष्टार्थवृत्तेः=अखण्डार्थवृत्तेः समासपदस्याबुधबोधनायान्वाख्याने क्रियमाणे शास्त्रप्रक्रियाभङ्गाय यः प्रभवति, असावपोद्धारपदार्थो नाश्रयणीयः। उपमानविषये च सामान्यवचने समाश्रीयमाणे द्वयोरपि पदयोरुपमेयं प्रति गुणत्वात् तत्सापेक्षत्वेऽसामर्थ्याद् वृत्तिर्न स्यात्। तदुक्तम्—'सापेक्षमसमर्थवद्' इति।

सामान्यवचनस्योपमेयवृत्तित्वे तु संनिहितोभयाधिकरणः संबन्धः=संनिहितेन द्रव्यद्वयेन प्रतियोग्यनुयोगिरूपेण यथायथं समासघटकपदद्वयाभिधेयेन निरूपितः संबन्धः, उपमानोपमेयभावावच्छिन्नविशेषणविशेष्यभावाख्यः संनिहितपदार्थद्वयनिरूप्यत्वादेव निराकाङ्क्षो वर्तते।

तथा चैवमस्ति सामर्थ्यमिति, अत्र पक्षे व्यधिकरणयोरपि पदयोर्वृत्तिम्=समासम् उपमानसमासवचनमनवकाशत्वेन गमकत्वात्=व्यधिकरणयोरपि समासज्ञापकत्वाद् विधत्ते।

अतोऽनन्तरं भाष्यं—'यद्यपि तावद्वचनात् समासः स्यात्। इह तु खलु मृगीव चपला मृगचपला। समानाधिकरणलक्षणः पुंवद्भावो न प्राप्नोति' इति ॥

तदेव विवृणोति—

**यदि भिन्नाधिकरणो वचनादनुगम्यते।**
**मृगीव चपलेत्यत्र पुंवद्भावो न सिध्यति ॥ ४१७ ॥**

यदि वचनसामर्थ्यात् प्राकरणिकं सामानाधिकरण्यमनादृत्य व्यधिकरणयोरप्ययं समासोऽनुविधीयते, तदा मृगचपलेत्यत्र कर्मधारयाश्रयोऽन्यत्र समानाधिकरणपदे चरितार्थः पुंवद्भावो न स्यात् ॥ ४१७ ॥

अत्र परिहारं प्रदेशान्तरोक्तत्वाद् भाष्येऽनुक्तमप्याशङ्कते—

**अस्त्रीपूर्वपदत्वात् तु पुंवद्भावो भविष्यति।**
**तथैव मृगदुग्धादौ न चेत् स्त्र्यर्थो विवक्ष्यते ॥ ४१८ ॥**

---

अतोऽनन्तरं भाष्यम्—

"यद्यपि तावत् वचनात् समासः स्यात्। इह तु खलु मृगीव चपला मृगचपला, समानाधिकरणलक्षणः पुंवद्भावो न प्राप्नोति" इति।

तदेव भाष्यं विवृणोति—यदि भिन्नाधिकरण इति।

अस्यार्थः—यदि वचनात्=वचनसामर्थ्यात्, भिन्नाधिकरणः=व्यधिकरणः समासः, अनुगम्यते=शस्त्रीव श्यामा इत्यत्र सामान्यवचनस्योपमेयवृत्तित्वेऽनुविधीयते शास्त्रेण, तदा 'मृगीव चपला=मृगचपला' इत्यत्र कर्मधारयसमासनिमित्तको 'महती नगरी महानगरी' इत्यादौ चरितार्थः पुंवद्भावो न सिद्धयति इति।

अयं भावः—यदि 'उपमानानि सामान्यवचनैः' ( पा० २।१।५५) इति वचनसामर्थ्यात् प्राकरणिकं सामानाधिकरण्यम्=कर्मधारयसमासप्रकरणे सर्वत्र भवं समासघटकपदनिष्ठं समानार्थकपदत्वम् अनादृत्य व्यधिकरणोऽप्ययं समासः=उपमानसमासोऽनुविधीयते शास्त्रेण, तदा कर्मधारयाश्रयः = कर्मधारयसमासनिमित्तकोऽन्यत्र=महती नगरी महानगरी इत्यादौ समानाधिकरणपदघटिते समासे चरितार्थः पुंवद्भावो मृगीव चपला मृगचपला इत्यत्र न स्यादिति ॥४१७॥

अत्र प्रकृतभाष्येऽनुक्तमपि परिहारं प्रदेशान्तरभाष्ये उक्तत्वादत्राप्याशङ्कते—अस्त्रीपूर्वपदत्वात्तु इति।

अस्यार्थः—चेत्=यदि, स्त्र्यर्थो न विवक्ष्यते तदा पूर्वपदस्य जात्यन्तरनिवृत्तिमात्रपरत्वे समासस्य स्त्रीभिन्नपूर्वपदकत्वात् तु मृगचपला इत्यत्र पुंवद्भावः=पुंवद्रूपं भविष्यति यथैव मृगदुग्धादौ इत्युदाहरणम्। आदिपदेन कुक्कुटाण्डादिपरिग्रहः। तथा च मृग इव चपला इति विग्रहः। मृगत्वजातीयस्य चापल्यमत्र विवक्षितम्, न तु पूर्वपदार्थे स्त्रीत्वं विवक्षितमिति।

जात्यन्तरनिवृत्तिपरायां चोदनायां मृगक्षीरादौ पुंवद्भावः, तत्फलं पुमर्थशब्द-प्रयोगः सिद्ध इतिं प्रत्याख्यातः पुंवद्भावः 'न वा अस्त्रीपूर्वपदविवक्षितत्वादि'ति।

एवमिहापि मृगचपलादौ मृगजातीयस्य चापलस्य विवक्षितत्वान्मृग इव चपलेत्येव विग्रह इति स्त्रीत्वाविवक्षायां सिद्धमिष्टम्।

तथाहि—कृतेऽपि पुंवद्भावे शब्दात् स्त्रीत्वस्यागतेरविवक्षैव समर्थनीया। स हि विवक्षितोऽर्थः, यः शब्दात् गम्यते।

यदा तु विशिष्टस्य स्त्रीचापलस्य स्त्रियैवोपमोपपत्तेः स्त्रीत्वविवक्षा, तदारम्भणीय एवात्र पुंवद्भावः। कृते च तस्मिन् वृत्तौ स्त्रीत्वस्यान्तर्भावो वक्तव्यः।

अत एव न चेत् स्त्र्यर्थो विवक्ष्यत इति पाक्षिकत्वेनायं परिहारः शङ्कितः। अनेनैव चाशयेन भाष्ये नोपन्यस्तमिदम्॥ ४१८॥

अत एवातोऽनन्तरं निर्दोषपक्षाश्रयेण भाष्यम्—'एवं तर्हि; तस्यामेवोभयं वर्तत इति।

---

अयं भावः='इदं मृगक्षीरम्' न त्वन्यजातीयस्य पशोरित्येवं जात्यन्तरनिवृत्तिपरायां चोदनायां मृगक्षीरादौ पुंवद्भावः=पूर्वपदार्थस्य पुंस्त्वेन ज्ञानम् कृभ्वस्तयः क्रियासामान्यवचना इत्यभ्युपगमात्, तत्फलं पुमर्थशब्दप्रयोगः सिद्ध इति। "कुक्कुट्यादीनामण्डादिषु" (वा० २१२) इति पुंवद्भावः प्रत्याख्यातः, न वा अस्त्रीपूर्वपदविवक्षितत्वात्" इति।

न वा मृगक्षीरादौ पुंवद्भावो वक्तव्यः, स्त्रीभिन्नस्य पूर्वपदस्य विवक्षितत्वादिति एतदर्थः।

एवम्= मृगक्षीरादाविव इहापि मृगचपलादौ मृगजातीयस्य चापलस्य विवक्षितत्वात् 'मृग इव चपला' इत्येव विग्रह इति स्त्रीत्वाविवक्षायां सिद्धम्।

तथाहि—कृतेऽपि पुंवद्भावे शब्दात् स्त्रीत्वस्यागतेः=अज्ञानात् तस्याविवक्षैव समर्थनीया। स हि विवक्षितोऽर्थः, यः शब्दाद् गम्यत इति।

यदा तु विशिष्टस्य=विलक्षणस्य पुंसि अवर्तमानस्य स्त्रीचापलस्य स्त्रियैवोपमोपपत्तेः स्त्रीत्वविवक्षा, तदारम्भणीय एवात्र=मृगचपलादौ पुंवद्भावः। कृते च पुंवद्भावे वृत्तौ= समासे स्त्रीत्वस्यान्तर्भावो वक्तव्यः।

अत एव "न चेत् स्त्र्यर्थो विवक्ष्यते" इति स्त्रीत्वाविवक्षापक्षे पाक्षिकत्वेनायं परिहारः शङ्कितः। अनेन चैवाशयेन=अस्य परिहारस्य पाक्षिकत्वाभिप्रायेणैव भाष्ये नोपन्यस्तमिदम्— अयं परिहारः प्रकृतभाष्ये नोपन्यस्त इति॥ ४१८॥

अत एवास्माद् भाष्यादनन्तरं निर्दोषपक्षाश्रयेण भाष्यम्—"एवं तर्हि तस्यामेवोभयं वर्तते" इति।

अस्यार्थः—एवं तर्हि=सामान्यवचनस्योपमेयवृत्तित्वमिति पक्षस्य मृगचपलेत्यादौ पुंवद्भावासिद्ध्या दुष्टत्वे सति तस्यामेव=उपमेयभूतायां देवदत्तायामेव, उभयम्=शस्त्रीति— श्यामेति च पदद्वयं वर्तत इति।

एतद् व्याचष्टे—

**शस्त्रीव शस्त्री श्यामेति देवदत्तैव कथ्यते ।**
**तस्यामेवोभयं तस्मादुच्यते शास्त्रविग्रहे ॥ ४१९ ॥**

इहोपमानवृत्तित्वे सामान्यवचनस्योपमेयः समासवाच्योऽभिहितः । एवञ्चात्र वाक्ये वर्तिपदयोरेवोपमेयवृत्तित्वमस्तु ।

तथाहि—उपचाराच्छस्त्रीव शस्त्रीति देवदत्ता कथ्यते । अतस्तस्यां देवदत्ताया-मुपमेयभूतायामेवोभयमुपमानवचनं सामान्यवचनं च वर्तत इति सामानाधिकरण्यो-पपत्तौ पुंवद्भावसिद्धिः । प्रकरणं च न बाधितं भवति । उपमानसम्बन्धमन्तर्भाव्य च देवदत्तायां शस्त्रीशब्दः प्रवर्तत इत्यभेदाध्यासाद् गम्यते । परार्थे शब्दप्रयोगो गर्भी-कृतेवार्थो युज्यते, नान्यथा ।

तद्यथा—सिंहो माणवक इत्यादिः । सिंहमध्यापयेति चोपचरितेन शब्देन व्यवहारो दृश्यते । एवमिह शस्त्रीशब्देन देवदत्तैव व्यवह्रियते ।

एतच्च तस्यामेवोभयं वर्तत इति शास्त्रविग्रहे शास्त्रप्रक्रियागते वाक्ये कथ्यते । वाक्यावस्थायां हि समानाधिकरणतासमर्थनार्थमिदमभिधीयते । तत्र च शास्त्रप्रक्रियायां विविधनानाभूतमपोद्धारपदार्थानां ग्रहणम् ।

---

एतद् भाष्यं व्याचष्टे—शस्त्रीव श्यामा शस्त्रीश्यामेति इति ।

अस्यार्थः—यतः शस्त्रीव इत्यर्थे शस्त्रीति रूपकम् इति श्यामेति च पदद्वयरूपेण विग्रह-वाक्येन समासेन च देवदत्तैव कथ्यते तस्मात् शास्त्रविग्रहे=शास्त्रीये विग्रहवाक्ये, तस्यामेव= उपमेयभूतायां देवदत्तायामेव, उभयम्=पूर्वपदमुत्तरपदञ्च वर्तत इत्युच्यते भाष्य इति ।

अयं भावः—इह=शस्त्रीश्यामा इत्यादौ उपमानसमासे सामान्यवचनस्योपमानवृत्तित्वे उपमेयः समासवाच्योऽभिहितः ।

एवञ्चात्र='शस्त्रीश्यामा' इत्यादौ विग्रहवाक्ये वर्तिपदयोरेव उपमेयवृत्तित्वमस्तु ।

तथाहि—श्यामत्वेन गुणेन शस्त्रीव देवदत्ता उपचारात्=शस्त्रीत्वारोपात् शस्त्रीति कथ्यते । अतस्तस्यां देवदत्तायामुपमेयभूतायामेवोभयमुपमानवचनं सामान्यवचनञ्च वर्तते इति सामानाधि-करण्योपपत्तौ पुंवद्भावसिद्धिः । समानाधिकरणप्रकरणञ्च न बाधितं भवति ।

अत्र शस्त्रीशब्दः उपमानसंबन्धं सादृश्याख्यमन्तर्भाव्यं च=एव देवदत्तायां प्रवर्तते इत्यभेदाध्यासात्=अभेदारोपाद् गम्यते । परार्थे परशब्दप्रयोगः स्वार्थे गर्भीकृतेवार्थो युज्यते= समुचितो भवति, नान्यथा ।

तद् यथा—'सिंहो माणवकः' इत्यादिः । सिंहमध्यापयेति चोपचरितेन=आरोपित-प्रवृत्तिनिमित्तकेन शब्देन व्यवहारो दृश्यते । एवमिह शस्त्रीशब्देन देवदत्तैव व्यवह्रियते । एतच्च "तस्यामेवोभयं वर्तते" इति शास्त्रविग्रहे शास्त्रप्रक्रियागतेऽलौकिके वाक्ये कथ्यते । प्रक्रिया वाक्या-वस्थायां हि समानाधिकरणतया समर्थनार्थमिदमभिधीयते । यतस्तत्र शास्त्रप्रक्रियायां विविध-नानाभूतापोद्धारपदार्थानां ग्रहणम् ।

लौकिके तु पदे विशिष्टार्थवाचके निरंशे विभागाभावान्नास्योपन्यासस्यावसरः। तत्र हि वर्णवत् पदविभागस्यासत्यत्वान्न कश्चिच्छस्त्रीशब्दस्तदर्थो वा, यस्योपचरितार्थत्वं वर्ण्येतेत्यभिप्रायः ॥ ४१९ ॥

एष एव पक्षः सिद्धान्ततया भाष्येऽवस्थापितः। तथाह्यनन्तरं भाष्यम्—'एतच्चात्र युक्तं, यत्तस्यामेवोभयं वर्तते। इतरथा बह्वपेक्ष्यं स्यादि'ति।

एतद् व्याचष्टे—

**पुंवद्भावस्य सिद्ध्यर्थं पक्षे स्त्रीप्रत्ययस्य च।**
**बह्वपेक्ष्यमतस्तस्यामुभयप्रतिपादनम् ॥ ४२० ॥**

यदा श्यामाशब्द उपमेये वर्तत इति पक्षस्तदात्र पक्षे वैयधिकरण्याद् वचनसामर्थ्यात् समासेऽपि पुंवद्भावस्य सिद्ध्यर्थमस्त्रीपूर्वपदविवक्षानियमोऽपेक्ष्यः। मृगक्षीरादिवदत्र मृगचपलादौ सामान्यस्यैव विवक्षा, न विशेषस्येत्येतदनुसरणीयम्।

---

लौकिके तु समासरूपे पदे विशिष्टार्थवाचके=अखण्डार्थवाचके निरंशे पदपदार्थविभागाभावान्नास्योपन्यासस्य=तस्यामेवोभयं वर्तते इत्युपन्यासस्य अवसरः।

तत्र हि वर्णवत्=वर्णऽवयवविभागस्येव पदविभागस्यासत्यत्वान्न कश्चिच्छस्त्रीशब्दस्तदर्थो वा, यस्योपचरितार्थत्वम्=आरोपितार्थबोधकत्वं वर्ण्येतेति ॥ ४१९ ॥

एष एव पक्षः=तस्यामेवोभयं वर्तते इति पक्ष एव सिद्धान्ततयाऽवस्थापितो भाष्ये। तथा ह्येतदनन्तरं भाष्यम्—"एतच्चात्र युक्तम्" यत्तस्यामेवोभयं वर्तेत। इतरथा बह्वपेक्ष्यं स्यात्" इति। एतद् भाष्यं व्याचष्टे=पुंवद्भावस्य सिद्ध्यर्थमिति।

अस्यार्थः—'मृगीव चपला मृगचपला' इत्यादौ सामान्यवचनस्योपमेयवृत्तित्वे पुंवद्भावस्य सिद्ध्यर्थम्, अस्त्रीपूर्वपदविवक्षानियमोऽपेक्ष्यः। सामान्यवचनस्योपमानवृत्तित्वपक्षे तु तित्तिरिकल्माषी इत्यादौ अनुपसर्जनाधिकारादिष्टस्य स्त्रीप्रत्ययस्य सिद्ध्यर्थं समुदाया एवैते वर्णविशेषवाचिनो नैवंजातीयकं वोपसर्जनमिति प्रधानेन तदन्तविधेः समासात्तु ङीष् वर्तिपदाद् बाह्य इति वाच्यम्। तथा च स्वरे दोषः। तथाहि—कल्माषशब्दान् ङीषि पश्चात् समासे उपमानलक्षणः पूर्वपदप्रकृतिस्वरः। समासात्तु ङीषि प्रत्ययस्वरेण समासस्वरेण वाऽन्तोदात्तत्वम्, इत्येतदत्र बह्वपेक्ष्यम् अतस्तस्यामुपमेयभूतायां देवदत्तायामुभयप्रतिपादनम्=उपमानपदसामान्यवचनपदयोर्वृत्तिप्रतिपादनमिति।

अयं भावः—यदा श्यामा शब्दः=सामान्यवचनः शब्दः उपमेये वर्तते इति पक्षस्तदाऽत्र पक्षे वैयधिकरण्यात् समासाप्राप्तौ 'उपमानानि सामान्यवचनैः'(पा० २।१।५५) इति समासवचनसामर्थ्यात् समासेऽपि मृगीव चपला मृगचपला इत्यादौ पुंवद्भावस्य सिद्ध्यर्थमस्त्रीपूर्वपदविवक्षानियमोऽपेक्ष्यः। मृगक्षीरादिवदत्र मृगचपलादौ सामान्यस्यैव=जातिमात्रस्यैव विवक्षा, न लिङ्गविशेषस्येत्येतदनुसरणीयम्।

एष विवक्षानियमोऽशब्दकोऽत्रानुस्रियमाणो गौरवं प्रतिपत्तावापादयतीति बह्वपेक्षत्वमत्र ।

यदा तु शस्त्र्यामुपमाने श्यामाशब्द इति पक्षस्तदात्र पक्षे शस्त्रीश्यामो देवदत्त इत्युपसर्जनह्रस्वत्वेन सिद्धौ तित्तिरिकल्माषीत्यादावनुपसर्जनाधिकारादिष्टस्य स्त्रीप्रत्ययस्य सिद्ध्यर्थं समुदाया एवैते वर्णविशेषवाचिनो नैवञ्जातीयकं वोपसर्जनमिति प्रधानेन तदन्तविधेः समासाद् बाह्यो ङीषिति वाच्यम् । तथाच स्वरे दोष इत्येतदत्र बह्वपेक्ष्यम् ।

यत एवमनयोः पक्षयोर्बह्वपेक्ष्यम्, अतस्तस्यामेवोभयस्योपमानोपमेयवचनस्य भाष्येऽभ्युपगम इत्यर्थः ।। ४२० ।।

प्राक् समासादुपमेयवृत्तेः कल्माषादेः स्त्रीप्रत्ययस्येष्टस्य सिद्धेर्यथायथमुपमेयगतलिङ्गसिद्धेश्च प्रकारान्तरेणात्र बह्वपेक्षत्वं व्याचष्टे—

**श्यामा शस्त्री यथा श्यामा शस्त्रीकल्पेति चोच्यते ।**
**तत्रोपमानेतरयोः श्यामेत्येतदपेक्ष्यते ।। ४२१ ।।**

---

एष विवक्षानियमः=अस्त्रीपूर्वपदविवक्षानियमः, सामान्यस्यैव विवक्षानियमः अशब्दकः =शब्दावाच्यः । अत्र पक्षे=सामान्यवचनः शब्द उपमेये वर्तत इति पक्षे अनुस्रियमाणः प्रतिपत्तौ गौरवमापादयति इति बह्वपेक्षत्वमत्र ।

यदा तु शस्त्र्यामुपमानभूतायां श्यामाशब्द इति पक्षस्तदाऽत्र पक्षे 'शस्त्रीश्यामो देवदत्तः' इत्युपसर्जनह्रस्वत्वेन सिद्धौ 'तित्तिरिकल्माषी' इत्यादौ कल्माषस्योपसर्जनत्वेन अनुपसर्जनाधिकारादिष्टस्य स्त्रीप्रत्ययस्य सिद्ध्यर्थं समुदाया एवैते वर्णविशेषवाचिनो नैवंजातीयकं वोपसर्जनमिति प्रधानेन वर्णेन तदन्तविधेर्वर्णान्तादनुपसर्जनादित्यर्थे वर्तिपदाद् बाह्यो ङीष् समासाद् भवतीति वाच्यम् । तथा च स्वरे दोष इत्येतदत्र बह्वपेक्ष्यम् ।

यत एवमनयोः पक्षयोर्बह्वपेक्ष्यम्, अतस्तस्यामेव=देवदत्तायामेव उभयस्य उपमानोपमेयवचनस्य भाष्येऽभ्युपगम इति ।। ४२० ।।

समासात् प्राक् उपमेये वर्तमानात् कल्माषादिशब्दात् स्त्रीप्रत्ययस्येष्टस्य सिद्धेर्यथायथमुपमेयगतलिङ्गसिद्धेश्चोक्तादन्येन प्रकारेणात्र पक्षे=सामान्यवचनः शब्द उपमेये वर्तते इति पक्षे बह्वपेक्षत्वं व्याचष्टे—श्यामा शस्त्री यथेति ।

अस्यार्थः—शस्त्री यथा श्यामा इति श्यामा शब्दस्योपमेयवृत्तौ शस्त्रीश्यामेत्यस्य विग्रहवाक्यमुच्यते । श्यामशस्त्रीकल्पा इति च=तु, श्यामाशब्दस्योपमानवृत्तौ शस्त्रीश्यामेत्यस्य विग्रहवाक्यमुच्यते ।

तत्राद्ये विग्रहवाक्ये उपमाने श्यामेत्येतदपेक्ष्यते । अन्त्ये तु विग्रहवाक्ये इतरस्मिन्=उपमेये श्यामेत्येतदपेक्ष्यते । तत्र तत्र विग्रहवाक्ये तत्र तत्र श्यामत्वानुक्तेरिति ।

श्यामा शस्त्री यथेत्युपमेयवृत्तौ श्यामाशब्दस्य विग्रहवाक्यं प्रदर्शितम्। श्यामा शस्त्रीकल्पेत्युपमानवृत्तौ श्यामाशब्दस्य विग्रहवाक्यम्। तदत्रैकनिष्ठस्य गुणस्याभिधाने तदितरगतत्वेन सामर्थ्यात् कल्पनं, धर्मसामान्यप्रयुक्तत्वादुपमानोपमेयस्य सन्निधानादेकत्र श्रुतोऽपि साधारणो धर्मोऽपरत्रानुमीयत इति बह्वपेक्षत्वं केचिदाहुः।

तदेतदुक्तं भाष्ये—'यदि तावदेवं विग्रहः क्रियते, शस्त्रीव श्यामा देवदत्तेति, शस्त्र्यां श्यामेत्येतदपेक्ष्यं स्यात्। अथाप्येवं विग्रहः क्रियते यथा शस्त्री श्यामा तद्वदियं देवदत्तेति। एवमपि देवदत्तायां श्यामेत्येतदपेक्ष्यं स्यादि'ति ॥ ४२१ ॥

ननु विग्रहवाक्यं लौकिकार्थानुगुणं प्रदर्शनीयमित्युभयत्रापि श्यामाशब्दो वाक्ये प्रयोक्तव्यः। वृत्तौ तु द्वितीयस्य श्यामाशब्दस्यान्तर्भूतत्वादप्रयोग इति कथं बह्वपेक्ष्यमित्यत आह—

**अथ श्यामेव शस्त्रीयं श्यामेत्येवं प्रयुज्यते।**
**शस्त्री यथेयं श्यामेति तावदेव प्रतीयते ॥ ४२२ ॥**

---

अयं भावः—'श्यामा'शब्दस्य उपमेयवृत्तौ 'शस्त्रीश्यामा' इत्यस्य शस्त्री यथा श्यामा इति विग्रहवाक्यं प्रदर्शितम्। श्यामाशब्दस्योपमानवृत्तौ तु शस्त्रीश्यामा इत्यस्य स्यामशस्त्रीकल्पा इति विग्रहवाक्यम्।

तदत्र=आद्येऽन्त्ये वा विग्रहवाक्ये एकनिष्ठस्य=उपमाननिष्ठस्य, उपमेयनिष्ठस्य वा गुणस्याभिधाने तदितरगतत्वेन सामर्थ्यात् तस्य कल्पनं बह्वपेक्षत्वम्।

यद्वा उपमानोपमेयभावस्य धर्मसामान्यप्रयुक्तत्वाद् एकत्र=उपमाने उपमेये वा श्रुतोऽपि साधारणो धर्मः संनिधानादपरत्रानुमीयत इति बह्वपेक्षत्वं केचिदाहुः। तदेतदुक्तं भाष्ये—"यदि तावदेवं विग्रहः क्रियते शस्त्रीव श्यामा देवदत्तेति, शस्त्र्यां श्यामेत्येतदपेक्ष्यं स्यात्। अथाप्येवं विग्रहः क्रियते, यथा शस्त्री श्यामा तद्वदियं देवदत्तेति। एवमपि देवदत्तायां श्यामेत्येतदपेक्ष्यं स्यात्" इति ॥ ४२१ ॥

ननु विग्रहवाक्यं लौकिकार्थानुगुणं प्रदर्शनीयम्, शस्त्री श्यामेत्यतो लौकिकार्थबोधे च श्यामत्वं गुण. उपमाने उपमेये चोभयत्रापि प्रतीयत इति, उभयत्रापि विग्रहवाक्ये प्राक्प्रदर्शिते यथायथमुपमानवृत्तिः, उपमेयवृत्तिश्च श्यामाशब्दो युगपत् प्रयोक्तव्यः। शस्त्रीश्यामेति वृत्तौ तु द्वितीयस्य 'श्यामा'शब्दस्यान्तर्भूतत्वात्=वृत्तिस्वभावादेकेनैव श्यामाशब्देन यथायथं तन्त्रादिना उभयत्रापि श्यामत्वगुणस्य प्रतिपादनादप्रयोग इति कथं बह्वपेक्ष्यमित्यत आह—अथश्यामेव शस्त्रीति।

अस्यार्थः—'श्यामा शस्त्रीव इयं देवदत्ता श्यामा' इत्येवं द्वौ 'श्यामा'शब्दौ उपमानोपमेयगतौ प्रयुज्येते, तदा शस्त्री यथा इयं देवदत्ता श्यामा इति श्यामाशब्दस्य सकृत्प्रयोगे यावद् वस्तु प्रतीयते तावदेव वस्तु श्यामाशब्दस्य द्विः प्रयोगेऽपि प्रतीयते इति व्यर्थो द्विस्तस्य प्रयोग इति सकृत् श्यामाशब्दस्य प्रयोगे एकत्र श्रुतोऽन्यत्र सामर्थ्यात् संनिधानाद्वा श्यामत्वगुणस्य प्रतीतौ बह्वपेक्षत्वमवस्थितमिति।

श्यामा शस्त्री यथा तथा इयं देवदत्ता श्यामा इत्येवं द्वयोः श्यामाशब्दयोरुपमानोपमेयगतयोः प्रयोगे शस्त्री यथेयं श्यामेति सकृच्छ्यामाशब्दप्रयोगे यत्परिमाणं वस्तु तावत् तत्परिमाणमेवावगम्यते ।। ४२२ ।।

तथाहि—

**उपलक्षणमात्रार्था गुणस्यास्य यदि श्रुतिः ।**
**पृथग् द्वयोः श्रुतोऽप्येष नेष्टस्यार्थस्य वाचकः ।। ४२३ ।।**

वस्तुमात्रोपलक्षणाय गुणशब्दस्योपादानेऽसकृत्प्रयोगेऽपि नेष्टस्यौपम्यस्य प्रतिपादनं स्यात् । या श्यामगुणोपलक्षिता शस्त्री, सा धर्मान्तरेणापि तथाभूताया देवदत्तायाः परिच्छेदिकेत्यपि प्रतीतेरौपम्यनिबन्धनत्वं नियोगतः श्रुतस्यासकृत्प्रयोगेऽपि न गम्येत ।। ४२३ ।।

अथोपमायां सव्यापारत्वमत्र श्रुतस्य, तदा—

**उपमेयं तु यद् वाच्यं तस्य चेत् प्रतिपादने ।**
**सव्यापारा गुणास्तत्र सर्वस्योक्तिः सकृच्छ्रुतौ ।। ४२४ ।।**

---

अयं भावः— यथा शस्त्री श्यामा तथा इयं देवदत्ता श्यामा इति । एवं श्यामा शब्दयोरुपमानोपमेयगतयोर्द्वयोः प्रयोगे तावदेव=तत्परिमाणकमेव वस्तु प्रतीयते, यावत् शस्त्री यथेयं श्यामेति सकृत् श्यामाशब्दस्य प्रयोगेऽवगम्यते । एकत्र श्रुतस्यान्यत्र सामर्थ्यात् संनिधानाद्वा प्रतीतेरिति ।। ४२२ ।।

तथाहि—उपलक्षणमात्रार्थेति ।

अस्यार्थः—यथा शस्त्री श्यामा तथा देवदत्ता श्यामा इति श्यामाशब्दस्य द्विःप्रयोगे यदि गुणस्यास्य श्यामत्वगुणस्य उपलक्षणमात्रार्था श्रुतिः, न विशेषणार्था, तदा द्वयोरुपमानोपमेययोः पृथक् श्रुतोऽप्येष श्यामाशब्दः, इष्टस्यार्थस्य श्यामत्वगुणप्रयुक्तौपम्यरूपस्य न वाचकः, श्यामत्वगुणोपलक्षितयोः शस्त्रीदेवदत्तयोर्गुणान्तरेणापि औपम्यसंभवाद् इति ।

अयं भावः—वस्तुमात्रोपलक्षणाय=उपलक्षणतया निर्विशेषवस्तुमात्रप्रतिपादनाय गुणशब्दस्य श्यामादेरुपादानेऽसकृत्प्रयोगेऽपि नेष्टस्यौपम्यस्य प्रतिपादनं स्यात् । या श्यामगुणोपलक्षिता शस्त्री सा धर्मान्तरेणापि तथाभूतायाः=शस्त्रीसदृक्षायाः परिच्छेदिका इत्यपि प्रतीतेर्नियोगतः=अव्यभिचारेण औपम्यनिबन्धनत्वं श्रुतस्य श्यामाशब्दस्याऽसकृत्प्रयोगेऽपि न गम्येतेति ।। ४२३ ।।

अथात्र=विग्रहवाक्ये श्रुतस्य श्यामाशब्दस्य स्ववाच्यगुणस्य विशेषणत्वेनोपमायां सव्यापारत्वम्, तदाऽऽह—उपमेयं तु वाच्यमिति ।

अस्यार्थः—उपमेयं तु यत् श्यामशब्दस्य वाच्यमभिधेयं प्रधानं तस्य चेद्=यदि प्रतिपादने स्वविशिष्टस्वरूपप्रज्ञापने सव्यापारा=व्यापृता गुणानोपलक्षणमात्रार्था इति मन्यसे, तदा सकृच्छ्रुतौ तत्रैकगुणप्रयोगेऽपि सर्वस्य उपमेयस्य उपमानस्यापि उक्तिः शब्दशक्तेः सामर्थ्याच्च इति द्विरभिधानं

उपमानसम्बन्धेन परिच्छेद्यमुपमेयं यत् प्रधानं वाच्यमभिधेयं, तस्य रूपविशेष-प्रज्ञापने यदि व्यापृता गुणा नोपलक्षणमात्रार्थाः, तदैकगुणप्रयोगेऽपि सर्वस्योपमान-स्यापि गुणप्रतिपादनं सामर्थ्यादिति द्विरभिधानं नोपयुज्यते। सादृश्यावच्छेदेन हि सम्बन्धं नियन्तुं गुणस्योपादानमिति यथाविवक्षितार्थप्रतिपत्तिर्भवति। तदेवमुपमाने उपमेये वा वृत्तौ सामान्यवचनस्य इतरगतत्वेनापेक्षणाद् बह्वपेक्ष्यमिति 'तस्यामेवोभयं वर्तत' इत्येष एव सिद्धान्तो भाष्यकारेणावस्थापितः ॥ ४२४ ॥

अतः परं वाक्यकारः पपाठ—'उपमानसमासे गुणवचनस्य विशेषभाक्त्वात् सामान्यवचनाप्रसिद्धिरि'ति।

तदेतद् व्याचष्टे—

**प्रकाराधारभेदेन विशेषे समवस्थितः।**
**शब्दान्तराभिसम्बन्धे सामान्यवचनः कथम् ॥ ४२५ ॥**

---

न युज्यते इत्येकगुणशब्दप्रयोगे सामर्थ्यादपरत्रापि तद्गुणभाने बह्वपेक्ष्यमिति, तस्यामेवोभयं वर्तते इति पक्षो भाष्ये सिद्धान्तितः।

अयं भावः—उपमानसंबन्धेन परिच्छेद्यमुपमेयं यत्प्रधानं वाच्यमभिधेयम्, तस्य स्वविशिष्टरूपप्रज्ञापने यदि गुणा व्यापृता नोपलक्षणमात्रार्थाः, तदैकगुणप्रयोगेऽपि सर्वस्य उपमेयस्य उपमानस्यापि गुणप्रतिपादनं सामर्थ्याद् भवति इति गुणस्य सामान्यस्य द्विरभिधानं नोपयुज्यते, अन्यथासिद्धत्वात्। सादृश्यावच्छेदेन हि=सादृश्यावच्छिन्नयोर्हि द्वयोः उपमानोपमेयभावरूपं संबन्धं नियन्तुं सामान्यगुणस्योपादानमिति यथा विवक्षितार्थप्रतिपत्तिः=इष्टस्यौपम्यरूपस्यार्थस्य प्रतिपत्तिः भवति।

तदेवं सामान्यवचनस्य उपमाने उपमेये वा वृत्तौ इतरगतत्वेनापेक्षणाद् बह्वपेक्ष्यमिति "तस्यामेवोभयं वर्तते" इत्येष एव सिद्धान्तो भाष्यकारेणाव-स्थापित इति ॥ ४२४ ॥

अतः परं वाक्यकारः=वार्तिककारः पपाठ—"उपमानसमासे गुणवचनस्य विशेषभाक्-त्वात् सामान्यवचनाप्रसिद्धिः" इति।

अस्यार्थः—उपमानसमासे कर्तव्ये गुणवचनस्य अलौकिके प्रक्रियावाक्ये विशेषभाक्त्वादुप-मेयवृत्तित्वादुपमानवृत्तित्वाद् वा सामान्यवचनाप्रसिद्धिरिति। तदेतद् व्याचष्टे—प्रकारा-धारभेदेनेति।

अस्यार्थः—'शस्त्रीश्यामा देवदत्ता' इत्यत्र शब्दान्तराभिसंबन्धे देवदत्तापदसंबन्धे सति प्रकाराधारभेदेन=श्यामाशब्दार्थे श्यामत्वगुणे शस्त्रीसादृश्यं सामानाधिकरण्यसंबन्धेन प्रकारः, देवदत्ता पदार्थश्चाधारत्वयोर्भेदेन विशेषे उपमाने उपमेये वा समवस्थितः कथं सामान्यवचनः। तदभावे च कथमुपमानसमास इति।

पूर्वं 'साधारणं ब्रुवन् धर्मम्' ( वा० प० वृ० ३८५ ) इत्यादिना सामान्यवचनत्वे प्रतिपादितेऽप्युपमेयगतत्वेनोपमानगतत्वेन वा गुणस्येहोक्तत्वादेकतरोपक्षये कथं साधारण्यमित्याक्षेपोऽयमुपपद्यते। तथाह्याधारनिष्कर्षेण गुणमात्राभिधानेऽनियतेनाधारेणावच्छेदाद् भवेत् सामान्यवचनत्वम्।

तदा चायं गुणः स्वप्राधान्येनाभिधीयमानोपमायां सव्यापारः, अपितु धर्मान्तरेणोपमानिमित्तेन सम्बध्यते। यथोक्तं—'धर्मः समानः श्यामादिः' ( वा० प० वृ० ३७७ ) इत्यादि।

यदापि साधारणगुणनिमित्तस्तत्त्वाध्यारोपस्तदा सामान्यवचनस्य प्रयोग एव नास्ति। यदा पुनरभेदोपचारान्मतुब्लोपाद् वा द्रव्यसमानाधिकरणो गुणवचनस्तदायं समानाधिकरणः समासः। सामान्यं साधारणो धर्मो गुणः, तमुक्त्वा तद्वति यो वर्तते, स सामान्यवचन इत्युक्तम्। तत्र चाधारेण नियतेन योगात् तद्भेदेन विशिष्ट एव गुणः संसर्गिधर्मान्तरादिभेदाद् वा। यथोक्तं—'गुणानामाश्रयाद् भेदः स्वतो ( वा० प० वृ० ३७२ ) इत्यादि।

---

अयं भावः—साधारणं ध्रुवं धर्ममिति सामान्यवचनानामुपमानसमासेऽपेक्षितानां लक्षणम्। अस्यार्थः=ध्रुवम्=उपमानोपमेययोरव्यभिचारिणम्, अत एव तयोः साधारणं धर्मं ये आहुरते सामान्यवचना इति। यद्वा-'साधारणं ब्रुवन् धर्मम्' इति पाठः=वृत्तिसमुद्देशे कारिका ३८५। स च पाठः प्राग्व्याख्यातः।

'साधारणं ब्रुवन् धर्ममि'त्यादिना श्यामादिशब्दानां सामान्यवचनत्वे प्रतिपादितेऽपि तद्वाच्यानां श्यामादिगुणानामुपमेयगतत्वेनोपमानगतत्वेन वा इह=उपमानसमासोपयोगिनि अलौकिके प्रक्रियावाक्ये उक्तत्वादेकतरोपक्षये=उपमेयगतत्वेन, उपमानगतत्वेन वा विश्रान्तौ कथं साधारण्यमित्याक्षेपोऽयमुपपद्यते।

तथाहि—आधारनिष्कर्षेण=आधाराद् बुद्धया निष्कृष्य पृथक्कृत्य गुणमात्राभिधाने=गुणसामान्याभिधाने अनियतेनाधारेणावच्छेदात्=नियतेन आधारेण उपमानेनावच्छेदाभावात् भवेत् सामान्यवचनत्वम्। तदाऽयं गुणः स्वप्राधान्येनाभिधीयमानो नोपमायां स व्यापारः=नोपमानोपमेयभावस्य प्रयोजकः, अपि तु धर्मान्तरेण चाकचिक्यादिना उपमा निमित्तेन संबध्यते। यथोक्तं प्राक्=''धर्मः समानः श्यामादिः''। ( वृत्तिसमुद्देशे का० ३७७ ) इत्यादि।

यदाऽपि श्यामत्वादिरूपसाधारणगुणनिमित्तकस्तस्य=शस्त्र्यादेरुपमानस्य उपमेयेऽभेदाऽध्यारोपस्तदा सामान्यवचनस्य श्यामादिशब्दस्य प्रयोग एव नास्ति।

यदा पुनरभेदोपचारान् मतुब्लोपाद्वा द्रव्यसमानाधिकरणो गुणवचनस्तदाऽयं समानाधिकरणः समासः। श्यामा शस्त्री श्यामशस्त्री। सामान्यं साधारणो धर्मो गुणस्तमुक्त्वा तद्वति यो वर्तते स सामान्यवचन इत्युक्तः पूर्वं 'साधारणं ब्रुवन् धर्मम्' इत्यादिना तत्र चाधारेण नियतेन योगाद् तद् भेदेन=नियताधारभेदेन विशिष्ट एव गुणः, संसर्गिधर्मान्तरादिभेदाद्वा=संसर्गिधर्मान्तरानिर्देश्यविशेषाभ्यां वा भेदाद् वा। यथोक्तम्—''गुणानामश्रयाद् भेदः स्वतो वा'' इत्यादि=( वृत्तिसमुद्देशकारिका ३७२ )

यद्यपि चैकत्र श्रुतोऽन्यत्र सामर्थ्यात् प्रतीयत इत्युक्तं, तथापि वचनग्रहणादिहाभिधाव्यापारेण साधारण्यं विवक्षितं, न श्रुत्यर्थाभ्याम्। श्यामाशब्दश्च गुणमात्रस्यापि प्रतीतौ शब्दान्तरेणोपमानवाचिना वा योगात् तन्नियतत्वेन विशेषवृत्तिरेव।

ननु चासौ वाक्यार्थो न पदसंस्कारं प्रतिबध्नाति। नैतदस्ति। निरस्तावयवभेदस्य वृत्तिपदस्यान्वाख्येयत्वात् पूर्वपदोत्तरपदप्रविभागे क्रियमाणे तदर्थानुसारेणैवापोद्धारपदार्थः प्रविभजनीयः। तत्र च विशिष्टार्थवचन एव श्यामाशब्दः प्रविभक्तुं न्याय्य इति कथं सामान्यवचनता ॥ ४२५ ॥

अत्र परिहारः—

**सादृश्यमात्रं सामान्यं द्विष्ठं कैश्चित् प्रतीयते।**
**गुणो भेदेऽप्यभेदेन द्विवृत्तिर्वा विवक्षितः ॥ ४२६ ॥**
**व्यापारो जातिभागस्य द्रव्ययोर्वाभिधित्सितः।**
**रूपात् सामान्यवाचित्वं प्राग्वा वृत्तेरुदाहृतम् ॥ ४२७ ॥**

---

यद्यपि च 'एकत्र श्रुतोऽन्यत्र सामर्थ्यात् प्रतीयते' इत्युक्तमिति सामान्यवचनत्वोपपत्तौ कथं तदाक्षेपसंभवः, तथापि सूत्रे सामान्यवचनशब्दे वचनग्रहणादिहाभिधाव्यापारेणैव गुणस्य साधारण्यं विवक्षितं न श्रुत्यर्थाभ्याम्=नाभिधाऽर्थापत्तिभ्याम्। श्यामाशब्दश्च पूर्वं गुणमात्रस्यापि=गुणसामान्यस्यापि प्रतीतौ शब्दान्तरेणोपमानवाचिना उपमेयवाचिना वा योगात् तन्नियतत्वेन=तन्मात्रनिष्ठत्वेन विशेषवृत्तिरेव, न तु सामान्यवचनः।

ननु चासौ=उपमानरूपः उपमेयरूपो वा श्यामा शब्दार्थः पदान्तरयोगे जायमानः वाक्यार्थो न पदसंस्कारं समासरूपं प्रतिबध्नाति। नैतदस्ति। निरस्तावयवभेदस्य वृत्तिरूपस्य पदस्य अनन्वाख्येयत्वात् पूर्वपदोत्तरपदप्रविभागे क्रियमाणे तदर्थानुसारेणैव=वृत्तिपदार्थानुसारेणैव अपोद्धारपदार्थः प्रविभजनीयः।

तत्र च=वृत्तितः पूर्वपदोत्तरपदयोरपोद्धारे च क्रियमाणे विशिष्टार्थवचन एव=विशेषार्थवचन एव श्यामाशब्द उपमानवृत्तिरुपमेयवृत्तिर्वा प्रविभक्तुं न्याय्य इति कथं सामान्यवचनतेति आक्षेप इति ॥ ४२५ ॥

अत्र परिहारमाह— सादृश्यमात्रं सामान्यमिति द्वाभ्याम्।

अस्य पद्यद्वयस्यार्थः—सादृश्यमात्रम्=प्रतियोग्यनुयोगिरूपनिरूपकशून्यम् केवलासादृश्यम्, द्विष्ठं कैश्चित्सामान्यं साधारणधर्मरूपं प्रतीयते। वा=अथवा, गुणः श्यामादिः, आधारभेदेन भेदेऽपि प्रकाराभेदेनाभिन्नो द्विवृत्तिः सादृश्यरूपसाधारणधर्मत्वेन विवक्षितः वा=अथवा, द्रव्ययोरुपमानोपमेययोः गुणजातेः=श्यामत्वादिगुणजातेः, व्यापारः=गुणभेदप्रत्ययकरणद्वारेणोपमानोपमेयभावसंबन्धप्रत्यायनरूपः सामान्यवचनशब्देनाभिधित्सितः=विवक्षितः।

उभयगतं सादृश्यमात्रं सामान्यशब्देनात्र विवक्षितम्। सादृश्यं च भेदाभेदाभ्यामेव भवति। तथा चैकगतत्वेनाप्यभिधाने तस्यान्यापेक्षत्वादभिधाव्यापारादेवोभयनिष्ठतावगम्यत इत्युपपद्यते सामान्यवचनत्वम्। गुण एवात्र प्रकाराधारविशिष्टोऽप्युपमायां व्यावृत्तोऽविशेषेणोपमानोपमेयगतो विवक्षितः। सामान्यवचनशब्दस्य प्रत्याययितुमिष्ट इत्यर्थः। तथा चान्वयिना रूपेणोच्यमानो गुण एव सादृश्यम्, न ततोऽर्थान्तरम्। तदेतदुक्तं भाष्ये—'न चावश्यं स एव सामान्यवचनो यो बहूनां सामान्यमाह। द्वयोरपि यः सामान्यमाह, सोऽपि सामान्यवचनः' इति।

---

अथवा उपमानगतश्यामत्वगुणाभिधायकस्य, उपमेयगतश्यामत्वगुणाभिधायकस्य च श्यामशब्दस्य प्रत्यर्थं शब्दाभिनिवेश इत्यभ्युपगमेन भेदेऽपि रूपात्=आनुपूर्वीसाम्यादभेदेन सामान्यवाचित्वम्=सामान्यवचनत्वम्।

वा=अथवा, वृत्तेः=समासात् प्राक्=पदान्तराभिसंबन्धात् प्रागिति यावत्। सामान्यवचनत्वमुदाहृतम् उक्तम्—सूत्रे इति शेष इति।

अयं भावः—उपमानोपमेयोभयगतं सादृश्यमात्रं सामान्यशब्देनात्र विवक्षितम्। सादृश्यञ्च साधारणधर्मादतिरिक्तः पदार्थः।

किञ्चोपमानोपमेययोः सादृश्यं भेदाभेदाभ्यामेव भवति। तत्र 'शस्त्रीश्यामा देवदत्ता'' इत्यत्र शस्त्री देवदत्तयोः स्वस्वपदेनाभिधाने प्रवृत्तिनिमित्तभेदात्=प्रकारभेदात् भेदः, श्यामापदेनाभिधाने च तदभावादभेदः।

अत एव 'शस्त्रीश्यामा' इत्युक्तेऽपि भेदबोधार्थं देवदत्ता पदं वृत्तिबहिर्भूतं प्रयुज्यते। श्यामत्वं तु सादृश्यप्रयोजकभेदघटकाभेदस्य प्रयोजकमिति अभेदबोधार्थं श्यामा पदं प्रयुज्यते।

तथा चैकगतत्वेनापि=उपमानोपमेययोरन्यतरगतत्वेनापि अभिधाने तस्यान्यापेक्षत्वात्=सादृश्यस्य स्वबोधे प्रतियोगिसापेक्षत्वात् अभिधाव्यापारादेव सादृश्यस्योपमानोपमेयोभयनिष्ठताऽवगम्यत इति उपपद्यते श्यामाशब्दस्य प्रागुक्तरीत्या सादृश्यप्रयोजकभेदप्रयोजकत्वेन परम्परया सादृश्यप्रयोजकस्य सामान्यवचनत्वम् इत्येकः पक्षः। सादृश्यं नातिरिक्तः पदार्थः।

किन्त्वत्र=शस्त्रीश्यामेत्यादौ उपमायाम्=सादृश्ये प्रतिपाद्यायाम्, श्यामत्वादिर्गुण एव चाकचिक्यादिविशेषरूपप्रकाराधारविशिष्टो व्यावृत्तोऽपि=भिन्नोऽपि शुद्धोऽविशेषेण=अभेदेन उपमानोपमेयगतो विवक्षितः—सामान्यशब्दस्य प्रत्याययितुमिष्ट इत्यर्थः।

तथा चान्वयिना=उपमानोपमेयोभयानुगतेन शुद्धेन रूपेणाविशेषेणोच्यमानो गुण एव श्यामत्वादिः सादृश्यम्, न ततोऽर्थान्तरमिति श्यामत्वानिर्गुण एव सामान्यम्, तद्वचनः श्यामादिशब्द एव सामान्यवचन इति द्वितीयः पक्षः। तदेददुक्तं भाष्ये—"न चावश्यं स एव सामान्यवचनो यो बहूनां सामान्यमाह, द्वयोरपि यः सामान्यमाह, सोऽपि सामान्यवचन" इति। अत्र बहूनां सामान्यं जातिरूपम्। द्वयोः सामान्यं तु गुणरूपम् इत्यवधेयमिति।

यत्तु वाक्यकारेणोक्तम्—'न वा श्यामत्वस्योभयत्र भावात् तद्वाचकत्वाच्च शब्दस्य सामान्यवचनप्रसिद्धिः' इति । तद् व्याचष्टे—व्यापारो जातिभागस्येत्यादिना । द्रव्ययोरुपमानोपमेयलक्षणयोर्गुणजातेर्व्यापारो गुणाभेदप्रत्ययकरणद्वारेणौपम्यसम्बन्धप्रत्यायनं सामान्यवचनेन विवक्षितम् ।

यद्यपि गुणजातिः सकलाश्रयसमवेताऽभिन्नत्वान्नोपमायामुपयोगिनीत्युक्तम्, तथापि स्वधारगतसूक्ष्मविशेषोपरागादवान्तरसामान्यरूपतामापन्ना सादृश्यशब्दवाच्यौपम्योपयोगिनी भवति । तथा च जात्यापादिताभेदस्य श्यामत्वगुणस्योभयत्रोपमानोपमेययोः समवेतस्याभिधायकः सामान्यवचनशब्दः । तदाह—'रूपात् सामान्यवाचित्वम्' इति ।

उपमानोपमेयगतस्य गुणस्य रूपसामान्यावेशादभिन्नस्य प्रत्यायने सामान्यवचनता श्यामादेः शब्दस्य सिध्यतीत्यर्थः । अभेदोपचाराद् द्रव्यवृत्तिता चात्र शब्द-

---

यत्तु वाक्यकारेणोक्तम्—"न वा श्यामत्वस्योभयत्र भावात् तत् वाचकत्वाच्च शब्दस्य सामान्यवचनप्रसिद्धिः" इति ।

अस्यार्थः—न वा श्यामाशब्दस्य विशेषनिष्ठत्वेन सामान्यवचनाप्रसिद्धिरूपो दोषः । प्रकाराधाराविशिष्टस्य श्यामत्वस्य शुद्धस्य उभयत्र उपमानोपमेययोर्भावात् तद् वाचकत्वाच्च श्यामाशब्दस्य=श्यामाशब्दस्याविशेषेणोपमानोपमेयगतश्यामत्वगुणरूपार्थवाचकत्वाच्च सामान्यवचनप्रसिद्धिरिति तद्भाष्यं व्याचष्टे—व्यापारो जातिभागस्येत्यादिना ।

पूर्वस्मिन् पक्षेऽन्वयिना रूपेणोच्यमानो गुण एव सादृश्यम्, तदेव च सामान्यमित्युक्तम्, अत्र पक्षे तु—द्रव्ययोरुपमानोपमेयलक्षणयोर्गुणजातेर्व्यापारो गुणाभेदप्रत्ययकरणद्वारेण औपम्यसम्बन्धप्रत्यायनरूपः= उपमानोपमेयभावरूपसम्बन्धप्रज्ञापनरूपः सामान्यवचनशब्देन विवक्षित इति विशेष इति तृतीयः पक्षः ।

यद्यपि गुणगता जातिः सकलाश्रयसमवेता=उपमानोपमेयद्रव्ययोरन्यत्र च समवेता अभिन्नत्वान्नोपमायामुपयोगिनी इत्युक्तम्, तथापि स्वाधारगतसूक्ष्मविशेषोपरागात्=सूक्ष्मविशेषसामानाधिकरण्यात् भिद्यमाना महासामान्यतः, अवान्तरसामान्यरूपतामापन्ना सादृश्यशब्दवाच्या औपम्योपयोगिनी=उपमानोपमेयभावोपयोगिनी भवति ।

तथा च स्वगतजात्यापादिताभेदस्य श्यामत्वगुणस्य उभयत्रोपमानोपमेययोः समवेतस्याभिधायकः सामान्यवचनशब्दः । तदाह—रूपात् सामान्यवाचित्वमिति तृतीयपक्षे एव पर्यवसानं कृतं श्रीहेलाराजेन । मया तु पक्षान्तरपरतयाऽयं कारिकांशो योजितः सामान्यवाचित्वमिति प्रसाध्यं शब्दधर्मं वीक्ष्य तद्धेतोः रूपादित्यस्यापि शब्दधर्मत्वानुवीक्षणेन । उपमानोपमेयगतस्य श्यामत्वगुणस्य रूपसामान्यावेशात्=सकलाश्रयसमवेतमहासामान्याद् भिन्नं यद् उपमानोपमेययोः स्वरूपभूतमवान्तरसामान्यं तदावेशात्=तत्संबन्धात् तत्सामानाधिकरण्याद् अभिन्नस्य प्रत्यायने सामान्यवचनता श्यामादेः शब्दस्य सिद्ध्यतीति हेलाराजीयोऽर्थः ।

स्येति द्रव्ययोरित्याह । परिहारान्तरं स्पष्टमिदं भाष्येऽभिहितम् । 'अथवा सामान्यवचनैरित्युच्यते । सर्वः शब्दोऽन्येन शब्देनाभिसम्बध्यमानो विशेषवचनः संपद्यतेऽत एवं विज्ञास्यामः प्रागभिसम्बन्धाद् यः सामान्यवचनः' इति । तदेवाह—'प्राग् वा वृत्तेरुदाहृतम्'इति ।

आभिमुख्येनान्योन्यरूपसम्मिश्रणेन सम्बध्यन्ते यस्मिन्नर्था इति समासोऽभिसम्बन्धशब्देन विवक्षितः, तत्रार्थानां निर्विभागत्वात् । यथा 'विशेषणं विशेष्येण', (पा० २।१।५७) 'द्वितीया श्रितादिभिः (पा० २।१।२४) समानाधिकरणेन' (पा० २। ।४९) "अर्धं नपुंसकम्" (पा० २।२।२) इत्यादिव्यवहारो वाक्यगतभेदभावनावशादाश्रीयते, तथा सामान्यव्यवहारोऽपि ।

तथाहि—वृत्तिवाक्ययोः संसृष्टासंसृष्टार्थतया सत्यपि भेदे रूपसामान्यादभेदाभिधानोपपत्तेर्वाक्यगतैर्धर्मैर्वृत्त्यन्वाख्यानमपोद्धारपदार्थकल्पनयोपपद्यत एव । ततश्च समासे सामान्यस्योपमेयावरुद्धत्वेऽपि ततः पूर्वं वाक्ये विच्छिन्नार्थप्रत्यायकपदप्रयोगे विशेषावरोधाभावात् सामान्यवचनतोपपत्तिः ।

यद्वा सामान्यमुक्तवान् सामान्यवचन इति वाक्यावस्थापरिदृष्टं सामान्यवचनत्वं भूतपूर्वगत्याश्रीयते । यथा शस्त्रीशब्दस्य वृत्तावुपमेयवृत्तित्वेऽपि भूतपूर्वगत्योपमानवाचित्वमिति सर्वेष्टसिद्धिः ॥ ४२६, ४०७ ॥

---

गुणगुणिनोरभेदोपचाराद् द्रव्यवृत्तिता चात्र श्यामादेः शब्दस्येति कारिकायां द्रव्ययोरित्याह=परिहारान्तरं स्पष्टमिदं भाष्येऽभिहितम्—"अथवा सामान्यवचनैरित्युच्यते । सर्वः शब्दोऽन्येन शब्देनाभिसंबध्यमानो विशेषवचनः संपद्यते, अत एवं विज्ञास्यामः, प्रागभिसंबन्धादयः सामान्यवचनः" इति ।

तदेवाह प्रकृतकारिकायाम्—प्राग्वा वृत्तेरुदाहृतमिति । आभिमुख्येन=अन्योऽन्यसंमिश्रणेन संबध्यन्ते यस्मिन्नर्था इति व्युत्पत्त्या प्रकृते भाष्येऽभिसंबन्धशब्देन समासो विवक्षितः, तत्र=समासे अर्थानां निर्विभागत्वात् । यथा – "विशेषणं विशेष्येण"(पा० २।१।५७) "द्वितीयाश्रितादिभिः (पा० २।१।२५) समानाधिकरणेन" (पा० २।१।४९) "अर्धं नपुंसकम्" (पा० २।२।२) इत्यादिव्यवहारो वाक्यगततत्तदर्थभेदभावना (वासना) वशादाश्रीयते, तथा सामान्यव्यवहारोपि तत एव ।

तथा हि—वृत्तिवाक्योर्यथायथं संसृष्टासंसृष्टार्थबोधकतया सत्यपि अर्थभेदे स्वरूपभेदे चानुपूर्वी रूपसामान्याद् अर्थस्वरूपयोरभेदाभिधानोपपत्तेर्वृत्तावपोद्धारपदार्थकल्पनया वाक्यगतधर्मैर्वृत्त्यन्वाख्यानमुपपद्यत एव । ततश्च समासे सामान्यवचनस्योपमेयावरुद्धत्वेऽपि=उपमेयमात्रवृत्तित्वेऽपि ततः पूर्वं वाक्ये विच्छिन्नार्थप्रत्यायकपदप्रयोगे विशेषावरोधाभावात्=विशेषार्थवृत्तित्वाभावात् सामान्यवचनतोपपत्तिः ।

यद्वा सामान्यमुक्तवान् सामान्यवचन इति व्युत्पत्त्या वाक्यावस्था परिदृष्टं सामान्यवचनत्वं भूतपूर्वगत्या उपलक्षणत्वेनाश्रीयते । यथा वृत्तौ शस्त्रीश्यामा इत्यत्र समासस्योपमेयवृत्तित्वेन शस्त्रीशब्दस्यापि उपमेयवृत्तित्वेऽपि भूतपूर्वगत्या उपमानवाचित्वमिति चरमपक्षे सर्वेष्टसिद्धिरिति ॥ ४२६ ॥ ४२७ ॥

इदानीम् "उपमितं व्याघ्रादिभिः" (पा० २।१।५६) इत्यत्र भाष्यं विचार्यते । तथाहि-तत्र सामान्यवचनस्य प्रयोगे शूरशब्दस्य पुरुषोऽयं व्याघ्र इव शूर इति समासो मा भूदिति सामान्याप्रयोग इत्युच्यते । अत्र च पूर्वोत्तरपदयोरुपमानोपमेयार्थभेदाद् वैयधिकरण्यादेव समासस्याप्रवृत्तिः ।

यद्येवं मूलोदाहरणेऽपि पुरुषव्याघ्र इति कथं सामानाधिकरण्यमित्यत आह—

**व्याघ्रशब्दो यदा शौर्यात् पुरुषार्थोऽवतिष्ठते ।**
**तदाधिकरणाभेदात् समासस्यास्ति सम्भवः ॥ ४२८ ॥**

शौर्यादिसमानगुणान्तर्भावनेनोपमानवचना अपि व्याघ्रादयो यदा तत्त्वाध्यारोपादुपमेयवृत्तयो भवन्ति, तदा समानाभिधेयत्वात् समानाधिकरणाधिकारविहिता वृत्तिरुपपद्यते, पुरुषव्याघ्रः पुरुषसिंह इति । अत्र च सामान्यधर्मस्यान्तर्भावादप्रयोगः ॥ ४२८ ॥

यदा तु स प्रयुज्यते, तदा—

**शूरशब्दप्रयोगे तु व्याघ्रशब्दो मृगे स्थितः ।**
**भिन्नेऽधिकरणे वृत्तेस्तत्र नैवास्ति सम्भवः ॥ ४२९ ॥**

---

इदानीम्—"उपमितं व्याघ्रादिभिः" ( पा० २।१।५६ ) इत्यत्रत्यं भाष्यं विचार्यते । तत्र सामान्यवचनस्य शूरशब्दस्य प्रयोगे पुरुषोऽयं व्याघ्र इव शूर इत्यत्र समासो मामूत् इति सूत्रे सामान्याप्रयोगे इत्युच्यते । अत्र च पूर्वोत्तरपदयोरुपमानोपमेयरूपार्थभेदाद् वैयधिकरण्यादेव समासस्याप्रवृत्तिः, तत्र समानाधिकरणपदाधिकारात् ।

यद्येवम्, तदा 'पुरुषव्याघ्रः' इति मूलोदाहरणेऽपि कथं सामानाधिकरण्यप्रयुक्तः समास इत्याशङ्क्य परिहारमाह—व्याघ्रशब्दो यदा शौर्यादिति ।

अस्यार्थः—यदा सामान्याप्रयोगे शौर्यात्=प्रकरणादितः प्रतीयमानशौर्यगुणमूलकव्याघ्रत्वारोपात्, व्याघ्रशब्दः पुरुषार्थः=पुरुषपदार्थकोऽवतिष्ठते मृगरूपमर्थं विहाय, तदाऽधिकरणाभेदात्=समस्यमानपदवाच्ययोर्द्रव्ययोरभेदात् सामानधिकरण्योपपत्तौ समासस्य संभवोऽस्ति इति ।

अयं भावः—स्वभावतो मृगविशेषरूपोपमानवचना अपि व्याघ्रादयः शब्दा यदा स्वार्थे शौर्यादिरूपसमानगुणान्तर्भावेन तत्त्वाध्यारोपात्=पुरुषे व्याघ्रत्वारोपात् उपमेयवृत्तयो भवन्ति । तदा पूर्वोत्तरपदयोः समानाभिधेयत्वात् समानाधिकरणाधिकारविहिता वृत्तिरुपपद्यते, पुरुषव्याघ्रः, पुरुष सिंह इति । अत्र च सामान्यधर्मस्य स्वार्थेऽन्तर्भावादप्रयोग इति ॥ ४२८ ॥

यदा तु शूरशब्दः प्रयुज्यते तदाऽऽह—शूरशब्दप्रयोगे इति ।

अस्यार्थः—सामान्यधर्मान्तरनिवृत्तिपरतया शूरशब्दप्रयोगे तु तत्त्वाध्यारोपाभावे व्याघ्रशब्दोऽभिधया मृगे स्थित इति भिन्नेऽधिकरणे द्रव्ये पूर्वोत्तरपदाभ्यामभिधेये वृत्तेः समासरूपायाः संभवो नैवास्तीति ।

स्वशब्देनैव सामान्यधर्मस्योपमेयगतस्याभिधाने मृगजातीये स्वार्थ उपमानलक्षण एव व्याघ्रशब्दो वाचकत्वेन वर्तते, नोपमेये पुरुषे; भेदसम्बन्धस्योद्भूतस्येवादिना द्योतितत्वादभेदेनायोगात् ।

एवञ्च भिन्नाधिकरणत्वात् प्राकरणिकः समासो न प्राप्नोतीति किं प्रतिषेधेनेत्यर्थः ॥ ४२९ ॥

एतत् समर्थयते—

**सामानाधिकरण्येऽपि गुणभेदस्य सम्भवात् ।**
**प्रयोगः शूरशब्दस्य समासेऽप्यनुषज्यते ॥ ४३० ॥**

यदापि समानगुणान्तर्भावनेन व्याघ्रशब्दः पुरुषे वर्तते, तदापि शूरशब्दस्य प्रयोगः स्यात्, समानस्य धर्मस्य नियमख्यापनाय । अन्यथा सामानाधिकरण्यान्यथानुपपत्त्याध्यारोपहेतुनियतो गुणः प्रतीयेत ।

तथाहि—गुणभेदस्यास्ति सम्भवो व्याघ्रे, शौर्यहिंस्रत्वबलवत्त्वादिरपि गुणः सम्भवादन्तर्भूत इत्यवधार्यते । तथा च नियमाय शूरशब्दप्रयोगेऽपि समासः स्यादित्यर्थवान् प्रतिषेधः ॥ ४३० ॥

---

अयं भावः—उपमेयगतस्य शूरत्वादेः सामान्यधर्मस्य स्वशब्देनैवाभिधाने तन्मूलकतत्त्वारोपाभावे उपमानलक्षणे एव स्वार्थे मृगजातीये व्याघ्रशब्दो वाचकत्वेन वर्तते, नोपमेये पुरुषे, उपमानोपमेयभावलक्षणस्य भेदसंबन्धस्य शूरशब्दप्रयोगे उद्भूतस्येवादिना द्योतितत्वादभेदेन योगाभावात् ।

एवञ्च पूर्वोत्तरपदयोर्भिन्नाधिकरणत्वात् प्राकरणिकः=समानाधिकरणपदाधिकारप्रकरणे विधीयमानः उपमितसमासो न प्राप्नोति इति किं तत्प्रतिषेधेन इति ॥ ४२९ ॥

एतत्=सामान्याप्रयोगे इति समासप्रतिषेधकं सौत्रं पदम् समर्थयते—सामानाधिकरण्येऽपीति ।

अस्यार्थः—सामानाधिकरण्येऽपि=समानगुणान्तर्भावनेन तत्त्वाध्यारोपाद् व्याघ्रशब्दस्य पुरुषशब्दसमानाधिकरण्येऽपि गुणभेदस्य=शौर्याद् भिन्नस्यापि गुणस्य, क्रौर्यादेः संभवात् शूरशब्दस्य प्रयोगो नियमख्यापनाय=उपात्तगुणस्यौपम्यप्रयोजकत्वनियमख्यापनाय समासेऽनुषज्यते=अनुबध्यते, प्रयुज्यत इति यावत् इति । संभावनया शूरशब्दप्रयोगेऽपि समासः स्यात् तद्वारणाय सामान्याप्रयोगे इति ।

अयं भावः—यदाऽपि समानगुणान्तर्भावनेन तत्त्वारोपात् पुरुषे व्याघ्रशब्दो वर्तते, तदाऽपि शूरशब्दस्य प्रयोगः स्यात् समानस्य धर्मस्य नियमख्यायनाय । अन्यथा=शूरशब्दाप्रयोगे सामानाधिकरण्यान्यथानुपपत्त्या पुरुषे व्याघ्रत्वाध्यारोपहेतुरनियतो गुणः प्रतीयेत ।

तथाहि—गुणभेदस्यापि संभवो व्याघ्रे शौर्यहिंस्रत्वबलवत्वादिरपि गुणः संभवादन्तर्भूत इत्यवधार्यते । तथाच अध्यारोपप्रयोजकगुणनियमाय शूरशब्दप्रयोगेऽपि समासः स्यादित्यर्थवान् सामान्यप्रयोगप्रतिषेध इति ॥ ४३० ॥

ननु सिंहो व्याघ्र इति पूजायाम्, श्वा काक इति कुत्सायामित्युद्घोष्यते। तथा च पुरुषव्याघ्रः, पुरुषसिंह इति शौर्यमेव पूजार्थमन्तर्भूतो गुण इति कथमनियम इत्याशङ्क्याह—

**पूजोपाधिश्च यो दृष्टः कुत्सनोपाधयश्च ये।**
**तेषां भिन्ननिमित्तत्वान्नियमार्था पुनः श्रुतिः ॥४३१॥**

पूजाप्रतिपादनपरतया ये गुणा उपमेयोपकारिणोऽन्तर्भाव्यन्ते उपमानेन, ते बहवो व्याघ्रादेः प्रकरणभेदगताः। ततश्च सामान्यशब्दादस्मान्नियमेन नावगम्यन्त इति पुनः श्रुतिः शूरादिशब्दोऽवधारणार्थः प्रयोक्तव्य एव।

तद्यथा—'अभिमनायते, सुमनायते, दुर्मनायते' इत्यत्र सुदुरभीनां प्रत्ययार्थविशेषणपक्षे गतार्थानामपि प्रत्यय- प्रयोगाद्रूपसामान्यात् प्रत्ययान्तस्य मनायत इति सर्वसाधारण्याद् विशेषानभिव्यक्तौ प्रयोगस्तादर्थ्येनोपपद्यते, तथात्र।

---

ननु "सिंहो व्याघ्रः" इति पूजायां प्रतीयमानायां प्रयुज्यते, 'श्वा काक' इति निन्दायां गम्यमानायां प्रयुज्यते इत्युद्घोष्यते। तथा च-'पुरुषव्याघ्रः, पुरुषसिंहः' इति प्रसिद्धत्वात् शौर्यमेव पूजाप्रतीत्यर्थमुपमानेऽन्तर्भूतो गुण इति कथमनियमः, अनियमाभावे च कथं नियमार्थं सामान्यशब्दप्रयोगः, तदभावे च कथं तत्र समासाभावार्थं सामान्याप्रयोग इति इत्याशङ्क्याह— पूजोपाधिश्च यो दृष्ट इति।

अस्यार्थः—पूजोपाधिश्च यो दृष्टः-ये गुणाः पूजोपाधित्वेन=पूजाप्रतिपत्तिनिमित्तत्वेन, दृष्टाः, शौर्यक्रौर्यबलवत्त्वादयः ये च गुणाः कुत्सनोपाधयः=कुत्सा प्रतिपत्तौ निमित्तभूताः दृष्टाः काकगताशुचिभक्षणानवस्थायितादयः, तेषां भिन्ननिमित्तत्वात्=प्रसिद्धगुणाद् भिन्नानां निमित्तानां सत्त्वात्, उपमानेऽन्तर्भावेन उपमानपदात् प्रत्ययेऽपि पुनः श्रुतिर्नियमार्था, प्रसिद्धेतरसमानधर्मनिवृत्यर्था इति नियमार्थं सामान्यशब्दप्रयोगे इतरसाधारणधर्मरूपनिमित्तमुपादाय तत्त्वाध्यारोपात् सामानाधिकरण्यसंभवेन प्राप्तस्य समासस्य प्रतिषेधार्थं सामान्याप्रयोगे इत्यावश्यकमिति।

अयं भावः—ये गुणाः उपमेयपूजा प्रतिपादनपरतया उपमेयोपकारिण उपमानेन स्वार्थेऽन्तर्भाव्यन्ते, ते व्याघ्रादेर्बहवो गुणाः शौर्य-क्रौर्यबलवत्त्वादयः प्रकरणभेदगताः=प्रकरणभेदेन पृथक् पृथक् ज्ञाताः। ततश्च सामान्यशब्दप्रयोगे 'पुरुषो व्याघ्रः इव शूरः' इत्यत्र सामान्यशब्दादस्मान्नियमेन व्यावर्तितः, इतरे सामान्यगुणा नावगम्यन्त इति पुनः श्रुतिः। शूरादिशब्दोऽवधारणार्थः=इतर व्यावृत्यर्थ. प्रयोक्तव्य एव।

तद् यथा—"अभिमनायते, सुमनायते, दुर्मनायते" इत्यत्र सुदुरभीनां भवत्यर्थरूपप्रत्ययार्थविशेषणपक्षे प्रत्ययस्य तदर्थविशिष्टस्वार्थाभिधायितया प्रत्ययप्रयोगाद् गतार्थानामपि प्रत्ययान्तस्य मनायते इत्यस्य सुमनायते इत्यादिघटकेन मनायते इत्यनेन सह रूपसामान्यात् सर्वसाधारण्यात्=विशिष्टाविशिष्टार्थवाचकसाधारण्यात् विशेषानभिव्यक्तौ=विशेषार्थस्य स्फुटाप्रतीतौ सुदुरभीनां प्रयोगस्तादर्थ्येन=विशेषाभिव्यक्त्यर्थत्वेन उपपद्यते, तथाऽत्र=पुरुषो व्याघ्र इव शूर इत्यत्र शूरशब्दस्य सामान्यवाचकस्य प्रयोगो विशेषाभिव्यक्त्यर्थत्वेनोपपद्यते।

एवं पुरुषकाक इति निन्दाप्रतिपादनपरतयापि प्रयोगे काकगताशुचिभक्षणानवस्थायितादयो निन्दाहेतवो बहव इति नियमाय पुनः श्रुतिः साधारणवचनस्येति समासप्राप्तौ युक्तः प्रतिषेधः।

चन्द्रमुखादौ तु प्रसिद्धिवशाद् विशिष्टधर्मप्रतिपत्तिरुक्ता। इहापि प्रकरणादिवशाद् विशेषप्रतिपत्तावपि यदा प्रकरणाद्यभावस्तदा प्रयोगे साधारणवचनस्य समासनिषेध उपपद्यत एव ॥ ४३१ ॥

किं वात्र सामानाधिकरण्यसमर्थनेन। तथाहि—सामान्यप्रयोगेऽपि सापेक्षत्वेनासामर्थ्यात् समासाप्राप्तौ प्रधानस्य सापेक्षस्यापि भवति समास इति ज्ञापकार्थमेतदुक्तम्। एवञ्च वैयधिकरण्येन समासाप्राप्तावपि भवत्येवैतज्ज्ञापकमित्याह—

**असम्भवेऽपि वा वृत्तेः स्यादेतल्लिङ्गदर्शनम्।**
**अच्वेरिति यथा लिङ्गमभावेऽपि भृशादिषु ॥ ४३२ ॥**

---

एवं पुरुष काक इति निन्दाप्रतिपादनपरतयाऽपि प्रयोगे काकगताशुचिभक्षणानवस्थापितादयो निन्दा हेतवो बहव इति नियमाय साधारणवचनस्य पुनः श्रुतिः इति तत्रापि समासप्राप्तौ युक्तः सामान्याप्रयोगे इति प्रतिषेधः।

चन्द्रमुखादौ तु प्रसिद्धिवशाद् विशिष्टधर्मप्रतिपत्तिः=आह्लादकत्वरूपसामान्यधर्मप्रतिपत्तिः उक्ता। इहापि='पुरुषो व्याघ्र इव' इत्यत्रापि प्रकरणादिवशात् शूरत्वरूपसामान्यविशेषप्रतिपत्तावपि यदा प्रकरणाद्यभावस्तदा साधारणवचनस्य प्रयोगे समासनिषेध उपपद्यत एवेति ॥ ४३१ ॥

अथवा—किमत्र=सामान्यप्रयोगे सामानाधिकरण्यसमर्थनेन। तथाहि—सामान्यप्रयोगेऽपि 'पुरुषो व्याघ्र इव शूरः' इत्यत्र प्रधानस्य पुरुषस्य सामान्यधर्मसापेक्षत्वेनासामर्थ्यात् समासाप्राप्तौ प्रधानस्य सापेक्षस्यापि भवति समास इति ज्ञापनार्थम् एतत्=सामान्याप्रयोगे इत्येतदुक्तम्।

एवञ्च वैयधिकरण्येन समासाप्राप्तावपि क्रियमाणं सामान्याप्रयोगे इत्येतत् प्रागुक्तरीत्या सामान्यप्रयोगे सामानाधिकरण्यसंभवेन समासप्राप्तिसंभावनया भवत्येवैतद् ज्ञापकमित्याह—असंभवेऽपि वा वृत्तेरिति।

अस्यार्थः—वा=अथवा, 'पुरुषो व्याघ्र इव शूरः' इत्यत्र वैयधिकरण्येन वृत्तेरसंभवेऽपि एतत्=सामान्याप्रयोगे इत्येतत्, लिङ्गदर्शनम्=ज्ञापकं स्यात् 'प्रधानस्य सापेक्षस्यापि भवति समासः' इत्यर्थस्य।

तद्यथा—"भृशादिभ्यो भुव्यच्वेः" ( पा० ३।१।१३ ) इत्यत्र भवत्यर्थे क्यङो विधाने तत्रैव भवति योगे च्विप्रत्ययस्यापि प्राप्तिरिति च्वावुत्पन्ने तेनैव भवत्यर्थस्योक्तत्वात् तदन्तेभ्यो भृशादिभ्यः क्यङोऽभावे सिद्धेऽपि उक्तार्थानामप्रयोग इति न्यायस्य 'एको, द्वौ, बहव' इत्यादौ व्यभिचारदर्शनेन च्व्यन्तेभ्योऽपि भृशादिभ्यः क्यङः प्राप्तिसंभावनया—यत्रार्थे च्विस्तत्रैवार्थे क्यङ् इत्यत्रार्थे अच्वेरिति लिङ्गम्। तेनाभूततद्भावे क्यङ् सिद्धो भवतीति।

वैयधिकरण्यादसम्भवेऽप्राप्तौ वृत्तेः समासस्य तत्सम्भावनया यदेतत् सामान्याप्रयोग इति वचनम्, तत् सुतरामेव लिङ्गदर्शनं ज्ञापकं भवेत्। न केवलं सापेक्षत्वादसामर्थ्यम्, यावद् वैयधिकरण्यादपि। प्रधानस्य च स्वातन्त्र्यादनेकविशेषणयोगोपपत्तिर्न्यायसिद्धा। गुणो ह्येकेन वशीकृतो नान्येन सम्बध्येत। गुणत्वमेव हि तदा जह्यात्। प्रधानस्य युगपदनेकेनोपकारिणा सम्बन्धो भूषणमेव, प्राधान्यस्य परिपोषणादिति न्यायसिद्धेऽर्थे लिङ्गदर्शनमिदम्। दृष्टं चासम्भवेऽपि सम्भावनामात्रेणोपादीयमानं लिङ्गम्।

तद्यथा—"भृशादिभ्यो भुव्यच्वेः" (पा० ३।१।१२) इत्यत्र भवत्यर्थे क्यङो विधाने, तत्रैव भवतियोगे च्विप्रत्ययस्यापीति च्वावुत्पन्ने तेनैव भवत्यर्थस्योक्तत्वात् तदन्तेभ्यो भृशादिभ्यः क्यङोऽनुत्पत्तौ सिद्धायामपि प्राप्तिं सम्भाव्यच्वेरिति प्रतिषेधः क्रियमाणो लिङ्गं यत्रार्थे च्विस्तत्रैव क्यङित्यस्यार्थस्येत्यभूततद्भावे क्यङ् सिद्धो भवति, अभृशो भृशो भवति भृशायत इति।

---

अयं भावः—'पुरुषो व्याघ्र इव शूरः' इत्यत्र पूर्वोत्तरपदयोः वैयधिकरण्याद् वृत्तेः समासस्यासंभवेऽप्राप्तौ तत्संभावनया=प्रागुक्तरीत्या सामान्यप्रयोगे सामानाधिकरण्यसंभवेन तस्य समासस्य संभावनया यदेतत् सामान्याप्रयोगे इति वचनं तत् सुतरामेव लिङ्गदर्शनं ज्ञापकं भवेत्, 'न केवलं सापेक्षत्वादसामर्थ्यं किं तर्हि वैयधिकरण्यादपि'।

यद्यपि प्रधानस्य स्वातन्त्र्यादनेकविशेषणयोगोपपत्तिर्न्यायसिद्धा। गुणो ह्येकेन स्ववशीकृतो नान्येन संवध्यते। तदा हि=अन्येन संबन्धे हि गुणत्वमेव जह्यात्। संवन्धासंबन्धयोः स्वातन्त्र्यात्। प्रधानस्य तु युगपदेनेकेनोपकारिणा संबन्धो भूषणमेव, प्राधान्यस्य स्वातन्त्र्यलक्षणस्य परिपोषकत्वादिति न्यायसिद्धम्, तथापि न्यायसिद्धेऽर्थे इदं लिङ्गदर्शनमपि उपन्यस्तम्, अस्य न्यायसिद्धस्याप्यर्थस्य व्याकरणशास्त्रे समादराय। दृष्टञ्चासंभवेऽपि संभावनामात्रेणोपादीयमानं लिङ्गम्।

तद् यथा—"भृशादिभ्यो भुव्यच्वेः" ( पा० ३।१।१२ ) इत्यत्र भवत्यर्थे क्यङो विधाने, तत्रैव भवति योगे च्विप्रत्ययस्यापि विधानमिति च्वावुत्पन्ने तेनैव भवत्यर्थस्योक्तत्वात् तदन्तेभ्यः=च्व्यन्तेभ्यः भृशादिभ्यः क्यङोऽनुत्पत्तौ सिद्धायामपि 'उक्तार्थानामप्रयोगः' इति न्यायस्य 'एकः, द्वौ, बहवः' इत्यादौ व्यभिचारदर्शनेनानित्यत्वात् तेभ्यश्च्व्यन्तेभ्यः क्यङः प्राप्तिं संभाव्य अच्वेरिति प्रतिषेधः क्रियमाणो लिङ्गं 'यत्रार्थे च्विस्तत्रैवार्थे क्यङ्' इत्यस्यार्थस्य इति अभूततद्भावे च्व्यर्थे क्यङ् सिद्धो भवति। अभृशो भृशो भवति=भृशायते इति।

एवमिहापि वैयधिकरण्यादेव समासाप्राप्तौ प्राप्तिसम्भावनया सामान्याप्रयोग इति प्रतिषेधः प्रधानस्य सापेक्षस्यापि भवति समास इत्यस्यार्थस्य लिङ्गं जायते। तेन राजपुरुषः शोभन इत्यादि सिद्धम्।

उपमेयगतत्वे चात्र सामान्यवचनस्य प्रधानगामिता भवति, नान्यथेति प्रागेव निर्णीतम् ॥ ४३२ ॥

इदानीमुपमानप्रसङ्गेनेदमपरं विचार्यत इत्याह—

**वत्यन्तावयवे वाक्ये यदौपम्यं प्रतीयते।**
**तत्प्रत्ययविधौ सूत्रे निर्देशोऽयं विचार्यते ॥ ४३३ ॥**

ब्राह्मणवदधीते, क्षत्रियवद् युध्यते, वैश्यवदर्जयतीति वत्यन्तपदैकदेशकं यद् वाक्यम्, तत्रोपमानोपमेयभावलक्षणः सम्बन्धोऽवधार्यते।

तथा ह्यध्ययनादिक्रियालक्षणोऽत्र समानो धर्म उपमेयगतत्वेन श्रूयते। अर्थादुपमानगतत्वेन प्रतिपत्तिरिति भवत्यौपम्यस्यावगमः। तस्यौपम्यस्य प्रतिपादको

---

एवमिहापि वैयधिकरण्यादेव समासाप्राप्तौ प्रागुक्तरीत्या सामानाधिकरण्यसंभावना-प्रयुक्तसमासप्राप्तिसंभावनया क्रियमाणः सामान्याप्रयोगे इति प्रतिषेधः प्रधानस्य सापेक्षस्यापि भवति समास इत्यस्यार्थस्य लिङ्गं जायते। तेन 'राजपुरुषः शोभनः' इत्यादि सिद्धम्।

अत्र हि प्रधानस्य पुरुषपदार्थस्य शोभनरूपविशेषणसापेक्षत्वेऽपि समासो भवति। अत्र च ='पुरुषो व्याघ्र इव शूरः' इत्यत्र च सामान्यवचनस्योपमेयगतत्वे=वृत्या उपमेयनिष्ठत्वे उपमेय-वाचित्वे इति यावत् तस्य प्रधानगामिता भवति, नान्यथेति प्रागेवात्र निर्णीतमिति ॥ ४३२ ॥

उपमानविचारप्रसङ्गेनेदानीमिदमपरं विचार्यते, "तेन तुल्यं क्रिया चेद्वतिः" (पा० ५।१।११५) इति सूत्रे प्रकृत्यर्थत्वेन क्रिया निर्दिश्यते, प्रत्ययार्थत्वेन वा, इति इत्याह— वत्यन्तावयवे वाक्ये इति।

अस्यार्थः—वत्यन्तावयवके वाक्ये 'ब्राह्मणवदधीते, क्षत्रियवद् युद्धचते' इत्यादौ यदौपम्यम्=उपमानोपमेयभावलक्षणः संबन्धः प्रतीयते, तत्प्रत्ययविधौ=तस्य संबन्धस्य बोधको यः प्रत्ययः तस्य विधायके सूत्रे—"तेन तुल्यं क्रिया चेद् वतिः" (पा० ५।१।११५) इत्यत्र योऽयं क्रियानिर्देशः स विचार्यते=परीक्ष्यते प्रकृत्यर्थविशेषणतया, प्रकृत्यर्थत्वेन वाऽत्र क्रिया निर्दिश्यते, प्रत्ययार्थविशेषणतया प्रत्ययार्थत्वेन वा इति।

अयं भावः—"ब्राह्मणवदधीते, क्षत्रियवद् युध्यते, वैश्यवदर्जयति" इति वत्यन्तपदैकदेशकं यद् वाक्यं तत्र ब्राह्मणादेस्तदितरस्य च य उपमानोपमेयभावलक्षणः संबन्धः अवधार्यते= स्वेतर-संबन्धव्यावृत्ततया प्रतीयते।

तथाहि—अध्ययनादिक्रियारूपोऽत्र समानो धर्म उपमेयगतत्वेन श्रूयते=अभिधीयते। तस्यैव धर्मस्य उपमानगतत्वेन अर्थात्=अर्थापत्तेः प्रतिपत्तिरिति भवति औपम्यस्य=उपमानोप-मेयभावलक्षणस्य संबन्धस्य अवगमः प्रतिपत्तिः। तस्य औपम्यस्य प्रतिपादको योऽत्र वाक्ये=

योऽत्र प्रत्ययो वतिः, तद्विधायके सूत्रे "तेन तुल्यं क्रिया चेद् वतिः" (पा० ५।१।११५) इत्यत्र योऽयं निर्देशः, स परीक्ष्यते।

तथा हि—प्रकृत्यर्थत्वेन वात्र क्रिया निर्दिश्येत, प्रत्ययार्थत्वेन वा। यद्यपि प्रकृत्यर्थत्वेन व्याप्रियमाणा क्रिया प्रत्ययार्थत्वेन प्रत्येया, प्रत्ययार्थत्वेन वोपादीयमाना प्रकृत्यर्थत्वेन प्रत्येया, धर्मसाधारण्यप्रयुक्तत्वादुपमानोपमेयभावस्येति फलाभेदः, तथापि कः सम्बन्धी क्रियायां न्याय्यः, लक्ष्यव्यवस्था च कथं न भिद्यत इत्यस्ति विचारस्य प्रयोजनम् ॥ ४३३ ॥

तत्रेदं भाष्यम्—'इदमयुक्तं वर्तते। किमत्रायुक्तम्? यत् तृतीयासमर्थं क्रिया-चेत्, सा भवतीत्युच्यते। कथं च तृतीयासमर्थं नाम क्रिया स्यात्' इति। तत्र कोऽभि-प्रायो भाष्यकारस्य? येन तृतीयासमर्थं क्रियेति प्रकृत्यर्थविशेषणपक्षमभ्युपगम्या-क्षिपतीत्यत आह—

क्रियेत्युपाधिः प्राथम्यात् प्रकृत्यर्थस्य यद्यपि।
न प्रातिपदिकं तत्र क्रियावाच्युपपद्यते ॥ ४३४ ॥

---

'ब्राह्मणवदधीयते' इत्यादौ प्रत्ययो वतिः तद्विधायके सूत्रे 'तेन तुल्यं क्रिया चेद् वतिः' (पा० ५।१।११५) इत्यत्र योऽयं क्रियानिर्देशः, स परीक्ष्यते।

तथाहि—प्रकृत्यर्थविशेषणतया प्रकृत्यर्थत्वेन वाऽत्र क्रिया निर्दिश्यते, तुल्यपदार्थप्रत्ययार्थ-विशेषणतया प्रत्ययार्थत्वेन वा। यद्यपि प्रकृत्यर्थविशेषणतया प्रकृत्यर्थत्वेन व्याप्रियमाणा = अभिधारूपेण व्यापारेण गोचरीक्रियमाणा प्रत्ययार्थविशेषणतया अर्थापत्त्या प्रत्ययार्थत्वेन प्रत्येया, प्रत्ययार्थविशेषणतया प्रत्ययार्थत्वेन वा उपादीयमाना = अभिधीयमाना, अर्थापत्त्या प्रकृत्यर्थविशेषण-तया प्रकृत्यर्थत्वेन प्रत्येया, उपमानोपमेयभावस्वरूपस्य संबन्धस्य धर्मसाधारण्यप्रयुक्तत्वादिति फलाभेदः, उभयोरुपमानोपमेययोः पक्षद्वयेऽपि क्रियारूपसाधारणधर्मवत्त्वेन प्रत्ययाद्, तथापि विशेषणत्वेन प्रतीयमानायां क्रियायां कः प्रकृत्यर्थः प्रत्ययार्थो वा विशेष्यतया संबन्धी न्याय्यः लक्ष्यव्यवस्था च कस्मिन् पक्षे कथं न भिद्यते इत्यस्ति विचारस्य प्रयोजनमिति ॥ ४३३ ॥

तत्र = "तेन तुल्यं क्रिया चेद् वतिः" (पा० ५।१।११५) इति सूत्रे इदं भाष्यम्—"इदम-युक्तं वर्तते। किमत्रायुक्तम्? यत् तृतीयासमर्थं क्रिया चेत् सा भवतीत्युच्यते। कथं च तृतीया-समर्थं नाम क्रिया स्यात्" इति। तत्र कोऽभिप्रायो भाष्यकारस्य। येन तृतीयासमर्थं क्रियेति प्रकृत्यर्थविशेषणपक्षमभ्युपगम्याक्षिपति तं भाष्यकाराशयमाह—क्रियेत्युपाधिरिति।

अस्यार्थः—यद्यपि क्रियेति वतिप्रकृत्यर्थस्य उपाधिर्विशेषणं भवितुमर्हति, प्राथम्यात् = वतिप्रत्ययविधायके प्रागुक्ते सूत्रे प्रकृत्यर्थस्य प्रथमोपस्थितत्वात्, तथापि तत्र तृतीयान्ते पदे प्रातिपदिकं क्रियावाचिनोपपद्यते, तिङामेवासत्त्वभूतक्रियावाचित्वात्। प्रातिपदिकस्य तु सत्त्ववाचित्वादिति।

तेनेति समर्थविभक्तिरर्थविशेषनिबन्धना। तथा ह्युपमेयापेक्षया तदुपकारायोपसर्जनीभूतः परिगृहीतव्यतिरेकः प्रकृत्यर्थ उपमानलक्षणः (प्रत्ययार्थेन) प्रत्ययार्थत्वेन समन्वययोग्योऽनया व्यतिरेकविभक्त्या ज्ञाप्यत इति समर्थविभक्तिरियमुच्यते।

सामर्थ्यं च प्रकृत्यर्थस्य प्रत्ययार्थेनेति प्रकृतेरियं विभक्तिः। तुल्यमिति प्रत्ययार्थः। प्रत्ययसन्निधौ तस्यानधिगतस्यावसायात्। तत्र क्रियेति विशेषणमुपादीयमानं सन्निहितत्वात् प्रकृत्यर्थेन वा सम्बध्येत प्रत्ययार्थेन वा।

श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्याभिश्च पदार्थानां गुणविनियोगादिह स्थानान्नियमः।

तथाहि—प्रथमस्थानपतितं तेनेत्येतदिति तस्यैव क्रमव्यतिक्रमे प्रयोजनाभावाद् युक्तं क्रियेति विशेषणम्। तद्यथा—"सास्य देवता" (पा० ४।२।२४) इति सेत्यस्योपाधिर्देवता। "तेन रक्तं रागाद्" (पा० ४।२।१) इति च तेनेत्यस्य रागादिति विशेषणम्। पञ्चमीनिर्देशादेव प्रकृत्यर्थविशेषणतात्र, न स्थानबलात्।

---

अयं भावः—तेनेति तृतीयारूपा समर्थविभक्तिस्तुल्यरूपार्थविशेषनिबन्धना। तथा हि—उपमेयोपकारायोपमेयापेक्षया उपसर्जनीभूतः=उपमेयात् परिगृहीतभेदः उपमानलक्षणः प्रकृत्यर्थः तुल्यार्थरूपेण प्रत्ययार्थेन समन्वययोग्य इत्यनया तेनेत्यत्र व्यतिरेकविभक्त्या=प्रकृत्यर्थप्रत्ययार्थयोर्भेदबोधकविभक्त्या ज्ञाप्यते इति समर्थविभक्तिरियमुच्यते। प्रकृत्यर्थः प्रत्ययार्थेन समन्वययोग्य इति समन्वययोग्यतालक्षणस्य सामर्थ्यस्य बोधने समर्थेयं विभक्तिरिति वक्तुरभिप्रायः।

सामर्थ्यञ्च प्रकृत्यर्थस्य प्रत्ययार्थेनेति प्रकृतेरियं विभक्तिः, प्रकृतेरेव प्रत्ययोत्पत्तौ समर्थत्वात्। तुल्यमिति प्रत्ययार्थः। प्रकृत्याऽनधिगतस्य तस्य प्रत्ययसंनिधौ अवसायात्=प्रत्ययार्थत्वेन निश्चयात्। तत्र सूत्रे क्रियेति विशेषणमुपादीयमानं संनिहितत्वात् प्रकृत्यर्थेन वा संबध्येत, प्रत्ययार्थेन वा।

"श्रुति-लिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्" इति पारमर्षम्=जैमिनीयम् सूत्रम्। तत्र स्वार्थबोधनेऽन्यानपेक्षः शब्दः=श्रुतिः। शब्दसामर्थ्यम्=लिङ्गम्। पदानां समभिहारो=वाक्यम्। उभयाकाङ्क्षा=प्रकरणम्। स्थानम्=संनिधिः। समाख्या=यौगिकः शब्दः, श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्याभिश्च पदार्थानां गुणविनियोगात्=पदार्थानामितरत्रगुणत्वेन संबन्धात् इह स्थानाख्यप्रमाणात् क्रियाया विशेषणत्वनियमः।

तथाहि—प्रकृतसूत्रे तेनेत्येतत्प्रथमस्थानपतितमिति क्रमव्यतिक्रमे प्रयोजनाभावात् तस्यैव क्रियेति विशेषणं युक्तम्। तद्यथा—'साऽस्य देवता (पा०४।२।२४)इति सूत्रे सा इत्यस्योपाधिर्देवता। अवाच्यो वाच्यप्रयोगे नियमेन प्रतीयमानो वाच्यव्यावर्तको विधेयानन्वयी उपाधिरिति तल्लक्षणम्।

यथा—"अनेकमन्यपदार्थे" (पा० २।२।२४) इति सूत्रस्य विषये अस्त्यर्थ उपाधिः। "तेन रक्तं रागात्" (पा० ४।२।१) इत्यत्र च रागादिति तेनेत्यस्य विशेषणम्। पञ्चमीनिर्देशादेव श्रुतिरूपात् प्रमाणात् प्रकृत्यर्थविशेषणताऽत्र, न स्थानबलात्। रक्तपदव्यवायेन विप्रकर्षात्।

तदेवं यद्यपि तृतीयासमर्थं क्रियेति न केनचिदत्र प्रथममुक्तम्; तथापि न्यायबलात् क्रियेत्युपाधिः प्राथम्यात् प्रकृत्यर्थस्येति युक्तम् 'यत् तृतीयासमर्थं क्रिया चेत् सा भवतीत्युच्यते' इति भाष्यम्। न्यायायातोऽयमर्थोऽवश्याभ्युपगमनीय इत्युक्तकल्पत्वादुच्यत इति भाष्ये व्यपदिष्टः। तत्र तृतीया सत्त्ववाचिनः प्रातिपदिकाद् विधीयते।

न च तत् क्रियावाचि, साध्यमानरूपायाः क्रियायास्तिङन्तैकगोचरत्वादिति कथं तृतीयासमर्थस्य क्रियेत्यनेन विशेषणम्, असम्भवादित्याक्षेपः॥ ४३४॥

विशेषणसामर्थ्यात् क्रियावाचि, तर्हि तृतीयासमर्थं भविष्यतीत्याह—

सत्त्ववृत्तस्य शेषे वा तृतीया साधनेऽपि वा।
तिङामसत्त्ववाचित्वादुभयं तन्न विद्यते॥ ४३५॥

---

तदेवं यद्यपि तृतीयासमर्थं क्रियेति न केनचिदत्र प्रथममुक्तम्, तथापि न्यायबलात्=औचित्यबलात् क्रियेति प्रकृत्यर्थस्योपाधिः, तस्य प्राथम्यादिति युक्तम्। एतदभिप्रेत्य—"यत् तृतीयासमर्थं क्रिया चेत् सा भवति इत्युच्यते" इति भाष्यम्। न्यायप्राप्तोऽयमर्थोऽवश्याभ्युपगमनीय इति उक्तकल्पत्वात्=उक्तप्रायत्वात्, उच्यत इति भाष्ये व्यपदिष्टः। तत्र तृतीया सत्त्ववाचिनः=द्रव्यवाचकात् प्रातिपदिकाद् विधीयते।

न च तत्=प्रातिपदिकम् क्रियावाचिसाध्यमानस्वरूपायाः क्रियायास्तिङन्तैकगोचरत्वात्=तिङन्तमात्रवाच्यत्वात् इति कथं तृतीया समर्थस्य क्रियेत्यनेन विशेषणम्=व्यावर्तनम् प्रातिपदिकस्य द्रव्यवाचकत्वेन साध्यस्वरूपक्रियावाचकत्वासंभवादित्याक्षेपः क्रियत इति॥ ४३४॥

नन्वेवं तर्हि क्रियावाचितिङन्तं पदमेव विशेषणसामर्थ्यात् तृतीया समर्थं भविष्यतीत्याशङ्क्याह—सत्त्ववृत्तस्य शेषे वा इति।

अस्यार्थः—सत्त्ववृत्तस्य=सत्त्वे द्रव्ये वृत्तस्य अभिधाख्यवृत्तिमतः=तद्वाचिनः, शेषे वा=क्रियाकारकभावसंबन्धनिमित्तके शेषाख्ये संबन्धे वा, तृतीया भवति। तद् यथा='राज्ञः पुरुषः' इत्यत्र राजा भरणक्रियया पुरुषस्योपकारकः, पुरुषश्च सेवया राज्ञ उपकारक इति क्रियाकारकभावसंबन्धनिमित्तको राजपुरुषयोः स्वस्वामिभावसंबन्धरूपः शेषसंबन्धः।

तथा—'अध्ययनेन वसति' इत्यत्र अध्ययनं भिक्षासंपादनद्वारावासस्योपकारकम्, वासश्च गुरुसन्निधानादिसंपादकतयाऽध्ययनस्योपकारकः इत्येवं क्रियाकारकभावसंबन्धनिमित्तकोऽत्र हेतुहेतुमद्भावाख्यः शेषसंबन्धः।

अथवा सत्त्ववृत्तस्य संबन्धिनी साधने अपि=कर्तृकरणान्यतररूपे कारके तृतीया भवति। यथा—'दात्रेण लुनाति' इति। 'देवदत्तेन कटः कृतः' इति। तदेतदुभयमपि तृतीयानिमित्तं शेषो वा साधनं वा, तिङामसत्त्ववाचित्वात्=तिङन्तानामद्रव्यवाचित्वात् नोपपद्यते। शेषाख्यसंबन्धप्रतियोगित्वं साधनत्वञ्च द्रव्यस्यैव हि दृष्टमिति।

सत्त्वं सीदन्त्यस्मिन् जातिगुणक्रिया इति इदं तदिति व्यपदेशयोग्यं द्रव्यमुच्यते। तत्र वृत्तस्य प्रातिपदिकस्य तृतीयया योगः।

तथाहि—स प्रातिपदिकार्थः परोपकाराधानयोग्यत्वात् तदुपकारोपजनितव्यतिरेकस्तद्वाचिकां विभक्तिमाश्रयते।

स च व्यतिरेकः क्रियाकारकसम्बन्धनिमित्तः कश्चिच्छेषसम्बन्धः। तद्यथा—अध्ययनेन वसति। दध्ना जडः। तपसा कृशः। धनेन कुलमिति हेतुहेतुमद्भावोऽयं शेषसम्बन्धः।

कश्चित् पुनः क्रियाकारकसम्बन्ध एव व्यतिरेकः, तत्रापि तृतीया। तद्यथा—दात्रेण लुनाति। परशुना छिनत्तीत्यादि।

तदेतद् द्वयमपि तृतीयानिमित्तं क्रियावाचिनां तिङामसम्भवि। आख्यातस्य क्रियावाचिता।

क्रिया च साधनव्यापारस्वभावा प्रसृतावयवा साध्या सिद्धस्वभावद्रव्यविलक्षणेति साध्योपयोगिनीनां शक्तीनामनाश्रयः। सिद्धस्वभावानां चार्थानामन्योन्योपकारे साधनशक्तिप्रभावितः शेषसम्बन्धः, न तु साध्यस्वरूपायाः क्रियाया इति नास्ति क्रियावाचिन आख्यातात् तृतीया।

---

अयं भावः—सत्त्वं सीदन्ति तिष्ठन्ति अस्मिन् जातिगुणक्रिया इति व्युत्पत्त्या जातिगुणक्रियाणामाधारभूतम्=‘इदं तदिति’ व्यपदेशयोग्यं द्रव्यमुच्यते। तत्र=सत्त्वे वृत्तस्य=अभिधाख्यवृत्तिमतः प्रातिपदिकस्य तृतीयया योगो भवति।

तथा हि—स प्रातिपदिकार्थः परोपकाराधानयोग्यत्वात्=परोपकारजनने स्वरूपयोग्यत्वात् परोपकारोपजनितव्यतिरेकः=परोपकारक्रियोपजनितशेषाख्यसंबन्धः, तद्वाचिकां विभक्तिमाश्रयते तृतीयां वा षष्ठीं।

स च व्यतिरेकः क्रियाकारकसंबन्धनिमित्तकः कश्चिच्छेषसंबन्धः। तद् यथा=‘अध्ययनेन वसति’। अत्र यद्वक्तव्यं तत्प्रागेवोक्तम्। ‘दध्ना जडः’ ‘तपसा कृशः’ धनेन कुलम्’ इति। अत्र क्रियाकारकसंबन्धनिमित्तको हेतुहेतुमद्भावोऽयं संबन्धः। दध्ना कृतं दधिहेतुकं जाड्यम्। तपसा कृतं तपो हेतुकं कार्श्यम्। धनेन विवहनद्वारा विकसितं धनहेतुकं कुलम् इति यथायथमर्थाः।

कश्चित् पुनः क्रियाकारकसंबन्ध इव व्यतिरेकः। ‘दात्रेण लुनाति’ ‘परशुना छिनत्ति’ इत्यादि। तदेतद् द्वयमपि शेषत्वरूपं साधनत्वरूपञ्च तृतीयानिमित्तं क्रियावाचिनां तिङामसंभवि। आख्यातस्य हि क्रियावाचिता।

क्रिया च साधनव्यापारस्वभावा=साध्यसिध्यनुकूलव्यापारस्वरूपा प्रसृतावयवा=निरन्तरविस्तीर्णावयवा साध्या=सिद्धस्वभावद्रव्यविलक्षणेति साध्योपयोगिनीनाम्=साध्यत्वेन प्रतीयमानक्रियोपयोगिनीनाम् कारकशक्तीनामनाश्रयः। सिद्धस्वभावानां त्वर्थानामन्योऽन्योपकारे साधनशक्तिप्रभावितः=कारकशक्तिसंपादितः शेषसंबन्धः, न तु साध्यस्वरूपायाः क्रियाया इति नास्ति क्रियावाचिन आख्याता तृतीया।

क्रियावाचिनस्तृतीयासमर्थताविरोधप्रतिपादनतात्पर्याच्चाप्रातिपदिकत्वं तिङन्तस्यानुपात्तम्, अर्थविरोधादेव तृतीयानुपपत्तेः सिद्धत्वात्।

यद्यपि च तुल्यार्थे वतिविधानात् तन्निमित्ता शेषविषयैवेह तृतीया सम्भाव्यते, तथापि सर्वथाऽसम्भवमाख्यातुं साधनेऽपि तृतीयोपन्यस्ता।

ननु च "करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य" ( पा० २।३।३३ ) इत्यसत्त्वभूतार्थाभिधायिनोऽपि करणभाव उक्तः। सर्वथाऽसत्त्वभूतत्वे क्रियां प्रति साधनत्वायोगात् करणभावोऽघटमानः स्यादिति धर्ममात्रवचनोऽत्र विवक्षितः।

धर्ममात्रस्य हि द्रव्यायमाणस्य स्वेनात्मना सिद्धत्वात् करणभावोपपत्तिः। क्रिया तु साध्यत्वेनालब्धस्वभावा सर्वथा नान्यत्रोपकाराय प्रभवति ॥ ४३५ ॥

पाकादयस्तर्हि क्रियावचनास्तृतीयासमर्था भविष्यन्तीत्यत आह—

**पाकादयस्तृतीयान्ताः सत्त्वधर्मसमन्वयात्।**
**न क्रियेत्यपदिश्यन्ते कृत्वोर्थप्रत्यये यथा ॥ ४३६ ॥**

---

लोकन्यायसिद्धो यः क्रियावाचिनस्तृतीयासमर्थताविरोधस्तत्प्रतिपादने तात्पर्यात् तु अधातुरिति, अप्रत्यय इति च सौत्रप्रतिषेधसिद्धं तिङन्तस्य तद्घटकस्य धातोश्चाप्रातिपदिकत्वं नोपात्तम्। अर्थविरोधादेव तृतीयानुपपत्तेः सिद्धत्वात्, किं सौत्रप्रतिषेधान्वेषणप्रयासेन।

यद्यपि च तुल्यार्थे वतिविधानात् तन्निमित्ता=तुल्यार्थहेतुका शेषविषयैव, न तु साधनविषया इह तृतीया संभाव्यते इति कारिकायाम्—"साधनेऽपि वा" इति वक्तुं नोचितम्, तथापि सर्वथा तृतीयाया असंभवं समाख्यातुं साधनेऽपि आख्यातात् तृतीया प्रतिषेध्यत्वेनोपन्यस्ता।

ननु च "करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य ( पा० २।३।३३ ) इति असत्त्वभूतार्थाभिधायिनोऽपि करणभाव उक्त इति कथं नाख्यातप्रतिपाद्यायाः क्रियायाः साधनशक्तियोगः, कथञ्चनाख्यातात् तत्र तृतीयेति चेत् सत्यम्। सर्वथाऽसत्त्वभूतत्वे क्रियां प्रति साधनत्वायोगात् करणत्वं तस्याघटमानं स्यादिति लक्षणया धर्ममात्रवचनोऽत्रासत्त्ववचनो विवक्षितः।

धर्ममात्रस्य हि साक्षाल्लिङ्गसंख्याद्ययोगेनासत्त्वभूतत्वेऽपि स्वाश्रयद्रव्यद्वारा लिङ्गसंख्यादियोगेन द्रव्यायमाणस्य स्वेनात्मना सिद्धत्वात् क्रियां प्रति करणभावोपपत्तिः। क्रिया तु साध्यत्वेनालब्धस्वरूपाऽन्यत्रोपकाराय सर्वथा न प्रभवति इति नास्याः शेषित्वं साधनत्वं वेति ॥ ४३५ ॥

नन्वेवं तर्हि पाकादयः क्रियावचनास्तृतीया समर्था भविष्यन्ति इति क्रिया चेदित्यस्य प्रकृत्यर्थविशेषणत्वेऽपि नायुक्तत्वमित्याशङ्क्याह—पाकादयस्तृतीयान्ता इति।

अस्यार्थः—पाकेन तुल्या पाकवत् सेवा इति न भवति, पाकेन तुल्यं पाकवत् सेवते इति भवति, क्रिया चेदित्यस्य प्रत्ययार्थविशेषणत्वाभ्युपगमात्, तिङां क्रियावाचित्वात्। घञादीनां सत्त्ववाचित्वादिति सिद्धान्तः।

एवञ्च क्रिया चेदित्यस्य प्रकृत्यर्थविशेषणत्वे तृतीयान्ताः पाकादयः सत्त्वधर्मसमन्वयात्= सत्त्वधर्मस्य—द्रव्यधर्मस्य लिङ्गसंख्याद्यन्वयित्वस्य समन्वयाद्=स्वार्थे संबन्धात् न क्रियेत्यप-

धात्वर्थसिद्धतायां घञादीनां विधानाद् द्रव्यधर्मेण सिद्धत्वेन योगान्न तदन्ताः क्रियाभिधायिन इत्याख्यायन्ते। अत एवैषामक्रियावचनत्वाल्लिङ्गसङ्ख्यासमन्वयोपपत्तौ कृदभिहितो भावो द्रव्यवदित्युच्यते। सिद्धता च क्रियाधर्मो न द्रव्यं भवतीति द्रव्यवदिति वतिनिर्देशः।

उपसंहृतसाधनव्यापारत्वात् सिद्धावस्था साध्यत्वाभावान्न क्रिया, अपितु भूतपूर्वया क्रियया व्यपदिश्यते तद्धर्म इति। न तु सिद्धतायामेव साध्यतास्ति, विरोधाद् यौगपद्यासम्भवात्।

एवञ्च कृत्वा घञाद्यन्तप्रयोगे क्रियाभ्यावृत्तिगणने वाच्ये ये प्रत्ययास्ते न भवन्ति। पञ्चकृत्वः पाकः, द्विः पाक इति। अतश्चाभ्यावृत्तिग्रहणं पञ्च पाका इत्येतद् व्यवच्छेदार्थम्।

अन्यथा धर्मधर्मिणोरभेदप्रतिपत्त्या स्यादत्र क्रियागणनात् प्राप्तिः। साध्यस्य त्वर्थस्याभ्यावृत्त्या पुनः पुनः प्रवृत्तिरूपया योगः।

---

दिश्यन्ते, क्रियायाः साध्यत्वेनासत्त्वभूतायाः सत्त्वधर्मसमन्वयाभावात्, तेषां क्रियात्वेनाव्यपदेश्यत्वे दृष्टान्तः।

यथा कृत्वोऽर्थप्रत्यये क्रियमाणे पाकादयः क्रियात्वेन न व्यपदिश्यन्ते। अत एव 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' (पा० ५।४।१७) इति कृत्वसुज्वर्जितेऽनुवर्तमाने "द्वित्रिचतुर्भ्यः सुच्" (पा० ५।४।१८) इति सूत्रेण 'द्विः पचतीतिवत् 'द्विः पाकः' इति न भवति, पाकशब्दस्य क्रियावाचित्वाभावेन क्रियाभ्यावृत्तिगणनाभावादिति।

अयं भावः—'भावे' (पा० ३।३।१८) इत्यधिकृत्य घञादयः प्रत्यया विधीयन्ते। तत्र यदा धातवः सिद्धत्वविशिष्टस्वार्थाभिधायिनस्तदा सिद्धत्वं तेषां भावः। 'प्रकृतिजन्यबोधे प्रकारो भावः' इति तल्लक्षणात्। तथा च धात्वर्थस्य सिद्धतायां घञादीनां विधानाद् द्रव्यधर्मेण सिद्धत्वेन योगान्न घञाद्यन्ताः क्रियाऽभिधायिन इत्याख्यायन्ते। अत एवैषाम्=घञाद्यन्तानाम् क्रियावचनत्वाभावात् सत्त्वधर्मलिङ्गसंख्या समन्वयोपपत्तौ 'कृदभिहितो भावो द्रव्यवत् प्रकाशते' इत्युच्यते। सिद्धतारूपश्च घञाद्यर्थो धात्वर्थक्रियाधर्मो न द्रव्यं भवति इति द्रव्यवदिति वतिनिर्देशः।

उपसंहृतसाधनव्यापारत्वात्=सकलकारकव्यापारोपरमात् धात्वर्थस्य सिद्धावस्था साध्यत्वाभावान्न क्रिया। अपितु भूतपूर्वया क्रियया=भूतपूर्वेण क्रियात्वेन व्यपदिश्यते तद्धर्म इति=क्रियाधर्म इति। न तु सिद्धतादशायामेव धात्वर्थस्य साध्यताऽस्ति, विरोधात् यौगपद्यासंभवात्।

एवञ्च कृत्वा घञाद्यन्तप्रयोगे क्रियाभ्यावृत्तिगणेन वाच्ये ये प्रत्ययाः कृत्वसुजादयः ते तदा 'पञ्चकृत्वः पाकः, द्विः पाकः' इत्यादयो न भवन्ति। अतश्च=अत्र चेत्यर्थः आद्यादित्वात् सार्वविभक्तिकस्तसिः। अभ्यावृत्तिग्रहणम् 'पञ्च पाकाः' इत्येतद् व्यवच्छेदार्थम्।

अन्यथा धर्मधर्मिणोरभ्यावृत्त्यभ्यावर्तमानयोः अभेदप्रतिपत्त्या=प्रतिपत्तिः प्रतीतिः स्यादत्र क्रियागणनात् प्राप्तिः। साध्यस्य त्वर्थस्य अभ्यावृत्या पुनः पुनः प्रवृत्तिरूपया योगो भवति इति 'द्विः पचति' इत्यादिः प्रयोगः। न तु द्विः पाकः इति, सिद्धत्वे सकलव्यापारोपरमेण पुनः पुनः प्रवृत्तिरूपाभ्यावृत्यभावात्।

यदि च घञादिवाच्यः साध्यः स्यात्, सोऽप्यभ्यावृत्तिविषयैः प्रत्ययैर्युज्येत। न च युज्यते। तस्मादत्र कृत्वोर्थप्रत्ययविषये तदनुत्पत्त्यैव यथा पाकादयो न क्रियावचना इति निश्चीयन्ते, तथा सर्वत्रैषा क्रियाभिधायित्वाभावो न्यायसिद्ध इत्यर्थः ॥ ४३६ ॥

एवं तर्हि तुमुनः स्वार्थे विधानात् क्रियावाचि तदन्तं प्रातिपदिकमस्ति। तथा च पञ्चकृत्वो गन्तुमिति कृत्वोर्थप्रत्यययोगस्तुमुनन्तस्य। ये च तुमुन्नर्थे विधीयन्ते क्त्वाप्रभृतयः, तेऽपि साध्यार्थवाचिनो युज्यन्ते च कृत्वोर्थैर्द्विर्भुक्त्वेत्याशङ्क्याह—

ये चाव्ययकृतः केचित् क्रियाधर्मसमन्विताः।
तेषामसत्त्ववाचित्वं तिङन्तैर्न विशिष्यते ॥ ४३७ ॥

यान्येतान्यव्ययानि कृदन्तानि, तेषां भाव्यमानरूपोऽर्थो वाच्य इत्याख्याततुल्यास्ते तद्वदेव तृतीयया न युज्यन्त इत्यर्थः। प्रातिपदिकार्थमात्रे तु प्रथमात्र न विरुध्यते ॥ ४३७ ॥

---

यदि च घञादिवाच्योऽर्थऽसाध्यः स्यात्, तर्हि सोऽपि अभ्यावृत्तिविषयैः प्रत्ययैः कृत्वसुजादिभिर्युज्येत। न च युज्यते। तस्मादत्र कृत्वोऽर्थप्रत्ययविषयै तदनुत्पत्यैव=कृत्वसुजादिप्रत्ययानुत्पत्त्यैव यथा पाकादयो न क्रियावचना इति निश्चीयन्ते, तथा सर्वत्र एषाम्=पाकादीनाम् क्रियाभिधायित्वाभावः प्रागुक्तरीत्या न्यायसिद्ध इति ॥ ४३६ ॥

एवं तर्हि तुमुनः स्वार्थे विधानात् तदन्तम्=तुमुन्नन्तं क्रियावाचिप्रातिपदिकमस्ति। तथा च पञ्चकृत्वो गन्तुमिति तुमुन्नन्तस्य कृत्वोऽर्थप्रत्यययोगो दृष्यते। ये च क्त्वा प्रभृतयः तुमुन्नर्थे=पूर्वकालविशिष्टे स्वार्थे विधीयन्ते तेऽपि साध्यार्थवाचिनः, युज्यन्ते च कृत्वोऽर्थैः, 'द्विर्भुक्त्वा' इति, इत्याशङ्क्याह—ये चाव्ययकृत इति।

अस्यार्थः—ये चाव्ययकृतः=अव्ययसंज्ञकाः कृदन्ताः शब्दाः, केचित् क्रियाधर्मसमन्विताः, क्रियाधर्मेण भाव्यमानत्वेन युक्ताः, तेषमसत्त्ववाचित्वम्=अद्रव्यवाचित्वम्, तिङन्तैः शब्दैर्न विशिष्यते=न व्यावर्त्यते, अतस्ते तिङन्तवदेव तृतीयया न युज्यन्ते। प्रातिपदिकत्वात् प्रातिपदिकार्थमात्रे प्रथमा तु न विरुध्यत इति।

अयं भावः—यान्येतानि कृदन्तानि अव्ययानि तेषां भाव्यमानरूपोऽर्थो वाच्य इत्याख्याततुल्यास्ते तद्वदेव=आख्यातवदेव तदर्थस्य साध्यत्वेन शेषित्वसाधनत्वयोरयोगात् तृतीयया न युज्यन्ते। प्रातिपदिकत्वात् प्रातिपदिकार्थमात्रे प्रथमा तु अव्ययकृदर्थस्य साध्यत्वेन सह न विरुध्यत इति ॥ ४३७ ॥

कृत्यादिवाच्या तर्हि क्रिया स्वेन रूपेण सती क्रियान्तरसाधनं स्यादिति युज्यते तृतीययेत्यत आह—

**कृत्वसुज्विषया यापि शयितव्यादिषु क्रिया ।**
**उपमानोपमेयत्व तत्रात्यन्तमसम्भवि ॥ ४३८ ॥**

पञ्चकृत्वः शयितव्यमिति कृत्वोर्थप्रत्ययदर्शनाद् यद्यपि शयितव्यादयः साध्यस्वभावक्रियावचनाः तथाप्यत्र विषये उपमानोपमेयभावासम्भवान्नैते क्रियावाचिनस्तृतीयान्ताः प्रकृतित्वेनात्राभीष्टा इत्यर्थः ।

---

ननु तर्हि कृत्यक्तखलर्थप्रत्ययवाच्या क्रिया स्वेन रूपेण सती=क्रियात्वेन रूपेण वर्तमाना क्रियान्तरस्य साधनं स्यादिति युज्यते कृत्यप्रत्ययान्तं पदं तृतीयया, तथा चायं प्रयोग इष्यत एव 'शयितव्यवद् वर्तते स्थातव्यं देवदत्तेन' इति । एवञ्च क्रिया चेदिति प्रकृत्यर्थविशेषणं कथमयुक्तं भाष्यकृतोक्तमित्याशङ्क्याह—कृत्वसुज् विषया याऽपि इति ।

अस्यार्थः—'पञ्च कृत्वः शयितव्यम्' इति प्रयोगदर्शनात् यापि कृत्वसुज् विषया शयितव्यादिषु शयनरूपा साध्यत्वेनोपलक्षिता धातुवाच्या क्रिया तत्रोपमानोपमेयत्वम्=उपमानोपमेयभावः, अत्यन्तमसंभवि ।

तथाहि—'शयितव्यम्' इत्यत्रास्ति पदार्थद्वयम्—साधनत्वेनोपलक्षिता धातुवाच्या शयनक्रिया तद्रूपोऽर्थ एकः । अपरश्च तव्यपदार्थो भावो भावनारूपा सिद्धत्वेनाभिधीयमाना क्रिया । तथा च वत्यर्थ औपम्यरूपः संबन्धः तव्यप्रत्ययार्थयोर्भावयोरेव संभवति, न तु तद्विशेषणयोर्धातुवाच्ययोः क्रिययोः, प्रत्ययार्थस्य प्रकृत्यर्थैकदेशेन विशेष्यतयान्वयासंभवात्=अन्वयादर्शनाच्च ।

यत्तु 'पञ्चकृत्वः शयितव्यम्' इति रूपम्, तत्तु शब्दशक्तिस्वभावाद् धातुवाच्यायां शयनक्रियायामन्वयेनोपपद्यत इति । सुजर्थस्य धातुवाच्यायां क्रियायां साध्यस्वभावायामन्वयेन 'पञ्च कृत्वः शयितव्यम्' इति वत् 'द्विः पाकः' इति तु न भवति, लक्ष्यानुरोधात् सुजर्थस्य धातुवाच्यायां क्रियायामन्वयाभावात् ।

तथा चायं निष्कर्षः—शयितव्यादिषु या साध्यत्वेनोपलक्षिता क्रियाधातुवाच्या तस्या उपमानोपमेयत्वं प्रागुक्तरीत्याऽसंभवि । या तु प्रत्ययवाच्या भावरूपा सिद्धत्वेनाभिधीयमाना क्रिया—तद्वाचिनस्तृतीया समर्थपदस्य संभवाद् वतिरिष्यत एव । शयितव्यवत् स्थातव्यं देवदत्तेन देवदत्तस्य वा इति ।

अयं भावः—अत्र गृहे मया 'पञ्चकृत्वः शयितव्यम्' इति कृत्यप्रत्ययान्तयोगे कृत्वोऽर्थप्रत्ययदर्शनात् यद्यपि शयितव्यादयः साध्यस्वभावक्रियावचनास्तथाप्यत्र विषये क्रिया चेदित्यस्य प्रकृत्यर्थविशेषणत्वपक्षे कृत्यप्रत्ययवाच्यक्रिययोर्वत्यर्थोपमानोपमेयभावासंभवान्नैते=शयितव्यादयः कृत्यप्रत्ययान्ताः तृतीयान्ताः प्रातिपदिकत्वेन सिद्धक्रियावाचिनः अत्र='तेन तुल्यम्' ( पा० ३।१।११५ ) इति वति प्रत्ययविधायके सूत्रे क्रिया चेदित्यस्य प्रकृत्यर्थविशेषणत्वपक्षे वतिप्रत्ययप्रकृतित्वेनाभीष्टाः, साध्यस्वभावक्रियावाचित्वाभावात् ।

ननु च धातुनैव साध्या क्रियोपात्तेति शयितव्यादौ कान्या व्यतिरिक्ता क्रिया प्रत्ययार्थः स्यात् । न चैते प्रत्ययाः स्वार्थिकाः । "तयोरेव कृत्यक्तखलर्थाः" (पा० ३।४।७०) इति भावकर्मणोर्विधानात् ।

अत्र प्रतिपाद्यते—इह धातुः कृद्विषयां साधनमवच्छिन्दन्तीं क्रियामवस्थान्तरपरिदृष्टेन भाव्यत्वेनोपलक्षितामाह, न वर्तमानेन भाव्यत्वेनोपलक्षिताम् । ततश्च प्रत्ययोपात्तसव्यापारसाधनसम्बन्धादभिव्यज्यते भाव्यता वर्तमानक्रियायाः ।

तद्यथा—'पचति देवदत्त' इत्यत्र लकारवाच्यकर्तृसम्बन्धाद् धात्वर्थो भाव्यतां भजते । एवं पाचक इत्यादौ ।

इत्थं चास्यते देवदत्तेनेत्यत्रापि लकारवाच्यभावनासम्बन्धाद् धात्वर्थो भाव्यतामनुभवतीति व्यतिरिक्तो भावो लकारवाच्यः, स एव कृत्यादिष्वनुवर्तते । 'कृत्वा शयितव्यम्'इत्यादावपि भावं प्रत्ययविधिरिति बाह्योऽयं प्रत्ययवाच्यो भावः ॥ ४३८ ॥

---

ननु शयितव्यादौ धातुनैव साध्यस्वभावा क्रिया उपात्ता इति कान्या व्यतिरिक्ता क्रिया सिद्धस्वभावा प्रत्ययार्थः स्यात् । येन तृतीया समर्थस्य वतिप्रकृतित्वं प्रकृत्यर्थविशेषणत्वपक्षे न संभवेत् । किञ्च नैते कृत्यप्रत्ययाः—स्वार्थिकाः, येन तेषां साध्यस्वभावक्रियावाचित्वं संभवेत् । "तयोरेव कृत्यक्तखलर्थाः" ( पा० ३।४।७० ) इति सूत्रेण भावकर्मणोरेव तेषां विधानात् ।

अत्र प्रतिपाद्यते—इह=शयितव्यादौ धातुः कृद्विषयम्=कृद्वाच्यम् साधनं भावकर्मकर्तृरूपं विशेषणतयाऽवच्छिन्दन्तीम्=इतरेभ्यो व्यावर्तयन्तीं क्रियां 'पचति देवदत्तः' इत्यादाववस्थान्तरपरिदृष्टेन भाव्यत्वेनोपलक्षितामाह—न वर्तमानेन भाव्यत्वेनोपलक्षिताम्=भाव्यत्वेन विशिष्टाम् । भावोऽपि भावनारूपो धात्वर्थभावकत्वात् कर्तृकर्मादिवत् साधनमेव । ततश्च प्रत्ययोपात्तसव्यापारसाधनसंबन्धादभिव्यज्यते वर्तमानक्रियाया भाव्यता ।

तत् यथा—'पचति देवदत्तः' इत्यत्र लकारवाच्यकर्तृसंबन्धाद् धात्वर्थो भाव्यतां भजते, एवम् 'पाचकः' इत्यादिषु कृत्स्वपि कर्तृवाचिषु बोध्यम् ।

इत्थञ्च 'आस्यते देवदत्तेन' इत्यत्रापि लकारवाच्यभावरूपभावनासंबन्धाद् धात्वर्थो भाव्यतामनुभवति इति धात्वर्थाद् व्यतिरिक्तो भावो लकारवाच्यः, स एव कृत्यादिष्वनुवर्तते । 'कृत्वा शयितव्यम्' इत्यादावपि धात्वर्थादतिरिक्ते भावनारूपे भावे एव प्रत्ययविधिरिति बाह्योऽयम्=धात्वर्थाद् भिन्नोऽयम्, प्रत्ययवाच्यो भावनारूपो भाव इति । तथा च 'शयितव्यम्' इत्यादौ धातोः क्रियावाचित्वम् ।

न च तस्य तृतीयासमर्थत्वम्, क्रिययोः उपमानोपमेयभावासंभवोऽपि । यस्य तु कृत्यप्रत्ययान्तस्य तृतीयासमर्थत्वम्=न तस्य क्रियावाचित्वमिति लक्ष्यासंभवात् क्रिया चेदित्यस्य प्रकृत्यर्थविशेषणत्वपक्षोऽयुक्त इति ॥ ४३८ ॥

कथमत्रात्यन्तमुपमानोपमेयभावासम्भव इत्याह—

**न केवलौ द्रव्यगुणौ तद्वान् वाप्युपमीयते ।**
**शयितव्यादिभिस्तेषु नोपमार्थोऽस्ति कश्चन ॥ ४३९ ॥**

शयितव्यादिवाच्यया क्रियया द्रव्यं वोपमीयेत, गुणो वा शुद्धः, तद्वान् द्रव्यवान् गुणी वेति पक्षभेदाः । तत्र स्वेनात्मना सिद्धत्वान्न द्रव्यमुपमेयम्, नहि शयितव्येन तुल्यो देवदत्त इति क्रियाद्रव्ययोः कश्चिदन्वयी धर्मः सादृश्यनिमित्तमस्ति । नापि शयितव्येन तुल्यं देवदत्तस्य स्वमिति द्रव्यवतः कश्चिदुपमार्थः ।

नापि शयितव्येन तुल्यः स्थूलः, शयितव्येन तुल्यं स्थौल्यमिति गुणगुणिनोरौपम्यं विद्यते, क्रियया सादृश्यहेतुधर्माभावात्, प्रसिद्धगुणक्रियाहेतुको ह्युपमानोपमेयभावश्चन्द्रमुखादौ दृष्टः, न चेह तथा प्रसिद्धिः ॥ ४३९ ॥

तत्रैतत् स्यात्—सन्नपि क्रियाद्रव्यगुणादेः समानो धर्मोऽत्र न प्रयुज्यत इति सदृशधर्मान्तराभिधायिनः शब्दस्याप्रयोगादुपमानोपमेयभावानवगम इति ।

---

कथमत्र=शयितव्यादिषु अत्यन्तमुपमानोपमेयभावासंभव इत्यशङ्क्याह—न केवलौ द्रव्यगुणाविति ।

अस्यार्थः—केवलौ द्रव्यगुणौ तद्वान्=द्रव्यवान् गुणवान् वाऽपि शयितव्यादिभिर्भावकृत्यप्रत्ययान्तैर्नोपमीयते, यतस्तेषु केवले द्रव्ये गुणे वा, द्रव्यवति, गुणवति वा उपमारूपः कश्चनार्थो नास्ति, अथवा कश्चन उपमार्थः=उपमाप्रयोजनं नास्ति इत्यर्थः । तथा च—"शयितव्येन तुल्यो देवदत्तः, शयितव्येन तुल्यो देवदत्तवान् देशः, शयितव्येन तुल्यं स्थौल्यम्, शयितव्येन तुल्यः स्थूलः" इत्यादिकेषु चतुर्विधेष्वपि उपमानोपमेयभावासंभवाद् वतिप्रत्ययो न भवतीति ।

अयं भावः—शयितव्यादिवाच्यया क्रियया द्रव्यं वा उपमीयते, गुणो वा शुद्धः=द्रव्ये विशेषणतामनापन्नः तद्वान्=द्रव्यवान्, गुणी वा, इति चत्वारोऽत्र पक्षभेदाः संभविनः । तत्र स्वेनात्मना सिद्धत्वान्न द्रव्यमुपमेयम्, स्वेनात्मनाऽनिर्ज्ञातं हि अन्वयिना धर्मेण निर्ज्ञायमानमुपमेयं भवति, द्रव्यं तु नैवम्, 'न हि शयितव्येन तुल्यो देवदत्तः' इति क्रियाद्रव्ययोः कश्चिदन्वयी धर्मः सादृश्यनिमित्तमस्ति ।

नापि 'शयितव्येन तुल्यं देवदत्तस्य स्वम्' इति द्रव्यवतः=स्वस्वामिभावसंबन्धेन देवदत्तवतः स्वस्य=धनस्य कश्चिदुपमाऽर्थः=किञ्चिदुपमाप्रयोजनम् । नापि 'शयितव्येन तुल्यं स्थौल्यमस्य, शयितव्येन तुल्यः स्थूलः' इति गुणगुणिनोरौपम्यं विद्यते, उपमानीभूतया क्रियया सह उपमेयस्य द्रव्यादेः सादृश्यहेतुधर्माभावात्, प्रसिद्धगुणक्रियारूपसाधारणधर्महेतुको हि उपमानोपमेयभावश्चन्द्रमुखादौ दृष्टः । न चेह क्रियाद्रव्ययोः क्रियागुणयोः क्रियातद्वतोर्वा तथा प्रसिद्धिरिति ॥ ४३९ ॥

तत्रैतत् स्यात्=इदं संभाव्यते—सन्नपि क्रियया द्रव्यादेः समानो धर्मोऽत्र='शयितव्येन तुल्यो देवदत्तः' इत्यादौ न प्रयुज्यते इति सदृशधर्मान्तराभिधायिनः=सदृशयोः सादृश्यनिमित्तभूतं यद्धर्मान्तरं साधारणधर्मरूपं तदभिधायिनः शब्दस्याप्रयोगादुपमानोपमेयभावानवगमः, न त्वसत्तया इति ।

नैतद् युक्तमित्याह—

**उपमानोपमेयत्वे द्रव्ये चानुक्तधर्मिणि ।**
**निमित्तत्वेन गम्यन्ते रूढयोगाः क्रियागुणाः ॥ ४४० ॥**

अनभिहितेऽपि सदृशे धर्मे प्रसिद्धिवशादुपमानोपमेयभावनिमित्तत्वेन गुणक्रिया निरूढसम्बन्धाः पदार्थैकदेशभावापन्ना इवाविनाभाविनः प्रतीयन्त एवेति न ते नियमेन श्रुतिमपेक्षन्ते ।

तथाहि—चन्द्रवन्मुखमस्या इत्युक्ते प्रियदर्शनत्वं कान्तिमत्त्वं चाश्रुतमपि प्रतीयत इत्युक्तमेव । एवमिहापि शयितव्येन तुल्य इत्युक्ते प्रतीयेत कश्चिद्धर्मो यद्युपमा युज्येत ॥ ४४० ॥

एवं तर्हि क्रियायां प्रत्यासन्नः क्रियावानुपमीयत इत्यत आह—

**होतव्यसदृशो होतेत्यत्राप्यर्थो न विद्यते ।**
**विरोधात् क्रियया तस्मात् क्रियावान् नोपमीयते ॥ ४४१ ॥**

शयितव्येन तुल्यः शायकः, होतव्येन तुल्यो होतेति कृत्यान्तेन क्रियावचनेन स्वाश्रयः क्रियावानुपमेयो न युज्यते । क्रिया हि साध्यस्वभावा सिद्धस्वभावेन सह

---

नैतद् युक्तमित्याह—उपमानोपमेयत्वे इति ।

अस्यार्थः—अनुक्तधर्मिणि च द्रव्ये—अनुक्तसाधारणधर्मवत्यपि द्रव्ये रूढयोगाः=प्रसिद्धसंबन्धाः, साधारणधर्मरूपाः क्रिया गुणा वा उपमानोपमेयत्वे=उपमानोपमेयभावरूपे संबन्धे, निमित्तत्वेन गम्यन्ते 'चन्द्रवन्मुखमस्याः' इत्यादौ । 'शयितव्येन तुल्यो देवदत्तः' इत्यादौ तु तत्र निमित्तत्वेन न गम्यन्त इति नास्ति तत्रोपमेति ।

अयं भावः—अनभिहितेऽपि सदृशे धर्मे=क्रियाद्रव्ययोः सादृश्यनिमित्तभूते धर्मे, निरूढसंबन्धाः गुणक्रियाः पदार्थैकदेशभावापन्ना इवाविनाभाविनः प्रसिद्धिवशादुपमानोपमेयभावनिमित्तत्वेन प्रतीयन्त एवेति न ते नियमेन श्रुतिम्=शब्दम् अपेक्षन्ते ।

तथाहि—'चन्द्रवन्मुखमस्याः' इत्युक्ते प्रियदर्शनत्वं कान्तिमत्वं चाश्रुतमपि प्रतीयते इत्युक्तमेव । एवमिहापि 'शयितव्येन तुल्यो देवदत्तः' इत्युक्ते प्रतीयते कश्चिद् धर्मो यदि प्रसिद्धः स्यात्, चात्रोपमा युज्येत=युक्ता समुचिता स्यादिति ॥ ४४० ॥

एवं तर्हि क्रियायां प्रत्यासन्नः=संबद्धः क्रियावान्=कर्ता उपमीयते=शयितव्येन तुल्यः शायक इति, होतव्येन सदृशो होता इति, इत्याशङ्क्याह—होतव्यसदृशो होता इति ।

अस्यार्थः—होतव्यसदृशो होता इत्यत्रापि साध्यस्वभावया क्रियया सह सिद्धस्वभावस्य कर्तुः स्वभावविरोधात् उपमार्थं उपमाप्रयोजनं न विद्यते । सदृशयोरेवोपमानोपमेयभावस्य लोके दर्शनात् । तस्मात् क्रियावान् कर्तृरूपोऽर्थः क्रियया नोपमीयत इति ।

अयं भावः—"शयितव्येन तुल्यः शायकः, होतव्येन तुल्यो होता" इत्यत्र कृत्यप्रत्ययान्तेन क्रियावचनेन स्वाश्रयः=क्रियाश्रयः क्रियावान् कर्तृरूप उपमेयो न युज्यते । क्रिया हि

विरुद्धत्वान्न सम्बन्धक्षमा। साध्यत्वेन चाप्राप्तस्वरूपा क्रिया परं कथं प्रज्ञापयेत्। समानगुणयोगाच्चौपम्यम्, अत्यन्तभेदश्च क्रियाद्रव्ययोरित्यत्राप्यर्थ उपमायां प्रयोजनं नास्ति ॥ ४४१ ॥

एवं तर्हि समानत्वात् क्रिययोरेव साक्षादुपमानोपमेयभावो भवत्वित्याशङ्क्याह—

**क्रिया समानजातीया तद्भावान्नोपमीयते।**
**जातिभेदेऽपि पाकेन (वा केन) भिन्नाः पाकादयः क्रियाः॥ ४४२ ॥**

तुल्यजातीया क्रियान्तरस्योपमानं स्याद्, भिन्नजातीया वा? पूर्वत्र पक्षे तद्भावादैकात्म्यान्नोपमेयाः क्रियाः।

तथाहि—शयितव्येन तुल्यं शयितव्यम्, अध्येतव्येन तुल्यमध्येतव्यमित्यत्यन्ताभेदे गौरिव गौरितिवन्नोपमार्थः कश्चित्।

तथा च भाष्यकारः—'यदि यदेवोपमानं तदेवोपमेयम्, क इहोपमार्थो गौरिव

---

साध्यस्वभावा सिद्धस्वभावेन द्रव्यरूपेण कर्त्रा सह नोपमानोपमेयभावरूपसंबन्धक्षमा, विरुद्धस्वभावत्वात्। साध्यत्वेन चाप्राप्तस्वरूपा=अलब्धरूपा क्रिया कथं परमुपमानीभूय प्रज्ञापयेत्। यतः समानगुणयोगादौपम्यम्=उपमानोपमेयभावो भवति, क्रियाद्रव्ययोश्चात्यन्तभेद इति हेतोः अत्रापि=होतव्येन सदृशो होता इत्यत्रापि उपमायामर्थः प्रयोजनं नास्तीति ॥ ४४१ ॥

एवं तर्हि क्रियात्वेन सहासामान्येन भिन्नजातीययोरपि क्रिययोः समानत्वात्, पाकत्वादिना चावान्तरसामान्येन समानजातीययोरपि समानत्वात् क्रिययोरेव साक्षादुपमानोपमेयभावो भवतु इत्याशङ्क्याह—क्रियासमानजातीया इति।

अस्यार्थः—'शयितव्येन तुल्यं शयितव्यम्' इत्यत्र समानजातीया क्रिया एकजात्यावेशेन तद्भावात्=तत्त्वात्—ऐक्यात् नोपमीयते। न हि 'गौरिव गौः' इति एकस्यैवोपमानोपमेयभावो भवति। वा=अथवा, पाकत्वादिनाऽवान्तरजातिभेदेऽपि क्रिया केन प्रकारेणोपमीयते। यतोऽवान्तरजातिभेदवत्यः पाकादयः क्रिया, अत्यन्तं भिन्नाः। अत्यन्तभेदे चोपमानोपमेयभावो न भवति, न हि भवति गौरिवाश्व इति।

एवञ्च 'अध्येतव्येन तुल्यं वक्तव्यम्' इति भिन्नयोरपि क्रिययोरुपमानोपमेयभावो न भवतीति।

अयं भावः—तुल्यजातीया क्रिया तादृशस्य क्रियान्तरस्योपमानं स्यात्, भिन्नजातीया वा तादृशस्य क्रियान्तरस्य। पूर्वपक्षे तद्भावादैकात्म्यात्=एकजात्यावेशेनैक्याद् नोपमेयाः समानजातीयाः क्रियाः।

तथाहि—"शयितव्येन तुल्यं शयितव्यम्, अध्येतव्येन तुल्यमध्येतव्यम्" इति अत्यन्ताभेदे गौरिव गौरितिवन्नोपमार्थः कश्चित्।

तथा च भाष्यकारः—"यदि यदेवोपमानं तदेवोपमेयम्, क इहोपमार्थो गौरिव गौरिति"।

गौः' इति। भिन्ना अपि ह्यर्था एकजात्यावेशेनावधार्यमाणा नोपमाम्, भेदाश्रयत्वात् तस्येत्याशयः।

द्वितीये तु पक्षेऽत्यन्तभेदान्नोपमार्थः,, नहि भवति वक्तव्येन तुल्यं पठितव्यमिति। जातिभेदादेव ज्ञाते हि भेदे भिन्ना इति पुनर्वचनमुपमानहेतोः समानधर्मस्यासम्भवसूचनार्थम्। भिन्नजातीये हि समानधर्माभावान्नोपमार्थः।

तथा च भाष्यम्—'अथान्यदुपमानमन्यदुपमेयम्। क इहोपमार्थो गौरिवाश्वः' इति। एवं न केनचित् प्रकारेणोपमानोपमेयत्वमत्रेत्यत्यन्तासम्भवीत्युक्तम्। गुणलेशेनापि यदपि साम्यम्, तदपीह न सम्भवतीत्यत्यन्तग्रहणेनाचष्टे।

नापि भिन्नजातीयत्वेऽपि क्रियया द्रव्यगुणादीनां सत्त्वज्ञेयत्वादिभिर्धर्मैः सादृश्यमाश्रित्योपमा कल्पत इति वाच्यं, सत्त्वादिधर्माणां सर्वार्थसाधारण्यान्न निमित्तत्वमुपमायामत्र प्रत्यये सम्भवतीति पूर्वपक्षभाष्यं व्याख्यातम्॥ ४४२॥

अत्रेदानीं शयितव्यादिगतानां सजातीयानां क्रियाणामुपमानोपमेयभावनिमित्तभूतं भेदमुपपादयितुमाह—

आधारभेदाद् भिन्नायामुपमानस्य सम्भवः।
अध्येतव्येन विप्राणां तुल्यमध्ययनं विशाम्॥ ४४३॥

---

भिन्ना अपि ह्यर्था एकजात्यावेशेनैक्येनावधार्यमाणा नोपमानम्, तस्य भेदाश्रयत्वात् इत्याशयो भाष्यकृतः।

द्वितीये तु पक्षेऽत्यन्तभेदान्नोपमार्थः, न हि भवति 'वक्तव्येन तुल्यं पठितव्यम्' इति। जातिभेदादेव ज्ञाने हि भेदे भिन्ना इति पुनर्वचनमुपमान हेतोः समानधर्मस्यासंभवसूचनार्थम्। भिन्नजातीये हि समानधर्माभावान्नोपमार्थः।

तथा च भाष्यम्—"अथान्यदुपमानमन्यदुपमेयम्। क इहोपमार्थो गौरिवाश्वः" इति। एवं न केनचित् प्रकारेणोपमानोपमेयत्वमत्र=क्रिययोस्तुल्यजातीयत्वे भिन्नजातीयत्वे वा इत्यन्तमसंभवि इत्युक्तम्।

यद्यपि गुणलेशेनापि=साधारणधर्मलेशेनापि साम्यम्, तदपीह न संभवति इति अत्यन्तग्रहणेनाचष्टे। न च भिन्नाजातीयत्वेऽपि क्रियया सह द्रव्यगुणादीनां केवलान्वयिभिः सत्त्वज्ञेयत्वादिभिर्धर्मैः सादृश्यमाश्रित्य उपमा कल्पत इति वाच्यम्, सत्त्वादिधर्माणां केवलान्वयित्वेन सर्वार्थसाधारण्यात्=सदृशासदृशार्थसाधारण्यात् नोपमायां निमित्तत्वमत्र=कृत्यप्रत्ययान्ते वतिप्रत्यये कर्तव्ये संभवतीत्येवं पूर्वपक्षभाष्यं क्रिया चेदित्यस्य प्रकृत्यर्थविशेषणपरं व्याख्यातमिति॥ ४४२॥

अथेदानीं शयितव्यादिभावप्रत्ययान्तगतानां सजातीयानां क्रियाणामेकजात्यावेशेनैक्येऽपि उपमानोपमेयभावनिमित्तभूतं भेदमुपपादयितुमाह—आधारभेदाद् भिन्नायामिति।

अस्यार्थः—सजातीयानां क्रियाणामेकजात्यावेशेनैक्येऽपि आधारभेदाद् भिन्नायां क्रिया-

तुल्यजातीयायाः क्रियाया आश्रयभूतद्रव्यभेदाद् विशेषजात्यनुगमाच्च साम्ये भेदाभेदप्रयुक्तस्योपमानत्वस्यास्ति सम्भवः।

तथाहि—ब्राह्मणानामध्येतव्येन सदृशमिदं क्षत्रियादीनामध्ययनम्, राज्ञः शयितव्येन तुल्यं देवदत्तस्य शयितव्यमिति प्रयोगो दृष्टः ॥ ४४३ ॥

ननु चात्र क्रियावचनः शब्दो भेदप्रतिपत्तये अधिकरणमपेक्षमाणः सापेक्षत्वादसमर्थो भवन्नानुभवति तद्धितवृत्तिमित्याशङ्क्याह—

**अर्थात् प्रकरणाद् वापि यत्रोपेक्ष्यं प्रतीयते ।**
**सामर्थ्यादनपेक्षस्य तस्य वृत्तिः प्रसज्यते ॥ ४४४ ॥**

यस्मिन् विषये सामर्थ्यात् कुतश्चित् प्रस्तावाद् वा यदापेक्षणीय आधारो निर्ज्ञातो भवति, तदाध्येतव्यादेरेव शब्दाश्रयविशेषावच्छेदस्यावगमात् तद्वाचकपदप्रयोगमन्तरेणानपेक्षोऽसावनुभवेत् सामर्थ्यनिबन्धनां वृत्तिम्। ब्राह्मणाध्येतव्येन तुल्यं क्षत्रियाध्येतव्यम्, राज्ञः शयितव्येन तुल्यं देवदत्तशयितव्यमित्यत्र च समासे कृते भेदाभावादेकार्थीभावे सति सापेक्षत्वाभावः।

---

यामुपमानस्य—उपमायाः—उपमानोपमेयभावस्य भेदाश्रयस्य संभवोऽस्ति। तत्रोदाहरणमाह—विप्राणामध्येतव्येन—अध्ययनेन तुल्यम्=नियमादिधर्मकृतसादृश्यवद् विशां वैश्यानामध्ययनमिति।

अयं भावः—तुल्यजातीयायाः क्रियाया एकजात्यावेशेन साम्येऽपि=ऐक्येऽपि आश्रयभूतद्रव्यभेदाद् विशेषजात्यनुगमाच्च=अवान्तरजातिविशेषसंबन्धाच्च भेदाभेदप्रयुक्तस्योपमानत्वस्य संभवोऽस्ति।

तथाहि—ब्राह्मणानामध्येतव्येन=अध्ययनेन सदृशमिदं क्षत्रियादीनामध्ययनम्, राज्ञः शयितव्येन=शयनेन तुल्यं देवदत्तस्य शयितव्यम्=शयनम् इति प्रयोगो दृष्ट इति ॥ ४४३ ॥

ननु चात्र=भावकृत्यप्रत्ययान्ते क्रियावचनः शब्दः स्वार्थोपमानत्वप्रयोजकभेदप्रतिपत्तये आधारमपेक्षमाणः सापेक्षत्वादसमर्थो भवन् वतिप्रत्ययरूपां तद्धितवृत्तिं नानुभवति इत्याशङ्क्याह—अर्थात् प्रकरणाद् वापि इति।

अस्यार्थः—यत्रार्थात्=सामर्थ्यात्, कुतश्चित् प्रकरणाद् वाऽपि अपेक्ष्यम्=क्रियावाचिना शब्देन अपेक्षणीयमधिकरणं प्रतीयते, तत्र अनपेक्षस्य अधिकरणप्रतिपत्तेरन्यथासिद्धत्वात् तदपेक्षारहितस्य तस्य क्रियावाचिनः शब्दस्य, संबन्धिनी वति तद्धितरूपा वृत्तिः प्रसज्यत इति क्रिया चेदित्यस्य प्रकृत्यर्थविशेषणत्वपरः पूर्वपक्षभाष्याशय इति।

अयं भावः—यस्मिन् विषये सामर्थ्यात्=अर्थापत्तिप्रमाणरूपात्, कुतश्चित् प्रस्तावाद्वा यदा क्रियाया उपमानत्वप्रयोजकभेदप्रतिपत्तियेऽपेक्षणीय आधारो निर्ज्ञातो भवति, तदाऽध्येतव्यादेरेव शब्दादाधारवाचकपदप्रयोगमन्तरेण आश्रयविशेषावच्छेदस्यावगमात्=आधारभेदप्रयुक्तक्रियाभेदावगमात्। अनपेक्षोऽसौ=क्रियावाची शब्दः सामर्थ्यनिबन्धना तद्धितवृत्तिमनुभवेत्। 'ब्राह्मणाध्ये-

तथा स्थातव्येन तुल्यं गमनम्, मन्दत्वात्, नृत्तेन तुल्यं गमनं बहुविकारत्वादिति भिन्नजातीया नामपि क्रियाणामस्त्येवोपमानोपमेयभावः। कृदभिहितस्य च भावस्य न केवलं द्रव्यवद्भावः, क्रियावद्भावोऽपि दृश्यते।

तथाहि—भोक्तुं पाकः, बोद्धुं पाठः, कारकस्य गतिरिति क्रियायामुपपदभूतायां विधीयमानौ तुमुन्ण्वुलौ दृश्येते घञाद्यन्तेष्वप्युपपदेष्विति तेषां क्रियाधर्मवत्त्वनिश्चयः ॥ ४४४ ॥

ननु चात्र धातुभागवाच्यक्रियाश्रयेण तुमुन्ण्वुलौ भविष्यतः। नैतदस्ति, प्रत्ययवाच्यायाः क्रियागताया निर्वृत्तेरेव सुतरां भोजनाद्यर्थत्वात्। यद्येवं क्रियाशब्देनोपपदस्य निर्देशे कथं सिद्धरूपता, तद्धर्मोऽप्युपपदत्वेन गृह्यते। धर्मधर्मिणोरभेदाश्रयेण क्रियाशब्देन धर्मस्यापि प्रत्यायनमविरुद्धमित्यदोषः।

एवं तर्हि कृत्वोर्थप्रत्यया अपि कथं न भवन्ति घञाद्यन्तप्रयोगात्? उच्यते, अभ्यावृत्तिग्रहणात् तत्र क्रिया कर्तव्यतात्मकेन स्वेनैव रूपेणोपयुज्यते, न सिद्धतया, निर्वृत्तस्यानिर्वर्त्यतया पुनः प्रवृत्त्ययोगात्। ततश्चाख्यातप्रयोगमन्तरेण तत्र क्रियायाः

---

तव्येन तुल्यं क्षत्रियाध्येतव्यम्, राज्ञः शयितव्येन तुल्यं देवदत्तशयितव्यम्' इत्यत्र च समासे कृते एकार्थीभावे सति पदभेदाभावादर्थभेदाभावाच्च पदार्थयोः पदार्थसापेक्षत्वाभावः ॥

तथा=सजातीयक्रियाणामिव 'स्थातव्येन तुल्यं गमनं मन्दत्वात्, नृत्तेन तुल्यं गमनं बहुविकारित्वात्' इति भिन्नजातीयानामपि क्रियाणामस्त्येवोपमानोपमेयभावः। 'गौरिवाश्वः' इत्यादौ तु नास्ति सः, अत्यन्तवैषम्यात्। कृदभिहितस्य च भावस्य न केवलं द्रव्यवद् भावः, किन्तु क्वचित् क्रियावद्भावोऽपि दृश्यते।

तथाहि—'भोक्तुं पाकः, बोद्धुं पाठः' कारकस्य गतिः' इति "तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्" (पा० ३।३।१०) इति सूत्रेण क्रियायामुपपदभूतायां विधीयमानौ तुमुन्ण्वुलौ दृश्येते घञाद्यन्तेष्वप्युपपदेषु इति तेषाम्=घञाद्यन्तार्थानाम् क्रियाधर्मवत्त्वनिश्चय इति। 'कारकस्य गतिः' इत्यत्र ण्वुल्। कर्तुं गतिरित्यर्थनिष्कर्षः। कर्तुं गच्छतो गतिरिति शब्दार्थ इति ॥ ४४४ ॥

ननु चात्र='भोक्तुं पाकः' 'कारकस्य गतिः' इत्यादौ धातुभागवाच्यसाध्यस्वभावक्रियाश्रयेण तुमुन्ण्वुलौ भविष्यतः। नैतदस्ति। प्रत्ययवाच्यायाः क्रियागताया निर्वृत्तेरेव=सिद्धेरेव सुतरां भोजनाद्यर्थत्वात्। यद्येवं क्रियाशब्देनोपपदस्य निर्देशे कथमुपपदस्य सिद्धरूपता इति चेत्, सत्यम्, तद्धर्मोऽपि=सिद्धत्वरूपः क्रियाधर्मोऽपि उपपदत्वेन गृह्यते। धर्मधर्मिणोरभेदाश्रयेण क्रियाशब्देन सिद्धत्वरूपस्य क्रियाधर्मस्यापि प्रत्यायनमविरुद्धमित्यदोषः।

एवं तर्हि घञाद्यन्तप्रयोगात्=घञाद्यन्तप्रयोगं हेतूकृत्य संख्यावाचिभ्यः कृत्वोऽर्थप्रत्यया अपि कथं न भवन्ति 'द्विः पाकः' इत्यादि।

उच्यते—अभ्यावृत्तिग्रहणात्=कृत्वोऽर्थप्रत्ययोत्पत्तौ क्रियाकर्तव्यतात्मकेन स्वेनैव रूपेणोपयुज्यते, न सिद्धतया, निर्वृत्तस्यानिर्वर्त्यतया पुनः प्रवृत्त्ययोगात्। ततश्चाख्यातप्रयोग-

कर्तव्यतानवगमादभ्यावृत्त्यभावात् प्रत्ययाभावः। आख्यातप्रयोगे तु वाक्यपरिसमाप्तिः, स्तत्राख्यातस्य साध्यस्वभावक्रियाभिधायित्वादिति तदाश्रयः कृत्वोर्थप्रत्ययो भवति, पञ्चकृत्वः पाको वर्तत इति।

ननु च धर्मधर्मिणोरभेदाश्रयेण भोक्तुं पाक इति क्रियोपपदनिमित्तः प्रत्ययो भवतु, निर्वृत्तेर्भोजनार्थत्वोपपत्तेः।

तथा च समन्वयः पदानाम्। ओदनस्य पाक इत्यादौ तु कथं कर्मणा समन्वयः, प्रत्यार्थत्वेन प्रधानभूतस्य सिद्धताख्यस्य साधनसंबन्धानुपपत्तेः। साध्यस्यैव हि कारकैर्योगः। सत्यम्, उपसर्जनभूतधात्वर्थद्वारकस्तु कर्मयोगः।

यद्येवमभ्यावृत्त्याप्युपसर्जनभूतसाध्यस्वभावधात्वर्थद्वारेणास्तु योगः। न भवति, विरोधात्।

तथाहि प्रधानस्यार्थान्तरैः संबन्धो गुणधर्मेण स्वभावविरोधिना न भवति। अभ्यावृत्तिर्हि सिद्धताविरोधिनी, निर्वृत्तस्य पुनः प्रवृत्त्ययोगात्। साधनसंबन्धस्तु गुणद्वारको न विरुध्यते।

तदेवं घञाद्यन्तविषयेऽपि क्रियाश्रयविधेस्तुमुनादेर्दर्शनात् तद्वाच्यापि क्रिया तृतीयान्ता संभवत्यत्रोपमानभूता प्रत्ययार्थ इत्याह—

---

मन्तरेण तत्र=घञाद्यन्ते क्रियायाः साध्यतानवगमात्, अभ्यावृत्त्यभावात् कृत्वोऽर्थप्रत्यया-भावः। अख्यातप्रयोगे तु वाक्यपरिसमाप्तिः=निराकाङ्क्षवाक्यार्थप्रतिपत्तिः, तत्राख्यातस्य साध्यस्वभावक्रियाभिधायित्वादिति तदाश्रयः=साध्यस्वभावक्रियानिमित्तकः कृत्वोऽर्थप्रत्ययो भवति, 'पञ्चकृत्वः पाको वर्तते' इति।

ननु च धर्मधर्मिणोरभेदाश्रयेण 'भोक्तुं पाकः' इति क्रियोपपदनिमित्तकः प्रत्ययो भवतु, निर्वृत्तेः=पाकक्रियासिद्धेः भोजनार्थत्वोपपत्तेः।

तथा चात्र समन्वयः पदानामुपपद्यते। 'ओदनस्य पाकः' इत्यादौ तु कथं कर्मणा सह समन्वयो घञन्तार्थस्य। प्रत्ययार्थत्वेन प्रधानभूतस्य सिद्धत्वाख्यस्य घञर्थस्य साधनसंबन्धानुप-पत्तेः, साध्यस्यैव हि कारकैर्योगादिति चेत्, सत्यम्। उपसर्जनभूतसाध्यस्वभावधात्वर्थक्रिया-द्वारकस्य कर्मयोगस्यात्र संभवेनाभ्युपगमात्।

यद्येवमभ्यावृत्यापि सह घञर्थस्य सिद्धस्वरूपस्य पाकस्योपसर्जनभूतसाध्यस्वभावधात्वर्थ-क्रियाद्वारेणास्तु योगः न भवति, विरोधात्।

तथाहि—प्रधानस्यार्थान्तरैः सह संबन्धः स्वभावविरोधिना गुणधर्मेण न भवति इति लोकन्यायसिद्धम्। क्रियाया अभ्यावृत्तिर्हि साध्यस्वभावा सिद्धताविरोधिनी, निर्वृत्तस्य=सिद्धस्य पुनः प्रवृत्तिरूपाभ्यावृत्त्ययोगात्। तथा चात्र प्रत्ययार्थत्वेन प्रधानस्य सिद्धस्य पाकस्य घञर्थस्य सिद्धत्वरूपस्वस्वभावविरोधिना गुणीभूतधात्वर्थक्रियाधर्मेण साध्यत्वेन रूपेणार्थान्तरे-णाभ्यावृत्त्या सह गुणीभूतधात्वर्थक्रियाद्वारकः संबन्धो न भवति, सिद्धत्वसाध्यत्वयोर्विरोधादित्या-यातम्। 'ओदनस्य पाकः' इत्यादौ घञर्थे साधनसंबन्धस्तु गुणीभूतधात्वर्थक्रियाद्वारको न विरुध्यते। साधनस्य गुणत्वेन प्रागुक्तलोकन्यायानतिक्रमात्।

**तैलपाकेन तुल्ये च घृतपाके विवक्षिते।**
**क्रियावदपि कार्याणां दर्शनात् प्रत्ययो भवेत् ॥ ४४५ ॥**

न केवलं कृदभिहितस्य भावस्य द्रव्यवत् कार्याणि लिङ्गसंख्यायोगलक्षणानि दृश्यन्ते; यावत् तुमुन्नादीनीति प्रदर्शितम्।

एवञ्च तैलपाकेन तुल्यो घृतपाक इति तृतीयासमर्थात् क्रियावाचिनो वतिर्भवेत्। सापेक्षत्वं चात्र नास्ति, एकपदोपात्तत्वादधारस्य ॥ ४४५॥

घञाद्यन्त उपपदे क्रियावत् कार्ययोस्तुमुन्ण्वुलोर्भावे वार्त्तिककारमतं संवादकमाह—

**अतिङ्ग्रहणमेवं तु समासस्य निवर्तकम्।**
**गमनं कारकस्येति ण्वुल्यन्यस्मिन्न संभवेत् ॥ ४४६ ॥**

"उपपदमतिङ्" (पा०।२।१९) इत्यत्र सुप्सुपेत्यधिकारात् तिङन्तस्योपपदस्य कारको व्रजतीत्यादौ समासप्राप्तिरेव नास्तीति किमतिङिति प्रतिषेधेनेति चोदिते सति वाक्यकारः पपाठ—'उपपदमतिङिति तदर्थप्रतिषेधः' इति।

---

तदेवम् 'भोक्तुं पाकः' 'कारकस्य गतिः' इत्यात्यादौ घञाद्यन्तविषयेऽपि क्रियाश्रयविधेस्तुमुन्नादेर्दर्शनात् तद्वाच्यापि=घञाद्यन्तवाच्यापि क्रिया तृतीयान्ता=तृतीयासमर्थपदोपस्थाप्या उपमानभूता प्रत्ययार्थः संभवति इत्याह—तैलपाकेन तुल्ये चेति।

अस्यार्थः—घञाद्यन्तविषये 'भोक्तुं पाकः' 'कारकस्य गतिः' इत्यादौ क्रियाश्रयकार्याणां तुमुन्ण्वुलादीनां दर्शनात्। तैलपाकेन तुल्ये घृतपाके विवक्षिते च=अपि, क्रियावदपि=क्रियायामिव, वतिप्रत्ययो भवेदिति।

अयं भावः—न केवलं कृदभिहितस्य भावस्य द्रव्यवत् कार्याणि लिङ्गसंख्यायोगलक्षणानि दृश्यन्ते। यावत् तुमुन्नादीन्यपि इति प्रदर्शितं प्राक्।

एवञ्च 'तैलपाकेन तुल्यो घृतपाकः' इत्यत्र क्रियावाचितस्तृतीया समर्थाद् वति प्रत्ययो भवेत्। आधारसापेक्षत्वेनात्र सामर्थ्यं तु क्रियावाचिनस्तृतीया समर्थस्य पदस्य नास्ति। आधारस्य तैलस्य समानपदोपात्तत्वेनाकङ्क्षाविरहादिति ॥ ४४५॥

घञन्ते उपपदे क्रियावत्=क्रियायामुपपदार्थभूतायामिव कार्ययोस्तुमुन्ण्वुलोर्भावे=विधाने वार्तिककारमतं संवादकमाह—अतिङ्ग्रहणमेवं तु इति।

अस्यार्थः—एवं तु घञाद्यन्ते उपपदे क्रियावत् कार्ययोस्तुमुन्ण्वुलोर्भावे तु, 'कारकस्य गमनम्' इत्यत्र "तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्" (पा० ३।३।१०) इति सूत्रेण विहिते ण्वुलि अतिङ्ग्रहणं समासस्य निवर्तकं भवेत्। अन्यथा "उपपदमतिङ्" (पा० २।२।१९) इत्यत्र "सुप्सुपा" (पा० २।१।४) इत्यधिकारात् तिङन्तस्योपपदस्यं कारको व्रजति' इत्यादौ समासप्राप्तिरेव नास्ति इति किमतिङिति प्रतिषेधेन। कृतन्तु अतिङ्ग्रहणं तिङन्तार्थकसुबन्तरूपस्योपपदस्य समासप्रतिषेधपरम्, 'कारकस्य गतिः' इत्यादौ।

तच्छब्देन तिङः परामर्शः। तस्यार्थो यस्य तस्यायं सुबन्तस्य प्रतिषेधो द्रष्टव्य इत्यर्थः।

न च यस्तिङोऽर्थः स सुबन्तस्य संभवतीति सामर्थ्यादुष्ट्रमुखवदुपमानगर्भः समासः। तस्येवार्थो यस्येति क्रियार्थस्येत्युक्तं भवति। अतिङित्यर्थप्रधानो निर्देश इत्यर्थः।

अत एव स्पष्टमिदं पठितव्यमित्याह—'क्रियाप्रतिषेधो वा' इति। उपपदमक्रियेत्येव विवक्षितार्थप्रतिपादकः स्पष्टः सूत्रन्यासः कर्तव्य इत्यर्थः।

एवञ्च यत् क्रियाप्रधानं सुबन्तमुपपदम्, तस्य समासप्राप्तौ प्रतिषेधोऽयं संपद्यते। तद्यथा—कारकस्य गतिः, कारकस्य गमनम्, कारकस्य व्रज्येत्युदाहृतम्।

एतच्च कथमुपपद्यते यदि गत्याद्युपपदेषु तुमुन्ण्वुलौ भवतः। अन्यथा सिद्धतावचनत्वात् तदभावे कथमिदं समासप्रतिषेधस्य प्रयोजनं स्यात्?

---

इदञ्च ज्ञापकत्वं तदैव संभवति यदा घञाद्यन्तविषये क्रियावत् कार्ययोस्तुमुन्ण्वुलोः संभवः। अन्यस्मिन् ण्वुलि तु 'ण्वुल्तृचौ ( पा० ३।१।१३३ इति विहिते अतिङ्ग्रहणं समासस्य निवर्तकं न संभवेत्। तत्रोपपदस्याभावाद्, क्रियावचनस्य ण्वुलन्तेन सह समासप्राप्तावसत्त्यां समासप्रतिषेधस्यानर्थकत्वादिति।

अयं भावः—"उपपदमतिङ्" ( पा० २।२।१९ ) इति सूत्रे "सुप्सुपा" (पा० २।१।४) इत्यधिकारात् 'कारको व्रजति' इत्यादौ तिङन्तस्योपपदस्य समासप्राप्तिरेव नास्ति इति किमर्थोऽतिङिति प्रतिषेध इति चोदिते=पृष्टे सति वार्तिककारः वार्तिकं पपाठ—"उपपदमतिङिति तदर्थप्रतिषेधः" इति।

अत्र तच्छब्देन तिङः परामर्शः। तस्य=तिङन्तस्यार्थो यस्य सुबन्तस्य स तदर्थस्तस्य सुबन्तस्यायं समासप्रतिषेधो द्रष्टव्य इत्यर्थः।

न च यस्तिङन्तस्यार्थः स सुबन्तस्य संभवति इति सामर्थ्यादुष्ट्रमुखवदुपमानगर्भः=उपमागर्भः समासः। तस्येव=तिङन्तस्येव अर्थो यस्य सुबन्तस्य स तदर्थ इति। क्रियार्थक इत्युक्तं भवति। सूत्रेऽतिङिति अर्थप्रधानो निर्देश इति वार्तिककृदाशयः।

अत एव=अतिङिति अर्थप्रधाननिर्देशादेव स्पष्टमिदं पठितव्यमिति वार्तिककार आह—"क्रियाप्रतिषेधो वा" इति। उपपदमक्रिया इत्येव विवक्षितार्थप्रतिपादकः स्पष्टः सूत्रन्यासः कर्तव्य इत्यर्थः।

एवञ्च यत् क्रियाप्रधानं सुबन्तमुपपदम्, तस्य तुमुन्नन्तेन ण्वुलन्तेन वा सह समासप्राप्तौ प्रतिषेधोऽयं संपद्यते। तद् यथा—'कारकस्य गतिः, कारकस्य गमनम्, कारकस्य व्रज्या' इत्युदाहृतम्।

एतच्च समासप्रतिषेधस्योदाहरणं कथमुपपद्यते, यदि घञाद्यन्तेषु गत्याद्युपपदेषु तुमुन्ण्वुलौ भवतः। अन्यथा घञादीनां सिद्धतावचनत्वात् तदभावे=घञाद्यन्तेषूपपदेषु तुमुन्ण्वुलोरभावे कथमिदं समासप्रतिषेधस्य प्रयोजनं स्यात्।

न चान्यस्मिन् "ण्वुल्तृचौ" (पा० ३।१।१३३) इति सामान्यलक्षणेन यो विहितस्तत्र ण्वुलि तदन्तेन क्रियावचनस्य समासनिषेधोऽयमुपपद्यते, तत्रोपपदस्याभावात्। क्रियावचनस्य समासप्राप्तावसत्यां प्रतिषेधस्यानर्थकत्वात्। तदेवं कारकगतिरित्यादौ गत्यादेः सुबन्तत्वादुपपदसमासस्य प्रसङ्गादुपपद्यमानः प्रतिषेधो घञाद्यन्तेषूपपदेषु क्रियाकार्यं तुमुन्ण्वुलादि ज्ञापयति, न तु गत्याद्यर्थरूपत्वनिबन्धनमस्य सिद्धरूपस्यार्थस्य क्रियात्वमवगमयति, वस्तुस्वभावविपर्ययख्यापनस्याशक्यत्वात् ॥ ४४६ ॥

तदित्थं शयितव्यादीनां पाकादीनां च क्रियावचनानामत्र तृतीयासमर्थतोपपत्तावपि केनाशयेन 'नैष दोषः। सर्वे एते गुणशब्दा समुदायेषु वर्तन्ते' इत्याद्युपक्रम्य 'समुदायेषु वृत्ता शब्दा अवयवेष्वपि वर्तन्ते' इति ब्राह्मणादीनां शब्दानामध्ययनादिलक्षणक्रियामात्रवृत्तित्वाश्रयेण यत् तृतीयासमर्थं क्रिया चेत् सा भवतीति प्रकृत्यर्थविशेषणपक्षो भाष्यकारेण समर्थित इत्याशङ्क्याह—

**सर्वस्य परिहारार्थं समुदायत्वमाश्रितम्।**
**शुद्धायाः संभवान्न स्यात् क्रियाया ब्राह्मणादिषु ॥ ४४७ ॥**

---

न चान्यस्मिन्—"ण्वुल्तृचौ" (पा० ३।१।१३३) इति सामान्यसूत्रेण यो ण्वुल्विहितस्तत्र ण्वुलि सति तदन्तेन=ण्वुलन्तेन क्रियावचनस्य समासनिषेधोऽयमुपपद्यते, सूत्रे तत्र सप्तम्यन्तपदाभावेन तत्रोपपदस्याभावात्। क्रियावचनस्य समासप्राप्तावसत्यां प्रतिषेधस्यानर्थकत्वात्। तदेवं 'कारकस्य गतिः' इत्यादौ गत्यादेः सुबन्तत्वादुपपदसमासस्य प्रसङ्गादुपपद्यमानः प्रतिषेधो घञाद्यन्तेषूपपदेषु क्रियाकार्यं तुमुन्ण्वुलादि भवतीति ज्ञापयति, न तु गत्याद्यर्थरूपत्वनिबन्धनमस्य सिद्धरूपस्यार्थस्य क्रियात्वमवगमयति, वस्तुस्वभावविपर्ययख्यापनस्य=वस्तुस्वभाववैपरीत्यज्ञापनस्य भ्रान्तिं विनाऽशक्यत्वादिति ॥ ४४६ ॥

तदित्थं शयितव्यादीनां भावकृत्यप्रत्ययान्तानां पाकादीनाञ्च भावघञाद्यन्तानां क्रियावचनानामत्र=अतीते ग्रन्थे तृतीयासमर्थतोपपत्तावपि केनाशयेन—"नैष दोषः। सर्वे एते शब्दा गुणसमुदायेषु वर्तन्ते" इत्याद्युपक्रम्य, "समुदायेषु वृत्ताः शब्दा अवयवेष्वपि वर्तन्ते" इति ब्राह्मणादीनां शब्दानामध्ययनादिलक्षणक्रियामात्रवृत्तित्वाश्रयेण "यत् तृतीयासमर्थं क्रिया चेत् सा भवति" इति प्रकृत्यर्थविशेषणपक्षो भाष्यकारेण समर्थितः। अत्र भाष्ये समुदायशब्दो जातिगुणक्रियासमुदायो द्रव्यमिति सांख्यसिद्धान्तानुसारेण तत्रैव प्रवृत्तः, गुणसमुदायपदञ्च लक्षणया धर्मसमुदायपरमिति रीत्या जातिगुणक्रियासमुदायस्य परिग्रह इत्याशङ्क्याह—सर्वस्य परिहारार्थमिति।

अस्यार्थः—'राज्ञः शयितव्येन तुल्यं देवदत्तस्य शयितव्यम्' इत्यत्र शुद्धाया केवलायाः शयितव्यपदवाच्यायाः क्रियायाः संभवात् 'ब्राह्मणवदधीते क्षत्रियः' इत्यादौ ब्राह्मणादिशब्देषु वतिप्रत्ययो न स्यात्। मुख्यार्थसंभवे लक्ष्यार्थपरिग्रहस्यान्याय्यत्वादित्यतः क्रियायाः प्रकृत्यर्थविशेषणत्वपक्षे सर्वस्य दोषस्य परिहारार्थं वतिप्रकृत्यर्थेषु समुदायत्वम्=जातिगुणक्रियासमुदायरूपत्वमाश्रितमिति।

एवञ्च 'समुदाये वृत्ताः शब्दा एकदेशेऽपि वर्तन्ते' इत्यभ्युपगमेन=ब्राह्मणादिशब्दानामध्ययनादिलक्षणक्रियामात्रवृत्तित्वाश्रयेण 'ब्राह्मणवदधीते क्षत्रियः' इत्यादिप्रयोगोपपत्तिरिति।

संभवत्यपि होतव्यादौ क्रियावाचिनि तृतीयासमर्थे यदर्थस्य समुदायत्वम् 'सर्वे एते शब्दा गुणसमुदाये वर्तन्ते' इत्याश्रितं भाष्यकारेण सिद्धान्ततया तत्रायमाशयश्चूर्णीकृतः सर्वसाधारणः परिहारो यथा स्यादिति ।

अन्यथा शुद्धायाः केवलायाः शयित व्यादिपदोपादानायाः क्रियायाः प्रत्ययप्रकृतित्वेन तृतीयासमर्थायाः संभवाद् ब्राह्मणादिशब्दविषये वतिप्रत्ययो न स्याद् ब्राह्मणवदधीते क्षत्रिय इत्यादौ ।

ब्राह्मणादिशब्दोह्युपचारादेकदेशवृत्त्या क्रियावाची । होतव्यपाकादिशब्दस्तु मुख्यया वृत्त्या क्रियाभिधायीति सति मुख्ये विषये कुतो गौणपरिग्रहः स्यात् ।

नन्वेवं समुदायैकदेशभावकल्पनयापि क्रियावचनसमर्थने संभवति मुख्ये विषये कथं गौणपरिग्रह इति कथं न चोद्यते । व्याप्तेर्न्यायात् सर्वस्य परिग्रह इत्यदोषः ।

यद्वा, क्रियायास्तृतीयासमर्थतामनुपपन्नामभ्युपगम्य प्रकारान्तरेण प्रतिसमादधतश्चूर्णीकारस्यासंभवः एव शुद्धक्रियावचनस्य तृतीयासमर्थस्येत्याशयः ।। ४४७ ।।

---

अयं भावः—तृतीयासमर्थे क्रियावाचिनि होतव्यादौ पदे वतिप्रकृतित्वेन संभवत्यपि यत्सर्वस्य शब्दार्थस्य जातिगुणक्रियासमुदायरूपत्वमाश्रितं सिद्धान्ततया भाष्यकारेण—"सर्वे एते शब्दा गुणसमुदाये वर्तन्ते" इति । तत्रायमाशयः—चूर्णीकृतः=महाभाष्यटीका चूर्णिकानाम्नी तन्निर्मातुः श्रीभर्तृहरेः । सर्वसाधारणः='शयितव्येन तुल्यम्, मधुपाकेन तुल्यः, ब्राह्मणवदधीते' इत्यादौ सर्वत्र यो वतिप्रत्ययानुपपत्तिरूपः क्रियायाः प्रकृत्यर्थविशेषणत्वपक्षे दोषः, तत्साधारणः परिहारो यथा स्यादिति ।

अन्यथा शुद्धायाः केवलायाः=समानपदोपात्तद्रव्यसंसर्गरहितायाः शयितव्यादिपदोपादानायाः=शयितव्यादिपदवाच्यायाः तृतीयासमर्थायाः तृतीयासमर्थशयितव्यादिपदबोध्याया क्रियाया वाचकस्य शयितव्यादि पदस्य वतिप्रत्ययप्रकृतित्वेन संभवाद् ब्राह्मणादिशब्दविषये 'ब्राह्मणवदधीते क्षत्रियः' इत्यादौ वतिप्रत्ययो न स्याद् ।

अत्र ब्राह्मणादिशब्दो हि उपचारात्=जातिगुणक्रियासमुदायस्वरूपब्राह्मणपदार्थैकदेशेऽध्ययनक्रियारूपे ब्राह्मणत्वारोपाद् एकदेशवृत्त्या=ब्राह्मणपदार्थैकदेशेऽध्ययने लक्षणावृत्त्या क्रियावाची । होतव्यपाकादिशब्दस्तु मुख्यया वृत्त्या क्रियाभिधायीति सति मुख्ये विषये कुतो गौणपरिग्रहः स्यात् ?

नन्वेवं समुदायैकदेशभावकल्पनया ब्राह्मणादिशब्दविषये क्रियावचनसमर्थनेऽपि मुख्ये विषये संभवति कथं गौणपरिग्रह इति कथं न चोद्यत इति चेत्, सत्यम् । व्याप्तिन्यायात् सर्वस्य=गौणस्य मुख्यस्य च परिग्रहः इत्यदोषः ।

यद्वा साध्यस्वरूपायाः क्रियायाः तृतीयासमर्थतां शयितव्यादिपदोपादानायाः क्रियायाः सिद्धत्वेन अनुपपन्नामभ्युपगम्य प्रकारान्तरेण=सर्वस्य शब्दार्थस्य समुदायरूपत्वाभ्युपगमेन प्रतिसमादधतः चूर्णीकारस्य—"शुद्धक्रियावचनस्य तृतीयासमर्थस्यासंभव एव" इत्याशय इति ॥ ४४७ ॥

तथाहि—

**उपमानविवक्षायां स्वधर्मश्च निवर्तते ।**
**क्रियाया न श्रुताद् यस्मादुपमानं समाप्यते ॥ ४४८ ॥**

पाकादिपदोपादानायाः क्रियाया उपमानत्वेनापेक्षायां स्वो धर्मः स्वभावसत्त्वभूतत्वलक्षणो निवर्तते, यतो नोपमानस्य श्रवणमात्रात् तत्त्वं परिपूर्णं भवति ॥ ४४८ ॥

अन्वयिधर्मापेक्षायां तत्त्वाद् अपेक्ष्यतां तर्ह्यन्वयिधर्मः । किमेतावता उपमानभूतायाः स्वधर्मोऽपैतीत्यत आह—

**तृतीयोऽप्याश्रितो भेदो धर्मः साधारणो द्वयोः ।**
**व्यापारवान् न कृत्स्नस्य साम्यं कृत्स्नेन विद्यते ॥ ४४९ ॥**

---

तथाहि—शुद्धक्रियावचनस्य तृतीयासमर्थस्यासंभवमेव दर्शयति—उपमानविवक्षायामिति ।

अस्यार्थः—'राज्ञः शयितव्येन तुल्यं देवदत्तशयितव्यम्, तैलपाकेन तुल्यो घृतपाकः' इत्यादौ शयितव्यपाकादिपदोपात्तायाः क्रियाया उपमानत्वेन विवक्षायां च=तु, स्वधर्मः स्वभावोऽसत्त्वभूतत्वरूपो निवर्तते । यस्माद्धेतोः, उपमानभूतायाः क्रियायाः श्रुतात्=अन्वयिधर्मप्रतिपत्तिपुरस्कारेण उपमानोपमेयभावसंबन्धेन पदार्थान्तरे उपमेयेऽन्वयं विना श्रवणमात्रात्, उपमानम्=उपमानत्वं न समाप्यते=न निराकाङ्क्षं प्रतीयते । पदार्थान्तरे द्रव्ये प्रत्ययार्थे प्रकृत्यर्थे वा लिङ्गे संख्यायां चान्वये तु स्वस्वभावमसत्त्वभूतत्वं जहातीति ।

अयं भावः—'तैलपाकेन तुल्यो घृतपाकः' इत्यादौ पाकादिपदोपादानायाः=पाकादिपदवाच्यायाः क्रियाया उपमानत्वेनापेक्षायां स्वो धर्मः स्वभावोऽसत्त्वभूतत्वरूपो निवर्तते, यत उपमानभूतायाः क्रियायाः श्रवणमात्रात्=शब्दतः प्रतिपत्तिमात्रात् तत्त्वम्=उपमानत्वं न परिपूर्णं भवति, अन्वयिधर्मापेक्षायां तत्त्वात् । अतः क्रियाया उपमानत्वस्य परिपूर्तये पदार्थान्तरान्वयोऽपेक्षितो भवति, तत्त्वपरिपूर्तये लिङ्गसंख्याविशिष्टे पदार्थान्तरेऽन्वये तु क्रिया स्वधर्मसत्त्वभूतत्वं जहातीत्येवं शुद्धक्रियावचनस्य तृतीया समर्थस्यासंभव इति ॥ ४४८ ॥

तत्त्वात्=उपमानत्वात् स्वोपमानसिद्धये अन्वयिधर्मापेक्षायाम् अपेक्ष्यतां तर्हि क्रियया उपमानोपमेयरूपोभयान्वयी धर्मः । किमेतावता उपमानभूतायाः क्रियायाः स्वधर्मोऽसत्त्वभूतत्वमपैतीत्यत आह—तृतीयोऽप्याश्रितो भेद इति ।

अस्यार्थः—स्वस्वभावव्यवस्थार्थमुपमानोपमेयाभ्यामपेक्षितः, ताभ्यां तृतीयो यो भेदो विशेष इतरस्माद् व्यावृत्तस्तयोर्द्वयोः=उपमानोपमेययोः साधारणो धर्मः, सोऽपि व्यापारवान्—क्रियामाश्रितत्वादुपमानत्वस्य संपादने व्यग्रो व्यापृतः क्रियाया उपमानत्वसिद्धये आश्रितो नोदासीन इति समानधर्माधारत्वेन उपमानोपमेयरूपाभ्यां विप्रकीर्यमाणत्वात् क्रिया साध्यस्वभावादपैति, स्वाश्रितसामानधर्मवशादुपमेयपरिच्छेदसंपादनेऽङ्गभावगमनात् सिद्धतयाऽऽत्मानमुद्दर्शयति च । कस्मात् समानो धर्मोऽत्र=क्रियाया उपमानत्वे व्यापारवान् इत्यत उक्तम् न कृत्स्नस्येत्यादि ।

तृतीयः स्वभावव्यवस्थार्थमुपमानोपमेयाभ्यामपेक्षितो यो विशेषोऽपरस्माद् व्यावृत्तस्तयोर्द्वयोः समानः सोऽपि नोदासीन एवापेक्ष्यते, येनाकिञ्चित्करत्वात् तस्य स्वधर्मान्न क्रियापेयात् । किंतु व्यापारवान्, द्वयोः समवायात् ।

तथा च क्रियायामाश्रितत्वादुपमानत्वस्य संपादने व्यग्रो व्यापृत इति समान-धर्माधारत्वेन क्रिया विप्रकीर्यमाणत्वात् साध्यस्वभावादपैति ।

स्वातन्त्र्येण द्रव्यायमाणा हि स्वाश्रितधर्मवशादुपमेयपरिच्छेदसंपादनाङ्गभाव-गमनात् सिद्धतयात्मानमुद्दर्शयेत् ।

नहि स्वभाव एव रूपेऽवस्थितायाः क्रियायाः प्रज्ञापनहेतुत्वमुपमेयं प्रति युज्यते, अनिष्पन्नस्य परं प्रत्यङ्गभावायोगात् ।

इत्थञ्च तैलपाकादिरिदं तदिति प्रत्यवमृष्टः समानधर्माधारतां प्रतिपद्यत इति द्रव्यमसौ, होतव्यादिश्च सौष्ठवादितुल्यधर्माश्रयोऽपि तथैवेति न क्रियावाचि एत-त्तृतीयान्तमस्यामवस्थायाम् ।

नहीह वास्तवेन रूपेण क्रियाद्रव्यादिः पदार्थो वर्ण्यते, अपि तु सिद्धसाध्यतादि-

---

कृत्स्नस्य = सकलस्यार्थस्य कृत्स्नेन = सकलेनार्थेन सह सर्वधर्माणां साम्ये भेदाभावान्न साम्यं सादृश्यमुपमानोपमेयभावाधायकं विद्यते, भेदाभेदाभ्यामुपमानोपमेयभावोपपत्तेरुक्तत्वादिति ।

अयं भावः—स्वस्वभावव्यवस्थार्थमुपमानोपमेयाभ्यामपेक्षितो यस्ताभ्यां तृतीयो विशेषोऽपरस्माद् व्यावृत्तस्तयोर्द्वयोरुपमानोपमेययोः समानः, सोऽपि नोदासीन एवापेक्ष्यते, येन तस्य = द्वयोः साधारणधर्मस्य अकिञ्चित्करत्वात् क्रिया स्वधर्मादसत्त्वभूतत्वलक्षणाद् नापेयात्, किन्तु व्यापारवान्, द्वयोस्तस्य समवायात् ।

तथा च साधारणधर्मस्य क्रियायामुपमानभूतायामाश्रितत्वादुपमानत्वस्य क्रियागतस्य संपादने व्यग्रो व्यापृत इति समानधर्माधारत्वेन क्रिया उपमनोपमेयरूपाभ्यां विप्रकीर्यमाणत्वात् साध्यस्वभावादपैति । सिद्धमेव हि समानधर्माधारत्वेन उपमानमुपमेयञ्च भवतीति ।

किञ्च उपमानभूता क्रिया उपमेयपरिच्छेदक्रियायां साधनतया स्वातन्त्र्येण द्रव्यायमाणा स्वाश्रितसाधारणधर्मवशादुपमेयपरिच्छेदसंपादनाङ्गभावगमनात् सिद्धतयैवात्मानमुद्दर्शयेत्, न तु साध्यतया ।

न हि स्वभाव एव साध्यरूपेऽवस्थितायाः क्रियायाः उपमेयं प्रति परिच्छेदप्रज्ञापनहेतुत्वं युज्यते, साध्यतया अनिष्पन्नस्य क्रियारूपस्यार्थस्य परं प्रत्यङ्गभावायोगात् ।

इत्थञ्च 'तैलपाकेन तुल्यो घृतपाकः' इत्यादौ तैलपाकादिरिदं तदिति प्रत्यवमृष्टः = प्रत्यव-मर्शगोचरस्य सिद्धस्वरूपः समानधर्माधारतां प्रतिपद्यते, न साध्यरूपः इति द्रव्यमसौ । होतव्यादिः च = अपि सौष्ठवादिरूपतुल्यधर्माश्रयोऽपि तथैव = इदं तदिति प्रत्यवमृष्ट एव समानधर्माधारत्वेन सिद्धतया द्रव्यरूप इति न क्रियावाचि एतत्तृतीयान्तमस्यामवस्थायाम् = सिद्धत्वावस्थायाम् ।

न हीह = जगति शाब्दे व्यवहारे वास्तवेन स्वेन रूपेण क्रियाद्रव्यादिपदार्थो वर्ण्यते, अपि तु सिद्धसाध्यसाधनदिरूपेण शब्दवाच्येन । तथा ह्येकोऽपि ध्वनिर्यथासंभवं क्रियागुणद्रव्यरूप-

रूपेण शब्दवाच्येन। तथाह्येकोऽपि ध्वनिः क्रियागुणद्रव्यरूपतयाभिधीयते। ध्वनति घण्टेति क्रमोपजातावयवः शब्दसन्तानः पूर्वापरीभूतः साधनप्रतिबद्धोत्पादो यदा विवक्ष्यते, तदेयं क्रियाविप्रसृतावयवा ध्वनतीत्याख्यातेनाभिधीयते।

यदा तु कारणान्तरनिरासार्थं संबन्धिन्या घण्टया विशेष्यते 'घण्टाया ध्वनिः'- इति, तदा निष्पन्नरूपोऽसौ गुणः सुबन्तेन शब्देनोच्यते। ध्वनित्वमित्यत्र तु भाव- प्रत्ययान्तेन शब्देन द्रव्यभावापन्नो जातेर्गुणीभूतः प्रातिपदिकार्थः कथ्यते। ध्वनति शब्द इति च कारकशक्तियुक्तः स एवार्थोऽभिधीयते। व्यक्तवर्णस्य चात्र कर्तृत्व- मव्यक्तस्य साध्यत्वमित्यनवस्थिता व्याकरणे पदार्थाः।

तस्मात् क्रियापदादपि न साक्षात्क्रिया साध्यस्वभावात्र प्रतीयते, अपि तु सिद्ध- स्वभावेति द्रव्यमेवैतदिति सुवन्तं न क्रियावाच्यस्ति। आख्यातमेव तथा। ततश्चाप्राति- पदिकत्वात् तृतीया नास्ति।

अत एव च नामाख्यातभेदेन सिद्धसाध्यार्थभेदाद् द्विधा पदं संक्षेपेणोक्तम्। तत्रैतत् स्यात्। कस्मात् समानोऽर्थे धर्मो व्यापारवानित्यत उक्तम् न कृत्स्नस्येत्यादि। सकलस्यार्थस्य सकलेन सर्वधर्माणां साम्ये भेदाभावान्न साम्यं सादृश्यमुपमानोपमेय- भावाधायि संभवति, भेदाभेदाभ्यां तदुपपत्तेरुक्तत्वादिति ॥ ४४९ ॥

---

तयाऽभिधीयते। 'ध्वनति घण्टा' इत्यत्र क्रमोपजातावयवः शब्दसंतानः=निरन्तरः शब्दप्रवाहः पूर्वापरीभूतः साधनप्रतिबद्धोत्पादो=नियतसाधनसंबन्धोत्पादः यदा विवक्ष्यते, तदेयं क्रियाविप्र- सृतावयवा=विशेषेण प्रसारं प्राप्ता अवयवा यस्यास्तथाभूता ध्वनतीत्याख्यातेनाभिधीयते।

यदा तु कारणान्तरनिरासार्थं स्वसंबन्धिन्या घण्टया विशेष्यते 'घण्टाया ध्वनिः'इति, तदा निष्पन्नरूपोऽसैन गुणः 'सुवन्ते शब्देनोच्यते। 'ध्वनित्वम्'इत्यत्र तु भावप्रत्ययान्तेन शब्देन द्रव्य- भावापन्नोजातेर्गुणीभूतः=जातौ विशेषणत्वमापन्नः प्रातिपदिकार्थः कथ्यते। ध्वनति शब्द इति च कर्तृत्वरूपकारकशक्तियुक्तः स एव=ध्वनिरूप एवार्थोऽभिधीयते। व्यक्तवर्णस्य च=तु 'ध्वनति शब्दः' इत्यत्र कर्तृत्वम्, अव्यक्तस्य साध्यत्वमित्यनवस्थिता एव व्याकरणे पदार्थाः।

तस्मात् क्रियेति पदादपि न साक्षात्क्रियासाध्यस्वभावात्र प्रतीयते, अपि तु सिद्धस्वभावेति लिङ्गसंख्यान्वितं द्रव्यमेवैतदिति सुबन्तं न क्रियावाच्यमस्ति, किन्त्वाख्यातमेव तथा। ततश्चाप्राति- पदिकत्वात् तृतीया नास्ति।

अत एव च=प्रागुक्तरीत्या नाम्नः सिद्धार्थवाचित्वाद् आख्यातस्य च साध्यस्वरूपक्रिया- वाचित्वादेव च नामाख्यातभेदेन सिद्धसाध्यार्थभेदात् पदं द्विधा विभज्य संक्षेपेणोक्तम्। तत्रैतत् स्यात्=संभाव्यते, कस्मात् समानो धर्मोऽत्र = क्रियाया उपमानत्वस्य संपादने व्यापारवान् इत्यत उक्तम्—न कृत्स्नस्येत्यादि। सकलस्यार्थस्य सकलेनार्थेन सर्वधर्माणां साम्ये भेदाभावान्न साम्यं सादृश्यमुपमानोपमेयभावाधायकं संभवति, उपमानोपमेययोर्भेदाभेदाभ्यां तदुपपत्तेः=उपमानो- पमेयभावोपपत्तेरुक्तत्वादिति ॥ ४४९ ॥

साधारणो धर्मो भेदाभेदाभ्यामत्र सव्यापार एव भवतु। द्रव्येण सिद्धरूपेणासावपेक्ष्यते, न साध्यस्वभावया क्रियया उपमानभूतयेत्याशङ्क्याह—

द्रव्ये वापि क्रियायां वा निमित्तात् तत् प्रकल्पते।
क्रियाणां विद्यमानत्वाद् वृत्तिर्न स्याद् गवादिषु॥ ४५०॥

तदिति पूर्वप्रकान्तं साम्यं निर्दिश्यते। द्रव्यं वा भवतु, क्रिया वार्थान्तरप्रज्ञापनेनोपमाम्, सर्वथा सादृश्यनिबन्धनत्वादर्थानां साम्यस्य तद्धेतुर्निमित्तं साधारणो धर्मोऽन्वेष्यः।

तथाहि—शुद्धं स्वात्मावस्थं द्रव्यमर्थान्तरस्योपमेयस्य परिच्छेदकं न संभवतीति तदर्थं समानं गुणमाकाङ्क्षति। ततो हि निमित्तात् साम्येन परिच्छेदः संभवति। एवं क्रियाप्यनपेक्षितसमानधर्मा नोपकारायार्थान्तरस्य प्रज्ञापनीयस्य प्रभवतीत्यवश्यमपेक्षणीयं निमित्तमनयापि।

तथा च द्रव्यायमाणेयं क्रियात्वं जहाति। साधनव्यापारावस्थाप्रतिपत्तये हि निर्वर्त्यमाना प्राधान्येनोपदीयमाना क्रिया भवति।

---

ननु साधारणो धर्म उपमानोपमेययोर्भेदाभेदाभ्यां सहकारिभ्यामत्र=साम्ये स व्यापार एव हेतुर्भवतु, किन्तु द्रव्येण सिद्धरूपेण असौ=साधारणो धर्मः स्वोपमानत्वसिद्धयेऽपेक्ष्यते, न साध्यस्वभावया क्रियया उपमानभूतया इत्याशङ्क्याह—द्रव्ये वाऽपि क्रियायां वा इति।

अन्यार्थः—द्रव्ये वाऽपि उपमानभूते, क्रियायां वा उपमानभूतायां तत्साम्यं निमित्तात्=साधारणधर्मरूपात् प्रकल्पते=प्रसिध्यति। यदि पुनरनपेक्षितनिमित्तानां स्वरूपादेव क्रियाणामुपमानत्वं युज्यते, तदा शुद्धानामुपभूतानां क्रियाणां विद्यमानत्वाद् 'गोवदधीते, ब्राह्मणवदधीते' इत्यादौ गवादिषु गौणक्रियावचनेषु वतितद्धितरूपा वृत्तिर्न स्यादिति।

अयं भावः—कारिकायां तदिति पदेन पूर्वप्रकान्तम्=पूर्वप्रकरणे निर्दिष्टं साम्यं निर्दिश्यते। अर्थान्तरस्य उपमेयरूपस्यार्थस्य प्रज्ञापनेनोपमानं द्रव्यं वा भवतु, क्रिया वा भवतु, अर्थानां साम्यस्य सर्वथा सादृश्यनिबन्धनत्वात् तद्धेतुः=साम्यहेतुर्निमित्तभूतः साधारणो धर्मोऽन्वेष्यः।

तथा हि—शुद्धं स्वात्मावस्थम्=स्वरूपेऽवस्थितम् द्रव्यमर्थान्तरस्योपमेयस्य परिच्छेदकं न संभवतीति तदर्थम्=उपमेयपरिच्छेदार्थम् समानं गुणमाकाङ्क्षति। ततो हि निमित्तात् समानधर्मरूपाद् उपमेयस्य साम्येन परिच्छेदः संभवति। एवम्=द्रव्यवत् क्रियाऽपि अनपेक्षितसमानधर्मा अर्थान्तरस्योपमेयस्य प्रज्ञापनीयस्य परिच्छेदरूपायोपकाराय न प्रभवति इत्यवश्यमनयाऽपि निमित्तं समानधर्मरूपमुपमेयपरिच्छेदार्थमपेक्षणीयम्।

तथा च=निमित्तापेक्षणे च द्रव्यायमाणेयं साध्यत्वरूपं क्रियात्वं जहाति। साधनैर्निर्वर्त्यमाना हि=निष्पाद्यमाना हि शाब्दे व्यवहारे साधनव्यापारावस्थाप्रतिपत्तये आख्यातपदेन प्राधान्येनोपादीयमाना क्रिया भवति।

यदा तु साधनव्यापारावस्था कथयितुं न प्रक्रान्ता, नापि क्रिया प्रतिलब्धप्राधान्येनोपादीयते, किन्तु धर्मान्तरं प्रत्याश्रयभूता साधनव्यापारनिरपेक्षोपादीयते, तदा व्यापारानपेक्षया धर्मान्तराणामाश्रयभूतत्वेन चेदं तदिति व्यपदेश्यं द्रव्यमेवोच्यते, न क्रियासौ।

यदि पुनरनपेक्षितनिमित्तानां स्वरूपादेव क्रियाणामुपमानत्वं युज्यते, तदासां शुद्धानामुपमानभूतानां संभवात् किमर्थं गौणक्रियावचनगवादिशब्दविषये वतिप्रत्ययो भवेत्। संभवति मुख्ये विषये गौणपरिग्रहस्यान्याय्यत्वादिति 'गोवत्, ब्राह्मणवत्' इति प्रयोगो न स्यात् ॥ ४५० ॥

यदा तु साधारणधर्माश्रयेणौपम्यं भवति, तदा क्रियाभिरपि धर्मान्तराणामपेक्षणादुक्तनयेन स्वरूपहानान्मुख्ये विषयेऽसम्भवति गौणाश्रयणं युक्तमित्याह—

**अभावात् केवलायास्तु तद्वानर्थः प्रतीयते।**
**प्रधानासम्भवे युक्ता लक्षणार्था क्रियाश्रुतिः ॥ ४५१ ॥**

---

यदा तु साधनव्यापारावस्थां कथयितुं न प्रक्रान्ता, नापि आख्यातप्रतिलब्धप्राधान्येन क्रिया उपादीयते, किन्तु धर्मान्तरं प्रत्याश्रयभूता साधनव्यापारनिरपेक्षा उपादीयते, तदा साधनव्यापारानपेक्षया धर्मान्तराणामाश्रयभूतत्वेन चेदं तदिति व्यपदेश्यं द्रव्यमेवोच्यते, न क्रियाऽसौ।

यदि पुनरनपेक्षितसाधारणधर्मरूपनिमित्तानां क्रियाणां स्वरूपादेवोपमानत्वं युज्यते, तदाऽऽसाम्=क्रियाणां शुद्धानामुपमानभूतानां संभवात् किमर्थं गौणक्रियावचनगवादिशब्दविषये वतिप्रत्ययो भवेत्। संभवति मुख्ये विषये गौणपरिग्रहस्यान्याय्यत्वात्। तथा चायं न्यायः— "गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः" ( परिभाषा १५ ) इति।

एवञ्च—'गोवत् चेष्टते, ब्राह्मणवदधीते' इति प्रयोगो न स्यादिति क्रिययाऽपि उपमानभूतया साम्यनिमित्तमपेक्षितव्यमेवेति ॥ ४५० ॥

यदा तु साधारणधर्माश्रयेणौपम्यम्=उपमानोपमेयभावो भवतीति निश्चितम्, तदा क्रियाभिरपि स्वोपमानत्वसिद्धये समानानां धर्मान्तराणामपेक्षणाद् उक्तनयेन=प्रागुक्तरीत्या साध्यत्वरूपस्वस्वरूपहानाद् मुख्ये क्रियारूपेऽर्थेऽसंभवति गौणाश्रयणं युक्तमित्याह— अभावात् केवलायास्तु इति।

अस्यार्थः—केवलायाः शुद्धायाः साधारणधर्मरहितायाः उपमानभूतायाः क्रियायाः प्रागुक्तरीत्या अभावात्तु तद्वानर्थः=साम्यनिमित्तभूतसाधारणधर्मवान् क्रियारूपोऽर्थः "तेन तुल्यम्" ( पा० ५।३।२१५ ) इति सूत्रे क्रियापदेन प्रतीयते। स च सिद्धरूपत्वात् क्रियापदस्य गौणोऽर्थः। एवञ्चात्र क्रियापदस्य प्रधानार्थासंभवे क्रियाश्रुतिः क्रियाशब्दः, लक्षणार्था=लक्ष्यार्थबोधिका—गौणार्थबोधिकायुक्ता=समुचिता स्यादिति।

क्रमव्यतिक्रमे प्रयोजनाभावात् प्रथमश्रुतं तेनेत्येतत् क्रियोपाधिना यदा सम्बध्यते, तदा प्रकृत्यर्थविशेषणपक्षेऽपि यथोदितनयेन शुद्धायाः क्रियायाः सम्भवो नास्तीति श्रौतार्थपरित्यागे लाक्षणिकोऽर्थः समाश्रीयते। स्वाधारेण नित्यमवियोगाच्च क्रियायाः स एवाविनाभावितया लक्ष्यत इति तृतीयासमर्थं क्रियाविष्टद्रव्यवचनमाश्रीयते। ततश्चैकदेशवृत्त्या ब्राह्मणादयः क्रियावचनाः प्रकृतिः। तद्वदेव शयितव्यादयोऽपि ॥४५१॥

तेषामपि ह्यत्रोपमानत्वे ब्राह्मणादिभिः सर्वथा सामान्यमित्याह—

**क्रियाधर्मान्तरेषु सापेक्षाः क्रियाशब्दाः क्रियान्तरे।**
**उपकाराय गृह्यन्ते यथैव ब्राह्मणादयः ॥ ४५२ ॥**

---

अयं भावः—"तेन तुल्यम्" ( पा० ५।१।११५ ) इति सूत्रे क्रमव्यतिक्रमे=क्रियापदस्य प्रथमं श्रुतेन तेनेति पदेन सह संबन्धातिक्रमे प्रयोजनाभावात् प्रथमश्रुतं तेनेत्येतत्पदं क्रियोपाधिना=क्रियारूपेण विशेषणेन यदा संबध्यते, तदा क्रियायाः प्रकृत्यर्थविशेषणत्वपक्षेऽपि यथोदितन्यायेन=प्रागुक्तरीत्या क्रियाया उपमानभूतायाः साधारणधर्माश्रयत्वेन शुद्धायाः क्रियायाः संभवो नास्तीति साध्यस्वभावक्रियारूपश्रौतार्थपरित्यागे=वाच्यार्थपरित्यागे सिद्धक्रियारूपो लाक्षणिकोऽर्थः समाश्रीयते। क्रियायाः स्वाधारेण सह नित्यमवियोगाच्च स एव=क्रियाया आधार एव क्रियाऽविनाभावितया सूत्रे क्रियापदेन लक्ष्यत इति तृतीयासमर्थं क्रियाविष्टद्रव्यवचनमाश्रीयते। ततश्च यदा ब्राह्मणादयः शब्दा ब्राह्मणाध्ययनादौ लाक्षणिकाः, तदा एकदेशवृत्त्या=ब्राह्मणादिपदार्थैकदेशे अध्ययनादौ लक्षणया ब्राह्मणादयः शब्दाः क्रियावचना वतिप्रकृतिः। तद्वदेव शयितव्यादयोऽपि वतिप्रकृतिरिति क्रियायाः प्रकृत्यर्थत्वविशेषणपक्षः समर्थितो भवतीति ॥ ४५१ ॥

तेषामपि=शयितव्यादीनां सिद्धक्रियावचनानामपि हि अत्र='राजशयितव्येन तुल्यं देवदत्तस्य शयितव्यम्'इत्यादौ उपमानत्वे ब्राह्मणादिभिरध्ययनादौ लक्षणया सिद्धक्रियावचनैः सर्वथा साम्यमित्याह—क्रियान्तरेषु सापेक्षा इति।

अस्यार्थः—क्रियान्तरे=ब्राह्मणाध्ययनादिरूपाद् उपमानादन्यस्यां क्रियायाम्, क्षत्रियाध्ययनादिलक्षणायामुपेयभूतायाम्, उपकाराय=सादृश्येन परिच्छेदरूपाय, क्रियाशब्दा उपमानवचना ब्राह्मणाध्ययनादयः, धर्मान्तरेषु साम्यप्रयोजकसाधारणधर्मेषु उपमानत्वहेतुसौष्ठवादिषु, सापेक्षाः= साकाङ्क्षा गृह्यन्ते=उच्चार्यन्ते प्रयुज्यन्ते, यथैव ब्राह्मणादयः शब्दा इति निदर्शनम्।

तथाहि—यथा 'ब्राह्मणेन तुल्योऽयं क्षत्रियः' इत्यादौ ब्राह्मणादय उपमानशब्दाः क्षत्रियादेरुपमेयस्य परिच्छेदरूपोपकाराय धर्मान्तरेषु अध्ययनानुल्वणवेषत्वतपआदिषु साधारणधर्मेषु साकाङ्क्षाः प्रयुज्यन्ते, तथैवेते 'ब्राह्मणवदधीते, राजशयितव्येन तुल्यं देवदत्तस्य शयितव्यम्' इत्यादौ ब्राह्मणादयः, राजशयितव्यादयश्च उपमानशब्दाः प्रयुज्यन्त इति।

क्रियान्तरेऽन्यस्यां क्रियायां क्षत्रियाध्येतव्यादिलक्षणायामुपकाराय सादृश्येन परिच्छेदाय क्रियाशब्दा उपमानवचना ब्राह्मणाध्येतव्यादयः क्रियान्तरेषूपमानहेतु-सौष्ठवादिषु साकाङ्क्षाः प्रयुज्यन्ते। अतश्च यथाध्ययनादिसादृश्यहेतुक्रियापेक्षा ब्राह्मणादयः शब्दाः क्षत्रियादिपरिच्छेदायोपादीयन्ते, तथैत इति सर्वप्रकारं क्रिया-शब्दानां द्रव्यवचनैरुपमानत्वे साम्यमित्युभयेऽपि वृत्तिमनुभवन्तीत्यर्थः ॥ ४५२ ॥

तत्रैतत् स्यात्—क्रियाप्युपमानत्वेनोपादीयमाना यदि धर्मान्तरापेक्षिणी, तदान-वस्थात्रेत्याशङ्क्य निदर्शनपूर्वकं तामभ्युपगन्तुमाह—

**यथा प्रकर्षः सर्वत्र निमित्तान्तरहेतुकः ।**
**द्रव्यवद् गुणशब्देऽपि स निमित्तमपेक्षते ॥ ४५३ ॥**

'न वै द्रव्यस्य स्वतः प्रकर्षापकर्षौ स्तः' इति निरुपाधेरतिशयाभावात् संसर्गि-धर्मान्तरनिमित्तः प्रकर्षोऽस्य व्यवस्थापितः। शुक्लतरः पट इति स्वसमवायिशुक्लगुण-

---

अयं भावः—क्रियान्तरे ब्राह्मणाध्ययनादिरूपोपमानक्रियातोऽन्यस्यां क्रियायां क्षत्रियाध्यय-नादिलक्षणायामुपमेयभूतायाम्, उपकाराय सादृश्येन परिच्छेदरूपाय क्रियाशब्दा उपमानवचना ब्राह्मणाध्ययनादयः शब्दाः, धर्मान्तरेषु=ब्राह्मणाध्ययनादिक्रियारूपोपमानगतोपमानत्वहेतुसौष्ठ-वादिषु साकाङ्क्षाः प्रयुज्यन्ते, अतश्च यथाऽध्ययनादिरूपसादृश्यहेतुक्रियाऽपेक्षा ब्राह्मणादयः शब्दाः क्षत्रियादिरूपोपमेयपरिच्छेदायोपादीयन्ते, तथैते द्रव्यवचनाः क्रियावचनाश्च शब्दा इति सर्वथा क्रियाशब्दानां शयितव्यादीनां द्रव्यवचनैर्ब्राह्मणादिशब्दैरुपमानत्वे साम्यमित्युभयेऽपि=द्रव्यवचनाः क्रियावचनाश्च शब्दा वतितद्धितरूपां वृत्तिमनुभवन्तीति ॥ ४५२ ॥

तत्र=क्रियाया उपमानभूताया धर्मान्तरापेक्षत्वे सति एतत्=वक्ष्यमाणं स्यात् संभाव्यते। क्रियाऽपि उपमानत्वेनोपादीयमाना यदि धर्मान्तरापेक्षिणी, तदाऽनवस्थाऽत्र = क्रियाया उपमानोप-मेयभावे इत्याशङ्क्य निदर्शनपूर्वकमनवस्थामभ्युपगन्तुमाह—यथा प्रकर्षः सर्वत्र इति।

अस्यार्थः—यथा प्रकर्षः सर्वत्र=द्रव्ये गुणे क्रियायां जातौ निमित्तान्तरहेतुकः, "शुक्लतरः पटः, शुक्लतरमस्य रूपम्, चलतरः, गोतरः" इत्युदाहरणानि।

प्रकर्षस्य निमित्तान्तरहेतुकत्वं व्यवहारप्रसिद्धया साधयति—द्रव्यवदिति।

यतः स प्रकर्षो द्रव्यवद् गुणशब्देऽपि=गुणशब्दवाच्येऽपि निमित्तमपेक्षते, अतः स सर्वत्र निमित्तान्तरहेतुकः। एवमपि तत्रानवस्थादूषणत्वेन नाभ्युपगम्यते, त्रिचतुरकोटिजन्मनोऽधिकाया जिज्ञासाया अभावादिति।

अयं भावः—न वै द्रव्यस्य स्वतः प्रकर्षापकर्षौ स्तः, किन्तु निमित्तान्तरहेतुकौ इति शेष इत्यभ्युपगमेन निरुपाधेः=असाधारणधर्मरहितस्य अतिशयादर्शनात् संसर्गिधर्मान्तर-

हेतुकोऽतिशयः। एवं यदासौ शुक्लो गुणोऽतिशयवत्त्वेन विवक्ष्यते, तदा द्रव्यायमाणः स्वशब्देनाभिहितो भास्वरतादिस्वगतनिमित्तापेक्षस्तथोच्यते शुक्लतरमस्यरूपमिति॥४५ ॥

अत्रैवार्थे निदर्शनान्तरमाह—

**यो य उच्चार्यते शब्दः स स्वरूपनिबन्धनः।**
**यथा तथोपमानेषु व्यपेक्षा न निवर्तते ॥ ४५४ ॥**

इह करणसन्निवेशी परिगृहीतक्रमः शब्दो वाचकः 'अग्निमन्तोदात्तमधीष्व' इति। तस्य च निरुपाधेर्वाचकतायोग इति स्वरूपक्रममुपाधित्वेनासावाश्रयति। तथा च तदधिष्ठानाः श्रुतयः प्रत्याय्यमर्थमभिनिविशन्त इति ब्रह्मकाण्डेऽभिहितम्। तदेव च संहृतक्रमं स्वरूपमस्याभिधेयमत्रार्थमपि स्वरूपाच्छुरितं शब्दो वक्तीति निर्णीतचरम्। तत्र करणसंनिवेशिनः स्वरूपाच्छुरितस्य वाचकत्वे प्रयोगस्थं वाच्यं स्वरूपम्। तदपि

---

निमित्तकः प्रकर्षोऽस्य=द्रव्यस्य व्यवस्थापितः। 'शुक्लतरः पटः' इति स्वसमवायिशुक्लगुणहेतुकोऽतिशयः।

एवं यदाऽसौ शुक्लो गुणोऽतिशयवत्त्वेन विवक्ष्यते, तदा द्रव्यायमाणः स्वशब्देनाभिहितः, न तु सामान्यशब्देन, तदा भास्वरतादिरूपस्वगत=गुणगतनिमित्तापेक्षस्तथोच्यते=तरबादिप्रत्ययान्तेन उच्यते 'शुक्लतरमस्य रूपम्' इति ॥ ४५३ ॥

अत्रैवार्थे निदर्शनान्तरम्=अन्यं दृष्टान्तं वैशद्येन बुद्ध्यारोहाय आह—यो य उच्चार्यते इति।

अस्यार्थः—यो यः शब्द उच्चार्यते स स्वरूपनिबन्धनः, स्वरूपं संहृतक्रमं प्रयोगस्थं निबन्धनं निमित्तं यस्य क्रमवतः स्थानप्रयत्नादिरूपकरणसंनिवेशिन उच्चार्यमाणस्य शब्दस्य स तथाभूतोऽग्निमन्तोदान्तमधीष्वेत्यादौ। तत्र यथा संहृतक्रमेण स्वरूपेणाच्छुरितस्य करणसंनिवेशिनः शब्दस्य वाचकत्वे प्रयोगस्थमक्रमं स्वरूपं वाच्यम्, तदपि यदा करणोपारोहि तत्राप्यपरं संहृतक्रमं वाच्यं कल्पयितव्यमित्येवमनवस्थासत्त्वेऽपि सा न मूलक्षतिकरी, जिज्ञासासत्त्वे त्रिचतुरादिकोटौ। पर्यवसानसंभवात्, तथा क्रियारूपेषु साधारणधर्मरूपनिमित्तव्यपेक्षा अस्त्येव, न त्वनवस्थाभिया साम्यनिमित्तत्वेन साधारणधर्मव्यपेक्षा निवर्तते, जिज्ञासासत्त्वे त्रिचतुरादिकोटौ पर्यवसानसम्भवादिति।

अयं भावः—इह स्थानप्रयत्नादिरूपकरणसंनिवेशी परिगृहीतक्रमः=क्रमवान् शब्दो वाचकोऽग्निमन्तोदात्तमधीष्वेत्यादौ। तस्य च निरुपाधेः=प्रवृत्तिनिमित्तरूपोपाधिशून्यस्य वाचकत्वायोग इति स्वरूपमक्रमम्=उच्चार्यमाणानुपूर्वीरहितम्, प्रयोगस्थमसौ=उच्चार्यमाणः शब्द उपाधित्वेनाश्रयति। तथा च यत्संहृतक्रमं स्वरूपं प्रयोगस्थं तदधिष्ठानाः=तत्प्रवृत्तिनिमित्तिकाः श्रुतयः=उच्चार्यमाणाः शब्दाः प्रत्याय्यमर्थं वक्तुमभिनिविशन्त इति ब्रह्मकाण्डेऽभिहितम्। तदेव च संहृतक्रमं प्रयोगस्थं स्वरूपमस्य=उच्चार्यमाणस्य क्रमवतः शब्दस्याभिधेयम्, अत्रार्थमपि स्वरूपाच्छुरितम् उच्चार्यमाणः शब्दो वक्तीति प्राङ् निर्णीतप्रायम्। तत्र स्थानप्रयत्नादि-

यदा करणोपारोहि, तदाप्यपरं वाच्यं संहृतक्रमं कल्पयितव्यमिति सर्वत्र त्रितयमन्वयि, निमित्तं तद्वानभिधेयं चेति। तदेव वीप्सया सार्वत्रिकत्वेन दर्शयति—यो य इति।

यदपि हि प्रवृत्तिनिमित्तं स्वरूपं, तदपि यदा करणसन्निवेशि भवति तदापरं प्रवृत्तिनिमित्तमवश्यापेक्ष्यम्, निरुपाधेर्वाचकत्वाभावादिति कृतनिर्णयमेतत् काण्डान्तरे, पूर्वमिहापीति पुनरिह न वितन्यते।

एवं यथा प्रकर्षे धर्मान्तरस्य यावत् सम्भवो वचसस्तावत् परिकल्पनं स्वरूपे च स्वरूपान्तरस्य, तथौपम्येऽपि तन्निमित्तस्य प्रकल्पनादुपमानमुपमेयं तयोश्च साधारणो धर्म इति सर्वत्र त्रितयमपरिहार्यम्। अतश्च ब्राह्मणवत् क्षत्रियोऽधीत इत्यध्ययनं साधारणो धर्मः। तस्याप्युपमानत्वे ब्राह्मणाध्ययनेन क्षत्रियाध्ययनं तुल्यमिति सौष्ठवादिधर्मान्तरं साधारणं कल्प्यम्। तस्याप्युपमानत्वेऽन्यदिति शब्दव्यापारोपरमान्निवृत्तेर्नानवस्थेयं मूलक्षतिकरी, पर्यवसानसम्भवात् ॥ ४५४ ॥

तदेवं शुद्धायाः क्रियायास्तृतीयासमर्थाया असम्भव इति पूर्वपक्षभाष्यं समर्थितम्।

---

रूपकरणसंनिवेशिनः संहृतक्रमं यत्स्वरूपं तदाच्छुरितस्य वाचकत्वे संहृतक्रमं प्रयोगस्थं यत्स्वरूपं तत्तस्य वाच्यम्। तदपि यदा करणोपारोहि, तदाऽप्यपरं तस्य वाच्यं संहृतक्रमं कल्पयितव्यमिति रीत्या सर्वत्र त्रितयमन्वयि=अनुगतम् उच्चार्यमाणस्य प्रवृत्तिनिमित्तभूतं संहृतक्रमम्, तद्वान् उच्चार्यमाणः करणोपारोही शब्दः, तदभिधेयश्चेति।

वप्सया तदेव सार्वत्रिकत्वेन दर्शयति—यो य उच्चार्यत इति।

यदपि हि उच्चार्यमाणस्य शब्दस्य प्रवृत्तिनिमित्तभूतं स्वरूपम्, तदपि यदा करणसंनिवेशि भवति, तदाऽपरं तस्य प्रवृत्तिनिमित्तमवश्यापेक्ष्यम्, निरुपाधेः=प्रवृत्तिनिमित्तरहितस्य वाचकत्वाभावादिति कृतनिर्णयमेतत् काण्डान्तरे, पूर्वमिहापि काण्डे इति पुनरिह नेह वितन्यते।

एवं यथा प्रकर्षे धर्मान्तरस्य यावत् संभवो वचसः, तावत् परिकल्पनम्, स्वरूपे च स्वरूपान्तरस्य, तथौपम्येऽपि तन्निमित्तस्य साधारणधर्मस्य प्रकल्पनात्, उपमानम्, उपमेयम्, तयोश्च साधारणो धर्म इति त्रितयं सर्वत्रापरिहार्यम्। अतश्च ब्राह्मणवदधीते क्षत्रिय इत्यत्राध्ययनं साधारणो धर्मः। तस्याप्युपमानत्वे ब्राह्मणाध्ययनेन तुल्यं क्षत्रियाध्ययनमित्यत्र सौष्ठवादिरूपं साधारणं धर्मान्तरं कल्प्यम्। तस्यापि उपमानत्वेऽन्यद् अपूर्वत्वादिरूपमिति त्रिचतुरादिकोटौ जिज्ञासोपरमे शब्दव्यापारोपरमादनवस्थानिवृत्तेर्नानवस्थेयं मूलक्षतिकरी=प्रथमस्य उपमानत्वनिमित्तस्य 'ब्राह्मणवदधीते क्षत्रियः' इत्यत्राध्ययनरूपस्य क्षतिकरी न, त्रिचतुरादिकोटौ जिज्ञासोपशमे पर्यवसानसंभवादिति ॥ ४५४ ॥

तदेवं शुद्धायाः=लिङ्गसंख्यादिसंबन्धशून्यायाः साध्यस्वभावायाः क्रियायास्तृतीयासमर्थाया असंभवात् क्रिया चेदित्यस्य तेनेति प्रकृत्यर्थविशेषणत्वपक्षे पूर्वपक्षभाष्यं समर्थितम्।

इदानीम् 'अत्रैवेदमयुक्तं वर्तते' इति यद् भाष्यम्, तत् पूर्वपक्षसमर्थानुवादेन गमयति—

क्रियावृत्तेस्तृतीयान्तस्यैतच्चासंगते सति ।
प्रसिद्धन्यायकरणो भाष्ये युजिरुदाहृतः ॥ ४५५ ॥

इदमयुक्तं वर्तत इति युजिक्रियायाः करणं किमिति नोपात्तमिति चोद्ये कथ्यते प्रसिद्धत्वात् करणस्य भाष्यकारेणानुपादानं वचनेनेत्यर्थः। तथाहि—तृतीयान्तस्य क्रियावचनस्योक्तेन न्यायेनासम्भवः प्रतिपादित इति न्यायलक्षणमत्र करणं प्रसिद्धेः साक्षान्न निर्दिष्टम्, तेन न्यायेनायुक्तमित्यर्थः। यत् किल क्रियास्वरूपसामर्थ्यपर्यालोचनया साधनमवगम्यते, तस्य स्वशब्देनोपादानमनादृतम्।

तद्यथा—अर्हन्निति विशिष्टमेव कर्म सत्कारादि प्रतीयत इति न स्वशब्देनोपादीयते। वर्षतीति च प्रसिद्धेः कर्मणोऽकर्मिकेयं क्रियोक्ता, कर्तापि चात्र प्रसिद्ध इति न स्वशब्देनावश्यं कथ्यते देव इति ॥ ४५५ ॥

---

इदानीम् "अत्रैवेदमयुक्तं वर्तते" इति यद् भाष्यम् "अत्रैव = क्रियायाः प्रकृत्यर्थविशेषणत्वपक्षे एव, इदम् = क्रियायास्तृतीयासमर्थत्वम्, अयुक्तम् = न्यायेन असंबद्धं वर्तत इत्यर्थकम्, तत्पूर्वपक्षसमर्थनानुवादेन गमयति = अर्थतो ज्ञापयति—क्रियावृत्तेरिति।

अस्यार्थः—एवञ्च = क्रियायाः प्रकृत्यर्थविशेषणत्वे च, क्रियावृत्तेः = क्रियाभिधायिनः, तृतीयान्तस्य पदस्य प्रागुक्तरीत्याऽसंभवे सति, प्रसिद्धन्यायकरणः = प्रसिद्धं न्यायरूपं करणं यस्य स तथाभूतो युजिः = युज् धातुः, भाष्ये = "अत्रैवेदमयुक्तं वर्तते" इति भाष्ये उदाहृतः = उक्तः। तथा च न्यायेनायुक्तमिति तदर्थ इति। प्रसिद्धचा तु न्यायेनेत्यस्य करणस्याप्रयोग इति।

अयं भावः—'इदमयुक्तं वर्तते' इति भाष्ये युजिक्रियायाः करणं किमिति नोपात्तमिति चोद्ये = प्रश्ने समाधानं कथ्यते = अत्र न्यायरूपस्य युजिकरणस्य प्रसिद्धत्वाद् भाष्यकारेण वचनेन = शब्दतः अनुपादानमित्यर्थः। तथाहि—तृतीयान्तस्य साध्यस्वभावक्रियावचनस्य नामपदस्य प्रागुक्तेन न्यायेनासंभवः प्रतिपादितः, आख्यातेनैव साध्यस्वभावक्रियाभिधानादिति न्यायरूपं युजिकरणं प्रसिद्धत्वात् साक्षात् शब्देन न निर्दिष्टम्, ततो न्यायेनायुक्तमित्यर्थः। यद् किल साधनं क्रियास्वरूपसामर्थ्यपर्यालोचनयाऽवगम्यते, तस्य स्वशब्देनोपादानमनादृतम्, वैयर्थ्यात्।

तद् यथा—'अर्हन्' इत्यत्र विशिष्टमेव = विलक्षणमेव सत्कारादिरूपं कर्मप्रसिद्धचा प्रतीयत इति न स्वशब्देनोपादीयते। 'वर्षति' इत्यत्र च जलरूपस्य कर्मणः प्रसिद्धेः अकर्मिकेयम् = वर्षणक्रिया उक्ता। कर्ताऽपि चात्र देवः प्रसिद्धत्वादेव नावश्यं स्वशब्देनोच्यत इति ॥ ४५५ ॥

यस्तु मन्यते—अन्तर्भूतमत्र क्रियास्वरूप एव न्यायलक्षणं करणमिति न प्रयोग-मर्हतीति, तन्मतं निरस्यति—

अन्तर्भूते तु करणे प्रयोगो न पुनर्भवेत् ।
न्यायेनायुक्तमित्यत्र जीवतौ प्राणकर्मवत् ॥ ४५६ ॥

यथा जीवति प्राणान् धारयति, जायतेऽस्त्यात्मानं बिभर्तीति प्राणादिलक्षणस्य कर्मणः क्रियास्वरूपेऽन्तर्भावाज्जीवति प्राणान्, अस्त्यात्मानमिति प्रयोगो न भवति, एवं न्यायलक्षणस्य करणस्य युजावन्तर्भावे न्यायेनायुक्तमुपपत्त्याऽयुक्तमिति न कदाचित् प्रयोगो भवेत् । बहिर्भूतं हि साधनं क्रियायाः पृथक् प्रयोगमर्हति, नान्तर्भूतम् ।

तस्मात् प्रसिद्धिरेवात्र करणस्याप्रयोगेऽनुसरणीया । एतच्चान्वाख्यानसमय-पालनाय कथ्यते, अयुक्तमित्यस्य शब्दस्यान्वाख्याने युजिक्रिया प्रकृत्यर्थः, करणं न्याय इति ॥ ४५६ ॥

परमार्थतः पुनर्निरस्तावयवविभागोऽयं शब्दो नात्र काचिद् युजिक्रिया, यस्याः करणमुच्येत, व्युत्पत्तिकर्मणि केवलं क्रियेयं परिकल्प्यत इत्याह—

---

अयुक्तमित्यत्र भाष्ये युजिक्रियास्वरूप एव न्यायरूपं करणमन्तर्भूतमिति न प्रयोगमर्हतीति यस्तु मन्यते, तन्मतं निरस्यति—अन्तर्भूते त्विति ।

अस्यार्थः—अयुक्तमित्यत्र न्यायरूपे करणे युजिक्रियास्वरूपे अन्तर्भूते तु न्यायेनायुक्त-मित्यत्र तस्य पुनः प्रयोगो न भवेत् । जीवतौ प्राणकर्मवत्—यथा प्राणधारणरूपे जीव्धात्वर्थे प्राणरूपस्य कर्मणोऽन्तर्भावात् 'प्राणान् जीवति' इति न प्राणपदस्य पृथक् प्रयोग इति ।

अयं भावः—'जीव प्राणधारणे, जनी प्रादुर्भावे, भू सत्तायाम्, अस भुवि' इति गणे धात्वर्थो निर्दिश्यते । तत्र, सत्ता आत्मधारणानुकूलो व्यापारः, प्रादुर्भावोऽपि आत्मधारणमेव । तथा च—यथा जीवति प्राणान् धारयति, जायते, अस्ति—आत्मानं धारयति इति प्राणादिरूपस्य कर्मणः क्रियारूपे धात्वर्थेऽन्तर्भावाज्जीवति प्राणान्, अस्त्यात्मानमिति प्रयोगो न भवति, तथा न्यायरूपस्य करणस्य युजौ युजि धात्वर्थेऽन्तर्भावे न्यायेनायुक्तम्, उपपत्त्याऽयुक्तमिति न कदाचित् प्रयोगो भवेत् । धात्वर्थाद् बहिर्भूतं हि साधनं क्रियायाः=क्रियावाचकादाख्यातपदात् पृथक् प्रयोगम्=पृथक् प्रयुज्यमानपदबोध्यत्वम् अर्हति, नान्तर्भूतम् । तस्मात् प्रसिद्धिरेवात्र=अयुक्त-मित्यत्र युजिकरणस्य न्यायस्याप्रयोगे हेतुत्वेनानुसरणीया । एतच्चान्वाख्यानसमयपालनाय= अयुक्तपदान्वाख्यानमर्यादापालनाय कथ्यते, अयुक्तमित्यस्य शब्दस्यान्वाख्याने=प्रकृतिप्रत्यय-तदर्थानुशासने युजिक्रियाप्रकृत्यर्थः, तस्यां करणं न्याय इति ॥ ४५६ ॥

परमार्थतः—पुनर्निरस्तावयवविभागोऽयमयुक्तशब्दो नात्र काचिद् युजिक्रिया, यस्या न्यायलक्षणमन्यद् वा करणमुच्येत, अयुक्तपदस्य व्युत्पत्तिकर्मणि केवलं क्रियेयं युजिलक्षणा परिकल्प्यत इत्याह—शास्त्राभ्यासायेति ।

शास्त्राभ्यासाय भेदोऽयमयुक्तमिति वर्ण्यते ।
अशोभनमसम्बद्धमिति रूढिर्व्यवस्थिता ॥ ४५७ ॥

अन्वाख्याने व्युत्पत्तिनिमित्तमनुगुणाया युजिक्रियाया अस्या उपादानादकरणिकाया अस्या असम्भवात् प्रसिद्धो न्यायः करणं साक्षान्नोपात्तमिति भाष्यकाराभिप्रायोऽयमस्माभिर्व्याख्यायते ।

प्रयोगे तु लौकिके निरस्तावयवविभागोऽशोभनमसम्बद्धमन्याय्यमश्लिष्टमयुक्तशब्दः प्रतिपादयतीति नात्र युजिक्रिया काचिदित्यनेनैवाशयेन भाष्यकारः करणं नात्र निरदिक्षत् ॥ ४५७ ॥

तदेवं क्रियावाचिनस्तृतीयान्तस्याभावात् प्रकृत्यर्थविशेषणपक्षाक्षेपः । असम्भव एव त्वस्य पक्षस्येति प्रतिपादयितुमाह—

विविभक्तिः प्रकृत्यर्थं प्रत्युपाधिः कथं भवेत् ।
विभक्तिपरिणामे च प्रकल्प्यं विषयान्तरम् ॥ ४५८ ॥

तेनेति तृतीयासमर्था प्रकृतिरत्र प्रधानं विशेष्यत्वात् । तदर्थमुद्दिश्य क्रियेत्ययमुपाधिः प्रथमान्तत्वेन भिन्नविभक्तिः कथमुपपद्यते, सामानाधिकरण्याभावात् । 'अर्थ-

---

अस्यार्थः—अभ्यसनेन हि विद्या प्रसीदति इत्यभिप्रेत्य व्याकरणशास्त्राभ्यासाय अयुक्तमित्ययं भेदः=लक्ष्यविशेषो वर्ण्यते व्याख्यायतेऽस्माभिः, अत्र न्यायरूपं युजिकरणं लोकप्रसिद्धत्वात् साक्षान्नोपात्तमिति भाष्यकाराभिप्रायमालम्ब्येति ।

वस्तुतस्तु निरस्तावयवविभागोऽयमयुक्तशब्दो नात्र युजिरस्ति, न वा तत्करणम् । एवञ्चायुक्तशब्दोऽवयवतदर्थभेदरहितोऽशोभनमसंबद्धमित्यर्थमाह । एवमयुक्तशब्दे रूढिर्व्यवस्थिता; न त्ववयवप्रविभागलक्षणो योगोऽत्रेति ।

अयं भावः—अयुक्तपदेऽन्वाख्यानेऽनुगुणाया युजिक्रियाया उपादानादकरणिकाया अस्या असंभवाद् अयुक्तपदव्युत्पत्तिनिमित्तं प्रसिद्धो न्यायः करणं साक्षान्नोपात्तमिति भाष्याकाराभिप्रायोऽयमस्माभिर्व्याख्यायते ।

लौकिके प्रयोगे तु निरस्तावयवविभागोऽयुक्तशब्दोऽशोभनमसंबद्धमन्याय्यमश्लिष्टमर्थं रूढ्या प्रतिपादयतीति नात्र युजिक्रिया काचिदित्यनेनैवाशयेन भाष्यकारः करणं नात्र निरदिक्षत्=निर्दिष्टवान् इति ॥ ४५७ ॥

तदेवं क्रियावाचिनस्तृतीयान्तस्याभावात् प्रकृत्यर्थविशेषणपक्षाक्षेपः=क्रियाया वतिप्रकृत्यर्थविशेषणत्वपक्षाक्षेपः ।

वस्तुतस्तु अस्य पक्षस्य=प्रकृत्यर्थविशेषणत्वपक्षस्य असंभव एवेति प्रतिपादयितुमाह—विविभक्तिः प्रकृत्यर्थमिति ।

अस्यार्थः—विविभक्तिः=विशेष्याद् विरुद्धा विभक्तिर्यस्य स विविभक्तिः "तेन तुल्यम्" (पा० ५।१।११५) इति सूत्रे प्रथमान्तः क्रियाशब्दः तेनेति तृतीयान्तपदार्थं प्रकृत्यर्थं प्रति

विशेष उपाधिस्तदन्तवाच्यः समानशब्दो यः' इति हि समानाधिकरणोऽर्थ उपाधित्वेन लक्षितः। तद्यथा—दृतिहरिः पशुः। दण्डः प्रहरणमस्यां दाण्डा। 'सास्य देवता' (पा० ४।२।२४) इति प्राजापत्य इत्यादि।

विशेषणं त्ववच्छेदकमात्रलक्षणं विविभक्तमपि भवति। यथा गार्गिकया श्लाघत इति श्लाघा। तत्रैतत् स्यात्, सम्बन्धान्यथानुपपत्त्या विभक्तिविपरिणामः कल्प्यत

---

उपाधिः कथं भवेद्, सामानाधिकरण्याभावात्। अर्थविशेष उपाधिस्तदन्तवाच्यः समानशब्दो य इत्युपाधिलक्षणात्।

अस्यार्थः—यस्तदन्तवाच्यः सूत्रोपात्तप्रकृतिपदोत्तरविभक्तिसजातीयविभक्त्यन्तपदवाच्यः। अत एव समानशब्दः=वतिप्रकृतिसजातीयविभक्तिप्रकृतित्वेन समानो यः शब्दस्तद्वाच्यः, अर्थविशेषः=प्रकृत्यर्थं प्रति अभेदेन प्रकारीभूतः स उपाधिरिति।

यदि चात्र सूत्रे प्रथमान्तस्य क्रियापदस्य तृतीयान्तेन तेनेति पदेन अभेदेनान्वयानुपपत्त्या तृतीयान्तत्वेन विभक्तिविपरिणामः कल्प्यते, तदा प्रकृत्यर्थोपाधिबोधकस्य क्रियापदस्य विभक्तिपरिणामे च प्रथमान्तस्यात्र सूत्रे उपात्तस्य क्रियापदस्य विषयान्तरमुत्पत्तिवाक्यमन्यत्प्रकल्प्यम्, यत्र श्रुतस्य कृतार्थस्य च प्रथमान्तस्य क्रियापदस्यात्र सूत्रे तृतीयान्तत्वेन विभक्तिविपरिणामः कल्प्येत, न चेदं संभवति, क्रियापदप्रथमान्तत्वस्येदमेवोत्पत्तिवाक्यमित्यवधारणादिति।

अयं भावः—सूत्रे श्रुता तेनेति तृतीया समर्था प्रकृतिरत्र=सौत्रे वाक्यार्थबोधे प्रधानम्, विशेष्यत्वात्। तदर्थमुद्दिश्य=तेनेति प्रकृतिपदार्थमुद्दिश्य क्रियेत्ययम्=प्रथमान्तक्रियापदार्थः प्रथमान्तत्वेन=प्रथमान्तक्रियापदबोध्यत्वेन भिन्नविभक्तिः=भिन्नविभक्तिकपदबोध्य उपाधिः कथमुपपद्यते, सामानाधिकरण्याभावात्। "अर्थविशेष उपाधिस्तदन्तवाच्यः समानशब्दो यः" इति हि समानाधिकरणोऽर्थ उपाधित्वेन लक्षितः।

तद् यथा—दृतिहरिः पशुः। दृतिं नासारज्जुं हरति इति दृतिहरिः। "हरतेर्दृतिनाथयोः पशौ" (पा० ३।२।२५) इति सूत्रेणात्र कर्तरि इनिप्रत्ययः। अत्र "कर्तरि कृत्" इत्यतोऽनुवृत्ते कर्तरि इत्यत्र पशौ इति उपाधिः, सामानाधिकरण्यात्। 'दण्डः प्रहरणमस्यां क्रीडायां दाण्डा'। तदस्यां प्रहरणमिति "क्रीडायां णः" इति सूत्रेण अस्यां प्रहरणमित्यर्थे णप्रत्ययः।

अत्र प्रत्ययार्थे विशेषणीभूते अस्यामिति पदस्यार्थे क्रीडायामित्युपाधिः। प्रजापतिर्देवताऽस्य प्राजापत्यः पशुपुरोडाशादिः। अत्र "साऽस्य देवता" (पा० ४।२,२४) इति सूत्रेण अस्येत्यर्थे 'ण्य' प्रत्ययः। अत्र देवतेति सा इति प्रकृत्यर्थस्य उपाधिः। एषु उदाहरणेषु यथाक्रमं पशौ इति कर्तरि इत्यस्य प्रत्ययार्थस्य उपाधिः। क्रीडायामिति अस्यामित्यस्य प्रत्ययार्थविशेषणस्य उपाधिः। देवता इति सा इत्यस्य प्रकृत्यर्थस्य उपाधिरिति ध्येयम्। विशेषणं तु अवच्छेदकमात्रस्वरूपं विभक्त्यपि=विशेष्यविरुद्धविभक्तिकमपि भवति। यथा 'गार्गिकया श्लाघते' इति श्लाघा।

अत्र हि—"गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु" (पा० ५।१।१३४) इति सूत्रेण 'गार्ग्य' शब्दाद् गोत्रप्रत्ययान्ताद् भावे वुञ् प्रत्ययः। श्लाघा तु भावप्रत्ययेन अवाच्यापि भावरूपे प्रत्ययार्थे विशेषणीभूता विरुद्धविभक्तिका समभिव्याहृताख्यातपदवाच्या। तत्रैतत्स्यात्=

इति। तच्च न, श्रुतस्य प्रथमान्तत्वस्येदमेवोत्पत्तिवाक्यमित्यन्यत्र कृतार्थत्वाभावात् कथं विपरिणामः? विपरिणामे हि विषयान्तरं प्रकल्प्यम्, यत्र कृतार्थत्वं स्यात्, अन्यथा प्रथमान्तश्रुतेर्निष्फलता स्यात्। ऊहन्यायो हि परिणामः। तत्र च प्रकृतौ श्रुतस्य विकृतावन्यथात्वं न्याय्यम् ॥ ४५८ ॥

एतदेवोपपादयति—

**विभक्त्यन्तरयोगो हि यस्य तद्विषयान्तरे।**
**विभक्त्यन्तरसम्बन्धः सामर्थ्यादनुमीयते ॥ ४५९ ॥**
**सारूप्यात् तु तदेवेदमिति तत्रोपचर्यते।**
**शब्दान्तरे विभक्त्या तु युक्तं शास्त्रे तदश्रुतम् ॥ ४६० ॥**

यस्य शब्दस्य श्रुता विभक्तिः क्वचिद् विषये केनचिदुपकारेण समन्वयमेति,

---

संभाव्यते। तेनेति तृतीयान्तस्य क्रियेति प्रथमान्तेन सह संवन्धान्यथाऽनुपपत्त्या क्रियेति प्रथमान्तस्य पदस्य तृतीयान्ततया विभक्तिविपरिणामः कल्प्यत इति। तच्च न, श्रुतस्य क्रियेति प्रथमान्तत्वस्येदमेव सूत्रमुत्पत्तिवाक्यमिति अन्यत्र कृतार्थत्वाभावात् कथं विपरिणामः? विपरिणामे हि विषयान्तरं प्रकल्प्यम्, यत्र क्रियेति प्रथमान्तश्रुतेः कृतार्थत्वं स्यात्। अन्यथा=तृतीयान्ततया विभक्तिविपरिणामे प्रथमान्तश्रुतेर्निष्फलता स्यात्। ऊहन्यायो हि परिणामः=ऊहे निर्णीतो न्यायो हि विभक्तिविपरिणामः। तत्र च=ऊहे च प्रकृतियागे श्रुतस्य विकृतियागेऽन्यथात्वम्=विपरिणामो न्याय्यम्।

यथाऽऽग्नेययागः सौर्यचरुयागस्य विकृतिरूपस्य प्रकृतिः। तत्र प्रकृतिवद् विकृतिः कर्तव्या इत्यभ्युपगमेन प्रकृतियागे श्रुतस्य अग्नये इति पदस्य विकृतियागे सूर्याय इत्यूहः। सोऽयं प्रकृत्यूहः। चतुर्थी विभक्तिस्तु सैव विकृतियागे—या प्रकृतौ इति ॥ ४५८ ॥

एतदेव=यस्य विभक्तिविपरिणामस्तस्य तद्विभक्त्यन्तस्य विषयान्तरे कृतार्थत्वमावश्यकमित्येतदेव उपपादयति पद्यद्वयेन—विभक्त्यन्तरयोगो हि इति, सारूप्यात्तु इति च।

अस्य पद्यद्वयस्यार्थः—यस्य हि शब्दस्य क्वचिद् विषये विभक्त्यन्तरयोगो दृष्टः, तस्य शब्दस्य तद्विषयान्तरे=तस्माद् विषयादन्यस्मिन् विषये विभक्त्यन्तरसंबन्धो विभक्तिविपरिणामलक्षणः सामर्थ्यात्=पदान्तरसंबन्धानुपपत्ति सामर्थ्यादनुमीयते।

वस्तुतस्तु शास्त्रेऽश्रुतं तत् शब्दान्तरे भिन्नया विभक्त्या युक्तमिति युज्यते। प्रकृतिरूपे विभक्त्यन्तैकदेशी आनुपूर्व्या सारूप्यात्तु तत्र तदेवेदमिति उपचर्यते=अभेदारोपेण व्यवह्रियते भेदेऽपीति।

अयं भावः—यस्य शब्दस्य क्वचिद् विषये श्रुता विभक्तिः केनचिदुपकारेण समन्वयमेति=पदान्तरसंबन्धमनुभवति, तस्य शब्दस्य प्रकृतत्वात् स्वरितलिङ्गात् साक्षादनिर्दिष्टसंबन्धिनि

तस्यान्यस्मिन् योगे साक्षादनिर्दिष्टसम्बन्धिनि प्रकृतत्वात् स्वरितलिङ्गादपेक्षणीयत्वे श्रुतयैव विभक्त्या समन्वयायोगे तदन्यथानुपपत्त्या तदन्वययोग्यविभक्त्यन्तर-सम्बन्धोऽनुगम्यते। तत्र च नित्यत्वाच्छब्दार्थसम्बन्धस्य नोपात्तस्य शब्दस्य तदर्थस्य वान्यथाभावो युज्यत इति शब्दान्तरमेव योग्यविभक्तियुक्तं साक्षादनुच्चारितमप्युत्प्रेक्ष्यते। प्रकृतिभागेन तु पूर्वेण सादृश्यादभेदाध्यवसाये स एव शब्दो विभक्त्यन्तरेण परिणमत इति परिणामव्यवहारः। तद्यथा—तदेव क्षीरं दधि जातमिति परिणामः। अत्रापि हि क्षीरधर्माणां केषाञ्चिदन्वयाद् भेदेऽपि क्षीराद् दध्नः परिदृश्यमाने, परिणामव्यवहार-स्तदेवेदमिति च प्रत्यभिज्ञानम्।

एवमिहापि प्रत्ययभागभेदेऽपि प्रकृतिभागान्वयादभेदाध्यवसायः।

इत्थं च विभक्तिविपरिणामो भावतोऽन्यस्यैव कल्पनमूह इति कथमुत्पत्ति-वाक्य एव श्रुतस्य युज्यते ? प्रकृतौ ह्युपयुक्तस्य विकृतावूहो न्याय्यः।

तथा हि—"भूवादयो धातवः"(पा० १।३।१)इति संज्ञासम्बन्धे धातव इति प्रथमायाः श्रुतायाश्चरितार्थत्वे 'अनुदात्तङित—' (पा० १।३।१२) इत्यादौ समन्वयान्यथानुपपत्त्या

---

अन्यस्मिन् योगे=सूत्रे अपेक्षणीयत्वे पूर्वं श्रुतयैव विभक्त्या समन्वयायोगे=पदान्तरसम्बन्धा-संभवे=तदन्यथाऽनुपपत्त्या=संबन्धान्यथानुपपत्त्या तदन्वययोग्यविभक्त्यन्तरसंबन्धोऽनुगम्यते= अनुमीयते।

तत्र च=विभक्त्यन्तरसंबन्धेऽनुमिते च शब्दार्थसंबन्धस्य नित्यत्वात् सूत्रे उपात्तस्य शब्दस्य तदर्थस्य वाऽन्यथाभावो न युज्यत इति शब्दान्तरमेव योग्यविभक्तियुक्तं साक्षादनुच्चारितमपि उत्प्रेक्ष्यते=कल्प्यते। विभक्तितः पूर्वेण प्रकृतिभागेन तु सादृश्यादभेदाध्यवसाये यः पूर्वं विभक्त्यन्तरयुक्तः श्रुतः स एव शब्दो विभक्त्यन्तरेण परिणत इति विभक्तिविपरिणाम-व्यवहारः।

तद् यथा—'तदेव क्षीरं दधि जातम्' इति परिणामो व्यवह्रियते। अत्रापि हि क्षीराद् दध्नो भेदे परिदृश्यमानेऽपि क्षीरधर्माणां केषाञ्चित् श्वैत्यादीनां दध्नि अन्वयात् परिणामव्यवहार-स्तदेवेदमिति च प्रत्यभिज्ञानम्। एवमिहापि=प्रकृतेऽपि प्रत्ययभागभेदेऽपि=विभक्त्योर्भेदेऽपि प्रकृतिभागस्योभयत्रापि अन्वयात् तदेवेदमित्यभेदाध्यवसायः।

इत्थञ्च विभक्तिविपरिणामो भावतः=स्वरूपतः अन्यस्यैव कल्पनमूहरूपमिति कथमुत्पत्ति-वाक्ये एव=यत्र यद् विभक्त्यन्तं श्रुतं तत्रैव तद्विभक्तिविपरिणामो युज्यते। प्रकृतौ हि उप-युक्तस्य विकृतावूहो न्याय्यः।

तथा हि—"भूवादयो धातवः" ( पा० १।३।१ ) इति भूवादीनां संज्ञासंबन्धे निर्दिश्य-माने धातव इति श्रुतायाः प्रथमायाश्चरितार्थत्वे जाते तस्याः 'अनुदात्तङित' इत्यादौ भिन्न-विभक्तिके समन्वयान्यथानुपपत्त्या पञ्चम्यन्तं धातोरिति शब्दान्तरमनुमीयते। तस्मादुच्चार्यमाणा

पञ्चम्यन्तं धातोरिति शब्दान्तरमनुमीयते। तस्मादुच्चार्यमाणा विभक्तिरुपयोगवती कस्मिंश्चिद् वाक्यार्थे प्रदर्शनीया। ततो विभक्तिविपरिणामः कल्प्यते। अन्यथा यद्विभक्तिरवयव उच्चरितस्तद्विभक्त्यर्थापेक्षो वाक्यार्थो यदि नाभिप्रेतः, तदा तद्विभक्त्युच्चारणमनर्थकमेव स्यात्।

न ह्यन्यथोच्चारयितव्येऽन्यथोच्चारयतो वक्तुः कश्चिद् गुणो लक्ष्यते। असम्बद्धाभिधायित्वमेव हि परं स्यात्। क्वचित् पुनरेकविभक्त्यन्तान्तर्भावतात्पर्येण निर्देशाद् यथायथं तदुपयोगो युज्यत एव। तद्यथानल्विधाविति सर्वविभक्त्यन्तसमासः। नानाविभक्त्यर्थयोगी हि प्रातिपदिकार्थः सकृन्निर्देशेऽप्यत्राभिप्रेतः।

तथा चार्थतन्त्रे तत्र निर्देशे श्रुताया विभक्तेर्नान्तरीयकत्वमवस्थाप्य विधिशब्दमन्तरेणापि विवक्षितार्थलाभो वर्णितः।

इह तु क्रियेति नियतत्वाद् विभक्त्यर्थस्य नैतद् युज्यते वर्णयितुम्, तृतीयार्थेनैव समन्वयस्येष्टेः ॥ ४५९, ४६० ॥

ततश्च तेनेत्यस्मात् प्रथमं प्रकृतिस्तृतीयान्तावगतेति तदनुरोधात् क्रिययेत्यपि तृतीया निर्दिश्येत। अन्यथा प्रथमानिर्देशे प्रधानस्य तृतीयान्तस्य तदनुरोधेन विपरिणामाभावात् कथं समन्वय इत्याह—

---

विभक्तिः क्वचिद् वाक्यार्थे उपयोगवती प्रदर्शनीया। ततो विभक्तिविपरिणामः कल्प्यते। अन्यथा यद्विभक्तिको वाक्यावयवः पदरूप उच्चारितस्तद्विभक्त्यर्थापेक्षो वाक्यार्थो यदि नाभिप्रेतः, तदा तद् विभक्त्युच्चारणमनर्थकमेव स्यात्। न ह्यन्यथोच्चारयितव्येऽन्यथोच्चारयतो वक्तुः कश्चिद् गुणो लक्ष्यते। असंबद्धाभिधायित्वमेव हि परम्=केवलं स्यात्। क्वचित् पुनरनेकविभक्त्यर्थान्तर्भावतात्पर्येण निर्देशाद् यथायथं तदुपयोगः=वाक्यार्थे तत्तद्विभक्त्यर्थोपयोगो युज्यत एव।

तद् यथा—अनल्विधावित्यत्र सर्वविभक्त्यन्तस्याल्पदस्य विधिशब्देन समासः। नानाविभक्त्यर्थयोगी हि प्रातिपदिकार्थः सकृन्निर्देशेऽपि अत्र तन्त्रेणाभिप्रेतः। तथा चार्थतन्त्रे तत्र देशे श्रुताया अनल्पदोत्तरविभक्तेर्नान्तरीयकत्वमवस्थाप्य विधिशब्दमन्तरेणापि=विनाऽपि विवक्षितार्थलाभः=नानाविभक्त्यर्थघटितवाक्यार्थलाभो वर्णितो भाष्यादौ।

इह तु क्रियेत्यत्र विभक्त्यर्थस्य नियतत्वाद् नैतत्=प्रातिपदिकार्थस्य नानाविभक्त्यर्थयोगित्वम् वर्णयितुं युज्यते, तृतीयार्थेनैव समन्वयस्येष्टेः, न तु नानाविभक्त्यर्थेन, अनिष्टेरिति ॥ ४५९ ॥ ४६० ॥

ततश्च=क्रियायाः प्रकृत्यर्थविशेषणत्वपक्षाभ्युपगमाच्च तेनेत्यस्मात् प्रथमम्=क्रियापदार्थावबोधात् प्राक् प्रकृतिस्तृतीयान्तावगतेति तदनुरोधात् क्रिययेति तृतीया निर्दिश्येत। अन्यथा क्रियेति प्रथमानिर्देशे तदनुरोधेन प्रधानस्य तृतीयान्तस्य 'गुणे त्वन्याय्यकल्पने'ति न्यायेन विपरिणामाभावात् कथं समन्वयः स्यादित्याह—प्रकृतिश्चेदिति।

प्रकृतिश्चेत् तृतीयान्ता तेनेत्यस्मात् प्रतीयते ।
क्रियेति प्रथमान्ता सा कथं भवितुमर्हति ॥ ४६१ ॥

परिणामायोगस्योपपादितत्वाद् विविभक्तित्वे कथं सम्बन्ध इत्युक्तमेतत् ॥ ४६१ ॥

सत्यपि वा विभक्तिविपरिणामे तेनेत्यनेन क्रिययेत्यस्यासमन्वय एवेत्याह—

क्रिययेति तृतीया च प्रयोगे कस्य कल्प्यताम् ।
तेनेत्यस्य हि सम्बन्धः सूत्रस्थेन न विद्यते ॥ ४६२ ॥

सूत्रे श्रुतेन तेनेत्यनेन क्रियेत्यस्य लिङ्गभेदात् सम्बन्धो न विद्यत इति कस्य प्रयोगे क्रिययेति तृतीयोपाधिः कल्प्यताम्, न कस्यचिदित्यर्थः। समानलिङ्गस्य सम्बन्धिनः प्रयुज्यमानस्यासम्भवात्। क्रियया तुल्यमित्येवं प्रत्ययार्थेन समन्वये तु प्रकृतेरयमुपाधिर्न स्यात् ॥ ४६२ ॥

---

अस्यार्थः—चेत्=यदि, तेनेत्यस्मात् तृतीयान्ता प्रकृतिः प्रतीयते, तदा सा विभक्तिविपरिणामाभावस्य पूर्वमुपपादितत्वात् क्रियेति प्रथमान्ता कथं भवेदिति ।

अयं भावः - परिणामायोगस्य=क्रियेति प्रथमायाः श्रुताया अत्र अन्यत्र वा कृतार्थत्वाभावे विभक्तिविपरिणामाभावस्य पूर्वमुपपादितत्वाद् विविभक्तिकत्वे = विशेष्यप्रकृतिकविभक्तिविरुद्धविभक्तिकत्वे कथं संवन्ध इत्युक्तमेतदिति ॥ ४६१ ॥

क्रिया चेदित्यत्र प्रथमान्ते क्रियापदेन विभक्तिविपरिणामोऽस्यैवोत्पत्तिवाक्यत्वेन प्रथमाविभक्तेरन्यत्राकृतार्थत्वादित्युक्तं प्राक् । सत्यपि वा यथाकथञ्चिद् विभक्तिविपरिणामे तेनेत्यनेन सह क्रिययेत्यस्यासमन्वय एवेत्याह- -क्रिययेति तृतीया चेति ।

अस्यार्थः—हि=यतः, तेनेत्यस्य प्रयोगस्थतृतीयान्तानुकरणरूपस्य प्रकृतसूत्रस्थेन क्रियापदेन प्रथमान्तेन क्रियापदेन, विभक्तिविपरिणत्या तृतीयान्तेन वा सामानाधिकरण्येन संबन्धो न विद्यते । आद्ये भिन्नविभक्तिकत्वाद् भिन्नलिङ्गकत्वाच्च, द्वितीये भिन्नलिङ्गकत्वादिति । तुल्यमित्यनेनापि तस्य संबन्धो न विद्यते । तृतीयासमर्थया क्रियया तुल्यमित्येवं वतिप्रत्ययार्थेन समन्वये हि तेनेत्ययं प्रकृतेरुपाधिर्न स्यात् । एवञ्च विभक्तिविपरिणामे कस्य सौत्रे प्रयोगे क्रिययेति तृतीया कल्प्यताम्, न कस्यचिदित्यर्थ इति ।

अयं भावः—"तेन तुल्यम्" ( पा० ५।१।११५ ) इति सूत्रे श्रुतेन तेनेत्यनेन क्रियेत्यस्य विभक्तिविपरिणामेऽपि लिङ्गभेदात् संबन्धो न विद्यते इति कस्य सौत्रे प्रयोगे क्रिययेति तृतीया=तृतीयान्तार्थ उपाधिः कल्प्यताम्, न कस्यचिदित्यर्थः । सामानलिङ्गस्य सामानाधिकरण्येन क्रियासंवन्धिनः सूत्रे प्रयुज्यमानस्य असंभवात् । क्रियया तुल्यमित्येवं प्रत्ययार्थेन सह तस्य संबन्धे तु अयम्=तृतीयान्तक्रियापदार्थः प्रकृतेरुपाधिर्न स्यात्, प्रत्ययार्थविशेषणत्वादिति ॥ ४६२ ॥

तदेवं सम्बन्धमाक्षिप्य समर्थयितुमाह—

**सोपस्कारेषु सूत्रेषु वाक्ये शेषः समर्थ्यते ।**
**तेन यत् तत् तृतीयान्तं क्रिया चेत् सेति गम्यते ॥ ४६३ ॥**

इह सूत्रवाक्यानां क्रियापदाश्रवणात् साध्याहारत्वमवसीयते । लक्ष्यानुगुण्येन च लक्षणप्रणयनाद् यथायथं लक्ष्यभेदानुसारेण क्रियापदमध्याहर्तव्यम् । ततश्चात्र चेच्छब्देन सम्बन्धभेदस्यावेदनाद् यत् तत् तृतीयासमर्थं क्रिया चेत् सा भवतीत्येवं वाक्यशेषसमर्थनादुपपन्नः सम्बन्धः ।

अयमत्राशयः—मा भूत् सूत्र एव विपरिणामः । तस्य तु यत् समन्वयवाक्यं व्याख्यानरूपम्, तत्र परिणामोपपत्तिः । तत्र च तेनेति तृतीयानिर्देशः प्रकृतेस्तृतीयान्तताप्रज्ञापने चरितार्थ इति चेच्छब्देन पुनः प्रत्यवमृश्योपाधिसम्बन्धमनुभवितुं स्वातन्त्र्यमापादितस्य तस्य युज्यते यथोपाधिपरिणामः ।

तद्यथा—"इको गुणवृद्धी" (पा० १।१।३) इत्यस्याः परिभाषायाः समग्रप्रधान-

---

तदेवं सौत्रे प्रथमान्ते क्रियापदे विभक्तिविपरिणामे, तदभावे वा क्रियापदस्य सौत्रपदसंबन्धमाक्षिप्य तं समर्थयितुमाह—सोपस्कारेषु इति ।

अस्यार्थः—सोपस्कारेषु=साध्याहारेषु सूत्रेषु, उपस्क्रियते=परिष्क्रियते सूत्रार्थो, येनासौ उपस्कारोऽध्याहारः । अध्याहारेण हि सूत्रवाक्यं परिष्क्रियते, अध्याहाराभावे हि सूत्रं साकाङ्क्षत्वाद् वाक्यार्थबोधजननेऽसमर्थं भवति । एवं सूत्रेषु सोपस्कारेषु व्यवस्थितेषु सूत्रवाक्ये क्रियापदाद्यध्याहाररूपः शेषः समर्थ्यते सूत्रकृता तत्र तत्र स्वरितत्वप्रतिज्ञानादनुवृत्तिसूचनेन चकारेण चापकर्षसूचनेन । तेन=सूत्रात्मके वाक्येऽध्याहारसमर्थनेन, क्रिया चेदिति सूत्रांशे 'यत्तत् तृतीयान्तं सा' इत्यध्याहारेण "तेन तुल्यं क्रिया चेद् वतिः (पा० ५।१।११५) इति सूत्रस्यायमर्थो गम्यते ज्ञायते तेन तृतीयान्ताद् वतिर्भवति तुल्यमित्यर्थे, यत्तत् तृतीयान्तं क्रिया चेत् सा इति ।

अयं भावः—इह=अष्टाध्याय्याम् सूत्रेषु क्रियापदाश्रवणात् सूत्रात्मकानां वाक्यानां साध्याहारत्वमवसीयते । अत्राध्याहारेणानुवृत्त्यपकर्षावपि संग्राह्यौ । लक्ष्यानुगुण्येन च लक्षणप्रणयनाद् यथायथं लक्ष्यभेदानुसारेण क्रियापदमन्यद् वा सूत्रेऽश्रुतं पदमध्याहर्तव्यम् । ततश्चात्र सूत्रे चेच्छब्देन वाक्यभेदावेदनद्वारा तत्र पदानां संबन्धभेदस्यावेदनाद् 'यत्तत् तृतीयासमर्थं क्रिया चेत् सा भवति' इत्येवं वाक्यशेषसमर्थनादुपपन्नस्तेनेत्यस्य सूत्रस्थेन क्रियापदेन संबन्धः ।

अयमत्राशयः—मा भूत् सूत्रे एव तेनेत्यस्य वा विभक्तिविपरिणामः । तस्य तु=सूत्रस्य तु यत्समन्वयवाक्यं व्याख्यानरूपं तत्र विभक्तिविपरिणामोपपत्तिः । तत्र च तेनेति तृतीयानिर्देशा वतिप्रकृतेस्तृतीयान्तताप्रज्ञापने पूर्वं चरितार्थं इति चेच्छब्देन वाक्यभेदावेदनद्वारा संबन्धभेदावेदिना पुनः प्रत्यवमृश्य प्रथमान्तपदबोध्यक्रियारूपोपाधिसंबन्धमनुभवितुं स्वातन्त्र्यमापादितस्य तस्य=तेनेति पदस्य प्रथमान्ततया परिणामो यथोपाधि युज्यते, तदुपाधिबोधकस्य क्रियापदस्य प्रथमान्तत्वात् ।

तद् यथा—"इको गुणवृद्धी" (पा० १।१।३) इत्यस्याः परिभाषायाः समग्रप्रधान

विषयोपकारकत्वम् । यत्र तु गुणवृद्धी इति ब्रूयात्, तत्रेक इत्युपस्थितं द्रष्टव्यमिति वाक्याध्याहारेण समर्थ्यते ॥ ४६३ ॥

तदेवमत्र क्रियेत्युपाधेस्तेनेत्युपाधिमता समन्वयो वाक्याध्याहारेण । न चावश्यं समानशब्द एवोपाधिरन्यथापि सम्भवादित्युपाधिवैलक्षण्यं प्रतिपादयितुमाह—

**उपाधेः कस्यचिद् वाक्ये प्रयोग उपलभ्यते ।**
**प्रतीयमानधर्मान् यो न कदाचित् प्रयुज्यते ॥ ४६४ ॥**

"तदस्यां प्रहरणम्"(पा०४।२।५७)इति नेदमेव साक्षात्प्रत्ययविधानवाक्यम्,पञ्चम्या अश्रवणात् । अपि तु प्रयोगे दण्डः प्रहरणमस्यां क्रीडायाम्, मुष्टिः प्रहरणमस्यां क्रीडायामिति भिन्नानां वाक्यानां सामान्येनानुकरणम् । प्रयोगवाक्ये च दण्डादेर्व्यभिचारिणी प्रहरणरूपता सामानाधिकरण्येनोपादीयत इति तथैव सूत्रेऽप्यनुकारः ।

तदयमुपाधिः समानशब्दो यस्य लोकेऽभेदविषये व्यभिचारात् प्रयोगः ।

---

विषयोपकारकत्वम्=सर्वगुणवृद्धिविधायकसूत्रोपकारकत्वम्, यत्र गुणवृद्धी इति ब्रूयात्, तत्रेक इत्युपस्थितं द्रष्टव्यमिति वाक्याध्याहारेण समर्थ्यत इति ॥ ४६३ ॥

तदेवमत्र=तेन तुल्यमित्यादिसूत्रे तेनेत्युपाधिमता सह क्रियेत्युपाधेः समन्वयः=संबन्धो वाक्याध्याहारेण='यत्तत् तृतीयासमर्थं क्रिया चेत् सा भवति' इति वाक्ये सूत्राश्रुतपदाध्याहारेण ।

न चावश्यं समानशब्द एव=समानाधिकरण्येनोपादीयमानशब्दवाच्य एव उपाधिः, अन्यथापि=उपाधिशब्दस्य वैयधिकरण्येनोपादानेऽपि उपाधित्वसंभवादिति उपाधिवैलक्षण्यम्=उपाधीनां वैजात्यम्=प्रभेदं प्रतिपादयितुमाह—उपाधेः कस्यचिदिति ।

अस्यार्थः—कस्यचिदुपाधेः=उपाधिमत्सामानाधिकरण्येन सूत्रे श्रूयमाणस्य, वाक्ये=लौकिकविग्रहवाक्ये प्रयोग उपलभ्यते । तद् यथा—प्रहरणरूपस्य प्रकृत्यर्थोपाधेः—दण्डरूपोपाधिमत्सामानाधिकरण्येन 'तदस्यां प्रहरणमिति कीडायां ण' इति सूत्रे श्रूयमाणस्य—दण्डः प्रहरणमस्यां क्रीडायामिति लौकिकविग्रहवाक्वं प्रयोग उपलभ्यते । तेन न तत्र सूत्रवाक्ये विभक्तिविपरिणामापेक्षा ।

अन्यस्तु उपाधिः प्रतीयमानधर्मा कदाचिदपि वाक्येन प्रयुज्यत इति सूत्रे तद्वाक्यानुकरणाभावे उपाधिशब्दस्य यथाकथञ्चिन्निर्देशेऽपि न काचित् क्षतिः, वाक्यभेदे वाक्याध्याहारेण, अन्यत्र=पूर्ववाक्ये चरितार्थस्य प्रकृतिपदस्य विभक्तिविपरिणामेन च समन्वयोपपत्तेरिति ।

अयं भावः—"तदस्यां प्रहरणम्" ( पा० ४।२।५७ ) इतीदमेव=इत्याकारकमेव सूत्रवाक्यं न साक्षात् णप्रत्ययविधायकम्, किन्तु पञ्चम्यन्ततया विपरिणतं यत् तत्पदं तद्घटितम्, पञ्चम्या आश्रवणात् । सूत्रं तु 'दण्डः प्रहरणमस्यां क्रीडायाम्, मुष्टिः प्रहरणमस्यां कीडायाम्' इति भिन्नानां वाक्यानां सामान्येनानुकरणम्, प्रयोगवाक्ये च दण्डादेः प्रहरणरूपता व्यभिचारिणी, दण्डः साधनमस्यां क्रीडायामित्यादौ तस्या दण्डेऽप्रत्ययात् । सा च तत्र सामानाधिकरण्येनोपादीयते=उपात्तपदेन वोध्यत इति तथैव=सामानाधिकरण्येनैव प्रकृतसूत्रेऽप्यनुकारः । तदयमुपाधिः

अपरः पुनरुपाधिः सामर्थ्यगम्यस्वभावत्वात् प्रयोगे नैव श्रूयते। ततश्च तस्य प्रयोगेऽश्रवणात् सूत्रेऽपि तथैवानुकरणं नास्ति। केवलं यथाकथञ्चित् सूत्रेऽसावुपक्षेप्तव्यः।

तथा चायमिह क्रियालक्षण उपाधिः। नहि ब्राह्मणेन तुल्यमधीते क्षत्रिय इत्यत्र ब्राह्मणगतत्वेन क्रिया साक्षात् प्रयुज्यते, अपि तु सामर्थ्यात् प्रतीयत इति तस्यास्योपाधेः प्रथमान्तस्यापि सूत्रे निर्देशे न कश्चित् पर्यनुयोगः, वाक्याध्याहारेण समन्वयोपपत्तेः ॥ ४६४ ॥

तत्र प्रतीयमानोपाधेरुदाहरणमाह—

**नीलमुत्पलमित्यत्र न विशेष्ये न भेदके।**
**कश्चित् तद्धर्मवचनो वाक्ये शब्दः प्रयुज्यते ॥ ४६५ ॥**

नीलमुत्पलमित्यत्र वाक्ये सामानाधिकरण्यादेव गम्यमानत्वात् तद्धर्मस्य विशेषणविशेष्यत्वस्य तदभिधायी नीलं विशेषणमुत्पलं विशेष्यमिति न प्रयुज्यते शब्दः। केवलं सूत्र एव "विशेषणं विशेष्येण"इति (पा०....) पदयोरवच्छेदार्थं प्रयोगः ॥ ४६५ ॥

---

समानशब्दस्तस्य, यस्य लोकेऽभेदविषये व्यभिचारात् प्रयोगः। अपरः पुनरुपाधिः सामर्थ्यगम्यस्वभावत्वात्=सामर्थ्येन प्रतीयमानस्वरूपत्वात् प्रयोगेणैव श्रूयते। ततश्च तस्य प्रयोगेऽश्रवणात् सूत्रेऽपि तथैव=प्रयोगेऽश्रवणवदेव अनुकरणं नास्ति। केवलं यथाकथंचित् सामानाधिकरण्येन वैयधिकरण्येन वा सूत्रेऽसौ=उपाधिः उपक्षेप्तव्यः=निर्देष्टव्यः।

तथा चायम्=तथैवायम् इह="तेन तुल्यम्०" ( पा० ५।१।११५ ) इति सूत्रे क्रियालक्षण उपाधिः। 'न हि ब्राह्मणेन तुल्यमधीते क्षत्रियः' इत्यत्र वाक्ये ब्राह्मणगतत्वेन क्रिया साक्षात् प्रयुज्यते, अपि तु सामर्थ्यात् प्रतीयत इति तस्य=वाक्ये सामर्थ्यात् प्रतीयमानस्यास्य=क्रियारूपस्योपाधेः प्रथमान्तस्यापि सूत्रे निर्देशे न कश्चित् पर्यनुयोगः=परिप्रश्नः, वाक्याध्याहारेण समन्वयोपपत्तेरिति ॥ ४६४ ॥

तत्र प्रतीयमानोपाधेरुदाहरणमाह—नीलमुत्पलमित्यत्रेति।

अस्यार्थः—'नीलमुत्पलम्' इत्यत्र 'नीलोत्पलम्' इति समासस्य विग्रहवाक्ये न विशेष्ये=न भेदके विशेषणे कश्चित् तद्धर्मवचनः=विशेषणधर्मवचनो विशेषणशब्दः, विशेष्यधर्मवचनो विशेष्यशब्दो न प्रयुज्यते, नीलं विशेषणम्, उत्पलं विशेष्यमिति। सामानाधिकरण्यादेव प्रतीयमानत्वात्। सूत्रे तु प्रयुज्यते—'विशेषणं विशेष्येण बहुलम्' ( पा० २।१।५७ ) इति। अन्यथा पूर्वनिपातावच्छेदो न स्यादिति।

अयं भावः—'नीलमुत्पलम्' इत्यत्र विग्रहवाक्ये तद्धर्मस्य=विशेषणविशेष्यधर्मस्य विशेषणविशेष्यत्वस्य सामानाधिकरण्यादेव प्रतीयमानत्वात् तदभिधायी शब्दो नीलं विशेषणमुत्पलं विशेष्यमिति न प्रयुज्यते। केवलं सूत्र एव विशेषणं विशेष्येण इति विशेष्यविशेषणपदयोः प्रयोगः पूर्वनिपातावच्छेदार्थम्=पूर्वनिपातपरिच्छेदार्थमिति ॥ ४६५ ॥

अतश्च

**अत्यन्तानुगमात् तत्र न सूत्रे न च विग्रहे ।**
**विभक्तिपरिणामेन किञ्चिदस्ति प्रयोजनम् ॥ ४६६ ॥**

अवच्छेद्यावच्छेदकत्वस्यात्यर्थेनान्तर्भावान्नीलं च तदुत्पलं चेत्यत्र वाक्ये विशेष्यशब्दस्य सूत्रे तृतीयान्तस्य विशेष्यमुत्पलमिति नास्ति परिणामफलम्, सामानाधिकरण्यादेव विशेष्यत्वस्यावगतत्वात् ।

इत्थञ्च वाक्ये प्रयोगाभावाद् विशेष्यादेः शब्दस्य सूत्रेऽपि कस्यानुकरणमिदं स्यात्, यदनुरोधाद् विशेष्येणेति तृतीयान्तं प्रथमान्ततया विपरिणम्येत ।

एवञ्जातीयके विषये विभक्तिपरिणामस्याप्रसक्तिः प्रकृतोपपादनपरतयोच्यते । न तु विशेष्येणेत्यत्र विभक्तिपरिणामः समन्वयार्थः सम्भाव्यते, श्रुतेनैव समन्वयोपपत्तेः ॥ ४६६ ॥

---

अतश्च=वाक्ये सामानाधिकरण्यादेव विशेषणविशेष्यभावस्य प्रतीयमानत्वात् सूत्रे वाक्यानुकरणत्वाभावाच्च सूत्रे विग्रहवाक्ये वा विभक्तिविपरिणामस्य प्रयोजनं नास्ति, विग्रहवाक्ये सामानाधिकरण्यादेव विशेषणविशेष्यभावस्य प्रतीत्या सूत्रस्य विग्रहवाक्यानुकरणत्वाभावादित्याह—अत्यन्तानुगमादिति ।

अस्यार्थः—तत्र=नीलमुत्पलमिति विग्रहवाक्ये, विशेषणविशेष्यत्वरूपस्यार्थस्य, अत्यन्तानुगमात्=अत्यर्थेनान्तर्भावात्, सूत्रे तृतीयान्तस्य विशेष्यशब्दस्य विग्रहे च प्रथमान्तस्य विशेष्यशब्दस्य विभक्तिविपरिणामेन किञ्चित् प्रयोजनं नास्ति, सूत्रस्य विग्रहवाक्यानुकरणत्वाभावात् । विग्रहवाक्ये च विशेषणविशेष्यत्वरूपस्यार्थस्यात्यन्तानुगमात् प्रथमान्तस्य विशेष्यपदस्य प्रयोगाभावादिति ।

अयं भावः—नीलञ्च तदुत्पलञ्चेत्यत्र वाक्येऽवच्छेद्यावच्छेदकत्वरूपस्यार्थस्य=विशेष्यविशेषणत्वरूपस्यार्थस्य सामानाधिकरण्यादेव प्रतीत्याऽत्यर्थेन=अत्यन्तम्, अन्तर्भावाद् विशेष्यमुत्पलमित्येवं विशेष्यशब्दस्याप्रयोगेण विभक्तिविपरिणामफलं नास्ति । सूत्रस्य च विग्रहवाक्यानुकरणत्वाभावेन सूत्रे तृतीयान्तस्य विशेष्यशब्दस्य प्रथमान्ततया विपरिणामफलं नास्ति । 'नीलमुत्पलम्' इति विग्रहवाक्ये च सामानाधिकरण्यादेव विशेष्यत्वस्यावगतत्वाद् विशेष्यमुत्पलमित्येवं प्रथमान्तप्रयोगफलं नास्ति ।

इत्थञ्च वाक्ये विशेष्यादेः शब्दस्य प्रयोगाभावात् सूत्रेऽपि कस्यानुकरणमिदं विशेष्यादिपदं स्यात् ? यदनुरोधाद् विशेष्येणेति तृतीयान्तं प्रथमान्ततया विपरिणम्येत ।

एवञ्जातीयके विषये=वाक्यानुकरणत्वाभाववति सूत्रे विभक्तिविपरिणामस्याप्रसक्तिः प्रकृतोपपादनपरतयोच्यते, न तु विशेष्येणेत्यत्र तृतीयान्तस्य सूत्रघटकपदसमन्वयार्थो विभक्तिविपरिणामः संभाव्यते । श्रुतेनैव=विभक्तिविपरिणामं विना समन्वयोपपत्तेरिति ॥ ४६६ ॥

अत एवैतन्निदर्शनीकृत्य प्रकृते योजयितुमाह—

**तृतीयान्तं क्रियेत्येतद् विग्रहे न प्रयुज्यते ।**
**यथा दण्डः प्रहरणं क्रीडायामिति दृश्यते ॥ ४६७ ॥**

ब्राह्मणेन तुल्यमधीते क्षत्रिय इत्यत्र विग्रहवाक्ये क्रिययेति तृतीयान्तस्य प्रयोगो नास्ति । यस्मादुपमेये श्रुता क्रियेति सामर्थ्यादुपमानेऽपि प्रतीयेत । अन्यथोपमानोपमेयभाव एव न स्यादिति वाक्येऽप्रयुज्यमानायाः क्रियायाः किमनुरोधाद् विपरिणामः सूत्रे स्यादिति यथाकथञ्चिदप्युपक्षेपेऽस्योपाधेर्न दोषः ।

दण्डः प्रहरणमस्यां क्रीडायामित्यत्र तु वाक्ये प्रहरणस्योपाधेः प्रयोगो दृश्यते । प्रहरणक्रियासाधकतमत्वं हि दण्डस्य न दण्डपदप्रयोगादेव गम्यते, स्वार्थमात्रस्य ततः प्रतिपत्तेरिति स्वशब्देन प्रहरणमित्यनेन तस्य तत्त्वमावेद्यते । तथा च तथैव सूत्रेऽनुकारः ॥ ४६७ ॥

---

अत एव=एवं जातीयके विषये विभक्तिविपरिणामाप्रसक्तेः प्रकृतोपपादनपरतया उच्यमानत्वादेव एतन्निदर्शनीकृत्य प्रकृते योजयितुमाह—तृतीयान्तं क्रियेत्येतदिति ।

अस्यार्थः—ब्राह्मणेन तुल्यमधीते क्षत्रिय इत्यत्र ब्राह्मणवदिति वत्यन्तस्य विग्रहवाक्ये क्रिया इत्येतत् पदं तृतीयान्तं न प्रयुज्यते, यदि प्रयुज्येत, तदा उपमेये श्रुता तृतीयान्तपदावगता क्रिया उपमानेऽपि सामर्थ्यात् प्रतीयेत इति वाक्येऽप्रयुज्यमानायाः क्रियायाः किमनुरोधाद् विभक्तिविपरिणामः सूत्रे स्यादिति क्रियारूपस्योपाधेः कयाऽपि विभक्त्या सूत्रे प्रयोगे दोषाभाव इति न विभक्तिविपरिणामः । यथा 'दण्डः प्रहरणमस्यां क्रीडायाम्' इति 'दाण्डाः' इत्यस्य विग्रहवाक्ये प्रहरणरूपस्योपाधेः प्रयोगो दृश्यते, तथा प्रकृते ब्राह्मणवदित्यस्य विग्रहवाक्ये 'ब्राह्मणेन तुल्यमधीते क्षत्रियः' इत्यत्र क्रिययेति तृतीयान्तस्य प्रयोगो न दृश्यते इति वैधर्म्ये दृष्टान्त इति ।

अयं भावः—'ब्राह्मणेन तुल्यमधीते क्षत्रियः' इत्यत्र ब्राह्मणवदधीते इत्यस्य विग्रहवाक्ये क्रिययेति तृतीयान्तस्य प्रयोगो नास्ति । यत उपमेये क्षत्रियादौ विग्रहवाक्ये श्रुता क्रियेति सामर्थ्यादुपमाने ब्राह्मणेऽपि प्रतीयेत । अन्यथा=उपमाने तस्या अप्रतीतौ उपमानोपमेयभाव एव न स्यादिति विग्रहवाक्येऽप्रयुज्यमानायाः क्रियायाः किमनुरोधाद् विभक्तिविपरिणामः सूत्रे स्यादिति यथाकथञ्चित्=प्रथमान्ततया तृतीयान्ततया वा क्रियारूपस्यास्योपाधेः सूत्रे उपक्षेपेऽपि=प्रयोगेऽपि न दोषः=न सौत्रपदान्तरसमन्वयाभावरूपो दोषः, प्रागुक्तरीत्या वाक्यभेदेन समन्वयोपपत्तेः । दण्डः प्रहरणमस्यां क्रीडायामित्यत्र तु वाक्ये प्रहरणस्योपाधेः प्रयोगो दृश्यते । प्रहरणक्रियायां साधकतमत्वरूपं करणत्वं हि दण्डस्य न दण्डपदप्रयोगादेव गम्यते, स्वार्थमात्रस्य=दण्डमात्रस्य ततः=दण्डपदात् प्रतिपत्तेरिति प्रहरणमित्यनेन स्वशब्देन=प्रहरणक्रियासाधकतमरूपकरणबोधकशब्देन तस्य तत्त्वम्=दण्डस्य प्रहरणक्रियासाधकतमत्वरूपं करणत्वम् आवेद्यते । तथा च यथा वाक्ये, तथैव सूत्रेऽनुकरणम् 'तदस्यां प्रहरणमिति क्रीडायां णः' इति ॥ ४६७ ॥

तत्रैतत् स्यात्। नीलं विशेषणं विशेष्यमुत्पलमित्यपि प्रयोगो दृश्यत इति कथमिदमन्तर्भूतधर्मण उपाधेर्निदर्शनं स्यादित्याशङ्क्यापरं निर्विवादमत्रोदाहरणमाह—

**घविधौ घश्च संज्ञायामिति सूत्र उदाहृतम्।**
**उपादानं प्रयोगेषु तस्यात्यन्तं न विद्यते ॥ ४६८ ॥**

"पुंसि संज्ञायां घः प्रायेण" (पा० ३।३।११८) इत्यत्र घप्रत्ययविधौ संज्ञायामिति प्रयुक्तो य उपाधिः, तस्य प्रयोगेष्वत्यन्तमनुच्चारणम्, प्रकृतिप्रत्ययसमुदायस्य संज्ञात्वात् समानशब्दोऽयमुपाधिर्गतार्थत्वान्नोपादीयते। एवं क्रिययेत्यपि ॥ ४६८ ॥

तत्रैतत् स्यात्—प्रधानानुविधायित्वाद् गुणानां तेनेत्यभिसम्बन्धे क्रिययेत्यवश्यं विपरिणमनीयमित्याशङ्क्याह—

---

तत्र=नीलमुत्पलमित्यत्र विग्रहवाक्ये विशेषणपदं विशेष्यपदञ्च न प्रयुज्यते, सामानाधिकरण्यादेव विशेषणविशेष्यभावस्य प्रत्ययादित्यत्र प्रागुक्तेऽर्थे एतत् स्यात्=संभाव्यते। नीलं विशेषणं विशेष्यमुत्पलमित्यपि प्रयोगो दृश्यत इति कथमिदमन्तर्भूतधर्मण उपाधेर्निदर्शनम्=उदाहरणं स्यादित्याशङ्क्यापरं निर्विवादमत्रोदाहरणमाह—घविधाविति।

अस्यार्थः—घविधौ=घप्रत्ययविधायके "पुंसि संज्ञायां घः प्रायेण" (पा० ३।३।११८) इति सूत्रे घश्च=घस्तु संज्ञायां भवति इति उदाहृतम्=उक्तम्। किन्तु तस्य=संज्ञायामित्यस्य प्रयोगेषु उपादानम्=उच्चारणम् अत्यन्तं न विद्यते, प्रकृतिप्रत्ययसमुदायेनैव दन्तच्छदादौ संज्ञायाः प्रत्ययादिति।

अयं भावः—"पुंसि संज्ञायां घः प्रायेण" (पा० ३।३।११८) इत्यत्र घप्रत्ययविधौ संज्ञायामिति य उपाधिः प्रयुक्तः, तस्य प्रयोगेषु अत्यन्तमनुच्चारणम्, प्रकृतिप्रत्ययसमुदायस्य संज्ञात्वात् तेनैव गतार्थत्वात् समानशब्दोऽयं संज्ञायामित्युपाधिः दन्तच्छदादिप्रयोगेषु नोपादीयते, एवं क्रियारूपोऽप्युपाधिः—'ब्राह्मणेन तुल्यमधीते क्षत्रियः' इति विग्रहवाक्ये क्रियया इत्येवं न प्रयुज्यते, उपमेये श्रुतायास्तस्या उपमाने सामर्थ्यादेव प्रत्ययात्। अन्यथा उपमानोपमेयभावो नोपपद्येतेति ॥ ४६८ ॥

तत्र=क्रियेत्यस्य सौत्रस्य प्रथमान्तस्य पदस्य तृतीयान्ततया विभक्तिविपरिणामविषये एतत् स्यात्=संभाव्यते, गुणानां प्रधानानुरोधित्वात् क्रियेति प्रथमान्तस्य उपाधिरूपतया गुणीभूतो योऽर्थस्तद्बोधकस्य तेनेत्यनेन तृतीयान्तेन प्रधानीभूतार्थबोधकेन सह अभिसंबन्धे क्रियमाणे क्रियेति पदं क्रिययेत्येवं रूपेण तृतीयान्ततयाऽवश्यं विपरिणमनीयम् इत्याशङ्क्याह—यैरप्रयुक्तैरिति।

**यैरप्रयुक्तैः संस्कारः प्रधानेषु प्रतीयते ।**
**ते भेदेऽपि विभक्तीनां निर्दिश्यन्त उपाधयः ॥ ४६९ ॥**

प्रयोगे प्रयोगमन्तरेणापि क्रियेत्ययमुपाधिः प्रधानातिशयाय प्रभवतीति किं प्रधानानुवृत्त्या ?

तथा हि—भिन्नविभक्तित्वेऽपि यदि प्रधानोपकारो विघटते, तदा प्रधानविभक्तिराश्रीयेत । यावतान्यविभक्तित्वेऽपि व्यवच्छेदमात्रफलत्वादुपाधेर्लभ्यते प्रधानोपकार इति न तद्विभक्तावत्रादरः ।

तथा हि—क्रिययेत्यपि विभक्त्युपादाने भिन्नलिङ्गत्वादसामानाधिकरण्यं तदवस्थमितिं यथाकथञ्चिदप्युपक्षेपे गुणानां लभ्यते प्रधानोपकारसम्पादनायोपादानतात्पर्यादभिसम्बन्ध इति स्थितम् ॥ ४६९ ॥

---

अस्यार्थः—यैरप्रयुक्तैरपि उपाधिभिः प्रधानेषु संस्कारः=उपाधिकृतव्यवच्छेदलक्षणो य उपकारस्तद्रूपोऽतिशयः प्रतीयते, उपमेये क्षत्रिये अध्ययनक्रियाश्रवणेन सामर्थ्यादुपमाने ब्राह्मणेऽपि तत्प्रत्ययसंभवात्, अन्यथा उपमानोपमेयभावासंभवात् । ते उपाधयो विभक्तीनां भेदेऽपि प्रधानप्रकृतिकविभक्तितो भिन्नजातीयत्वेऽपि सूत्रें निर्दिश्यन्ते, प्रागुक्तरीत्या वाक्यभेदेन समन्वयसंभवाद् इति योजना ।

तद् यथा—'ब्राह्मणेन तुल्यमधीते क्षत्रियः' इत्यादिविग्रहवाक्ये ब्राह्मणगताध्ययनक्रियारूप उपाधिर्यद्यपि न प्रयुज्यते, तथापि तदपेक्षया प्रधानीभूते ब्राह्मणे, अथवा प्रत्ययविधौ उद्देश्यत्वेन प्रधानीभूतप्रकृत्यर्थतया प्रधानीभूते ब्राह्मणे तदुपाधिकृतः संस्कारः प्रागुक्तलक्षणः प्रागुक्तरीत्या प्रतीयते, अतः स क्रियालक्षण उपाधिः "तेन तुल्यम्" इति सूत्रे प्रथमान्तपदबोध्यः । तेनेत्यतो भिन्नविभक्तिकपदबोध्येऽपि सूत्रे निर्दिश्यते, वाक्यभेदेन पदसमन्वयसंभव इति ।

अयं भावः—'ब्राह्मणाध्ययनेन तुल्यं क्षत्रियाध्ययनम्' इति विग्रहे अध्ययनक्रियारूपोपाधिप्रयोगे, 'ब्राह्मणेन तुल्यमधीते क्षत्रियः' इत्यादिविग्रहवाक्ये च प्रयोगमन्तरेणापि क्रियेत्ययमुपाधिः प्रागुक्तरीत्या प्रागुक्तरूपप्रधानातिशयाय प्रभवतीति किं तस्य प्रधानानुवृत्त्या=विभक्तिपरिणामलक्षणेन प्रधानानुसरणेन ?

तथाहि—यदि उपाधेर्भिन्नविभक्तिकत्वेऽपि तत्कृतः प्रधानोपकारः प्रागुक्तलक्षणो विघटते, तदा उपाधिबोधकपदादपि विभक्तिविपरिणामेन प्रधानविभक्तिराश्रीयेत, यावता= यतः. अन्यविभक्तिकत्वेऽपि उपाधेः स्वाश्रयव्यवच्छेदमात्रफलकत्वाद् लभ्यते प्रागुक्तरीत्या वाक्यभेदेन पदसमन्वयद्वारा उक्तलक्षणः प्रधानोपकार इति न तद्विभक्तौ=प्रधानविभक्तौ अत्र=उपाधौ आदरः ।

तथाहि—उपाधौ विभक्तिविपरिणामेन क्रियेत्येवं भिन्नविभक्त्युपादानेऽपि भिन्नलिङ्गत्वादसामानाधिकरण्यं तदवस्थमिति गुणानाम्=उपाधिबोधकपदानां यथाकथञ्चिदपि=सामानाधिकरण्येन वैयधिकरण्येन वा सूत्रे उपक्षेपे लभ्यते गुणानां प्रागुक्तरीत्याप्रधानाभिसंबन्धः, प्रधानोपकारसंपादनाय सामानाधिकरण्येन वैयधिकरण्येन वा उपाध्युपादाने तात्पर्यादिति स्थितमिति॥४६९॥

एवं प्रकृत्यर्थविशेषणपक्षे क्रियावचनस्य तृतीयान्तस्यासम्भवात् 'सर्वे एते शब्दा गुणसमुदायेषु वर्तन्ते' इति क्रियावाचिनस्तृतीयान्ततासमर्थनार्थं यद् भाष्यम्, तदिदानीं व्याचष्टे—

समुदायेषु वर्तन्ते भावानां सहचारिणाम् ।
शब्दास्तत्त्वाविवक्षायां समुच्चयविकल्पयोः ॥ ४७० ॥

गौरत्वशुच्याचारत्वपिङ्गलकेशत्वादीनां नियतजात्याच्छुरितानां सहभाविनां धर्माणां यः समुदायः, तत्र वाचकत्वेन ब्राह्मणादिशब्दा वर्तन्ते ।

यद्यपि चैते धर्माः कदाचिद् व्यभिचारान्न नियोगतः सहभाविनः, तथापि ये यज्जातिसहचरा धर्मास्ते तज्जातिनिमित्तेन शब्देनोच्यन्त इति ब्राह्मणत्वादिजात्या सहभावोऽव्यभिचारो विवक्षितः ।

अत एव च शब्दार्थसङ्करो न भवति । सर्वेषां मात्राकलापवचनत्वेऽपि नियतजातिसाहचर्योपलक्षिताः प्रतिनियता एव शब्दानामर्था यतः । तदेतत् पुनः

---

एवं प्रकृत्यर्थविशेषणपक्षे=क्रियावति प्रत्ययप्रकृत्यर्थविशेषणमिति पक्षे साध्यस्वभावायाः क्रियाया आख्यातमात्रवाच्यत्वेन क्रियावचनस्य तृतीयान्तस्यासंभवात् "सर्वे एते शब्दा गुणसमुदायेषु वर्तन्ते"=अस्यार्थः—स्वार्थे द्रव्ये गुणभावापन्ना ये जातिगुणक्रियारूपा धर्माः, तत्समुदायेषु वर्तन्त इति क्रियावाचिनस्तृतीयान्तता समर्थनार्थं यद्भाष्यं तदिदानीं व्याचष्टे—समुदायेषु वर्तन्ते इति ।

अस्यार्थः—सर्वे शब्दाः स्वस्ववाच्यत्वेन नियता या ब्राह्मणत्वादिका जातिस्तत्सहचारिणां तत्समानाधिकरणानां तत्सहितानां च भावानां धर्माणां गौरत्व-शुच्याचारत्व-पिङ्गलकेशत्वादीनां यः समुदायस्तत्र वाचकत्वेन वर्तन्ते, तत्तु शब्दानां समुदायवचनत्वं प्रतिनियतजातिसहचारिणां भावानां समुच्चयविकल्पयोरविवक्षायां भवति । समुच्चयो हि युगपदनेकार्थरूपो भेदाधिष्ठानो विगलितभेदेन समुदायेन सह विरुध्यते । विकल्पस्य समुदायार्थविरोधित्वं तु स्पष्टमेवेति तयोरविवक्षायामेव शब्दानां समुदायवचनत्वमिति ।

अयं भावः—गौरत्वशुच्याचारत्वपिङ्गलकेशत्वादीनां नियतया ब्राह्मणत्वादिजात्याऽऽच्छुरितानाम्=सामानाधिकरण्येन विशिष्टानां सहभाविनां धर्माणां यः समुदयः, तत्र वाचकत्वेन ब्राह्मणादिशब्दा वर्तन्ते ।

यद्यपि चैते धर्माः=ब्राह्मणत्वादिजातिसमानाधिकरणा गौरत्वादयः श्यामादिब्राह्मणादिषु कदाचित् क्वचिद् व्यभिचाराद् न नियोगतः=नियमतो ब्राह्मणत्वादिजातिसहभाविनः, तथापि ये धर्मा यज्जातिसहचराः=यज्जातिसमानाधिकरणाः, ते धर्मास्तज्जातिनिमित्तेन=तज्जातिप्रवृत्तिनिमित्तकेन शब्देनोच्यन्त इति शब्दजन्यप्रत्ययगोचर एव, न तु वस्तुभूतः, ब्राह्मणत्वादिजात्या सहभावोऽव्यभिचारो विवक्षितस्तेषां धर्माणाम् ।

अत एव च=एतादृशाव्यभिचारस्य विवक्षितत्वादेव च शब्दार्थानां परस्परं संकरो न भवति । यतो हि सर्वेषां शब्दानां मात्राकलापवचनत्वेऽपि=स्वविषयार्थसमुदायवचनत्वेऽपि नियतेन जातिसाहचर्येण उपलक्षिताः प्रतिनियता एव शब्दानामार्थाः । तदेतत्पुनः शब्दानां गुणादि-

समुच्चयस्य विकल्पस्य चाविवक्षायां समुदायवचनत्वमच्यते शब्दानाम् । अविद्यमान-विकल्पोऽयं वायं वेत्येवंरूपोऽविद्यमानश्च समुच्चयोऽयं चायं चेत्येवंरूपो यस्य तस्य समुदायस्य विवक्षायाम् ॥ ४७० ॥

ननु मा भूद् विकल्पः समुदायार्थविरोधित्वादत्र, समुच्चयस्तु यगपदनेकार्थरूपः कथं समूहार्थतां विरुणद्धीत्याशङ्कयाह—

**समुच्चयस्तु क्रियते येषु प्रत्यर्थवृत्तिषु ।**
**भेदाधिष्ठानया योगस्तेषां भवति सङ्ख्यया ॥ ४७१ ॥**

प्रत्यर्थवृत्तित्वे वाचकस्य समुदायः समुच्चयरूपेण वाच्यः स्यात् । तथा हि— समकक्ष्यताया समुदायान्तर्गतानामवयवानामभिधाने सर्वे प्राधान्येन समुच्चिता अभिहिता भवन्ति । एवञ्च भेदस्योद्भूतत्वात् प्रधानार्थप्रयुक्तं बहुवचनं स्यात् ।

तद्यथा—वृक्षा इति भेदप्राधान्येनाभिधीयमाना बहुत्वयोगिनः ।

यदा तु वनमितिवद्विगलितभेदः समुदायोऽभिधीयते, तदैकवचनमेवार्थै-कत्वान्न्याय्यम् । तदा च भेदाधिष्ठानस्य समुच्चयस्याभावः । एवमिह समुदायार्थत्वे प्रत्यर्थवृत्तित्वायोगात् समुचयाभावः ॥ ४७१ ॥

---

समुदायवचनत्वं समुच्चयस्य विकल्पस्य चाविवक्षायामुच्यते, अविद्यमानो विकल्पोऽयं वा अयं वा, इत्येवंरूपोऽविद्यमानश्च समुच्चयोऽयं च, अयं च इत्येवंरूपो यस्य तस्य समुदायस्य विवक्षायां शब्दानां समुदायवचनत्वमिति फलितमिति ॥ ४७० ॥

ननु मा भूद् अत्र विकल्पः, एकैकविषयकत्वेन समुदायार्थविरोधित्वात्, समुच्चयस्तु युगपदनेकार्थरूपः कथं समूहार्थतां विरुणद्धि इत्याशङ्क्याह—समुच्चयस्तु क्रियत इति ।

अस्यार्थः—येषु प्रत्यर्थवृत्तिषु=प्रत्येकार्थवाचकेषु शब्देषु प्रयुक्तेषु सत्सु समुच्चयः क्रियते, तेषां शब्दानां भेदाधिष्ठानया भेदाश्रयया भेदनिमित्तिकया संख्यया द्वित्वबहुत्वादिकयाऽर्थद्वारा योगो भवति । तथा चैकवचनानुपपत्तिः ।

अयमत्र निष्कर्षः—समुदायो विगलितभेदः, समुच्चयस्तु भेदाश्रय इति समुच्चयेन सह समुदायस्य विरोधः स्पष्ट इति ।

अयं भावः—वाचकस्य प्रत्यर्थवृत्तित्वे समुदायः समुच्चयरूपेण वाच्यः स्यात् । तथाहि— समुदायान्तर्गतानामवयवानां समकक्ष्यतयाऽभिधाने सर्वे समुच्चिताः प्राधान्येनाभिहिता भवन्ति, न तु समुदाये गुणीभावेन । एवञ्च भेदस्योद्भूतत्वात् प्रधानार्थप्रयुक्तं बहुवचनं स्यात् । तद् यथा— भेदप्राधान्येनाभिधीयमाना वृक्षा इति बहुत्वयोगिनः ।

यदा तु शब्देन विगलितभेदः समुदायोऽभिधीयते, तदा वनमितिवद् एकवचनमेव न्याय्यमर्थैकत्वात्, तदा च=समुदायस्याभिधाने च भेदाधिष्ठानस्य=भेदनिमित्तकस्य समुच्चयस्याभावः । एवमिह समुदायार्थत्वे प्रत्यर्थवृत्तित्वायोगात् समुच्चयाभाव इति ॥ ४७१ ॥

यदि तर्हि न तुल्यकक्ष्यतया मात्राकलापोऽभिधीयते, तदा जातिविशिष्टद्रव्याभिधानपक्षादस्य पक्षस्य को भेद इत्याह—

सर्वैर्विशिष्टास्तैरर्थैर्जन्यन्ते सहचारिभिः ।
बुद्धयः प्रतिपत्तॄणां शब्दार्थास्तानतो विदुः ॥ ४७२ ॥

जातिगुणक्रियाभिः सहभाविभिरर्थैः प्रतिपत्तॄणां यतो विशिष्टाः, तदाच्छुरिता जात्यवच्छिन्नार्थग्राहिण्यो बुद्धयो जायन्ते, अतो बुद्ध्यनुसारेण निरूपितेऽर्थे शब्दप्रयोगात् ततोऽपि तथैव प्रतिपत्तेर्गुणसमुदाय एव प्रतीयमानः शब्दार्थ इति व्यवस्थाप्यते। द्रव्यस्य चार्थक्रियायोगात् तदेव प्रधानं जातिगुणक्रियादिधर्मसंसृष्टमभिधानगोचर इत्यर्थैक्यादत्राप्येकवचनमेव। जात्याविष्टं तु द्रव्यमेवोच्यते द्रव्याभिधानपक्षे।

क्रियागुणास्तु द्रव्यस्य निष्क्रियस्य निर्गुणस्य चानुपपत्तेः सामर्थ्यादवगम्यन्त इति पक्षान्तरादस्य विशेषः पक्षस्य, सर्वस्याप्यभिधागोचरत्वादत्र ॥ ४७२ ॥

---

यदि तर्हि न तुल्यकक्ष्यतया मात्राकलापः=गुणसमुदायः अभिधीयते, तदा जातिविशिष्टद्रव्याभिधानपक्षादस्य पक्षस्य=गुणसमुदायाभिधानपक्षस्य को भेदः=को विशेष इत्याह—सर्वैर्विशिष्टा इति ।

अस्यार्थः—यतः प्रतिपत्तॄणां बुद्धयः, तैः=जातिगुणक्रियारूपैः सर्वैः सहचारिभिः=समानाधिकरणैः सर्वैरर्थैर्विशिष्टा जन्यन्ते, अतस्तान्=जातिगुणक्रियारूपान् अर्थान्=शब्दार्थान् विदुः। बुद्ध्या निरूपितेऽर्थे शब्दप्रयोगात् शब्दादपि बुद्ध्यनुसारेणैवार्थप्रतिपत्तेर्गुणसमुदाय एव शब्दात् प्रतीयमानः शब्दार्थं इति निश्चीयते। द्रव्यस्य चार्थक्रियोपयोगात् तदेव प्रधानं जातिगुणक्रियादिधर्मसंसृष्टमभिधानगोचर इत्यर्थैक्याद् गुणसमुदयाभिधानपक्षेऽप्येकवचनमेव। द्रव्याभिधानपक्षे जात्याविष्टं द्रव्यमेवोच्यते, क्रियागुणास्तु सामर्थ्यादवगम्यन्त इति पक्षद्वये विशेष इति।

अयं भावः—यतः प्रतिपत्तॄणां बुद्धयो जातिगुणक्रियाभिः सहभाविभिरर्थैर्विशिष्टास्तदाच्छुरिता जात्यवच्छिन्नार्थग्राहिण्यो जन्यन्ते, अतो बुद्ध्या निरूपितेऽर्थे बुद्ध्यनुसारेण शब्दप्रयोगात् ततोऽपि=शब्दादपि तथैव=तत्प्रकारकस्यैवार्थस्य प्रतिपत्तेर्गुणसमुदाय एव प्रतीयमानः शब्दार्थ इति व्यवस्थाप्यते। द्रव्यस्य चार्थक्रियामुपयोगात् तदेव प्रधानं जातिगुणक्रियादिधर्मसंसृष्टमभिधानगोचर इत्यर्थैक्यादत्रापि=गुणसमुदायाभिधानपक्षेऽपि एकवचनमेव।

द्रव्याभिधानपक्षे तु जात्याविष्टं द्रव्यमेवोच्यते।

क्रियागुणास्तु निष्क्रियस्य निर्गुणस्य च द्रव्यस्यानुपपत्तेः सामर्थ्यादवगम्यन्त इति पक्षान्तरात्=गुणसमुदायाभिधानपक्षाद् अस्य पक्षस्य=द्रव्याभिधानपक्षस्य विशेषः। अत्र पक्षे=गुणसमुदायाभिधानपक्षे सर्वस्यापि अभिधानगोचरत्वादिति ॥ ४७२ ॥

तदेतदाह—

**संसृष्टाः प्रत्ययेष्वर्थाः सर्व एवोपकारिणः ।**
**तेषां प्रत्ययरूपेण सर्वेषां शब्दवाच्यता ॥ ४७३ ॥**

बाह्यं वस्तु स्वभावत एव निरंशत्वाद् विशिष्टम् । न तत्र भेदपूर्वकः संसर्गव्यवहारः कश्चित् । तत् पुनर्बुद्धौ विपरिवर्तमानमनादिवासनाविभ्रमजुषां प्रत्ययानामविकलमविषय इति परिकल्पितभागविभागेनावसीयते । अवसाय च पृथक् प्रत्ययैरनुसन्धीयते । तथा च प्रत्ययेष्वेवार्था जातिगुणक्रियाद्रव्यलक्षणा भेदपूर्वकं संसर्गं भजन्त इति तदभिप्रायेण समुदायवाचोयुक्तिः ।

तथा हि—प्रत्ययोपारूढाकाराभिधायिनः शब्दा बाह्यमभिनिविशन्तेऽभेदाध्यवसायादिति मात्राकलापात्मनोऽर्थस्य सर्वस्यैव बुद्धिविपरिवर्त्याकारानुविधानेन वाचकाः शब्दा व्यवस्थाप्यन्ते । बुद्धावपि च यथाबाह्यं गुणप्रधानभावेनार्थानामुपरोहाद् जातिगुणक्रियासंसृष्टस्य द्रव्यस्यैव प्राधान्येनाभिधानादैकार्थ्यं भवति ॥ ४७३ ॥

---

तदेतत्=गुणसमुदायः शब्दात् प्रतीयमानः शब्दार्थ इत्येतदाह—संसृष्टप्रत्ययेष्वर्था इति ।

अस्यार्थः—शाब्दे व्यवहारे उपकारिणः सर्वेऽर्थाः प्रत्ययेषु तादात्म्येन संसृष्टाः, तेषां सर्वेषां प्रत्ययरूपेणान्तरेण रूपेण शब्दवाच्यता, न तु बाह्यरूपेण, बाह्यत्वेन प्रत्ययस्तु तेषां बाह्यतादात्म्यापत्त्येति ।

अयं भावः—बाह्यं वस्तु स्वभावादेव विशिष्टम्=सांशाद् विलक्षणम्, निरंशत्वात् । न तत्र शाब्दे व्यवहारे इव संसृज्यमानयोर्द्वयोरर्थयोर्भेदज्ञानपूर्वकः संसर्गव्यवहारः । कश्चित् पुनर्वाक्यार्थरूपो बुद्धौ विपरिवर्तमानः=पदार्थाद्‌विलक्षणेन रूपेण वर्तमानः, अनादिभागविभ्रमजनितवासनाजुषां प्रत्ययानामविकलमविषयः=स्वेन अखण्डरूपेण अविषय इति परिकल्पितपदार्थभागविभागेनावसीयते=निश्चीयते । विभागेन अवसाय च वाक्यार्थप्रत्ययात् पृथग्भूतैः पदार्थप्रत्ययैः स एवानुसन्धीयते । तथा च जातिगुणक्रियाद्रव्यलक्षणा अर्था भेदज्ञानपूर्वकं प्रत्ययेष्वेव परस्परं संसर्गं भजन्त इति तदभिप्रायेण समुदायवाचोयुक्तिः ।

तथाहि—प्रत्ययोपारूढाकाराभिधायिनः=प्रत्ययगोचरार्थाकारवाचकाः शब्दा बाह्येनार्थेन सह स्ववाच्यस्यान्तरस्यार्थस्याभेदाध्यवसायाद् बाह्यमर्थं तत्तादात्म्येनाभिनिविशन्ते=बुद्धौ अभिनिविष्टा भवन्ति इति मात्राकलापात्मनः=गुणसमुदायरूपस्य सर्वस्यैवार्थस्य बाह्यस्य बुद्धिविपरिवर्त्याकारानुविधानेन=आन्तरपदार्थाकारसाम्येन तद्वाचकाः=बाह्यार्थवाचकाः शब्दा व्यवस्थाप्यन्ते । बुद्धावपि च यथा बाह्यम्=बाह्यानामिव गुणप्रधानभावेन आन्तरार्थानामुपारोहाद् जातिगुणक्रियासंसृष्टस्य द्रव्यस्यैव आन्तरस्य प्राधान्यादैकार्थ्येनैकवचनं भवति ॥ ४७३ ॥

यद्येवं द्रव्यस्यैवाभिधानमस्तु, कोऽनुरोधो गुणसमुदायनय इत्याशङ्क्याह—

**केवलानां तु भावानां न रूपमवधार्यते ।**
**अनिरूपितरूपेषु तेषु शब्दो न वर्तते ।। ४७४ ।।**

निरूपणपूर्वकत्वादभिधानस्योपाधिविविक्तस्य च द्रव्यमात्रस्य रूपमगोचरो निरूपणाया इति संसृष्टोपाधि द्रव्यं गुणसमुदायदर्शने शब्दवाच्यम् । तत्र समुदाये वृत्ताः शब्दा अवयवेष्वपि वर्तन्ते ।

तद्यथा—पूर्वे पञ्चाला इत्युक्तम् । जनपदवचनस्य च पञ्चालशब्दस्य प्रसिद्धस्यैकत्वाज्जनपदस्य पूर्वशब्देन विशेषणानुपपत्ताववयववृत्तिः समुदायशब्दस्य ।। ४७४ ।।

ततश्च समुदायात् प्रच्युत्यावयवे वर्तमानः शब्दोऽनित्यमर्थसम्बन्धमाक्षिपेदित्याशङ्क्य समर्थयितुमाह—

**पूर्वशब्दप्रयोगाच्च समूहान्न निवर्तते ।**
**वर्ततेऽवयवे वापि नोपात्तं त्यजति क्वचित् ।। ४७५ ।।**

---

ननु यद्येवं तर्हि द्रव्यस्यैवाभिधानमस्तु, कोऽनुरोधो गुणसमुदायपक्षे भवत इत्याशङ्क्याह—केवलानां तु भावानामिति ।

अस्यार्थः—केवलानाम् = जातिगुणक्रियारूपोपाधिरहितानां तु भावानाम्, रूपम्= स्वरूपं बुद्धौ नावधार्यते=न निरूप्यते । बुद्धया अनिरूपितरूपेषु केवलेषु भावेषु शब्दो न वर्तते । न वृत्तिमान् भवतीति । वृत्तिरत्र अभिधालक्षणाव्यञ्जनात्रयीरूपा ग्राह्या । वैयाकरणनये लक्षणाया असत्त्वे तु द्वयी एवेति ।

अयं भावः—अर्थाभिधानस्य बुद्धयाऽर्थनिरूपणपूर्वकत्वात्, उपाधिविविक्तस्य=उपाधिविरहितस्य च द्रव्यमात्रस्य=केवलस्य द्रव्यस्य स्वरूपं बुद्धिनिरूपणाया अगोचर इति संसृष्टोपाधिद्रव्यम्=जात्यादिरूपोपाधिसंसृष्टं द्रव्यं गुणसमुदायदर्शने=गुणसमुदायः शब्दवाच्य इति पक्षे शब्दवाच्यम् । तत्र समुदाये वृत्ताः शब्दा अवयवेष्वपि वर्तन्ते ।

तद्यथा 'पूर्वे पञ्चालाः' इत्युक्तं भाष्ये । जनपदवचनस्य च पञ्चालशब्दस्य प्रसिद्धस्य पूर्वशब्देन विशेषणानुपपत्तिः, जनपदस्यैकत्वादिति पूर्वपश्चिमोत्तरदक्षिणभागसमुदायवचनस्य पञ्चालशब्दस्यावयवे पूर्वभागरूपे वृत्तिर्यथा तथा प्रकृते गुणसमुदायवचनानामपि शब्दानां क्वचिद् जात्यवच्छिन्ने द्रव्यमात्रेऽपि वृत्तिरिति ।।४७४।।

ततश्च=समुदायवचनानां शब्दानां क्वचिदवयवमात्रे वृत्तिस्वीकाराच्च समुदायात् प्रच्युत्यावयवे वर्तमानः शब्दः शब्दार्थसंबन्धमनित्यमाक्षिपेत्=आक्षेपेण अर्थापत्त्या, अनित्यं बोधयेदित्याशङ्क्य शब्दार्थसंबन्धस्य नित्यत्वं समर्थयितुमाह --पूर्वशब्दप्रयोगाच्चेति ।

शब्दार्थसम्बन्धस्य नित्यत्वान्नेह समुदायाद् वाच्याद् विचलति पञ्चालशब्दः। पूर्वशब्दप्रयोगाद्धेतोर्नाप्यपूर्वमवयवे वाचकत्वमासादयति। निरूढस्य त्यागोऽपूर्वस्य चोपादानं न क्वचिद् विषये शब्दानामिष्टम् ॥ ४७५ ॥

यदि तर्ह्युपात्तस्य समुदायस्य न त्यागः, तदा कथं समन्वयः ? तस्मात् समुदायेन समन्वयान्यथानुपपत्त्या समुदायशब्दोऽप्ययमवयवमुपादास्यत इत्याशङ्क्याह—

**समुदायाभिधायी च यदि भेदं विशेषयेत् ।**
**तत्रातुल्यविभक्तित्वं पूर्वकायादिवद् भवेत् ॥ ४७६ ॥**

एकत्वाज्जनपदस्य पूर्वशब्देन व्यवच्छेदाभावात् समुदायाभिधायी पञ्चालशब्दोऽत्र पूर्वशब्देन सम्बन्धानुरोधाद् भेदमेकदेशं यदि व्यवछिन्द्यात्, तदावयवोपजनिते व्यतिरेके समुदायस्य षष्ठ्या भाव्यमिति समानविभक्तिकत्वं न स्यात्। यथा कायस्य पूर्वः परो वा भाग इति। एवं पञ्चालानां पूर्व इति स्यात्।

---

अस्यार्थः—शब्दार्थसंवन्धस्य नित्यत्वात् पूर्वे पञ्चाला इत्यत्र पञ्चालशब्दः समूहात्=पूर्वादिभागसमुदायरूपाद् स्ववाच्याद् न निवर्तते=न विचलति। पूर्वशब्दप्रयोगाच्च पूर्वशब्दप्रयोगाद् हेतोर्नापि अवयवे वर्तते; नापि अवयवेऽपूर्वा पञ्चालशब्दस्य वृत्तिरित्यर्थः; नापि अभिधावृत्त्या उपात्तं समुदायं क्वचित् त्यजति, शब्दार्थसंवन्धस्य नित्यत्वादिति।

अयं भावः—पञ्चालशब्द इह='पूर्वे पञ्चालाः' इत्यत्र समुदायात्=भागसमुदायरूपात् स्ववाच्याद् न विचलति, शब्दार्थसंवन्धस्य नित्यत्वात्। नापि पूर्वं शब्दप्रयोगाद् हेतोरपूर्वमवयवे वाचकत्वमासादयति। निरूढस्य=प्रसिद्धस्य अर्थस्य त्यागोऽपूर्वस्य चार्थस्योपादानं क्वचिदपि विषये शब्दानां नेष्टम्, शब्दार्थसंवन्धस्य नित्यत्वादिति ॥ ४७५ ॥

ननु यदि पूर्वे पञ्चाला इत्यादौ पञ्चालशब्देनोपात्तस्य समुदायस्य न त्यागः, तदा कथं पूर्वशब्दस्य पञ्चालशब्देन सह समन्वयः=समानाधिकरण्येन संवन्धः ? तस्मात् समुदायेन पूर्वपदार्थस्य समन्वयान्यथानुपपत्त्या समुदायवचनोऽप्ययं पञ्चालशब्दः क्वचिदवयवमुपादास्यते=अभिधास्यते 'पूर्वे पञ्चालाः पञ्चालभागा' इति, इत्याशङ्क्याह—समुदायाभिधायी चेति।

अस्यार्थः—अन्यायश्चानेकार्थत्वं वृत्तिद्वयकल्पने गौरवादिति कृत्वा समुदायाभिधायी च पञ्चालशब्दोऽवयवमनभिदधानो यदि वैयधिकरण्येन भेदं समुदायाद् भिद्यमानं विभज्यमानमेकदेशं विशेषयेत्, तदा तत्र पूर्वकायादिवत् पूर्वं कायस्येतिवद् अतुल्यविभक्तिकत्वं भवेत्, पञ्चालानां पूर्वं इति, न तु तथा सति पूर्वे पञ्चाला इति सामानाधिकरण्येन संवन्ध इति।

अयं भावः—पञ्चालरूपस्य जनपदस्यैकत्वाद् भागवाचिना पूर्वशब्देन समानाधिकरण्येन तद्व्यवच्छेदाभावात् समुदायाभिधायी पञ्चालशब्दोऽत्र पूर्वशब्देन संवन्धानुरोधाद् भेदमेकदेशं यदि व्यवच्छिन्द्यात्, तदा समुदायस्य अवयवोपजनिते=अवयवप्रयुक्ते व्यतिरेके=भेदे समुदायवाचकपदात् षष्ठ्या भाव्यामिति समानविभक्तिकत्वं न स्यात्। यथा—कायस्य पूर्वो परो वा भाग इति। एवं पञ्चालानां पूर्वं इति स्यात्।

तथा च सामानाधिकरण्यबाधः। न चाबाधितेऽपि सामानाधिकरण्ये मुख्यार्थत्यागेनावयवार्थोपादानं युक्तम्, नित्यत्वात् सम्बन्धस्य। तस्मादत्यज्यत एव मुख्यमर्थमवयवोपादानं वैयधिकरण्येन स्यादत्र, न सामानाधिकरण्येनेत्यर्थः ॥ ४७६ ॥

इदानीमवयवे वृत्तिं समर्थयते—

**समूहे च प्रदेशे च पञ्चाला इति दृश्यते।**
**तथा विशेषणं सर्वं इत्येतदुपपद्यते ॥ ४७७ ॥**

इहेमे पञ्चालादयः शब्दा निवासाधिकरणभावानुगमनेन वा व्युत्पाद्येरन् व्युत्पत्तिप्रत्याख्याने वा स्वाभाविकार्थविशेषसम्बन्धाः समनुज्ञायेरन्।

पूर्वत्र पक्षे यथा संस्त्यायविशेषः समस्तो जनपदाभिधेयः स्वामिविशेषाणामाधारभावमनुभवति, तथा तदेकदेशोऽपि, न ह्ययमवयवी कायादिवद्, अपि तु वनस्थानीयः।

तथा च सकलावयवस्य समूहस्यादर्शनात् प्रत्यवयवपरिसमाप्तेश्च भागश एवाधारतां प्रतिपद्यते। ततश्च निमित्तरूपानुविधानेन निमित्तिनमभिदधदयं शब्दः समु-

---

तथा च—सामानाधिकरण्यबाधः। न चाबाधितेऽपि सामानाधिकरण्ये मुख्यार्थत्यागेनावयवार्थोपादानं युक्तम्, शब्दार्थसंबन्धस्य नित्यत्वात्। तस्मान्मुख्यमर्थमत्यजत एव पञ्चालशब्दस्य अवयवार्थोपादानम्=विशेष्यतयाऽवयवार्थपरिग्रहो वैयधिकरण्येन स्यादत्र, न सामानाधिकरण्येनेति ॥ ४७६ ॥

इदानीं समुदायवचनस्य शब्दस्यावयवे वृत्तिं साधयति—समूहे चेति।

अस्यार्थः—समूहे च प्रदेशे अवयवे च, पञ्चाला इति शब्दः प्रयुक्तो दृश्यते। तद् यथा पञ्चालाः सुभिक्षा इति भागसमुदाये पञ्चालशब्दः प्रयुक्तो दृश्यते। पञ्चालान् प्रविष्टः, पञ्चालेषु कृतम्, पञ्चाला दृश्यन्तामिति एकदेशे पञ्चालशब्दप्रयोगः। एकदेशस्यैव प्रवेशकर्मत्वात्, यत् किंचित् क्रियाधिकरणत्वात्, तस्यैव दर्शनकर्मत्वाच्चेति। तथा सत्येव च=समूहप्रदेशोभयवृत्तित्वे सत्येव च, सर्वं इत्येतद् विशेषणमुपपद्यते। 'सर्वे पञ्चालाः सुभिक्षाः' इति।

अयं भावः—इह=व्याकरणे इमे पञ्चालादयो जनपदवचनाः शब्दा निवासाधिकरणभावानुगमनेन=क्षत्रियविशेषाणां निवासाधिकरणत्वरूपप्रवृत्तिनिमित्तानुसारणेन वा व्युत्पाद्येरन्, प्रातिपदिकानां व्युत्पत्तिपक्षप्रत्याख्याने वा स्वाभाविकार्थविशेषसंबन्धास्ते अव्युत्पन्ना एव व्याकरणेन समनुज्ञायेरन्।

पूर्वत्र पक्षे=व्युत्पत्तिपक्षे यथा समस्तः संस्त्यायविशेषः=निवासविशेषः सम्यक् स्त्यायन्ति व्यवहारमाणाः सन्तः शब्दं कुर्वन्ति यत्रेति संहता भवन्ति यत्रेति वा बाहुकादधिकरणे घञ् जनपदशब्दाभिधेयः स्वामिविशेषाणां पञ्चालादिक्षत्रियाणामाधारभावमनुभवति, तथा तदेकदेशोऽपि=जनपदैकदेशोऽपि, न ह्ययम्=जनपदः कायादिवदवयवी, अपि तु वनस्थानीयः=वृक्षसमूहरूपवनतुल्यः।

तथा च सकलावयवस्य समूहस्य क्षत्रियविशेषाधारत्वादर्शनात्, तदाधारत्वस्य प्रत्यवयवपरिसमाप्तेश्च भागसमूहरूपो जनपदो भागश एवाधारतां प्रतिपद्यते। ततश्च निमित्तरूपानुविधानेन=क्षत्रियविशेषनिवासरूपप्रवृत्तिनिमित्तानुसरणेन निमित्तिनं जदपदविशेषमभिदधदयं पञ्चालशब्दः

दायैकदेशयोस्तुल्यप्रवृत्तिः, उभयत्रापि निमित्तरूपस्य निवासाधिकरणभावस्य समानत्वात् समुदायोऽपि ह्येकदेशद्वारेणैव कार्येषूपादीयते ।

तद्यथा—पञ्चालान् प्रविष्टः, पञ्चाला दृश्यन्ताम्, पञ्चालेषु कृतमिति । स्वाभाविकदर्शनेऽपि शब्दानामनेकार्थत्वाद् समूहैकदेशयोर्वर्तमानत्वमुपपद्यत एवेति न त्यागोपादानार्थः कश्चिदत्र ।

अतश्चोभयथा पञ्चालशब्दस्य दृष्टेर्व्यभिचारसम्भवे सर्वे पञ्चाला लब्धा, हृता, आच्छिन्ना इति समुदायप्रतिपिपादयिषायां विशेषणं सर्वशब्दः कथ्यते ।

अन्यथा समूहस्यैकत्वात् कृत्स्नत्वेन विशेषणं न सम्बध्येत । तदेवं समुदायशब्दस्यापि प्रसिद्धस्यावयवे वृत्तिर्मुख्यतयैवेत्युक्तम् ॥ ४७७ ॥

अत्रैव भाष्यकारमतं संवादकमाह—

**तथार्धपिप्पलीत्यत्र जात्यन्तरनिवृत्तये ।**
**अर्धं च पिप्पली चेति खण्डे शब्दः प्रयुज्यते ॥ ४७८ ॥**

---

समुदायैकदेशयोस्तुल्यप्रवृत्तिः=तुल्यप्रवृत्तिनिमित्तकः, उभयत्रापि प्रवृत्तिनिमित्तरूपस्य क्षत्रियविशेषनिवासाधिकरणत्वस्य समानत्वात्, समुदायोऽपि एकदेशद्वारेणैव कार्येषु=विधेयेषु अन्वयितया उपादीयते=परिगृह्यते ।

तद् यथा—पञ्चालान् प्रविष्टः, पञ्चाला दृश्यन्ताम्, पञ्चालेषु कृतम् इति । स्वाभाविकदर्शनेऽपि=अव्युत्पत्तिपक्षेऽपि शब्दानामनेकार्थत्वात् समूहैकदेशयोर्वर्तमानत्वमुपपद्यत एवेति न त्यागोपादानार्थः=उपात्तस्य समुदायस्य त्यागः, अपूर्वस्यावयवरूपस्यार्थस्योपादानमित्यस्य न किञ्चित् प्रयोजनमत्र ।

अतश्चोभयथा=समुदायैकदेशयोः पञ्चालशब्दस्य दर्शनाद् एकदेशव्यभिचारसंभवे समुदायप्रतिपिपादयिषायां सत्यां सर्वे पञ्चाला लब्धा, हृता, आच्छिन्ना इत्यादौ सर्वशब्दो विशेषणं कथ्यते ।

अन्यथा=एकदेशे वृत्त्यभावे समूहस्यैकत्वात् कृत्स्नत्वेन विशेषणं न संबध्यते । तदेवं समुदायशब्दस्यापि समुदायेऽर्थे प्रसिद्धस्यावयवे वृत्तिर्मुख्यतयैव, समूहैकदेशोभयार्थकत्वादित्युक्तं भवत्यत्रेति ॥ ४७७ ॥

अत्रैव=समुदायशब्दस्य प्रसिद्धस्यावयवेऽपि वृत्तिर्मुख्यतयैव इत्यत्रैवार्थे भाष्यकारमतं संवादकमाह—तथाऽर्धपिप्पलीत्यत्रेति ।

अस्यार्थः—यथा समुदायशब्दस्यैकदेशवृत्तित्वे एव सर्वं इति विशेषणमुपपद्यते तथा एकदेशिसमासप्रत्याख्यानपक्षे 'अर्धपिप्पली' इत्यत्र अर्धञ्च पिप्पली चेति विग्रहे जात्यन्तरनिवृत्तये अर्धरूपे खण्डे=भागे पिप्पलीशब्दः प्रयुज्यत इति ।

समानाधिकरणसमासाभ्युपगमेनैकदेशिसमासः प्रत्याख्यातो भाष्ये । तथा चार्धं च पिप्पली चेत्यर्धपिप्पलीति सामानाधिकरण्यं कथमुपपद्येत, यदि खण्डेऽवयवेऽत्रावयववाची पिप्पलीशब्दो नाभ्युपगम्येत ।

युक्तं चैतत् । यदयं जातिशब्दो व्यक्तौ प्रचयापचयानपेक्षोऽत्र वर्तते ।

तथाह्येकदेशिसमासेऽप्यर्धं पिप्पल्या इति जात्यन्तरापोहार्थमर्धं पिप्पल्यावच्छिद्यते । तथा च समानाधिकरणसमासेऽपि जात्यन्तरनिवृत्त्यर्थमेवार्धशब्दस्य पिप्पली विशेष्येति फलतः प्रतीत्योरभेदः । प्रक्रियाभेदात्तु पूर्वपदार्थप्रधानतैकदेशिसमासे । तत्र परवल्लिङ्गतारम्भः । एकदेशिसमासस्यैव तत्पुरुषस्य तदिष्टेः । समानाधिकरणसमासे तूत्तरपदार्थप्राधान्यादेव तत्सिद्धिरिति तत् प्रत्याख्यातम् ॥ ४७८ ॥

एवं यथात्र ज्ञात्यभिव्यक्तिसमर्थावयविवचनोऽपि पिप्पलीशब्दस्तदेकदेशे जात्यन्तरनिवृत्तिपरायां चोदनायां वर्तते, तथेहापि पञ्चालशब्द इत्याह—

**पञ्चालानां प्रदेशोऽपि भिन्नो जनपदान्तरात् ।**
**तत्रान्यस्य निवृत्त्यर्थे शब्दे भेदो न गम्यते ॥ ४७९ ॥**

---

अयं भावः—समुदायशब्दस्यावयवेऽपि वृत्तिमभ्युपगम्य अर्धपिप्पलीत्यादौ अर्धञ्च पिप्पली चेत्यादिविग्रहे समानाधिकरणसमासाभ्युपगमेनैकदेशिसमासः प्रत्याख्यातो भाष्ये । तथा च—अर्धञ्च पिप्पली चेत्यर्धपिप्पलीत्यत्र सामानाधिकरण्यं कथमुपपद्येत, यदि खण्डे=अवयवे अर्धपिप्पलीत्यत्र समानाधिकरणसमासेऽवयवाची पिप्पलीशब्दो नाभ्युपगम्येत ।

युक्तञ्चैतत्=अर्धपिप्पलीत्यत्र समानाधिकरणसमासे पिप्पली शब्दस्यावयववाचित्वम् । यदयम्=यतोऽयं जातिशब्दः=जातिवचनः पिप्पलीशब्दः प्रचयापचयानपेक्षः=आनुपूर्व्यां वृद्धिह्रासानपेक्षः समानानुपूर्वीक एवात्र व्यक्तौ वर्तते ।

तथा हि—अत्र एकदेशिसमासाभ्युपगमेऽपि अर्धं पिप्पल्या इति विग्रहवाक्ये जात्यन्तरनिरासार्थं पिप्पल्याऽर्धमवच्छिद्यते=विशेष्यते । तथा च समानाधिकरणसमासेऽपि जात्यन्तरनिवृत्त्यर्थमेवार्धशब्दस्य पिप्पली विशेष्येति शाब्दप्रतिपत्त्योर्विशेषणविशेष्यभावभेदेन भेदेऽपि फलतो द्वयोः प्रतिपत्त्योरभेदः । प्रक्रियाभेदात्तु अत्रैकदेशिसमासे पूर्वपदार्थप्रधानता, तत्र च=पूर्वपदार्थप्रधानत्वे सति च परवल्लिङ्गतारम्भः, अन्यथाऽत्र पूर्वपदार्थप्राधान्यात् समासस्य पूर्ववल्लिङ्गत्वमेव स्यात् । एकदेशिसमासस्यैव तत्पुरुषस्य तदिष्टेः=परवल्लिङ्गताया इष्टेः । कर्मधारयरूपे समानाधिकरणसमासे तु उत्तरपदार्थप्राधान्यादेव परवल्लिङ्गतासिद्धिरिति "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः" (पा० २।४।२६) इति सूत्रं तत्पुरुषार्थत्वेन प्रत्याख्यातमिति ॥ ४७८ ॥

एवं=प्रागुक्तरीत्या यथा अत्र=अर्धपिप्पलीत्यत्र जात्यभिव्यक्तिसमर्थावयविवचनोऽपि पिप्पलीशब्दो जात्यन्तरनिवृत्तिपरायां चोदनायां सत्त्यां जात्यन्तरनिवृत्तिपरे विधौ सति तदेकदेशे=पिप्पल्येकदेशे वर्तते, तथेहापि पञ्चालशब्दो जात्यन्तरनिवृत्तिपरायां चोदनायां सत्त्यां तदेकदेशेवर्तते इत्याह—पञ्चालानां प्रदेशोऽपीति ।

यथा समस्तो जनपदः पञ्चाला मगधादिजनपदान्तराद् विलक्षणः, तथा तदवयवोऽपि ग्रामादिरिति जनपदान्तरनिवृत्तिपरायां चोदनायां पञ्चालशब्दे प्रयुक्ते समुदायावयवविभागस्याविवक्षितत्वादसौ भेदः समुदायावयवलक्षणो विशेषो नावसीयत इत्यनादृत्य तं सन्निहितेऽर्थे मुख्यतयैव शब्दस्यात्र वृत्तिरित्यर्थः।

इत्थञ्चावयवेन सामानाधिकरण्यादतुल्यविभक्तित्वमत्र नास्ति, जात्यन्तरनिवृत्तिविवक्षायां प्रयोगस्याविशेषात् समुदायावयवयोः ॥ ४७९ ॥

यद्येवं तयोस्तुल्येऽभिधेयत्वे कथमुच्यते 'समुदायेषु हि वृत्ताः शब्दाः' इत्यत आह—

**प्रसिद्धास्तु विशेषेण समुदाये व्यवस्थिताः।**
**प्रदेशे दर्शनं तेषामर्थप्रकरणादिभिः ॥ ४८० ॥**

---

अस्यार्थः—यथा समस्तो जनपदः पञ्चालमगधादिजनपदान्तराद् भिन्नः=विलक्षणः, तथा पञ्चालानां प्रदेशोऽपि=एकदेशोऽपि जनपदान्तराद् भिन्नः। तत्र = 'पूर्वे पञ्चालाः' इत्यत्र, अन्यस्य निवृत्त्यर्थे शब्दे पञ्चालशब्दे प्रयुक्ते सति जनपदान्तरनिवृत्तिपरायां चोदनायां समुदायावयवविभागस्याविवक्षितत्वाद् भेदः=समुदायावयवलक्षणो विशेषः, न गम्यते=न प्रतीयत इति। अनादृत्य तं भेदं संनिहितेऽवयवरूपेऽर्थे 'पूर्वे पञ्चालाः' इत्यत्र पञ्चालशब्दस्य मुख्यतयैव वृत्तिरिति।

अयं भावः—यथा समस्तो जनपदः पञ्चालाः=पञ्चालशब्दवाच्यो मगधादिजनपदान्तराद् विलक्षणः, तथा तदवयवोऽपि=पञ्चालावयवोऽपि ग्रामादिर्जनपदान्तराद् विलक्षण इति 'पूर्वे पञ्चालाः' इत्यत्र जनपदान्तरनिवृत्तिपरायां चोदनायां पञ्चालशब्दे प्रयुक्ते सति समुदायावयवविभागस्याविवक्षितत्वादसौ भेदः=समुदायावयवलक्षणो विशेषो नावसीयते=न निश्चीयत इत्यनादृत्य तं विशेषं संनिहितेऽवयवरूपेऽर्थे मुख्यतयैव 'पूर्वे पञ्चालाः' इत्यत्र पञ्चालशब्दस्य वृत्तिरिति।

इत्थञ्चावयवेन पूर्वेण समानाधिकरण्यादत्र='पूर्वे पञ्चालाः' इत्यत्र पञ्चालशब्देऽतुल्यविभक्तिकत्वं नास्ति, 'पूर्वे पञ्चालाः' इत्यादौ जात्यन्तरनिवृत्तिविवक्षायां समुदायावयवयोः पञ्चालादिशब्दप्रयोगस्याविशेषादिति ॥ ४७९ ॥

यद्येवं तयोः=समुदायावयवयोस्तुल्येऽभिधेयत्वे कथमुच्यते "समुदायेषु हि वृत्ताः शब्दा अवयवेष्वपि वर्तन्ते" इति, समुदायावयवयोर्वृत्तेस्तुल्यत्वादिति, इत्यत आह—प्रसिद्धास्तु विशेषेणेति।

अस्यार्थः—ये तु समुदाये शक्ततया व्यवस्थिताः पञ्चालादयः शब्दास्ते तत्रार्थे विशेषेण प्रसिद्धाः। तेषां पञ्चालादिशब्दानां समुदाये विशेषेण प्रसिद्धानां प्रदेशेऽवयवे ग्रामादौ वृत्तिदर्शनमर्थप्रकरणादिभिर्भवति। अर्थः=शब्दसामर्थ्यम्, प्रकरणं तु प्रसङ्गप्रस्तावादिपदवाच्यम्, आदिना यथासंभवं संयोगविप्रयोगादयो गृह्यन्ते। तदुक्तम्—

संयोगो विप्रयोगश्च साहचर्यं विरोधिता।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य संनिधिः ॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥ इति ॥

पञ्चालादयः शब्दाः समूहे यथा प्रसिद्धाः, न तथावयवे, सामर्थ्यप्रकरणादिवशेनावयववृत्तित्वस्य निश्चयादिति समुदायेषु मुख्यत्वमेषां कथ्यते प्रसिद्धतरत्वादित्यर्थः ॥ ४८० ॥

एवं ब्राह्मणादिशब्दानामपि समुदाये इव मुख्या वृत्तिरवयवेऽपीत्याह—

**यदुपव्यञ्जनं जातेः सहचारि च कर्मसु ।**
**तत्र वा रूढसम्बन्धं यत् प्रायेणोपलक्षितम् ॥ ४८१ ॥**
**समुदायः प्रदेशो वेत्येवं तस्मिन्ननाश्रिते ।**
**अर्थात्मन्यविशेषेण वर्तन्ते ब्राह्मणादयः ॥ ४८२ ॥**

जातेरभिव्यञ्जकमुपनयनादिसंस्कारविशेषोपबृंहितमुपदेशसहायं द्रव्यम्, कर्मसु यजनयाजनादिकासु क्रियासु सहचार्यव्यभिचारि शौचश्रद्धाविद्वत्तादि, तत्र तस्यां जातौ रूढसम्बन्धं प्रसिद्धयोगं मृदुचित्तता सत्यवादित्वमवैरानुशय इत्येवमादि बाहुल्ये-

---

इदञ्च व्याख्यानोदाहरणाभ्यां प्रपञ्चितम् अत्रैव द्वितीयकाण्डे साहित्यदर्पणादौ चेति नेह प्रतन्यते ।

अयं भावः—यथा पञ्चालादयः शब्दाः समुदाये प्रसिद्धाः, न तथाऽवयवे, यथासंभवं सामर्थ्यप्रकरणादिवशेन तेषाम् अवयववृत्तित्वस्य निश्चयादिति समुदायेषु मुख्यत्वं पञ्चालादिशब्दानां कथ्यते, तत्र प्रसिद्धतरत्वादिति ॥ ४८० ॥

एवं ब्राह्मणादिशब्दानामपि समुदाय इव मुख्यावृत्तिरवयवेऽपीत्याह—यदुपव्यञ्जनं जातेरिति ।

अस्यार्थः—यद् ब्राह्मणत्वादिजातेरुपव्यञ्जनम्=अभिव्यञ्जकं द्रव्यं व्यक्तिरूपम्, यच्च कर्मसु यजनयाजनाध्ययनाध्यापनदानप्रतिग्रहादिकासु तत्तद्वर्णनियतासु क्रियासु सहचारि=अव्यभिचारि—शौचश्रद्धाविद्वत्तादि, यद्वा=यच्च, तत्र=जातौ रूढसंबन्धम्=लोके प्रसिद्धतद्जातिसामानाधिकरण्यं प्रायेण उपलक्षितम्=बाहुल्येनानुमितम्, मृदुचित्तता, सत्यवादित्वम्, अवैरानुशयः=क्रोधोपशमे वैरस्याननुवृत्तिः, समुदायः प्रदेशो वा=अवयवो वा, इत्येवं, समुदायरूपेण अवयवरूपेण वा अनाश्रिते=अविवक्षिते समुदायावयवसाधारणरूपेणैव ब्राह्मणादिपदवाच्यत्वेन विवक्षिते तस्मिन्नर्थात्मनि वस्तुगत्या समुदायरूपेऽवयवरूपे वा ब्राह्मणादिशब्दा अविशेषेण=समुदायत्वमवयवत्वं वा धर्मं स्वाभिधेयत्वेन विहाय वर्तन्ते अभिधया तमर्थात्मानं बोधयन्तीति ।

अयं भावः—उपनयनादिसंस्कारविशेषोपबृंहितम्=उपनयनादिसंस्कारविशेषाहितातिशयम् उपदेशसहायम्=अयं ब्राह्मण इत्याद्याप्तोपदेशसहायेन चक्षुरादिना प्रत्यक्षीक्रियमाणम्, ब्राह्मणत्वादिजातेरभिव्यञ्जकं द्रष्टव्यम् । यच्च कर्मसु यजनयाजनाध्ययनाध्यापनादिकासु क्रियासु सहचारि=अव्यभिचारि, शौचश्रद्धाविद्वत्तादि, यच्च तत्र=तस्यां जातौ, रूढसंबन्धम्=लोके प्रसिद्धयोगम्, मृदुचित्तता, सत्यवादित्वम्, अवैरानुशयः=वैरानुवृत्त्यभाव इत्येवमादि बाहुल्येनानुमितम्—

नानुमितम्, तदाश्रित्य शब्दः प्रवर्तमानः समुदायाभिधायीति व्यवस्थाप्यते, प्रसिद्धेः।
तत्र च जात्यन्तरनिवृत्तिपरायां चोदनायां जातिनिमित्तस्यास्य शब्दस्य समुदायावयवविभागानाश्रयेण प्रवृत्तेरवयवेऽपि वृत्तिरविरुद्धा। अर्थप्रकरणादिवशात् पुनस्तथावसाय इत्यमुख्यत्वमेव ॥ ४८१, ४८२ ॥

एवं तर्हि समुदायार्थोऽन्य एव, अन्य एव चावयवार्थः, शब्दार्थभेदाद् भेदोपपत्तेरिति कथमभेदेन 'समुदायेषु वृत्ताः शब्दा अवयवेषु वर्तन्त' इति व्यपदेश इत्यत आह—

**यश्च तुल्यश्रुतिर्दृष्टः समुदाये व्यवस्थितः।**
**तेनोपचरितैकत्वं प्रदेशेऽप्युपलभ्यते ॥ ४८३ ॥**

तुल्यश्रुतित्वाद् रूपसाम्यादेकत्वमवसाय समुदाये वाचकत्वेन व्यवस्थितोऽवयवेऽपि वर्तत इत्युक्तम्। नहि समुदायात् प्रच्युत्यावयवे तस्यैव शब्दस्य वृत्तिरस्ति, सम्बन्धानित्यत्वप्रसङ्गादित्युक्तमेव ॥ ४८३ ॥

---

अयं मृदुचित्तः, सत्यवादी, वैरानुबन्धरहितश्च, ब्राह्मणत्वादित्याद्यनुमानैः तत्सर्वमाश्रित्य प्रवर्तमानो ब्राह्मणादिशब्दः समुदायाभिधायीति व्यवस्थाप्यते, तत्रैव तस्य प्रसिद्धेः।

तत्र च=ब्राह्मणादिशब्दस्य समुदायवाचित्वे व्यवस्थिते च अयं ब्राह्मण एवेत्यादिरूपायां जात्यन्तरनिवृत्तिपरायां चोदनायां जातिप्रवृत्तिनिमित्तकस्य अस्य शब्दस्य समुदायावयवविभागानाश्रयेण प्रवृत्तेरवयवेऽपि वृत्तिः=शक्तिः अविरुद्धा। अर्थप्रकरणादिवशात् तु तथावसायः=अवयवस्य शब्दवाच्यत्वेनावसायः, निश्चयः इत्यमुख्यत्वमेवावयवार्थस्येति ॥ ४८२ ॥

एवं तर्हि समुदायार्थोऽन्य एव, अन्य एव चावयवार्थः, शब्दार्थभेदात् शब्दभेदोपपत्तेरिति— "समुदायेषु वृत्ताः शब्दा अवयवेषु वर्तन्ते" इति कथमभेदेन व्यपदेश इत्यत आह—यश्च तुल्यश्रुतिर्दृष्ट इति।

अस्यार्थः—यश्च समुदाये व्यवस्थितो ब्राह्मणादिशब्दोऽवयवे वर्तमानेन ब्राह्मणादिशब्देन सह तुल्यश्रुतिः=तुल्यानुपूर्वीको दृष्टः, तेन=समुदाये व्यवस्थितेन, ब्राह्मणादिशब्देन सह, उपचरितैकत्वम्=आरोपितम् एकत्वम्, प्रदेशेऽपि=अवयवे वर्तमाने शब्देऽपि उपलभ्यते। अतः "समुदायेषु दृष्टाः शब्दा अवयवेष्वपि वर्तन्ते" इति व्याहारव्यवहारयोरुपपत्तिरिति।

अयं भावः—तुल्यश्रुतित्वाद् रूपसाम्याद्=आनुपूर्वीसाम्यात् समुदायावयववर्तिनोः शब्दयोरेकत्वमवसाय=अवगम्य समुदाये वाचकत्वेन व्यवस्थितोऽवयवेऽपि वर्तत इत्युक्तं भाष्ये। नहि समुदायरूपात् स्वार्थात् प्रच्युत्य=विभ्रश्य तस्यैव शब्दस्यावयवे वृत्तिरस्ति। शब्दार्थसंबन्धानित्यत्वप्रसङ्गादित्युक्तमेव भवति अनया कारिकयेति ॥ ४८३ ॥

एवं सारूप्याद् तदेवेदमित्युपचारादवयवे समुदायशब्दस्य वृत्तौ, 'पूर्वे पञ्चालाः' इत्येकं निदर्शनं व्याख्यातम्। अपरमपि 'तैलं भुक्तं घृतम्, भुक्तम्'इत्युक्तम्।

तद् व्याचष्टे—

**संस्कारादुपघाताद् वा वृत्तोऽक्तपरिमाणके।**
**तैलादौ जातिशब्दोऽत्र सामर्थ्यादवसीयते ॥ ४८४ ॥**

नेक्षिता जातिशब्दानां समुदायानुपातिता।
जातिमाचक्षते ते हि व्यक्तिर्जातिसमाश्रया ॥

(स्फोटसिद्धिः ९)

तैलादिशब्दानां जातिनिमित्तत्वे कथं समुदायवचनतायामत्र दृष्टान्ततोपपत्तिरित्याक्षेपे प्रतिसमाधानमिदम्।

---

एवं सारूप्यात्=समानानुपूर्वीकत्वात् तदेवेदमित्युपचारात्=अभेदोपचाराद् अवयवे समुदायशब्दस्य वृत्तौ पूर्वे पञ्चाला इत्येकं निदर्शनम्=उदाहरणं व्याख्यातम्। अतोऽपरमपि निदर्शनम् 'तैलं भुक्तम्, घृतं भुक्तम्' इत्युक्तं माष्ये। तद् व्याचष्टे--संस्कारादुपघाताद् वेति।

अस्यार्थः—योऽन्यत्र तैलादौ तैलादिशब्दो जातिशब्दः=तैलत्वादिजातिवाचकः स एवात्र 'तैलं भुक्तम्, घृतं भुक्तम्' इत्यादौ संस्कारात् रोगविशेषशमनाय औषधाहितसंस्काराद् श्वकाकाद्युपघाताद्वा अक्तपरिमाणके=परिच्छिन्नपरिमाणके वृत्तः प्रकरणादिसामर्थ्याद् अवसीयते=निश्चीयत इति योजना।

अत्रैव निष्कर्षः—यद्यपि तैलादिशब्दो जातिशब्दः, तथापि 'तैलं भुक्तम्, घृतं मुक्तम्' इत्यादौ भाष्यवाक्ये तैलादिशब्दः संस्कृते उपहिते वा अक्तपरिमाणके=परिच्छिन्नपरिमाणके तैलादौ वृत्त इति प्रकरणादिसामर्थ्यान्निश्चीयत इति।

अत्र हि भाष्यवाक्ये तैलादिशब्दस्य जातिपरत्वे अवयवे समुदाये च जातिसमवायाविशेषाद् अवयवे समुदाये वात्र तैलादिशब्दस्य वृत्तिरित्येष विचारो नोपपद्यते। अत्र संस्कारादुपघाताद्वा अक्तपरिमाणके तैलादिशब्दस्य वृत्त्यभ्युपगमे तु अवयवे समुदायाभेदारोपात् समुदायशब्दस्य अवयवे वृत्तिः 'तैलं भुक्तम्' इत्यादिभाष्यवाक्ये उपपद्यत इति।

अयं भावः—

नेक्षिता जातिशब्दानां समुदायानुपातिता।
जातिमाचक्षते ते हि व्यक्तिर्जातिसमाश्रया ॥ इति।

(स्फोटसिद्धिः ९)

अस्यार्थः—जातिशब्दानां समुदायानुपातिता=गुणसमुदायवचनता अवयवसमुदायवचनता वा, नेक्षिता=न क्वापि दृष्टा। हि=यतस्ते जातिशब्दाः, जातिमाचक्षते। व्यक्तिस्तु जातिसमाश्रया=जातिः समाश्रय आक्षेपकतया निमित्तं यस्या इति विग्रहः। जात्या व्यक्तिः आश्रयान्यथानुपपत्त्या आक्षिप्यते, न तु शब्दाद् व्यक्तिबोध इति। एवं तैलादिशब्दानां जातिप्रवृत्तिनिमित्तकत्वे कथमत्र=तैलं भुक्तमित्यादिभाष्यवाक्ये तैलादिशब्दानां समुदायवचनतायां दृष्टान्ततोपपत्तिरित्याक्षेपे कृते सति प्रतिसमाधानमिदं हरिकारिकावाक्यम्।

तथाहि—रोगविशेषप्रशमनाय यदौषधाहितविशेषं घृतं तैलं वा मात्रा-परिच्छिन्नम्, तदिह तैलादिशब्दवाच्यं विवक्षितम्। तच्च षोडश द्वात्रिंशदित्यादिपल-परिमाणत्वात् परिच्छिन्नपरिमाणमिति समुदायो भवति।

श्वकाकाद्युच्छिष्टत्वेन वोपहतं परित्याज्यं घृततैलाद्यत्र नियतपरिमाणमेव विवक्षितम्, प्रकरणसामर्थ्यात्। अन्यथा जातिनिबन्धनेऽत्र तैलादिशब्दे जाति-समवायाविशेषात् समुदाये, अवयवे वा वृत्तिरित्येतन्नोपपद्यते।

अक्तपरिमाणे तु वृत्तौ यदेतत् संस्कृतं घृतं तैलं वा, तस्य प्रतिदिनमेकदेशाभ्य-वहारेऽपि तदेवेदं भुक्तमिति समुदायाभेदाध्यारोपेणावयवे वृत्तिरुपपद्यते। एवं श्वादि-सम्पर्कदूषितेऽपि तदिदं श्वघृतं तैलं वेत्यवयवे समुदायारोपाद् वृत्तिः ॥ ४८४ ॥

कथमयमाशयो भाष्यकारस्यावसीयत इति चेदाह—

**न जातिगुणशब्देषु मूर्तिभेदो विवक्षितः।**
**ते जातिगुणसम्बन्धभेदमात्रनिबन्धनाः ॥ ४८५ ॥**

---

तथा हि—रोगविशेषप्रशमनाय यदौषधाहितविशेषम्=औषधसंपर्कजनितातिशयं घृतं तैलं वा मात्रापरिच्छिन्नम्=परिमाणपरिच्छिन्नम्, तदिह भाष्यवाक्ये तैलादिशब्दवाच्यं विवक्षितम्, न तु तैलत्वादिजातीयम्, तच्च षोडश द्वात्रिंशदित्यादिपलपरिमाणकत्वात् परिच्छिन्नपरिमाणमिति पलपरिमितानां समुदायो भवति।

अथवा श्वकाकाद्युच्छिष्टत्वेन उपहितम्=विनष्टप्राये परित्याज्यं घृततैलादि अत्र भाष्य-वाक्ये नियतपरिमाणमेव विवक्षितम्, प्रकरणसामर्थ्यात्। अन्यथा जातिनिबन्धनेऽत्र=भाष्यवाक्ये तैलादिशब्दे परिगृह्यमाणे जातिसमवायाविशेषात् समुदायेऽवयवे वा वृत्तिरित्येतन्नोपपद्यते।

अक्तपरिमाणे=परिच्छिन्नपरिमाणे तु वृत्तौ=शक्तौ यदेतत् संस्कृतं घृतं तैलं वा तस्य प्रति-दिनमेकदेशाभ्यवहारेऽपि=यत्किञ्चिदवयवभक्षणेऽपि तदेवेदं संस्कृतं घृततैलादि भुक्तमिति समुदाया-भेदाध्यारोपेणावयवे वृत्तिरुपपद्यते। श्वकाकादिसंपर्कदूषितेऽपि तैलादौ तदेवेदं श्वघृतम्=शुनोपहतं घृतम्, तथाविधं तैलं वा इत्यवयवे समुदायारोपात्=समुदायाभेदारोपात् समुदायशब्दस्यावयवे वृत्तिरिति ॥ ४८४ ॥

कथमयमाशयः='तैलं भुक्तम्, घृतं भुक्तम्' इत्यादिभाष्यवाक्ये तैलघृतादिशब्दः संस्कारविशिष्टे उपघातविशिष्टे वा अक्तपरिमाणके तैलघृतादौ प्रयुक्तः, न तु जातिविशिष्टेऽर्थे इति भाष्यकारस्यावसीयते=निश्चीयते इत्याशङ्क्याह—न जातिगुणशब्देषु इति।

जातिगुणनिमित्ताः शब्दा मूर्तिभेदमसर्वगतद्रव्यपरिमाणविशेषमनाश्रित्य तद्वन्मात्रे वर्तन्ते। उपचयापचयानपेक्षा हि तेषां विशिष्टजातिगुणयोगावधारणाय प्रवृत्तिः।

तथाहि—जातिगुणसम्बन्ध एवान्यस्माद् भिद्यत इति भेदो विशेषस्तन्मात्रं मूर्तिभेदानपेक्षं निबन्धनं निमित्तमेषामिति। ये तु परिमाणशब्दा द्रोणादयस्तेऽक्तपरिमाणमर्थमभिदधति। तथा चैकदेशापाये न वर्तन्ते। ततश्च जातिनिमित्तायां वृत्तौ तैलादिशब्दानां समुदायावयवयोरविशेषः स्यादिति संस्कारोपघातविशिष्टेऽर्थेऽत्र भाष्यकारस्य तैलादिशब्दोऽभिमत इत्युन्नीयते।

प्रदेशान्तरे हि चूर्णीकारः परिमाणशब्देभ्यो जातिगुणशब्दानां द्रोणः प्रस्थः शतमिति भेदमुपागमत् ॥ ४८५ ॥

---

अस्यार्थः—जातिगुणशब्देषु=जातिगुणप्रवृत्तिनिमित्तकेषु शब्देषु मूर्तिभेदः=उपचितापचितद्रव्यविशेषसमाश्रितः परिमाणपरिच्छेदविशेषो न विवक्षितः, यतस्ते जातिगुणशब्दाः=जातिगुणसंबन्धभेदमात्रनिबन्धना जातिगुणसंबन्धविशेषमात्रप्रवृत्तिनिमित्तकाः, न तु मूर्तिभेदनिबन्धाः। ततश्च तैलादिशब्दानां भाष्यवाक्ये जातिनिमित्तिकायां स्वार्थे प्रवृत्तौ समुदायावयवयोरविशेषा प्रतीतिः स्यादिति "समुदायेषु वृत्ताः शब्दा अवयवेष्वपि वर्तन्ते" इति भाष्यवाक्यस्येदमुदाहरणं न स्यादिति संस्कारोपघातविशिष्टेऽक्तपरिमाणेऽर्थेऽत्र तैलादिशब्दो भाष्यकारस्याभिमत इति विज्ञायत इति।

अयं भावः—यथायथं जातिगुणप्रवृत्तिनिमित्तकाः शब्दाः, मूर्तिभेदम्=असर्वगतम्=परिच्छिन्नं यद् द्रव्यं तद्गतं परिमाणविशेषमनाश्रित्य तद्वन्मात्रे=जातिगुणवद्द्रव्यमात्रे वर्तन्ते। यतो जातिगुणनिबन्धनानां शब्दानां विशिष्टजातिगुणयोगावधारणाय=जातिगुणविशेषसंबन्धावधारणाय प्रवृत्तिः, आश्रयद्रव्योपचयापचयानपेक्षा।

तथा हि—आश्रयव्यक्तौ जातिगुणसंबन्ध एवान्यस्मात्=परिमाणादितो भिद्यत इति भेदो विशेषस्तन्मात्रं मूर्तिभेदानपेक्षम्=उपचितापचितद्रव्यगतपरिमाणविशेषानपेक्षं निबन्धनं प्रवृत्तिनिमित्तमेषामिति जातिगुणसंबन्धभेदमात्रनिबन्धना इत्यस्यार्थः। ये तु परिमाणशब्दा द्रोणाढकादयस्तेऽक्तपरिमाणम्=परिच्छिन्नपरिमाणम् अर्थमभिदधति। तथा च ते स्वार्थैकदेशापाये=अवयवविनाशे तत्र न वर्तन्ते। ततश्च तैलादिशब्दानां जातिनिमित्तायां स्वार्थे प्रवृत्तौ समुदायावयवयोर्वाच्यत्वाविशेषः स्यादिति "समुदायेषु वृत्ताः शब्दा अवयवेष्वपि वर्तन्ते" इति भाष्यवाक्यस्य 'तैलं भुक्तम्, घृतं भुक्तम्' इत्युदाहरणं न संगच्छतेति संस्कारोपघातविशिष्टेऽर्थेऽत्र भाष्यकारवाक्ये तैलादिशब्दो भाष्यकारस्याभिमत इत्युन्नीयते=उत्प्रेक्ष्यते।

प्रदेशान्तरे हि=अत्र विचार्यमाणभाष्यप्रदेशादन्यस्मिन् भाष्यप्रदेशे चूर्णीकारः भर्तृहरिः=महाभाष्यस्य चूर्णिकानाम्नीव्याख्या भर्तृहरिकृता। परिमाणशब्देभ्यो द्रोणः प्रस्थः शतमित्यादिभ्यो जातिगुणशब्दानां प्रवृत्तिनिमित्तभेदाद् भेदमुपागमत्=स्वीकृतवानिति ॥ ४८५ ॥

इदानीं शुक्लो नीलः कृष्ण इत्युदाहरणान्तरमत्रैव व्याख्यातुमाह—

**कृष्णादिव्यपदेशश्च सर्वावयववृत्तिभिः ।**
**गुणैस्तेऽप्येकदेशस्थाः पटादीनां विशेषकाः ॥ ४८६ ॥**

गुणनिमित्तानां शब्दानां मूर्तिभेदानपेक्षा इदानीमेवोक्ता। तथापि लोके समस्तावयवव्याप्त्या यो गुणो वर्तते, तत्र तद्व्यपदेशः सिद्धः। कृष्णः पटः, शुक्लः पट इति।

तथा च समुदायशब्दा एते मुख्यया वृत्त्या कथ्यन्ते। यत्र त्ववयवः कश्चिच्छुक्लोऽपरः कृष्णः, तत्रापि समुदायारोपाच्छुक्लादिशब्दप्रवृत्तिः। यस्य हि पटस्यावयवोऽपि नाशुक्लस्तन्निवृत्तिपरायां चोदनायां समुदायावयवयोरभेदविवक्षायामयं प्रयोगः।

तथा हि सद्यः—प्रक्षालितपटावयवमलिनीकरणे साभ्यसूया वक्तारो भवन्ति कृष्णः पटः कृत इति ॥ ४८६ ॥

---

इदानीमत्रैव='समुदायेषु वृत्ताः शब्दा अवयवेष्वपि वर्तन्ते' इत्यत्रैव 'शुक्लो नीलः कृष्णः' इत्युदाहरणान्तरं व्याख्यातुम्=विशेषेण आख्यातुम् इमां कारिकामाह—कृष्णादिव्यपदेशश्चेति।

अस्यार्थः—कृष्णादिव्यपदेशश्च=तु, सर्वावयववृत्तिभिर्गुणैर्भवति। यथा सर्वशौक्ल्ये सर्वकार्ष्ण्ये वा 'शुक्लः पटः, कृष्णः पटः' इति। तेऽपि कृष्णादयो गुणाः, पटाद्यवयव्येकदेशस्थाः पटादीनां विशेषकाः। तथा हि—सद्यः प्रक्षालितपटावयवमलिनीकरणे साभ्यसूयाः=सेर्ष्या वक्तारो भवन्ति। 'पटः कृष्णस्त्वया कृतः' इति। एवं समुदाये वृत्ताः शब्दा एकदेशेषु वर्तन्ते इत्यस्येदमुदाहरणमुपपद्यत इति।

अयं भावः—यद्यपि गुणप्रवृत्तिनिमित्तकानां शब्दानां मूर्तिभेदानपेक्षा=स्वप्रवृत्तौ निमित्ततया परिमाणपरिच्छेदविशेषानपेक्षा इदानीमेवोक्ता, तथापि तेषां शब्दानां तदनपेक्षामुदाहरणान्तरेण विशदीकर्तुमियं कारिकोच्यते।

तथा हि—लोके समस्तावयवव्याप्त्या यो गुणो वर्तते, तत्र=अवयविनि तद् व्यपदेशः=मुख्यो लोके सिद्धः। 'कृष्णः पटः, शुक्लः पटः' इति। तथा च एते गुणशब्दा मुख्यया वृत्त्या समुदायशब्दाः कथ्यन्ते।

यत्र तु कश्चिदवयवः शुक्लोऽपरः कृष्णः, तत्रापि अवयवे समुदायारोपात् शुक्लादिप्रवृत्तिः। यस्य हि=तु अवयवोऽपि न शुक्लः तन्निवृत्तिपरायां चोदनायाम्=शुक्लनिवृत्तिपरे 'कृष्णः पटः कृतः' इति विधिवाक्ये समुदायावयवयोरभेदविवक्षायाम्=समुदायस्य पटस्य अवयवस्य च कृष्णगुणस्याभेदविवक्षायां अयं प्रयोगः='कृष्णः पटः कृतः' इति प्रयोगः। तथा हि—सद्यः प्रक्षालितस्य शुक्लस्य पटस्यावयवमलिनीकरणे साभ्यसूयाः साक्षेपवचसो वक्तारो भवन्ति, 'कृष्णः पटः कृतः' इति। अन्यत्र समुदाये वृत्तोऽपि कृष्णशब्दोऽत्रावयवे वर्तते अवयवे च समुदायरूपारोपादत्र सामानाधिकरण्योपपत्तिरिति ॥ ४८६ ॥

तत्रैव प्रकारान्तरमाह—

**पटावयववृत्तास्तु यदा तत्र पटादयः ।**
**तदा तैलादिवत् तेषां जातिशब्दत्वमुच्यते ॥ ४८७ ॥**

एकदेशकृष्णे पटे पटः कृष्ण इत्यभिधाने द्वयी गतिः । समस्तावयवकृष्णस्याध्यारोपादवयवे कृष्णशब्दो यथा प्राग् व्याख्यातम् ।

यदा तु पटशब्दोऽत्रैकदेशे प्रवृत्तः, तदा सन्निहितः कृष्णोऽवयवः कृष्णशब्देन कृत्स्नावयवव्यापिकृष्णगुणनिमित्तेन मुख्यतयाभिधीयते । पटस्तु समुदायवचनोऽवयवे प्रवृत्तोऽत्रोदाहरणम् । तस्य च तदानीं तैलादिशब्दवज्जातिवाचित्वं बोद्धव्यम् ।

यथा हि जातिशब्दा अपि तैलादयः संस्कारोपघातप्रापितातिशये द्रव्ये समुदायशब्दतां प्रतिलभ्य तदन्यव्यावृत्तिपरेऽभिधानेऽवयवे तद्रूपारोपादासादयन्ति प्रत्यायकत्वम् , तथेमेऽपि पटादयोऽवयवेऽपि प्रवर्तन्त इत्यर्थः ।

अनयैव च दिशा घृतादिशब्दो मुख्यार्थः ।

---

तत्रैव='समुदायेषु वृत्ताः शब्दा अवयवेष्वपि वर्तन्ते' इत्यत्रैव प्रकारान्तरम्=एकदेशसमस्तावयवव्यापि कृष्णस्यावयवेऽध्यारोपात् 'कृष्णे पटे पटः कृष्णः' इत्युदाहरणादन्यम्-'कृष्णः पटः' इत्यत्र कृत्स्नावयवव्यापि कृष्णगुणनिमित्तकेन कृष्णशब्देन संनिहितः कृष्णोऽवयवो मुख्यतयाऽभिधीयते, पटशब्दस्तु अन्यत्र समुदायवचनोऽत्रावयवे लक्षणया प्रवृत्त उदाहरणप्रकारम् आह—पटावयववृत्तास्तु इति ।

अस्यार्थः—तत्र='कृष्णः पटः' इत्यत्रोदाहरणे यदा तु घटादयः शब्दाः पटावयववृत्ताः=पटावयवाभिधायिनः, तदा तेषाम्=पटावयववृत्तानां पटादिशब्दानाम्, तैलादिशब्दवत्-अक्तपरिमाणकसंस्कारोपघातविशिष्टतैलाद्यभिधायि तैलादिशब्दवद् जातिशब्दत्वमुच्यते । यथाऽक्तपरिमाणके संस्कारोपघातविशिष्टे तैलादौ वर्तमाना अपि तैलादयः शब्दा अवयवे समुदायरूपारोपाद् जातिवचनास्तथा पटावयववृत्ता अपि पटादयः शब्दा अवयवे समुदायरूपारोपाद् जातिवचना इति निष्कर्षः ।

अयं भावः—एकदेशकृष्णे=कृष्णावयवके पटे पटः कृष्ण इत्यभिधाने द्वयी गतिः । समस्तावयवव्यापि कृष्णस्यावयवेऽध्यारोपादवयवे कृष्णशब्दः, यथा प्राग् व्याख्यातम् ।

यदा तु पटशब्दोऽत्रावयवे प्रवृत्तः, तदा पटे संनिहितः कृष्णोऽवयवः कृत्स्नावयवव्यापि कृष्णगुणरूपप्रवृत्तिनिमित्तकेन कृष्णशब्देन मुख्यतयाऽभिधीयते । पटशब्दस्तु अन्यत्र समुदायवचनोऽत्रावयवे प्रवृत्त उदाहरणम् । तस्य च=पटावयववृत्तस्य पटशब्दस्य तदानीम्=पटावयववृत्तित्वदशायां तैलादिशब्दवज्जातिवाचित्वं बोध्यव्यम् ।

यथा हि तैलत्वादिजातिवचना अपि तैलादयः शब्दाः संस्कारोपघातप्रापितोत्कर्षापकर्षरूपातिशयके द्रव्ये समुदायशब्दताम्=समुदायवचनतां प्रतिलभ्य=प्राप्य 'तैलं भुक्तम्' इत्यादौ तदन्यनिवृत्तिपरे=तैलान्यनिवृत्तिपरे 'अतैलं न भुक्तम्' इति तात्पर्यवति अभिधानेऽवयवे समुदायरूपारोपादासादयन्ति समुदायप्रत्यायकत्वम्, तथेमेऽपि पटादयः शब्दा अवयविनि समस्तावयवसमुदायात्मके प्रसिद्धाः 'कृष्णः पटः' इत्यादौ जात्यन्तरनिवृत्तिपरायां चोदनायामवयवेऽपि प्रवर्तन्ते ।

अनयैव च दिशा 'घृतं भुक्तम्' इत्यादौ घृतादिशब्दोऽवयवे वर्तमानोऽपि मुख्यार्थः ।

भुक्तशब्दस्तु समुदायेऽवयवरूपाध्यासात् प्रयुक्तो मन्तव्यः, यदि क्रियाशब्दस्यापि भुक्तशब्दस्याक्तपरिमाणे कर्मणि प्रसिद्धिरनुगन्तुं पार्यते ।

तथा हि—यदा भुक्तत्वमुपहतस्य संस्कृतस्य वा तैलादेः सन्दिग्धम्, तदाऽभुक्तत्वव्यावृत्तये तैलं भुक्तमित्युच्यमाने समुदायावयवयोर्भेदविवक्षा नास्तीति युज्यते समुदायशब्देनावयवस्याभिधानम् ।

तदयमत्र परमार्थः—यदा पटः प्राधान्येन विवक्षितः, तदा शुक्लशब्दोऽवयवे वर्तते; यदा तु शुक्लोऽवयवः प्राधान्येन विवक्षितः, तदा पटशब्दोऽवयवे वर्तते । एवं तैलं भुक्तमित्यत्रापि वाच्यम् । यथा च जनपदान्तरनिवृत्तिपरायां चोदनायां पञ्चालशब्दोऽवयवेऽपि मुख्यः । पिप्पलीशब्दश्च तदितरव्यवच्छेदविवक्षायामेकदेशेऽपि मुख्यः, तथा तैलादिशब्दोऽप्यन्यव्यावृत्तिपरेऽभिधान इति ॥ ४८७॥

निगमयितुमाह—

**निवृत्त्यर्था श्रुतिर्येषां भेदस्तेष्वनपेक्षितः ।**
**प्रदेशे समुदाये वा गुणोऽन्येषां निवर्तकः ॥ ४८८ ॥**

अन्यनिवृत्तिपरेऽभिधाने समुदायावयवभेदमनादृत्य प्रदेशे वा समुदाये वा

---

भुक्तशब्दस्तु समस्तावयवसमुदायात्मके घृतेऽवयवरूपाध्यासात् प्रयुक्त उपपन्नो मन्तव्यः, यदि क्रियाशब्दस्यापि भुक्तशब्दस्य अक्तपरिमाणे=परिच्छिन्नपरिमाणे भोजनकर्मणि घृते प्रसिद्धिः कर्मणि क्तप्रत्ययाभ्युपगमेन अनुगन्तुम्=अनुमन्तुं पार्यते ।

तथा हि—यदा उपहृतस्य संस्कृतस्य वा तैलादेर्भुक्तत्वं संदिग्धम्, तदा तस्य भुक्तत्वव्यावृत्तये 'तैलं भुक्तम्' इत्युच्यमाने समुदायावयवयोर्भेदविवक्षा नास्ति इति युज्यते समुदायशब्देनावयवस्याभिधानम् ।

तदयमत्र परमार्थः—'शुक्लः पटः' इत्यत्र यदा पटः प्राधान्येन विवक्षितः, तदा शुक्लशब्दोऽवयवे वर्तते; यदा तु शुक्लोऽवयवः प्राधान्येन विवक्षितः, तदा पटशब्दोऽवयवे वर्तते । गुणे त्वन्याय्यकल्पनेति मीमांसानिर्धारितन्यायेन गुणे एव लक्षणाया औचित्यात् । एवं 'तैलं भुक्तम्' इत्यत्रापि वाच्यम् ।

यथा च 'पूर्वे पञ्चालाः' इत्यादौ जनपदान्तरनिवृत्तिपरायां चोदनायां पञ्चालशब्दोऽवयवेऽपि मुख्यः, पिप्पलीशब्दश्च तदितरव्यावृत्तिविवक्षायामेकदेशेऽपि मुख्यः, तथा तैलादिशब्दोऽपि अन्यव्यावृत्तिपरेऽभिधानेऽवयवेऽपि मुख्य इति ॥ ४८७ ॥

प्रकृतं निगमयितुम्=उपसंहर्तुमाह—निवृत्त्यर्था इति ।

अस्यार्थः—येषां गुणाद्यभिधायिनां शब्दानां स्वान्यनिवृत्त्यर्था श्रुतिस्तेषु गुणाद्यभिधायिषु शब्देषु समुदायावयवभेदोऽन्यनिवृत्त्यर्थमनपेक्षितः । यतः समुदाये प्रदेशे, अवयवे वा वर्तमानो गुणोऽन्येषां स्वेतरेषां निवर्तकः । तथा च यत्रान्यनिवृत्त्यर्था गुणाद्यभिधायिशब्दश्रुतिः, तत्र मुख्यैव गुणाद्यभिधायिशब्दप्रवृत्तिरिति फलितार्थः ।

अयं भावः—स्वान्यनिवृत्तितात्पर्येण प्रयुक्तः, अत एव समुदायावयवभेदमनादृत्य=उपेक्ष्य

वर्तमानः शब्दो गुणाद्यभिधायी कृष्णादिरन्यव्यवच्छेदं करोत्येवेति मुख्यैवेयं शब्दप्रवृत्तिः ॥ ४८८ ॥

तदेवं निदर्शनान्युपपाद्य दार्ष्टान्तिकभाष्यम् 'एवमयं समुदाये ब्राह्मणशब्दः प्रवृत्तोऽवयवेऽपि वर्तते' इत्येतद् व्याख्यातुमाह—

**ब्राह्मणाध्ययने तत्र वर्तते ब्राह्मणश्रुतिः ।**
**सादृश्यं तत्र दृष्टं हि क्षत्रियाध्ययनादिभिः ॥ ४८९ ॥**

केचित् तावदाहुः—ब्राह्मणवदधीते क्षत्रिय इत्युपमेयेऽध्ययनस्य श्रुतेस्तद्धेतुकमेवात्र साम्यमुपलक्षितम् । तथा च ब्राह्मणशब्दोऽध्ययनमात्रेऽवयवे वर्तते । तपः श्रुतमध्ययनमित्यादौ हि समुदाये मुख्यो ब्राह्मणशब्दः प्रसिद्ध इति तदेकदेशेऽध्ययनमात्रे समुपचरितः । ततश्चाध्ययनक्रियावाचिनस्तृतीयासमर्थाद् वतिरित्येकीयं मतम् ॥ ४८९ ॥

एतदनुपपन्नमित्याह—

**ब्राह्मणाध्ययने वृत्तिर्यदि स्याद् ब्राह्मणश्रुतेः ।**
**वक्तव्यं केन धर्मेण तुल्यत्वं क्रिययोरिति ॥ ४९० ॥**

---

अवयवे समुदाये वा वर्तमानो गुणाद्यभिधायी कृष्णादिशब्दोऽन्यनिवृत्तिं करोत्येवेति मुख्यैवेयमन्यनिवृत्तिपराणां समुदायेऽवयवे वा वर्तमानानां शब्दानां प्रवृत्तिरिति ॥ ४८८ ॥

तदेवं निदर्शनानि=दृष्टान्तान् उपपाद्य "एवमयं समुदाये ब्राह्मणशब्दः प्रवृत्तोऽवयवेऽपि वर्तते" इत्येतद् दार्ष्टान्तिकभाष्यं व्याख्यातुं तावदेकीयमतमाह—ब्राह्मणाध्ययने इति ।

अस्यार्थः—"तेन तुल्यम्" (पा० ५।१।११५) इति वतिविधायके सूत्रे क्रियायाः प्रकृत्यर्थविशेषणत्वपक्षे तत्र='ब्राह्मणवदधीते क्षत्रियः' इत्यत्र ब्राह्मणश्रुतिः=ब्राह्मणशब्दः, ब्राह्मणाध्ययने—तपः श्रुताध्ययनादिरूपार्थसमुदायरूपब्राह्मणशब्दार्थैकदेशे ब्राह्मणकर्तृकाध्ययने वर्तते । हि=यतः, तत्र=उपमानभूते ब्राह्मणाध्ययने उपमेयभूतैः क्षत्रियाध्ययनादिभिः सादृश्यं दृष्टमिति योजना ।

अयं भावः—क्रियायाः प्रकृत्यर्थविशेषणत्ववादिनः केचित् तावदाहुः—'ब्राह्मणवदधीते क्षत्रियः' इत्यत्रोपमेयवाक्येऽध्ययनस्य श्रवणात् तद्धेतुकमेव=अध्ययनहेतुकमेव अत्र ब्राह्मणक्षत्रिययोः साम्यमुपलक्षितम्=वतिप्रत्ययेनोक्तम् ।

तथा चात्र ब्राह्मणशब्दो ब्राह्मणशब्दार्थः तपःश्रुताध्ययनादिसमुदायैकदेशेऽध्ययनमात्रे वर्तते । 'तपः श्रुतमध्ययनम्' इत्यादीनां समुदाये हि मुख्यो ब्राह्मणशब्दः प्रसिद्ध इति तदेकदेशेऽध्ययनमात्रे समुपचरितः=लाक्षणिकोऽमुख्यः । ततश्चाध्ययनक्रियावाचिनस्तृतीयासमर्थाद् वतिरित्येकीयं मतं क्रियायाः प्रकृत्यर्थविशेषणत्वमालम्ब्य प्रवृत्तं समर्थितं भवतीति ॥ ४८९ ॥

एतत्=क्रियायाः प्रकृत्यर्थविशेषणत्वमालम्ब्य प्रवृत्तमेकीयं मतम् अनुपपन्नमित्याह—ब्राह्मणाध्ययने इति ।

अध्ययनमात्रवाचित्वे ब्राह्मणशब्दस्याध्ययनयोरेवोपमानोपमेयभावोऽवगम्येत, नाध्यायकयोः तन्निमित्तः। अध्ययनयोश्चौपम्यनिमित्तधर्मः सौष्ठवादिर्वाच्यः स्यात्।

तथा च तदधिकरणभावापन्नमध्ययनमिदं तदिति व्यपदेश्यत्वात् क्रियात्वं जह्यादिति न क्रियावाचिनस्तृतीयासमर्थता समर्थिता स्यादित्यभिप्रायः ॥ ४९० ॥

तस्मादिदमत्र युक्तमिति स्वमतेन सिद्धान्तमुपन्यस्यति—

**अध्येतरि यदा वृत्तिरुच्यते ब्राह्मणश्रुतेः।**
**निमित्तत्वं तदोपैति क्रियैवाध्येतरि स्थिता ॥ ४९१ ॥**

शुद्धक्रियावाचिनस्तृतीयान्तस्यासम्भवात् क्रियाविशिष्टद्रव्यवचनो गृह्यते। तत्र ब्राह्मणशब्दस्य समुदायवाचकत्वेऽप्यध्ययनप्रधाने द्रव्ये गुणसमुदायावयवे वृत्तिः कल्प्यते।

तथा चाध्ययनक्रियाव्यापारप्रधानाद् ब्राह्मणशब्दात् तृतीयान्ताद् ब्राह्मणेन

---

अस्यार्थः—'ब्राह्मणवदधीते क्षत्रियः' इत्यत्र यदि ब्राह्मणश्रुतेः=ब्राह्मणशब्दस्य ब्राह्मणाध्ययने वृत्तिः स्यात्, तदा केन धर्मेणोपमानोपमेयक्रिययोस्तुल्यत्वमिति वक्तव्यम्? यदि तु सौष्ठवादिना धर्मेण तयोः क्रिययोस्तुल्यत्वमुच्यते, तदा 'इदं तद्' इति व्यपदेश्यत्वात् क्रियात्वमेव सत्त्वभूतत्वेन तत्र न स्यादिति क्रियायाः प्रकृत्यर्थविशेषणत्वमाश्रित्य प्रवृत्तमेकीयं मतमनुपपन्नमिति।

अयं भावः—ब्राह्मणशब्दस्याध्ययनमात्रवाचित्वेऽध्ययनयोरेवोपमानोपमेयभावोऽवगम्यतेऽनाध्यायकयोः=नाध्येत्रोः तन्निमित्तः=अध्ययनक्रियानिमित्तकः उपमानोपमेयभावः। अध्ययनयोश्चौपम्यनिमित्तभूतो धर्मः=साम्यहेतुभूतो धर्मः सौष्ठवादिर्वाच्यः स्यात्। तथा च तदधिकरणभावापन्नम्=सौष्ठवाद्यधिकरणत्वापन्नम् अध्ययनम्—इदं तदिति व्यपदेश्यत्वात् सत्त्वभूतेन क्रियात्वं जह्यादिति न क्रियावाचिनस्तृतीयासमर्थता समर्थिता स्यादिति ॥ ४९० ॥

तस्मादिदमत्र युक्तम्=ब्राह्मणशब्दस्याध्येतरि वृत्तिर्युक्ता इति स्वमतेन सिद्धान्तमुपन्यस्यति—अध्येतरि यदेति।

अस्यार्थः—यदा तु ब्राह्मणश्रुतेः=ब्राह्मणशब्दस्य, अध्येतरि वृत्तिरुच्यते, तदाऽध्येतरि स्थिता अध्ययनक्रियैव अध्येत्रोरुपमानोपमेययोः औपम्यनिमित्तत्वमुपैतीति योजना।

अयं भावः—आख्यातस्यैव स्वभावात् शुद्धक्रियावाचित्वेन शुद्धक्रियावाचिनस्तृतीयान्तस्यासंभवात् क्रियाविशिष्टद्रव्यवचनः शब्दो वतिप्रकृतित्वेन गृह्यते। तत्र ब्राह्मणशब्दस्य तपःश्रुताध्ययनादिसमुदायवाचकत्वेऽपि अध्ययने प्रधाने=अध्ययनक्रियानिरूपितप्राधान्यवति द्रव्ये गुणादिसमुदायावयवे वृत्तिः कल्प्यते।

तथा चाध्ययनक्रियारूपव्यापारे प्रधानाद् ब्राह्मणशब्दात् तृतीयान्ताद्—ब्राह्मणेन तुल्यम-

तुल्यमधीते क्षत्रिय इति ब्राह्मणवदिति वतिप्रत्यये कृते शब्दोपात्ताध्ययनहेतुको ब्राह्मण-क्षत्रिययोरुपमानोपमेयभावोऽवगम्यत इतीष्टसिद्धिः ॥ ४९१ ॥

एकीयमते तु दोषान्तरमाह—

सिंहशब्देन संबन्धे शौर्यमात्राभिधायिना ।
चैत्रात् षष्ठी प्रसज्येत योगे शौर्यादिभिर्यथा ॥ ४९२ ॥

यः किल ब्राह्मणवदित्यत्र ब्राह्मणशब्दस्याध्ययनमात्राभिधायितामाह, तस्य शौर्यमात्राभिधायिना सिंहशब्देन चैत्रस्याभिसम्बन्धे चैत्रस्य सिंह इति व्यतिरेक-निबन्धना विभक्तिः प्रसज्येत, यथा चैत्रस्य शौर्यमिति ।

अस्मत्पक्षे तु तद्वति सिंहशब्दस्य प्रवृत्तेरुपमानोपमेययोस्तत्त्वासङ्गे सामानाधि-करण्यमुपपद्यते ॥ ४९२ ॥

---

धीते क्षत्रिय इति ब्राह्मणवदिति वतिप्रत्यये कृते शब्दोपात्तं यदुपमेयगतमध्ययनं तद्धेतुको ब्राह्मण-क्षत्रिययोरुपमानोपमेयभावोऽवगम्यते इति इष्टसिद्धिरिति ॥ ४९१ ॥

एकीयमते तु क्रियावाचिनस्तृतीया समर्थत्वानुपपत्तिरूपं दोषमुक्त्वा दोषान्तरमाह—सिंहशब्देनेति ।

अस्यार्थः—यस्य मते 'ब्राह्मणवदधीते क्षत्रियः' इत्यत्र ब्राह्मणशब्दो ब्राह्मणाध्ययनं ब्राह्मणधर्मं प्राधान्येनाभिधत्ते, तस्य मते धर्मः शब्दार्थ इति वादिनः शौर्यमात्राभिधायिना सिंह-शब्देन चैत्रपदस्य संवन्धे चैत्रशब्दात् षष्ठी प्रसज्यते, यथा चैत्रस्य शौर्यादिभिर्योगे षष्ठी दृश्यते—'चैत्रस्य शौर्यम्' इति। तथा 'चैत्रस्य सिंहः' इति प्रयोगः स्यात् । इष्यते तु 'चैत्रः सिंहः' इति प्रथमा, अन्यथा वा समानाधिकरणविभक्तिः । तथा चाध्येतर्येव ब्राह्मणशब्दस्य वृत्तिः, न तु अध्ययने । एवं सिहशब्दस्यापि शौर्यवत्येव वृत्तिः, न तु शौर्यमात्रे इति ।

अयं भावः—यः किल धर्मः शब्दार्थ इति वादी 'ब्राह्मणवदधीते क्षत्रियः' इत्यत्र ब्राह्मण-शब्दस्याध्ययनमात्राभिधायितामाह, तस्य मते शौर्यमात्राभिधायिना सिंहशब्देन चैत्रस्याभिसंबन्धे 'चैत्रस्य सिंहः' इति व्यतिरेकनिबन्धना=भेदहेतुका षष्ठी विभक्तिः प्रसज्येत, यथा—'चैत्रस्य शौर्यम्' इति ।

अस्मत्पक्षे तु=प्रवृत्तिनिमित्तधर्मवान् शब्दार्थ इत्यस्माकं पक्षे तु तद्वति=शौर्यवति सिंह-शब्दस्य प्रवृत्तेरुपमानोपमेयोश्चैत्रसिंहयोस्तत्त्वासङ्गे=तत्त्वेन अभेदेन संवन्धे 'चैत्रः सिंहः' इति सामानाधिकरण्यमुपपद्यत इति ॥ ४९२ ॥

उपालम्भान्तरमप्येकीयमतस्याह—

**ब्राह्मणायेव दातव्यं वैश्यायेत्येवमादिषु ।**
**सम्प्रदानादियोगश्च क्रियामात्रे न कल्पते ॥ ४९३ ॥**

अध्ययनक्रियामात्रे ब्राह्मणशब्दे वतिविषयेऽभिधीयमाने ब्राह्मणवद् वैश्याय दातव्यम्, ब्राह्मणवद् वैश्यादध्येतव्यम्, ब्राह्मणवद् वैश्ये वर्तितव्यमिति सम्प्रदानापादानाधिकरणादिसम्बन्धो न स्यात्, क्रियामात्रस्य तदनुपपत्तेः । नहि ब्राह्मणाध्ययनादध्येतुं शक्यते । अस्मत्पक्षे तु तद्वतोऽभिधाने सर्वमेतद् युज्यते ॥ ४९३ ॥

किञ्च भाष्यविरोधोऽप्येकीयमत इत्याह—

**क्रियामात्राभिधायित्वादव्ययेषु वतेर्न च ।**
**पाठः कदाचित् कर्तव्यस्तुल्यौ पक्षावुभौ यतः ॥ ४९४ ॥**

प्रत्ययार्थविशेषणपक्षेऽत्रैव भाष्यकारः प्राह—'अपि चाव्ययेषु वतेः पाठो न कर्तव्यो भवति । क्रियायामयं भवल्लिँङ्गसङ्ख्याभ्यां न योक्ष्यत' इति । यदि च

---

एकीयमतस्योपालम्भान्तरमपि=दोषान्तरमपि आह—ब्राह्मणायेवेति ।

अस्यार्थः—"ब्राह्मणायेव वैश्याय दातव्यम्, ब्राह्मणवद् वैश्याय दातव्यम्, ब्राह्मणादिव वैश्यादध्येतव्यम्, ब्राह्मणवद् वैश्यादध्येतव्यम्, ब्राह्मण इव वैश्ये वर्तितव्यम्, ब्राह्मणवद् वैश्ये वर्तितव्यम्" इत्येवमादिषु वाक्येषु दानादिके क्रियामात्रे संप्रदानादियोगश्च संप्रदानापादानाधिकरणत्वयोगोऽपि न कल्पते=न प्रसिध्यति । क्रियामात्रस्यासत्त्वभूतस्य सत्त्वधर्मसंप्रदानत्वाद्यनुपपत्तेरिति ।

अयं भावः—अध्ययनक्रियामात्रे वर्तमाने ब्राह्मणशब्दे वतिविषयेऽभिधीयमाने 'ब्राह्मणवद् वैश्याय दातव्यम्, ब्राह्मणवद् वैश्यादध्येतव्यम्, ब्राह्मणवद् वैश्ये वर्तितव्यम्' इति संप्रदानापादानाधिकरणत्वादिसंबन्धो न स्यात्, दानाध्ययनादिक्रियामात्रस्यासत्त्वभूतस्य सत्त्वधर्मः संप्रदानत्वाद्यनुपपत्तेः ।

नहि ब्राह्मणाध्यनाय दातुं शक्यते, न वा ब्राह्मणाध्ययनादध्येतुं शक्यते, न च ब्राह्मणाध्ययने वर्तितुं शक्यते इति । अस्मत्पक्षे तु तद्वतोऽभिधाने क्रियाश्रये द्रव्ये सर्वमेतत् संप्रदानत्वादिकं युज्यत इति ॥ ४९३ ॥

किञ्चैकीयमते भाष्यविरोधोऽपि दोष इत्याह—क्रियामात्राभिधायित्वादिति ।

अस्यार्थः—क्रियायाः प्रत्ययार्थविशेषणत्वपक्ष इव तस्याः प्रकृत्यर्थविशेषणत्वपक्षेऽपि एकीयमते उपमानशब्दानां क्रियामात्राभिधायित्वाद् अव्ययेषु स्वरादिषु वतेः प्रत्ययस्य पाठः कदाचिच्च=अपि, पक्षद्वयेऽपि न कर्तव्यः, यतोऽव्ययेषु वतेः पाठस्याकर्तव्यताविषये उभौ पक्षौ तुल्यौ ।

अत्रायं निष्कर्षः—यथा क्रियायाः प्रत्ययार्थविशेषणत्वपक्षे क्रियाया असत्त्वभूतत्वेन वत्यन्ते लिङ्गसंख्यायोगाभावस्य स्वतः सिद्धत्वेनाव्ययेषु वतेः पाठस्याकर्तव्यत्वम्, तथा क्रियायाः

प्रकृत्यर्थविशेषणपक्षेऽप्युपमानशब्दानां क्रियामात्रवचनत्वम्, तदा क्रियायास्तुल्या क्रियैव प्रत्ययार्थो न्याय्य इत्यसत्त्वभूतत्वात् तस्याः सिद्धेऽलिङ्गसङ्ख्यत्वे स्वरादिषु सत्त्व-वचनेषु मध्येऽव्ययसंज्ञार्थं वतेः पाठोऽत्रापि प्रकृत्यर्थविशेषणपक्षे न कार्यः स्यादिति प्रत्ययार्थविशेषणपक्षमुत्कर्षयितुं कथमेवं तत्रैव पाठः कर्तव्यः स्यादिति भाष्य-कारः प्राह ।

क्रियामात्रवचनत्वे हि ब्राह्मणादिशब्दानां द्वावपि प्रकृत्यर्थप्रत्ययार्थविशेषण-पक्षौ समानावुभयत्रापि क्रियायाः प्रत्ययार्थत्वात् ।

यदा त्वस्मत्पक्षे क्रियावान् ब्राह्मणशब्दवाच्यः, तदोपमेयोऽपि तेन तुल्यः क्रियावानेव न्याय्य इति तस्य सत्त्वभूतत्वाल्लिङ्गसङ्ख्याप्राप्तावव्ययेषु वतेः पाठोऽ-स्मिन्नेव पक्षे कर्तव्यः स्यादिति युक्तं प्रत्ययार्थविशेषणपक्षस्य तदापाठेनोत्कर्षं आख्यातुम् ॥ ४९४ ॥

---

प्रकृत्यर्थविशेषणत्वपक्षेऽपि एकीयमते उपमानशब्दानां क्रियामात्राभिधायित्वात् क्रियायाश्चासत्त्व-भूतत्वेन लिङ्गसंख्यायोगाभावस्य स्वतः सिद्धत्वेनाव्ययेषु वतेः पाठस्याकर्तव्यता समानेति—"अपि चाव्ययेषु वतेः पाठो न कर्तव्यो भवति । क्रियायामयं भवल्लिङ्गसंख्याभ्यां न योक्ष्यते" इति क्रियायाः प्रत्ययार्थविशेषणत्वपक्षे भाष्यकारोक्तिर्विरुध्यत इति ।

अयं भावः—क्रियायाः प्रत्ययार्थविशेषणत्वपक्षेऽत्रैव="तेन तुल्यम्०" इति सूत्र एव भाष्यकारः प्राह—"अपि चाव्ययेषु वतेः पाठो न कर्तव्यो भवति । क्रियायामयं भवल्लिङ्गसंख्याभ्यां न योक्ष्यते" इति ।

यदि च क्रियायाः प्रकृत्यर्थविशेषणत्वपक्षेऽपि उपमानशब्दानां क्रियावचनत्वम्, तदा क्रियाया-स्तुल्या क्रियैव प्रत्ययार्थो न्याय्य इति क्रियाया असत्त्वभूतत्वात् तस्याः प्रकृत्यर्थविशेषणत्वपक्षेऽपि वत्यन्तस्य अलिङ्गसंख्यत्वे स्वतःसिद्धे स्वरादिषु सत्त्ववचनेषु मध्येऽव्ययसंज्ञार्थं वतेः पाठोऽत्रापि क्रियायाः प्रकृत्यर्थविशेषणत्वपक्षे न कार्यः स्यादिति प्रत्ययार्थविशेषणपक्षं प्रकृत्यर्थविशेषणपक्षादुत्कर्षयितुं कथमेवं तत्रैव प्रकृत्यर्थविशेषणत्वपक्ष एव वतेः स्वरादिषु पाठः कर्तव्यः स्यादिति भाष्यकारः प्राह ।

एकीयमते ब्राह्मणाद्युपमानशब्दानां क्रियामात्रवचनत्वे हि द्वावपि प्रकृत्यर्थप्रत्ययार्थविशेष-णत्वपक्षौ समानौ, उभयत्रापि पक्षे क्रियायाः प्रत्ययार्थत्वात् ।

यदा त्वमस्मत्पक्षे क्रियावान् उपमानीभूतब्राह्मणशब्दवाच्यः, तदोपमेयोऽपि तेन तुल्यः क्रियावानेव न्याय्य इति तस्य=क्रियावतो द्रव्यस्य सत्त्वभूतत्वाल्लिङ्गसंख्याप्राप्तौ अव्ययेषु वतेः पाठोऽस्मिन्नेव पक्षे=क्रियायाः प्रकृत्यर्थविशेषणत्वपक्ष एव कर्तव्यः स्यात्, क्रियावत उपमान-शब्दार्थत्वादिति युक्तं प्रत्ययार्थविशेषणत्वपक्षस्य, तदा=प्रकृत्यर्थविशेषणत्वकाले वतेः स्वरादिषु पाठेन हेतुना प्रकृत्यर्थविशेषणत्वपक्षादुत्कर्ष आख्यातुमिति ॥ ४९४ ॥

तदेवमेकीयमतं सावद्यमुद्भाव्य स्वमतं निरवद्यतया निगमयितुमाह—

**जहाति जातिं द्रव्यं वा तस्मान्नावयवे स्थितः ।**
**क्रियायास्तु श्रुतिर्यस्मात् तद्वत्यर्थेऽवतिष्ठते ॥ ४९५ ॥**

यत एवं क्रियामात्राभिधाने दोषः, तस्मादेकदेशेऽपि वर्तमानो ब्राह्मणशब्दो जातिं द्रव्यं वा न परित्यजति । जातिरत्रोपमानत्वेनोपात्ता द्रष्टव्या । यथा साङ्कर्य-परिहारार्थं गुणसमुदायेऽपि वर्तमानः शब्दो जातिनिमित्तत्वं न त्यजति, तथावयवेऽपि वर्तमानो द्रव्यं वाच्यं न जहाति ।

यस्माच्च सूत्रे क्रियायाः प्रकृत्यर्थोपाधित्वेन श्रवणम्, तस्मात् तद्वति क्रियावति द्रव्ये ब्राह्मणादिशब्दोऽत्र वर्तमानो गृह्यते, अन्ये तु सहचारिणो धर्मास्त्यज्यन्त इत्यव-यववृत्तिताप्युपपद्यते ॥ ४९५ ॥

यदि तर्हि क्रियावानभिधेयः, तदा क्रियायास्तृतीयासमर्थत्वं कथमित्यत आह—

**अक्रियाणां निवृत्त्यर्था यतश्चात्र क्रियाश्रुतिः ।**
**क्रियोपलक्षिते तस्मात् क्रियाशब्दः प्रतीयते ॥ ४९६ ॥**

---

तदेवं ब्राह्मणादीनामुपमानशब्दानामध्ययनादिक्रियामात्रे वृत्तिरित्येकीयमतं पद्यपञ्चकेन सावद्यम्=सदोषम् उद्भाव्य ब्राह्मणाद्युपमानशब्दानामध्ययनादिक्रियावति वृत्तिरिति स्वमतं निरवद्यतया निगमयितुम्=उपसंहर्तुम् आह—जहाति जातिं द्रव्यं वा इति ।

अस्यार्थः—यत उपमानशब्दानां क्रियामात्राभिधाने प्रागुक्तरीत्या दोष आपतति, तस्मा-दवयवे क्रियादौ वर्तमानोऽपि ब्राह्मणादिरुपमानशब्दो जातिं द्रव्यं वा न जहाति । जातिहाने शब्दा-नामर्थसांकर्यं प्राप्नोति । द्रव्यहाने तु कर्मत्वाद्यनुपपत्तिरिति । यस्मात्तु क्रियायाः प्रकृत्यर्थोपाधित्वेन श्रुतिः श्रवणम्, तस्मादुपमानशब्दस्तद्वति=क्रियावत्यर्थेऽवतिष्ठते=अवस्थितो भवतीति योजना ।

अयं भावः—यत एवम्=प्रागुक्तरीत्या क्रियामात्राभिधाने दोषः, तस्मादेकदेशे अध्यय-नादिक्रियामात्रे वर्तमानोऽपि ब्राह्मणशब्दो जातिं द्रव्यं वा न परित्यजति, किन्तु अभिधत्त एव । जातिरत्रोपमानत्वेनोपात्ता द्रष्टव्या ।

यथाऽर्थसांकर्यपरिहारार्थं गुणसमुदायेऽपि=द्रव्ये गुणीभूतगुणक्रियादिसमुदायेऽपि वर्तमानः शब्दो जातिप्रवृत्तिनिमित्तकत्वं न त्यजति, तथाऽवयवेऽपि अध्ययनादिक्रियारूपे वर्तमानो द्रव्यं वाच्यं न जहाति । यस्माच्च वतिविधायके "तेन तुल्यम्०" इति सूत्रे क्रियायाः प्रकृत्यर्थोपाधित्वेन =प्रकृत्यर्थविशेषणत्वेन श्रवणम्, तस्मात् तद्वति क्रियावति द्रव्ये ब्राह्मणादिशब्दोऽत्र='ब्राह्मण-वदधीते क्षत्रियः' इत्यादौ वर्तमानो गृह्यते, अन्ये तु सहचारिणो धर्माः तपःश्रुतादयस्त्यज्यन्ते, अतो नावश्यं ब्राह्मणशब्देनोच्चारितेन ते प्रतीयन्ते इत्येवमपि ब्राह्मणादिशब्दस्यावयववृत्तिता उपपद्यत इति ॥ ४९५ ॥

यदि तर्हि क्रियावान् सूत्रे क्रियापदेनाभिधेयः, तदा क्रियायास्तृतीयासमर्थत्वं कथं प्रकृत्यर्थविशेषणत्वपक्षे उपपद्यते इत्याशङ्क्याह—अक्रियाणामिति ।

मुख्यस्य क्रियामात्राभिधायिनस्तृतीयान्तस्यासम्भवादक्रियायां द्रव्यगुणतद्वतां निवृत्तितात्पर्येण क्रियाशब्दोऽत्र कथ्यमानः क्रियावन्तमुपलक्षयति मुख्यार्थासम्भवे लक्षणाया गङ्गादिषु दृष्टत्वात् ॥ ४९६ ॥

कथमेतत् ? यावता होतव्यादयः क्रियामात्रवचनाः सन्तीति ।

तदाह—

**होतव्यादिषु यस्माच्च क्रियान्या ब्राह्मणादिवत् ।**
**अपेक्षणीया शुद्धेऽर्थे तस्माद् वृत्तिर्न कस्यचित् ॥ ४९७ ॥**

ब्राह्मणवदित्युक्ते यथाध्ययनमुपमाननिमित्तत्वेऽपेक्षणीयं साधारणो धर्मः, तथा ब्राह्मणहोतव्येन तुल्यं क्षत्रियस्य होतव्यमित्यत्राप्यन्या क्रिया साधारणधर्मभूतापेक्षणीया स्यात् । अन्यथा समन्वयानुपपत्तिः ।

तथा च सत्त्ववचनैर्ब्राह्मणादिशब्दैस्तुल्या होतव्यादयः । तत्रापि धर्मान्तराधार-

---

अस्यार्थः—यतश्चात्र=वतिविधायके सूत्रे, अक्रियाणां द्रव्यगुणगुणवतां, निवृत्त्यर्था क्रियाश्रुतिः=क्रियाशब्दः, तस्मात् तत्र लक्षणया क्रियोपलक्षिते=क्रियावति वर्तमानः क्रियाशब्दः प्रतीयत इति योजना ।

अयं भावः—आख्यातस्यैव क्रियाभिधायित्वेन मुख्यस्य क्रियामात्राभिधायिनस्तृतीयान्तस्यासंभवाद्, अक्रियाणां द्रव्यगुणतद्वताम्=द्रव्यगुणगुणवतां निवृत्तितात्पर्येण क्रियाशब्दोऽत्र सूत्रे कथ्यमानः क्रियावन्तमुपलक्षयति=लक्षणया बोधयति, मुख्यार्थासंभवे=मुख्यार्थबाधे लक्षणायाः 'गङ्गायां घोषः' इत्यादौ गङ्गादिपदेषु तीररूपार्थपरेषु दृष्टत्वादिति ॥ ४९६ ॥

क्रियामात्राभिधायिनां तृतीयान्तत्वं न संभवति इत्येतत् कथम् ? यवता=यतो होतव्यादयः क्रियामात्रवचनाः सन्ति इत्याशङ्क्याह—होतव्यादिषु इति ।

अस्यार्थः—यस्माच्च ब्राह्मणादिवद् होतव्यादिष्वपि='ब्राह्मणहोतव्येन तुल्यं क्षत्रियस्य होतव्यम्' इत्यादिष्वपि औपम्यनिमित्तभूता साधारणधर्मरूपाऽन्या क्रिया साधारणधर्मो वाऽन्योपेक्षणीयः, तस्मात् शुद्धेऽर्थे साध्यत्वेन प्रतीयमाने क्रियारूपेऽर्थे कस्यचिद् ब्राह्मणादेर्होतव्यादेर्वा वृत्तिर्न विद्यते । होतव्यादिशब्दप्रवृत्तिनिमित्तभूताया हवनादिक्रियाया अपि साधारणधर्माधारत्वेन सिद्धत्वे सिद्धे साध्यत्वसमानाधिकरणक्रियात्वव्याघातादिति ।

अयं भावः—यथा ब्राह्मणवदित्युक्तेऽध्ययनं साधारणो धर्म उपमाननिमित्तत्वेनापेक्षणीयः, तथा 'ब्राह्मणहोतव्येन तुल्यं क्षत्रियस्य होतव्यम्' इत्यत्रापि अन्या क्रिया मनोहरणदर्शनादिरूपा साधारणधर्मभूताऽपेक्षणीया स्यात् । अन्यथा ब्राह्मणहोतव्यपदस्य तुल्यपदेन सह सम्बन्धानुपपत्तिः । तथा च साधारणधर्माधारत्वेन सत्त्ववचनैः=द्रव्यवचनैः ब्राह्मणादिभिस्तुल्या होतव्यादयः । तत्रापि=होतव्यादिषु क्रियावाचित्वेनाभिमतेष्वपि साधारणधर्मरूपधर्मान्तराधारभावमनुभवन्ती

भावमनुभवन्ती क्रिया स्वरूपादपैति, सत्त्वभावापत्तेरिति केवलक्रियावचनाभावान्मुख्यार्थासम्भवे क्रियाशब्देन तद्वदुपलक्षणं न्याय्यमेव ॥ ४९७ ॥

तत्रैतत् स्यात्—यद्युपमेये क्रियाश्रुतेः सैवोपमानेऽप्याश्रीयते साधारणो धर्मः, तदा किमवयववृत्तिपरिकल्पनाप्रयासेन ? अस्तु समुदाय एव वाच्यः, तथापि हि तत्स्थां क्रियामेवोपकारिणीमपेक्षिष्यामह इत्याशङ्क्याह—

**सर्वं वाप्येकदेशो वा यस्मिन्नाश्रीयते क्वचित् ।**
**विशेषवृत्तिं तं सर्वमाहुर्भेदे व्यवस्थितम् ॥ ४९८ ॥**

समुदायवचनोऽवयववचनश्च यः शब्दस्तं सर्वं शब्दं विशेषवृत्तिं विशिष्टार्थवाचकमाचक्षते, यतो भेदे विशेषे सर्वस्य शब्दस्यावस्थानम् । तथाहि—यदावयवे प्रयोगः, तदा सर्वं समुदायरूपं नापेक्ष्यत इति तन्निवृत्त्या विशेष एव शब्दार्थः । यदापि समुदाये प्रयोगः, तदैकदेशो नापेक्ष्यत इति तन्निवृत्त्या विशेषवचन एव शब्दः ।

---

क्रिया स्वरूपात् साध्यत्वरूपादपैति, धर्मान्तराधारत्वेन सत्त्वभावापत्तेरिति केवलक्रियावचनाभावात्=केवलक्रियावचनस्य तृतीयासमर्थस्याभावाद् मुख्यार्थासंभवे क्रियाशब्देन तद्वदुपलक्षणम्=क्रियावतो लक्षणया बोधनं न्याय्यमेवेति ॥ ४९७ ॥

तत्रैतत् स्यात्=उपमेये श्रुतायाः क्रियाया उपमानेऽपि औपम्यनिमित्तसाधारणधर्मरूपत्वाभ्युपगमे वक्ष्यमाणं दूषणं संभाव्यते । यदि उपमेये श्रुता क्रियैव उपमानेऽपि साधारणो धर्म आश्रीयते, तदा किं क्रियारूपेऽवयवे शब्दस्य वृत्तिपरिकल्पनाप्रयासेन । अस्तु जातिगुणक्रियादिसमुदाय एव शब्दवाच्यः । तथापि हि= समुदायस्य शब्दवाच्यत्वेऽपि हि समुदायस्थां क्रियामेव अध्ययनादिरूपाम् उपमानोपमेयभावे उपकारिणीम् औपम्यनिमित्तभूतसाधारणधर्मरूपतयाऽपेक्षिष्यामहे इत्याशङ्क्याह—सर्वं वाऽप्येकदेशो वा इति ।

अस्यार्थः—यस्मिन् शब्दे सर्वं वा=समुदायो वा, एकदेशोऽपि वा=अवयवोऽपि वा, क्वचिद् वाक्ये वाच्यत्वेनाश्रीयते, तं भेदे=स्वार्थेतरव्यावृत्तौ व्यवस्थितं सर्वं शब्दम्—समुदायाभिधायिनमेकदेशाभिधायिनं वा, विशेषवृत्तिम्=विशेषवाचिनमेवाहुरिति योजना ।

अत्रायं निष्कर्ष—यदा शब्दस्यावयवे प्रयोगः—'ब्राह्मणवदधीते' इति । ब्राह्मणः पौरोहित्ये वरणीय इत्यादिः, तदा समुदायो वाच्यतया नापेक्ष्यत इति समुदायव्यावृत्त्या विशेष एव शब्दार्थः । यदाऽपि समुदाये प्रयोगः—'ब्राह्मणः पूज्यः, ब्राह्मणो भोज्यः' इति, तदैकदेशो नापेक्ष्यत इति एकदेशव्यावृत्त्या विशेषवचन एव ब्राह्मणशब्दः, एवमन्यत्रापि बोध्यम् । एवं सर्वस्य शब्दस्य विशेषवचनत्वे व्यवस्थिते प्राक् कृतः शब्दस्यावयवे वृत्तिपरिकल्पनाप्रयासो न्याय्य एवेति ।

अयं भावः—यः शब्दः समुदायवचनो यश्चापि अवयववचनः, तं सर्वं शब्दं विशेषवृत्तिम्=विशिष्टार्थवाचकमाचक्षते, यतो भेदे स्वार्थेतरव्यावृत्तिरूपे विशेषे सर्वस्य शब्दस्यावस्थानम् ।

तथा हि—यदाऽवयवे शब्दस्य प्रयोगः, तदा सर्वं समुदायरूपं नापेक्ष्यत इति तन्निवृत्त्या=समुदायव्यावृत्त्या विशेष एव शब्दार्थः । यदाऽपि समुदाये शब्दस्य प्रयोगः, तदैकदेशो नापेक्ष्यते

यथा हि प्रदेशः प्रदेशान्तरमवच्छिन्दन् विशेष इत्युच्यते, तथा समुदायोऽप्यवयवं निवर्तयन् विशेष इत्युभयवृत्तिरपि शब्दो विशेषविषयः। ततश्च समस्तधर्माच्छुरितस्यार्थस्य निरूपणात् तथैव शब्देनाभिधाने गुणसमुदायविषयत्वे शब्दानां समर्थिते ब्राह्मणशब्देन यदा समुदायाभिधानम्, तदावयवस्यावच्छेदान्निवारणात् कथं स प्रतीयते, येन समुदायवचनत्वेऽपि तन्निमित्त उपमानोपमेयभावोऽवगम्यते। समुदायाभिधाने हि तस्यैव प्राधान्यं विकल्पसमुच्चयव्युदासेनोक्तम्। संमूर्छितरूपो हि समुदायोऽभिधीयते। न त्वत्रावयवा भेदवन्तः कथ्यन्ते। विकल्पेन समुच्चयेन वा भेदविवक्षायां हि विकल्पो वा स्यात् समुच्चयो वा।

अभेदप्राप्तास्तु समुदिता यदा अभिधीयन्ते, तदा न विकल्पो न समुच्चयः। अत एव वृक्षशब्देन मूलादीनां भेदेनानभिधानाद् बहुवचनं न भवति।

तस्मात् समुदायाभिधानेनाभिधीयमानोऽवयव इति तेन निष्कृष्टरूपेणानभिधीयमानेन न कश्चिदुपकार इति समुदायादपोद्धृतोऽवयवः समाविष्टव्यापारद्रव्य-

---

इति तन्निवृत्त्या=एकदेशव्यावृत्त्या विशेषवाचक एव शब्दः। यथा हि प्रदेशः=अवयवः प्रदेशान्तरम्=अवयवान्तरम् अवच्छिन्दन्=निवर्तयन् विशेष इत्युच्यते, विशिनष्टि व्यावर्तयति स्वेतरमिति विग्रहे पचाद्यच्, बाहुलकात् कर्तरि घञ् वा इति। तथा समुदायोऽपि अवयवं निवर्तयन् विशेष इति उभयवृत्तिरपि=समुदायवृत्तिरवयववृत्तिरपि शब्दो विशेषविषयः=विशेषवचनः। ततश्च समस्तधर्माच्छुरितस्य=समस्तधर्मविशिष्टस्यार्थस्य बुद्ध्या शब्दप्रयोगात् प्राङ्निरूपणात् तथैव=समस्तधर्माच्छुरितत्वेनैव अर्थस्य शब्देनाभिधाने गुणसमुदायविषयत्वे शब्दानाम्=शब्दानां द्रव्ये गुणीभूतगुणक्रियादिसमुदायवचनत्वे समर्थिते ब्राह्मणशब्देन यदा गुणक्रियादिसमुदायाभिधानम् तदाऽवयवस्याध्ययनादेरवच्छेदान्निवारणात् कथं सः=अवयवः प्रतीयते, येन ब्राह्मणशब्दस्य समुदायवचनत्वेऽपि तन्निमित्तः=अवयवनिमित्तक उपमानोपमेयभावोऽवगम्यते। गुणादिसमुदायाभिधाने हि अनुद्भूतावयवभेदस्य समुदायस्यैव प्राधान्यं विकल्पसमुच्चयव्युदासेनोक्तम्। संमूर्छितरूपो हि=अनुद्भूतावयवभेदो हि समुदायः शब्देनाभिधीयते। न त्वत्र=समुदाये भेदवन्तोऽवयवाः शब्देन कथ्यन्ते=अभिधीयन्ते। विकल्पेन समुच्चयेन वा अवयवभेदविवक्षायां हि विकल्पो वा स्यात् समुच्चयो वा अवयवस्य। अभेदप्राप्तास्तु=समुदायाभेदमापन्नास्तु समुदिता अवयवा यदा अभिधीयन्ते, तदा न विकल्पो न वा समुच्चयः संभवति।

अत एव वृक्षशब्देन मूलशाखापत्रादीनां भेदेनानभिधानाद् एकस्मिन् वृक्षे वाच्ये वृक्षशब्दात् बहुवचनं न भवति। तस्मात् समुदायाभिधानेन शब्देन तदभेदेनाभिधीयमानोऽवयव इति तेन=अवयवेन निकृष्टरूपेण=समुदायादपोद्धृतरूपेण अनभिधीयमानेन न कश्चिदुपकार इति समुदायादपोद्धृतोऽवयवः समाविष्टव्यापारकद्रव्यलक्षणः=क्रियावद् द्रव्यरूपः। अत्र = ब्राह्मणवदधीयते

लक्षणोऽत्र ब्राह्मणशब्दस्यार्थो वाच्यः। केवलायाः क्रियाया वाच्यत्वे दोषाभिधानात् क्रियोन्मुखं द्रव्यमभिधेयमिति क्रियामुखेन तुल्यतोपपत्तिस्तस्य ॥ ४९८ ॥

यद्यवयवे समुदाये च शब्दस्य वृत्तौ विशेषवचनत्वम्, किमिदानीं सामान्यवचनं स्यादित्यत आह—

**समुच्चयो विकल्पो वा प्रकाराः सर्व एव वा ।**
**विशेषा इति वर्ण्यन्ते सामान्यं वाऽविकल्पितम् ॥ ४९९ ॥**

यदि समुच्चिताः सर्वे भेदाः शब्देनाभिधीयन्ते, अथ विकल्पिताः। सर्वथा विशेषवचनत्वमेव शब्दानाम्। तथा ह्यनेकार्थो भिन्नरूपः समकक्ष्यतयाभिधीयमानः समुच्चितोऽभिहितो भवति जातिगुणक्रियादिरूपः। तत्र चैकदेशमात्रस्य विकल्पस्य च निवृत्तिरिति विशेष एवायम्। एवं पर्यायेणाभिधीयमानास्त एवार्था विकल्पिता भवन्ति। तत्रापि च समुच्चयस्य व्युदासाद् विशेषरूपतैव।

---

इत्यत्र ब्राह्मणशब्दस्यार्थो वाच्यः। केवलायाः=द्रव्ये विशेषणत्वमनापन्नायाः क्रियाया वाच्यत्वे तद्वाचिपदस्य तृतीयासमर्थत्वासंभवरूपदोषस्य प्रागभिधानात् क्रियोन्मुखम्=क्रियावद् द्रव्यमभिधेयमिति क्रियाद्वारा तुल्यतोपपत्तिस्तस्य=द्रव्यस्य इति ॥ ४९८ ॥

यदि अवयवे समुदाये च शब्दस्य वृत्तौ विशेषवचनत्वम्, तदा किं सामान्यवचनं स्यादित्यत आह—समुच्चयो विकल्पो वा इति।

अस्यार्थः—शब्दानामर्थाभिधाने त्रयः प्रकाराः। समुच्चयेनार्थाभिधानमेकः प्रकारः। तत्रेश्वरं गुरुञ्च भजस्वेत्यत्र समुच्चयः। परस्परं निरपेक्षाणामनेकार्थानां भिन्नरूपाणां समकक्ष्यतयाभिहितानामेकत्रान्वयः समुच्चयः। विकल्पेनार्थाभिधानं द्वितीयः प्रकारः। 'घटः पटो वा कार्यस्त्वया' इति। विकल्पः पर्यायः। जातिगुणक्रियादिसमुदायः शब्दवाच्य इति तृतीयः प्रकारः। स च समुदायो गुणप्रधानभावापन्नः शब्देनाभिधीयते। तथा च समप्राधान्यम्, पर्यायः, गुणप्रधानभावश्चेति त्रयः प्रकाराः शब्दानामर्थाभिधाने।

तथा च समुच्चयो विकल्पो वा सर्व एव वा जातिगुणक्रियादिरूपः समुदाय इति त्रयः प्रकाराः शब्दानामर्थाभिधाने। एतेषु त्रिष्वपि प्रकारेषु गोचरीभूता अर्था विशेषा इति वर्ण्यन्ते। अस्ति चतुर्थोऽपि शब्दानामर्थाभिधाने प्रकारः। तदुक्तम्—सामान्यं वाऽविकल्पितमिति। अविकल्पितं विकल्पागोचरीभूतं सामान्यं वा प्राधान्येनाभिधीयमानं शब्दवाच्यमिति। अयमपि विशेष एव। विशेषनिराकरणादिति। एवं चतुर्भिरपि प्रकारैः शब्दानामर्थाभिधाने विशेषवचनत्वमेव, न सामान्यवचनत्वमिति।

यद्यपि च समुदायोऽविकल्पसमुच्चयो वाच्य इत्युक्तम्, तथाप्यनेकार्थताप्रकारपरिसंख्याप्रसङ्गेनात्र विकल्पसमुच्चयावुपात्तौ। समुच्चयाद् भेदेनोपादानाच्च प्रकार इति। प्रकारा इति द्रव्यं प्रति गुणभूता धर्मा निर्दिष्टाः। तथा च सामान्यावेशप्राप्ता गुणप्रधानभावेनात्र धर्मा विवक्षिता इति तृतीयोऽयं पक्षः। समप्राधान्यं पर्यायो गुणप्रधानभावश्चेति एतावानत्र प्रकारः संभवी क्रमेणोपन्यस्तः। त एते सर्व एवाभिधीयमानाः प्रकाराः प्रतिनियतभेदापोहहेतुत्वाद् विशेषा एवावगन्तव्याः। सामान्यमप्यविकल्पितं प्राधान्येनाभिधीयमानं विशेष एव प्रतिनियतविशेषापावर्तनात्।

---

अयं भावः—यदि समुच्चिताः सर्वे भेदाः शब्देनाभिधीयन्ते, यदि वा विकल्पिताः, उभयथाऽपि विशेषवचनत्वमेव शब्दानाम्, न सामान्यवचनत्वम्। तथा हि—अनेकार्थो भिन्नरूपः=भिन्नजातीयः समकक्ष्यतया=समप्राधान्येन अभिधीयमानः समुच्चितोऽभिहितो भवति जातिगुणक्रियादिरूपः। तत्र च=समुच्चितस्य जातिगुणक्रियादिरूपस्यार्थस्याभिधाने च एकदेशमात्रस्य विकल्पस्य च निवृत्तिरिति इतरव्यवच्छेदकत्वाद् विशेष एवायम्। एवं पर्यायेणाभिधीयमानास्त एवार्था जातिगुणक्रियादिरूपा विकल्पिता भवन्ति। तत्रापि च=विकल्पेऽपि च समुच्चयस्य व्युदासात्=निराकरणाद् विशेशरूपतैवार्थानाम्।

यद्यपि च समुदायोऽविकल्पसमुच्चयः=विकल्पसमुच्चयागोचरः शब्दानां वाच्य इत्युक्तं प्रागिति नात्र विकल्पसमुच्चययोरुल्लेखावसरः, तथापि अनेकार्थताप्रकारपरिसंख्याप्रसङ्गेन शब्दस्यानेकार्थतायां सत्यां ये प्रकाराः संभविनः, तेषां या परिसंख्या गणना तत्प्रसङ्गेन अत्र=अस्यां कारिकायां विकल्पसमुच्चयावुपात्तौ समुच्चयाद् भेदेनोपादानाच्च विकल्पोऽपि एकः प्रकार इति।

मूले प्रकारा इत्युक्त्या द्रव्यं प्रति गुणभूता जातिगुणक्रियादयो धर्मा निर्दिष्टाः। तथा च सामान्यावेशप्राप्ताः=जातिसमानाधिकरणा गुणप्रधानभावेनावस्थिता अत्र पक्षे धर्मा विवक्षिता इति तृतीयोऽयं पक्षः सर्व एव वा इति।

एवं समुच्चयेनाभिधाने समप्राधान्यम्, विकल्पेनाभिधाने पर्यायः, समुदायाभिधाने गुणप्रधानभावश्चेति एतावानत्र=शब्देनार्थाभिधाने प्रकारः संभवी कारिकायां क्रमेणोपन्यस्तः। त एते सर्व एवाभिधीयमानाः प्रकाराः प्रतिनियतभेदापोहहेतुत्वात् (प्रतिप्रकारं विवक्षतया नियता ये भेदा विशेषाः—विकल्पे अविकल्पिताः, समुच्चये असमुच्चिताः, समुदायाभिधाने असमुदिताः, तेषामपोहो निरासो व्यावृत्तिर्व्यवच्छेदस्तद्धेतुत्वात् प्रकारत्रयगोचराणामर्थानाम्) ते प्रकारत्रयगोचरा अर्था विशेषा एवावगन्तव्याः। 'कम्बुग्रीवादिमन्तो घटाः' इत्यादौ घटादिपदेनाभिधीयमानं घटादिसामान्यमपि अविकल्पितम्=विकल्पगोचरतामनापन्नं घटादिपदेन प्राधान्येन अभिधीयमानं विशेष एव, प्रतिनियतविशेषापावर्तनात्=विपक्षतया प्रतिनियता ये विशेषाः पटादयः, तेषामपावर्तनाद् निराकरणात्।

तथा हि सामान्यरूपोपरागेण युगपदेव बह्वो विशेषाः कथ्यमानाः प्रतिनियतमपावर्तयन्त्येव विशेषम्, सर्वेषामभिन्नसामान्यानुवेधेन क्रियायोगात्। अत एव भाष्यम्–'सामान्यमपि यथा विशेषस्तद्वत्' इति ॥ ४९९ ॥

एवं विशेषवचनत्वे शब्दानां व्याप्तिरुपदर्शिता। तथा च समुदायवचनत्वेऽपि तत्सिद्धिः। इदं तु वक्तव्यम्—उपमाने क्रियागुणयोरेवोपकारात् तद्विषयं शब्दानां समुदायवचनत्वं कीदृशमित्याह—

**न हि ब्राह्मण इत्यत्र भेदः कश्चिदुपाश्रितः।**
**अपाकृतो वा तेनायं समुदाये व्यवस्थितः ॥ ५०० ॥**

नियतस्य भेदस्य प्रतिपादने तदपरस्य निवारणात् समुदायवचनत्वं न स्यात्। न चात्र कश्चिदङ्गीकृतोऽपरश्च निवारितो विशेष इति युक्तं समुदायवचनत्वम्। प्रकरणादिनिरपेक्षो हि ब्राह्मणशब्दः समूहमेवाचष्टे।

---

तथा हि—सामान्यरूपोपरागेण=सामान्यसमवायेन बह्वो विशेषा युगपदेव कथ्यमाना विवक्षतया प्रतिनियतं पटादिकं विशेषमपावर्तयन्त्येव, सर्वेषामवान्तरविशेषाणामभिन्नसामान्यानुवेधेन विधेयभूतक्रियायोगात्।

अत एव=प्रागुक्तरीत्या सामान्यस्यापि विशेषरूपत्वादेव भाष्यम्—"सामान्यमपि यथा विशेषस्तद्वत्" इति।

अस्यार्थः—यथा विशेषस्तद्वत् सामान्यमपि विशेष इति योजनयाऽर्थः सम्पद्यत इति ॥ ४९९ ॥

एवं शब्दानां विशेषवचनत्वे व्याप्तिरुपदर्शिता। सर्वे शब्दा विशेषवचना इति। तथा च= सर्वेषां शब्दानां विशेषवचनत्वे स्थिते च तेषां समुदायवचनत्वेऽपि तत्सिद्धिः=विशेषवचनत्वसिद्धिः। इदं तु वक्तव्यम्—'उपमाने क्रियागुणयोरेवोपकारात्=क्रियागुणयोरेवौपम्योपकारित्वात् तद्विषयम्=क्रियागुणविषयकं शब्दानां समुदायवचनत्वं कीदृशमित्याह—नहि ब्राह्मण इत्यत्रेति।

अस्यार्थः—ब्राह्मण इत्यत्र—'ब्राह्मणवदधीते क्षत्रियः' इत्यत्र वाक्ये स्थितो यो ब्राह्मणशब्दस्तत्र कश्चिद् भेदो विशेषो नहि उपाश्रितः=अङ्गीकृतः। वा=अथवा, कश्चिद् भेदो विशेषो नहि अपाकृतो निवारित इति युक्तमत्र ब्राह्मणशब्दस्य समुदायवचनत्वम्। एवं ब्राह्मणशब्दस्य समुदायवचनत्वे स्थिते क्रियागुणयोरपि ब्राह्मणशब्दार्थत्वादुपमाहेतुत्वमिति उपमानविषये समुदायवचनत्वस्योपयोगोऽस्ति इति।

अयं भावः—ब्राह्मणादिशब्दैर्नियतस्य भेदस्य=विशेषस्य पाराशर्यत्वादेः प्रतिपादने तदपरस्य कौण्डिन्यत्वादेर्निवारणात् समुदायवचनत्वं न स्यात्। न चात्र कश्चिदङ्गीकृतोऽपरश्च निवारितो विशेष इति। युक्तमत्र ब्राह्मणशब्दस्य समुदायवचनत्वम्। प्रकरणादिनिरपेक्षो हि ब्राह्मण-

इत्थं च समुदायवचनत्वे क्रियागुणयोः शब्दार्थत्वादुपमाहेतुत्वमित्युपमानविषये समुदायवचनत्वस्यास्त्युपयोगः ॥ ५०० ॥

तथा ह्यवयववृत्तित्वं तत्र यत्नादित्याह—

**क्रिया त्वाश्रीयते यस्मिन् स भेदोऽध्यवसीयते ।**
**तथान्यथा सर्वथा चेत्यप्रयोगे न विद्यते ॥ ५०१ ॥**

यस्मिन्नुपमाने क्रियाश्रीयते साधारणधर्मत्वेनापेक्ष्यते, तत्र स क्रियाख्यो धर्मः समुदायवृत्तस्य शब्दस्य वाच्यो निश्चीयते । ब्राह्मणेन तुल्यमधीत इत्यत्र ह्यध्ययनस्य साधारणस्य धर्मस्याश्रयणमिति शब्दान्तरसंनिधानात् तत्रैवावयवे ब्राह्मणश्रुतिः समर्थ्यते । यतः शब्दान्तरस्याप्रयोगे स नियतोऽभिमतःप्रकारोऽन्यः सर्वो वा न संभवति । अनपेक्षितशब्दान्तरप्रयोगादिः शब्दो झटिति स्वार्थं प्रसिद्धं समुदायरूपमेवाह यतः, तस्मादुपमाविषये यत्नात् समुदायशब्दस्यावयवे वृत्तिरित्यर्थः ॥ ५०१ ॥

तमेव यत्नमाह—

**उपमाने क्रियावृत्तिमुपमेये क्रियाश्रुतिः ।**
**प्रत्याययन्ती भेदस्य करोतीव पदार्थताम् ॥ ५०२ ॥**

---

शब्दः समूहमवाचष्टे । इत्थं च समुदायवचनत्वे क्रियागुणयोः शब्दार्थत्वादुपमाहेतुत्वमित्युपमानविषये समुदायवचनत्वस्यास्त्युपयोग इति ॥ ५०० ॥

तथा हि=प्रकरणादिनिरपेक्षस्य ब्राह्मणशब्दस्योपमानविषये समुदायवचनत्वे व्यवस्थिते हि तत्र=उपमानविषये तस्यावयववृत्तित्वं शब्दान्तरप्रयोगरूपाद् यत्नादित्याह—क्रिया त्वाश्रीयते यस्मिन्निति ।

अस्यार्थः—यस्मिन्नुपमाने, क्रिया उपमेये क्रियाश्रुतेः साधारणधर्मत्वेनाश्रीयते अपेक्ष्यते, तत्र स क्रियारूपो भेदो विशेषः समुदायवचनस्य शब्दस्य वाच्योऽध्यवसीयते=निश्चीयते । यतः शब्दान्तरस्याप्रयोगे तथा इति स नियतोऽभिमतः क्रियारूपः प्रकारः, अन्यथा इति ततोऽन्यः प्रकारः, सर्वथा इति—सर्व एव वा प्रकारो न विद्यते=न संभवति इति ।

अयं भावः—यस्मिन्नुपमाने क्रियासाधारणधर्मत्वेनाश्रीयते=अपेक्ष्यते, तत्र स क्रियाख्यो धर्मः समुदाये वृत्तस्य शब्दस्य वाच्यो निश्चीयते । 'ब्राह्मणेन तुल्यमधीते' इत्यत्र हि अध्ययनरूपस्य साधारणस्य धर्मस्याश्रयणमिति शब्दान्तरसंनिधानात् तत्रैवावयवे ब्राह्मणश्रुतिः समर्थ्यते । यतः शब्दान्तरस्याप्रयोगे—स नियतोऽभिमतः प्रकारोऽन्यः सर्वो वा न संभवति । यतोऽनपेक्षितशब्दान्तरप्रकरणादिः शब्दो झटिति स्वार्थं प्रसिद्धं समुदायरूपमेवाह । तस्मादुपमाविषये शब्दान्तरप्रयोगरूपाद् यत्नात् समुदाये वृत्तस्य शब्दस्यावयवे वृत्तिरिति ॥ ५०१ ॥

तमेव यत्नमाह—यस्मात् समुदाये वृत्तस्य शब्दस्यावयवे वृत्तिरिति—उपमाने क्रियावृत्तिमिति ।

'ब्राह्मणवदधीते क्षत्रियः' इत्युपमेये क्षत्रिये क्रिया श्रूयमाणा उपमानेऽपि ब्राह्मणशब्दे क्रियार्थत्वं सूचयति। समानधर्मप्रयुक्तो ह्युपमानोपमेयभाव इत्युभयत्र क्रियासाधारणत्वम्। ततश्च भेदस्य प्रदेशस्यात्रोपमानपदेनाभिधानं निश्चीयते। उपमेयगता क्रियाश्रुतिरुपमानगतां क्रियां नाभिदधाति, किन्तु ततोऽवसीयते क्रियावचनत्वमुपमानशब्दस्येतीवशब्दः ॥ ५०२ ॥

न च शुद्धायाः क्रियाया वचनं संभवतीति क्रिययोरप्युपमानोपमेयभावेऽभिसंहिते व्यापाराविष्टद्रव्यवचनादेव तृतीयासमर्थाद् वतिरित्याह—

**व्यापारेणैव सादृश्ये व्यापारस्य विवक्षिते।**
**क्रियावद् वचनाच्छब्दात् प्रत्ययः प्रतिपाद्यते ॥ ५०३ ॥**

ब्राह्मणाध्ययनेन तुल्यं क्षत्रियाध्ययनमित्यपि क्रिययोः साम्येऽध्ययनवदिति सौष्ठवादिधर्मान्तराधारभावं प्रतिपद्यमाना क्रिया प्रातिपदिकार्थो द्रव्यायमाणैवेत्यत्रापि

---

अस्यार्थः—'ब्राह्मणवदधीते क्षत्रियः' इत्यत्र उपमेये क्रियाश्रुतिः, उपमानेऽपि क्रियाविषयामुपमानशब्दस्य वृत्तिं प्रत्याययन्ती भेदस्य क्रियारूपस्य विशेषस्य उपमानपदार्थताम् उपमानपदवाच्यत्वं करोति इव। उपमेये क्रियाश्रुत्या उपमानेऽपि क्रियासाधारणधर्मरूपा कल्प्यते इत्युपमाने क्रियाया अर्थापत्तिलभ्यत्वादत्रेवशब्दप्रयोगः।

अयं भावः—'ब्राह्मणवदधीते क्षत्रियः' इत्यत्रोपमेये क्षत्रियेऽध्ययनक्रिया श्रूयमाणा उपमानेऽपि=उपमानवाचकेऽपि ब्राह्मणशब्दे क्रियार्थत्वम्=अध्ययनक्रियावाचकत्वं सूचयति। उपमानोपमेयभावो हि द्वयोः समानधर्मप्रयुक्त इत्युभयत्र=उपमानोपमेययोः क्रियायाः साधारणत्वम्=समानत्वम्। ततश्च भेदस्य प्रदेशस्य=अध्ययनक्रियारूपस्य ब्राह्मणशब्दार्थसमुदायावयवस्यात्रोपमानपदेनाभिधानं निश्चीयते। उपमेयगता क्रियाश्रुतिरुपमानगतां क्रियां नाभिदधाति, किन्तु ततः=उपमेयगतक्रियाश्रुतेः उपमानशब्दस्यक्रियावचनत्वमवसीयते=कल्प्यत इति इवशब्दप्रयोगोऽत्रेति ॥ ५०२ ॥

शुद्धायाः क्रियायाः साध्यस्वरूपायाः=तद्वाचकाद् धातोर्वचनम्=तृतीयाया एकवचनादिकं न च संभवतीति अध्ययनादिक्रियाश्रयब्राह्मणादिवत् क्रिययोरपि उपमानोपमेयभावेऽभिसंहिते=विवक्षिते क्रियाविष्टद्रव्यवचनादेव तृतीयासमर्थाद् वतिरित्याह—व्यापारेणैवेति।

अस्यार्थः—अध्ययनादिना व्यापारेणैव सह अध्ययनादिव्यापारस्य सादृश्ये विवक्षिते क्रियावद् वचनात्—क्रियाविष्टद्रव्यवचनात् शब्दाद् वतिप्रत्ययः "तेन तुल्यम्०" इति सूत्रेण प्रतिपाद्यत इति योजना—

अयं भावः—'ब्राह्मणाध्ययनेन तुल्यं क्षत्रियाध्ययनम्' इति स्वाश्रयद्रव्यवत् क्रिययोरपि साम्ये विवक्षिते ब्राह्मणाध्ययनवदिति प्रयोगेऽनभिधानाद् गौरवाच्चासत्यपि ब्राह्मणवदध्ययनं क्षत्रियस्येति प्रयोगसिद्धिरेवं भवति। सौष्ठवादिधर्मान्तराधारभावं प्रतिपद्यमाना क्रिया प्राति-

पूर्ववत् क्रियाश्रुतेरुपलक्षणत्वात् क्रियाविष्टद्रव्यवचनादेव तृतीयासमर्थाद् वतिरिति समानं पूर्वेण ॥ ५०३ ॥

यदि द्रव्यवचनादपि समाश्रितक्रियाप्रधानात् प्रत्ययोऽभ्युपगम्यते, तदा क्रियाया असत्त्वभूतत्वादलिङ्गसंख्यत्वे सिद्धे स्वरादिषु वतेः किमर्थः पाठश्चोद्यत इत्याशङ्क्याह—

**क्रियावतोऽपि सादृश्ये वक्तुमिष्टे क्रियावता ।**
**अध्येता ब्राह्मण इव प्रत्ययो न निवर्तते ॥ ५०४ ॥**

क्रियावतोर्द्रव्ययोरप्युपमानोपमेययोरुपात्तक्रियाद्वारकं सादृश्यमाश्रित्य ब्राह्मण इवायं क्षत्रियोऽध्येता, ब्राह्मणेन तुल्योऽध्येता ब्राह्मणवदिति स्यादनिष्टः प्रत्ययो वतिः ।

---

पदिकार्थत्वेन द्रव्यायमाणैव इति अत्रापि=क्रिययोः साम्यविवक्षायामपि पूर्ववत्=क्रियाश्रय-द्रव्ययोः साम्यविवक्षायामिव क्रियाश्रुतेरुपलक्षणत्वात्="तेन तुल्यम्०" ( पा० ५।१।११५ ) इति सूत्रे क्रियाशब्दस्य लक्षणया क्रियावद् द्रव्यबोधकत्वात् क्रियाविष्टद्रव्यवचनादेव तृतीया—समर्थाद् वतिप्रत्यय इति पूर्वेण समानम्=द्रव्ययोः साम्यविवक्षायां यद्रूपं पूर्वमुक्तम्—ब्राह्मणव-दिति तेन समानं क्रिययोः साम्यविवक्षामपि रूपं भवतीति ॥ ५०३ ॥

यदि विशेष्यतया समाश्रितक्रियाप्रधानाद् विशेषणतया द्रव्यवचनादपि उपमानशब्दाद् वतिप्रत्ययोऽभ्युपगम्यते, तदा क्रियाया असत्त्वभूतत्वादलिङ्गसंख्यत्वे सिद्धे स्वरादिषु वतेः पाठः किमर्थश्चोद्यते=वक्तव्यतयोच्यत इत्याशङ्क्याह—क्रियावतोऽपि सादृश्ये इति ।

अस्यार्थः—'ब्राह्मण इवाध्येता क्षत्रियः' इत्यर्थे 'ब्राह्मणेन तुल्योऽध्येता क्षत्रियः' इत्यत्र क्रियावतोऽपि क्रियावता सह उपात्तक्रियाद्वारके सादृश्ये वक्तुमिष्टे ब्राह्मणवदिति अनिष्टो वति-प्रत्ययो न निवर्तते, किन्तु भवत्येव ।

तथा हि—"तेन तुल्यम्०" ( पा० ५।१।११५ ) इति सूत्रस्थ अर्थद्वयम् । क्रियावत-स्तृतीयासमर्थात् तुल्यत्वे वतिरित्येकोऽर्थः । तृतीयासमर्थात् क्रियानिमित्तके तुल्यत्वे वतिरित्यपरोऽर्थः ।

इदञ्चार्थद्वयम्—"अधीते तुल्य इत्येवम्" इति अनुपदं वक्ष्यमाणकारिकाया हेलाराजीय-व्याख्यावलोकनेन प्रतीयते । तत्र प्रथमेऽर्थे—'ब्राह्मणवदध्येता क्षत्रियः' इति वतिः प्रत्ययोऽनिष्टोऽपि न निवर्तते । द्वितीयेऽर्थे तु नियमेन क्रियानिमित्तकस्य तुल्यत्वस्य क्रियावतोरुपमानोपमेयभावेऽ-भावान्नेष्यतेऽत्र वतिरिति स्वरादिषु वतेः पाठो व्यर्थः । इदञ्चार्थद्वयं लक्षणया विभक्तिविपरिणा-मे न च लभ्यते ।

एवञ्चात्र प्रथमेऽर्थे वत्यन्तस्य द्रव्यप्रधानतया सत्त्ववचनत्वेन लिङ्गसंख्यायोगः स्यादिति स्वरादिषु वतेः पाठश्चोद्यत इति ।

अयं भावः—क्रियावतोर्द्रव्ययोरपि उपमानोपमेययोरुपात्तक्रियाद्वारकं सादृश्यमाश्रित्य—'ब्राह्मण इवायं क्षत्रियोऽध्येता' इत्यर्थे 'ब्राह्मणेन तुल्योऽध्येता क्षत्रियः' इत्यत्र ब्राह्मणवदिति अनिष्टः प्रत्ययो वतिः स्यात् ।

तथा च सत्त्ववचनत्वादव्ययेषु वतेः पाठः कर्तव्य इत्युक्तम्। द्रव्यप्राधान्ये हि सत्त्वं वत्यन्तस्येति लिङ्गसंख्यायोगः स्यात्। अतः स्वरादिपाठेनाव्ययत्वमारभ्यते ॥ ५०४ ॥

ननु च क्रियावतोरपि क्रियाद्वारक एवोपमानोपमेयभावः, तत्र चेष्यत एव वतिरिति कथमनिष्टत्वेन प्रत्ययो न निवर्तते इत्युक्तमित्याह—

अधीते तुल्य इत्येवं पुंल्लिङ्गेन विशेषणम्।
क्रियावति क्रियायां तु तुल्यशब्दे नपुंसकम् ॥ ५०५ ॥

क्रियावतोः सादृश्ये वतिर्विधीयमानः, सत्त्वरूपत्वात् तयोस्तुल्यशब्दस्तल्लिङ्ग एव प्रयुज्यते, ब्राह्मणेन तुल्योऽधीते क्षत्रिय इति। तथा च क्रियानिमित्तं तुल्यत्वं नियमेन न प्रतीयते। अन्येन केनचिद् धर्मेण तुल्योऽधीत इत्यप्यवगमात् क्रियातुल्यत्वस्यासंप्रत्ययादत्र प्रत्ययो नेष्यते। क्रियानिमित्ते तु सादृश्ये प्रत्यय इति तत्र

---

तथा च वत्यन्तस्य सत्त्ववचनत्वाल्लिङ्गसंख्यायोगे प्रसक्तेऽव्ययेषु वतेः पाठः कर्तव्य इत्युक्तम्। द्रव्यप्राधान्ये हि सत्त्ववाचित्वं वत्यन्तस्येति लिङ्गसंख्यायोगः स्यात्। अतः स्वरादिपाठेनाव्ययत्वमारभ्यते तस्य तदभावायेति ॥ ५०४ ॥

ननु च क्रियावतोरपि क्रियाद्वारक एवोपमानोपमेयभावः, तत्र च=क्रियाद्वारके उपमानोपमेयभावे च इष्यत एव वतिरिति कथमनिष्टत्वेन "प्रत्ययो न निवर्तते" इत्युक्तमित्याह— इत्याशङ्कयोपपत्तिमाह—अधीते तुल्य इत्येवमिति।

अस्यार्थः—क्रियावति तुल्यशब्दे विवक्षिते 'ब्राह्मणेन तुल्येऽधीते क्षत्रियः' इत्येवं पुंलिङ्गेन तुल्यशब्देन क्रियावतो विशेषणं क्रियते, क्रियायां तु तुल्यशब्दे विवक्षिते 'ब्राह्मणेन तुल्यमधीते क्षत्रियः' इत्येवं नपुंसकं तुल्यशब्दरूपं क्रियायामभेदेन विशेषणमिति।

अयमत्र निष्कर्षः—प्रथमे विग्रहवाक्ये नियमेन क्रियानिमित्तकस्य सादृश्यस्याप्रत्ययाद् वतिरनिष्टोऽपि प्रथमे सूत्रार्थे प्रागुक्ते प्रसज्यते, क्रियाद्वारकस्य सादृश्यस्यात्र सत्त्वादिति। अत्र पक्षे स्वरादिषु वतेः पाठः कर्तव्यः। द्वितीये सूत्रार्थे तु अत्र वतिर्नेष्यते, न च प्राप्नोति। क्रियावति नियमेन क्रियानिमित्तकस्य तुल्यत्वस्याप्रत्ययादिति स्वरादिषु वतेः पाठो न कर्तव्य इति।

अयं भावः—प्रथमे सूत्रार्थे क्रियावतोः सादृश्ये विधीयमानो वतिः क्रियावतोः सत्त्वरूपत्वात् तुल्यशब्दस्तल्लिङ्ग एव प्रयुज्यते। 'ब्राह्मणेन तुल्योऽधीते क्षत्रियः' इति। तथा च= तल्लिङ्गस्य तुल्यशब्दस्य प्रयोगे सति च क्रियानिमित्तं तुल्यत्वं नियमेन न प्रतीयते। अन्येन केनचिद् धर्मेण तुल्योऽधीते इत्यप्यवगमात् क्रियानिमित्तकतुल्यत्वस्यासंप्रत्ययाद् अत्र=तल्लिङ्गतुल्यशब्दप्रयोगे वति प्रत्ययो नेष्यते, किन्तु प्राप्नोति, अत्र च वत्यन्तस्य सत्त्ववाचित्वेन लिङ्गसंख्यायोगे

तुल्य शब्दः क्रियायां निपतन्नसत्त्वभूतत्वात् तस्याः शब्दसंस्कारार्थं लिङ्गसर्वनामनपुंसकमेवाश्रयते। तथा च क्रियानिमित्तं तुल्यत्वं ब्राह्मणेन तुल्यमधीत इति नियोगतः प्रतीयत इति तत्रैवेष्यते वतिः।

अत्र च पक्षे सत्त्वभूतस्यापि क्रियाविशेषणस्य विशेष्यधर्मानुवृत्तेर्लिङ्गविशेषायोगादव्ययेषु पाठो न कार्यो वतेः ॥ ५०५ ॥

इदानीमत्रैव प्रकृत्यर्थविशेषणपक्षे "यदि तर्हि तृतीयासमर्थं विशेष्यते, प्रत्ययार्थोऽविशेषितो भवति। तत्र को दोषः ? तृतीयासमर्थात् क्रियावाचिनो गुणतुल्यत्वेऽपि प्रत्ययः प्राप्नोति। पुत्रेण सह तुल्यः स्थूलः, पुत्रेण सह तुल्यः पिङ्गलः" इति यो भाष्ये गुणतुल्येऽपि प्रत्ययः प्रसञ्जितः, स कथमुपपद्यते ? यावता न पुत्रशब्दः क्रियावाचीत्याशङ्क्य भाष्यं समर्थयितुमापातयति—

**प्रकृत्यर्थे विशिष्टेऽपि प्रत्ययार्थाविशेषणात्।**
**पुत्रेण तुल्यः कपिल इति वृत्तिः प्रसज्यते ॥ ५०६ ॥**

---

प्रसक्ते वतेः स्वरादिषु पाठश्चरितार्थः। क्रियानिमित्ते तु सादृश्ये प्रत्यय इति सूत्रार्थे तत्र=वतेर्विग्रहवाक्ये तुल्यशब्दो ब्राह्मणेन तुल्यमधीते इत्येवं क्रियायां निपतन्=संबन्धमनुभवन् तस्याः=क्रियाया असत्त्वभूतत्वात् शब्दसंस्कारार्थं लिङ्गसर्वनाम=सर्वेषां लिङ्गानां नाम नपुंसकमेवाश्रयते।

तथा च 'ब्राह्मणेन तुल्यमधीते' इत्यत्र क्रियानिमित्तं तुल्यत्वं नियोगतः=नियमतः प्रतीयते इति तत्रैव=क्रियानिमित्तके तुल्यत्वे एव वतिरिष्यते। अत्र च पक्षे=तुल्यत्वस्याभेदेन क्रियाविशेषणत्वपक्षे सत्त्वभूतस्यापि ब्राह्मणपदार्थस्य क्रियाविशेषणस्य विशेष्यभूताध्ययनक्रियाधर्मस्यासत्त्वभूतत्वस्यानुवृत्तेर्लिङ्गविशेषायोगादव्ययेषु वतेः पाठो न कार्य इति ॥ ५०५ ॥

इदानीमत्रैव क्रियायाः प्रकृत्यर्थविशेषणत्वपक्षे-"यदि तर्हि तृतीयासमर्थं विशेष्यते=अत्र भाष्ये क्रिययेति शेषो बोध्यः, प्रत्ययार्थोऽविशेषितः=अत्रापि स एव शेषो विज्ञेयो भवति। तत्र को दोषः।

"तृतीयासमर्थात् क्रियावाचिनो गुणतुल्यत्वेऽपि प्रत्ययः प्राप्नोति। पुत्रेण सह तुल्यः स्थूलः, पुत्रेण सह तुल्यः पिङ्गलः" इति यो भाष्ये गुणतुल्येऽपि प्रत्ययः प्रसञ्जितः स कथमुपपद्यते ? यावता=यतो न पुत्रशब्दः क्रियावाची इत्याशङ्क्य भाष्यं समर्थयितुमापातयति=आपातं प्रसङ्गं विरचयति—प्रकृत्यर्थे इति।

अस्यार्थः—क्रियया प्रकृत्यर्थे विशिष्टेऽपि=अन्तर्भावितण्यर्थोऽत्र विशिष्टः, विशेषितेऽपि तया प्रत्ययार्थाविशेषणात् प्रत्ययार्थस्य तुल्यत्वस्याविशेषणात् 'पुत्रेण तुल्यः कपिलः' इत्यत्र गुणेन तुल्ये वतितद्धितरूपा वृत्तिः प्रसज्यत इति।

एकत्वात् क्रियाशब्दस्य प्रकृत्यर्थविशेषणोपक्षये प्रत्ययार्थस्य तुल्यत्वस्याविशेषितत्वाद् गुणेनापि कपिलत्वेन तुल्ये पुत्रशब्दात् तृतीयासमर्थाद् वतिः स्यादिति चोद्यभाष्यं विवृतम् ॥ ५०६ ॥

पुत्रशब्दस्य क्रियावाचित्वं समर्थयितुमाह—

**याः पुत्रे रूढसम्बन्धाः क्रिया लोके विवक्षिताः ।**
**ताभिः क्रियावतः पुत्राद् गुणतुल्ये वतिर्भवेत् ॥ ५०७ ॥**

पितुर्निदेशे यो वर्ततेऽधीते, सन्तानमनुवर्तते च, स पुत्रः सदाचारानुपालनात् कथ्यते । यस्तु न नियोगकारी, नाध्येता, न सदाचारः, तमपुत्रोऽयमिति व्यवहरन्तीति निदेशस्थानादिक्रियाः पुत्रशब्दार्थे निरूढयोगाः पुत्रशब्दोऽन्तर्भावयति, यथा ब्राह्मणादयोऽध्ययनादिकान् धर्मानिति । तद्वदयमपि समुदायवचन इत्यत्रोपात्तक्रियाभिः क्रियावतः पुत्रादवयववचनात् तृतीयासमर्थाद् गुणेनापि तुल्ये विवक्षिते वतिर्भवेत् ॥ ५०७ ॥

---

अयं भावः—"तेन तुल्यम्" ( पा० ५।१।११५ ) इति सूत्रगतस्य क्रियाशब्दस्यैकत्वात् प्रकृत्यर्थविशेषणोपक्षये—प्रकृत्यर्थस्य विशेषणेन-व्यावर्तनेन उपक्षये कृतकृत्यत्वे वतिप्रत्ययार्थस्य तुल्यत्वस्य क्रिययाऽविशेषितत्वाद् गुणेनापि कपिलत्वेन तुल्ये पुत्रशब्दात् तृतीयासमर्थाद् वतिः स्यादिति चोद्यभाष्यम्=पूर्वपक्षभाष्यं विवृतं हरिणेति ॥ ५०६ ॥

प्रकृतिभूतस्य पुत्रशब्दस्यात्र क्रियावाचित्वं वतिप्रत्ययोत्पत्तौ निमित्तभूतं समर्थयितुमाह—याः पुत्रे इति ।

अस्यार्थः—याः=क्रियाः पितुर्निदेशे आज्ञायां स्थानम्, अध्ययनम्, पित्रादिसंतानानुवर्त्तनम्, पित्रादिपरम्पराप्राप्ताचारानुवर्तनम् इत्यादिकाः पुत्रे रूढसंबन्धाः=प्रसिद्धसंबन्धा लोके विवक्षिताः, ताभिः क्रियाभिः क्रियावतः पुत्रात् क्रियावत् पुत्रवाचकात् पुत्रशब्दाद् गुणतुल्ये=गुणेन तुल्यत्वे कपिलत्वादिगुणप्रयुक्ते सादृश्ये वतिर्भवेदिति योजना ।

अयं भावः—यः पितुर्निदेशे आज्ञायां वर्तते=अधीते, पित्रादिसंतानम्=पित्रादिपरम्परामनुवर्तते=अनुसरति च, स सदाचारानुपालनात् पुत्रः कथ्यते । यस्तु न नियोगकारी=पितुः आज्ञाकारी नाध्येता, न सदाचारः, तम्=अपुत्रोऽयमिति व्यवहरन्तीति पितुर्निदेशस्थानादिकाः क्रियाः पुत्रशब्दार्थे निरूढयोगाः=प्रसिद्धसंबन्धाः । पुत्रशब्दः स्वार्थेऽन्तर्भावयति, यथा ब्राह्मणादयः शब्दा अध्ययनादिकान् धर्मान् स्वार्थेऽन्तर्भावयन्तीति, तद्वदयमपि=पुत्रशब्दोऽपि गुणक्रियादिसमुदायवचन इति हेतोरत्र=पुत्रशब्दे उपात्तक्रियाभिर्निदेशस्थानादिभिः क्रियावतः पुत्रादवयववचनात् क्रियावद् द्रव्यरूपस्वार्थावयववचनात् तृतीयासमर्थाद् गुणेन कपिलत्वादिनाऽपि तुल्यत्वे विवक्षिते वतिर्भवेदिति तद्वारणाय क्रियायाः प्रत्ययार्थविशेषणत्वमावश्यकमिति ॥ ५०७ ॥

तत्रैतत् स्यात्। 'पुन्नाम्नो नरकाद् यस्मात् त्रायते पुत्र इत्यतः' इति पुत्रशब्द-प्रवृत्तिनिमित्तं पवनादिक्रियामवधीर्य को निदेशस्थानादिषु बाह्यासु पुत्रार्थसहचारिणीषु क्रियास्वादर इत्यत आह—

अन्तर्भूतं निमित्तं च रूढिशब्देषु यद्यपि।
क्रियास्तु सहचारिण्यो रूढाः सन्ति पदार्थवत् ॥ ५०८ ॥

इह रूढिषु नावयवार्थानुगम इति प्रवृत्तिनिमित्तभूतामन्तरङ्गामपि क्रिया-मनादृत्य पदवाच्यद्रव्यतुल्याः साहचर्येणाव्यभिचारात् प्रतीयमानाः प्रसिद्धा निदेश-स्थानादयः क्रियाः समाश्रीयन्ते। प्रवृत्तिनिमित्तभूता हि क्रिया व्युत्पत्तिनिबन्धनत्वेन परमाश्रीयते। नार्थक्रियासु तस्या व्यापारः। तदेवमेकेन विशेषणेनोभयविशेषणायोगात्

---

तत्र=पुत्रशब्दस्य क्रियावाचित्वे समर्थिते एतद्=वक्ष्यमाणं स्यात्=संभाव्यते। पुन्नाम्नो नरकाद् यस्मात् त्रायते पुत्र इत्यतः।

अस्यार्थः—यस्मात्=पुदिति नामवतो नरकात् त्रायते रक्षति पितॄन् इत्यतः=इत्यस्मात् कारणात् पुत्र इत्युच्यते इति पुत्रशब्दप्रवृत्तिनिमित्तं पवनादिक्रियाम्=नरकविशेषात् पालनादि-क्रियाम् पदार्थत्वेनान्तरङ्गाम् अवधीर्य=अनादृत्य पितुर्निदेशस्थानादिषु क्रियासु बाह्यासु=बहिरङ्गासु पुत्रार्थसहचारिणीसु=पुत्रार्थसमानाधिकरणासु कस्ते आदर इत्यत आह—अन्तर्भूतमिति।

अस्यार्थः—यद्यपि रूढिशब्देषु पुत्रादिषु प्रवृत्तिनिमित्तञ्च प्रवृत्तिनिमित्तमपि नरकात् पितॄणां पालनादिरूपं स्वार्थेऽन्तर्भूतमिति तदेव ग्राह्यम्, तथापि क्रियास्तु निदेशस्थानादयः पुत्रशब्दार्थ-सहचारिण्यः पदार्थवत् पदवाच्यद्रव्यतुल्यारूढाः प्रसिद्धाः सन्ति इति प्रसिद्धा ता एव गृह्यन्ते, न तु पुत्रपदप्रवृत्तिनिमित्तभूता पवनादिक्रिया,अप्रसिद्धत्वादिति।

अयं भावः—इह=लौकिके शास्त्रीये च व्यवहारे रूढिषु=रूढेषु शब्देषु नावयवार्थानु-गमः=नावयवार्थसंबन्धः प्रतीयते इति प्रवृत्तिनिमित्तभूतामन्तरङ्गामपि पालनादिक्रियामनादृत्य पदवाच्यद्रव्यतुल्याः साहचर्येणाव्यभिचारात्=नियमात् प्रतीयमानाः प्रसिद्धाः पितृनिदेश-स्थानाध्ययनादयः क्रियाः समाश्रीयन्ते। रूढेषु पुत्रादिपदेषु प्रवृत्तिनिमित्तभूता हि क्रियाशब्द-व्युत्पत्तिनिबन्धनत्वेन परम्=केवलम् आश्रीयते। नार्थक्रियासु तस्या व्यापारः। निरूढयोगानां तु =पुत्रशब्दार्थे प्रसिद्धसंबन्धानां तु निदेशस्थानादिक्रियाणां प्रसिद्धिवशात् पुत्रशब्दार्थत्वमेवेति ताभिरेव प्रसिद्धाभिर्निदेशस्थानादिक्रियादिभिः तस्य तद्वत्ता पुत्रपदार्थस्य क्रियावत्ताऽऽश्रीयते। तदेवमेकेन क्रियालक्षणेन विशेषणेन उभयविशेषणायोगात्=प्रकृत्यर्थप्रत्ययार्थोभयव्यावर्तनासंभवात्=क्रिया-

क्रियाग्रहणेन प्रकृत्यर्थे विशेषिते क्रियावदुपलक्षणार्थत्वात् क्रियाश्रुतेर्ब्राह्मणादिशब्देभ्यः क्रियावद्वचनेभ्यः प्रत्यये समर्थितेऽपि प्रत्ययार्थस्याविशेषितत्वाद् गुणतुल्येऽपि प्रत्ययप्रसङ्ग इति ।। ५०८ ।।

अस्तु तर्हि प्रत्ययार्थविशेषणम्, यत्तत् तुल्यं क्रिया चेत् सा भवती'ति पक्षान्तरमुपन्यस्तं भाष्ये व्याख्यातुमाह—

**क्रमं तु यदि बाधित्वा प्रत्ययार्थविशेषणम् ।**
**प्रधानानुग्रहात् साम्याद् विभक्तेश्चावतिष्ठते ।। ५०९ ।।**

स्थाननिमित्तः क्रम उक्तः । प्राथम्यात् तेनेत्येतत् क्रियाशब्देन विशेष्यत इति तस्य त्तत्र बाधः । समानविभक्तिकत्वात् प्रधानत्वाच्च प्रत्ययार्थस्य तुल्यमित्यस्य क्रियेति विशेषणं न्याय्यमित्येवं कल्प्यते । तथाहि प्रधानस्य प्रत्ययार्थस्य विशेषणयोगे कल्प्यमाने गुणस्य प्रकृत्यर्थस्य तदनुपपत्तिः । सामानाधिकरण्येन च सम्बन्धसम्भवेऽध्याहारेण तेनेत्यस्य क्रियेति सम्बन्धो न न्याय्यः । विभक्तिसाम्यं हि शब्दवत् । अशब्दस्तु क्रमः ।। ५०९ ।।

---

ग्रहणेन प्रकृत्यर्थे विशेषिते क्रियाश्रुतेः=क्रियाशब्दस्य क्रियावदुपलक्षणार्थत्वात्=लक्षणया क्रियावद्बोधकत्वात् क्रियावद्वचनेभ्यो ब्राह्मणादिशब्देभ्यो वतिप्रत्यये=समर्थितेऽपि प्रत्ययार्थस्य तुल्यत्वस्य क्रिययाऽविशेषितत्वाद् गुणतुल्येऽपि वतिप्रत्ययप्रसङ्गः । पुत्रेण सह तुल्यः स्थूल इत्यादाविति ।। ५०८ ।।

एवं क्रियायाः प्रकृत्यर्थविशेषणत्वपक्षे दूषणसत्त्वे अस्तु तर्हि क्रियाक्रममतिक्रम्य प्रत्ययार्थविशेषणम्, यत्तत्तुल्यं क्रिया चेत् सा भवतीति पक्षान्तरमुपन्यस्तं भाष्ये तद् व्याख्यातुमाह—क्रमं तु यदीति ।

अस्यार्थः—यदि तु प्राथम्यरूपस्थानमिमित्तकं क्रमं प्रागुक्तदूषणसत्त्वेन बाधित्वा प्रधामानुग्रहात् प्रधानस्य प्रत्ययार्थस्य व्यवच्छेदरूपादनुग्रहादुपकाराद् विभक्तेः साम्याच्च क्रियाप्रत्ययार्थस्य तुल्यस्य विशेषणमवतिष्ठत इत्युच्यते, तदाऽत्रापि पक्षे पूर्वदोषसाम्यमिति वक्ष्यमाणकारकया संवन्ध इति पदयोजना ।

अयं भावः—पूर्वं प्राथम्यरूपस्थाननिमित्तकः क्रमः क्रियायाः प्रकृत्यर्थविशेषणत्वे हेतुरुक्तः । तेनेत्येतत् प्राथम्यात् क्रियाशब्देन विशेष्यत इति । तस्य तु क्रमस्यात्र पक्षे बाधः । प्रत्ययार्थस्य तुल्यमित्यस्य समानविभक्तित्वात् प्रधानत्वाच्च=तु क्रियेति विशेषणं न्याय्यमित्येवं कल्प्यते ।

तथाहि—प्रधानस्य प्रत्ययार्थस्य तत्त्वादेव विशेषणयोगे कल्प्यमाने गुणस्य=अप्रधानस्य प्रकृत्यर्थस्य तदनुपपत्तिः=क्रियेति विशेषणयोगानुपपत्तिः । सामानाधिकरण्येन च सामानविभक्तिकत्वप्रयुक्तेन संबन्धसंभवेऽध्याहारेण=यत्तत्पदाध्याहारप्रयुक्तेन विभक्तिपरिणामेन तेनेत्यस्य क्रियेत्यनेन संबन्धो न न्याय्यः । विभक्तिसाम्यं हि शब्दवत्=शब्दोपात्तम्, क्रमस्तु अशब्दः=शब्दानुपात्तः—आर्थः स्थाननिमित्तक इति ।। ५०९ ।।

एवं प्रकृत्यर्थविशेषणपक्षं बाधित्वा यदि प्रत्ययार्थविशेषणपक्षः कल्प्यते, तदात्रापि पूर्वदोषसाम्यमित्याह—

**प्रकृतेरविशिष्टत्वात् क्रियातुल्ये प्रसज्यते ।**
**पुत्रादौ गुणशब्देभ्यः पूर्वोक्तस्य विपर्यये ॥ ५१० ॥**

एकेन विशेषणेन द्वयोरयोगात् क्रियाग्रहणेन प्रकृतिरविशेषितात्र स्यात् । ततश्च गुणवचनेभ्यः स्थूलादिभ्यः पूर्वोक्तनिदेशस्थानादिकया क्रियया तुल्ये पुत्रे वाच्ये वतिर्भवेत् ।

तथा हि—प्रकृत्यर्थविशेषणे यदुदाहृतम्, तदेवात्र विपर्ययेणोदाहर्तव्यम्, स्थूलेन तुल्यः पुत्र इति । तदुक्तं भाष्ये—'एवमपि तृतीयासमर्थमविशेषितं भवति । तत्र को दोषः । तृतीयासमर्थादक्रियावाचिनः क्रियातुल्येऽपि प्रत्ययः प्राप्नोति' इति ॥ ५१० ॥

केचित् पुनरत्र साक्षाद् भाष्येऽनुदाहृतत्वात् स्थूलेन तुल्यो यातीत्येवमुदाहरन्ति । तथाह्याख्यातादुपमेयस्य क्रियाविशिष्टस्य प्रतीतिरितीदमेव युक्तमिति मन्यन्ते । तच्च न । यतः—

---

एवं क्रियायाः प्रकृत्यर्थविशेषणत्वपक्षं बाधित्वा यदि प्रत्ययार्थविशेषणत्वपक्षः परिकल्प्यते, तदाऽत्रापि पक्षे पूर्वोक्तस्य विपर्यये पूर्वदोषसाम्यमित्याह—प्रकृतेरविशिष्टत्वादिति ।

अस्यार्थः—एकेन विशेषणेन द्वयोर्विशेषणायोगात् क्रियाग्रहणेन प्रत्ययार्थे विशेषिते प्रकृतेरविशिष्टत्वाद् अन्तर्भावितण्यर्थत्वेन अविशेषितत्वात् पूर्वोक्तस्य-पूर्वेण सह तुल्यः स्थूल इत्यादेर्विपर्यये 'स्थूलेन तुल्यः पुत्रः' इत्यादौ क्रियया निदेशस्थानादिकया तुल्ये पुत्रादौ गुणशब्देभ्यः स्थूलादिभ्यो वतिः प्रसज्यते इति योजना ।

अयं भावः—एकेन विशेषणेन द्वयोर्विशेषणायोगात् क्रियाग्रहणेन प्रत्ययार्थे विशेषिते प्रकृतिरविशेषिताऽत्र=क्रियाया प्रत्ययार्थविशेषणत्वपक्षे स्यात् । ततश्च पूर्वोक्तनिदेशस्थाध्ययनादिकया क्रियया तुल्ये पुत्रे वाच्ये वतिर्भवेत् ।

तथाहि—क्रियायाः प्रकृत्यर्थविशेषणत्वपक्षे यदुदाहृतम्, तदेवात्र विपर्ययेण-वैपरीत्येनोदाहर्तव्यम्, 'स्थूलेन तुल्यः पुत्रः' इति । तदुक्तं भाष्ये—"एवमपि तृतीयासमर्थविशेषितं भवति । तत्र को दोषः । तृतीयासमर्थादक्रियावाचिनः क्रियातुल्येऽपि प्रत्ययः प्राप्नोति" इति ।

अस्यार्थः—एवमपि=क्रियायाः प्रत्ययार्थविशेषणत्वेऽपि इति ॥ ५१० ॥

केचित् पुनरत्र भाष्ये साक्षादनुदाहृतत्वात्=उदाहरणस्य साक्षादनुक्तत्वात् 'स्थूलेन तुल्यो याति' इत्येवमुदाहरन्ति । तथाहि—क्रियाविशिष्टस्योपमेयस्याख्यातात् प्रतीतिरिति इदमेव युक्तमुदाहरणमिति मन्यन्ते; तच्च न । यतः केनचिद् धर्मान्तरेण तुल्यत्वं निर्ज्ञाय अत्र जाते वतिप्रत्ययनिमित्ते उपमानोपमेययोः संबन्धे पश्चात् संनिपतन्त्याः क्रियाश्रुतेर्बहिरङ्गाया वतिप्रत्ययानिमित्तत्वाद् इत्याह—'स्थूलेन तुल्यो याति' इति ।

**स्थूलेन तुल्यो यातीति बहिरङ्गा क्रियाश्रुतिः ।**
**अनिमित्तं वतेस्तुल्यं यातीत्यत्रेष्यते वतिः ॥ ५११ ॥**

तुल्यो यातीति पुंलिङ्गेन सामानाधिकरण्यान्नियोगतः क्रियातुल्यत्वं नावगम्यते। यः केनचिदन्येन धर्मेण स्थूलेन तुल्यो देवदत्तः, स यातीत्येवमपि प्रतीतेः। तथा च देवदत्ते निरूढेन धर्मान्तरेण तुल्यतया निर्ज्ञाते तस्य पश्चात् सन्निपतन्ती क्रियाश्रुतिर्वतेः प्रत्ययस्योत्पत्तौ निमित्तं हेतुर्न भवति।

शाब्दी हि क्रिया भवेदुपमानोपमेयसम्बन्धे निबन्धनम्। न चेह स्थूलेन तुल्य इति पदद्वयसम्बन्धकाले तत्प्रत्ययोत्पत्तिनिमित्ते काचित् सन्निहिता क्रिया, स्थूलशब्दस्य गुणवचनत्वात्, तुल्यशब्दस्य च पुंलिङ्गत्वेन क्रियाविषयत्वाभावात्।

वृत्ते तु सम्बन्धे प्रत्ययोत्पत्तिनिमित्ते पदान्तरात् पश्चात् प्रतीयमाना क्रिया बहिरङ्गा नोपमासम्बन्धे निमित्तम्।

एवञ्च स्थूलेन तुल्यः पुत्र इत्यस्मादस्याविशेषः। यदा तु स्थूलेन तुल्यं यातीति नपुंसकलिङ्गेन तुल्यशब्देन सामानाधिकरण्यं यातीत्यस्य, तदा क्रियाप्राधान्यं नियोगतः प्रतीयते, असत्त्वभूतत्वात् क्रियायास्तद्विशेषणस्य, नपुंसकत्वोपपतेः। तथा चात्रेष्यते वतिः। स्थूलवद् याति मन्दायमानपदविन्यासश्लथलितोदरकलश इति।

---

अस्यार्थः—'स्थूलेन तुल्यो याति' इत्यत्र प्रागुक्तरीत्या बहिरङ्गा क्रियाश्रुतिर्वतेरनिमित्तम्। 'स्थूलेन तुल्यं याति' इत्यत्र तु वतिरिष्यते, नपुंसकलिङ्गेन तुल्यशब्देन यातीत्यस्य सामानाधिकरण्येन क्रियया तुल्यत्वस्यावगमादिति।

अयं भावः—'स्थूलेन तुल्यो याति' इत्यत्र पुंलिङ्गेन तुल्यशब्देन देवदत्तादेरुपमेयस्य सामानाधिकरण्यान्नियोगतः = नियमतः क्रियाप्रयुक्तं तुल्यत्वं नावगम्यते। यः केनचिदन्येन धर्मेण स्थूलेन तुल्यो देवदत्तः, स याति' इत्येवमपि प्रतीतेः। तथा च देवदत्ते निरूढेन = प्रसिद्धेन धर्मान्तरेण तुल्यतया निर्ज्ञाते तस्य = तुल्यत्वप्रकारकस्य निर्णयस्य पश्चात् संनिपतन्ती यातीतिक्रियाश्रुतिर्वतेः प्रत्ययस्योत्पत्तौ निमित्तं हेतुर्न भवति। शाब्दी हि क्रिया उपमानोपमेयसंबन्धे निबन्धनम् = निमित्तं भवेत्। स्थूलेन तुल्य इति पदद्वयसंबन्धकाले वतिप्रत्ययोत्पत्तिनिमित्तं काचित् क्रिया न चेह संनिहिता, स्थूलशब्दस्य गुणवचनत्वात् तुल्यशब्दस्य च पुंलिङ्गत्वेन क्रियाविषयत्वाभावात्, नपुंसकलिङ्गत्वे हि तस्य क्रियाविषयत्वं स्यात्। पदान्तराद् वृत्ते = जाते तु वतिप्रत्ययोत्पत्तिनिमित्ते संबन्धे पश्चात् प्रतीयमाना यातीति क्रिया बहिरङ्गा नोपमायाः संबन्धे निमित्तम्।

एवञ्च 'स्थूलेन तुल्यः पुत्रः' इत्यस्मादस्य = 'स्थूलेन तुल्यो याति' इत्यस्य अविशेषः। यदा तु 'स्थूलेन तुल्यं याति' इति वाक्ये नपुंसकलिङ्गेन तुल्यशब्देन यातीत्यस्याभेदेन सामानाधिकरण्यम्, तदा क्रियायाः प्राधान्यं नियोगतः = नियमतः प्रतीयते, इत्यसत्त्वभूतत्वात् क्रियायास्तद्-

अत्र हि प्रकृतिप्रत्ययार्थाभिधायिपदद्वयसमन्वयकाल एव शब्दवाच्या क्रिया संभवत्युपमानोपमेयभावनिमित्तम्, ब्राह्मणवदधीत इतिवदिति न बहिरङ्गात् प्रतीतिः ॥ ५११ ॥

तदेवं पक्षद्वयेऽपि समीकृतस्य दोषस्य भाष्ये समाधिरभिहिता—'नैष दोषः। यत् तत् तुल्यं क्रिया चेत् सा भवतीत्युच्यते। तुलया च संमितं तुल्यम्। यदि च तृतीयासमर्थमपि क्रिया प्रत्ययार्थोऽपि क्रिया, ततस्तुल्यं भवति' इति। तदेतत् तात्पर्यतो विवृणोति—

**द्वयं विशेष्यते तेन यदेकत्र विशेषणम्।**
**तुल्यशब्दो हि तं धर्ममुभयस्थमपेक्षते ॥ ५१२ ॥**

यत् क्रियाग्रहणमेकत्र श्रुतं सद्विशेषणं तेन क्रियाग्रहणेन द्वयं प्रकृतिप्रत्ययार्थलक्षणं विशेष्यतेऽवच्छिद्यते। कथमेकेनोभयविशेषणम्। एवं हि प्रवृत्तिभेदस्तस्य भवेदित्यत आह—तुल्यशब्दो हीत्यादि।

सादृश्यस्योभयाधिष्ठानत्वाद् यस्मात् तुल्यशब्दस्तं क्रियाख्यं धर्ममुभयगतमङ्गीकरोति, तस्मादुभयविशेषणं सामर्थ्यादवतिष्ठते श्रुत्यैकनिष्ठत्वेऽपीति ॥ ५१२ ॥

---

विशेषणस्य तुल्यशब्दस्य नपुंसकत्वोपपत्तेः। तथा चात्रेष्यते वतिः। क्रियाप्रयुक्तस्य तुल्यत्वस्य नियमतः प्रतीतेः। स्थूलवद् याति मन्दायमानपदविन्यासश्लथितोदरकलश इति।

अत्र हि प्रकृत्यर्थप्रत्ययार्थाभिधायिपदद्वयसंबन्धकाल एव याति इत्याख्यातशब्दवाच्या क्रिया संभवत्युपमानोपमेयभावनिमित्तम्, 'ब्राह्मणवदधीते' इत्यत्रेवेति न बहिरङ्गात् पदात् क्रियाप्रतीतिरिति ॥ ५११ ॥

तदेवं पक्षद्वयेऽपि समीकृतस्य दोषस्य भाष्ये समाधिरभिहिता—"नैष दोषः। यत् तत्तुल्यं क्रिया चेत् सा भवति इत्युच्यते। तुलया च संमितं तुल्यम्। यदि च तृतीयासमर्थमपि क्रिया, प्रत्ययार्थोऽपि क्रिया, ततस्तुल्यं भवति" इति। तदेतत् तात्पर्यतो विवृणोति—द्वयं विशेष्यते इति।

अस्यार्थः—यत्क्रियाग्रहणमेकत्र श्रुतं सद् विशेषणं तेन क्रियाग्रहणेन प्रकृतिप्रत्ययार्थलक्षणं द्वयं विशेष्यते=अवच्छिद्यते। हि=यतः, तुल्यशब्दस्तं क्रियाख्यं धर्ममुभयस्थमुभयगतमपेक्षते=स्ववाच्यत्वेनाङ्गीकरोति। तस्मात् श्रुत्यैकनिष्ठत्वेऽपि क्रियाग्रहणं सामर्थ्यादुभयविशेषणमवतिष्ठते इति।

अयं भावः—यत् क्रियाग्रहणं श्रुतं सदेकत्र विशेषणम्, तेन क्रियाग्रहणेन द्वयं प्रकृत्यर्थप्रत्ययार्थलक्षणं विशेष्यतेऽवच्छिद्यते। कथमेकेन क्रियाग्रहणेन उभयविशेषणम्। एवं हि तस्य=एकस्य क्रियाशब्दस्य प्रवृत्तिभेदः=व्यापारभेदः भवेत्, स चानिष्टः, शब्दबुद्धिकर्मणां विरम्य व्यापाराभाव इत्यभ्युपगमात् इत्यत आह—तुल्यशब्दो हीत्यादि। सादृश्यस्योभयाधिष्ठानत्वात्=उपमानोपमेयोभयनिष्ठत्वाद् यस्मात् तुल्यशब्दस्तं क्रियाख्यं धर्ममुभयगतं स्ववाच्यत्वेनाङ्गीकरोति, तस्मात् सामर्थ्यादुभयगतमवतिष्ठते, एकत्र विशेषणतया श्रुतत्वेऽपि इति ॥ ५१२ ॥

एवं हि तुल्यशब्दार्थ उपपद्यत इत्याह—

**एकः समानो धर्मश्चेदुपमानोपमेययोः ।**
**तुलया संमितं तुल्यमिति तत्रोपपद्यते ॥ ५१३ ॥**

भाष्येऽभिहितं 'तुलया च संमितं तुल्यमि'ति । यद्यपि सदृशेऽर्थे तुल्यशब्दो रूढः, तथापि व्युत्पत्तिनिबन्धनं क्रियानुविधीयत इत्याशयः । तथा च यथा तुलया किञ्चित् परिच्छिद्यते, तथा समानेन धर्मेण परिच्छेद इति संमितत्वं समानमस्ति ।

एवञ्चैकत्रापि श्रुतोऽपरत्र सामर्थ्यादन्वयी समानो धर्मोऽवगम्यत इति तात्पर्येण तुलया संमितत्वमुक्तम् । तस्मात् प्रकृत्यर्थविशेषणेऽपि प्रत्ययार्थः क्रिया । न ह्यन्यस्तुल्यः क्रिययास्ति, अन्यदतः क्रियायाः ॥ ५१३ ॥

एवं प्रत्ययार्थविशेषणेऽपि तुल्यशब्दसामर्थ्यात् प्रकृत्यर्थक्रियाक्षेप इत्युभयपक्षभावी दोषो नास्ति । स चात्र समानो धर्मो न यः कश्चित् । अपि तु यश्चोदनायां संनिहित इत्याह—

**सूत्रे श्रुतश्च द्विष्ठोऽसावभेदेन प्रतीयते ।**
**न च सामान्यशब्दत्वादश्रुता गम्यते क्रिया ॥ ५१४ ॥**

---

एवं हि—एकत्र विशेषणतया श्रुतस्योभयत्र विशेषणत्वे हि तुल्यशब्दार्थ उपपद्यते इत्याह—एकः समान इति ।

अस्यार्थः—चेत्—यदि, उपमानोपमेययोरेकः समानो धर्मस्तदा तत्र तुलया संमितं तुल्यमिति उपपद्यते इति योजना ।

अयं भावः—भाष्येऽभिहितम्—"तुलया च संमितं तुल्यम्" इति । अत्र च शब्दो हेतौ । यतस्तुलया संमितं तुल्यमिति तदर्थः । यद्यपि सदृशेऽर्थे तुल्यशब्दो रूढ इति नात्र योगप्रवृत्तिस्तथापि तुल्यशब्दव्युत्पत्तिनिमित्तं तुलया संमानरूपा क्रिया शास्त्रेण वतिविधायकेनानुविधीयते—अनुस्रियते इति भाष्यतदनुसारिकारिकयोराशयः ।

तथा च—यथा तुलया किञ्चिद् धान्यादिकं परिमीयते—परिमाणतो निश्चीयते एतावदिति, तथा समानेन धर्मेण उपमेयस्य परिच्छेदः—स्वरूपनिश्चयः संमितत्वं समानमस्ति धान्योपमेययोः । एवञ्चैकत्रापि विशेषणतया श्रुतोऽन्यत्र सादृश्यानुपपत्तिसामर्थ्यादन्वयी समानो धर्मोऽवगम्यते इति तात्पर्येण तुलया संमितत्वमुक्तम् । तस्मात् क्रियायाः प्रकृत्यर्थविशेषणत्वेऽपि अभेदेन प्रत्ययार्थेऽपि विशेषणत्वेन प्रत्ययार्थः क्रिया । यतः क्रियैव क्रियया तुल्या । न ह्यन्यः तुल्यः क्रिययाऽस्ति, अन्यदतः क्रियायाः । क्रियया सह तुल्यत्वं क्रियायामेवेति क्रियैव वतिप्रत्ययार्थ इति निगूढोऽभिप्राय इति ॥ ५१३ ॥

एवं क्रियायाः प्रत्ययार्थविशेषणत्वपक्षेऽपि तुल्यशब्दसामर्थ्यात् प्रकृत्यर्थविशेषणक्रियाक्षेप इत्युभयपक्षभावी दोषो नास्ति । स चात्र समानो धर्मो न यः कश्चित्, अपि तु यश्चोदनायाम्—वतिविधायके "तेन तुल्यम्" इति सूत्रे संनिहितः क्रियाख्यः इत्याह—सूत्रे श्रुतश्चेति ।

असौ क्रियाख्यो धर्मः सूत्रे क्रिया चेदिति श्रुतः शब्देनैकगामित्वेऽपि चोदिते तुल्यतासामर्थ्यादुभयगतोऽवधार्यते। एवञ्च पुत्रेण तुल्यः स्थूलः, स्थूलेन तुल्यः पुत्र इत्यत्र प्रत्ययो न भवति।

यत्र हि श्रूयते क्रिया, तत्रोभयगतत्वेनापेक्ष्यतां न त्वत्राश्रूयमाणे क्रियाशब्दे। न च पुत्रशब्द एव क्रियावचनोऽस्य सामान्यशब्दत्वात्। सक्रिये निष्क्रिये चाविशेषेण हि पुत्रशब्दः प्रत्यायकत्वेन वर्तते।

ततश्चात्र नियोगतः क्रिययैव सादृश्यमिति नास्त्यवगमः। धर्मान्तरेणापि साम्यसंभवे समुदायशब्दस्य क्रियावत्यवयवे प्रवृत्तेरप्रमाणकत्वात्। यत्नसमधिगम्या हि प्रदेशे वृत्तिः शब्दस्येत्युक्तम् ॥ ५१४ ॥

---

अस्यार्थः—"तेन तुल्यम्" (पा० ५।१।११५) इति सूत्रे श्रुतश्च असौ क्रियाख्यो धर्मो विग्रहवाक्यगतेन क्रियाबोधकशब्देनाभेदेनैकत्वेन एकगतत्वेन चोदितोऽपि तुल्यशब्दसामर्थ्याद् द्विष्ठः प्रतीयते।

एवञ्च ब्राह्मणेन तुल्यमधीते इत्यत्र ब्राह्मणवदिति वतिप्रत्ययो भवति। क्रियायाः श्रवणात् 'पुत्रेण तुल्यः स्थूलः, स्थूलेन तुल्यः पुत्रः' इत्यादौ वतिप्रत्ययो न भवति। यत्र हि क्रिया श्रूयते तत्रासौ उपमानोपमेयोभयगतत्वेनापेक्ष्यतां न त्वत्राश्रूयमाणे क्रियाशब्दे। न चात्र पुत्रशब्द एव निदेशस्थानादिक्रियावचन इति शङ्क्यम्। पुत्रशब्दस्य निदेशस्थानादिक्रियावति तदभाववति च वर्तमानत्वेन सामान्यशब्दत्वात् नियमेन निदेशस्थानादिक्रियाया अप्रतीतेः। ततश्चात्र पुत्रेण तुल्यः स्थूल इत्यादौ अश्रुता निदेशस्थानादिक्रिया न च नियमेन गम्यते इत्यायातम्। यत्र तु क्रिया श्रूयते, पुत्रेण तुल्यं निदेशी तिष्ठति इति, तत्र वतिप्रत्ययो भवत्येव, नियमेन क्रियाया उभयगतत्वेन श्रवणादिति।

अयं भावः—असौ क्रियाख्यो धर्मः 'तेन तुल्यम्०' इति सूत्रे क्रिया चेदिति श्रुतः—'ब्राह्मणेन तुल्यमधीते क्षत्रियः' इत्यादौ विग्रहवाक्ये क्रियाबोधकशब्देनैकगतत्वेन चोदितोऽपि तुल्यताबोधकशब्दसामर्थ्यादुभयगतोऽवधार्यते। एवञ्च 'पुत्रेण तुल्यः स्थूलः, स्थूलेन तुल्यः पुत्रः' इत्यादौ निदेशस्थानादिक्रियाबोधकपुत्रादिशब्दसत्त्वेऽपि वतिप्रत्ययो न भवति। यत्र हि क्रिया श्रूयते तत्रोभयगतत्वेनापेक्ष्यतामसौ वतिप्रत्ययनिमित्ततया, न त्वत्राश्रूयमाणे क्रियाशब्दे। न चात्र पुत्र-शब्द एव क्रियावचन इति वाच्यम्, पुत्रशब्दस्यात्र सामान्यवचनत्वात्। पुत्रशब्दो हि सक्रिये=निदेशस्थानादिक्रियावति निष्क्रिये=तदभाववति च अविशेषेण=सामान्येन प्रत्यायकत्वेन=बोध-कत्वेन वर्तते। ततश्चात्र=पुत्रेण तुल्यः स्थूल इत्यादौ नियोगतः=नियमतः क्रिययैवं निदेशस्था-नादिकया सादृश्यमिति अवगमो नास्ति। धर्मान्तरेणापि साम्यसंभवे क्रियावत्यवयवे समुदाय-शब्दस्य प्रवृत्तेरप्रमाणकत्वात्। यत्नसमधिगम्या हि समुदायशब्दस्य प्रदेशे=अवयवे वृत्तिरित्युक्तं प्रागिति ॥ ५१४ ॥

ननु च निदेशस्थायितादयो निरूढसंबन्धाः पुत्रार्थे क्रियाः प्रतिपादिता इति तासामसंप्रत्ययः कस्मात् पुत्रशब्दादित्यत आह—

**अश्रुताश्च प्रतीयन्ते निदेशस्थायितादयः ।**
**ये धर्मा नियतास्तेषां पुत्रादिषु न विद्यते ॥ ५१५ ॥**

श्रुतेः प्रतीतिहेतुत्वादश्रुताः कथं प्रतीयन्त इत्युक्तं नियता इति । तदयमर्थः—श्रुत्यभावादयमेव धर्म इति प्रतीतिर्नास्ति । सामान्येन तु प्रतीतावस्ति निमित्तं नैयत्यं नाम ।

तथा हि निरूढयोगत्वात् प्रसिद्धेः पदार्थैकदेशभूतानां भवति क्रियाणामन्तरेणापि स्ववाचकप्रयोगं पुत्रशब्दात् सामान्येन प्रतीतिः । एवमपि तेषां बहूनां धर्माणां निरूढत्वान्नियतस्य वाचकस्याभावान्नियोगतः क्रियाया एवोपमाहेतुत्वस्यासंप्रत्ययात् तेषां सामान्यधर्माणां संबन्धत्वेन पुत्रादिषु वाच्येषु तद्धितवृत्तिर्नास्ति । पुत्रवदयं माणवक इत्यत्र वत्यर्थसामर्थ्यात् क्रिया योग्याध्याहर्तव्या । पुत्रवदयं माणवको द्रष्टव्य इत्यादि ।

---

ननु च निदेशस्थायितादयः पुत्रार्थे निरूढसंबन्धाः क्रियाः प्रतिपादिता इति तासां पुत्रशब्दाद् असंप्रत्ययः कस्मादित्याशङ्क्याह—अश्रुताश्चेति ।

अस्यार्थः—अश्रुताश्च=अश्रुता अपि, ये निदेशस्थायितादयो धर्माः पुत्रार्थे नियता निरूढसंबन्धा इति तत्र नियतत्वादेव प्रतीयन्ते तेषां धर्माणां संबन्धिषु पुत्रादिषु वाच्येषु पुत्रेण तुल्यः स्थूल इत्यादौ वतितद्धितरूपा वृत्तिर्न विद्यते । क्रियाया अश्रवणे नियमेन क्रियाकृतस्य सादृश्यस्याप्रत्ययात् । क्रियाया अश्रुतौ धर्मान्तरेणापि सादृश्यस्य संभवात् । यत्र तु क्रियाया अश्रवणेऽपि पुत्रवदयं माणवक इत्यादौ वतिर्दृश्यते तत्र वत्यर्थसामर्थ्याद् योग्या क्रिया द्रष्टव्या इत्यदिकाऽध्याहर्तव्येति ।

अयं भावः—श्रुतेः=शब्दश्रवणस्यार्थप्रतीतिहेतुत्वादश्रुताः कथं प्रतीयन्ते इत्युक्तं कारिकायां नियता इति । निरूढसंबन्धा इति तदर्थः फलितः । तदयं पिण्डितार्थः 'पुत्रेण तुल्यः स्थूलः' इत्यादौ क्रियाबोधकपदश्रुत्यभावात् पुत्रपदस्य च सामान्यशब्दत्वाद् अयमेव धर्मः=क्रियारूप एव धर्मः सादृश्ये निमित्तमिति प्रतीतिर्नास्ति । पुत्रशब्दात् सामान्येन तु निदेशस्थायितादिक्रियाप्रतीतावस्ति निमित्तं नैयत्यम्=पुत्रार्थे निरूढसंबन्धत्वं नाम ।

तथा हि—पुत्रपदार्थैकदेशभूतानां क्रियाणां पुत्रपदार्थे निरूढयोगत्वात्=प्रसिद्धसंबन्धत्वात् पुत्रपदार्थतया लोके प्रसिद्धेः स्ववाचकशब्दप्रयोगमन्तरेणापि=विनाऽपि तासां पुत्रशब्दात् सामान्येन प्रतीतिः । एवमपि च तेषां पुत्रपदार्थैकदेशभूतानां क्रियारूपाणामन्येषाञ्च बहूनां धर्माणां निरूढत्वात् नियतस्य चार्थस्य वाचकस्यात्राभावात् नियोगतः क्रियाया एवोपमाहेतुत्वस्यासंप्रत्ययात् तेषां सामान्यधर्माणां संबन्धित्वेन पुत्रादिषु वाच्येषु वतिरूपा तद्धितवृत्तिर्नास्ति । पुत्रवदयं माणवक इत्यत्र वत्यर्थसामर्थ्याद् विना क्रियां वत्यनुपपत्तेः क्रियायोग्याऽध्याहर्तव्या । पुत्रवदयं माणवको द्रष्टव्य इति ।

एवं स्थानिवदादेश ( १-१-५६ ) इत्यत्रापि स्थानिवद् वर्तत इत्यर्थः। इत्थञ्च स्थूलेन तुल्यं याति स्थूलवद् याति इति वृत्तिरुक्ता। अनपेक्षिते तु क्रियापदे नास्त्यवगतिः ॥ ५१५ ॥

एतमेवार्थं निगमयति—

**अनाश्रितक्रियस्तस्मान्न तुल्योऽस्ति क्रियावता।**
**क्रियायाः श्रवणे सापि क्रियावत्ता प्रतीयते ॥ ५१६ ॥**

असति क्रियापदप्रयोगे यस्मान्नियमेन क्रिया साधारणी न प्रतीयते, तस्मात् पुत्रादिषु नियोगतः क्रियानिमित्तस्योपमानोपमेयभावस्याप्रतीतेर्वृत्तिर्नास्ति। अतोऽनपेक्षितासाधारणक्रियो नापरेण क्रियावता सदृशो विद्यते। ब्राह्मणवदधीते क्षत्रिय इत्यादौ तु मूलोदाहरणे साक्षादुपमेयगतत्वेन क्रियायाः श्रवणे क्रियासंबन्धनिमित्तत्वेनोपमानेऽपि गम्यत इति द्वयोरपि पक्षयोर्दोषप्रतिविधानसाम्यम् ॥ ५१६ ॥

---

एवं स्थानिवदादेश इत्यत्रापि स्थानिवद् वर्तते इति क्रियाध्याहारेण वत्युपपत्तिः। इत्थं सादृश्यहेतुक्रियापदश्रवणे स्थूलेन तुल्यं याति, स्थूलवद् याति इत्यत्रापि वृत्तिर्वतितद्धितरूपा उक्ता भवति। वृत्त्यर्थमनपेक्षिते तु श्रूयमाणे क्रियापदेनास्तिनास्ति—नियमेन सादृश्यहेतुभूतक्रियावगतिरतो न भवति तत्र वृत्तिरिति ॥ ५१५ ॥

एतमेवार्थं निगमयति=उपसंहरति—अनाश्रितक्रिय इति।

अस्यार्थः—यस्मात् क्रियापदप्रयोगाभावे उपमानोपमेयभावनिमित्तभूता साधारणधर्मरूपा क्रिया नियमेन न प्रतीयते, तस्मात् 'पुत्रेण तुल्यः स्थूलः' इत्यादौ क्रियापदाप्रयोगे केवलेषु पुत्रादिषु प्रयुक्तेषु अनाश्रितक्रियः=अनपेक्षितशब्दोपात्तक्रियः स्थूलादिरुपमेयः क्रियावता पुत्रादिना उपमानेन तुल्यो नास्ति। यतः साऽपि क्रियावत्ता=सादृश्यप्रयोजकसाधारणधर्मरूपा क्रियावत्ता क्रियायाः श्रवणे एव नियमेन प्रतीयते इति क्रियापदाश्रवणे 'पुत्रेण तुल्यः स्थूलः' इत्यादौ न वतितद्धितरूपा वृत्तिरिति।

अयं भावः—यस्मात् क्रियापदप्रयोगेऽसति साधारणी=सादृश्यप्रयोजकसाधारणधर्मरूपा क्रिया नियमेन न प्रतीयते, तस्मात् क्रियापदविरहितेषु केवलेषु पुत्रादिषु प्रयुक्तेषु सत्सु नियमतः क्रियानिमित्तकस्योपमानोपमेयभावस्याप्रतीतेर्वतितद्धितरूपा वृत्तिर्नास्ति। अतोऽनपेक्षितशब्दोपात्तासाधारणक्रियः स्थूलादिरुपमेयः। अपरेण क्रियावता उपमानेन पुत्रादिना सदृशो न विद्यते। 'ब्राह्मणवदधीते क्षत्रियः' इत्यादौ मूलोदाहरणे तु उपमेयगतत्वेन क्रियायाः साक्षात् श्रवणे उपमानोपमेयभावरूपरूपसंबन्धनिमित्तत्वेन क्रिया उपमानेऽपि गम्यते इति द्वयोरपि पक्षयोः (क्रियायाः प्रकृत्यर्थविशेषणत्वप्रत्ययार्थविशेषणत्वपक्षयोः) दोषप्रतिविधानसाम्यम्=सादृश्यहेतुभूतसाधारणधर्मरूपक्रियावाचकपदश्रवण एव वतितद्धितरूपा वृत्तिरित्येवंरूपस्य दोषप्रतिविधानस्य समाधानस्य साम्यम् इति ॥ ५१६ ॥

एवमपि प्रत्ययार्थविशेषणपक्ष एव सिद्धान्तितः। तथा हि भाष्यम्—"किं पुनरत्र ज्यायः। प्रत्ययार्थविशेषणपक्ष एव ज्यायः। कुत एतत्। एवं हि कृत्वाचार्येण सूत्रं पठितम्। वतिना सामानाधिकरण्यं कृतम्। अपि चाव्ययेषु वतेः पाठो न कर्तव्यो भवति क्रियायामयं भवँल्लिङ्गसंख्याभ्यां न योक्ष्यते" इति। एतद् व्याचष्टे—

**द्वयोः प्रतिविधानाच्च ज्यायस्त्वमभिधीयते।**
**नित्यासत्त्वाभिधायित्वात् प्रत्ययार्थविशेषणे॥ ५१७॥**

उभयोरपि पक्षयोर्दोषप्रतिविधानात् प्रशस्यत्वे प्रत्ययार्थविशेषणपक्षे ज्यायस्त्वमधीयते। यत्नान्तरापेक्षया ह्यत्र पक्षे लाघवमिति प्रशस्यतरत्वमाख्यायते।

तथा हि—क्रियाया असत्त्वभूताया नित्यं नियोगतो वतेः प्रत्यायकत्वादलिङ्गसंख्यतयाव्ययत्वसिद्धेः स्वरादिषु पाठो न कर्तव्यो भवति॥ ५१७॥

ननु चात्रापि पक्षे क्रियावतः सत्त्वभूतस्य वतिवाच्यतेति कर्तव्य एव स्वरादिषु वतेः पाठ इत्याशङ्कयाह—

---

एवमपि=पक्षद्वये दोषप्रतिविधानसाम्येऽपि यत्तुल्यं क्रिया चेत् सा इति प्रत्ययार्थविशेषणपक्ष एव सिद्धान्तितः। तथा हि—भाष्यम् "किं पुनरत्र ज्यायः। प्रत्ययार्थविशेषणमेव ज्यायः। कुत एतत्। एवं हि कृत्वाऽऽचार्येण सूत्रं पठितम्। वतिना सामानाधिकरण्यं कृतम्। अपि चाव्ययेषु वतेः पाठो न कर्तव्यो भवति, क्रियायामयं भवंल्लिङ्गसंख्याभ्यां न योक्ष्यते" इति।

अस्यार्थः—वतिना=वत्यर्थेन, तुल्येन क्रियायाः सामानाधिकरण्यं कृतं भवति। प्रकृत्यर्थविशेषणत्वे तु क्रियाया वैयधिकरण्यमिति। न योक्ष्यते इत्यस्य असत्त्वभूतत्वादिति शेषः। तदेतद् भाष्यं व्याचष्टे—द्वयोः प्रतिविधानाच्चेति।

अस्यार्थः—द्वयोरपि पक्षयोः=प्रकृत्यर्थविशेषणप्रत्ययार्थविशेषणपक्षयोः प्रागुक्तरीत्या दोषप्रतिविधानात् प्रशस्यत्वे स्थिते च क्रियया प्रत्ययार्थविशेषणपक्षे वतेर्नित्यमसत्त्वाभिधायित्वात् लिङ्गसंख्यायोगाभावे स्वतः सिद्धे स्वरादिषु वतेः पाठाकरणलाघवेन प्रत्ययार्थविशेषणपक्षस्य ज्यायस्त्वमभिधीयते इति योजना।

अयं भावः—उभयोरपि पक्षयोर्दोषस्य प्रागुक्तरीत्या समाहितत्वात् उभयोरपि पक्षयोः प्रशस्यत्वे स्थिते क्रियायाः प्रत्ययार्थविशेषणत्वपक्षे लाघवाज्ज्यायस्त्वमभिधीयते।

तथा हि—क्रियायाः प्रकृत्यर्थविशेषणत्वपक्षे वतेः स्वरादिषु पाठरूपयत्नान्तरकरणे न गौरवम्, अत्र पक्षे=क्रियायाः प्रत्ययार्थविशेषणत्वपक्षे तु वतेरसत्त्वभूतक्रियाभिधायित्वेन लिङ्गसंख्यायोगाभावे स्वतः सिद्धे तदकरणेन लाघवमिति प्रशस्यतरत्वमाख्यायते।

तथा हि—अस्मिन् पक्षे असत्त्वभूतायाः क्रियायाः नित्यं नियमेन वतेः प्रत्यायकत्वादलिङ्गसंख्यतयाऽव्ययत्वसिद्धेः स्वरादिषु वतेः पाठो न कर्तव्यो भवतीति॥ ५१७॥

ननु चात्रापि पक्षे=क्रियायाः प्रत्ययार्थविशेषणत्वपक्षे क्रियावतः सत्त्वभूतस्य वतिप्रत्ययवाच्यतेति कर्तव्य एव स्वरादिषु वतेः पाठ इत्याशङ्कयाह—असत्त्वभूत इति।

**असत्त्वभूतो व्यापारः केवलः प्रत्यये यतः ।**
**विद्यते लक्षणार्थत्वं नास्ति तेन क्रियाश्रुतेः ॥ ५१८ ॥**

प्रत्यये विषयभूते वाच्यत्वेन यस्मादसत्त्वभूतो व्यापारः क्रियालक्षणः केवलो द्रव्यरहितोऽस्ति, तेन क्रियाश्रुतेः क्रियाशब्दस्य क्रियावदुपलक्षणत्वं नास्त्यत्र पक्षे यथा प्रकृत्यर्थविशेषणपक्षे शुद्धायाः क्रियायास्तृतीयासमर्थाया असंभवात् पूर्वमुक्तम् । संभवति हि श्रौते मुख्येऽर्थे लक्षणाया अनुपपत्तिः ।

तथा च क्रियामात्राभिधायित्वात् प्रत्ययस्याव्ययत्वोपपत्तौ तत्र पाठो न कर्तव्यः ॥ ५१८ ॥

तत्रैतत् स्यात् । यथा प्रकृत्यर्थविशेषणपक्षे शुद्धायाः क्रियाया असंभवात् तद्वदुपादानम्, तथात्रापि पक्षे प्रत्ययवाच्यायाः क्रियायाः क्रिययैव तुल्यत्वात् तस्याः शुद्धाया अभावे क्रियावचनादेव प्रत्यय इति कः पक्षयोर्विशेष इत्यत आह—

**क्रियावतस्तु ग्रहणात् प्रकृत्यर्थविशेषणे ।**
**क्रियामात्रेण तुल्यत्वे सिद्धाऽसत्त्वाभिधायिता ॥ ५१९ ॥**

---

अस्यार्थः—यतः=यस्मात् कारणात्, प्रत्यये=वतिप्रत्यये विषयभूते केवलो द्रव्यरहितोऽसत्त्वभूतो व्यापारः क्रियालक्षणो वाच्यत्वेनास्ति, तेन क्रियाश्रुतेः=क्रियाशब्दस्य, लक्षणार्थत्वम् क्रियावदुपलक्षणार्थत्वं नास्ति अत्र पक्षे, यथा प्रकृत्यर्थविशेषणत्वपक्षे क्रियायास्तृतीयासमर्थत्वासंभवात् क्रियापदस्य क्रियावदुपलक्षणार्थत्वमिति वैधर्म्ये दृष्टान्त इति ।

अयं भावः—यस्मात् प्रत्यये विषयभूते असत्त्वभूतो व्यापारः क्रियालक्षणः केवलो द्रव्यरहितो वाच्यत्वे नास्ति, तेन क्रियाश्रुतेः क्रियाशब्दस्यात्र पक्षे=प्रत्ययार्थविशेषणत्वपक्षे क्रियावदुपलक्षणत्वं तथा नास्ति, यथाप्रकृत्यर्थविशेषणपक्षे शुद्धायाः=असत्त्वभूतायाः द्रव्यरहितायाः क्रियायास्तृतीयासमर्थाया असंभवात् क्रियापदस्य क्रियावदुपलक्षणत्वं पूर्वमुक्तम् । संभवति हि श्रौते =शब्दाभिधावृत्तिलभ्ये मुख्येऽर्थे लक्षणाया अनुपपत्तिः ।

तथा च वतिप्रत्ययस्य क्रियामात्राभिधायित्वात्=द्रव्यरहिता असत्त्वभूता केवला या क्रिया तदभिधायित्वात् वत्यन्तस्याव्ययत्वोपपत्तौ तत्र=स्वरादिषु वतेः पाठो न कर्तव्य इति ॥ ५१८ ॥

तत्र=क्रियायाः प्रत्ययार्थविशेषणत्वपक्षे एतत्=वक्ष्यमाणं स्यात्=संभाव्यते । यथा क्रियया प्रकृत्यर्थविशेषणपक्षे शुद्धाया असत्त्वभूतायाः क्रियाया असंभवात्=तृतीयासमर्थत्वासंभवात् तद्वदुपादानम्=लक्षणया क्रियावतो ग्रहणम्, तथाऽत्रापि पक्षे=प्रत्ययार्थविशेषणपक्षे प्रत्ययवाच्यायाः क्रियायाः प्रकृत्यर्थोपमाननिष्ठक्रिययैव तुल्यत्वात् तस्याः शुद्धायाः= असत्त्वभूतायाः अभावे क्रियावद् वचनादेव प्रत्यय इति द्वयोः पक्षयोः को विशेष इत्यत आह— क्रियावतस्तु ग्रहणादिति ।

प्रकृत्यर्थविशेषणपक्षे क्रियावतः प्रकृत्यर्थत्वेनोपादानात् तुल्यतासामर्थ्याद् यदा क्रियैवोपमेयेति पक्षः, तदासत्त्वभूतार्थत्वाद् वत्यन्तस्याव्ययत्वं सिद्धम् ॥ ५१९ ॥

यदा तु क्रियावान् प्रत्ययार्थ इति पक्षस्तदाह—

**यदा क्रियानिमित्तं तु सादृश्यं स्यात् क्रियावतोः ।**
**क्रियावतोऽभिधेयत्वात् तदाऽद्रव्याभिधायिता ॥ ५२० ॥**

तुल्यमिति नपुंसकेन विशेषणात् साक्षात् क्रियैव सदृशी समधिगम्यते। सा च क्रिया क्रियान्तरं यदा सौष्ठवादिना समानेन धर्मेणोपमिमीते, तदा प्रत्ययार्थ-विशेषणपक्षः।

यदा तु क्रियावानुपमीयते, तदा द्वैतम्। व्यापारानुविद्धस्य वा प्राधान्यं तस्य व्यापारोपलक्षितस्य वा। पूर्वत्र पक्षेऽसत्त्वभूतत्वाद् अव्ययत्वं सिद्धम्। आख्यातवाच्यो ह्युपमेय इत्याख्यातस्यासत्त्वभूतार्थप्राधान्यादव्ययत्वम् ॥ ५२० ॥

---

अस्यार्थः—क्रियया प्रकृत्यर्थविशेषणेऽसत्त्वभूतायाः क्रियायास्तृतीयासमर्थत्वासंभवात् क्रियावतस्तु ग्रहणात् क्रियामात्रेण=असत्त्वभूतया प्रकृत्यर्थविशेषणक्रियया सह, प्रत्ययार्थक्रिया-यास्तुल्यत्वे वाच्ये वतेरसत्त्वाभिधायिता सिद्धेति वतेः पाठोऽत्र पक्षे न कर्तव्य इति योजना।

अयं भावः—क्रियया प्रकृत्यर्थविशेषणपक्षे क्रियायास्तृतीयासमर्थत्वासंभवेन लक्षणया क्रियावतः प्रकृत्यर्थत्वेनोपादानात् तुल्यतासामर्थ्याद् यदा क्रियैवोपमेयेति पक्षः, तदा वत्यन्तस्या-सत्त्वभूतक्रियार्थकत्वेनाव्ययत्वं सिद्धमिति ॥ ५१९ ॥

यदा तु क्रियावान् प्रत्ययार्थं इति पक्षस्तदाऽऽह—यदा क्रियानिमित्तं तु इति।

अस्यार्थः—यदा तु क्रियावतोरुपमानोपमेययोः क्रियानिमित्तं सादृश्यं स्यात्, तदा क्रियावतः-विशेष्यभूतया क्रियया ऽनुविद्धस्य द्रव्यस्य आख्यातेन क्रियाविशेषणतयाऽभिधानाद् तदर्थ-कस्य अद्रव्याभिधायिता वत्यन्तस्येति स्वरादिषु वतेः पाठो न कार्यं इति।

अयं भावः—"तेन तुल्यम्" (पा० ५।१।११५) इति सूत्रे तुल्यमिति नपुंसकेन क्रियाया विशेषणात् साक्षात् क्रियैव सदृशी उपमेयभूता समधिगम्यते। 'ब्राह्मणाध्ययनेन तुल्यं क्षत्रियाध्ययनम्' इति। सा च क्रिया उपमानगता यदा सौष्ठवादिना समानेन धर्मेण क्रियान्तर-मुपमेयमुपमिमीते तदा प्रत्ययार्थविशेषणपक्षः पूर्वमुक्तः।

यदा तु क्रियावान् उपमीयते=क्रियावदुपमेयम्, तदा द्वैतम्=संशयः। अधीते इति आख्यातजन्ये बोधे विशेष्यभूतया क्रियया ऽनुविद्धस्य तत्रैव विशेषणीभूतस्य द्रव्यस्य वत्यन्तार्थे प्राधान्यम्, अथवा वत्यन्तपदजन्ये बोधे व्यापारोपलक्षितस्य तस्य=द्रव्यस्य प्राधान्यमिति। अत्र पूर्वत्रपक्षे वत्यर्थस्य द्रव्यविशिष्टक्रियारूपस्यासत्त्वभूतत्वाद् वत्यन्तस्याव्ययत्वं सिद्धम्। अधीते इत्याख्यातवाच्यो हि उपमेय इत्याख्यातस्यासत्त्वभूतार्थप्राधान्याद् वत्यन्तस्य आख्यातार्थबोधकस्या-व्ययत्वं स्वतः सिद्धमिति ॥ ५२० ॥

क्रियोपलक्षितस्य द्रव्यस्य तु प्राधान्ये प्रकृतिवाच्योऽपि क्रियावान्, प्रत्ययार्थोऽपि क्रियावांस्तुल्यतावशाद् इति वतेः सत्त्वभूतार्थवाचित्वात् पाठेनाव्ययत्वमुक्तमित्याह—

**अव्ययेषु वतेः पाठः कार्यस्तत्र स्वरादिवत् ।**
**ब्राह्मणेन समोऽध्येतेत्यत्र च प्रत्ययो भवेत् ॥ ५२१ ॥**

स्वरादीनां सत्त्ववचनत्वम्, स्वो रोहावः, स्वर्यात इति सत्त्वसंबन्धाव्यभिचारिणः कर्मादिभावस्य दृष्टत्वात् । अत एव चादिष्वसत्त्ववचनेष्वेषां पाठो न कृतः । पृथक् पाठेनाव्ययसंज्ञारब्धा । एवं वत्यन्तस्य द्रव्यवचनत्वे तद्वत् पाठेनाव्ययसंज्ञा कार्या । पाठसामर्थ्याद्धि सत्त्ववचनत्वेऽप्यव्ययसंज्ञा प्रवर्तते । पूर्वत्र तु पक्षेऽन्वर्थत्वादव्ययत्वं सिध्यति ।

भाष्यकारमते हि न व्येतीत्यव्ययमित्येव लक्षणम् । प्रपञ्चार्थस्तु पाठः ।

सूत्रकारमतेऽप्यपठितानां केषाञ्चित् सङ्ग्रहार्थमन्वर्थसंज्ञैव लक्षणम्, प्रपञ्चार्थः पाठ इत्येव न्याय्यम् ।

---

क्रियोपलक्षितस्य द्रव्यस्य तु प्रागुक्तरीत्या प्राधान्ये तुल्यतावशात् प्रकृतिवाच्योऽपि क्रियावान्, प्रत्ययवाच्योऽपि क्रियावान् इत्येवं वतेः सत्त्वभूतार्थवाचित्वात् स्वरादिषु पाठेन तस्याव्ययत्वमुक्तमित्याह—अव्ययेषु वतेरिति ।

अस्यार्थः—तत्र क्रियोपलक्षितस्य द्रव्यस्य प्रत्ययार्थत्वे स्वरादिवद् वतेः सत्त्वार्थकत्वादव्ययेषु पाठः कार्यः । किञ्च ब्राह्मणेन समस्तुल्योऽध्येतेत्यत्र च=अपि वतिप्रत्ययो भवेद् क्रियोपक्षितस्य द्रव्यस्य प्रत्ययार्थत्वे इति ।

अयं भावः—स्वरादीनां सत्त्ववचनत्वम् स्वो रोहावः, स्वर्यातः इत्यादौ सत्त्वसंबन्धाव्यभिचारिणः कर्मादिभावस्य दृष्टत्वात् । अत एव चादिष्वसत्त्ववचनेषु स्वरादीनां पाठो न कृतः । पृथक् पाठेन चाव्ययसंज्ञाऽऽरब्धा-"स्वरादिनिपातमव्ययम्" ( पा० १।१।३७ ) इति । एवं वत्यन्तस्य द्रव्यवचनत्वे स्थिते तद्वत्=असत्त्ववचनवत् स्वरादिपाठेनाव्ययसंज्ञा कार्या । पाठसामर्थ्याद्धि सत्त्ववचनत्वेऽपि अव्ययसंज्ञा प्रवर्तते । पूर्वत्र तु पक्षे=क्रियानुविद्धस्य द्रव्यस्य प्रत्ययार्थत्वपक्षे तु अन्वर्थत्वादव्ययत्वं वत्यन्तस्य सिध्यति ।

तदुक्तम्—
सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥ इति ।

भाष्यकारमते हि—न व्येतीत्यव्ययमिति । स्वरादि—चादिपाठस्तु प्रपञ्चार्थः ।

सूत्रकारमतेऽपि अपठितानामाकृतिगणत्वेन संगृहीतानां केषाञ्चित् संग्रहार्थमन्वर्थसंज्ञैव लक्षणम् । प्रपञ्चार्थः पाठ इत्येव न्याय्यम् ।

वार्त्तिककारमते त्वलिङ्गासंख्यमव्ययमित्येतदेवाव्ययलक्षणमिति। मुनित्रय-दर्शनेऽपि प्रत्ययार्थविशेषणपक्षे पाठमन्तरेण सिद्धाव्ययसंज्ञा वत्यन्तस्येत्यस्य पक्षस्योत्कर्षः। उत्तरसूत्रेणापि वतेर्विहितस्यासत्त्वभूतार्थाभिधायित्वमिवशब्दस्येव। 'तदर्हम्' (पा० ५।१।११७) इत्यनेनापि क्रियायां वतिर्विधीयत इति न तदर्थोऽपि पाठः।

प्रकृत्यर्थविशेषणपक्षे चाव्ययेषु पाठचोदनाप्रणालिकया भाष्यकारेण ब्राह्मणेन तुल्योऽध्येतेत्यध्येतरि समाने प्रत्ययोऽनिष्ट आपादितो भवतीति स इह विवृतः। क्रियामात्रवाचित्वे ह्यसत्त्वरूपतेति सामर्थ्यात् तद्वद्वाचित्वे सत्त्वरूपतायां तत्रैव तद्वति प्रत्ययोऽनिष्टः स्फुटमुक्तो भवति॥ ५२१॥

इदानीमत्र पक्षे वतिना सामानाधिकरण्यं विवरीतुमाह—

सामानाधिकरण्यं च वत्यर्थेनापदिश्यते।
तुल्यमित्यन्यथा कल्प्यो वाक्यशेषोऽश्रुतो भवेत्॥ ५२२॥

वतिशब्देन भाष्ये वत्यर्थस्तुल्यशब्द उक्तः। तथा हि—विधीयमानत्वाद् वतेरसिद्धावस्थस्य विशेषणीयत्वं नास्ति। प्रसिद्धस्य हि भेदाय विशेषणोपादान-

---

वार्तिककारमते तु—अलिङ्गासंख्यमव्ययम् इत्येतदेवाव्ययलक्षणम्। अत्र लक्षणे लिङ्गसंख्ययोर्विप्रयोगेण नामपदं विशेष्यमाक्षिप्यते। तेन अलिङ्गासंख्यस्य भावाख्यातस्य नाव्ययत्वम्। एवं मुनित्रयदर्शनेऽपि क्रियया प्रत्ययार्थविशेषणपक्षे स्वरादिपाठं विनैव वत्यन्तस्याव्ययसंज्ञा सिद्धा इत्यस्य प्रत्ययार्थविशेषणपक्षस्योत्कर्षः। उत्तरसूत्रेणापि तत्र तस्येव इत्यनेन विहितस्य वतेरसत्त्वभूतार्थाभिधायित्वमिव शब्दस्येवेति तदन्तस्याव्ययत्वं सिद्धम्। तदर्हमित्यनेनापि अर्हणक्रियायां वतिर्विधीयते इति न तदर्थोऽपि=तदर्हम् इति सूत्रविहितवत्यर्थोऽपि स्वरादिषु वतेः पाठः।

क्रियया प्रकृत्यर्थविशेषणपक्षे चाव्ययेषु वतेः पाठचोदनाप्रणालिकया ब्राह्मणेन तुल्योऽध्येता इत्यध्येतरि समाने=सदृशे वतिप्रत्ययोऽनिष्ट आपादितो भवति भाष्यकारेणेति स दोष इह क्रियोपलक्षितस्य प्रत्ययार्थत्वपक्षे कारिकायां विवृतः। क्रियामात्रवाचित्वे हि असत्त्वरूपतेति क्रियापदस्य तेनेत्यनेन समन्वयसामर्थ्यात् तद्वद्वाचित्वे=क्रियावद्वाचित्वे सत्त्वरूपतायां स्थितायां तत्रैव=ब्राह्मणेन तुल्योऽध्येता इत्यत्रैव तद्वति=क्रियावति वतिप्रत्ययोऽनिष्टः स्फुटमुक्तो भवतीति॥ ५२१॥

इदानीमत्र पक्षे=क्रियया प्रत्ययार्थविशेषणपक्षे वतिना तुल्यवाचिना उपमेयस्य क्रियारूपस्य सामानाधिकरण्यं विवरीतुमाह—सामानाधिकरण्यञ्चेति।

अस्यार्थः—"एवं हि कृत्वाऽऽचार्येण सूत्रं पठितम्, वतिना सामानाधिकरण्यं कृतम्" इत्यत्र भाष्ये वतिशब्देन वत्यर्थकस्तुल्यशब्दो लक्ष्यते। तथा चायमर्थः—वतिना-वत्यर्थकेन-तुल्यशब्देन क्रियायाः सामानाधिकरण्यञ्च। तुल्यमिति "तुल्यं क्रिया चेत्" इत्येवं 'तेन तुल्यम्' (पा० ५।१।११५) इति सूत्रेऽपदिश्यते=व्यवह्रियते इति। प्रत्ययार्थविशेषणपक्षेऽयं लाभः,

मर्थवद् भवति। साधुत्वप्रतिपत्तये विशेषणापेक्षायां च न युगपद् वतेः सामर्थ्यं विद्यते।

न चाप्यस्य क्रियारूपता अक्रियारूपता चास्ति, येनाक्रियानिवृत्त्यर्थं क्रियेत्येतद् विशेषणमुपादीयेत। तस्माद् वत्युपलक्षितेन वत्यर्थवाचिना तुल्यशब्देनात्र क्रिया-शब्दस्य सामानाधिकरण्यं भाष्ये विवक्षितम्।

तुल्यार्थो हि क्रिया चास्त्यक्रिया चेति युक्तं विशेषणम्। यत्तत् तुल्यं क्रिया चेत् सा भवतीति च श्रौतमेव सामानाधिकरण्यम्। प्रकृत्यर्थविशेषणपक्षे तु तेनेत्यस्य क्रियेत्यसामनाधिकरण्याद् यत् तत् तृतीयासमर्थं क्रिया चेत् सा भवतीति वाक्य-शेषाध्याहारेण समन्वयः कल्पयितव्यः स्यात्। संभवति तु श्रौते समन्वयेऽध्याहारेण तदुपपत्तिर्गरीयसी ॥ ५२२ ॥

अध्येतरि च प्रत्ययोऽनिष्टोऽत्र पक्षे न प्राप्नोतीत्याह—

**क्रियावतोश्च सादृश्ये प्रत्ययार्थविशेषणे।**
**अध्येत्रा सदृशोऽध्येतेत्यत्र नास्ति वतेर्विधिः ॥ ५२३ ॥**

---

अन्यथा प्रत्ययार्थविशेषणाभावे, अश्रुतो वाक्यशेषोयत् तृतीयासमर्थं क्रिया चेत् सा इत्येवंरूपो विभक्तिविपरिणामेन कल्प्यो भवेदिति प्रकृत्यर्थविशेषणपक्षेऽयं दोष इति।

अयं भावः—"वतिना सामानाधिकरण्यं कृतम्" इत्यत्र भाष्ये वतिशब्देन वत्यर्थक-स्तुल्यशब्द उक्तः। तथाहि—वतेर्विधीयमानत्वादसिद्धावस्थस्य सूत्रस्थेन तुल्यशब्देन विशेषणीयत्वं नास्ति। प्रसिद्धस्य हि भेदाय=व्यावृत्तये विशेषणोपादानमर्थवत् सार्थकम् भवति।

किञ्च साधुत्वप्रतिपत्तये=साधुत्वप्राप्तये विशेषणाकाङ्क्षायाञ्च वतेर्युगपत् सामर्थ्यं नास्ति। विधीयमानस्य हि साधुत्वप्राप्तिः, विहितस्य तु विशेषणाकाङ्क्षा, न चैकस्यैकदा विधीयमानत्वं विधित्वं च संभवति, विरोधात्।

किञ्च नाप्यस्य वतेः क्रियारूपता अक्रियारूपता च युगपदस्ति, येनाक्रियारूपत्वनिवृत्त्यर्थं क्रियेत्येतद् विशेषणमुपादीयेत। तस्मादत्र भाष्ये वत्युपलक्षितेन=लक्षणया वतिशब्दबोधितेन वत्यर्थवाचिना तुल्यशब्देन सह क्रियाशब्दस्य सूत्रे सामानाधिकरण्यमिति विवक्षितम्।

तुल्यपदार्थो हि क्रिया चाक्रिया चास्ति इति युक्तं क्रियारूपं विशेषणम्। यत् तत् तुल्यं क्रिया चेत् सा भवति इति च श्रौतमेव=शाब्दमेव सामानाधिकरण्यम्, न तु प्रकृत्यर्थ-विशेषणपक्ष इव अश्रुतं कल्प्यम्। प्रकृत्यर्थविशेषणपक्षे तु तेनेत्यस्य क्रियेति प्रथमान्तेन सहा-सामानाधिकरण्यात् "यत् तत् तृतीयासमर्थं क्रिया चेत् सा भवति" इति वाक्यशेषाध्याहारेण तेनेति क्रियेति—पदयोस्तदर्थयोश्च समन्वयः कल्पयितव्यः स्यात्। संभवति तु श्रौते=शाब्दे समन्वये पदपदार्थयोरध्याहारेण तदुपपत्तिः=तत्समन्वयोपपत्तिः गरीयसी इति ॥ ५२२ ॥

किञ्चात्र पक्षे=प्रत्ययार्थविशेषणपक्षे 'ब्राह्मणेन तुल्योऽध्येता क्षत्रियः' इत्यत्र अध्येतरि वतिप्रत्ययोऽनिष्टो न प्राप्नोति इत्याह—क्रियावतोश्च सादृश्ये इति।

अस्यार्थः—किञ्च क्रियया प्रत्ययार्थविशेषणे अध्येत्रा सदृशोऽध्येता इत्यत्र क्रियावतोः सादृश्ये वतेर्विधिर्नास्ति। नियमेन क्रियातुल्यत्वप्रतीतेरभावात् इति।

सामानाधिकरण्येन क्रियाया एव तुल्यतया विशेषणात् तदाविष्ट एव कर्तर्यपि प्रत्ययोऽत्र पक्षे, न प्रधानभूते द्रव्ये। एवञ्च कृत्वाख्यातेनात्र क्रियाप्रधानेन निर्देशो ब्राह्मणेन तुल्यमधीत इति। पूर्वत्र पक्षे क्रियावता प्रत्ययार्थेन तथाविधस्यैव प्रत्ययार्थस्य (प्रकृत्यर्थस्य) साम्यमुपमाहेतुत्वेन क्रियाया गुणत्वादिति द्रव्यप्राधान्येऽनिष्टः प्रत्ययः प्रसजेत्।

नाप्युत्तरसूत्रेण 'तत्र तस्येव' (पा० ५।१।११६) इत्यनेन पुत्रेण तुल्यः स्थूल इत्यादौ प्रत्यय इष्यते। बाह्येन हि सम्बन्धिनोपजनितः प्रातिपदिकार्थव्यतिरेकात् षष्ठ्यन्तात् सप्तम्यन्ताद् वा तत्र प्रत्यय इष्यते। तेन पुत्रवत् स्थूल इत्यत्र नैवोत्पत्तव्यं प्रत्ययेन।

यदा तु पुत्रवत् स्थूलो वर्तत इत्युच्यते, तदा क्रियाकृतो भवत्युपमानोपमेयभावो न गुणकृत इति भवति प्रत्ययः। सर्वथा क्रियानाश्रयणे तदभावः। तदेवं श्रौतस्य सामानाधिकरण्यस्योपपत्तेरव्ययेषु पाठाप्रसङ्गादध्येतरि तुल्येऽनिष्टप्रत्ययाप्रसङ्गाच्च प्रत्ययार्थविशेषणपक्षः प्रशस्यतरत्वेन सिद्धान्तितः॥ ५२३॥

---

अयं भावः—"तेन तुल्यम्" (पा० ५।१।११५) इति सूत्रे तुल्यं क्रिया चेदित्येवंरूपेण, विग्रहवाक्ये च 'ब्राह्मणेन तुल्यमधीते क्षत्रियः' इत्यादौ सामानाधिकरण्येन क्रियाया एव तुल्यतया विशेषणात् क्रियायां तदाविष्टे=क्रियाऽऽविष्टे कर्तर्यपि वतिप्रत्ययोऽत्र पक्षे=क्रियया प्रत्ययार्थविशेषणपक्षे, न तु प्रधानभूते=क्रियानिरूपितप्राधान्यवति द्रव्ये। एवञ्च कृत्वा=एवं विचार्यैव अत्र=वतिप्रत्ययविषये क्रियाप्रधानेन आख्यातेन विग्रहवाक्यरूपो वत्यर्थनिर्देशः, ब्राह्मणेन तुल्यमधीते इति। पूर्वत्र पक्षे=क्रियया प्रकृत्यर्थविशेषणपक्षे क्रियावता वतिप्रत्ययार्थेन उपमेयेन समं तथाविधस्यैव=क्रियावत एव प्रकृत्यर्थस्य साम्यम्, उपमाहेतुत्वेन क्रियाया गुणत्वात्=उपमाने उपमेये च द्रव्येऽप्रधानत्वात् इति द्रव्यप्राधान्येऽनिष्टो वतिप्रत्ययः प्रसजेत्।

'पित्रा तुल्योऽध्येता पुत्रः' इत्यत्र, नाप्युत्तरसूत्रेमापि "तत्र तस्येव" (पा० ५।१:११६) इत्यनेन 'पुत्रेण तुल्यः स्थूलः' इत्यादौ प्रत्यय इष्यते। लधुरायामिव मधुरावत् स्रुघ्ने प्राकारः' इत्यादौ वत्यर्थस्योपमेयस्य प्रातिपदिकार्थव्यतिरेकाद् वतिप्रकृतिप्रातिपदिकार्थाद् बाह्येन हि वतिप्रकृत्यर्थसंबन्धिना उपजनितः षष्ठ्यन्तात् सप्तम्यन्ताद्वा वतिप्रत्यय इष्यते। तेनात्र 'पुत्रवत् स्थूलः' इति वतिप्रत्ययेन नोत्पत्तव्यम्, तद्विषयाभावात्।

यदा तु पुत्रवत् स्थूलो वर्तते इत्युच्यते, तदा नियमेन क्रियाकृतो भवत्यत्रोपमानोपमेयभावो न गुणकृत इति भवति वतिप्रत्ययस्तेन तुल्यमिति सूत्रेण। सर्वथा क्रियानाश्रयणे तु तदभावः=वतिप्रत्ययाभाव इति। तदेवं 'तेन तुल्यम्' (पा० ५।१।११५) इति सूत्रे श्रौतस्य=शब्दोपात्तस्य सामानाधिकरण्यस्योपपत्तेः, अव्ययेषु स्वरादिषु वतेः पाठाप्रसङ्गात्, 'पुत्रेण सदृशोऽध्येता' इत्यत्राध्येतरि तुल्येऽनिष्टवतिप्रत्ययाप्रसङ्गाच्च हेतुत्रितयात् प्रत्ययार्थविशेषणपक्षः प्रशस्यतरत्वेन सिद्धान्तित इति॥ ५२३॥

इदानीं 'तत्र तस्यैव' ( पा० ५।१।११६ ) इत्ययं वतिरिवार्थविषयो विचार्यते। तत्रेदं भाष्यं—'किमर्थमिदमुच्यते। न तेन तुल्यं क्रिया चेद् वतिरित्येव सिद्धमि'ति। तत्रेवतुल्यशब्दयोः समानार्थत्वेऽपि पूर्वेण तृतीयान्ताद् विधिः, अनेन तु सप्तम्यन्तात् षष्ठ्यन्ताच्चेति समर्थविभक्तिभेदात् कथं पूर्वेण सिद्धिरिति पूर्वपक्षभाष्याभिप्रायं व्याचष्टे—

तुल्यार्थैरिति या तस्यास्तृतीयाया न भिद्यते।
अर्थो भेदेऽपि सर्वाभिरितराभिर्विभक्तिभिः ॥ ५२४ ॥

'तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम्, (पा० २।३।७२ ) इति या तुल्यार्थैर्योगे तृतीया विधीयते, तस्या योऽर्थः, स सकलाभिर्विभक्तिभिरिवयोगे विधीयमानाभिः करणभूताभिर्योऽर्थोऽभिधीयते, ततो न भिद्यते। भेदेऽपीति। सामर्थ्यादन्यत्वेऽपि विभक्तीनाम्।

यद्वाभिधाव्यापारभेदेऽपि वस्त्वभेदः। वृत्तौ ह्यत्र विभक्तेरपगमात् तदर्थभेदकृतस्यावच्छेदस्यासम्भवः, सदृशार्थसम्प्रत्ययस्य समानत्वात्। केवलं विग्रहवाक्यमात्रमत्र भिद्यते।

---

इदानीं "तत्र तस्येव" ( पा० ५।१।११६ ) इत्ययं वतिरिवार्थविषयको विचार्यते। तत्रेदं भाष्यम्—"किमर्थमिदमुच्यते। न "तेन तुल्यं क्रिया चेद् वतिः" ( पा० ५।१।११४ ) इत्येव सिद्धम्" इति। तत्रेवतुल्यशब्दयोः समानार्थत्वेऽपि पूर्वेण सूत्रेण तृतीयान्ताद् वतिविधिः, अनेन तूत्तरसूत्रेण सप्तम्यन्तात् षष्ठ्यन्ताच्चेति समर्थविभक्तिभेदात् कथं 'तत्र तस्येव' इत्यस्य विषये पूर्वेण='तेन तुल्यम्' ( पा० ५।१।११५ ) इति सूत्रेण सिद्धिरिति आशङ्क्य पूर्वपक्षभाष्याभिप्रायं व्याचष्टे—तुल्यार्थैरिति।

अस्यार्थः—तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम् इति सूत्रेण तुल्यार्थैर्योगे या तृतीया विधीयते तस्यास्तृतीयाया योऽर्थः स भेदेऽपि=विभक्तीनामन्यत्वेऽपि, यद्वा विभक्तीनामभिधाव्यापारभेदेऽपि, सकलाभिरिवयोगे विधीयमानाभिर्विभक्तिभिर्योऽर्थोऽभिधीयते ततो न भिद्यते इति पूर्वोत्तरसूत्रद्वयविधीयमानस्य वतिद्वयस्य विग्रहवाक्यमात्रभेदेऽपि अर्थभेदाद् वृत्तौ विभक्तेरपगमात् सदृशार्थप्रत्ययस्य समानत्वाच्चेवार्थेऽपि पूर्वसूत्रेणैव वतिप्रत्ययसिद्धिरिति पूर्वपक्षभाष्याभिप्राय इति।

अयं भावः—"तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम्" ( पा० २।३।७२ ) इति सूत्रेण या तुल्यार्थैर्योगे तृतीया विधीयते, तस्या योऽर्थः, स सकलाभिरिवयोगे विधीयमानाभिर्विभक्तिभिरभिधाने करणभूताभिर्योऽर्थोऽभिधीयते ततो न भिद्यते। भेदेऽपि इति=विभक्तीनामन्यत्वेऽपि इति सामर्थ्यात् प्रतियोगित्वेन विभक्तिप्रत्ययः।

यद्वा विभक्तीनामभिधाव्यापारभेदेऽपि वस्त्वभेदः=अर्थाभेदः। अत्र वृत्तौ हि विभक्तेरपगमात्=प्रातिपदिकत्वेन लुका लुप्तत्वात् विभक्त्यर्थभेदकृतस्य अवच्छेदस्य अत्र पूर्वसूत्रेण वतेर्विधानम्, अत्रोत्तरसूत्रेण तद्विधानमित्येवंरूपस्यासंभवः, वृत्तौ सदृशार्थसंप्रत्ययस्य समानत्वात्।

तस्माद् वस्त्वभेदात् पूर्वेणैव सिद्धिरुक्ता ॥ ५२४ ॥

तमेवार्थभेदमुदाहरति—

**भुज्यते ब्राह्मणेनेव तुल्यं भुक्तं द्विजातिना ।**
**पश्यति ब्राह्मणमिव तुल्यं विप्रेण पश्यति ॥ ५२५ ॥**
**ब्राह्मणेनेव विज्ञातं तुल्यं ज्ञातं द्विजातिना ।**
**दीयतां ब्राह्मणायेव तुल्यं विप्रेण दीयताम् ॥ ५२६ ॥**
**ब्राह्मणादिव वैश्यात् त्वमधीष्वाध्ययनं बहु ।**
**इत्येवमादिभिर्भेदस्तृतीयाया न कश्चन ॥ ५२७ ॥**

तुल्यार्थयोगे तृतीया शेषविभक्तिः, इवार्थयोगे क्रियासाधने विभक्तयः । शेषसम्बन्धश्च क्रियाकारकसम्बन्धपूर्वक इति तृतीययात्र समस्तस्य क्रियाकारकसम्बन्धस्य हेतुभूतस्याक्षेपाद् वस्त्वर्थस्य भेदो नास्ति । आदिग्रहणात्—

विप्रेण तुल्यं वैश्यात् त्वमधीष्वाध्ययनं बहु ।
ब्राह्मणस्येव वैश्यस्य धनमेतदुपस्थितम् ॥
विप्रेण तुल्यं वैश्यस्य धनमेतदुपस्थितम् ।
गुणा विप्र इवात्रैते क्षत्रिये बह्वः स्थिताः ॥
विप्रेण तुल्यं तिष्ठन्ति क्षत्रिये बहवो गुणाः ।

इत्युदाहार्यम् ॥ ५२५—५२७ ॥

---

केवलं विग्रहवाक्यमात्रमत्र भिद्यते शब्दतोऽर्थतश्च । अर्थभेदश्च तुल्यशब्दः सदृशार्थकः । इवशब्दश्च सादृश्यार्थक इति । तस्माद् वस्त्वभेदात् पूर्वेणैव सूत्रेणेवार्थेऽपि वतिसिद्धिरुक्ता पूर्वपक्षभाष्ये इति ॥ ५२४ ॥

पूर्वोक्तं तुल्यार्थानामर्थभेदमेवोदाहरणैर्विविधैर्विशदीकरोति त्रिभिः पद्यैः—भुज्यते ब्राह्मणेनेवेत्यादिभिरिति ।

अयं भावः—तुल्यार्थयोगे शेषविभक्तिस्तृतीयैव, इवार्थयोगे तु तत्तत्क्रियासाधने तत्तदनुरूपा विभक्तयः । शेषसंबन्धश्च क्रियाकारकसंबन्धपूर्वकः । यथा-'राज्ञः पुरुषः' इत्यत्र स्वस्वामिभावसंबन्धरूपः शेषसंबन्धः पोष्यपोषकभावरूपक्रियासंबन्धपूर्वकः । एवमन्यत्रापि सर्वत्र शेषसंबन्धस्य क्रियाकारकसंबन्धपूर्वकत्वमुपपादनीयम् । तथा च तृतीयाऽत्र=तुल्यार्थयोगे समस्तस्य क्रियाकारकसंबन्धस्य शेषसंबन्धहेतुभूतस्याक्षेपाद् इवार्थतुल्यार्थयोर्वस्त्वर्थस्य भेदो नास्ति । तृतीयकारिकायामादिग्रहणात्—

विप्रेण तुल्यं वैश्यात् त्वमधीष्वाध्ययनं बहु ।
ब्राह्मणस्येव वैश्यस्य धनमेतदुपस्थितम् ॥
विप्रेण तुल्यं वैश्यस्य धनमेतदुपस्थितम् ।
गुणा विप्र इवात्रैते क्षत्रिये बहवः स्थिताः ॥
विप्रेण तुल्यं तिष्ठन्ति क्षत्रिये बहवो गुणाः ।

इत्युदाहार्यम् ॥ ५२५ ॥ ५२६ ॥ ५२७ ॥

अत्र चोदयति—

**तुल्यं मधुरयाधीये मात्रा तुल्यं स्मरामि ताम्।**
**मधुरायाश्च मातुश्च कथं सादृश्यकल्पना ॥ ५२८ ॥**

मधुरायामिव पाटलिपुत्रेऽधीयेऽहम्, मातुरिव देवदत्तायाः स्मरामि इत्यत्र "तत्र तस्येव" ( पा० ५।१।११६ ) इतीष्यते वतिः, मधुरावदधीये, मातृवत् स्मरामीति। पूर्वेणैव तु सिद्धावत्रेदं वाक्यं स्याद्, मधुरया तुल्यमधीये, मात्रा तुल्यं स्मरामीति। तथा चाध्ययनस्य मधुरया सादृश्यम्, स्मरणस्य च मात्रा। तत्र मातुः स्मर्यमाणाया अधिकरणस्य च मधुराया न काचित् तादृशी क्रिया लक्ष्यते, याध्ययनस्मरणयोस्तुल्या स्यादिति तस्यां मातृमधुराशब्दयोर्वृत्तिः कल्प्यते।

यदि परमध्ययनस्याध्ययनान्तरं स्मरणस्य च स्मरणान्तरमाश्रयभेदेन भिन्नं सदृशं स्यात्, तच्च कर्तृसमवेतमिति कर्माधिकरणयोर्मातृमधुरयोरस्यासम्भव एव ॥ ५२८ ॥

तस्मात् कथमत्र पूर्वेण प्रत्यय इत्यत आह—

**मधुराविषयः पाठः स्मरणं मातृकर्मकम्।**
**मधुरामातृशब्दाभ्यामभेदेनाभिधीयते ॥ ५२९ ॥**

---

अत्र—इवतुल्यशब्दयोः समानार्थत्वेन पूर्वसूत्रेणोत्तरसूत्रस्य गतार्थत्वे पूर्वपक्षभाष्ये स्थिते ) चोदयति—शङ्कते—तुल्यं मधुरयेति।

अस्यार्थः—'मधुरायामिव पाटलिपुत्रेऽधीयेऽहम्, मधुरया तुल्यमधीये, मातुरिव देवदत्तायाः स्मरामि, मात्रा तुल्यं स्मरामि' इत्यत्र पूर्वत्र इव घटिते वाक्यद्वये "तत्र तस्येव" इति वतिरिष्यते। मधुरावदधीये, मातृवत्स्मरामि इति। एवञ्च उत्तरत्र तुल्यशब्दघटिते वाक्यद्वये मधुरया तुल्यमधीये, मात्रा तुल्यं स्मरामि ताम्—देवदत्ताम् इत्यत्र पूर्वसूत्रेणैव वतिसिद्धिरिति पूर्वपक्षभाष्ये मधुरायाश्च अधिकरणभूतायाः कर्तृसमवेताध्ययनक्रियया सह, मातुश्च कर्मभूतायां स्मरणक्रियया सह कथं सादृश्यकल्पना, उभयोः सादृश्यनियामकसाधारणधर्माभावादिति।

अयं भावः—'मधुरायामिव पाटलिपुत्रेऽधीयेऽहम्, मातुरिव देवदत्तायाः स्मरामि' इत्यत्र "तत्र तस्येव" इति सूत्रेणेष्यते वतिः। 'मधुरावदधीये, मातृवत् स्मरामि' इति। अत्र पूर्वेणैव सूत्रेण वतिसिद्धौ तु इदं विग्रहवाक्यं स्यात्, मधुरया तुल्यमधीये, मात्रा तुल्यं स्मरामि इति। तथा चात्र अध्ययनस्य मधुरया सादृश्यम्, स्मरणस्य च मात्रा तत् प्रतीयते। तत्र स्मर्यमाणायाः—स्मरण-कर्मीभूताया मातुः, अधिकरणरूपायाश्च मधुरायाः न काचित् तादृशी क्रिया लक्ष्यते—प्रतीयते या अध्ययने स्मरणे च तुल्या स्यादिति तस्यां मातृमधुराशब्दयोर्वृत्तिः कल्प्यते।

यदि परम्—केवलम् अध्ययनस्य अध्ययनान्तरं, स्मरणस्य च स्मरणान्तरम् आश्रयभेदेन भिन्नं सदृशं स्यात्, तच्च—तदपि कर्तृसमवेतमिति यथायथं कर्माधिकरणयोर्मातृमधुरयोरस्या-संभव एवेति ॥ ५२८ ॥

मधुरया तुल्यमधीय इत्युपमेयेऽध्ययनक्रिया श्रूयमाणोपमानेऽपि तामवगमयति समानधर्मप्रयुक्तत्वादौपम्यस्य। तथा च मधुराधिकरणकमध्ययनं मधुरेत्याधाराधेययोरभेदविवक्षायामयं प्रयोगः। एवं मातृविषयं स्मरणं विषयविषयिणोरभेदाभिसन्धानेन मातृशब्देन कथ्यत इति मात्रा तुल्यं स्मरामीति प्रयोगः। मधुराधिकरणेनाध्ययनेन तुल्यं स्मरामीति प्रयोगः। मधुराधिकरणेनाध्ययनेन तुल्यं पाटलिपुत्रेऽध्ययनम्, मातृविषयेण स्मरणेन तुल्यं देवदत्तायाः स्मरणमित्यर्थः।

यद्यपि च माताऽत्र शेषः, तथापि वास्तवं कर्मत्वमभिप्रेत्य स्मरणं मातृकर्मकमित्युक्तम्। कर्मप्रभावितो ह्यत्र शेषः।

तथाच "अधीगर्थदयेशां कर्मणि" (पा० २।३।५२) इति कर्मणः शेषत्वविवक्षायामियं षष्ठी प्रतिपदोक्ता समासनिवृत्त्यर्थमिति निर्णीतचरम्॥ ५२९॥

---

तस्मात् कथमत्र=मधुरया तुल्यमधीये, मात्रा तुल्यं स्मरामि' इत्यत्र पूर्वेण सूत्रेण "तेन तुल्यम्" इत्यनेन वतिप्रत्यय इत्यत आह—मधुराविषयः पाठ इति।

अस्यार्थः—मधुराविषयः पाठः=मधुराधिकरणकमध्ययकम्, मातृकर्मकम्=मातृविषयकं स्मरणञ्च यथायथं-मधुरामातृशब्दाभ्यामाधाराधेययोर्विषयविषयिणोश्चाभेदेनाभिधीयते। तथा च मधुराधिकरणकेनाध्ययनेन तुल्यं पाटलिपुत्रेऽध्ययनम् इति मधुरया तुल्यमधीये पाटलिपुत्रे इत्यस्यार्थः। मातृविषयकेण स्मरणेन तुल्यं देवदत्तायाः स्मरणमिति मात्रा तुल्यं देवदत्तां स्मरामि इत्यस्यार्थं इति उभयत्र पूर्वेण सूत्रेण वत्युपपत्तिः।

अयं भावः—औपम्यस्य समानधर्मप्रयुक्तत्वात् मधुरया तुल्यमधीये इत्युपमेयेऽध्ययनक्रिया श्रूयमाणा उपमानेऽपि ताम्=अध्ययनक्रियाम् अवगमयति। तथा च मधुराधिकरणकमध्ययनं मधुरेत्याधाराधेययोरभेदविवक्षायां मधुरया तुल्यमधीये इति प्रयोगः। एवं मातृविषयकं स्मरणं विषयविषयिणोरभेदानुसंधानेन मातृशब्देन कथ्यत इति मात्रा=मातृविषयकस्मरणेन तुल्यं स्मरामि इति प्रयोगः। मधुराधिकरणकेनाध्ययनेन तुल्यं पाटलिपुत्रेऽध्ययनम्, मातृविषयकेण स्मरणेन तुल्यं देवदत्तायाः स्मरणमित्यर्थः।

यद्यपि च मात्रा तुल्यं स्मरामि इत्यत्र माता शेषः, तुल्यार्थयोगे शेषार्थकतृतीयाविधानात्, तथापि वास्तवं स्मरणक्रियां प्रति मातुः कर्मत्वमभिप्रेत्य स्मरणं मातृकर्मकमिति कारिकायामुक्तम्। मातृविषयकं मातृसंबन्धि इति तदर्थः। कर्मप्रभावितो ह्यत्र शेषः। शेषस्य कारकप्रभवत्वादित्युक्तं प्राक्।

तथा च—"अधीगर्थदयेशां कर्मणि" (पा० २।३।५२) इति सूत्रेण कर्मणः शेषत्वविवक्षायां विधीयमानेयं षष्ठी-"षष्ठी शेषे" (पा० २।३।५०) इति सूत्रेण सिद्धावपि मातुः स्मरणमित्यत्र समासनिवृत्त्यर्थं प्रतिपदोक्ता इति निर्णीतचरम्=प्राङ्निर्णीतम्। तदुक्तं वार्तिककृता—'प्रतिपदविधाना षष्ठी न समस्यत' इति॥ ५१९॥

यथा च पूर्वं समुदायशब्दानामवयवे वृत्तिरुपपादिता, तथात्राप्यस्तीति निदर्शनपूर्वकमाह—

उष्ट्रावयवतुल्येषु मुखेषूष्ट्रश्रुतिर्यथा ।
वर्तते गृहतुल्ये च प्रासादे मधुराश्रुतिः ॥ ५३० ॥

उष्ट्रो मुखमस्येत्येवमुष्ट्रमुखशब्दो व्युत्पाद्यते। तत्र चोपमानपूर्वपदस्योत्तरपदलोपः प्रत्याख्यातो भाष्ये। सामानाधिकरण्यान्यथानुपपत्त्या ह्युष्ट्रशब्दोऽत्रोष्ट्रावयये मुखे वर्तते।

न च प्राण्यन्तरमुखं प्राण्यन्तरस्य सम्भवतीति सामर्थ्यादिवार्थगर्भीकारेणात्र सम्बन्धः।

इत्थं चात्र यथा समुदायशब्दोऽवयवे वर्तते, तथा मधुराशब्दः समुदायवचनोऽप्यत्रैकदेशे गृहे वर्तत इति मधुरातुल्याः पाटलिपुत्रे गृहा इत्यप्ययमर्थो मधुरा-

---

यथा च पूर्वं पूर्वे पञ्चाला इत्यादौ समुदायशब्दानामवयवे वृत्तिरुपपादिता पटैकदेशे दग्धे पटो दग्ध इत्यादिभिर्निदर्शनैः, तथाऽत्रापि=मधुरया तुल्यमधीये इत्यादावपि अवयवे आधेये वाऽध्ययनेउष्ट्रशब्दस्य वृत्तिः अस्तीति उष्ट्रमुख इत्यादि निदर्शनपूर्वकमाह—उष्ट्रावयवतुल्येषु इति।

अस्यार्थः—उष्ट्रो मुखमस्येत्येवमुष्ट्रमुखशब्दो व्युत्पाद्यते भाष्यकृता वार्तिकोक्तस्योत्तरपदलोपस्य प्रत्याख्यानाय। न चोष्ट्रः कस्यचिन्मुखं भवतीति उष्ट्रशब्दस्योष्ट्रमुखसदृशे लक्षणा। तथा च यथा-उष्ट्रावयवतुल्येषु=उष्ट्रमुखसदृशेषु मुखेषु लक्षणया उष्ट्रश्रुतिः=उष्ट्रशब्दो वर्तते। यथा च मधुरातुल्याः पाटलिपुत्रे गृहा इत्यत्र पाटलिपुत्रगृहतुल्ये च मधुराप्रासादे मधुराश्रुतिः= मधुराशब्दो यथा वर्तते, तथा मधुराया अवयवे आधेये वा अध्ययने मधुरया तुल्यमधीये पाटलिपुत्रे इत्यत्र मधुराशब्दो वर्तते इति।

अयं भावः—उष्ट्रो मुखस्येत्येवमुष्ट्रमुखशब्दो भाष्यकृता व्युत्पाद्यते। तत्र चोपमानपूर्वपदस्य बहुव्रीहिसमासस्य उत्तरपदलोपो वार्तिककृतोक्तः-प्रत्याख्यातो भाष्ये। उष्ट्रशब्दस्य मुखशब्देन सह सामानाधिकरण्यान्यथाऽनुपपत्त्या हि उष्ट्रशब्दोऽत्रोष्ट्रावयवे मुखे वर्तते।

न च प्राण्यन्तरमुखं प्राण्यन्तरस्य मुखं संभवतीति लक्षितस्य उष्ट्रमुखरूपस्योष्ट्रपदार्थस्य सामर्थ्यादिवार्थगर्भीकारेणात्र मुखशब्देन सह संबन्धः।

इत्थं चात्र यथाऽवयवसमुदायवचनोऽपि उष्ट्रशब्दोऽवयवे वर्तते, तथा मधुराशब्दो जातिगुणाध्ययनादिक्रियासमुदायवचनोऽपि अवयवे आधेये वा अध्ययने लक्षणया वर्तते।

यत्त्वत्र श्रीहेलाराजेनैवं व्याख्यातम्—"इत्थञ्चात्र यथा समुदायशब्दोऽवयवे वर्तते, तथा मधुराशब्दः समुदायवचनोऽप्यत्रैकदेशे गृहे वर्तते इति 'मधुरा तुल्याः पाटलिपुत्रे गृहाः' इत्यप्ययमर्थो मधुरागृहैस्तुल्याः पाटलिपुत्र गृहा इति। चशब्दोऽत्र तथाशब्दार्थे इति।

अत्र 'इत्यप्ययमर्थः' इत्यस्य—'इत्यस्यापि लक्षणया अयमर्थः' इत्यर्थो बोध्यः।

गृहैस्तुल्याः पाटलिपुत्रगृहा इति । चशब्दोऽत्र तथाशब्दार्थे । यद्वा निदर्शनान्तर्भावनेन दृष्टान्तदार्ष्टान्तिकयोः समुच्चयेन निर्देशोपपत्तिः । एवमनेन मधुराया इव पाटलिपुत्रस्य गृहा इतीवार्थविषयो वतिः सङ्गृह्यते ॥ ५३० ॥

यद्वात्रोपचारात् क्रियायां द्रव्यवचनस्य वृत्तिर्मा भूत् । क्रियाद्वारकं तु द्रव्ययोरेव साम्यमिति निदर्शनद्वारेण व्युत्पादयितुमाह—

**यथाध्ययनयोः साम्यमध्येत्रोरपदिश्यते ।**
**तथा क्रियागतैर्धर्मैरुच्यन्ते साधनाश्रयाः ॥ ५३१ ॥**

---

इदं श्रीहेलाराजव्याख्यानमयुक्तम्—मधुरागृहाणां दार्ष्टान्तिकत्वेनाप्रकृतत्वात् प्रकृतार्थहानिः, अप्रकृतार्थकल्पना इत्येवंरूपस्य दोषद्वयस्य प्रसङ्गात् । "चशब्दोऽत्र तथाशब्दार्थे" इत्यपि अप्रसिद्धाभिधानरूपेण बाधेन ग्रस्तम् । अत एव 'यद्वा' इत्यादिनाऽत्र व्याख्यानान्तरमाश्रितं श्रीहेलाराजेन । व्याख्यानान्तरस्येदं स्वरूपम्-"यद्वा निदर्शनान्तर्भावनेन दृष्टान्तदार्ष्टान्तिकयोः समुच्चयेन निर्देशोपपत्तिः" इति ।

अस्यायं भावः—कारिकावाक्ये उत्तरार्धे तथा इति पदं यथापदानुरोधादध्याहृत्य—"तथा मधुराश्रुतिः पाटलिपुत्रगृहतुल्ये मधुराप्रासादे च-चकाराद् मधुराधिकरणकेऽध्ययने च वर्तते" इति ।

एतदग्रे एवमुक्तं श्रीहेलाराजेन-"एवमनेन मधुराया इव पाटलिपुत्रस्य गृहा इतीवार्थे विषयो वतिः संगृह्यते" इति ।

अत्रापि न मे मनसः संतोषः । पूर्वपक्षभाष्ये पूर्वसूत्रेण 'तत्र तस्येव' इति सूत्रस्य गतार्थत्वाभिधानात् तुल्यार्थविषयकवतेरेव प्रकृतत्वेन संग्रहावश्यकत्वादिति ॥ ५३० ॥

यद्वाऽत्र=मधुरया तुल्यं मधुरावत् पाटलिपुत्रेऽधीये इत्यत्र द्रव्यवचनस्य मधुराशब्दस्य अध्ययनक्रियायामुपचारात्=लक्षणावृत्तिमाश्रित्य वृत्तिर्मा भूत्, क्रियाद्वारकं तु द्रव्ययोरेव=अपि साम्यमिति निदर्शनद्वारेण व्युत्पादयितुमाह—यथाऽध्ययनयोरिति ।

अस्यार्थः—यथा ब्राह्मणवदधीते क्षत्रिय इत्यादौ अध्ययनयोरुपमानोपमेयभावः सौष्ठवादिरूपसाधारणधर्महेतुकः, तदाधारयोर्द्रव्ययोस्तु क्रियारूपसाधारणधर्महेतुकः स इत्यध्ययनयोः साम्यमध्येत्रोरपदिश्यते=व्यवह्रियते । तथा 'मधुरावदधीते मातृवत् स्मरति' इत्यादौ अध्ययनस्मरणक्रियागतैः साधारणधर्मैः सादृश्यरूपैर्विविधैः सौष्ठवादिभिः साधनाश्रयाः=कर्माधिकरणादिरूपकारकशक्त्याधारभूत मधुरादयो मधुरादिशब्दैरुच्यन्ते । तथा च पूर्वस्मिन् कल्पे मधुरावदधीते इत्यत्र मधुरापदं मधुराधिकरणकेऽध्ययने लाक्षणिकम्, मातृवत्स्मरति इत्यत्र च मातृपदं मातृकर्मके स्मरणे लाक्षणिकम्, अस्मिन् कल्पे तु अध्ययनयोर्मधुरापाटलिपुत्राधिकरणकयोः साम्यं द्रव्ययोर्मधुरापाटलिपुत्रयोरारोप्य मधुरावदित्यपदिश्यते, एवं स्मरणयोर्मातृदेवदत्ताकर्मकयोः साम्यं मातृदेवदत्तयोरारोप्य मातृवदित्यपदिश्यते इति द्वयोः कल्पयोर्विशेषः ।

ब्राह्मणवदधीते क्षत्रिय इत्यध्ययनक्रिययोः साम्यं तुल्यत्वमध्येत्रोस्तत्साधनयोः कर्त्रोराख्यायते।

तथा ह्यध्ययनद्वारेणाधीयानयोरुपमानोपमेयभावो व्यवस्थाप्यते। एवं मधुरावदधीते, मातृवत् स्मरतीत्यध्ययनस्मरणाख्यक्रियाश्रयैर्धर्मैः सादृश्यलक्षणैः कारकशक्त्याधारा मधुरादयः कथ्यन्ते।

अध्ययनस्मरणद्वारेण हि तत्कर्माधिकरणयोरुपमानोपमेयभावलक्षणः सम्बन्धोऽवतिष्ठते। न हि कर्तार एव क्रियाद्वारेण सम्बन्धमनुभवन्ति, साधनमात्रेण क्रियाया अविनाभावात्। तदेवं मधुरया तुल्यमधीते, मात्रा तुल्यं स्मरतीत्यादावपि पूर्वेणैव वतिः सिद्धः॥ ५३१॥

तत्रैतत् स्यात्—क्रियोपाधौ सादृश्ये पूर्वेण विधिः। तथा च वतिनैवान्तर्भावात् क्रियायास्तद्वचनस्य प्रयोगो न भवति।

इह तु सामान्येन सादृश्यमात्रे विधानमित्यस्ति विशेष इत्याशङ्क्याह—

**इवार्थे यच्च वचनं पूर्वसूत्रे च यो विधिः।**
**क्रियाशब्दश्रुतौ भेदो न कश्चिद् विद्यते तयोः॥ ५३२॥**

---

अयं भावः—यथा ब्राह्मणवदधीते क्षत्रिय इत्यत्राध्ययनक्रिययोः साम्यं तुल्यत्वं तत्साधनयोरध्येत्रोर्ब्राह्मणक्षत्रियरूपयोः कर्त्रोराख्यायते।

तथाहि—अध्ययनद्वारेण=अध्ययनक्रिययोः साम्यं द्वारीकृत्य अधीयानयोर्ब्राह्मणक्षत्रिययोरुपमानोपमेयभावो व्यवस्थाप्यते। एवं मधुरावदधीते, मातृवत् स्मरति इत्यत्र अध्ययनस्मरणाख्यक्रियानिष्ठैर्धर्मैः सादृश्यरूपैः सौष्ठवादिभिः तत्कारकशक्त्याधारभूता मधुरादयः कथ्यन्ते।

यतोऽध्ययनस्मरणद्वारेण तत्कर्माधिकरणयोर्मातृमधुरयोरुपमानोपमेयभावलक्षणः संबन्धोऽवतिष्ठते। 'चैत्रेण तुल्यं मैत्रो व्यवहरति' इत्यादिप्रयोगदर्शनेन कर्तार एव क्रियाद्वारेण उपमानोपमेयभावलक्षणं संबन्धमनुभवन्तीति न नियमः, साधनमात्रेण=सकलैः साधनैः सह क्रियाया अविनाभावदर्शनादित्यस्ति मातृमधुरयोरपि कर्माधिकरणयोः अध्ययनस्मरणक्रिये द्वारीकृत्य उपमानोपमेयभावरूपः संबन्धः। तदेवं मधुरायामिव मधुराया तुल्यमधीते, मातुरिव मात्रा तुल्यं स्मरति इत्यादावपि पूर्वेणैव="तेन तुल्यम्" (पा० ५।१।११५) इति सूत्रेणैव वतिः सिद्ध इति॥ ५३१॥

तदैतत् स्यात्=पूर्वसूत्रेणोत्तरसूत्रस्य गतार्थत्वे पूर्वपक्षभाष्ये स्थिते वक्ष्यमाणं दूषणं संभाव्यते। क्रियोपाधिके=क्रियानिमित्तके सादृश्ये पूर्वेण सूत्रेण वतिविधिः। तथा च तत्र वतिनैव स्वार्थे क्रियाया अन्तर्भावात् क्रियावचनस्य शब्दस्य वत्यन्ते प्रयोगो न भवति-'मात्रा तुल्यं मातृवत्' इति।

इह तु='तत्र तस्येव' इति उत्तरसूत्रे तु सामान्येन क्रियोपाधिकत्वानादरेण सादृश्यमात्रे=सादृश्यसामान्ये वतिविधानमित्यस्ति पूर्वोत्तरसूत्रयोर्विशेषः=विषयभेदः इतिकथं पूर्वसूत्रेणोत्तरसूत्रस्य गतार्थत्वं पूर्वपक्षभाष्ये उक्तमित्याशङ्क्याह—इवार्थे यच्च वचनमिति।

सति क्रियापदप्रयोगे "तेन तुल्यं क्रिया चेद् वतिः" (पा० ५।२।११५) इत्यनेन पूर्वसूत्रेण "तत्र तस्येव" (पा० ५।१।११६) इत्यस्य योगस्य विषयो व्याप्त इति नेदमारब्धव्यम् ॥ ५३२ ॥

न च पूर्वेण विधौ क्रियापदप्रयोगो नास्ति, यतः—

यद्यप्युपाधिरन्यत्र नियतो न प्रयुज्यते ।
रूपाभेदात् त्वनिर्ज्ञाता क्रियात्र श्रूयते पुनः ॥ ५३३ ॥

"हरतेर्दृतिनाथयोः पशौ" (पा० ३।२।२५), "सास्य देवता" (पा० ४।२।२४) इत्यादावयं पश्वादिरुपाधिरवच्छेदको विशिष्ट इति दृतिहरिरित्यादौ प्रयोगे स्वशब्देन

---

अस्यार्थ.—यच्च=यत्तु, इवार्थे "तत्र तस्येव" इति सूत्रेण क्रियाशब्दश्रुतिर्विना वचनम्=वतिविधानम्, यश्च सूत्रे क्रियाशब्दश्रुतौ सत्यां पूर्वसूत्रे="तेन तुल्यम्" (पा० ५।१।११५) इति सूत्रे वतिविधिः। तयोः सूत्रे क्रियाशब्दश्रवणाश्रवणप्रयुक्तः कश्चिद् भेदो न विद्यते। उभयत्रापि वत्यन्तस्य वृत्तिपदस्य क्रियासामान्योपाधिकसादृश्यप्रत्यायकत्वात् क्रियाविशेषोपाधिकसादृश्यप्रतीतिस्तु उभयत्रापि क्रियाविशेषबोधकपदसंनिधाने एवेति न कश्चिद् विशेषः पूर्वोत्तरसूत्राभ्यां वतिविधाने इति।

अयं भावः—सतिक्रियापदप्रयोगे="तेन तुल्यम्" इति सूत्रे क्रियापदप्रयोगे सत्यपि 'तेन तुल्यं क्रियाचेद् वतिः' इति पूर्वसूत्रेण "तत्र तस्येव" (पा० ५।१।११६) इति उत्तरसूत्रे क्रियापदप्रयोगाभावेऽपि अस्य सूत्रस्य विषयो व्याप्तः, उभयत्रापि वत्यन्तस्य वृत्तिपदस्य क्रियासामान्योपाधिकसादृश्यबोधकत्वादिति पूर्वेण गतार्थत्वात् 'तत्र तस्येव' इतीदं सूत्रं नारब्धव्यमिति ॥ ५३२ ॥

न च पूर्वसूत्रेण वतिविधौ वत्यन्ते क्रियापदप्रयोगो नास्ति मातृवदिति, वतिनैव स्मरणादिक्रियाया उक्तत्वाद्, उत्तरसूत्रे तु वतिना काचिदपि क्रिया नोच्यते इति पूर्वसूत्र उत्तरसूत्राद् विशेष इति शङ्क्यम्। यतोऽन्यत्र नाथहरिरित्यादौ पश्वादिरूपस्योपाधेर्निर्ज्ञातत्वेन प्रयोगाभावेऽपि वत्यन्ते उभयत्र क्रियासामान्यरूपस्य सादृश्योपाधेर्निर्ज्ञातत्वेऽपि क्रियाविशेषनिर्ज्ञातार्थं क्रियाविशेषबोधकपदप्रयोगस्योभयत्रापि आवश्यकत्वाविशेषादित्याह—यद्यप्युपाधिरिति।

अस्यार्थः—यद्यप्यन्यत्र दृतिहरिरित्यादौ पशुत्वरूपः कर्त्रुपाधिर्नियतः=नियमेन प्रतीतो भवतीति तत्रोपाधिबोधकं पशुपदं न प्रयुज्यते, दृतिहरिः पशुरिति।

अत्र तु=मातृवदित्यादिवत्यन्तप्रयोगे तु रूपाभेदाद्-वत्यर्थसादृश्योपाधिभूतायाः क्रियायाः सामान्येन प्रतीयमानायाः स्वरूपविशेषस्य प्रतीत्यभावात्, वत्यन्तेन विशेषरूपेण अनिर्ज्ञाता क्रिया क्रियाविशेषबोधकपदसंनिधाने पुनः श्रूयते इति।

अयं भावः—"हरतेर्दृतिनाथयोः पशौ" (पा० ३।२।२५) "सास्य देवता" (पा० ४।२।२४) इत्यादावयं पशुदेवतादिरुपाधिरवच्छेदको विशिष्टः=प्रत्ययार्थविलक्षण इति

नोपादीयते, प्रत्ययेनैव गमितत्वात्। नियते ह्यर्थे विधीयमानः प्रत्ययो नार्थान्तरे सन्दिह्यते।

इह पुनः सामान्येन क्रियोपाधिरिति वत्यन्तान्नियोगतः क्रियाविशेषस्यावगमाद् विशिष्टक्रियावचनस्य प्रयोगोऽवश्यम्भावी। वृत्तिपदं ह्यविशिष्टरूपं क्रियामात्रप्रत्यायने समर्थं स्यात्, न तु नियतक्रियावेदने तस्य शक्तिः ॥ ५३३ ॥

एतदेव निदर्शनेन साधयति—

**यथा व्युत्परयः पुच्छौ क्यङन्ते सुदुरादयः।**
**सत्यपि प्रत्ययार्थत्वे भेदाभावादुदाहृताः ॥ ५३४ ॥**

पुच्छादुदसनव्यसनपर्यसनेषु णिङो विधिरुक्तः। तथा च पुच्छौ ण्यन्ते पुच्छयतावविशेषादुदसनादीनां सामान्येनावगमे विशेषाभिव्यक्तये प्रत्ययेनैवान्तर्भाविते व्युदसनादावुदादेरुपसर्गस्य प्रयोगोऽङ्गीकृतः। उत्पुच्छयते, विपुच्छयते, परिपुच्छयत

---

द्गतिहरिरित्यादौ प्रयोगे स्वशब्देन नोपादीयते। प्रत्ययेनैव गमितत्वात्=ज्ञापितत्वात्। उपाधिना नियते हि अर्थे विधीयमानः प्रत्ययो नार्थान्तरे संदिह्यते। प्रत्ययेन नियतस्यैवार्थस्य प्रत्ययात्।

इह पुनः=तिप्रत्यये तु सामान्येन क्रियोपाधिः=क्रियासामान्ये वतिप्रत्ययार्थसादृश्योपाधिरिति वत्यन्तान्नियमतः क्रियाविशेषस्यानवगमाद् विशिष्टक्रियावचनस्य=क्रियाविशेषवचनस्य पदस्य वतेः पृथक् प्रयोगोऽवश्यभावी। वृत्तिपदं हि पूर्वोत्तरसूत्रद्वयविहितवतिप्रत्ययान्तमविशिष्टरूपम्=तुल्यरूपं क्रियासामान्यप्रत्यायने समर्थं स्यात्, न तु नियतक्रियावेदने=क्रियाविशेषनिवेदने तस्य शक्तिरिति ॥ ५३३ ॥

सामान्येन प्रत्ययाभिव्यक्तस्यार्थस्य विशेषरूपेणाभिव्यक्तये पुनः शब्दान्तरप्रयोग इत्येतदेव निदर्शनेन=दृष्टान्तेन साधयति—यथा व्युत्परय इति।

अस्यार्थः—यथा पुच्छौ णिङन्ते उदसनव्यसनपर्यसनानां प्रत्ययार्थत्वे सत्यपि भेदाभावात् उदसनव्यसनपर्यसनरूपाणामर्थभेदानां पुच्छिनाऽवगमाभावात् पुच्छेः पूर्वं व्युत्परयः पृथगुदाहृताः प्रयुक्ता भवन्ति, यथा च अभिसुदुरामुपसर्गाणां भवत्यर्थरूपप्रत्ययार्थविशेषणत्वपक्षे तदर्थानां प्रत्ययेनैवोपगृहीतार्थत्वेऽपि रूपभेदाभावात्=अभिसुदुरामर्थेषु मनायते इति रूपाभेदात् क्यङन्तस्य केवलस्य स्वादिरहितस्य अर्थविशेषाभिव्यक्तावसामर्थ्यात् स्वादीनां पृथक्प्रयोगोऽङ्गीकृतः "अभिमनायते, सुमनायते, दुर्मनायते" इति, तथा वत्यन्तेन क्रियासामान्याभिधानेऽपि क्रियाविशेषावगमाय क्रियाविशेषबोधकस्य पदस्य पृथक् प्रयोगोऽवश्यंभावीति।

अयं भावः—पुच्छादुदसनव्यसनपर्यसनेषु णिङो विधिरुक्तः "पुच्छभाण्डचीवराण्णिङ्" (पा० ३।१।२०) इति सूत्रेण। तथा च पुच्छौ-ण्यन्ते पुच्छयतौ उदसनादीनांविशेषात् सामान्येनावगमे प्रत्ययेनैव उदसनादावन्तर्भाविते विशेषाभिव्यक्तये उदादेरुपसर्गस्य पृथक्

इति। तथा भृशादिष्वभिमनस् इत्यादावुपसर्गाणां प्रकृत्यर्थविशेषणपक्षेऽडादिषु दोषात् सिद्धान्तिते, भवत्यर्थलक्षणप्रत्ययार्थविशेषणपक्षे प्रत्ययेनैवोपगृहीतार्थत्वेऽपि रूपाभेदात् प्रत्ययान्तस्य विशेषाभिव्यक्तावसामर्थ्यात् प्रयोगोऽङ्गीकृतः। अभिमनायते, सुमनायते, दुर्मनायत इति।

एवं क्रियामात्रे वतेर्विधानात् तदन्तेन क्रियाविशेषानभिव्यक्तौ तदभिव्यक्त्यर्थं क्रियापदप्रयोगो न्याय्यः। तथा च क्रियाशब्दश्रुतौ भेदाभावात् पूर्वेणैव सिद्धमिति स्थितम्॥ ५३४॥

एतदेव निगमयति—

**एवञ्च सति पूर्वेण सिद्धोऽत्रापि वतेर्विधिः।**
**नियमे वाभिधाने वा भिद्यते न क्रियाश्रुतिः॥ ५३५॥**

इह यदा पूर्वसूत्रेण वतिः, तदापि तेन क्रियासामान्यस्याभिधानाद् विशेषव्यक्तये क्रियापदप्रयोग इति नियमो भवति, विशेषान्तरव्यवच्छेदात्। अनेन तु योगेन

---

प्रयोगोऽङ्गीकृतः। उत्पुच्छयते, विपुच्छयते, परिपुच्छयते' इति। तथा भृशादिषु 'अभिमनस्, सुमनस्, दुर्मनस्' इत्यत्रोपसर्गाणां प्रकृत्यर्थविशेषणपक्षेऽडादिषु दोषात्=उपसर्गविशिष्टस्य धातुत्वेन उपसर्गात् प्रागडापत्तिरूपदोषाद् भवत्यर्थरूपप्रत्ययार्थविशेषणपक्षे सिद्धान्तिते उपसर्गाणां प्रत्ययेनैवोपगृहीतार्थत्वेऽपि इवार्थतुल्यार्थवत्यन्तयो रूपाभेदात् प्रत्ययान्तस्य=क्यङन्तस्य उपसर्गरहितस्य अर्थविशेषाभिव्यक्तौ असामर्थ्यात् उपसर्गाणां क्यङन्तात् पृथक् प्रयोगोऽङ्गीकृतः। अभिमनायते, सुमनायते, दुर्मनायते इति।

एवं क्रियामात्रे=क्रियासामान्ये वतेर्विधानात् तदन्तेन=वत्यन्तेन क्रियाविशेषानभिव्यक्तौ तदभिव्यक्त्यर्थम्=क्रियाविशेषाभिव्यक्त्यर्थम् क्रियापदप्रयोगः=क्रियाविशेषबोधकपदस्य वत्यन्तात् पृथक् प्रयोगो न्याय्यः। तथाच सूत्रे क्रियाशब्दश्रुतौ सत्यामपि भेदाभावात् पूर्वेणैव इवार्थेऽपि वत्यन्तं रूपं सिद्धमिति स्थितमिति॥ ५३४॥

एतदेव निगमयति=उपसंहरति—एवञ्च सति पूर्वेणेति।

अस्यार्थः—एवञ्च सति-पूर्वसूत्रेणोत्तरसूत्रेण वा वतिविधाने सूत्रे प्रयोगे वा क्रिया शब्दश्रुतौ भेदाभावे सति, अत्रापि='तत्र तस्येव' इति सूत्रविषयेऽपि पूर्वेणैव सूत्रेण वतेर्विधिः सिद्धः।

यतः 'तेन तुल्यम्' (पा० ५।१।११५) इति सूत्रेण वतिविधाने वतिना क्रियासामान्याभिधानेऽपि क्रियाविशेषव्यक्तये विशेषान्तरव्यवच्छेदाय च क्रियापदप्रयोग इति नियमेवाभ्युपगम्यमाने, 'तत्र तस्येव' इति सूत्रेण यो वतिर्विधीयते सा सादृश्यमात्रमभिधत्ते इति वत्यन्तेन क्रियाया अनाख्यातत्वात् क्रियाशब्दप्रयोगेण प्रत्यायनमपूर्ववतिष्ठते इति वत्यन्तप्रयोगेऽपि क्रियाशब्देन क्रियाया अपूर्वाभिधानमित्येवमपूर्वाभिधाने वा क्रियाश्रुतिः=क्रियाशब्दप्रयोगस्तु उभयत्रापि वत्यन्तघटिते वाक्ये न भिद्यते=न विशिष्यते इति।

अयं भावः—इह यदा पूर्वसूत्रेण वतिर्विधीयते, तदाऽपि तेन वतिना क्रियासामान्याभिधानाद् क्रियाविशेषव्यक्तये विशेषान्तरव्यवच्छेदाय च वाक्ये क्रियापदप्रयोग इति नियमो भवति।

यो वतिः, स सादृश्यमात्रमुपादत्त इत्यनाख्यातत्वाद् वत्यन्तेन क्रियायाः क्रियाशब्देन प्रत्यायनमपूर्वमवतिष्ठते ।

इत्थं चैतावानत्र भेदः । क्रियाशब्दप्रयोगस्तु सर्वथा न भिद्यते न विशिष्यत इत्यनर्थकः पुनर्वतेरनेन विधिर्लक्ष्ये विशेषाभावादित्यभिप्रायः पूर्वपक्षभाष्ये व्याख्यातः ॥ ५३५ ॥

अनन्तरमक्रियार्थोऽयमारम्भ इति योगप्रयोजनमुक्तं व्याचष्टे—

**इवे द्रव्यादिविषयः प्रत्ययः पुनरुच्यते ।**
**क्रियाणामेव सादृश्ये पूर्वसूत्रे विधीयते ॥ ५३६ ॥**

"तेन तुल्यम्" (पा० ११११५) इत्यनेन क्रियया तुल्यत्वस्य विशेषणात् क्रियानिमित्ते साम्ये वतिरुक्तः । तथा च गवा तुल्यो गवय इत्यत्र क्रियासादृश्ये वतिर्न भवति । अनेन त्विवार्थे वतिर्द्रव्यगुणनिमित्तेऽपि सादृश्ये भूयो विधीयत इत्यस्ति विशेषः ॥ ५३६ ॥

तथा ह्यत्रोदाहरणम्—

**मधुरायामिव गृहा ब्राह्मणस्येव पाण्डुराः ।**
**इत्यत्र द्रव्यगुणयोः पूर्वेण न वतिर्भवेत् ॥ ५३७ ॥**

---

विशेषान्तरव्यवच्छेदात् । 'तत्र तस्येव' (पा० ५।१।११६) इत्यनेन तु सूत्रेण यो वतिर्विधीयते स सादृश्यमात्रमुपादत्ते=अभिधत्ते इति वत्यन्तेन क्रियाया अनाख्यातत्वात् तस्याः क्रियाशब्देन प्रत्यायनमपूर्वमवतिष्ठते ।

इत्थमेतावानेवात्र भेदः । क्रियाशब्दप्रयोगस्तु उभयत्रापि सर्वथा न भिद्यते=न विशिष्यते इत्यनर्थकं पुनर्वतेरनेन='तत्र तस्येव' इति सूत्रेण विधानम्, लक्ष्ये विशेषाभावादित्यभिप्रायः पूर्वपक्षभाष्ये हरिणा व्याख्यात इति ॥ ५३५ ॥

अनन्तरम्=प्रागुक्तपूर्वपक्षभाष्यानन्तरम् अक्रियार्थोऽयमारम्भः='तत्र तस्येव' इति सूत्रमक्रियार्थमिति 'तत्र तस्येव' इति सूत्रप्रयोजनमुक्तं भाष्ये, तद् व्याचष्टे—इवे द्रव्यादिविषय इति ।

अस्यार्थः—इवे=इवार्थे, द्रव्यादिविषयः, द्रव्यसादृश्यार्थकः, गुणसादृश्यकश्च वतिप्रत्ययः पुनरुच्यते 'तत्र तस्येव' इति सूत्रेण—मधुरायामिव पाटलिपुत्रे गृहा इत्यत्र गृहरूपयोर्द्रव्ययोस्तुल्यत्वम्, ब्राह्मणस्येव क्षत्रियस्य शुक्ला इत्यत्र दन्तेषु शुक्लगुणयोस्तुल्यत्वं पूर्वसूत्रे='तेन तुल्यम्' इति सूत्रे, क्रियाणामेव सादृश्ये वतिर्विधीयते इति । द्रव्यसादृश्ये गवा तुल्यो गवयः इत्यत्र वतिर्न भवति ।

अयं भावः—"तेन तुल्यम्०" (पा० ५।१।११५) इति सूत्रे क्रियया तुल्यत्वस्य विशेषणात् तेन सूत्रेण क्रियानिमित्तके सादृश्ये वतिरुक्तः । तथा च गवा तुल्यो गवय इत्यत्र क्रियासादृश्याभावे वतिर्न भवति । अनेन तु='तत्र तस्येव' इति सूत्रेण तु इवार्थे सादृश्ये विधीयमानो वतिर्द्रव्यगुणनिमित्तकेऽपि सादृश्ये प्रागुक्ते भूयो विधीयते इत्यस्ति पूर्वोत्तरसूत्रविहितवत्योर्विशेष इति ॥ ५३६ ॥

मधुरायामिव पाटलिपुत्रे गृहा निचितनवरत्ना इत्यत्र गृहद्रव्ययोस्तुल्यत्वम्, ब्राह्मणस्येव क्षत्रियस्य शुक्ला दन्ता इति शौक्ल्यगुणनिमित्तं सादृश्यम्।

अत्र पूर्वसूत्रेण वतिर्न भवति, तस्य क्रियानिमित्तसादृश्ये नियमितत्वादिति पुनरिहोच्यते ॥ ५३७ ॥

एतदाक्षिपति—

**आरम्भस्याक्रियार्थत्वे नार्थो योगेन विद्यते ।**
**ऋते क्रियाया ग्रहणात् पूर्वयोगेन सिध्यति ॥ ५३८ ॥**

"तत्र तस्येव" ( पा० ५।१।११६ ) इत्यस्य योगस्य द्रव्यगुणतुल्यत्वार्थे करणेऽङ्गीक्रियमाणे पूर्वत्र क्रियाग्रहणमकृत्वा नारब्धव्यमिदम्।

---

तथाहि अत्र='तत्र तस्येव' ( पा० ५।१।११६ ) इत्यत्र उदाहरणमाह—मधुरायामिवेति।

अस्यार्थः—'मधुरायामिव पाटलिपुत्रे गृहाः', 'ब्राह्मणस्येव क्षत्रियस्य पाण्डुराः (शुक्लाः) दन्ताः' इत्यत्र यथायथं द्रव्यगुणयोः संबन्धिनि=तन्निमित्तके सादृश्ये पूर्वेण "तेन तुल्यम्" ( पा० ५।१।११५ ) इति सूत्रेण वतिर्न भवेदिति "तत्र तस्येव" ( पा० ५।१।११६ ) इति सूत्रमारम्भणीयमिति।

अयं भावः—'मधुरायामिव पाटलिपुत्रे गृहा निचितनवरत्नाः' इत्यत्र यथायथं गृहरूपयोर्द्रव्ययोस्तुल्यत्वम्=अत्र रत्नानां निचयः स्थापनम्। 'ब्राह्मणस्येव क्षत्रियस्य शुक्ला दन्ताः' इत्यत्र शौक्ल्यगुणनिमित्तकमुभयत्र दन्तेषु सादृश्यम्।

अत्र पूर्वेण सूत्रेण="तेन तुल्यम्" ( पा० ५।१।११५ ) इति सूत्रेण वतिर्न भवति। तस्य=पूर्वसूत्रेण विहितस्य वतेः क्रियानिमित्तकसादृश्ये एव नियमितत्वादिति पुनरिह="तत्र तस्येव" ( पा० ५।१।११६ ) इति सूत्रे वतिरुच्यत इति ॥ ५३७ ॥

एतदाक्षिपति=एतत् प्रत्याचष्टे—आरम्भस्याक्रियार्थत्वे इति।

अस्यार्थः—"तत्र तस्येव" ( पा० ५।१।११६ ) इति सूत्रारम्भस्य अक्रियार्थत्वे=द्रव्यगुणतुल्यत्वार्थकत्वेऽङ्गीक्रियमाणे "तत्र तस्येव" ( पा० ५।१।११६ ) इति योगेन=सूत्रेण नार्थो न प्रयोजनं विद्यते। पूर्वसूत्रे क्रियाया ग्रहणाद् ऋते=क्रियाग्रहणस्याकरणे, पूर्वयोगेन=पूर्वसूत्रेण="तेन तुल्यम्०" ( पा० ५।१।११५ ) इति सूत्रेण "तत्र तस्येव" ( पा० ५।१।११६ ) इत्यस्य विषयेऽपि अक्रिया तुल्यत्वे वतिः सिध्यति, "मधुरावत् पाटलिपुत्रे गृहाः, ब्राह्मणवद् क्षत्रियस्य शुक्ला दन्ताः" इति।

अयं भावः—'तत्र तस्येव' इति सूत्रस्य द्रव्यगुणतुल्यत्वार्थे करणे=आरम्भे अङ्गीक्रियमाणे पूर्वस्य=पूर्वसूत्रे क्रियाग्रहणमकृत्वानारब्धव्यमिदम्=तत्र तस्येवेति सूत्रम्।

तथाहि—क्रियाग्रहणस्य द्रव्यगुणनिमित्ते सादृश्ये मा भूदिति प्रयोजनम्। तत्रापि चानेन विधावनर्थकं तद्व्यावर्त्याभावादिति तेन तुल्यमित्येवास्तु सर्वविषये सादृश्ये वतिविधानमित्यत्रार्थः ॥ ५३८ ॥

ननु च न मधुरया तुल्या गृहाः, नापि देवदत्तेन तुल्या दन्ताः, अपि तु मधुराधिकरणैर्गृहैरितरे तुल्याः, देवदत्तसम्बन्धिभिश्च दन्तैरितरे दन्ता इति पूर्वेणासिद्धौ षष्ठीसप्तमीसमर्थाद् वतिविधानं युक्तमेवेत्याशङ्क्याह—

**मधुरावयवे वृत्तिर्व्याख्याता मधुराश्रुतेः ।**
**ब्राह्मणावयवान् दन्तान् वक्ष्यति ब्राह्मणश्रुतिः ॥ ५३९ ॥**

नेदमपूर्वं चोद्यते, प्रागेवास्यार्थस्य निर्णीतत्वात्। तथा ह्युष्ट्रशब्दो यथावयवे मुखे वर्तते, तथा मधुरादिशब्दस्तदवयवे गृहे वर्तिष्यत इति मधुरया तुल्या इत्यादिविग्रहोपपत्तिः। नियतावयवपरिग्रहश्चात्र दन्तादीनामुपमेयत्वेन प्रयोगादवधार्यते ॥ ५३९ ॥

इदानीं पूर्वत्र क्रियाग्रहणस्य व्यवच्छेद्यमुपदर्शयन्निवार्थविषयस्य वतेरारम्भसमर्थनार्थमाह—

---

तथाहि—पूर्वसूत्रे क्रियाग्रहणस्य प्रयोजनम्—द्रव्यगुणनिमित्तके सादृश्ये मा भूदिति। तत्रापि च=द्रव्यगुणनिमित्तके सादृश्येऽपि च अनेन विधौ="तत्र तस्येव" (पा० ५।१।११६) इति सूत्रेण वतेर्विधाने अनर्थकं तत्=क्रियाग्रहणं व्यावर्त्याभावादिति "तेन तुल्यं वतिः" (पा० ५।१।११५) इत्येवास्तु सर्वविषये=क्रियानिमित्तके तदनिमित्तके च सादृश्ये वतिविधानमित्यत्रार्थ इति ॥ ५३८ ॥

ननु च—"न मधुराया तुल्या पाटलिपुत्रे गृहाः, नापि देवदत्तेन ब्राह्मणेन तुल्याः क्षत्रियस्य दन्ताः, अपि तु मधुराधिकरणकैर्गृहैस्तुल्याः पाटलिपुत्रस्य गृहाः, देवदत्तसंबन्धिभिश्च दन्तैः तुल्याः क्षत्रियस्य यज्ञदत्तादेर्दन्ताः" इति पूर्वेणात्र वत्यसिद्धौ "तत्र तस्येव" इत्यत्र षष्ठीसप्तमीसामर्थ्याद् वतिविधानमत्र युक्तमित्याशङ्क्याह—मधुरावयवे वृत्तिरिति।

अस्यार्थः—"मधुरायामिव पाटलिपुत्रे गृहाः" इत्यत्र मधुराश्रुतेः—मधुराशब्दस्य मधुरावयवे गृहे वृत्तिः पूर्वं व्याख्याता, 'ब्राह्मणस्येव क्षत्रियस्य शुक्ला दन्ताः' इत्यत्र ब्राह्मणश्रुतिः =ब्राह्मणशब्दः, ब्राह्मणावयवान् दन्तान् वक्ष्यति इत्युभयत्रापि सादृश्योपपत्तिरिति।

अयं भावः—नेदमपूर्वं चोद्यते=नायमपूर्वः प्रश्नो भवता क्रियते, प्रागेवास्यार्थस्य निर्णीतत्वात्। तथाहि—उष्ट्रशब्दो यथा स्वार्थावयवे मुखे वर्तते, तथा मधुरादिशब्दस्तदर्थावयवे गृहे वर्तिष्यते इति मधुरया=मधुरावयवगृहैः तुल्या इत्यादिविग्रहोपपत्तिः। अवयवानां बहुत्वेऽपि नियतावयवपरिग्रहश्चात्र दन्तादीनामुपमेयत्वेन प्रयोगादवधार्यते इति ॥ ५३९ ॥

इदानीं पूर्वत्र=पूर्वसूत्रे क्रियाग्रहणस्याव्यवच्छेद्यमुपदर्शयन् इवार्थविषयस्य वतेरारम्भसमर्थनार्थमाह—न काचिदित्र योगे तु इति।

न काचिदिवयोगे तु बाह्यात् सम्बन्धिनो विना ।
षष्ठी विधीयते तत्र पूर्वेण प्रत्ययो भवेत् ॥ ५४० ॥

यदि पूर्वत्र क्रियाग्रहणं न क्रियते, तदा गौरिव गवय इत्यत्रापि वतिः स्यात् । इवशब्दयोगे हि व्यतिरेकविभक्तिः षष्ठी न काचिदुपदिश्यतेऽनपेक्ष्य बाह्यं सम्बन्धिनमिवार्थमात्रे । इवार्थो हि सामानाधिकरण्येनैव समन्वेति, न तु व्यतिरेकं जनयति । तथा च तद्योगे प्रथमैव भवति ॥ ५४० ॥

ननु पूर्वत्र तृतीयासमर्थाद् वतिरित्यत्र प्रथमासमर्थात् कथं प्रसङ्ग आपद्यत इत्यत आह—

आधिक्यं तुल्यशब्देन सम्बन्ध उपजायते ।
षष्ठीतृतीये तत्र स्तस्तुल्यशब्दो हि वाचकः ॥ ५४१ ॥

तुल्यशब्दः स्वतन्त्रस्यार्थस्य वाचक इति तेन सत्त्वभूतार्थाभिधायिना समन्वये

---

अस्यार्थः—यदि पूर्वसूत्रे क्रियाग्रहणं न क्रियते यदा यतो बाह्याद् उपमानोपमेयरूपसंबन्धिभ्यां भिन्नात् संबन्धिनो विना=बाह्यं संबन्धिनमनपेक्ष्य 'गौरिव गवयः' इत्यादौ इवार्थं मात्रे इव योगे तु काचित् षष्ठी न विधीयते, अतस्तत्र गौरिव गवय इत्यत्र पूर्वेण "तेन तुल्यम्०" ( पा० ५।१।११५ ) इति सूत्रेण क्रियापदरहितेन वतिप्रत्ययो भवेत् । अतो गौरिव गवय इत्यत्रानिष्टस्य वतिप्रत्ययस्य वारणार्थं पूर्वसूत्रे क्रियाग्रहणं कर्तव्यम् । तदाऽत्र न वतिः, क्रियाया अभावात् । न च उत्तरसूत्रानारम्भे पूर्वसूत्रे क्रियापदाभावेऽपि 'गौरिव गवयः' इत्यत्र न वतिप्रत्ययप्रसक्तिः, तृतीयासमर्थायाः प्रकृतेरभावादिति वाच्यम्, उत्तरसूत्रविषयस्य संग्रहार्थं पूर्वसूत्रे क्रियापदाभावे तेनेति पदस्य तुल्यार्थयोगे संभविनीनां विभक्तीनामुपलक्षणत्वात् । कथमन्यथा तदा षष्ठ्यन्तसप्तम्यन्ताभ्यां वतिः स्यादिति ।

अयं भावः—यदि पूर्वत्र=पूर्वसूत्रे क्रियाग्रहणं न क्रियते उत्तरसूत्रविषयस्य संग्रहार्थम्, तदा गौरिव गवयः इत्यत्रापि वतिप्रत्ययः स्यात् । इवशब्दयोगे हि इवार्थसादृश्यमात्रे काचिद् व्यतिरेकविभक्तिः=भेदनिमित्तिका विभक्तिः षष्ठी नोपदिश्यते=न विधीयते बाह्यं संबन्धिनमनपेक्ष्य । उपमानोपमेयबाह्यसंबन्ध्यपेक्षायां तु भवत्येव षष्ठी विभक्तिः, 'ब्राह्मणस्येव क्षत्रियस्य शुक्ला दन्ताः' इति । इवार्थो हि सामानाधिकरण्येनैव समन्वेति=सम्बन्धमनुभवति, न तु व्यतिरेकम्=स्वप्रतियोग्यनुयोगिनोर्भेदं जनयति । तथा च तद्योगो=बाह्यसंबन्ध्यनपेक्षायामिव योगे प्रथमैव भवति । गौरिव गवय इति ॥ ५४० ॥

ननु पूर्वत्र=पूर्वसूत्रे तृतीया समर्थाद् वतिर्भवति इति, अत्र='गौरिव गवयः' इत्यत्र कथं प्रथमासमर्थाद् वतिप्रसङ्ग आपाद्यते इत्यत आह—आधिक्यं तुल्यशब्देनेति ।

अस्यार्थः—हि=यतः, तुल्यशब्दः सदृशरूपस्य स्वतन्त्रस्यार्थस्य वाचकः, न तु इव शब्दवत् संनिहितपरपदार्थस्य सादृश्यस्य द्योतकः, अतः तुल्यशब्देन उपमानशब्दस्य संबन्धे सति तुल्यार्थे उपमानपदार्थादाधिक्यम्=आधिक्यसमनियतो भेदः उपजायते, अतस्तत्रोपमानपदाद्

प्रतियोगिनो व्यतिरेकः समुद्भवति। तथा च "तुल्यार्थैः—" ( पा० २।३।७२ ) इति विकल्पेन व्यतिरेकविभक्ती षष्ठीतृतीये भवतः ॥ ५४१ ॥

तुल्यशब्दसमानार्थस्तु यदेवशब्दः प्रयुज्यते, तदा—

**इवशब्दप्रयोगे तु बाह्यात् सम्बन्धिनो विना।**
**नाधिक्यमुपमानेऽस्ति द्योतकः सम्प्रयुज्यते ॥ ५४२ ॥**

परपदार्थनिष्ठत्वेन प्रयोगात् तद्गतं विशेषं प्रकाशयन् स्वतन्त्रेणार्थेनायोगाद् व्यतिरेकमिवशब्दो द्योतको नापादयति। ततश्च यदा तुल्यशब्दसमानार्थेनेवशब्देन सादृश्यमुपदर्श्यते, तदा व्यतिरेकविभक्त्यभावादसति क्रियाग्रहणे पूर्वेण वतिर्भवेदित्यवश्यकर्तव्यमेतन्निवृत्त्यर्थं क्रियाग्रहणम्। तथा चाक्रियार्थोऽयमारम्भो युज्यत इत्यर्थः।

न चानेनेवार्थे प्रथमासमर्थाद् गौरिव गवय इत्यत्र प्रसज्यते, 'तत्र तस्येव' इति समर्थविभक्तिनियमादिति न किञ्चिदनिष्टम् ॥ ५४२ ॥

---

भेदनिमित्तिके षष्ठीतृतीये स्तो=भवतः "तुल्यार्थैरतुलोपमाभ्यामन्यतरस्याम्" ( पा० २।३।७२ ) इति सूत्रेणेति।

अयं भावः—तुल्यशब्दः स्वतन्त्रस्यार्थस्य सदृशरूपस्य वाचकः इति तेन=तुल्यशब्देन सत्त्वभूतार्थाभिधायिना=द्रव्याभिधायिना सह उपमानपदस्तस्य समन्वये=संबन्धे क्रियमाणे प्रतियोगिन उपमानपदार्थस्य तुल्यार्थे व्यतिरेकः=भेदः समुद्भवति=आविर्भवति। तथा च=एवञ्च "तुल्यार्थैः" ( पा० २।३।७२ ) इति सूत्रेण व्यतिरेकविभक्ती=भेदनिमित्तकविभक्ती षष्ठीतृतीये उपमानपदाद् भवत इति ॥ ५४१ ॥

यदा तु तुल्यशब्दसमानार्थक इवशब्दः प्रयुज्यते, तदाऽऽह—इवशब्दप्रयोगे तु इति।

अस्यार्थः—बाह्यात्=उपमानोपमेयभिन्नात्, संबन्धिनो दन्तादिकाद् विना बाह्यं संबन्धिनं दन्तादिकमनपेक्ष्य इवार्थमात्रे इवशब्दप्रयोगे तु उपमेयादाधिक्यम्-तत्समनियतो भेदः, उपमाने नास्ति, यत इवशब्दः संनिहितपरपदार्थस्य द्योतकः संप्रयुज्यते, न तु तुल्यशब्दवत् स्वतन्त्रस्यार्थस्य वाचक इति।

अयं भावः—इव शब्दस्य परपदार्थनिष्ठत्वेन=संनिहितपरपदार्थतत्परत्वेन प्रयोगात् तद्गतम्=संनिहितपरपदार्थगतम्, विशेषं प्रकाशयन्=अभिव्यञ्जयन् स्वतन्त्रेणार्थेनायोगात्=संबन्धाभावाद् इवशब्दो द्योतको नोपमानाद् उपमेये व्यतिरेकम्=भेदम् आपादयति। ततश्च यदा तुल्यशब्दसमानार्थेनेवशब्देन सादृश्यमुपदर्श्यते=अवद्योत्यते,तदाप्रागुक्तरीत्या व्यतिरेकविभक्त्यभावाद्=भेदनिमित्तकषष्ठ्यादिविभक्त्यभावाद् पूर्वसूत्रे असति क्रियाग्रहणे 'गौरिव गवयः' इत्यत्र पूर्वसूत्रेण वतिर्भवेत् इत्येतन्निवृत्त्यर्थं क्रियाग्रहणमवश्यकर्तव्यम्। तथा चाक्रियार्थोऽयमारम्भः="तत्र तस्येव" इति सूत्रारम्भो युज्यते इत्यर्थः।

ननु पूर्वत्र तुल्यशब्देनैव सादृश्यमुपदर्शयितव्यं तृतीयानिमित्तव्यतिरेकहेतुना, अनपेक्ष्य बाह्यं सम्बन्धिनं प्रकृत्यर्थस्येवार्थेन समन्वयाभावादिवशब्देन सादृश्योपदर्शनायोगादिति कुतो गौरिव गवय इत्यत्र प्रत्ययप्रसङ्ग इत्याशङ्क्य, इवतुल्यनिमित्तयोर्व्यतिरेकयो र्भेदप्रदर्शनेनासति क्रियाग्रहणे पूर्वयोगेन तुल्यनिमित्ते व्यतिरेके विधीयमानो वतिस्तुल्यशब्देनापि सादृश्योपदर्शनेऽतिप्रसज्जेदेवेत्याह—

**इवे यो व्यतिरेकोऽत्र स प्रासादादिहेतुकः ।**
**तुल्ये तद्विषयापेक्षमाधिक्यमुपजायते ॥ ५४३ ॥**

मधुरायामिव पाटलिपुत्रे प्रासादाः, देवदत्तस्येव यज्ञदत्तस्य दन्ता इति योऽयमिवशब्दप्रयोगे व्यतिरेकः षष्ठीसप्तमीविभक्तिनिमित्त उपलभ्यते, नासाविवार्थनिबन्धनः । अपि त्वनपेक्षित एवेवार्थयोगे दन्ताप्रासादादिनिमित्तोऽयम् ।

ततश्च प्रत्ययार्थहेतुकस्य व्यतिरेकस्यात्रासम्भवात् सामर्थ्याद् बाह्यसम्बन्धिनिमित्तषष्ठीसप्तम्यन्ताद् वतिरवतिष्ठते । पूर्वेण तुल्यार्थे तु यो वतिस्तत्र बाह्यं सम्बन्धिनमनपेक्ष्यैव तुल्यार्थनिमित्त एव व्यतिरेके तृतीयान्ताद् वतिरिति भिन्नविषयतानयोः ॥ ५४३ ॥

---

नचानेन=उत्तरसूत्रेण प्रथमा समर्थाद् 'गौरिव गवयः' इत्यत्र वतिः प्रसज्यते, "तत्र तस्येव" ( पा० ५।१।११६ ) इति समर्थविभक्तिनियमाद् इति न किञ्चिद्दुनिष्ठमिति ॥ ५४२ ॥

ननु पूर्वत्र=पूर्वसूत्रे तृतीयानिमित्तव्यतिरेकहेतुना=तृतीयया: षष्ठ्या सह विकल्पमवाप्ताया निमित्तभूतो यो व्यतिरेको भेदस्तद्धेतुना तज्ज्ञापकेन तुल्यशब्देनैव सादृश्यमुपदर्शयितव्यम्, न त्विवशब्देन, उपमानोपमेयबाह्यं संबन्धिनमनपेक्ष्य प्रकृत्यर्थस्येवार्थेन सह समन्वयाभावादिवशब्देन सादृश्योपदर्शनायोगादिति कुतः 'गौरिव गवयः' इत्यत्र वतिप्रत्ययप्रसङ्ग इत्याशङ्क्य, असति पूर्वसूत्रे क्रियाग्रहणे पूर्वयोगेन तुल्यनिमित्तके व्यतिरेके विधीयमानो वतिस्तुल्यशब्देनापि सादृश्योपदर्शने 'गवयेन तुल्योऽनड्वान्' इत्यत्रातिप्रसज्जेदेवेति इवतुल्यनिमित्तयोर्व्यतिरेकयोर्भेदप्रदर्शनेनाह—इवे यो व्यतिरेकोऽत्रे ति ।

अस्यार्थः—अत्र= 'मधुरायामिव पाटलिपुत्रे प्रासादाः' इत्यादौ 'देवदत्तस्येव यज्ञदत्तस्य दन्ताः' इत्यदौ च, इवे=इवशब्दप्रयोगे यो व्यतिरेको भेदः षष्ठीसप्तमीनिमित्तभूतोऽवगम्यते स प्रासादादिरूपबाह्यसंबन्धिहेतुकः । तुल्ये=तुल्यशब्दप्रयोगे तु तद्=विषयापेक्षम्=तुल्यशब्दार्थापेक्षम्—अनपेक्ष्यैव बाह्यं संबन्धिनम्, आधिक्यम्=व्यतिरेक उपजायते इति ।

अयं भावः—'मधुरायामिव पाटलिपुत्रे प्रासादाः, देवदत्तस्येव यज्ञदत्तस्य दन्ताः' इत्यादौ योऽयमिवशब्दप्रयोगे षष्ठीसप्तमीविभक्तिनिमित्तको व्यतिरेको=भेद उपलभ्यते, नासाविवार्थनिमित्तकः । अपि तु इवार्थयोगे हेतुतयाऽनपेक्षित एव दन्तप्रासादादिहेतुकोऽयं व्यतिरेकः ।

ततश्च वतिप्रत्ययार्थतुल्यपदार्थहेतुकस्य व्यतिरेकस्य पूर्वत्र सत्त्वेऽपि अत्र="तत्र तस्येव"(पा० ५।१।११५) इति सूत्रविषये असंभवात्=एतत्सूत्रारम्भसामर्थ्याद्बाह्यसंबन्धिनिमित्तकव्यतिरेकनिमित्तषष्ठीसप्तम्यन्ताद् वतिरवतिष्ठते । तुल्यार्थे तु पूर्वेण सूत्रे ण यो वतिस्तत्र बाह्यं संबन्धिनमनपेक्ष्यैव

तथा चासति पूर्वत्र क्रियाग्रहणे तुल्यार्थनिमित्ते व्यतिरेकेऽतिप्रसङ्ग-मुदाहरति—

**गवयेन समोऽनड्वानिति वृत्तिस्तदा भवेत् ।**
**न त्वस्ति गौरिवेत्यत्र व्यतिरेक इवाश्रयः ॥ ५४४ ॥**

क्रियानिमित्ते तुल्यत्वे क्रियाग्रहणप्रत्याख्यानेऽनादृते गवयेन तुल्योऽनड्वानित्यत्रापि वतिः स्यात् साक्षाद् द्रव्ययोरेव सादृश्ये। तस्मादवश्यकर्तव्यं पूर्वत्र क्रियाग्रहणमिति तेनासिद्धौ द्रव्यगुणसादृश्ये द्वितीययोगस्यारम्भो युक्तः।

न च द्वितीयेन योगेन गवयेन तुल्योऽनड्वानित्यत्र प्राप्नोति, इवार्थ-निबन्धनो हि व्यतिरेको न सम्भवतीति बाह्यसम्बन्ध्यपेक्षे तस्मिन् वतिर्द्वितीयेन योगेन न भवति। न चात्र बाह्यसम्बन्ध्यनुसरणम्। अत एव सादृश्यभावः।

---

तुल्यार्थनिमित्तक एव व्यतिरेके तृतीयान्ताद् वतिरिति भिन्नविषयताऽनयोर्वतिविधायकयोः पूर्वोत्तर-सत्रयोरिति ॥ ५४३ ॥

तथा चासति पूर्वत्र=पूर्वत्रसूत्रे क्रियाग्रहणे तुल्यार्थनिमित्तके व्यतिरेकेऽतिप्रसङ्गं पूर्वकारि-कावतरणे प्रागुक्तमुदाहरति—गवयेन समोऽनड्वानिति ।

अस्यार्थः—यदा पूर्वसूत्रे क्रियाग्रहणं न क्रियते तदा 'गवयेन समः=तुल्योऽनड्वान्' इत्यत्र क्रियानिमित्तकतुल्यत्वाभावे द्रव्ययोरेव तुल्ये वतिप्रत्ययरूपा तद्धितनिवृत्तिर्भवेत् । तस्मादेत-न्निवृत्त्यर्थमवश्यं कर्तव्यं पूर्वसूत्रे क्रियाग्रहणम्, कृते च पूर्वसूत्रे क्रियाग्रहणे द्रव्यगुणनिमित्तके सादृश्ये पूर्वेण सूत्रेण वतिप्रत्ययासिद्धौ द्वितीयसूत्रारम्भो युक्तः । 'गवयेन तुल्योऽनड्वान्' इत्यत्र द्वितीय-सूत्रेणापि वतिप्रत्ययो न प्राप्नोति, इवार्थनिबन्धनस्य व्यतिरेकस्याभावात् । अत एव 'गौरिव गवयः' इत्यत्रापि द्वितीयसूत्रेण वतिप्रत्ययो न भवति । षष्ठी सप्तमीरूपसमर्थविभक्त्यभावाच्चेति तदेतदुक्तम्—न त्वस्तीत्यादि ।

अस्यार्थः—'गौरिव' इत्यत्र 'गौरिव गवयः' इत्यत्र, इवाश्रयः=इवार्थनिबन्धनः, व्यति-रेको न त्वस्ति इत्यतो द्वितीयसूत्रेणात्र वतिर्न भवतीति ।

अयं भावः—पूर्वसूत्रे क्रियाग्रहणप्रत्याख्याने क्रियानिमित्ते तुल्यत्वेऽनादृते साक्षाद् द्रव्ययो-रेव सादृश्ये 'गवयेन तुल्योऽनड्वान्' इत्यत्रापि वतिः स्यात् । तस्मात् पूर्वसूत्रेऽवश्यकर्तव्यं क्रिया-ग्रहणमिति द्रव्यगुणसादृश्ये=द्रव्यनिमित्तके सादृश्ये गुणनिमित्तके च सादृश्ये मधुरायामिव पाटलि-पुत्रे प्रासादाः, देवदत्तस्येव यज्ञदत्तस्य शुक्लाः' इत्यादौ तेनासिद्धौ=पूर्वसूत्रेण वतिप्रत्ययासिद्धौ द्वितीयसूत्रस्यारम्भस्तदर्थं युक्तः ।

'गवयेन तुल्योऽनड्वान्' इत्यत्र द्वितीययोगेनापि वतिप्रत्ययो न प्राप्नोति, इवार्थनिबन्धो हि व्यतिरेको न संभवति इति उपमानोपमेयबाह्यतत्संबन्ध्यपेक्षे तस्मिन्=व्यतिरेके द्वितीयेन योगन विधीयमानो वतिरत्र न भवति । यतोऽत्र न बाह्यसंबन्ध्यनुसरणम् । अत एवात्र साक्षाद् द्रव्ययोरेव सादृश्यभावः=सादृश्यसत्त्वम्, न त्वत्र बाह्यसंबन्धिद्वारकं सादृश्यमिति ।

न चापि गौरिव गवय इत्यत्रापि द्वितीयेन योगेन प्रत्ययः प्राप्नोति, इवार्थ-निबन्धनस्य व्यतिरेकस्याभावाद् बाह्यसम्बन्ध्यननुसरणात् ।

तथा चात्र षष्ठ्यभावात् प्रथमैव । न च प्रथमासमर्थाद् द्वितीयेन योगेन प्रत्ययो विहितः ।

यदा तु बाह्योऽपेक्ष्यते सम्बन्धी, तदा गौरिव गवयस्य संस्थानमिति भवत्येव वतिर्गोवदिति ॥ ५४४ ॥

तदेवं क्रियाग्रहणसमर्थनेन योगद्वयारम्भे समर्थिते पूर्वोत्तरयोर्योगयोर्विषय-विभागेनावस्थानमाह—

**उपमेयेन सम्बन्धात् प्राक् तु प्रासादादिहेतुके ।**
**व्यतिरेके वतेर्भावो न तु तुल्यार्थहेतुके ॥ ५४५ ॥**

प्रागुपमेयसम्बन्धात् प्रासादादिनिमित्तवशेसञ्जातेव्यतिरेके तद्विभक्तौ षष्ठ्यां सप्तम्यां चोपजातायां पश्चादिवार्थयोगे सत्युपमेयसम्बन्धे वतिर्द्वितीयेन योगेन । बाह्यसम्बन्धि समुत्थापिते व्यतिरेके समुपजातेऽन्तरङ्गे तन्निमित्तव्यतिरेकविभक्तिस्तृतीया समर्था ।

---

न चापि 'गौरिव गवयः' इत्यत्रापि द्वितीयेन सूत्रेण वतिप्रत्ययः प्राप्नोति, बाह्य-संबध्यननुसरणाद् इवार्थनिमित्तकस्य व्यतिरेकस्याभावात् ।

तथा चात्र='गौरिव गवयः' इत्यादौ षष्ठ्यभावात् प्रथमैव । न च प्रथमासमर्थाद् द्विती-येन सूत्रेण वतिप्रत्ययो विहितः ।

यदा तु इवार्थनिमित्तके व्यतिरेके बाह्यः संबन्धी अपेक्ष्यते, तदा गौरिव गवयस्य संस्थानमित्यत्र भवत्येव वतिप्रत्ययः, गोवद् गवयस्य संस्थानमिति ॥ ५४४ ॥

तदेवं पूर्वसूत्रे क्रियाग्रहणसमर्थनेन क्रियाऽक्रियाविषयकत्वेन योगद्वयारम्भे समर्थिते पूर्वोत्त-रयोः सूत्रयोर्विषयविभागेनावस्थानमाह—उपमेयेन संबन्धादिति ।

अस्यार्थः—'मथुरायामिव पाटलिपुत्रे प्रासादाः' इत्यादौ उपमेयेन सह उपमानस्य संबन्धात् प्राक् संजाते प्रासादादिरूपबाह्यसंबन्धिसंबन्धहेतुके व्यतिरेके तन्निमित्तक्रियां विभक्तौ षष्ठ्यां सप्तम्यां वोपजातायां सत्यां पश्चादिवार्थयोगे सति जाते उपमेयसंबन्धे इवार्थे द्वितीयसूत्रेण वतेर्भावः=प्रवृत्तिः, कृभ्वस्तयः क्रियासामान्यवचना इत्यभ्युपगमात्; न तु पूर्वसूत्रेणैव द्वितीयसूत्रेण तुल्यार्थत्वहेतुके=तुल्यत्वहेतुके, व्यतिरेकेऽन्तरङ्गे संजाते सति पश्चात् तन्निमित्तिकायां षष्ठ्यां सप्तम्यां वा समुपजातायां ःदन्ताद् द्वितीयसूत्रेण साहृश्ये वतिरिति । इवशब्दप्रयोगे शब्दशक्ति-स्वभावाद् बाह्यसंबन्धिसापेक्षस्यैव व्यतिरेकस्य समुद्भवादिति ।

अयं भावः—उपमेयसंबन्धात् प्राक् प्रासादादिनिमित्तवशे व्यतिरेके संजाते तद्विभक्तौ= तन्निमित्तकविभक्तौ षष्ठ्यां सप्तम्यां चोपजातायां पश्चादिवार्थयोगे उपमेयसंबन्धे सति द्वितीयेन योगेन वतिर्विधीयते । प्रासादादिरूपबाह्यसंबन्धिसमुत्थापिते व्यतिरेके इयं षष्ठीरूपा सप्तमीरूपा वा विभक्तिरित्यर्थः ।

न तु यथा पूर्वसूत्रे तुल्यत्वनिमित्तक एव व्यतिरेकेऽन्तरङ्गे समुपजाते तन्निमित्तकव्यतिरेक-विभक्तिः=स तुल्यत्वनिमित्तको व्यतिरेको निमित्तं यस्य तादृशो यो व्यतिरेको बाह्यसंबन्धि-

तत्र हि तुल्यार्थनिमित्तस्यैव व्यतिरेकस्योद्भवाद् बाह्यसम्बन्ध्यपेक्षा निष्प्रमाणिका। किन्तु असति क्रियाग्रहणे ब्राह्मणेन तुल्यः क्षत्रिय इति धर्मान्तरनिमित्तेऽपि सादृश्ये स्याद् वतिरिति विभक्तविषयत्वेऽपि योगयोः क्रियाग्रहणं कर्तव्यमेव। तदेवमक्रियार्थः समर्थितः "तत्र तस्येव" (पा० ५।१।११६) इत्यारम्भः ॥ ५४५ ॥

तत्रैतत् स्यात्—प्रकृतां विभक्तिं परित्यज्य किमर्थं समर्थविभक्त्यन्तरमुपादीयते, तत्र भाष्यम्—'न काचिदिवशब्देन योगे तृतीया विधीयते' इति।

तद् व्याचष्टे—

इवशब्देन सम्बन्धे न तृतीया विधीयते।
प्रकृतां तामतस्त्यक्त्वा विभक्त्यन्तरमाश्रितम् ॥ ५४६ ॥

इवशब्देन प्रत्ययार्थे निर्दिष्टे प्रकृताया एव विभक्तेस्तेन सम्बन्धः कल्प्येत, यदीवशब्दयोगे शेषविषये तृतीया विधीयेत "तुल्यार्थैः" (पा० २।३।७२) इति तृतीयाया इवशब्दयोगेऽविधानादिवशब्दस्य द्योतकत्वात् तुल्यार्थत्वाभावात्।

एवं तावदन्तरङ्गे सम्बन्धे नास्तीवयोगे तृतीया, नापि तद्योगे शेषविषये तृतीया ज्ञापयितुमिष्टा सप्तमीवत्। बाह्यसम्बन्ध्यपेक्षायां तु शेषविभक्तिर्नास्तीवार्थयोगे।

---

समुत्थापितः तद्बोधिका विभक्तिः वतिविधाने समर्था तृतीयेति। तत्र हि तुल्यार्थनिमित्तकस्यैव व्यतिरेकस्योद्भवाद् बाह्यसंबन्ध्यपेक्षा निष्प्रमाणिका। किन्तु असति क्रियाग्रहणे 'ब्राह्मणेन तुल्यः क्षत्रियः' इत्यादौ धर्मान्तरनिमित्तकेऽपि सादृश्ये स्याद् वतिरिति बाह्यसंबन्ध्यपेक्षानपेक्षाभ्यां द्वयोरपि योगयोर्विभक्तविषयकत्वेऽपि पूर्वसूत्रे क्रियाग्रहणं कर्तव्यमेव। तदेवमक्रियार्थः समर्थितः "तत्र तस्य" इति सूत्रारम्भ इति ॥ ५४५ ॥

तत्रैतत्स्यात्=उभयोर्योगयोर्विभक्तविषयत्वे आरम्भे च समर्थिते एतद् वक्ष्यमाणं संभाव्यते, प्रकृतां तृतीयाविभक्तिं परित्यज्य किमर्थं समर्थविभक्त्यन्तरमुपादीयते, षष्ठीरूपं सप्तमीरूपञ्च। तत्र भाष्यम्—"न काचिदिवशब्देन योगे तृतीयाविधीयते" तद् भाष्यं व्याचष्टे—इवशब्देन संबन्धे इति।

अस्यार्थः—यथा तुल्यशब्देन संबन्धे तृतीया विधीयते तथा इवशब्देन संबन्धे तृतीया न विधीयते, अतः प्रकृतां तां तृतीयाविभक्तिं त्यक्त्वा इवशब्देन संबन्धे संभविविभक्त्यन्तरम्=षष्ठीरूपं सप्तमीरूपञ्च उत्तरसूत्रे समर्थविभक्तिरूपतयाऽऽश्रितमिति योजना।

अयं भावः—"तत्र तस्येव" (पा० ५।१।११६) इति सूत्रे इवशब्देन प्रत्ययार्थे निर्दिष्टे प्रकृताया एव तृतीयाविभक्तेरनेन=उत्तरसूत्रेण संबन्धः तदा कल्प्येत, यदीवशब्दयोगे शेषविषये तृतीया विधीयेत, तुल्यार्थैरिति सूत्रेणेवशब्दयोगे तृतीयाया अविधानात्, इवशब्दस्य द्योतकत्वेन तुल्यार्थत्वाभावात्।

अपि तु कारकविभक्तिर्यथायथं क्रियासम्बन्धे भवति। न च तया कारकविभक्त्या तृतीयया सर्वो विभक्त्यर्थो व्याप्तस्तुल्यार्थयोगे तृतीयावद् यथा प्राक् प्रदर्शितमिति प्रकृतामसम्भवन्तीं तृतीयां परित्यज्य षष्ठीसप्तम्यौ बाह्यार्थसम्बन्धोपजनितव्यतिरेक-निमित्ते निर्दिश्येते। ताभ्यां च तुल्यशब्दस्य समन्वयानुपपत्तेः प्रत्ययार्थोऽप्यन्य इवशब्देनेह दर्शितः। तथा चान्तरङ्गे सम्बन्धे पूर्वो विधिः, अयं तु बाह्यसम्बन्ध्यपेक्षाया-मिति स्फुटो विवेकः।

अतोऽनन्तरं भाष्यम्—'ननु च सप्तम्यपि न विधीयते। एवं तर्हि सिद्धे सति यदिवशब्दयोगे सप्तमी शास्ति, तज्ज्ञापयत्याचार्यो भवतीवशब्देन योगे सप्तमीति। किमे-तस्य ज्ञापने प्रयोजनम्। देवेष्विव नाम ब्राह्मणेष्विव नामेत्येष प्रयोग उपपन्नो भवति' इति।

शेषविषये यथा तृतीया नास्ति, तथा सप्तम्यपीत्यत एव ज्ञापकाद् यथा सप्तमी भवत्येवं तृतीयापि भविष्यति। इवशब्दयोगे तस्मादेव ज्ञापकादित्यनुवृत्त्यैव तृतीयान्ताद् वतौ सिद्धे तत्रेति सप्तमीनिर्देशो ज्ञापयति शेषविषये भवतीवशब्दयोगे सप्तमीति। तृतीया तु नेष्यत इति नासौ ज्ञाप्यत इति भाष्यार्थः॥ ५४६॥

---

एवं तावद् बाह्यसंबन्ध्यनपेक्षायामन्तरङ्गे उपमानोपमेययोः संबन्धे नास्तीवयोगे तृतीया, नापि तद्योगे=इवयोगे शेषविषये तृतीया ज्ञापयितुमिष्टा सप्तमीवद् मानाभावात्। बाह्यसंबन्ध्यपेक्षायान्तु इव योगे 'ब्राह्मणस्येव क्षत्रियस्य शुक्ला' इत्यादौ षष्ठीरूप-शेषविभक्तिसत्त्वेऽपि ब्राह्मणेनेव क्षत्रियेणाधीतमित्यादौ नास्ति इवार्थयोगे तृतीयारूपा शेषविभक्तिः, अपि तु कारकविभक्तिर्यथायथं क्रियासंबन्धे भवति। न च तया कारकविभक्त्या तृतीयया सर्वो विभक्त्यर्थो व्याप्तः तुल्यार्थयोगे तृतीयावद्, यथा प्राक् प्रदर्शितमिति प्रकृतामसंभवन्तीं तृतीयां परित्यज्य षष्ठीसप्तम्यौ बाह्यार्थसंबन्धोपजनितव्यतिरेकनिमित्तिके निर्दिश्यते। ताभ्याञ्च=षष्ठी-सप्तमीभ्याञ्च तुल्यशब्दस्य समन्वयानुपपत्तेः प्रत्ययार्थोऽप्यन्य एवेह=उत्तरसूत्रे इवशब्देन दर्शितः। तथा च बाह्यसंबन्ध्यनपेक्षत्वेनान्तरङ्गे संबन्धे पूर्वो विधिः, अयं तु=उत्तरो विधिस्तु बाह्यसंबन्ध्यपेक्षायामिति स्फुटो द्वयोर्विध्योर्विवेकः=विषयविभाग इति।

अतोऽनन्तरं भाष्यम्। तस्यायमर्थः—शेषविषये यथा तृतीया नास्ति तथा सप्तम्यपि नास्ति इत्यत एव ज्ञापकाद् यथा सप्तमी भवति, एवं तृतीयाऽपि भविष्य-तीवशब्दयोगे तस्मादेव ज्ञापकात्=पूर्वसूत्रादत्र तृतीयानुवृत्तिरूपादेव ज्ञापकात् इति पूर्वसूत्राद् तृतीयापदानुवृत्त्यैव इवशब्दयोगेऽपि तृतीयान्ताद् वतौ सिद्धे तत्रेति सप्तमीनिर्देशो ज्ञापयति शेषविषये भवतीवशब्दयोगे सप्तमीति। तृतीया तु तत्रानभिधानान्नेष्यते इति नासौ=तृतीया ज्ञाप्यते इति प्रकृतभाष्यार्थं इति॥ ५४६॥

एतद् विवृणोति—

**सप्तम्यपि न तत्रास्ति ज्ञापनार्था तु सा कृता ।**
**इष्टा सा शेषविषये नियतासु विभक्तिषु ॥ ५४७ ॥**

बाह्यसम्बन्धिनिमित्तस्य व्यतिरेकस्य षष्ठ्यैव संग्रहात् सप्तमीविभक्तिरत्र तृतीयावदेव नास्ति । तथा चेयमपि नोपादेया ।

ननु च षष्ठीसमर्थाद् विधौ सप्तम्यर्थस्य न संग्रहः, येन सप्तम्यन्तमुपमेयं प्रयुज्येत मथुरावत् पाटलिपुत्रे प्राकारा इति । षष्ठ्यर्थो हि शेषः, सप्तम्यर्थस्त्वाधारः साधनम् ।

न च युगपच्छेषसाधनयोर्विवक्षा न्याय्या, विरोधात् । साधनानां ह्यविवक्षा शेष इत्युक्तम् ।

अत्र प्रतिपाद्यते–षष्ठीसमर्थादपि वतौ वृत्तौ विभक्तिविशेषस्याश्रवणादुपमानोपमेयभावमात्रस्यावगतेः सम्बन्धसामान्ये सर्वविशेषान्तर्भावाद् युज्यते सप्तम्यन्तमुपमेयम् ।

---

एतद्="ननु च सप्तम्यपि न विधीयते" इत्यादिभाष्यम् विवृणोति–सप्तम्यपि न तत्रास्ति इति ।

अस्यार्थः—तत्र=इवशब्दयोगे शेषविषये, तृतीयावत् सप्तम्यपि केनचित् सूत्रेण विहिता नास्ति । ननु यदि इवशब्दयोगे शेषविषये सप्तमी नास्ति तदा "तत्र, तस्येव" (पा० ५।१।११६) इति सूत्रे तत्रेति सप्तम्यन्तं किमर्थं वतिप्रकृतित्वेनोच्यते इत्याशङ्क्याह—ज्ञापनार्था तु सा कृता इति ।

अस्यार्थः—सा तु "तत्र तस्येव" ( पा० ५।१।११६ ) इति सूत्रे तत्रेति सप्तमी तु ज्ञापनार्था=भवतीवशब्दयोगे शेषविषये सप्तमी इति ज्ञापनार्था सूत्रे कृता इति ।

ननु इवशब्दयोगे शेषविषये केनचित् सूत्रेण अविहिताऽपि सप्तमी यथा तद्वति सप्तमीनिर्देशेन ज्ञाप्यते, तथा "तत्र तस्येव" ( पा० ५।१।११६ ) इति सूत्रे पूर्वसूत्रादनुवृत्तं तृतीयापदं शेषविषये इवशब्दयोगे तृतीयायाः केनचिदविधानेऽपि तत्र तृतीयां ज्ञापयितुमित्याशङ्क्याह— इष्टा सा शेषविषये इत्यादि । सा शेषविषये ज्ञाप्यमाना सप्तमी शेषविषये नियतासु विभक्तिषु सतीष्वपि पर्यायेण इष्टा इति ज्ञाप्यते । तृतीया तु शेषविषये नेष्टा इति न ज्ञाप्यत इति ।

अयं भावः—उपमानोपमेयबाह्यसंबन्धिनिमित्तकस्य व्यतिरेकस्य षष्ठ्यैव संग्रहात् सप्तम्याश्चाधारकारकविभक्तेस्तत्राशक्तेः सप्तमीविभक्तिरत्र=इवशब्दयोगे शेषविषये तृतीयावदेव नास्ति । तथा चेयमपि=सप्तम्यपि "तत्र तस्येव" ( पा० ५।१।११६ ) इति सूत्रे नोपादेया ।

ननु च षष्ठी समर्थाद् वतिविधौ सप्तम्यर्थस्य न संग्रहः, येन सप्तम्यन्तमुपमेयं प्रयुज्येत, 'मथुरावत् पाटलिपुत्रे प्राकाराः' इति । विशेषणविशेष्ययोरिव उपमानोपमेययोः समानविभक्तिकत्वनियमात् । षष्ठ्यर्थो हि शेषः । सप्तम्यर्थस्तु आधारः साधनरूपः ।

न च युगपदेकस्मिन् शेषसाधनयोर्विवक्षा न्याय्या, विरोधात् । साधनानां हि अविवक्षा शेष इत्युक्तम् । कथञ्च युगपदेकस्मिन् साधनत्वविवक्षाऽविवक्षे स्याताम् ।

अत्र प्रतिपाद्यते=अस्मिन् प्रश्ने सति समाधीयते । षष्ठीसमर्थादपि वतिविधौ वृत्तौ विभक्तिविशेषस्याश्रवणादुपमानोपमेयभावमात्रस्यावगतेः सम्बन्धसामान्ये सर्वसम्बन्धविशेषाणामन्तर्भावात् सप्तम्यन्तमुपमेयं युज्यते ।

तथाहि—वत्यन्तेन पदेनौपम्यमात्रं प्रतिपाद्यते, लोके विशेषाविर्भावने तस्याशक्तत्वादिति शास्त्रे तथैवानुगमात् सम्बन्धसामान्ये षष्ठीसमर्थादेव वतिरुपदिश्यते। सर्वविशेषाणां च सम्बन्धसामान्येऽन्तर्भावाद् यदोपमेयं सप्तम्यन्तं प्रयुज्यते, तदा तत्राधिकरणत्वविवक्षायामुपमानेऽप्यधिकरणविषयत्वमवसीयते। गुणीभूतं ह्युपमानं प्रकृत्यर्थः प्रत्ययार्थे वत्यर्थेऽत्रेत्युपमेयाद् विशेषावधारणं तस्य। तथा चोद्घोष्यते—उपमाने यः संशयः स उपमेयाद् व्यावर्तत इति।

नन्वनेन न्यायेन मतुप्प्रत्ययोऽपि षष्ठीसमर्थादेव विधेयः, तथापि सप्तम्यर्थस्यावगमादिति किं तत्रास्मिन्निति सप्तमीनिर्देशेन। नैतत् समानम्। मतुपो हि षष्ठीसप्तम्यर्थ एव वाच्यः प्रधानमिति वृक्षवान् पर्वत इत्यादावाधारभावः श्रुत्यैवावगम्यमानोऽस्मिन्निति भेदेन षष्ठ्या निर्देष्टुं न्याय्यः।

अन्वाख्याने हि प्रतीयमानो लोकेऽर्थोऽङ्गभावेनोपादीयते। अस्ति चात्र विशेषेण प्रतीतिः। वतौ पुनरुपसर्जनभूतः प्रकृत्यर्थ इति तदन्तादौपम्य-

---

तथाहि—वत्यन्तेन पदेनौपम्यमात्रं प्रतिपाद्यते, लोके सम्बन्धविशेषाविर्भावने वाक्यस्य शक्तत्वेऽपि तस्य=वत्यन्तस्य पदस्य अशक्तत्वादिति वतिविधायके शास्त्रे तथैवानुगमात्=उपमानोपमेयभावरूपसंबन्धसामान्यबोधकत्वेनैव रूपेण वतिविधानानुसरणात् षष्ठीसमर्थादेव सम्बन्धसामान्ये वतिरुपदिश्यते। सर्वेषां सम्बन्धविशेषाणाञ्च सम्बन्धसामान्येऽन्तर्भावाद् यदोपमेयं सप्तम्यन्तं प्रयुज्यते, तदा तत्र=उपमेये अधिकरणत्वविवक्षायामुपमानेऽपि अधिकरणविषयत्वमवसीयते। यत उपमानं प्रकृत्यर्थः प्रत्ययार्थे वत्यर्थेऽत्र गुणीभूतमिति तस्योपमेयाद् विशेषावधारणम्।

तथा चोद्घोष्यते—उपमाने यः संशयः स उपमेयाद् व्यावर्तत इति।

नन्वनेन न्यायेन मतुप्प्रत्ययोऽपि षष्ठीसमर्थादेव विधेयः। तथापि=षष्ठीसमर्थादेव मतुप्प्रत्ययविधानेऽपि सप्तम्यर्थस्य अनयैव रीत्याऽवगमादिति किं तत्रास्मिन्निति सप्तमीनिर्देशेन, नैतत्समानम्। 'मधुरावत् पाटलिपुत्रे प्राकाराः' इत्यादौ वतेर्हि सादृश्यमर्थः, स च प्रत्ययार्थत्वात् प्रधानमिति तत्र गुणीभूतस्य प्रकृत्यर्थस्य संबन्धित्वेनान्वय इति षष्ठ्यर्थे संबन्धसामान्ये विशेषस्य आधाराधेयभावरूपस्य संबन्धस्य सप्तम्यर्थस्यापि गतार्थत्वेन "तत्र तस्येव" (पा० ५।१।११६) इति सूत्रे सप्तमी नोपादेया इत्याक्षेपः। मतुपस्तु संबन्धसामान्यमर्थ इति शेषसंबन्धरूपः षष्ठ्यर्थ आधाराधेयभावरूपश्च सप्तम्यर्थ एव वाच्यः प्रत्ययार्थत्वात् प्रधानं प्रकृत्यर्थश्च तेषु गुणभूत इति 'वृक्षवान् पर्वतः' इत्यादौ आधाराधेयभावो मतुप् श्रुत्यैवावगम्यमानो मतुब् विधिसूत्रे षष्ठ्या भेदेन अस्मिन्नति निर्देष्टुं न्याय्यः।

लोके प्रतीयमानो हि अर्थः साधुत्वान्वाख्यानेऽङ्गभावे नोपादीयते। लोके 'वृक्षवान् पर्वत इत्यादौ प्रतीयमान आधाराधेयभावरूपोऽर्थो मतुपोऽन्वाख्यानेऽङ्गभावं भजते। अनया रीत्या वत्यर्थाद् विशेषेण=भेदेन वैलक्षण्येन मत्वर्थस्य प्रतीतिश्चास्ति। वतौ पुनः=वत्यर्थे

मात्रस्य प्रतीतिः प्रधानस्य प्रत्ययार्थस्येति तदेव षष्ठ्या समर्थविभक्त्या गुणभूतेन प्रकृत्यर्थेन योजनीयमिति तयैव सप्तम्यर्थस्य व्याप्तेः सप्तमी नोपादेया सती ज्ञापनायोपादीयमाना प्रकल्पते।

तथाहि—यथायोगं नियतविषयावस्थानासु विभक्तिषु परस्परविषयावगाहनमनुपपन्नमित्यत्र षष्ठीविषये शेषे सप्तमी भवतीति ज्ञाप्यते, यथेवशब्दयोगे षष्ठी भवति बाह्यसम्बन्धिनिमित्ता तथा सप्तम्यपीत्यर्थः॥ ५४७॥

तदन्यास्तु विभक्तयः स्वविषयप्रतिनियता इवयोगेऽपि न सङ्कीर्यन्त इत्याह—

**यदि तु व्यतिरेकेण विषयेऽस्मिन् विभक्तयः।**
**प्रवर्तेरंस्तृतीयैव व्यभिचारं प्रदर्शयेत्॥ ५४८॥**

अस्मिन्निवार्थविषये सर्वा विभक्तयो यद्यविशेषेण स्वविषयातिक्रमेण सङ्करेण स्युरित्येवं ज्ञापनमत्रेष्टं स्यात्, तदा प्रकृता तृतीयैवेममर्थं शक्नोति ज्ञापयितुमिति तां त्यक्त्वा विभक्त्यन्तराश्रयणे न स्यात्।

---

तु प्रत्ययार्थे प्रधानभूते उपसर्जनभूतः प्रकृत्यर्थ इति तदन्ताद्=वत्यन्ताद् औपम्यमात्रस्य=सादृश्यमात्रस्य प्रत्ययार्थप्रधानस्य प्रतीतिः, न तु मतुबन्तादिव षष्ठ्यर्थस्य संबन्धसामान्यस्य तद्विशेषस्य च सप्तम्यर्थस्याधाराधेयभावरूपस्य प्रतीतिरिति तदेव=औपम्यमात्रमेव षष्ठ्या समर्थविभक्त्या प्रकृत्यर्थप्रत्ययार्थयोर्योजने द्वारीभूतया गुणभूतेन प्रकृत्यर्थेन सह योजनीयमिति तयैव=संबन्धसामान्यवाचिन्या षष्ठ्यैव आधाराधेयभावरूपसंबन्धविशेषस्य सप्तम्यर्थस्य व्याप्तेः=व्यापनात् तत्रेति सप्तमी वति विधायके सूत्रे व्यर्थीभूतानुपादेया सती अपि तत्रोपादीयमाना इवशब्दयोगे षष्ठी विषये शेषे सप्तमी भवतीति ज्ञापनात्र प्रकल्पते।

तथाहि—यथायोगम्=यथासंभवम्, नियतविषयावस्थानाम्=विषयविशेषनियमेनावस्थितासु विभक्तिषु परस्परविषयावगाहमनुपपन्नमिति अत्र=इवशब्दयोगे षष्ठीविषये शेषे षष्ठ्या गतार्थायाः सप्तम्या अप्राप्तौ अत्र=षष्ठीविषये शेषे सप्तमी भवतीति वतिविधायके उत्तरसूत्रे तत्रेति सप्तमीनिर्देशेन ज्ञाप्यते। यथेवशब्दयोगे बाह्यसंबन्धिनि निमित्ता षष्ठी भवति तत्र सप्तम्यपि इत्यर्थः संग्रहेण कारिकोत्तरार्धस्येति॥ ५४७॥

यथा इव शब्दयोगे षष्ठीविषये शेषे ज्ञापकवलाद् जायमाना सप्तमी षष्ठ्या सह संकीर्यते, तथा तदन्यास्तु विभक्तयस्तृतीयादयः स्वविषयप्रतिनियता इवशब्दयोगेऽपि न संकीर्यन्ते इत्याह—यदि तु व्यतिरेकेणेति।

अस्यार्थः—यदि तु अस्मिन् विषये=इवार्थविषये, सर्वा विभक्तयः, व्यतिरेकेण=स्वविषयातिक्रमेण विभक्त्यन्तरैः सह संकरेण अविशेषेण प्रवर्तेरन्=यदि इवार्थविषये सर्वा विभक्तयोऽविशेषेण स्वविषयातिक्रमेण विभक्त्यन्तरैः सह संकरेण स्युरित्येवं ज्ञापनमिष्टं स्यादिति यावत्। तदा प्रकृता तृतीयैव इवार्थविषये व्यभिचारं सर्वासां विभक्तीनां स्वस्वविषयव्यभिचारम् अन्य-

विभक्त्यन्तरोपादाने तु सप्तम्येव शेषविषयेऽत्र भवति, नान्या विभक्तय इति विशेषेण ज्ञापनमिष्टमित्यवसीयते। ततश्च देवैरिव नामेत्यादिप्रयोगोऽसाधुः ॥ ५४८ ॥

एतदेव निगमयितुम् 'एवं तर्हि सिद्धं' इति भाष्यं निगमयति—

**व्यभिचारे तथासिद्धे सप्तमीग्रहणाद् विना।**
**सप्तम्येवोच्यते सर्वा न सन्त्यन्या विभक्तयः ॥ ५४९ ॥**

तथेति तृतीयानुवृत्त्या सङ्करे निश्चितेऽन्तरेणापि सप्तमीग्रहणं यत् तस्या उपादानम्, तज्ज्ञापकस्य नियतविषयतां दर्शयति ॥ ५४९ ॥

एवं तर्हि सप्तम्येवात्रोपदीयताम्। तथा हि—ज्ञापनमपि सिध्यति। षष्ठ्यान्ताच्च वतौ योऽर्थः, स एव सप्तम्यन्तादपि। विषयभावलक्षणो हि सप्तम्यर्थः षष्ठ्यर्थमपि

---

विभक्तिभिः संकररूपं प्रदर्शयेत्=ज्ञापयेदिति एतज्ज्ञापनार्थं सप्तमीरूपविभक्त्यन्तरोपादानं सूत्रकृत्कृतं व्यर्थं स्यादिति विभक्त्यन्तरोपादाने "इव शब्दप्रयोगो शेषविषये सप्तम्येव भवति, नान्यविभक्तय इति विशेषेण ज्ञापनमिष्टमिति निश्चीयते। एतज्ज्ञापनफलं तु देवैरिव नामेत्यादिप्रयोगासाधुत्वबोधनमिति।

अयं भावः यद्यस्मिन्निवार्थविषयेऽविशेषेण सर्वविभक्तयः स्वविषयातिक्रमरूपेण संकरेण स्युरित्येवंरूपं ज्ञापनमत्रेष्टं स्यात्, तदा "तेन तुल्यम्" ( पा० ५।१।११५ ) इति सूत्रे श्रुता अत्रोत्तरसूत्रे प्रकृता=प्रकरणप्राप्ता तृतीयैवममर्थं शक्नोति ज्ञापयितुमिति तां त्यक्त्वा एतदर्थज्ञापनार्थम् "तत्र तस्येव" ( पा० ५।१।११६ ) इति सूत्रे सप्तमीरूपविभक्त्यन्तराश्रयणं न स्यात्। कृते तु तत्र विभक्त्यन्तरोपादाने=सप्तम्येव शेषविषयेऽत्र=इवशब्दयोगे षष्ठ्या सह संकीर्णा भवति, नान्या विभक्तय इति विशेषेण ज्ञापनमिष्टमित्यवसीयते। ततश्च देवैरिव नामेत्यादिप्रयोगोऽसाधुः। देवेष्विव नामेत्यादिप्रयोगस्तु साधुत्वेन प्राग् दर्शित इति ॥ ५४८ ॥

"एवं तर्हि सिद्धे सति यदिवशब्दयोगे सप्तमीं शास्ति" इत्यादिकं भाष्यं निगमयति भाष्यकार इति एतदेव निगमयितुम्=उत्तरसूत्रे सप्तमीग्रहणेन ज्ञापितार्थमेवोपसंहर्तुम् आह—व्यभिचारे तथासिद्धे इति।

अस्यार्थः—उत्तरसूत्रे सप्तमीग्रहणाद् विना तथा=प्रकृततृतीयानुवृत्त्यैव, व्यभिचारे—सर्वासां विभक्तीनां प्रतिनियतस्वस्वविषयव्यभिचाररूपे संकरे निश्चिते उत्तरसूत्रे क्रियमाणं सप्तमीग्रहणम्=इवशब्दयोगे षष्ठीविषये शेषे सप्तम्येवोच्यते, सर्वा अन्या विभक्तयस्तु न सन्ति इत्येव ज्ञापकस्य नियतविषयकत्वं दर्शयति इति।

अयं भावः—तथेति प्रकृततृतीयानुवृत्त्या सर्वासां विभक्तीनां संकरे सप्तमीग्रहणमन्तरेणापि=विनापि निश्चिते यत् तस्याः=सप्तम्याः उपादानम्, तत् सप्तमीग्रहणरूपस्य ज्ञापकस्य नियतविषयताम्=सप्तमीविभक्तिमात्रविषयकत्वं दर्शयति इति ॥ ५४९ ॥

एवं तर्हि=सप्तम्या व्यर्थीभूताया ज्ञापनार्थत्वे सप्तम्येवात्र="तत्र तस्येव" (पा० ५।१।११६) इति सूत्रे उपादीयताम्, षष्ठी तु न क्रियताम्। तथा हि=सप्तम्या हि ज्ञापनमपि प्रागुक्तरीत्या

सङ्ग्रहीतुं प्रभवति। तथा च भाष्यम्—'नित्यं परिग्रहीतव्यं परिग्रहीत्रधीनं भवति' इत्याशङ्क्याह—

अत्यन्तमत्र विषये सप्तम्या ज्ञापनार्थया।
बाधिता विनिवर्तेत षष्ठी सा गृह्यते पुनः ॥ ५५० ॥

इवार्थविषयेऽसम्भवन्ती सप्तमी निर्दिश्यमाना स्वात्मनोऽभावं तत्र नित्यमेव ज्ञापयतीति पक्षे षष्ठी नैव स्यादिति तस्या अपि ग्रहणमत्र पक्षे भावार्थम्।

ननु चासति षष्ठ्युपादाने केवलसप्तमीनिर्देशे बाह्यसम्बन्धिनिमित्तेऽधिकरण एव सप्तम्या उपपद्यमानत्वे कथं शेषविषये भावो ज्ञाप्यते। सत्यां हि षष्ठ्यां शेषोऽयमिति निश्चीयते, तत्रैव षष्ठ्युपपत्तेरिति तत्साहचर्येण सप्तमी निर्दिश्यमाना स्वात्मानं तद्विषयं ज्ञापयेत्।

तस्मात् षष्ठ्या अनिर्देशे सप्तम्या ज्ञापकत्वमेव नोपपद्येत। कुत एव तया षष्ठी बाध्येत। सत्यमेतत् अन्यतरस्यैव तु विभक्त्यात्रेतरविषयव्याप्तिसिद्धेरुभयोपादा-

---

सिध्यति। षष्ठ्यन्ताच्च वतौ योऽर्थः, स सप्तम्यन्तादपि संगृहीतो भविष्यति। विषयभावलक्षणो हि सप्तम्यर्थः षष्ठ्यर्थमपि संग्रहीतुं प्रभवति। विषयत्वस्य शेषसंबन्धरूपत्वात्। तथा च भाष्यम्—"नित्यं परिग्रहीतव्यं परिग्रहीत्रधीनं भवति" इति।

अस्यार्थः—यद् वस्तु येन शब्देन वाच्यतयाऽन्यया वा वृत्त्या परिग्रहीतव्यम्=परिग्रहार्थम्, तद् वस्तु नित्यं तच्छब्दरूपपरिग्रहीत्रधीनं भवति इत्याशङ्क्याह—अत्यन्तमत्र विषये इति।

अस्यार्थः—अत्र विषये=इवार्थविषयेऽसंभवन्त्याऽपि उत्तरसूत्रे निर्दिश्यमानयाऽत एव ज्ञापनार्थया सप्तम्याऽत्यन्तं बाधिता षष्ठी विनिवर्तेत इति सा=षष्ठी उत्तरसूत्रे पुनर्गृह्यते पक्षे भावार्थमिति।

अयं भावः—इवार्थविषये स्वविध्यभावादसंभवन्ती सप्तमी उत्तरसूत्रे निर्दिश्यमाना तत्र=इवार्थविषये स्वात्मनोऽभावं नित्यमेव ज्ञापयति इति पक्षे=सप्तम्यभावपक्षे सप्तम्यर्थबाधात् तद्विषये जायमाना षष्ठी नैव स्यादिति तस्या अपि=षष्ठ्या अपि पक्षे भावार्थम्=षष्ठी प्रवृत्त्यर्थम् ग्रहणम्।

ननु चोत्तरसूत्रेऽसति षष्ठ्युपादाने तत्र केवलसप्तमी निर्देशे बाह्यसंबन्धिनिमित्तेऽधिकरण एव सप्तम्या उपपद्यमानत्वे कथं शेषविषये तस्या भावस्तया ज्ञाप्यते। तत्र सूत्रे षष्ठ्यां सत्या हि शेषोऽयम्=सप्तम्यर्थ इति निश्चीयते, तत्रैव=शेषे एव षष्ठ्युपपत्तेरिति तत्साहचर्येण=षष्ठीसाहचर्येण सूत्रे तत्रैव सप्तमी निर्दिश्यमाना स्वात्मानं तद् विषयम्=शेषविषयकम्, शेषार्थकं ज्ञापयेत्।

तस्मात् षष्ठ्या अनिर्देशे सप्तम्या ज्ञापकत्वमेव नोपपद्येत। कुत एव तया षष्ठी बाध्येतेति। सत्यमेतत्। अन्यतरस्यैव तु=षष्ठी सप्तम्योरेकतरस्यैव तु विभक्त्या अत्र=इवार्थविषये इतरविभक्तिविषयव्याप्तिसिद्धेरुभयोपादानादेका ज्ञापनार्था संपद्यते। तत्र च सप्तमीविषये साधने षष्ठ्या

नादेका ज्ञापनार्था सम्पद्यते। तत्र च सप्तमीविषये षष्ठ्या अनिष्टत्वात् सप्तम्येव ज्ञापनार्था भाष्येऽभिहिता। षष्ठ्यन्तादपि च वतेरिष्टत्वात् स्वविषये षष्ठी नापावर्ततेऽत्रेतीयमेवास्या अबाधाख्यायते।

ननु च यदि शेषविषये सप्तमीयम्, अत एव ज्ञापकादित्युच्यते, तदाधिकरणसप्तम्यन्ताद् वतिर्न स्यात्। मधुरायामिव पाटलिपुत्रे प्राकारा इति। एतस्मिन् हि विषये शेषविषयेयं सप्तमीत्यनुप्रयोगे पाटलिपुत्र इति सप्तमी न स्याद् अन्तरेणाधाराधेयविवक्षाम्। इवशब्दयोगे हि शेषविषया सप्तमी ज्ञाप्यते। न चानुप्रयोगेऽस्तीवशब्दः। तस्मान्मधुरायामिव पाटलिपुत्रस्य प्राकारा इत्येव सिध्येत्। सत्यमेतत्। तत्रेत्येतत् पुनरावर्तते, तन्त्रेण वा निर्देश इत्यधिकरणसप्तम्यन्ताद् वतिरेकेन क्रियते। अपरेण शेषविषये सप्तमी ज्ञाप्यत इति भाष्यकाराभिप्रायमुपाध्याया वर्णयन्ति।

अन्ये त्वाहुः—सप्तम्यर्थोऽप्याधाराधेयभावः सम्बन्धसामान्यविहितया षष्ठ्यान्तर्भावयितुं शक्यत एवेत्यनुप्रयोगे सप्तम्यन्तेऽपि षष्ठ्यन्तादेव प्रत्ययः। न ह्यत्राधारा-

---

अनिष्टत्वात् सप्तमीविषये च विषयत्वे षष्ठ्या इष्टत्वात् सप्तम्येव ज्ञापनार्था भाष्येऽभिहिता। षष्ठ्यन्तादपि च वतेरिष्टत्वात् स्वविषये विषयत्वलक्षणे शेषे षष्ठी नापावर्तते=नापगच्छति, अत्र=इवार्थविषये इति इयमेवास्याः=षष्ठ्याः सप्तम्या अबाधाऽख्यायते।

ननु च यदि शेषविषये सप्तमीयम्=उत्तरसूत्रे निर्दिश्यमाना, अत एव ज्ञापकाद् भवतीत्युच्यते, तदाऽधिकरणसप्तम्यन्ताद् वतिर्न स्यात्। 'मधुरायामिव पाटलिपुत्रे प्राकाराः' इति। एतस्मिन् हि विषये=इवार्थविषये शेषविषयेयं सप्तमीत्यनुप्रयोगे आधाराधेयविवक्षामन्तरेण=विना पाटलिपुत्रे इति सप्तमी न स्यात्। इवशब्दप्रयोगे हि शेषविषया सप्तमी ज्ञाप्यते।

न चात्रानुप्रयोगे पाटलिपुत्रेऽस्ति इवशब्दः। तस्मान्मधुरायामिव पाटलिपुत्रस्य प्राकारा इत्येव सिध्येत्। न चैतदिष्टम्, उपमानोपमेययोः समानविभक्तित्वनियमात्। सत्यमेतत्। "तत्र तस्येव" (पा० ५।१।११६) इति सूत्रे तत्रेत्येतत् पुनरावर्तते। तन्त्रेण वाऽयं निर्देशस्तत्रेति। तत्रैकेनाधिकरणसप्तम्यन्ताद् वतिः क्रियते। अपरेण तत्रेति पदेन इवशब्दयोगायोगयोः सामान्येन शेषविषये सप्तमी ज्ञाप्यते इति भाष्यकाराभिप्रायमुपाध्याया वर्णयन्तीति हेलाराजः।

अत्रैव समाधाने हेलाराजस्य मनसः संतोषः। अत एवोपाध्यायपदेन भर्तृहरिमभिप्रयता बहुवचनान्तेन गौरवान्निर्देशः कृतः। अत एवात्रानुप्रयोगे पाटलिपुत्रे इवशब्दाभावेऽपि सप्तम्युपपद्यते।

अन्ये त्वाहुः—सप्तम्यर्थोऽपि आधाराधेयभावः संबन्धसामान्ये विहितया षष्ठ्या स्वार्थेऽन्तर्भावयितुं शक्यते एवेत्यनुप्रयोगे पाटलिपुत्रे सप्तम्यन्ते सत्यपि उपमानपदात् षष्ठ्यन्तादेव प्रत्ययः। न ह्यत्राधाराधेयभावविवक्षायां सप्तम्यर्थे वतिप्रत्ययो निवार्यते, अपि तु शेषविवक्षायामिव शब्दप्रयोगेऽस्ति सप्तमीत्येव परम्=केवलं ज्ञाप्यते। उभयविधाने वाक्यभेदप्रसङ्गात्। यद्यपि उपाध्यायमतेऽपि वाक्यभेदः, तथापि तन्मतेनैकेन वाक्येनोभयविधिरित्यदोषः।

धेयभावविवक्षायां वतिप्रत्ययो निवार्यते सप्तम्यर्थे, अपि तु शेषविवक्षायामिवशब्द-प्रयोगेऽस्ति सप्तमीत्येव ज्ञाप्यते परम् । गतमेतत् ॥ ५५० ॥

इदानीं क्रमप्राप्तः "तदर्हम्" (पा० ५।१।११७) इति विहितोऽर्हार्थे वतिर्विचार्यते । तथाहि–तत्राक्षेपभाष्यम्— 'किमर्थमिदमुच्यते ? न "तेन तुल्यं क्रिया चेद् वतिः' इत्येवं सिद्धम्' इति । एतद् व्याचष्टे—

पूर्वाभ्यामेव योगाभ्यां विग्रहान्तरकल्पनात् ।
अर्हार्थेऽपि वतिः सिद्धः स त्वेकेन निदर्श्यते ॥ ५५१ ॥

इह राजानमर्हति वृत्तं राजवद् वृत्तमित्युदाहरणम् । अत्र च क्रियाग्रहणस्यानुवृत्तेस्तदिति द्वितीयासमर्थादर्हतेः कर्तरि क्रियालक्षणे प्रत्ययो वतिः । अर्हतेः कर्त्री या क्रिया वृत्तादिलक्षणा तस्यां प्रत्ययः । एष चार्थो यदा विभागप्रदर्शकं राज्ञा तुल्यं वर्तते वृत्तमिति वाक्यं क्रियते, तदापि प्रतीयते। ततश्च तृतीयान्तात् 'तेन तुल्यम्' (५-१-१ ५) इत्येवात्र वतिः सिद्धः । यदापि राजानमर्हति धैर्यं राजवद् धैर्यं वेषो वा, ब्राह्मणमर्हत्युपशमो ब्राह्मणवदुपशम इत्युदाहरणम्, तदापि "तत्र तस्येव" (पा० ५।१।११६ ) इत्यनेन प्रत्ययः सिद्धः ।

---

अत्रारुचिबीजं तु अनुप्रयोगे सप्तम्यन्तेऽपि उपमानपदात् षष्ठ्यन्तादेव प्रत्यय इति वक्तुं न युज्यते । उपमानोपमेययोः समानविभक्तिकस्यैवौचित्यादिति । गतमेतत्=पूर्वोक्तसूत्रद्वयविहित-वतिसंबन्धो विचारः समाप्त इति ॥ ५५० ॥

इदानीं सूत्रक्रमप्राप्तः—तदर्हम् इति अर्हार्थे विहितो वतिर्विचार्यते । तथाहि—तत्राक्षेप-भाष्यम्—'किमर्थमिदमुच्यते, न "तेन तुल्यं क्रिया चेद् वतिः" (पा० ५।१।११६ ) इत्येव सिद्धम्' इति । एतद् भाष्यं व्याचष्टे—पूर्वाभ्यामेवेति ।

अस्यार्थः—"तेन तुल्यम्" (पा० ५।१।११५) इति "तत्र तस्येव" (पा० ५।१।११६) इति पूर्वाभ्यामेव योगाभ्यां विग्रहान्तरकल्पनात्=राज्ञा तुल्यं वृत्तं वर्तते, राज्ञ इवास्य धैर्यम् इत्यादिरूपविग्रहान्तरकल्पनाद् अर्हार्थेऽपि='राजानमर्हति वृत्तम्' इत्यर्थेऽपि वतिः सिद्धः, स तु= अर्हार्थे वतिः । एकेन सूत्रेण=तेन तुल्यमिति सूत्रेण प्रकृतभाष्ये उद्धृतेन, निदिश्यते=उपलक्ष्यते, निदर्शनरूपेण=उपलक्षणरूपेण दृष्टान्तरूपेण एकेन सूत्रेण भाष्ये उद्धृतेन अन्येनापि विग्रहभेदात् सिद्ध इति बोध्यत इति ।

अयं भावः—इह="तदर्हम्" इति सूत्रे राजानमर्हति वृत्तं राजवद्वृत्तम् इत्युदाहरणम् । अत्र च="तदर्हम्" इति सूत्रे च 'तेन तुल्यम्' इति सूत्रात् क्रियाग्रहणस्यानुवृत्तेः तदिति द्वितीया समर्थात् क्रियालक्षणेऽर्हतेः कर्तरि वतिः प्रत्ययो भवति । अर्हतेः कर्त्री या क्रिया वृत्तादिलक्षणा तस्यां वतिः प्रत्यय इत्यर्थः । एष चार्थो यदा तद्धितवृत्तेर्विभागप्रदर्शकम् 'राज्ञा तुल्यं वर्तते वृत्तम्' इति विग्रहवाक्यं क्रियते, तदाऽपि प्रतीयते । ततश्च 'तेन तुल्यम्' इति सूत्रेणैव तृतीयान्ताद् अत्र वतिः सिद्धः । यदाऽपि—राजानमर्हति धैर्यम्—राजवद्धैर्यं, वेषो राजवदिति, ब्राह्मणमर्हत्युपशमो ब्राह्मणवदुपशम इत्युदाहरणम्, तदाऽपि 'तत्र तस्येव' इत्यनेनात्र वतिप्रत्ययः सिद्धः, 'ब्राह्मणस्ये-वोपशमः' इति विग्रहभेदात् ।

क्रियातुल्यत्वाभावात् 'तेन तुल्यम्' इत्यनेनात्रासिद्धिः। यत् किल राजान-धैर्यम्, तद्राज्ञ इव धैर्यमिति शक्यते वक्तुं, केवलं मर्हत्यन्यस्य विग्रहवाक्यभेदमात्रम्, वस्तुनोऽभेदः।

यया तु भाष्ये, 'तेन तुल्यमित्येव सिद्धम्' इत्येकेन योगेन सिद्धिरुक्ता, सोप-लक्षणार्था वेदितव्या। उदाहरणमात्रं हि तत्।

तथा च स वतिरेकेन निदर्श्यते उपलक्ष्यत इत्यर्थः। पूर्वेणैवात्र सिद्धिरित्येतावति तात्पर्यम् ॥ ५५१ ॥

तत्र "तेन तुल्यं" ( ५।१।११५ ) इत्यनेन तावद् कथं सिद्धिरित्याह—

**तेन तुल्यमिति प्राप्तेः क्रियोपाधिः प्रसिध्यति ।**
**राजवद् वर्तते राजेत्यत्र भेदे विवक्षिते ॥ ५५२ ॥**

क्रिया तुल्यार्थलक्षणप्रत्ययार्थावच्छेदद्वारेणोपाधिर्विशेषणं यस्य वतेः स सिध्यति। "तेन तुल्यम्" (५।१।११५) इत्यनेनैवात्र प्राप्तेस्तस्यानया वा प्राप्त्येश्चेत्यर्थः।

---

अत्र च क्रियातुल्यत्वाभावात्—'तेन तुल्यम्' इत्यनेन वतिप्रत्ययासिद्धिः। अत्रोपशमस्तु न क्रिया, कृदन्तपदोपस्थाप्यत्वेन सत्त्वभूतत्वात्। यत् किल राजानमर्हत्यन्यस्य धैर्यम्, तद् राज्ञ इव धैर्यम् इति वक्तुं शक्यते, केवलं द्वितीयान्तषष्ठ्यन्तपदाभ्यां विग्रहवाक्यभेदमात्रम्, वृत्तिविग्रहाभ्यां वाच्यस्यार्थस्य तु अभेद एव।

या तु भाष्ये—'तेन तुल्यमित्येव सिद्धम्' इत्येकेन योगेन सिद्धिरुक्ता, सा 'तत्र तस्ये'ति सूत्र-स्योपलक्षणार्था वेदितव्या। तत्=एकेन योगेन सिद्धिरिति वचनम् उदाहरणमात्रं हि।

तथा चोक्तं कारिकायाम्—स त्वेकेन निदर्श्यते इति। स वतिरेकेन योगेन निदर्श्यते= उपलक्ष्यते इत्यर्थः। पूर्वेण सूत्रद्वयेनैवात्र सिद्धिरित्येतावति तात्पर्यं प्रकृतभाष्यस्येति ॥ ५५१ ॥

तत्र "तेन तुल्यम्" ( पा० ५।१।११५ ) इत्यनेन तावद् कथं सिद्धिरित्याह—तेन तुल्य-मिति प्राप्तेरिति ;

अस्यार्थः—क्रिया—स्वार्थावच्छेदद्वारेणोपाधिर्विशेषणं यस्य स क्रियोपाधिर्वतिः—'राजान-मर्हति वृत्तं राजवद् वृत्तम्' इत्यत्र यदा विग्रहान्तरं क्रियते राज्ञा तुल्यं वर्तते ब्राह्मण इति, तदा तेन तुल्यमिति प्राप्तेः प्रसिध्यति। तथा च नार्थः—तदर्हम् ( पा० ५।१।११७ ) इति सूत्रेण।

ननु राजवद् वर्तते ब्राह्मण इत्यत्र सिद्धावपि राजवद् वर्तते राजा इत्यत्र कथं सिद्धिरत आह—राजवद् वर्तते इति।

अस्यार्थः—'राजवद् वर्तते राजा' इत्यत्र राज्ञोर्भेदे विवक्षिते उपमानोपमेयभावसिद्ध्या वतिसिद्धिरित्यर्थ इति।

अयं भावः—तुल्यार्थरूपप्रत्ययार्थावच्छेदद्वारेण क्रिया उपाधिर्विशेषणं यस्य वतेः स सिध्यति, 'तेन तुल्यम्' इत्यनेनैवात्र तस्य=वतेः प्राप्तेरनया वा प्राप्त्या=एतत्सूत्रप्राप्त्या वा इति।

वर्तते राजेत्यर्थः,तदा कथम् ?

तथा हि—राजानमर्हति वृत्तमित्येष एवार्थो राज्ञा तुल्यं वृत्तमस्येति। ननु च भवेत् सिद्धं यदा राजवद् वर्तते ब्राह्मण इति विवक्षा, यदा तु राजवद्

न हि तेनैव तस्योपमानं सम्भवतीत्यत आह–अत्र भेदे विवक्षित इति। भेदोऽत्र विवक्षित इत्यौपम्यमस्ति ॥ ५५२ ॥

कथमेकस्य भेद इत्याह—

**राजत्वेन प्रसिद्धा ये पृथुप्रभृतयो नृपाः।**
**युधिष्ठिरान्तास्तेऽन्येषामुपमानं महीक्षिताम् ॥ ५५३ ॥**

इह पृथुभरतययातिदिलीपप्रभृतयोऽनवद्यचरिताः परिपूर्णराजवृत्ता युधिष्ठिरावधयो राजानः। ते च प्राथमकल्पिकाः साम्प्रतिकस्यापरिपूर्णराजोचितसमाचारस्य प्रशंसार्थमुपमानमुपादीयन्ते, प्रसिद्धेन राज्ञा तुल्यमस्य वृत्तं राज्ञो राजवदयं वर्तत इति। अपरिपूर्णराजसमाचारस्य हि राजविपरीतमपि वृत्तं सम्भाव्यत इति प्रशंसायां राजवद् वृत्तमस्येत्युच्यते। तथा च भेदे सत्युपमानोपमेयभावः।

प्रयोगसामर्थ्यादेव चैवंविधभेदावसायोऽत्र, अभेदे वतेरनुपपत्तेः ॥ ५५३ ॥

---

तथाहि—राजानमर्हति वृत्तमित्येव एवार्थो राज्ञा तुल्यं वर्तते इत्यस्येति।

यत्तु हेलाराजेनोक्तम्—राज्ञा तुल्यं वृत्तमस्येति तन्न युक्तम्, वृत्तमित्यस्य क्रियावाचित्वाभावेन वतेरप्राप्तेः। वर्तते इति पदं वाऽत्राध्याहार्यम्। राज्ञा तुल्यं वृत्तमस्य वर्तते इति।

ननु च भवेत् सिद्धं तेन तुल्यमिति सूत्रेण यदा राजवद् वर्तते ब्राह्मण इति विवक्षा, यदा तु राजवद् वर्तते राजा इत्यर्थो विवक्षितः, तदा कथं सिद्धिः ?

न हि तेनैव तस्योपमानं संभवति इत्यत आह—अत्र भेदे विवक्षिते इति। भेदोऽत्र विवक्षित इत्यौपम्यम्=उपमानोपमेयभावोऽस्तीति ॥ ५५२ ॥

कथमेकस्य भेद इत्याह—राजत्वेन प्रसिद्धा इति।

अस्यार्थः—ये पृथुप्रभृतयो युधिष्ठिरान्ता नृपा राजत्वेन राजगुणेन प्रसिद्धास्तेऽन्येषामपरिपूर्णराजगुणानां महीक्षितामुपमेयानामुपमानं भवन्तीति योजना। उपमानमित्यत्र जातावेकवचनम्।

अयं भावः ·· इह जगति पृथु-भरत-ययातिदिलीपप्रभृतयोऽनवद्यचरिता परिपूर्णराजवृत्ता युधिष्ठिरादयो राजानः, ते च प्राथमकल्पिकाः=प्रथमे—प्रधानभूताः राजानः सांप्रतिकस्य अपरिपूर्णराजोचितसदाचारस्य प्रशंसार्थमुपमानमादीयन्ते, प्रसिद्धेन राज्ञा पृथु-भरतादिना तुल्यमस्य राज्ञो वृत्तं राजवदयं वर्तते राजा इति। अपरिपूर्णराजसमाचारस्य हि प्रसिद्धराजविपरीतमपि वृत्तं संभाव्यते इति राजवद् वृत्तमस्येति प्रशंसायामुच्यते। तथा च=परिपूर्णराजसमाचारत्वापरिपूर्णराजसमाचारत्वाभ्यां च भेदे सति उपमानोपमेयभावोऽत्रेति।

उपमाने उपमेये च राजपदप्रयोगसामर्थ्यदेव च एवंविधभेदस्य अवसायः=निश्चयः अत्र, अभेदे सादृश्याभावेन वतेरनुपपत्तेरिति ॥ ५५३ ॥

ननु च प्रजापालननिमित्तं राजत्वमुपमेयस्याप्यस्तीति राजैवायमिति केन विशेषेणान्येनोपमीयते ? अथास्य रक्षादिराजकार्यं नास्ति, तदास्य सादृश्याभावात् कथमस्य प्रसिद्धो राजोपमानं स्यादित्यत आह—

**सिद्ध्यसिद्धिकृतो भेद उपमानोपमेययोः ।**
**सर्वत्रैव यतोऽसिद्धं प्रसिद्धेनोपमीयते ॥ ५५४ ॥**

परिपूर्णापरिपूर्णगुणनिमित्तः प्रसिद्ध्यप्रसिद्धिकृतः सर्वत्रोपमानोपमेयभावो नेहैवेति नात्र विचिकित्सा, सर्वथा भेदेऽभेदे वा तस्यानुपपत्तेरावेदितत्वात् । तथाहि— ब्राह्मणवदधीते क्षत्रिय इति करणसौष्ठवातिशयाद् ब्राह्मणाध्ययनं प्रसिद्धमप्रसिद्धस्य क्षत्रियाध्ययनस्योपमानम् । एवमिह यस्य परिपूर्णं राजत्वं चतुरुदधिमेखलापर्यन्तपृथिवीपालनात्, स प्रसिद्धो भरतादी राजैव व्यपदिश्यते । न त्वस्य राजानं वृत्तमर्हतीति व्यपदेशः ।

यस्त्वेकदेशस्वामी कोशदण्डादिसाधनदरिद्रोऽकृतात्मरक्षोऽविश्रृङ्खलचेष्टः सम्भावितः, स प्रशस्यते, राजवद् वृत्तमस्येति । एवं प्रसिद्धेन वसिष्ठादिना ब्राह्मणे-

---

ननु च प्रजापालननिमित्तकं राजत्वमुपमेयस्याऽप्यस्ति इति उपमेयोऽपि राजैवेति केन विशेषेण=कं विशेषधर्मं स्वमात्रवृत्तिमुपमेयत्वे निमित्तीकृत्य अन्येन राज्ञा उपमीयते, उपमानोपमेययोर्भेदे हि उपमानोपमेयभावो दृष्ट इति । अथास्य= यद्यस्योपमेयस्य प्रजासंरक्षणादिरूपं राजकार्यं नास्ति, तदा साधारणधर्मप्रयुक्तस्य सादृश्यस्याभावात् कथमस्याप्रसिद्धस्य सांप्रतिकस्य राज्ञः प्रसिद्धो राजोपमानं स्यादित्यत आह—सिद्ध्यसिद्धिकृतो भेद इति ।

अस्यार्थः—परिपूर्णापरिपूर्णगुणनिमित्तकः प्रसिद्ध्यप्रसिद्धिकृतः सर्वत्रैवोपमानोपमेयोर्भेदो न इहैव, यतोऽसिद्धम्—विवक्षिता साधारणधर्मवत्तया अप्रसिद्धं वस्तु मुखादिकम्, तादृशासाधारणधर्मवत्तया प्रसिद्धेन चन्द्रादिना उपमीयत इति ।

अयं भावः—परिपूर्णापरिपूर्णगुणनिमित्तकः प्रसिद्ध्यप्रसिद्धिकृतः सर्वत्रोपमानोपमेयभावो नेहैव=न राजवद् वर्तते राजा इत्यत्रैव इति नात्र विचिकित्सा=नास्मिन् विषये संशयः । सर्वथा भेदेऽभेदे वा उपमानोपमेयभावस्यानुपपत्तेरावेदितत्वात् । तथाहि—'ब्राह्मणवदधीते क्षत्रियः' इत्यत्र करणसौष्ठवातिशयात् = वागिन्द्रियसाधुत्वातिशयाद् ब्राह्मणाध्ययनं प्रसिद्धमप्रसिद्धस्य=तद्धेतुकप्रसिद्धिरहितस्य क्षत्रियाध्ययनस्योपमानम् । एवमिह=राजवद् वर्तते राजा इत्यत्र यस्य चतुरुदधिमेखलापर्यन्तपृथिवीपालनात् परिपूर्णराजत्वम्, स प्रसिद्धो भरतादी राजैव सांप्रतिकस्य राज्ञ उपमानत्वेन व्यपदिश्यते । न त्वस्य वृत्तम्=भरतादे राज्ञो वृत्तं राजानमर्हति इति व्यपदेशः ।

यस्त्वेकदेशस्वामी कोशदण्डादिरूपराज्यपालनसाधनदरिद्रोऽकृतात्मरक्षोऽपि अविश्रृङ्खलचेष्टः राजशास्त्रमर्यादया निमन्त्रितसमाचारः संभावितो लोके स प्रशस्यते—राजवद् वृत्तमस्य सांप्रतिकस्य राज्ञ इति । एवं सदाचारादिना प्रसिद्धेन वसिष्ठादिना ब्राह्मणेन तथाऽप्रसिद्धोऽन्यो

नान्यो ब्राह्मणवदयं वर्तते ब्राह्मण इत्युपमीयते। तदेवमत्र "तेन तुल्यम्"(पा० ५।१।११५) इति सिद्धिः ॥ ५५४ ॥

"तत्र तस्येव" ( पा० ५।१।११६ ) इत्यनेन क्व सिद्धिरित्याह—

**राजवद् रूपमस्येति राजन्येव विवक्षिते ।**
**अक्रियार्थेन योगेन द्वितीयेन भविष्यति ॥ ५५५ ॥**

अक्रियार्थोऽयमारम्भ इति व्यवस्थापितम्। तथा च रूपादिगुणतुल्येऽनेन सिध्यति वतिः। भरतस्य राज्ञ इवास्य रूपं धैर्यमुपशमो राजवदिति।

एतच्चारब्धेऽपि "तदर्हम्" (पा० ५।१।११७) इत्यस्मिन्नर्हतेः कर्त्र्यां क्रियायामेव प्रत्ययस्येष्टेर्न सिध्यतीत्यवश्यं पूर्वेण साध्यम्। तदेवं पूर्वेण सिद्धिरुपपादिता ॥ ५५५ ॥

अतोऽनन्तरमारम्भसमर्थनार्थं भाष्यम्–'न सिध्यति। तृतीयासमर्थात् तत्र यदान्येन कर्तव्यां क्रियामन्यः करोति, तदा प्रत्यय उत्पद्यते। इह पुनर्द्वितीयासमर्था-

---

ब्राह्मण उपमीयते, ब्राह्मणवदयं वर्तते ब्राह्मण इति। तदेवमत्र=राजवद् वर्तते राजा इत्यत्र 'तेन तुल्यम्' इति सूत्रेण वतिसिद्धिरिति ॥ ५५४ ॥

''तत्र तस्येव'' (पा० ५।१।११६) इत्यनेन क्व 'तदर्हम्' इत्यस्य विषये वतिसिद्धिरित्याशङ्क्याह—राजवद् रूपमस्येति।

अस्यार्थः—राजवद् रूपमस्य राज्ञ इत्यत्र राजन्येवोपमानत्वेन उपमेयत्वेन च विवक्षिते-अक्रियार्थेन द्वितीयेन योगेन—'तत्र तस्येव' इत्यनेन वतिर्भविष्यति। तथा च राजानमर्हति अस्य रूपमिति 'तदर्हम्' इत्यस्य विषये राज्ञ इव रूपमस्य राज्ञ इति विग्रहान्तरकल्पनया राजवद् रूपमस्येत्यत्र 'तत्र तस्येव' इत्यनेन वतिसिद्धिरिति निष्कर्षः।

अयं भावः—अक्रियार्थोऽयमारम्भः ''तत्र तस्येव'' इति सूत्रारम्भोऽक्रियार्थः—क्रियातुल्यत्वाभावे वतिविधानार्थं इति प्राग् व्यवस्थापितम्। तथा च रूपादिगुणतुल्येऽनेन='तत्र तस्येव' इति सूत्रेण वतिः सिद्ध्यति। भरतस्य प्राग्भूतस्य राज्ञ इवास्य सांप्रतिकस्य राज्ञो रूपं धैर्यमुपशमो वा राजवदिति।

एतच्च तदर्हम्' इति सूत्रे आरब्धेऽपि न सिद्ध्यति, क्रियायामेवार्हतेः कर्त्र्यां 'तदर्हम्' इत्यनेन वतिप्रत्ययस्येष्टेः, अत्र तु राजानमर्हति रूपधैर्यादिकमस्येति रूपादेरेवार्हति कर्तृत्वं न क्रियाया इति अवश्यं पूर्वेण = 'तत्र तस्येव' इत्यनेन राजवद् रूपमस्येति साध्यम्। तदेवं राजवद् वर्तते राजा इत्यत्र राजवद् रूपमस्येत्यत्र च पूर्वेण सूत्रद्वयेन 'तेन तुल्यम्' इति सूत्रेण 'तत्र तस्येव' इत्यनेन च वतिसिद्धिरुपपादिता इति 'तदर्हम्' इति शास्त्रं नारम्भणीयमिति ॥ ५५५ ॥

अतोऽनन्तरं 'तदर्हम्' इति शास्त्रारम्भसमर्थनार्थं भाष्यम्—"न सिध्यति। तृतीयासमर्थात् तत्र यदाऽन्येन कर्तव्यां क्रियामन्यः करोति, तदा प्रत्यय उत्पद्यते। इह पुनर्द्वितीया समर्थादात्मार्हायां क्रियायामर्हति कर्तरि निश्चितबलाधाने प्रत्यय उत्पद्यते'' इति।

दात्माहर्यां क्रियायामर्हतिकर्तरि निश्चितबलाधाने प्रत्यय उत्पद्यत' इति। एतद् व्याचष्टे—

उपमानाविवक्षायां नियमार्थोऽयमुच्यते ।
धर्मोऽर्हतिक्रियाकर्ता तदर्थं वचनं पुनः ॥ ५५६ ॥

इह यदा सामान्यवचनो राजशब्द उपादीयते, तदा जातिमात्रोपादाने भेदस्याविवक्षितत्वात् तन्निबन्धन उपमानोपमेयभावो नास्ति। तत्र हि राजानमेवायमाचारोऽर्हति नान्यमित्यवधारणविवक्षा। राजसम्बन्धित्वेनान्वधारितस्यापि वृत्तस्यान्यसम्बन्धापाकरणेन बलाधानं स्थैर्योत्पादनमत्र विवक्षितं राजवदिदं वृत्तं वर्तत इति ॥ ५५६ ॥

किञ्च, यदा तेषामेव प्रसिद्धानां राज्ञां कश्चिदुच्यते राजवद् वर्तत इति, तदोपमानोपमेयभावो नास्ति। तदाह—

---

अस्यार्थः—तदर्हमिति सूत्रस्य विषये जायमानो वतिः पूर्वेण सूत्रद्वयेन न सिध्यति। यतो यदाऽन्येन कर्तव्यां क्रियामन्यः करोति तदा तत्र - तेन तुल्यमित्यस्य विषये तृतीया समर्थाद् वतिप्रत्यय उत्पद्यते। इह पुनः=तदर्हमिति सूत्रविषये तु आत्माहार्यां क्रियायां वृत्तोपशमादिरूपायामर्हति कर्तरि=अर्हति क्रिया कर्तृभूतायाम् सत्यां निश्चितबलाधाने आत्मसंबन्धित्वेनावधारितस्यापि वृत्तोपशमादेरन्यसंबन्धनिरासेन स्वस्मिन्नेव निश्चितस्य बलस्य स्थैर्यस्याधाने उत्पादने विवक्षिते वतिप्रत्यय उत्पद्यते, राजानमेवेदं वृत्तमर्हति नान्यमिति राजवदिदं वृत्तमिति। एतद् भाष्यं व्याचष्टे—उपमानाविवक्षायामिति।

अस्यार्थः—यदा उपमानस्य=उपमानोपमेयभावस्याविवक्षा, तदा 'तत्र तस्येव' इति सूत्राप्राप्तौ राजानमेवेदं वृत्तमर्हति नान्यमिति नियमार्थोऽवधारणार्थोऽयम् तदर्हमिति विधिरुच्यते।

किञ्च तदर्हमिति सूत्रस्य विषये वृत्तोपशमादिरूपो धर्मोऽर्हति क्रिया कर्ता तत्र पूर्वेण सूत्रद्वयेन वतेरप्राप्तौ तदर्थञ्चेदं तदर्हमिति वचनमित्यर्थः।

अयं भावः—इह यदा राजसामान्यवचनो राजशब्द उपादीयते, तदा राजत्वजातिमात्रोपादाने भेदस्य=विशेषस्य अविवक्षितत्वात् तन्निबन्धनः=भेदप्रयुक्तः उपमानोपमेयभावो नास्ति। तत्र हि राजानमेवायमाचारोऽर्हति, नान्यं साधारणं जनमित्यवधारणविवक्षा। राजसंबन्धित्वेन पूर्वमवधारितस्यापि वृत्तस्यान्यसंबन्धनिरासेन स्वस्मिन् संबन्धे बलाधानं स्थैर्योत्पादनमत्र विवक्षितम्—राजवदिदं वृत्तमस्मिन् वर्तते इति राजैवायमिति निश्चिनोति इति ॥ ५५६ ॥

किञ्च यदा तेषामेव=पृथुभरतादीनां युधिष्ठिरान्तानां प्रसिद्धानां राज्ञां मध्ये राजपदेन कश्चिदुच्यते—राजवद् वर्ततेऽयम् इति, तदोपमानोपमेयभावो नास्ति, भेदाभावात्, तदाह—कृतहस्तवदित्येतदिति।

**कृतहस्तवदित्येतत् प्रसिद्धेष्वेव दृश्यते ।**
**राजत्वेन प्रसिद्धे च राज्ञि राजवदित्यपि ।। ५५७ ।।**

कृतोऽभ्यासान्निवेशितो हस्तो येनासौ कृतहस्तोऽर्जुनप्रभृतिः प्रसिद्धः । स एव चैवमुच्यते 'चिच्छेद कृतहस्तवद्' इति । नात्रापरेण कृतहस्तेन तुल्यत्वं विवक्षितम् । किं तर्हि, दृढमुष्टेरस्यैव य उचितश्छेदः शरीरपाटनं तदनेन कृतमित्येषोऽर्थो विवक्षितः । तथा चोपमानोपमेयभावाभावात् कृतहस्तमर्हति नान्यमित्येवं विज्ञातस्यापि कृतहस्तत्वेन नियमार्थं पुनः श्रुतिः कृतहस्तवदिति ।

एवं प्रसिद्धस्य राज्ञो राजत्वेन निर्ज्ञातस्यापि—

पाण्डोर्विदुर सर्वाणि प्रेतकार्याणि कारय ।
राजवद् राजसिंहस्य ।। ( म० भा० )

इत्येतत् प्रयुज्यते । न चात्र पाण्डोरन्येन राज्ञा सम्भवत्युपमानम्, परिपूर्णगुणत्वात् ।

ततश्चायमत्रार्थः—यानि राजानमेवार्हन्ति प्रेतस्य परलोकप्राप्तस्य कार्याणि सम्पाद्यानि, तानि विधत्स्वेति ।। ५५७ ।।

---

अस्यार्थः—कृतहस्तत्वेन प्रसिद्धेष्वेव अर्जुनादिषु कृतहस्तवदित्येतत्पदं दृश्यते । अत्र च भेदाभावेनोपमानोपमेयभावाभावात् पूर्वेण वतेरसिद्धिरित्येतदर्थं 'तदर्हमि'ति सूत्रमारब्धव्यम् । राजत्वेन चतुरुदधिमेखलापर्यन्तपृथिवीपालनादिरूपराजोचितसमाचारसमानाधिकरणेन प्रसिद्धे च राज्ञि पाण्डुप्रभृतौ राजवदित्यपि प्रयोगो भारतादौ दृश्यते । अत्रापि च भेदाभावेनोपमानोपमेयभावाभाव इत्येतदर्थमपि 'तदर्हमि'ति सूत्रमारब्धव्यमिति ।

अयं भावः—कृतोऽभ्यासाल्लाघवेन निवेशितो हस्तश्चापभुज्यांमध्ये तूणीरे च येनासौ कृतहस्तोऽर्जुनप्रभृतिः प्रसिद्धः । स एव चैवमुच्यते "चिच्छेद कृतहस्तवत्" इति । नात्रापरेण कृतहस्तेन धानुष्केण तुल्यत्वं विवक्षितम् । किं तर्हि, दृढमुष्टेरस्यैव=अर्जुनस्यैव य उचितश्छेदो धनुर्मुक्तैर्बाणैः शरीरपाटनं तदनेन=अर्जुनेन कृतमित्येषोऽर्थो विवक्षितः । तथा च भेदाभावेनोपमानोपमेयभावाभावाद् कृतहस्तमर्हत्ययं छेदो नान्यमित्येवं कृतहस्तत्वेन विज्ञातस्यापि अर्जुनादेः—नियमार्थम् अयमेव कृतहस्तः, कृतहस्त एवायमित्युभयतो नियमार्थं कृतहस्तत्वेन पुनः श्रुतिः कृतहस्तवदिति ।

एवं प्रसिद्धस्य परिपूर्णगुणस्य राज्ञः पाण्डो राजत्वेन निर्ज्ञातस्यापि पुनः श्रुतिर्नियमार्था । तथा च—

पाण्डोर्विदुर सर्वाणि प्रेतकार्याणि कारय ।
राजवद् राजसिंहस्य……………………।।

इत्येतत्प्रयुज्यते । न चात्र पाण्डोरन्येन राज्ञा सह संभवत्युपमानम् । तस्य परिपूर्णगुणत्वात् । अपरिपूर्णगुणस्य हि परिपूर्णगुण उपमानं संभवति, न विपरीतस्य विपरीतम् ।

ततश्चायमत्रार्थः-यानि प्रेतस्य परलोकप्राप्तस्य संपाद्यानि कार्याणि राजानमेवार्हन्ति तानि विधत्स्वेति ।। ५५७ ।।

तथा चास्य योगस्यायं तात्पर्यतो विषय इत्याह—

**अराज्ञि येषां धर्माणां दृष्टोऽत्यन्तमसम्भवः ।**
**ते राजनि नियम्यन्ते त्यज्यन्ते व्यभिचारिणा ॥ ५५८ ॥**

ये राजन्येव दृष्टा धर्मास्तेषां तत्रैव निश्चितानां बलाधानं स्थैर्योत्पादनं यदा विवक्षितं भवति, तदा नियमाय भवति प्रयोगः। नियमे चान्यनिवृत्तिरिति राजानमेवेदमेव च वृत्तमर्हतीत्युभयतो नियमः सम्पद्यते ।

यदाह—त्यज्यन्ते व्यभिचारिण इति। राजानमेवेदं वृत्तमर्हति, नेदमन्यैः साधारणमराजसु नास्त्यस्य सम्भव इति । 'आत्मार्हायां क्रियायामर्हतिकर्तरि निश्चितबलाधाने' इत्यस्य भाष्यस्यार्थः। अर्हतिकर्ता वृत्तम्, व्यापारः क्रिया, तस्य च कर्तृव्यापारस्य कर्त्रन्तरेभ्यो यदावच्छेदो विवक्षितः, तदानेन सूत्रेण वतिरित्यर्थः ।

सा च क्रिया आत्मार्हा, द्वितीयान्तवाच्यस्यार्थस्यात्मनोऽर्हा नान्यार्हेति । राजवद्रूपं राजवद् धैर्यमित्यादौ तु "तत्र तस्येव" (पा० ५।१।११६) इत्यनेनैव वतिः । "तदर्हम्" ( पा० ५। ।११६ ) इत्यनेन त्वर्हतेः कर्त्र्यां क्रियायां विधानादत्राप्राप्तेः ।

---

तथा चास्य योगस्य="तदर्हम्" इति सूत्रस्य अयमेव तात्पर्यतो विषय इत्याह—अराज्ञि येषामिति ।

अस्यार्थः—येषां धर्माणाम्=चतुरुदधिमेखलापर्यन्तपृथिवीपरिपालनादीनामराज्ञि अत्यन्तमसंभवो दृष्टः, ते धर्मा राजनि परिपूर्णगुणे भरतादौ प्रसिद्धे राज्ञि नियम्यन्ते 'अत्रैव राज्ञि एते धर्माः' इति, एते एव धर्मा अत्रेति । व्यभिचारिणः=भरतादौ राज्ञि अविद्यमानास्तु धर्मास्त्यज्यन्ते राजवदवृत्तमस्येत्यादिप्रयोगे इति ।

अयं भावः—ये राजन्येव दृष्टा धर्माः प्रागुक्ताः, तेषां तत्रैव=राजन्येव निश्चितानां बलाधानं स्थैर्योत्पादनम्=नियमनं यदा विवक्षितं भवति, तदा नियमाय प्रयोगो भवति । नियमे चान्यनिवृत्तिरिति राजानमेवेदं वृत्तमर्हति, इदमेव च वृत्तं राजानमर्हति, इत्युभयत=वृत्ते राजनि च नियमः संपद्यते ।

यदाह—त्यजन्ते व्यभिचारिणा इति । इदं वृत्तं राजानमेवार्हति, नेदं वृत्तमन्यैर्वृत्तैः साधारणम्=समानम्, अराजसु अस्य वृत्तस्य संभवो नास्ति इति नियमत्यागयोराकार इति । "आत्मार्हायां क्रियायामर्हति कर्तरि निश्चितबलाधाने" इत्यस्य भाष्यस्यायमर्थः—अर्हति कर्ता वृत्तं व्यापारः क्रिया, तस्य च कर्तुर्व्यापारस्य=कर्तृरूपस्य व्यापारस्य कर्त्रन्तरेभ्यो यदाऽवच्छेदः=व्यवच्छेदो विवक्षितः, तदाऽनेन सूत्रेण="तदर्हम्" ( पा० ५।१।११७ ) इति सूत्रेण वतिरित्यर्थः ।

सा च क्रिया आत्मार्हा, द्वितीयान्तपदवाच्यस्यार्थस्यात्मनोऽर्हा इति । राजवद् रूपम्, राजवद् धैर्यमित्यादौ तु "तत्र तस्येव" ( पा० ५।१।११६ ) इत्यनेनैव सूत्रेण वतिः । 'तदर्हम्' ( पा० ५।१।११७ ) इत्यनेन तु अर्हतेः कर्त्र्यां क्रियायां विधानादत्र='राजवद् रूपम्', 'राजवद् धैर्यम्' इत्यादौ वतेरप्राप्तेः ।

तदिदमत्र तात्पर्यम्—भेदे विवक्षिते पूर्वेण वतिः सिद्धः। अभेदविवक्षायां तूपमानोपमेयभावाभावान्नियमफलेनानेन वतिरिति ॥ ५५८ ॥

ननु च राजानमर्हत्येतद् वासः, ब्राह्मणमर्हत्येष कमण्डलुरित्यत्र कस्मादयं वतिर्न भवति ? अनभिधानात्। तथा चेह क्रियाग्रहणानुवृत्तेरर्हतेः कर्त्र्यां क्रियायामेवायं प्रत्यय इत्याह—

अर्हतेश्च क्रिया कर्त्री या तस्यां वतिरिष्यते।
राजानमर्हतिच्छत्रमिति न त्वेवमादिषु ॥ ५५९ ॥

अर्हतिकर्तरीति सामान्येन विधानेऽपि वृत्तादिकायां क्रियायामेव प्रत्यय इष्यते, न छत्रादावर्हतिकर्तरि द्रव्ये ॥ ५५९ ॥

कुत एतदित्याह—

प्रयुक्तानां हि शब्दानां शास्त्रेणानुगमः सताम्।
छत्राद्यर्थे तु वचने प्रत्याख्यानं न सम्भवेत् ॥ ५६० ॥

'सिद्धे शब्दार्थसम्बन्धे' शास्त्रारम्भान्न शास्त्रेण शब्दा जन्यन्ते, अपि तु शिष्टप्रवाहप्रयुक्तानां विद्यमानानामेव तेषां साधुत्वानुसरणमात्रमिति निर्णीतचरमेतत्।

---

तदिदमत्र तात्पर्यम्—भेदे विवक्षितेर्विणवतिः सिद्धः, यथा पूर्वपक्षे उपपादितम्। अभेदविवक्षायां तु उपमानोपमेयभावाभावादुभयतो नियमफलेन अनेन='तदर्हम्' इति सूत्रेण वतिरिति ॥ ५५८ ॥

ननु च 'राजानमर्हत्येतद् वासः, ब्राह्मणमर्हत्येष कमण्डलुः' इत्यत्र कस्मादयम्=तदर्हमिति विहितः, वतिर्न भवति इति चेत्, अनभिधानादित्येव हि। तथा च=अनभिधाने च ''तेन तुल्यम्'' ( पा० ५।१।११५ ) इति सूत्रादत्र क्रियाग्रहणानुवृत्ते रर्हते कर्त्र्यां क्रियायामेवायं वतिप्रत्यय इत्याह—अर्हतेश्च क्रिया कर्त्री इति।

अस्यार्थः—पूर्वसूत्रादत्र क्रियाग्रहणानुवृत्त्या या वृत्तोपशमादिरूपा क्रिया अर्हतेः कर्त्री तस्याञ्च=तस्यामेव'तदर्हम्'इति सूत्रेण वतिरिष्यते। अत्र च क्रियाग्रहणस्य शब्दानुवृत्तिमाश्रित्य सत्त्वभूतक्रियापरताऽवसेया। राजानमर्हतिच्छत्रमित्येवमादिषु तु न वतिरिष्यते। अत्राक्रियारूपस्य च्छत्रस्यार्हति क्रियाकर्तृत्वादिति।

अयं भावः—अर्हति कर्तरि इति सामान्येन=क्रियाऽक्रियासाधारण्येन अनेन वतिप्रत्ययविधानेऽपि वृत्तोपशमादिरूपायां क्रियायामेवानेन प्रत्यय इष्यते, नच्छत्रादावक्रियारूपेऽर्हति कर्तरि द्रव्ये इति ॥ ५५९ ॥

वृत्तादिकायां क्रियायामेवार्हति कर्तृभूतायां 'तदर्हम्' इति सूत्रेण प्रत्यय इष्यते, न छत्रादावर्हति कर्तरि इत्येतत् कुत इत्याह—प्रयुक्तानां हि शब्दानामिति।

अस्यार्थः—शिष्टप्रवाहप्रयुक्तानां सतां पूर्वविद्यमानानामेव हि शब्दानां शास्त्रेणानुगमोऽनु-

ततश्च 'राजवच्छत्रम्, ब्राह्मणवत् कमण्डलुः' इत्यस्य शब्दस्योपमानोपमेयभावानङ्गीकरणेनार्हत्यर्थस्य विवक्षितस्याप्रत्यायकत्वादसाधुत्वेऽन्वाख्यानं नोपपद्यते।

किञ्च 'तेन तुल्यं—' (पा७ ५।१।११५) इत्यनेनैव सिद्धे प्रत्याख्यानं यदस्य योगस्य क्रियते, तदेवं सति न स्यात्।

तथा हि—राजवच्छत्रमित्यादौ तेन तुल्यमित्यनेनासिद्धिः, क्रियोपाधौ तुल्यत्वे तेन विधानाच्छत्रादिषु कर्तृष्वसिद्धेरित्येतदर्थमिदं सूत्रं स्यादिति कथं प्रत्याख्यायते? अभ्युपगम्य च तत्प्रत्याख्यानमन्यथा समर्थ्यमाने राजवद् वृत्तमित्यादौ प्रयोगे छत्रादौ कर्तरि प्रत्ययस्याभावः स्फुटमुक्तो भवति भाष्यकृतेत्याशयः।

ततश्चारम्भेऽपि क्रियैवास्य वाच्येत्येवमारम्भप्रत्याख्याने समानफले भवतः॥५६०॥

---

सरणं क्रियते, न त्वपूर्वाः शब्दाः शास्त्रेण जन्यन्ते। ततश्च राजवच्छत्रम्, ब्राह्मणवत्कमण्डलुरित्यत्रोपमानोपमेयभावानङ्गीकारेण विवक्षितस्यार्हत्यर्थस्याप्रत्यायकत्वादसाधुत्वे 'तदर्हमि'ति शास्त्रेणान्वाख्यानं नोपपद्यते।

किञ्च, राजवच्छत्रमित्याद्यर्थे तदर्हमिति वचनेऽभ्युपगम्यमाने उपमानोपमेयभावे "तेन तुल्यम्" (पा० ५।१।११५) इति सूत्रेण वतिप्रत्ययसिद्धिमाश्रित्य 'तदर्हमि'त्यस्य प्रत्याख्यानं भाष्यकृत्कृतं न संभवेत्। प्रत्याख्यानञ्चाभ्युपगम्यान्यथासमर्थनं प्रागुक्तरीत्या कृतम्, न तु पूर्वेणासिद्धया राजवच्छत्रमित्याद्यर्थं 'तदर्हमि'ति सूत्रमारम्भणीयमित्युक्तमिति।

अयं भावः—'सिद्धे शब्देऽर्थे तत्संबन्धे' च व्याकरणशास्त्रारम्भान्नशास्त्रेण शब्दा जन्यन्ते, अपि तु साधुतयाऽन्वाख्यायन्ते। तथा च शिष्टप्रवाहप्रयुक्तानां व्याकरणात् पूर्वं विद्यमानानामेव शब्दानां साधुत्वानुसरणमात्रमेव शास्त्रेण क्रियत इति प्राङ् निर्णीतमेतत्। ततश्च 'राजवच्छत्रम्, ब्राह्मणवत् कमण्डलुः' इत्यस्य शब्दस्यार्थे उपमानोपमेयभावानङ्गीकारेण अर्हत्यस्य विवक्षितस्य प्रत्यायकत्वादसाधुत्वेऽस्य शब्दस्य 'तदर्हमि'ति शास्त्रेणान्वाख्यानं नोपपद्यते।

किञ्च "तेन तुल्यम्" इति योगेनैव सिद्धे यदस्य योगस्य प्रत्याख्यानं भाष्यकारेण क्रियते, तदेवं सति=राजवच्छत्रमित्याद्यर्थं 'तदर्हम्' (पा० ५।१।११७) इति शास्त्रस्यारम्भणीयत्वे समर्थिते सति न स्यात्।

तथाहि—राजवच्छत्रमित्यादौ तेन तुल्यमित्यनेनासिद्धिः, क्रियोपाधौ=क्रियानिमित्तके तुल्यत्वे एव तेन सूत्रेण वतिविधानात् छत्रादिष्वर्हति कर्तृषु तेन वतिप्रत्ययासिद्धेरिति राजवच्छत्रमित्येतदर्थमिदम्="तदर्हम्"(पा०५।१।११७) इति सूत्रम् स्यादिति कथं प्रत्याख्यायते? 'अभ्युपगम्य च तत्प्रत्याख्यानं राजवद् वृत्तम्' इत्यादौ प्रयोगेऽन्यथा समर्थ्यमाने, छत्रादौ अर्हति कर्तरि वतिप्रत्ययस्याभावो भाष्यकृता स्फुटमुक्तो भवति इत्याशयः प्रत्याख्यानभाष्यस्य।

ततश्च "तदर्हम्" (पा० ५।१।११७) इति शास्त्रारम्भेऽपि वृत्तोपशमादिका क्रियैवास्य=वतिप्रत्ययस्य वाच्येत्येवमारम्भप्रत्याख्याने अस्य="तदर्हम्" इति सूत्रस्य समानफले भवत इति। आरम्भे प्रत्याख्याने च 'राजवच्छत्रम्, 'ब्राह्मणवत्कमण्डलुः' इत्यस्यानभिधानेनासिद्धेरिति॥५६०॥

तदेवं भाष्ये समर्थितोऽस्यारम्भः। प्रत्याख्यानं तु तत्र नास्तीति कुतो निश्चितं तदित्याह—

**तदर्हमिति नारब्धं सूत्रं व्याकरणान्तरे।**
**सम्भवत्युपमात्रापि भेदस्य परिकल्पना ॥ ५६१ ॥**

आपिशलाः काशकृत्स्नाश्च सूत्रमेतन्नाधीयते। अतोऽवसीयते प्रत्याख्यानमस्य। तथाहि—भाष्यकारस्तन्त्रान्तरादेवावसितमर्थं स्ववचनेनादिदेश। 'परमतमप्रतिषिद्धमनुमतमिति' हि तत्र युक्तिः। तत्र कोऽभिप्रायस्तेषामाचार्याणां, ये सूत्रमिदं नाधीयते।

उच्यते—इहाभिन्नेऽप्यर्थे भेदपरिकल्पनयोपमानोपमेयभावोपपत्तेः पूर्वेणैव सिद्धो वतिरित्यस्यानारम्भः ॥ ५६१ ॥

कथं भेदपरिकल्पनेत्याह—

---

तदेवं भाष्ये समर्थितोऽस्य="तदर्हम्" इति सूत्रस्य आरम्भः। अस्य सूत्रस्य प्रत्याख्यानं तु तत्र=भाष्ये नास्ति इति स्थिते तत्=भाष्येऽस्य सूत्रस्य प्रत्याख्यानं कृतमित्येतत् कुतो निश्चितमित्याशङ्क्याह—तदर्हमिति नारब्धमिति।

अस्यार्थः—व्याकरणान्तरे आपिशलीये काशकृत्स्नीये च व्याकरणे, "तदर्हम्" ( पा० ५।१।११५ ) इति सूत्रं नारब्धम्।

ननु तर्हि राजवद् वृत्तमित्यत्रैकस्मिन्नुपमानोपमेयभावेन कथं वतिप्रत्ययोपपत्तिरित्याशङ्क्याह—संभवत्युपमाऽत्रापि इति।

अस्यार्थः—एकस्मिन्नपि उपमात्रा=उपमानेन सह उपमेयस्य भेदस्य वक्ष्यमाणरीत्या परिकल्पनाद् राजवद् वृत्तमित्यत्र वतिप्रत्ययः संभवति इति पूर्वेणैव सूत्रेण वतिप्रत्ययेऽत्र सिद्धे तदर्हम् ( पा० ५।१।११७ ) इति सूत्रमस्मिन्नपि व्याकरणे नारम्भणीयमिति।

अयं भावः—अपिशलाः=आपिशलिना प्रोक्तं व्याकरणमधीयते आपिशलाः, काशकृत्स्नाश्च=काशकृत्स्नेन आचार्येण प्रोक्तं व्याकरणमधीयते काशकृत्स्नाः। एतत्सूत्रम्="तदर्हम्" ( पा० ५।१।११७ ) इति सूत्रं नाधीयते। अतोऽस्य सूत्रस्य वैयर्थ्यात् प्रत्याख्यानमवसीयते।

तथाहि—भाष्यकारस् तन्त्रान्तरादवसितमेवार्थम्=आपिशलकाशकृत्स्नव्याकरणाभ्यां सिद्धमेवार्थम्, स्ववचनेनादिदेश। परमतमप्रतिषिद्धमनुमतं भवतीति हि तत्र युक्तिः। तत्र ये सूत्रमिदं नाधीयते, तेषामाचार्याणामेतत्सूत्राध्ययने कोऽभिप्रायः।

उच्यते ? इह=राजवद्वृत्तमित्यादौ अभिन्नेऽप्यर्थे भेदपरिकल्पनयाऽनुपदं वक्ष्यमाणयोपमेयभावोपपत्तेः पूर्वेणैव सूत्रेण तेन तुल्यमित्यनेनात्र वतिप्रत्ययसिद्धौ तदर्हमिति सूत्रस्यानारम्भ इति ॥ ५६१ ॥

कथं भेदपरिकल्पनेत्याह—एकस्य कार्यनिर्ज्ञानादिति।

**एकस्य कार्यनिर्ज्ञानात् सिद्धस्य विषयान्तरे ।**
**तद्धर्मत्वविवक्षायां बुद्धया भेदः प्रकल्प्यते ॥ ५६२ ॥**

एकस्याप्यर्थस्य विषयान्तरे निर्ज्ञातकार्यस्य यत्र विषयान्तरेऽन्यस्मिन् विषये तद्धर्मत्वं तत्कार्यकरणशक्तत्वं यदा विवक्षितं भवति, तदा तत्कार्यकरणनिमित्तया कल्पनया बुद्धया नानात्वं समारोप्यते । तथा च नानात्वस्यावस्थापनान्निजाच्चाभेदाद् भेदाभेदाश्रयमुपमानोपमेयत्वमुपपद्यते ।

तथा हि—यथा भवानन्यस्मिन् रणे पूर्वत्राभ्यासवशाद्धस्तलाघवेनाच्छैत्सीत्, तथा तेन तुल्यमन्यदापि च्छिनत्तीति । एवं पूर्वापरकालतया कार्यभेदात् प्रसिद्धय्प्रसिद्धिभ्यां च भेदकल्पनया 'चिच्छेद कृतहस्तवत्' इत्येकत्राप्युपमानोपमेयभावोपपत्तौ सिद्धः पूर्वेणैव वतिः । तथा सामान्यवचनेऽपि राजशब्दे निर्ज्ञातविशेषवृत्तौ वा विषयान्तरे दृष्टेन धर्मेण प्रसिद्धेनप्रसिद्धस्योपमानम् । यानि वा भूतपूर्वाणां राज्ञां प्रेतकार्याणि तत्तुल्यतया पाण्डोरपि विधत्स्वेत्यर्थः ॥ ५६२ ॥

---

अस्यार्थः—एकस्यार्थस्य विषयान्तरे कार्यनिर्ज्ञानात्=स्वकार्यसंबन्धनिर्णयात्, सिद्धस्य=ज्ञातस्य, निर्ज्ञातकार्यस्येति यावत् । विषयान्तरे=अन्यस्मिन् विषये, तद्धर्मत्वविवक्षायाम्=तत्कार्यक्रियाशक्तत्वविवक्षायां बुद्धया=तत्कार्यक्रियानिमित्तया कल्पनारूपया बुद्धया भेदो नानात्वमेकस्मिन्नपि प्रकल्प्यते=समारोप्यते । तथा च नानात्वस्यारोपान्निजाच्चाभेदाद् भेदाभेदाश्रय उपमानोपमेयभाव एकस्मिन्नपि उपपद्यते । राजवत्प्रेतकार्याणि विधत्स्वेति ।

अयं भावः - एकस्याप्यर्थस्यार्जुनाःविषयान्तरे=पूर्वकालिकेऽन्यस्मिन् युद्धे कृतहस्ततया निर्ज्ञातशत्रुशिरच्छेदरूपकार्यस्य यत्र विषयान्तरे=अन्यस्मिन् विषये युद्धान्तरे, तद्धर्मत्वम्=तत्कार्यकरणशक्तत्वम्=कृतहस्ततयाऽऽशुशत्रुशिरच्छेदरूपपूर्वनिर्ज्ञातकार्यकरणशक्तत्वं यदा विवक्षितं भवति, तदा तत्कार्यकरणनिमित्तया कल्पनारूपया बुद्धया एकस्मिन्नपि अर्जुने नानात्वं समारोप्यते । तथा चैकस्मिन्नपि नानात्वस्यारोपेणावस्थापनात् । निजाच्चाभेदाद् भेदाभेदाश्रय उपमानोपमेयभाव उपपद्यते ।

तथाहि—यथा भवान् अन्यस्मिन् रणे पूर्वत्राभ्यासवशाद् हस्तलाघवेन शत्रूणां शिरांसि शरान् ज्याश्च युगपदच्छैत्सीत्, तथा तेन तुल्यमन्यदाऽपि तानि च्छिनत्तीति । एवं पूर्वापरकालिकतया कार्यभेदात्, प्रसिद्धयप्रसिद्धिभ्याञ्च कार्यभेदकल्पनया चिच्छेद । कृतहस्तवदित्येकस्मिन्नपि धानुष्के उपमानोपमेयभावोपपत्तौ पूर्वेणेव सूत्रेणात्र वतिः सिद्धः । तथा राजसामान्यवचनेऽपि राजशब्दे, विषयान्तरे निर्ज्ञातविशेषवृत्तौ वा राजशब्दे प्रयुक्ते सति राजसामान्ये एकस्मिन्नेव वा दृष्टेन धर्मेण प्रसिद्धेन तद्धर्मवत्तयाऽप्रसिद्धस्योपमानम् । अथवा यानि भूतपूर्वाणां राज्ञां प्रेतकार्याणि तानि विधत्स्वेत्यर्थ इति ॥ ५६२ ॥

अवश्यं चैतदेवं विज्ञेयम् । अन्यथा सूत्रारम्भे वतिर्भवतु । इवशब्दस्तु भेदाभावादत्र न स्यादित्याह—

**सूत्रारम्भान्न चैतस्मादिवशब्दस्य विद्यते ।**
**प्रयोगः सोऽपि चैतस्य विषये विद्यते वतेः ॥ ५६३ ॥**

क्रियमाणे सूत्रे वचनात् प्रत्ययो लभ्यते । इवशब्दप्रयोगस्तु प्रसिद्धाद् भेदपरिकल्पनामन्तरेण न घटनामेतीत्यावश्यकोऽत्र भेदः ॥ ५६३ ॥

दृश्यते च परिकल्पितभेदेऽन्यत्रापीवशब्द इत्याह—

**दस्युहेन्द्र इवेत्येतदैन्द्रे मन्त्रे प्रयुज्यते ।**
**अन्यत्र दृष्टकर्मेन्द्रो यथेत्यस्मिन् विवक्षिते ॥ ५६४ ॥**

इन्द्र इव ह्युपस्तूयसे । इन्द्र इव दस्युहा भव, क्षेत्राणि सृजेत्यत्रेन्द्रदेवताके मन्त्रे दृष्टोऽयमिवशब्दो नानात्वाध्यारोपेणोपमानोपमेयभावं द्योतयति ।

---

अवश्यञ्चैतत्=चिच्छेद कृतहस्तवत्, राजवत् प्रेतकार्याणि कारय इत्यादिकम् । एवम् = एकत्रापि पूर्वापरकालतया कार्यभेदात् प्रसिद्धप्रसिद्धिभ्याञ्च भेदकल्पनया विज्ञेयम् । अन्यथा सूत्रारम्भे वतिर्भवतु । इव शब्दप्रयोगस्तु एकत्र भेदाभावान्न स्यादित्याह—सूत्रारम्भादिति ।

अस्यार्थः—सूत्रारम्भात्=तदर्हमिति सूत्रारम्भसामर्थ्याद्, चिच्छेद कृतहस्तवत्, राजवत् प्रेतकार्याणि कारय इत्यादौ एकत्रापि वतिर्विद्यते=लभ्यते । 'विद्लृ लाभे' इत्यस्य तौदादिकस्येदं कर्मणि प्रत्यये रूपम् । भेदकल्पनानभ्युपगन्तुस्तु अत्र कर्तृत्वम् । एकत्रार्थे इवशब्दस्य प्रयोगश्च=तु, न एतस्मात् सूत्रारम्भसामर्थ्याद् विद्यते = लभ्यते तेन वादिना । एतस्य=''तदर्हम्'' इति सूत्रविहितस्य वतेर्विषये सोऽपि च=इवशब्दप्रयोगोऽपि च, विद्यते=अस्ति, दस्युहेन्द्र इवेत्यादौ ऐन्द्रे मन्त्रे । इदञ्च सत्तार्थकस्य विद्यतेः कर्तरि रूपम् । अर्थभेदादेव च विद्यते इत्यस्य पुनरुपादानम् । अत एव न पुनरुक्तिरिति ।

अयं भावः—क्रियमाणे ''तदर्हम्'' ( पा० ५।१।११७ ) इति सूत्रे वचनात्=सूत्ररूपवचनारम्भसामर्थ्याद् वतिप्रत्ययो लभ्यते एकत्राप्यर्थे पूर्वोदाहृते । एकत्रार्थे इवशब्दस्तु तत्कार्यकर्तृत्वेन प्रसिद्धात् तथाऽप्रसिद्धस्य भेदकल्पनामन्तरेण=विना न वाक्ये घटनामेति आवश्यकोऽत्र =एकत्रार्थे कल्पितो भेद इति ॥ ५६३ ॥

दृश्यते च परिकल्पितभेदे एकत्रार्थेऽन्यत्रापि इवशब्द इत्याह—दस्युहेन्द्र इवेति ।

अस्यार्थः—हे इन्द्र यथा त्वमन्यत्र दृष्टकर्मा दृष्टशत्रुनिपातनरूपकर्मा इन्द्रो भूतः, तथा अत्रापि भवेति अस्मिन्नर्थे विवक्षिते एकत्रार्थे इन्द्र इवेन्द्र इति प्रसिद्धप्रसिद्धिकृता दृष्टादृष्टकार्यभेदाद् भेदपरिकल्पना दस्युहेन्द्र इवेत्येतदैन्द्रे=इन्द्रदेवताके मन्त्रे प्रयुज्यते । अत्र च मन्त्रे इन्द्र एव देवता रूपेण स्तुत्य इति उपमेयान्तराभावेन नैकस्मिन् पूर्वोक्तरीत्या भेदपरिकल्पनं विना उपमानोपमेयभावनिर्वाह इति ।

अयं भावः—''इन्द्र इव ह्युपस्तूयसे, इन्द्र इव दस्युहा भव, क्षेत्राणि सृज'' इत्यत्रेन्द्रदेवताके मन्त्रे दृष्टोऽयमिवशब्द एकत्रार्थे प्रागुक्तरीत्या नानात्वाध्यारोपेण उपमानोपमेयभावं द्योतयति ।

तथाहि—इन्द्र एवेन्द्र इवेत्यत्रोपमीयते । नानात्वं च विषयान्तरे निर्ज्ञातकार्यस्य विषयान्तरे तद्धर्मत्वविवक्षायामत्र ।

ततश्चायमर्थः—यथा त्वमन्यत्रेन्द्रस्तस्करनिपातनव्यापारो भूतः, तथेहापि भवेति इन्द्रः इवेन्द्रः प्रसिद्ध्यप्रसिद्धिकृताद् दृष्टादृष्टकार्यभेदाद् भेदपरिकल्पनया कथ्यते ॥ ५६४ ॥

अत्रैव लौकिकमप्युदाहरणमाह—

**पूर्वामवस्थामाश्रित्य यावस्था व्यपदिश्यते ।**
**सदृशस्त्वं तवैवेति तत्रैवमभिधीयते ॥ ५६५ ॥**

अवस्थाभेदेन पदार्थभेदमाश्रित्य सादृश्यसम्प्रत्ययो दृष्टः । तद्यथा यौवनावस्थां चारुत्वातिशयवतीं प्रसिद्धामाश्रित्यान्या स्थाविरावस्थोपमीयते, तवैव सदृशस्त्वमिति । अवस्थाभेदे ह्यवस्थावतो भेदमाश्रित्य त्वया तुल्यस्त्वमित्येक एवोपमीयते ॥ ५६५ ॥

तदयमत्र सङ्क्षेपः—

---

तथाहि—इन्द्र एव इन्द्र इवेत्यत्रोपमीयते । नानात्वञ्च विषयान्तरे निर्ज्ञातकार्यस्य=तत्कार्यकर्तृत्वेन निर्ज्ञातस्य विषयान्तरे तद्धर्मत्वविवक्षायाम्=तत्कार्यकर्तृत्वविवक्षायाम् अत्र=अर्थैकत्वे ।

ततश्चायमर्थः—यथा त्वमन्यत्रेन्द्रस्तस्करनिपातनव्यापारः=तस्करनिपातनकर्मा भूतः, तथेहापि भवेति इन्द्र इवेन्द्रः प्रसिद्धयप्रसिद्धिकृताद् दृष्टादृष्टकार्यभेदाद् भेदपरिकल्पनया कथ्यते इति ॥ ५६४ ॥

अत्रैव=एकस्मिन्नर्थे नानात्वाध्यारोपे एव लौकिकमप्युदाहरणमाह—पूर्वामवस्थामाश्रित्येति ।

अस्यार्थः—पूर्वामवस्थां यौवनावस्थां चारुत्वातिशयवतीमाश्रित्य=उपमानत्वेनापेक्ष्य, याऽन्यावस्था स्थाविरावस्था उपमेयत्वेन व्यपदिश्यते । तत्र तवैव सदृशस्त्वमित्येवमेकस्मिन्नपि पूर्वापरकालतया कार्यभेदाद् प्रसिद्धयप्रसिद्धिभेदाच्च नानात्वाध्यारोपेणोपमानोपमेयभावं परिकल्प्य अभिधीयते इति योजना ।

अयं भावः—अवस्थाभेदेन तदाश्रयपदार्थभेदमाश्रित्य सादृश्यसंप्रत्ययो दृष्टः । तद् यथा यौवनावस्थां चारुत्वातिशयवतीमाश्रित्य=स्वगतान्यत्वप्रतियोगित्वेन, स्वगतोपमेयत्वरूपकत्वेन चापेक्ष्य अन्या स्थाविरावस्था उपमीयते, तवैव सदृशस्त्वमिति । अवस्थाभेदे हि अवस्थावतो भेदमाश्रित्य त्वया तुल्यस्त्वमेवेत्येक एवोपमीयत इति ॥ ५६५ ॥

तदयमत्र=एकस्योपमानोपमेयभावविषये संक्षेप इत्याह—प्रसिद्धभेदं यत्रेति ।

**प्रसिद्धभेदं यत्रान्यदुपमानं न विद्यते ।**
**उपमेयस्य तत्रात्मा स्वबुद्ध्या प्रविभज्यते ॥ ५६६ ॥**

वास्तवे भेदेऽसति स्तुत्यतिशयविवक्षयानन्वयालङ्कारमुखेनैकस्यैवोपमानोपमेय-भावः प्रतीतचरः । तद्यथा—

'रामरावणयोर्युद्धं रामरावणयोरिव' इति ।

एवं नान्यो भवतः सदृशः सम्भवति, यदि परस्त्वमेवात्मनः सदृश इत्युपमा-नान्तरासम्भवेन स्तूयतेऽर्थः । तत्र च बुद्धिपरिकल्पनया भेदः समवलम्बनीयः । तदेवं काल्पनिकस्य भेदस्य राजेव त्वं राजेतीवशब्दप्रयोगान्यथानुपपत्त्यावधारित्वात् पूर्वेणैव सिद्धेः प्रत्याख्यानं सिद्धम् ॥ ५६६ ॥

तत्रैतत् स्यात्—गौणोऽयं विषयः । पूर्वसूत्रस्य सति च मुख्ये वास्तवभेदविषये कथमत्र प्रवृत्तिरित्याशङ्क्याह—

**योऽपि स्वाभाविको भेदः सोऽपि बुद्धिनिबन्धनः ।**
**तेनास्मिन् विषये भिन्नमभिन्नं वा न विद्यते ॥ ५६७ ॥**

---

अस्यार्थः—यत्रोपमेयात् प्रसिद्धभेदमन्यदुपमानं न विद्यते, तत्रोपमेयस्यात्मास्वरूपम्, स्वबुद्ध्या=अवस्थाभेदप्रयुक्तावस्थावदभेदविषयिण्या उपमेयप्रविभागे करणभूतया प्रविभज्यत इति ।

अयं भावः—वास्तवे भेदेऽसति स्तुत्यतिशयविवक्षायामनन्वयालंकारमुखेन एकस्यैवोपमा-नोपमेयभावः । तद् यथा—

गगनं गगनाकारं सागरः सागरोपमः ।
रामरावणयोर्युद्धं रामरावणयोरिव ॥ इति ।

एवं नान्यो भवतः सदृशः संभवति, यदि परो न संभवति, तदा त्वमेवात्मनः सदृश इत्युपमाना-न्तरासंभवेन स्तूयतेऽर्थः । तत्र च=एकस्योपमानोपमेयभावे च बुद्धिपरिकल्पनया भेदः समवलम्ब-नीयः । तदेवं राजेव त्वं राजा इत्यादौ इवशब्दप्रयोगान्यथाऽनुपपत्त्या काल्पनिकस्य भेदस्याव-धारितत्वात् पूर्वेणैव="तेन तुल्यम्" (पा० ५।१।११५) इति सूत्रेणैव प्रागुक्तरीत्या वतिप्रत्यय-सिद्धेः तदर्हमिति सूत्रस्य प्रत्याख्यानं सिद्धमिति ॥ ५६६ ।

तत्र="तदर्हम्" ( पा० ५।१।११७ ) इति सूत्रप्रत्याख्याने सिद्धे एतत् स्यात्=वक्ष्य-माणं संभाव्यते । गौणोऽयं विषयः=चिच्छेद क्षतहस्तवद्, राजवद् वृत्तं तवेत्यादिकोऽयं 'तेन तुल्यम्' इत्यस्य विषयो गौणः, यतोऽत्रैकस्मिन् उपमानोपमेयभावः कालभेदेनावस्थाभेदेन कार्यभेदेन चैकस्यैव भेदकल्पनया कृतः । 'ब्राह्मणेन तुल्यं ब्राह्मणवदधीते क्षत्रियः' इत्यादिके सति च मुख्ये वास्तवभेदविषये पूर्वसूत्रस्य कथमत्र गौणे विषये प्रवृत्तिः, "गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः" ( परि० १५ ) इति न्यायादित्याह—योऽपि स्वाभाविक इति ।

अस्यार्थः—योऽपि स्वाभाविकः=वस्तुस्वभावसिद्धः, वस्तुनि संनिविष्टो भेदो वस्तुभूतः, सोऽपि बुद्धिनिबन्धनः=बुद्धिरेव व्यवहारप्रवर्तने निबन्धनं निमित्तं प्रयोजिका यस्य स तथा, भेद-

योऽपि वस्तुसन्निवेशी भेदः, सोऽपि बुद्ध्युपारूढ एव भेदव्यवहारं वर्तयतीति बुद्धेरेवात्र स्वातन्त्र्यादस्मिन् शब्दव्यवहारे वस्तुतो नाना एकं वा न सम्भवति, अभिन्नेऽपि बुद्ध्या भेदाद् भिन्नेऽपि चाभेदसमारोपेण व्यवहारात् तानेव शालीन् भुञ्ज्महे इति। उपमायां च बुद्धिपरिकल्पितभेदस्य हेतुत्वं प्रागेव प्रतिपादितम् ॥ ५६७ ॥

अत्रैव भाष्यकारीयं संवादमाह—

**अङ्गदी कुण्डली चेति दर्शयन् भेदहेतुभिः ।**
**चैत्रमीदृश इत्याह बुद्ध्यवस्थापरिग्रहात् ॥ ५६८ ॥**

"उपदेशेऽजनुनासिकः" ( पा० १।३।२ ) इत्यत्र गुणैः परिप्रापणमुद्देश इत्युद्देशलक्षणस्येदमुदाहरणं भाष्ये—'अङ्गदी कुण्डली व्यूढोरस्कस्ताम्रायताक्षो वृत्तबाहु-

---

बुद्धिरेव भेदव्यवहारप्रवर्तिका, न तु भेद इति कल्पितस्यापि भेदस्य भेदव्यवहारनिमित्तत्वं संभवति। तेन बुद्ध्युपारूढस्यैव भेदस्य कल्पितस्याकल्पितस्य वा भेदव्यवहारप्रवर्तकत्वेन, अस्मिन् विषये उपमानोपमेयभावविषये शब्दव्यवहारे, भिन्नमभिन्नं वा उपमेयमुपमानं वा वस्तुभूतं न विद्यते, किन्तु बुद्ध्युपारूढमेव कल्पितमकल्पितं वा उपमानमुपमेयं वा उपमानोपमेयभावविषय इति।

अयं भावः—योऽपि वस्तुसंनिवेशी वस्तुभूतो भेदः, सोऽपि स्वविषयकबुद्ध्युपारूढ एव भेदव्यवहारं शाब्दं प्रवर्तयति इति बुद्धेरेव अत्र=भेदव्यवहारे शाब्दे स्वातन्त्र्याद् अस्मिन् शाब्दे भेदव्यवहारे तन्मूलके चोद्यमानोपमेयव्यवहारे वस्तुतो नाना एकं वा न संभवति, अभिन्नेऽपि बुद्ध्याभेदात्, यथा मन्दान्धकारे देवदत्ते नायं देवदत्तः इति भेदबुद्धिः। भिन्नेऽपि चाभेदसमारोपेण व्यवहारात्। यथा—ये पुरा भुक्ताः तानेव शालीन् भुञ्ज्महे इति। उपमायाञ्च बुद्धिपरिकल्पितभेदस्य हेतुत्वं प्रागेव प्रतिपादितमिति ॥ ५६७ ॥

अत्रैव=बुद्धिपरिकल्पितस्य भेदस्य एकस्मिन्नर्थे भेदव्यवहारप्रवृत्तौ हेतुत्वमित्यत्रैव भाष्यकारीयं संवादमाह—अङ्गदी कुण्डली चेति।

अस्यार्थः—अङ्गदी कुण्डली चेति=अङ्गदी कुण्डली व्यूढोरस्कस्ताम्रायताक्षो वृत्तबाहुरित्येतैरेकस्मिन्नपि चैत्रभेदहेतुभिरङ्गदादिभिर्बुद्ध्यवस्थापरिग्रहात्=बुद्धेर्या विषयभेदेन भिन्ना अवस्थास्तासां परिग्रहाद् भिन्नत्वेन चैत्रं दर्शयन् भाष्यकारश्चैत्रम् ईदृश इत्याह—अङ्गदित्वादिभिर्धर्मैरुपलक्षितो यस्तदानीं बुद्धौ स्फुरति तेन सदृश इत्याहेति।

अयं भावः—"उपदेशेऽजनुनासिक इत्" ( पा० २।३।३ ) इति सूत्रे गुणैः परिप्रापणमुद्देश=गुणैर्वस्तुविज्ञापनमुद्देशः इत्युद्देशलक्षणस्येदमुदाहरणं भाष्ये—'अङ्गदी कुण्डली व्यूढो-

रीदृशो देवदत्त' इति। तत्र गुणैरङ्गदित्वादिभिरवच्छेदकैर्देवदत्तमेव लक्षयन्नीदृशोऽनेन तुल्य इत्याचष्टे। तत्र नान्येन तुल्यो विवक्षितः। किं तर्हि, अङ्गदित्वादिभिधर्मैरुपलक्षितो यो बुद्धौ तदानीं परिस्फुरति, तेन सदृश इत्यभिमतम्।

अतश्च बुद्धिप्रतिबिम्बेन बाह्यस्य सारूप्याभिधानाद् बुद्धिसमारोपितभेदः स्फुटमेवोपमानोपमेयभाव उक्तः॥ ५६८॥

किमेवमभिधाने फलमित्याह—

**एतैः शब्दैर्यथाभूतः प्रत्ययात्मोपजायते।**
**तत्प्रत्ययानुकारेण विषयोऽप्युपपद्यते॥ ५६९॥**

अङ्गदीत्यादिभिः शब्दैर्यदर्थावभासो ज्ञानविशेष उद्भवति, तदाकारसादृश्येन बाह्योऽर्थोऽवबुद्ध्यते। ज्ञानाकारस्यैव बाह्यत्वेन व्यवहर्तृभिरध्यवसायात्।

तदिदमत्र तात्पर्यम्—अङ्गदित्वादिभिर्धर्मैराच्छुरितो बुद्धावाकारो यमर्थं बाह्यं पश्यतस्ते समुद्गच्छति, स त्वया देवदत्त इति व्यवहर्तव्य इति दृश्यविकल्पयोरभेदाध्यवसायेन व्यवहारसिद्धिः॥ ५६९॥

---

रस्कस्ताम्रायताक्षो वृत्तबाहुरीदृशो देवदत्तः'' इति। तत्र गुणैरङ्गदित्वादिभिरवच्छेदकैः=भेदकैः देवदत्तमेव लक्षयन् ईदृशोऽनेन तुल्य इत्याचष्टे। तत्र नान्येन तुल्यो विवक्षितः, किं तर्हि अङ्गदित्वादिभिर्धर्मैरुपलक्षितो यस्तदानीं बुद्धौ स्फुरति तेन सदृश इत्यभिमतम्।

अतश्च बुद्धौ प्रतिबिम्बितेन देवदत्तरूपेण बाह्यस्य देवदत्तस्य सादृश्याभिधानाद् बुद्धिसमारोपितभेदवत्येव उपमानोपमेयभावः स्फुटमुक्त इति॥ ५६८॥

किमेवमभिधाने=एकस्यैव वस्तुनो बुद्धिप्रतिबिम्बितेन स्वेनैव रूपेण सह भेदाभिधाने फलमित्याह—एतैः शब्दैर्यथाभूत इति।

अस्यार्थः—एतैः शब्दैः=अङ्गदीत्यादिभिः शब्दैः यथाभूतः=यादृशाकारः, प्रत्ययात्मा =ज्ञानस्वरूपम् उपजायते। तत्प्रत्ययानुकारेण तत्प्रत्ययाकारसादृश्येन विषयोऽपि=बाह्योऽर्थोऽपि उपपद्यते तत्प्रत्ययाकारवानेव उपजायते। एवम् अङ्गदी कुण्डली व्यूढोरस्कस्ताम्रायताक्षो वृत्तबाहुरित्यत्र तत्तच्छब्दजन्यप्रत्ययाकारभेदादेकस्यापि देवदत्तस्य बाह्यविकल्पयोरभेदाध्यासेन भेदे ईदृशो देवदत्त इति एकस्मिन्नेव उपमानोपमेयभावोपपत्तिरिति।

अयं भावः—अङ्गदी कुण्डलीत्यादिभिः शब्दैर्यदर्थावभासः=यदर्थाकारो ज्ञानविशेष उद्भवति, तदाकारसादृश्येन बाह्येऽर्थे तदाकाराभेदाध्यारोपेण बाह्योऽर्थस्तदाकारेणावबुध्यते। ज्ञानाकारस्यैवान्तरस्य बाह्यत्वेन व्यवहर्तृभिरध्यवसायात्।

तदिदमत्र तात्पर्यम्—यमर्थं बाह्यं पश्यतस्ते बुद्धौ अङ्गदित्वादिभिर्धर्मैराच्छुरित आकारः समुद्गच्छति, स बाह्यार्थतादात्म्यापन्न आकारस्त्वया देवदत्त इति व्यवहर्तव्य इति दृश्यविकल्पयोः=बाह्यार्थप्रत्ययाकारयोरभेदाध्यासेन व्यवहारसिद्धिः। तथा च बाह्यार्थस्यैकत्वेऽपि प्रत्ययाकारनानात्वेन बाह्यार्थेऽपि एकस्मिन् भेदसिद्ध्या उपमानोपमेयभावसिद्धिरिति॥ ५६९॥

तस्मात् काल्पनिक एव भेदः सर्वत्रोपयोगीति व्याप्तिमाह—

**बुद्ध्यवस्थाविभागेन भेदकार्यं प्रतीयते ।**
**जन्यन्त इव शब्दानामर्थाः सर्वे विवक्षया ॥ ५७० ॥**

यद्यच्छास्त्रे भेदकार्यम्, तत् तद् बुद्धिकृतभेदावलम्बनम् । तथा हि—कारकव्यवहारो बुद्ध्यवस्थानिबन्धनोऽभिहितो व्यपदेशिवद्भावाच्चैकाचो द्विर्वचनमित्याद्यनुसन्धेयम् ।

युक्तं चैतत्, यतो बहिः सदसत्त्वमनपेक्ष्यैव विवक्षाप्रापितसंनिधानेऽर्थे कृतपदबन्धाः शब्दाः । तथा च प्रयोक्त्रभिसन्धानेन शब्दानामर्थप्रादुर्भावोऽवतिष्ठते । चिरातीतानामपि कंसादीनां प्रत्ययोपहृतसदाकाराणां प्रयोज्यप्रयोजकभावव्यवस्थायां कंसं घातयति, बलिं बन्धयतीत्यादिप्रयोगप्रवृत्तेः ॥ ५७० ॥

तस्माच्छब्दार्थो न वस्त्वर्थ इत्याह—

**तथाविधेऽपि बाह्येऽर्थे भिद्यन्ते यत्र बुद्धयः ।**
**न तत्र कश्चित् सादृश्यं सदपि प्रतिपद्यते ॥ ५७१ ॥**

---

तस्मात्=सर्वस्यैव व्यवहारस्य काल्पनिकभेदप्रयुक्तत्वात् काल्पनिक एव भेदः सर्वत्रोपयोगी इति व्याप्तिः व्याप्तेराकारश्च—यो यो व्यवहारः स सर्वोऽपि काल्पनिकभेदहेतुक इति इत्याह—बुद्ध्यवस्थाविभागेनेति ।

अस्यार्थः—यद् यद् भेदकार्यं शास्त्रे कारकव्यवहारो वा व्यपदेशिवद्भावेनैकस्मिन् एकाच्त्वादिव्यवहारो वा तत्सर्वं बुद्ध्यवस्थाविभागेन=तत्तत्कारकशक्तिविवक्षारूपा एकाच्त्वादिविवक्षारूपा च या बुद्ध्यवस्था तस्या विभागेन भेदेन शास्त्रे व्याकरणे प्रतीयते । यतो बुद्ध्यवस्थाविशेषरूपया विवक्षया शब्दानां तत्तदाकारा अर्था जन्यन्ते इव इति । शास्त्रे सर्वं भेदप्रयुक्तं कार्यं बुद्धिकृतार्थभेदनिबन्धनमिति निष्कर्षः ।

अयं भावः—यद् यच्छास्त्रे अर्थभेदकार्यं कारकव्यवहारैकाच्त्वादिव्यवहारादिकं तत्सर्वं बुद्धिकृतार्थभेदावलम्बनम् । तथा हि—कारकव्यवहारो बुद्ध्यवस्था विशेषरूपविवक्षा निबन्धनोऽभिहितो भाष्ये । बुद्ध्यवस्थाविशेषरूपविवक्षाप्रयुक्ताद् व्यपदेशिवद्भावाच्चैकाचो द्विर्वचनमित्यादिकमनुसन्धेयम् ।

युक्तश्चैतत्—यतोऽर्थानां बहिःसदसत्त्वमनपेक्ष्यैव विवक्षा प्रापितसंनिधानेऽर्थे कृतपदबन्धाः =कृतपदन्यासाः स्थिताः शब्दाः तादृशमर्थं बहिःसन्तमसन्तं वा बोधयन्ति । तथा च प्रयोक्त्रभिसन्धानेन=प्रयोक्तृसमवेतया तत्तदर्थविवक्षया शब्दानामर्थप्रादुर्भावोऽवतिष्ठते । चिरातीतानामपि कंसादीनां प्रत्ययोपहृतसदाकाराणाम्=बुद्धिसंनिधापितसदाकाराणां विवक्षायत्तायां प्रयोज्यप्रयोजकभावव्यवस्थायां सत्यम् 'कंसं घातयति' 'बलिं बन्धयति' इत्यादिप्रयोगप्रवृत्तेरिति ॥ ५७० ॥

तस्मात्= विवक्षाप्रापितार्थस्य शब्दवाच्यत्वात् शब्दार्थः=शब्दबोध्योऽर्थः, न वस्त्वर्थः= न परमार्थ इत्याह—तथाविधेऽपीति ।

व्यक्त्यन्तरसादृश्येष्वप्यर्थेषु साधारणधर्मावलम्बना यावद् बुद्धयो न जाताः, तावत् सदप्यनङ्गीकृत्य सादृश्यमत्यन्तव्यावृत्ताकारबुद्धिपरिच्छेद्यतया न कश्चित् प्रतिपत्ता साम्यमवगच्छति। गवयसंस्थानानुपलम्भे हि गवि न तत्सदृश-प्रत्ययः ॥ ५७१ ॥

अत्यन्तव्यावृत्ते च बुद्धिसमारोपिताभेदाश्रयो भवति सम्प्रत्यय इत्याह—

**अत्यन्तं विषये भिन्ने यावत् प्रख्या न भिद्यते।**

**न तावत् प्रत्यभिज्ञानं कस्यचिद् विनिवर्तते ॥ ५७२ ॥**

अत्यन्तव्यावृत्तायामपि व्यक्तौ बुद्धेर्भिन्नाया अनुत्पत्तावन्वयिधर्माच्छुरणयाऽभेदावसाये स एवायमित्येकाकारपरामर्शोऽविचलः समुदेति।

---

अस्यार्थः—तथाविधेऽपि=तादृशेऽपि व्यक्त्यन्तरसादृश्यवत्यपि बाह्येऽर्थे व्यक्त्यन्तररूपे जात्या समाने यत्र बुद्धयो व्यावृत्ताकारविषयालम्बना भिद्यन्ते तत्र कश्चित् प्रतिपत्ता सदपि सादृश्यं शब्देनानभिधीयमानं न प्रतिपद्यते।

तथा चायमत्र निष्कर्षः—विद्यमानमपि सादृश्यं शब्देनानभिधीयमानं न प्रतीयते। साधारणधर्मावलम्बनाया बुद्धेरभावात्। अविद्यमानोऽपि अत्यन्तव्यावृत्त आकारः शब्देनाभिधीयमानो बुद्ध्यापरिच्छिद्यत इति न शब्दार्थो वस्त्वर्थ इति।

अयं भावः—व्यक्त्यन्तरसादृश्यवत्स्वप्यर्थेषु यावत् साधारणधर्मालम्बना बुद्धयो न जाताः, तावत् सदपि सादृश्यमप्रत्ययादनङ्गीकृत्य कश्चिदपि प्रतिपत्ताऽर्थस्यात्यन्तव्यावृत्ताकार-बुद्धिपरिच्छेद्यतया न साम्यमवगच्छति। गवि गवयसंस्थानरूपसाधारणधर्मानुपलम्भे हि न तत्र तत्साम्यसंप्रत्यय इति ॥ ५७१ ॥

अत्यन्तव्यावृत्ते च घटपदादौ विषये बुद्धिसमारोपिताभेदाश्रयः=भ्रान्तिरूपया बुद्ध्या भिन्ने विषये समारोपितो योऽभेदस्तदाश्रयस्तन्निमित्तको भवति चाभिन्नत्वेन संप्रत्ययः—पटोऽपि—घट इति। किञ्च प्रत्युच्चारणं भिन्नेऽपि गकारे सोऽयं गकार इति इत्याह—अत्यन्तं विषये भिन्ने इति।

अस्यार्थः—अत्यन्तं भिन्नेऽपि विषये गकारादौ वर्णे, यावत् तारोऽयम्, मन्द्रोऽयम्, ह्रस्वोऽयं दीर्घोऽयमित्यादिका प्रख्या बुद्धिर्न भिद्यते=भिन्ना समुत्पद्यते, तावत् कस्यचिदपि पुरुषस्य स एवायं गकार इति प्रत्यभिज्ञानं न विनिवर्तते।

तथा चायमत्र निष्कर्षः—भिन्नेऽपि अभेदप्रत्ययो भ्रान्तिरूपः, शाब्दश्च विवक्षया भवति। रूपके च स्फुट एव भिन्नेऽपि अभेदप्रत्ययो विवक्षाधीन इति।

अयं भावः—जात्या समानाद् व्यक्त्यन्तराद् अत्यन्तव्यावृत्तायामपि गकारादिव्यक्तौ घटादिव्यक्तौ च अन्वयि गत्वादिघटत्वादिधर्माच्छुरणया तत्र भिन्नाया बुद्धेरनुत्पत्तौ अभेदावसाये=अभेदप्रत्यये जाते स एवायमित्येकाकारपरामर्शोऽविचलः=अबाधितः समुदेति।

तथाहि—मन्दालोके देशे दूराद्वा रूपमात्रेणार्थावधारणाद् विवेकानवसाये पूर्वदृष्टाकारानुसन्धानेनाभेदेनावसायः। निकटे स्फीतालोकेऽपि च प्रथमाक्षसन्निपाते झटिति पूर्ववासनोद्बोधात् स एवायमिति प्रत्यभिज्ञोत्पत्तिः। एवं देवदत्तयज्ञदत्तयोर्भेदमनवसायैक्यप्रतिपत्तिः॥ ५७२॥

तदेवं भेदाभेदव्यवहारस्य बहिः सदसत्त्वपरामर्शोऽनुपकारक इति प्रत्ययप्रतिभासिना भेदाकारेण सम्भवत्येकस्यैवोपमानोपमेयभाव इति राजवद् वृत्तमित्यादेः पूर्वेणैव सिद्धावबुधबोधनार्थं 'तदर्हम्' इत्यस्यारम्भ इत्याह—

**अयमेव तु सूत्रेण भेदो भेदेन दर्शितः।**
**प्रसिद्धमपि दुर्ज्ञानमबुधः प्रतिपद्यते॥ ५७३॥**

अयमेव बुद्ध्यवस्थाश्रयो भेदव्यवहारो योगारम्भेण व्युत्पाद्यते, वास्तवाद् भेदादयमन्यो भेद इति भेदेन पृथक्त्वेन ख्यापितः सूत्रारम्भेण। नहि सर्वः स्वयमेवं-

---

तथाहि—मन्दालोके देशे दूराद्वा स्वरूपमात्रेणार्थावधारणाद् विवेकानवसाये=विशेषानवसाये=विशेषानवधारणे पूर्वदृष्टाकारानुसंधानेन=अनुसंहितपूर्वदृष्टाकारेण सह अभेदेनावसायः=निश्चयात्मकः प्रत्ययः। निकटे स्फीतालोकेऽपि च=प्रवृद्धप्रकाशेऽपि च प्रथमाक्षसंनिपाते अत्यन्तव्यावृत्तायामपि व्यक्तौ साधारणधर्मदर्शनेन झटिति पूर्ववासनोद्बोधात् स एवायमिति प्रत्यभिज्ञोत्पत्तिः। एवं सदृशसंस्थानदर्शनेन देवदत्तयज्ञदत्तयोरैक्यप्रतिपत्तिरिति। तदेवमेकस्मिन्नपि विवक्षया भ्रान्त्या च भेदोपपादनेन उपमानोपमेयभावे उपपादिते "तेन तुल्यम्" (पा० ५।१।११५) इति सूत्रेणैव राजवद् वृत्तमित्यादौ वतिप्रत्यये सिद्धे "तदर्हम्" (पा० ५।१।११७) इति सूत्रमापिशलादिव्याकरणेऽनुपात्तं मन्दप्रज्ञानामेतस्यार्थस्य बुद्ध्यगोचरत्वेन पाणिनिना तदर्थं निर्मितं प्रत्याख्यानं भाष्ये इति स्थितमिति॥ ५७२॥

तदेवमर्थानां बहिःसदसत्त्वपरामर्शो भेदाभेदं व्यवहारस्यानुपकारक इति विवक्षाजनितप्रत्यवभासिना भेदाकारेण भवत्येकस्यापि उपमानोपमेयभाव इति राजवद् वृत्तम्, चिच्छेद कृतहस्तवद् इत्यादेः पूर्वेणैव सूत्रेणैव सिद्धौ अबुधबोधनार्थम् "तदर्हम्" (पा० ५।१।११७) इति सूत्रस्यारम्भ इत्याह—अयमेव तु सूत्रेणेति।

अस्यार्थः—अयमेव तु भेदः=बुद्ध्यवस्थाश्रये भेदव्यवहारे तत्प्रयुक्ते एकस्यापि उपमानोपमेयभावे निमित्तभूतो वास्तवाद् भेदादयमन्यो भेदः, "तदर्हम्" (पा० ५।१।११७) इति सूत्रेण आरब्धेन, भेदेन=वास्तवाद् भेदात् पृथक्त्वेन दर्शितः। सूत्रानारम्भे हि वास्तवाद् भेदादयमन्यो भेदः पृथक्त्वेन प्रतीयते। अबुधैः, दुर्ज्ञानत्वात्। ततश्च "तेन तुल्यम्" (पा० ५।१।११५) इति सूत्रेण बुधानां प्रसिद्धमपि 'राजवद् वृत्तम्' इत्यादिरूपमबुधानामेकस्मिन्नुपमानोपमेयभावाप्रतिपत्त्या दुर्ज्ञानम्=दुर्बोधं सूत्रारम्भेणाबुधः प्रतिपद्यत इति।

अयं भावः—अयमेव बुद्ध्यवस्थाश्रयो=बुद्ध्यवस्थारूपविवक्षाप्रयुक्त एकस्मिन्नपि भेदव्यवहारः "तदर्हम्" (पा० ५।१।११७) इति योगारम्भेण व्युत्पाद्यते। वास्तवाद् भेदादयमन्यो भेदो बुद्ध्याश्रयः काल्पनिक इति वास्तवाद् भेदाद् भेदेन=पृथक्त्वेन ख्यापितः "तदर्हम्"

विधमर्थं विवेक्तुमुत्सहते। सर्वपुरुषाधिकारेण च शास्त्रप्रवृत्तिरिति प्रतीतेऽप्यर्थे मन्द-बुद्धिव्युत्पादनाय शास्त्रारम्भो युक्तः।

राजानमर्हतीति च विग्रहान्तरं दृश्यते, मन्दमतीनां पूर्वेणासिद्धयध्यवसाय-निमित्तम् ॥ ५७३ ॥

तदत्र दुर्ज्ञानत्वमेकस्योपमानोपमेयभावाभावात् स्यात्। तच्च न युक्तम्। दृश्यते ह्येकस्याप्युपमानोपमेयभाव इत्यबुधबोधनार्थमपि नेदमारब्धव्यमित्याह—

**वैयाकरणवद् ब्रूते न वैयाकरणः सदा।**
**वैयाकरणवद् ब्रूष्वेत्यतः सोऽप्यभिधीयते ॥ ५७४ ॥**

व्याकरणज्ञो हि कश्चित् ग्राम्यदुर्भगाभिधानप्रयोगादपगतसंस्कारशब्दाभि-धानाच्च वैयाकरणत्वमतिक्रान्तः साधुशब्दप्रयोगकुशलैर्वैयाकरणैरुपमीयते वैयाकरणवत् कथयेति। अन्यैस्तुल्यमभिधत्स्व, म्लेच्छभाषणदुर्ग्रहं त्यजेति ॥ ५७४ ॥

---

(पा० ५।१।११७) इति सूत्रारम्भेण। न हि सर्वो जनः स्वयमेवंविधं दुर्बोधमर्थं विवेक्तुम्= विवेकेन भेदेन ज्ञातुम् उत्सहते। व्याकरणशास्त्रप्रवृत्तिश्च सर्वपुरुषाधिकारेण इति प्राज्ञैः प्रतीतेऽप्यर्थे मन्दबुद्धिजनव्युत्पादनाय "तदर्हम्" (पा० ५।१।११७) इति शास्त्रारम्भो युक्तः।

किञ्च राजवदित्यस्य राजानमर्हति इति राज्ञा तुल्यमित्यस्माद् विग्रहान्तरं मन्दबुद्धीनां पूर्वेण सूत्रेणासिद्धयध्यवसाये निमित्तं दृश्यते इति अबुधबोधनाय "तदर्हम्" इति शास्त्रारम्भो युक्त इति ॥ ५७३ ॥

तच्च दुर्ज्ञानत्वमत्र= राजवद् वृत्तमित्यत्र एकस्य भेदाभावप्रयुक्तादुपमानोपमेयभावा-भावात् स्यात्। तच्च न युक्तम्। दृश्यते हि एकस्यापि उपमानोपमेयभाव इति;अबुधबोधनार्थमपि न "तदर्हम्" (पा० ५।१।११७) इति सूत्रमारब्धव्यमित्याह—वैयाकरणवद् ब्रूते इति।

अस्यार्थः—वैयाकरणोऽपि सदा म्लेच्छभाषापरिहारेण वैयाकरणवद् न ब्रूते इत्यतः सोऽपि वैयाकरणवद् ब्रूष्व म्लेच्छभाषणदुर्ग्रहं त्यजेत्यभिधीयत इति।

अयं भावः—व्याकरणज्ञो हि कश्चिद् ग्राम्यदुर्मनाभिधानप्रयोगादपगतसंस्कारशब्दा-भिधानाच्च वैयाकरणत्वमतिक्रान्तः साधुशब्दप्रयोगकुशलैर्वैयाकरणैरुपमीयते वैयाकरणवत्कथयेति। अन्यैर्वैयाकरणैस्तुल्यमभिधत्स्व, म्लेच्छभाषणदुर्ग्रहं त्यजेत्यर्थः। अत्र ग्राम्याभिधानं यथा—'पाणिः पल्लवपेलवः' इति। दुर्भगाभिधानम्—'कार्तार्थ्यं यातु तन्वङ्गी कदानङ्गवशंवदा' इति। अपगतसंस्कारशब्दाभिधानं यथा—'आजघ्ने विषमविलोचनस्य वक्षः' (भारविः) इति। अत्र वाक्यत्रये प्रथमे वाक्ये–'पेल' इति पदैकदेशो ग्राम्यः। द्वितीये वाक्ये—'कार्तार्थ्यम्' इति दुर्भगाभिधानम्, श्रुतिकटुत्वात्। तृतीये वाक्ये तु च्युतिसंस्कृतिरूपो दोष इति ॥ ५७४ ॥

तथा—

**केचित् पुमांसो भाषन्ते स्त्रीवत्, पुंवच्च योषितः ।**
**व्यभिचारे स्वधर्मोऽपि पुनस्तेनोपदिश्यते ॥ ५७५ ॥**

व्यभिचार इति स्वधर्मस्य। तथा च सम्भावितस्वधर्माः सजातीयैरेवोपमीयन्तेऽर्थाः। पुंवदभिधीयताम्। अन्यैरनतिवृत्तपुरुषोचितभाषणैस्तुल्यं भवद्भिः कथ्यताम्, किमप्रगल्भोक्तिभिः सदसि योषित्सम्भावनयोपहास्यतामत्मा नीयत इति। तथातिप्रगल्भभाषिणी काचिदभिधीयते—स्त्रीवदभिधीयताम्। अन्याभिर्व्रीडावतीभिः स्त्रीभिस्तुल्यं कथ्यताम्। मातिप्रगल्भोक्तिभिर्योषित्सीमानं हासीरिति। तथा क्लैब्यमाचरन् कश्चिदुच्यते—पुंवद् युध्यस्व। यथानतिवृत्तपौंस्ना युध्यन्ते तथा युध्यस्वेत्यर्थः।

तदेवं स्वोचितानुष्ठानत्यागदर्शनाद् आत्मीयाचारोऽप्यप्रसिद्धत्वादुपमया विधीयते इति दृष्टम्। तथा चैकस्योपमानोपमेयभावो न दुर्ज्ञानः ॥ ५७५ ॥

---

तथा स्वधर्मस्य व्यभिचारो यत्र दृश्यते तत्र संभावितस्वधर्मा अर्थाः सजातीयैरेवोपमीयन्ते इति एकस्योपमानोपमेयभावो न दुर्ज्ञान इत्याह—केचित् पुमांसो भाषन्ते इति।

अस्यार्थः—केचित् पुमांसः सभायां स्त्रीवदप्रगल्भं भाषन्ते, काश्चिच्च योषितः सभायां प्रगल्भा भूत्वा पुंवद् भाषन्ते इति तत्र स्वधर्मस्य व्यभिचारे सति स्वधर्मोऽपि पुनस्तेन स्वधर्मेण उपदिश्यते उपमानत्वेन विधीयत इति।

अयं भावः—व्यभिचारे इत्यत्र स्वधर्मस्येति शेषः। तथा च संभावितस्वधर्माः अर्थाः स्वजातीयैरेवार्थैरुपमीयन्ते। यथा—कश्चित् सदसि स्त्रीवदप्रगल्भं भाषमाण उच्यते—पुंवदभिधीयताम्। अन्यैरनतिक्रान्तपुरुषोचितभाषणैः पुरुषैस्तुल्यं भवद्भिः कथ्यताम्। किमप्रगल्भोक्तिभिः सदसि योषित् संभावनयाऽऽत्मा उपहास्यतां नीयत इति। तथा सदसि पुंवदतिप्रगल्भभाषिणी काचिदभिधीयते—स्त्रीवदभिधीयताम्। अन्याभिर्व्रीडावतीभिः स्त्रीभिस्तुल्यं कथ्यताम्। माऽतिप्रगल्भोक्तिभिर्योषित्सीमानं हासोरिति। तथा युद्धे क्लैब्यम्=नपुंसकस्य कर्मभयेन पलायनं कुर्वन् कश्चिदुच्यते—पुंवद् युध्यस्व। यथाऽनतिवृत्तपौंस्नाः=अनतिक्रान्तपुंधर्माः युध्यन्ते, तथा युध्यस्वेत्यर्थः।

तदेवं स्वोचितानुष्ठानत्यागदर्शनादप्रसिद्धत्वादात्मीयाचारोऽपि उपमया युक्त उपमेयत्वेन विधीयते इति आचारयोः प्रसिद्धाप्रसिद्धयोरुपमानोपमेयभावे तत्प्रयुक्तं तदाश्रयेऽपि भेदं परिकल्प्योपमानोपमेयभावो दृष्ट इति। तथा चैकस्योपमानोपमेयभावो न दुर्ज्ञान इति ॥ ५७५ ॥

यत्तु प्रागुक्तं पूर्वामवस्थामाश्रित्य तवैव सदृशस्त्वमित्यवस्थान्तरं साम्प्रतिकमुपमीयत इति, तत्रोक्तितात्पर्यं व्याचष्टे—

**सदृशस्त्वं तवैवेति लोके यदभिधीयते ।**
**उपमानान्तरं तत्र प्रसक्तं विनिवर्तते ।। ५७६ ।।**

सर्वोपमानधर्मातिक्रान्तस्त्वमित्यन्योपमानव्यावृत्त्या स्तुतिपरमेतदभिधानमनन्वयालङ्कारच्छाययेति व्याख्यातमेतत् । तदेवं सर्वत्र भेदकल्पनयोपमानोपमेयभावप्रक्लृप्तेर्व्याकरणान्तरे नारब्धमिदं सूत्रम् । इहाप्युपमानविवक्षायामनारम्भोऽस्याभ्युपगत एव ।। ५७६ ।।

विवक्षान्तरे त्वावश्यकमिदमित्याह—

**युक्तमौपयिकं राज्ञ इत्यर्थस्य निदर्शने ।**
**उपमानाविवक्षायां तदर्हमिति पठ्यते ।। ५७७ ।।**

युक्तमिदमुचितमिदं राज्ञो वृत्तं राज्यानुपालनेऽप्युपायभूतमिदमिति राजानमेवार्हति नान्यमिति निश्चितबलाधानख्यापने नास्त्युपमानोपमेयभावविवक्षेति

---

यत्तु प्रागुक्तम्, पूर्वामवस्थामुपमानत्वेनाश्रित्य 'तवैव सदृशस्त्वमि'ति सांप्रतिकमवस्थान्तरमुपमीयते=उपमेयं क्रियते इति, तत्रोक्तितात्पर्यं व्याचष्टे=सदृशस्त्वं तवैव इति ।

अस्यार्थः—त्वं तवैव सदृश इति यल्लोकेऽभिधीयते, तत्र=तस्मिन्नभिधाने सति प्रसक्तमुपमानान्तरं विनिवर्तते इति । उपमानान्तरनिवृत्तिरेव तदभिधानफलमिति निष्कर्षः ।

अयं भावः—सर्वोपमानधर्मान् अतिक्रान्तस्त्वमिति अन्योपमानव्यावृत्त्या स्तुतिपरमेतदभिधानम् अनन्वयालंकारस्य छाययेति प्राग् व्याख्यातमेतत् । तदेवं सर्वत्र भेदकल्पनया उपमानोपमेयभावप्रक्लृप्तेरापिशलादौ व्याकरणान्तरे नारब्धम् "तदर्हम्" ( पा० ५।१।११७ ) इति सूत्रम् । इहापि पाणिनीये व्याकरणे एकस्मिन्नपि उपमानत्वविवक्षायामस्य सूत्रस्य अनारम्भोऽभ्युपगत एव भाष्ये 'राजवद् वृत्तम्' इत्यादौ पूर्वसूत्रेणैव वतेः सिद्धत्वादिति ।। ५७६ ।।

विवक्षान्तरे तु='राजवद् वृत्तम्' इत्यत्र राजानमर्हति वृत्तमित्येतदर्थविवक्षायां तु आवश्यकमिदम्="तदर्हम्" (पा० ५।१।११७) इति सूत्रमित्याह—युक्तमौपयिकं राज्ञ इति ।

अस्यार्थः—युक्तमिदम्=उचितमिदम्, राज्ञो वृत्तम्, राज्यानुपालनेऽपि औपयिकम्=उपायभूतमिदं राज्ञो वृत्तम्, इतीदं राजानमेवार्हति नान्यमित्यर्थस्य निदर्शने निश्चयेन प्रख्यापने उपमानाविवक्षायाम्=राज्ञा तुल्यमिदं वृत्तं वर्तते इत्युपमानोपमेयभावाविवक्षायाम्, पूर्वसूत्रेण राजवद् वृत्तमित्यत्र वतेरप्राप्त्या "तदर्हम्" ( पा० ५।१ ) इति सूत्रं पठ्यते इति ।

अयं भावः—युक्तमिदम्, उचितमिदम्, राज्ञो वृत्तम्, राज्यानुपालनेऽपि उपायभूतमिदमिति राजानमेवार्हति, नान्यमिति निश्चितबलाधानख्यापने=निश्चितस्य इतरव्यावृत्तिरूपावधारणात्मकस्य बलाधानस्य प्रख्यापने नास्त्युपमानोपमेयभावविवक्षेति तत्संबन्धे=उपमानोपमेयभावरूपे

तत्सम्बन्धे विहितस्य वतेर्नायं विषय इति पृथक्सूत्रमत्र प्रत्ययविध्यर्थं पठ्यत इत्यारम्भोऽस्य समर्थितः ।

अयमाशयः—भवेदुपमानविवक्षायां सिद्धिः । तथा च व्याकरणान्तरेऽस्यानारम्भः । एवमिहाप्यनारम्भः, परमतस्याविरुद्धस्याप्रतिषिद्धत्वात् । अर्हत्ताप्रतिपिपादयिषायां त्वस्यारम्भः सफल इति व्याकरणान्तरेऽव्याप्तिरुद्भाविता ।

अत एव भाष्यकारः प्रयोजनस्थापनादेव विरतो नौपम्याश्रयेण प्रत्याचख्यौ ।

इत्थं च वैयाकरणवद् ब्रूहीत्यादावपि यदौपम्यमविवक्षित्वा योग्यतामात्रं प्रतिपिपादयिषितं भवति, तदानेनैव वतिरिति सिद्धम् ।। ५७७ ।।

इदानीं वक्ष्यमाणप्रस्तावार्थमाह—

**प्रसक्तानुप्रसक्तस्तु वतिशेषोऽभिधीयते ।**
**उपमानाभिसम्बन्धादस्मिन् वतिरुदाहृतः ।। ५७८ ।।**

---

संबन्धे विहितस्य वतेर्नायम्=अर्हत्यर्थो विषय इति पूर्वसूत्राभ्यां पृथक्सूत्रमिदम्='तदर्हम्' (पा० ५।१।११७) इति सूत्रम् । अत्र=राजवद् वृत्तमित्यत्र वतिप्रत्ययविध्यर्थं पठचते इति रीत्या तदर्हमिति सूत्रस्यारम्भः समर्थितोऽत्र हरिणा ।

अयमाशयः—भवेदुपमानत्वविवक्षायां राजवद् वृत्तमित्यस्य पूर्वसूत्रेण सिद्धिः । तथा च=तं प्रकारमाश्रित्यैव च व्याकरणान्तरे आपिशलादौ तदर्हमिति सूत्रस्यानारम्भः । एवमिहापि व्याकरणेऽस्य सूत्रस्यानारम्भः समर्थितो भाष्ये । परमतस्याविरुद्धस्याप्रतिषिद्धत्वात् । अर्हत्ता प्रतिपिपादयिषायां तु "तदर्हम्" ( पा० ५।१।२१७ ) इति सूत्रस्यारम्भः सफल इति व्याकरणान्तरे लक्ष्यासिद्धिरूपा व्याप्तिरुद्भाविताऽत्र हरिणा ।

अत एव भाष्यकारोऽस्य सूत्रस्य प्रयोजनस्थापनादेव विरतः=अस्य सूत्रस्य प्रयोजनं न स्थापितवान्, अन्ततोऽत्रुधबोधनार्थमिदं सूत्रं भविष्यति इति किमेतत् सूत्रप्रयोजनान्वेषणप्रयासेनेति मत्वा, न त्वौपम्याश्रयेण राजवद् वृत्तमित्यादौ उपमानोपमेयभावाश्रयेण प्रत्याचख्यौ ।

इत्थञ्च वैयाकरणवद् ब्रूहि इत्यादावपि यदौपम्यविवक्षित्वावृत्तस्य वैयाकरणयोग्यतामात्रं यदा प्रतिपिपादयिषितं भवति, यदा तदर्हमिति सूत्रेणैव वतिरिति सिद्धमिति ।। ५७७ ।।

इदानीं वक्ष्यमाणस्य—"उपसर्गाच्छन्दसि धात्वर्थे" ( पा० ५।१।११८ ) इति सूत्रविहितस्य वतेः प्रस्तावार्थम्=विचारप्रसङ्गबोधनार्थम् आह—प्रसक्तानुप्रसक्तस्तु इति ।

अत्र 'पाठक्रमादर्थक्रमो बलीयान्' इति मीमांसानिर्धारितन्यायमाश्रित्य कारिकाया उत्तरार्धं प्राक् पठनीयम्, पूर्वार्धन्तु पश्चादिति ।

अस्यार्थः—उपमानाभिसंबन्धात्=उपमानसमासेन सह उपमानवतेर्योऽभिसंबन्धः, उपमानोपमेयभावरूपसंबन्धबोधकत्वरूपः, तमाश्रित्य, अस्मिन् उपमानसमासनिरूपणप्रकरणे, उपमानवतिरुदाहृतः=पूर्वम्–उदाहरणद्वारा विचारितः । इदानीं प्रसक्तानुप्रसक्तस्तु=प्रागुक्तरीत्या प्रसक्तस्य उपमानसमासप्रसङ्गं प्राप्तस्योपमानवतेरनुपश्चात् स्वरूपसाम्येन प्रसक्तो वतिशेषः=उपमानवत्यपेक्षया शिष्यमाणोऽवशिष्टः, "उपसर्गाच्छन्दसि धात्वर्थे" इति स्वार्थिको वतिः अभिधीयते इति ।

इह वृत्तिपदविचारः प्राधान्येन प्रस्तुतः। तत्र चोपमानसमासविचारानुषङ्गेणोपमानसम्बन्धे विधीयमानस्य वतेरिहोपन्यासो विचारायेत्युपमानवतिरनुषङ्गायातः प्रसक्तः। तस्यानु पश्चात् क्रमायातोऽनुपमानवतिरपि "उपसर्गाच्छन्दसि धात्वर्थे" (पा० ५।१।११८) इत्ययमपि शिष्टः प्रसङ्गेन विचारार्थं निरूप्यत इति प्रकरणानुसन्धिः। ॥ ५७८ ॥

तत्र अर्थग्रहणं किमर्थम् ? न, उपसर्गाच्छन्दसि धातावित्येवोच्येतेति भाष्येऽर्थग्रहणमाक्षिप्तम्।

तत्राभिप्रायं व्याचष्टे—

**प्रधानकल्पनाऽभावे गुणशब्दस्य दर्शनात्।**
**उपसर्गाद् वतौ सिद्धा धातौ धात्वर्थकल्पना॥ ५७९॥**

धातुशब्देन भूवादेर्मुख्यतः प्रत्यायनाद् धातावित्युक्ते तस्य शब्दस्य प्रत्ययवाच्यत्वाभावादन्तरेणाप्यर्थग्रहणं धातुरूपाध्यासाद् गुणकल्पनया सामर्थ्यात् तत्सहचरितोऽर्थो लभ्यत इति किमर्थग्रहणेनेत्यर्थः।

---

अयं भावः—इह=वृत्तिसमुद्देशनाम्नि प्रकरणे वृत्तिपदविचारः प्राधान्येन प्रस्तुतः=प्रारब्धः। तत्र चोपमानसमासविचारप्रसङ्गेन उपमानसंबन्धे विधीयमानस्य वतेरिह विचारायोपन्यास इति प्रसङ्गायात उपमान-वतिः प्रसक्तः। तस्यानु=पश्चात् स्वरूपसाम्येन क्रमायातोऽनुपमनावतिरपि="उपसर्गाच्छन्दसि धात्वर्थे" (पा० ५।१।११८) इति सूत्रेण विहितोऽपि अवशिष्टो वतिः प्रसङ्गेन विचारार्थं निरूप्यत इति प्रकरणानुसंधिः=इति अस्य सर्वस्य प्रकरणस्यातीतस्यानुसंधानं हरिणा कृतमत्रेति॥ ५७८॥

तत्र="उपसर्गाच्छन्दसि धात्वर्थे" (पा० ५।१।११८) इति सूत्रे धात्वर्थे इत्यत्र "अर्थग्रहणं किमर्थम् ? न, उपसर्गाच्छन्दसि धातावित्येवोच्येत" इति भाष्येऽर्थग्रहणमाक्षिप्तम्। तत्राभिप्रायं व्याचष्टे—प्रधानकल्पनाऽभावे इति।

अस्यार्थः—"उपसर्गाच्छन्दसि धात्वर्थे" (पा० ५।१।११८) इत्यत्रार्थग्रहणमपनीय—'उपसर्गाच्छन्दसि धातौ' इत्येव सूत्रे क्रियमाणे धातुशब्दप्रधानार्थस्य भूवादेर्वतिप्रत्ययावाच्यत्वेन सौत्रधातुपदेन तत्कल्पनाया अभावे गुणशब्दस्य धात्वर्थं गौण्या वृत्त्या बोधयतो धातुपदस्यात्र धात्वर्थलक्षकत्वेन दर्शनात्=ज्ञानात्, उपसर्गाद् वतौ क्रियमाणे धातौ सौत्रेधातुपदे, धात्वर्थकल्पना=गौण्या वृत्त्या धात्वर्थकल्पना सिद्धा इति।

अयं भावः—धातुपदेन मुख्यतो भूवादेः प्रत्यायनाद् धातावित्युक्ते तस्य शब्दस्य=भूवादिशब्दस्य वतिप्रत्ययवाच्यत्वाभावादर्थग्रहणं विनाऽपि धातुरूपाध्यासात्=धात्वर्थे धातुरूपारोपाद् गुणकल्पनया=गौण्या वृत्त्या गौणार्थकल्पनया धातुपदसामर्थ्यात् तत्सहचरितः=धातुपदसहचरितः अर्थो धातुपदात् लभ्यते इति किमर्थग्रहणेनेत्यर्थः। अत एव=प्रागुक्तरीत्या धातुपदस्य धात्वर्थपरत्वादेव-

अत एव भाष्यं—'शब्दे कार्यस्यासम्भवादर्थे कार्यं विज्ञास्यते' इति ॥ ५७९ ॥

तत्रैतत्साहचर्यान्नियोगतोऽर्थे प्रतिपत्तिः कथम् ? अन्यस्यापि धातुसम्बन्धिनः शब्दधर्मस्य धातुना साहचर्यादित्यत आह—

**स्वं रूपमिति चैतस्मिन्नर्थस्यापि परिग्रहः ।**
**रूपवज्ज्ञापितस्तस्मादासन्नोऽर्थो ग्रहीष्यते ॥ ५८० ॥**

अन्तरङ्गत्वादहेयत्वादसाधारणत्वाच्च स्वंशब्दस्येत्येव स्वत्वेन विशेषितस्य रूपस्य परिग्रहे सिद्धे 'स्वं रूपम्'इति (पा० १।१।६८) रूपग्रहणं रूपवदर्थोऽप्यङ्गीक्रियत इति ज्ञापनार्थम् ।

तथा च रूपसमानकक्ष्यः प्रत्यासन्नतरः सम्बन्धी प्रसिद्धो वाच्योऽर्थ एव ग्रहीष्यते । तावतैव वाक्यार्थस्योपपत्तौ शब्दधर्मः सम्बन्धी कथमनुरोधाद् गृह्येतेति भावः ॥ ५८० ॥

---

भाष्यम्—"शब्दे कार्यस्यासंभवादर्थे कार्यं विज्ञास्यते" इति ।

अस्यार्थः—शब्दे=धातुपदवाच्ये भूवादौ वतिरूपस्य कार्यस्यासंभवाद् धात्वर्थे कार्यं विज्ञास्यते इति ॥ ५७९ ॥

तत्र='उपसर्गाच्छन्दसि धातौ' इत्यत्र धातुसाहचर्यान्नियोगतः=नियमतः अर्थे प्रतिपत्तिरित्येतत्कथम् । अन्यस्यापि धातुसंबन्धिनः शब्दधर्मस्य असत्त्वभूतक्रियाभिधायित्वादेर्धातुना साहचर्यादित्यत आह—स्वं रूपमिति चेति ।

अस्यार्थः—"स्वं रूपम्०" ( पा० १।१।६८ ) इति अस्मिन् सूत्रे च रूपशब्देन रूप्यते निरूप्यते शब्देन इति व्युत्पत्त्या रूपशब्देन अर्थस्यापि रूपवत्=स्वरूपवत्, परिग्रहो ज्ञापितः। रूपशब्दस्य स्वरूपमात्रपरत्वे स्वमित्यनेनैव तन्मात्रलाभसंभवात् । तस्माद् रूपशब्देन शब्दस्वरूपस्य प्रत्यासन्नोऽर्थो वृत्तिलभ्योऽन्तरङ्गो हेयोऽसाधारणश्च ग्रहीष्यते । न तु साहचर्यलभ्योऽनुमेयो बहिरङ्गोऽसत्त्वभूतक्रियाभिधायित्वादिशब्दधर्म इति ।

अयं भावः—स्वं शब्दस्येत्येव स्वत्वेन विशेषितस्य रूपस्यान्तरङ्गत्वादहेयत्वादसाधारणत्वाच्च परिग्रहे सिद्धे स्वं रूपमिति रूपग्रहणं स्वरूपवदर्थोऽपि संज्ञितयाऽङ्गीक्रियते इति ज्ञापनार्थम् ।

तथा च रूपसमानलक्ष्यः=स्वरूपेण तुल्यं लक्षणेन=सूत्रेण ज्ञाप्यः प्रत्यासन्नतरः=अन्तरङ्गत्वादिना प्रागुक्तेन हेतुना संनिहिततरः शब्दस्य संबन्धी प्रसिद्धो वाच्योऽर्थ एव ग्रहीष्यते । तावतैव स्वं रूपमिति सूत्रस्य वाक्यार्थोपपत्तौ शब्दधर्मोऽन्यो धातुसंबन्धी कथं वाक्यार्थानुरोधाद् गृह्येतेति ॥ ५८० ॥

अत्रोत्तरं भाष्यम्—'इदं तर्हि प्रयोजनम्। उत्तरपदलोपो यथा विज्ञायेत। धातुकृतोऽर्थो धात्वर्थः। कः पुनर्धातुकृतोऽर्थः। साधनम्' इति।

एतद् व्याचष्टे—

**धात्वर्थेनोपजनितं साधनत्वेन साधनम्।**
**धातुना कृतमित्येवमस्मिन् सूत्रे प्रतीयते॥ ५८१॥**

धातुशब्देन स्वार्थस्यात्रोपलक्षणाद् धातुकृतः क्रियाकृतः क्रियया प्रादुर्भावितोऽर्थोऽत्र निर्दिष्टः। स च साधनं कारकम्।

तथाहि—यद्यपि सिद्धस्वरूपं कारकं क्रियां प्रत्युपादीयते साधनत्वेन, तथापि न स्वरूपेण क्रियया साधनं कृतं जनितम्, अपि तु साधनत्वेन, साध्यापेक्षत्वात् साधनभावस्य सामान्यस्य कर्मादिविशेषरूपस्य च। क्रिया हि साधनानि प्रवर्तयतीति।

---

अत्रोत्तरं भाष्यम्—"इदं तर्हि प्रयोजनम्। उत्तरपदलोपो यथा विज्ञायेत। धातुकृतोऽर्थो धात्वर्थः? कः पुनर्धातुकृतोऽर्थः। साधनम्" इति। एतद् भाष्यं व्याचष्टे—धात्वर्थेनोपजनितमिति।

अस्यार्थः—"उपसर्गाच्छन्दसि धात्वर्थे" (पा० ५।१।११८) इत्यत्र धातुपदे लक्षणया धातुना धात्वर्थेन, क्रियया—स्वतःसिद्धमपि साधनत्वेन उपजनितं साधनम्, अस्मिन् सूत्रे= "उपसर्गाच्छन्दसि धात्वर्थे" (पा० ५।१।०१८) इति सूत्रे, धातुना= धात्वर्थेन, क्रियया कृतमित्येवं प्रतीयत इति।

यद्यपि साधनं क्रियां निर्वर्तयति, अत एव कारकपदेन तदुच्यते, न तु क्रिया साधनं निष्पादयति, तस्य क्रियाजनकस्य क्रियातः प्राक् सिद्धत्वात्, तथापि स्वरूपेण प्राक्सिद्धमपि साधनं साधनत्वेन रूपेण क्रियया उपजन्यत्वेन, साधनत्वस्य साध्यनिरूपितत्वेन साध्यस्वरूपां क्रियां विनाऽसिद्धेरिति निष्कर्ष इति।

अयं भावः—धातुपदेन "उपसर्गाच्छन्दसि धात्वर्थे" (पा० ५।१।११८) इति सूत्रे स्वार्थस्योपलक्षणाद्=लक्षणया बोधनाद् धातुकृतः क्रियाकृतः=क्रियया प्रादुर्भावितोऽर्थोऽत्र निर्दिष्टः। स च साधनं कारकम्।

तथाहि—यद्यपि क्रियातः प्राक् सिद्धस्वरूपं कारकं क्रियां प्रति साधनत्वेनोपादीयते, तथापि साधनं क्रियया न स्वरूपेण कृतं=जनितम्, अपि तु साधनत्वेन रूपेण, सामान्यस्य कर्मादिविशेषरूपस्य च साधनभावस्य साध्यापेक्षत्वा। क्रिया हि साधनं प्रवर्तयति, साधनप्रवृत्तेः क्रियार्थत्वात्दिति। तदुक्तं प्राक्—

प्रवृत्तिरेव प्रथमं क्वचिदप्यनपाश्रिता ।
शक्तीरेकाधिकरणें स्रोतोवदपकर्षति ॥

इत्यादिना पूर्वमेव निर्णीतमेतत् ॥ ५८१ ॥

यदुक्तमुत्तरपदलोप इति । तत्र कोऽयमनन्वाख्यातः सूत्रकारेणोत्तरपदलोपो नामेत्यत आह—

**यः शब्दश्चरितार्थत्वादत्यन्तं न प्रयुज्यते ।**
**विषयेऽदर्शनात् तत्र लोपस्तस्याभिधीयते ॥ ५८२ ॥**

इहार्थप्रयुक्तस्य शब्दस्य सत्यर्थे वचनशतेनापि प्रयोगो निवारयितुं न पार्यते, केवलमन्यतो निर्ज्ञातार्थस्य चरितार्थत्वात्, कृतकृत्यत्वात्, प्रसक्तादर्शनस्य लोपसंज्ञा प्रत्ययादर्शनवत् सर्वत्र व्यवह्रियते। ततश्च धातुशब्देन क्रियाभिधानात् तत्कृतोऽर्थस्तदुपचारात् स एवेति धातुरेवार्थो धात्वर्थ इति गौणे सामानाधिकरण्ये मयूरव्यंसकादित्वात् सति समासे धातुकृतोऽर्थ इति यद् वस्तु सम्पद्यते, तद् भाष्यकारेण दर्शितम् ।

---

प्रवृत्तिरेव प्रथमं क्वचिदप्यनपाश्रिता ।
शक्तिरेकाधिकरणे स्रोतोवदपकर्षति ॥

( वा० प० ३, साधन० ३३ )

अस्यार्थः—प्रकृतोपयोगी अयम् । प्रथमं क्वचिदपि क्रियायां कारके वा अनपाश्रिता प्रवृत्तिरेव एकाधिकरणे=एकस्मिन् कारकरूपे अधिकरणे स्रोतोवत्=जलप्रवाहवद्, जलप्रवाहः काष्ठानि इव शक्तीः=कर्तृकर्मादिसाधनशक्तीः, अपकर्षति=अन्यतोऽपकृष्य तत्र प्रादुर्भावयतीति निर्णीतचरमेतदिति ॥ ५८१ ॥

यदुक्तं भाष्ये—'उत्तरपदलोपो यथा विज्ञायेत' इति, तत्र कोऽयं सूत्रकारेणानवाख्यात उत्तरपदलोपो नामेत्यत आह—यः शब्दश्चरितार्थत्वादिति ।

अस्यार्थ—यः शब्दश्चरितार्थत्वात्=कृतकृत्यत्वाद् अन्येन स्वार्थाभिधानरूपस्य स्वकृत्यस्य कृतत्वात् स्वार्थबोधनाय अत्यन्तं न प्रयुज्यते, तस्य शब्दस्य स्वविषये स्वार्थे अदर्शनात् तत्र तस्य लोपोऽभिधीयते, यथा प्रत्ययादर्शने लोपोऽभिधीयते तथेति ।

अयं भावः—इह=शाब्दे व्यवहारे अर्थप्रयुक्तस्य शब्दस्य प्रयोगः सत्यर्थे वचनशतेनापि निवारयितुं न पार्यते=न शक्यते । केवलमन्यतो निर्ज्ञातार्थस्य शब्दस्य चरितार्थत्वात्=कृतकृत्यत्वात् प्रसक्तादर्शनस्य लोपसंज्ञाप्रत्ययादर्शनवत्=प्रत्ययादनर्शस्येव सर्वत्र व्यवह्रियते । ततश्च "उपसर्गाच्छन्दसि धात्वर्थे" (पा० ५।१।११८) इति विचार्यतया प्रकृते सूत्रे धातुशब्देन लक्षणया क्रियाऽभिधानात् तत्कृतोऽर्थस्तदुपचारात्=धात्वर्थक्रियात्वारोपाद् आहार्यरूपात् स एव=साधनरूप एव इत्येवं धातुरेवार्थो धात्वर्थ इति गौणे सामानाधिकरण्ये मयूरव्यंसकादित्वात् सति समासे यद् वस्तु संपद्यते तद् धातुकृतोऽर्थ इति विग्रहे भाष्यकारेण दर्शितम् ।

यद्वा, धातुस्तदर्थः क्रिया अर्थः प्रयोजनं यस्य साधनस्येत्येवमयं बहुव्रीहिः क्रियते। क्रिया च साधनस्य साध्यत्वादेव प्रयोजनं भवति। तस्मिन् साधने वर्तमानादुपसर्गात् स्वार्थे वतिः ॥ ५८२ ॥

एवमर्थग्रहणसामर्थ्यात् साधनलाभे प्रयोजनमुक्तम्—'साधनेऽयं भवल्लिङ्ग-संख्याभ्यां योक्ष्यते' इति। तत्र शक्तिरूपत्वेन क्रियावदसत्त्वभूतत्वात् साधनस्य कथं लिङ्गसङ्ख्यायोग इत्यत आह—

**क्रियायां साधने द्रव्ये प्रादयो ये व्यवस्थिताः।**
**तेभ्यः सत्त्वाभिधायिभ्यो वतिः स्वार्थे विधीयते ॥ ५८३ ॥**

साधनशक्त्याश्रयो द्रव्यमत्र साधनशब्देन विवक्षितम्, शक्तिशक्तिमतोरभेदात्। तस्मिन् द्रव्ये क्रियासाधनाक्षिप्ते ये वाचकत्वेन प्रवृत्ताः प्रादय उपसर्गास्तेभ्यः साधन-क्रिया (क्रियासाधन) वाचिभ्यः स्वार्थे वतिप्रत्ययोऽयं विधीयते। तथा च सत्त्वभूतार्थाभिधानाल्लिङ्गसंख्यायोग उपपद्यते ॥ ५८३ ॥

तत्रैतत् स्यात्—क्रियाविशेषद्योतकाः प्रादयोऽवधृताः। नैषां द्रव्याभिधान-सामर्थ्यमवधृतमित्याशङ्क्याह—

**प्रत्ययेन विना प्रादिस्तत्रार्थेन प्रयुज्यते।**
**भेदेन तु समाख्याने विभागः परिकल्पितः ॥ ५८४ ॥**

---

यद्वा धातुर्लक्षणया धात्वर्थः क्रिया अर्थः साध्यत्वेन प्रयोजनं यस्य साधनस्येत्येवमयं बहुव्रीहिः क्रियते। क्रिया च साध्यत्वादेव साधनस्य प्रयोजनं भवति। तस्मिन् साधने वर्तमानादुपसर्गात् स्वार्थे वतिरिति प्रकृतसूत्रार्थ इति ॥ ५८२ ॥

एवं प्रकृतसूत्रगते धात्वर्थपदेऽर्थग्रहणसामर्थ्यात् साधनलाभे प्रयोजनमुक्तं भाष्ये—"साधनेऽयं भवन् लिङ्गसंख्याभ्यां योक्ष्यते" इति। तत्र साधनस्य कर्तृत्वकर्मत्वादिरूपशक्तिरूपत्वेन धात्वर्थक्रियावदसत्त्वभूतत्वात् कथं लिङ्गसंख्यायोग इत्यत आह—क्रियायां साधने द्रव्ये इति।

अस्यार्थः—क्रियायां साधने=क्रियानिरूपितसाधनशक्तिमति द्रव्ये ये प्रादय उपसर्गा विवक्षिताः, तेभ्यः सत्त्वाभिधायिभ्यो द्रव्यवाचकेभ्यः साधनरूपे स्वार्थे वतिर्विधीयत इति।

अयं भावः—अत्र कारिकायां साधनशक्त्याश्रयीभूतं द्रव्यं साधनशब्देन विवक्षितम्, शक्तिशक्तिमतोरभेदात्। तस्मिन् द्रव्ये क्रियासाधनाक्षिप्ते=क्रियानिरूपितया साधनशक्त्या स्वाश्रयत्वेनाक्षिप्ते द्रव्ये ये वाचकत्वेन प्रवृत्ताः प्रादय उपसर्गास्तेभ्यः क्रियासाधनवाचिभ्यः स्वार्थे साधनरूपे वतिप्रत्ययोऽयं विधीयते। तथा च वतेः सत्त्वभूतार्थाभिधानाल्लिङ्गसंख्यायोगो वत्यन्तस्योपपद्यत इति ॥ ५८३ ॥

तत्र=प्रादीनां सत्त्वाभिधायित्वे एतत् स्यात्=संभाव्यते। क्रियाविशेषद्योतकत्वं प्रादीनामवधृतम्, न त्वेषां साधनरूपद्रव्याभिधानसामर्थ्यमवधृतमित्याशङ्क्याह—प्रत्ययेन विना प्रादिरिति।

वाक्ये केऽपि नियता धर्माः। केचिद् वृत्तिरिति शब्दशक्तिप्रतिनियमाद् यद्यपि वाक्ये प्रयुक्तानां प्रादीनां द्रव्याभिधानशक्तिर्नास्ति, तथापि वृत्तिविषये शक्तिरियमवगम्यते। उद्गतानि उद्वतः, निगतानि निवत इत्यखण्डोऽयं शब्दः प्रकृतिप्रत्ययविभागेनान्वाख्यायमानः प्रकृतिभागस्य क्रियासाधनोपसर्जनद्रव्यवचनत्वं प्रत्ययभागस्य च स्वार्थिकत्वं प्रतिपद्यते।

इत्थं चोपसर्गाणामत्र वृत्तिविषयेऽस्य स्वभावोऽर्थग्रहणेनानुविधीयते, लौकिकस्यैवार्थस्यान्वाख्यानाङ्गभावेनोपादानात्। असति पुनरर्थग्रहणे शब्दे कार्यासम्भवात् क्रिया प्रतीता, अविनाभावात् साधनशक्तिमेवोपलक्षयेत्। अर्थग्रहणात् तु तदभेदापन्नं द्रव्यं प्रतीयते। अन्यथार्थग्रहणमफलं स्यात्॥ ५८४॥

---

अस्यार्थः—वृत्तिवाक्ययोः प्रादिस्वभावस्य प्रतिनियतत्वाद् वाक्ये वतिप्रत्ययेन विना प्रादिस्तत्रार्थे क्रियासाधनशक्त्याश्रयद्रव्यरूपेऽर्थे न प्रयुज्यते, वृत्तिविषये भेदेन तु = प्रकृतिप्रत्ययविभागेन तु समाख्याने = 'उद्वतः, निवतः' इत्यादीनां साधुत्वान्वाख्याने विभागः—'उद्वतः' इत्यादौ वत्यन्ते प्रकृतिभागस्य क्रियासाधनशक्त्याश्रयद्रव्याभिधायित्वम्, प्रत्ययभागस्य तु स्वार्थिकत्वमित्ययं विभागः परिकल्पितः, तेन वत्यन्तवृत्तौ प्रादीनां क्रियासाधनाश्रयद्रव्याभिधायित्वम्, न तु वाक्ये इति स्थितम्।

अयं भावः—वाक्ये केऽपि नियता धर्माः, केचिद् वृत्ताविति शब्दशक्तिप्रतिनियमाद् यद्यपि वाक्ये प्रयुक्तानां प्रादीनां द्रव्याभिधानशक्तिर्नास्ति, तथापि वृत्तिविषये तेषमियं शक्तिरवगम्यते। 'उद्वतः, निवतः' इत्यखण्डोऽप्ययं शब्दः 'उद्गतानि उद्वतः, निगतानि निवतः' इति व्युत्पत्त्या प्रकृतिप्रत्ययविभागेनान्वाख्यायमानः प्रकृतिभागस्य क्रियानिरूपिताया साधनशक्तिस्तद्विशिष्टद्रव्यवचनत्वम्, प्रत्ययभागस्य च स्वार्थिकत्वं प्रतिपद्यते=प्राप्नोति।

इत्थञ्चात्र='उद्वतः, निवतः' इत्यादौ वृत्तिविषये उपसर्गाणामयं स्वभावः—क्रियासाधनशक्तिविशिष्टद्रव्यवचनत्वस्वभावो धात्वर्थे इत्यत्र श्रुतेन सौत्रेणार्थपदेनानुविधीयते=ज्ञाप्यते। लौकिकस्यैवार्थस्यात्र साधुत्वान्वाख्यानाङ्गभावेनोपादानात्। लौकिकश्चार्थोऽत्र क्रियासाधनशक्तिविशिष्टं द्रव्यमेव, न तु क्रियासाधनशक्ति, तस्याः कार्यैकसमधिगम्यत्वेनालौकिकत्वात्। असति पुनरर्थग्रहणे धातुरूपे शब्दे वतिप्रत्ययरूपकार्यासंभवाद् धातुशब्देन लक्षणया धात्वर्थरूपा क्रिया प्रतीता, स्वाविनाभावात् साधनशक्तिमेवोपलक्षयेत्, अर्थग्रहणात्तु तदभेदापन्नम्=तादृशशक्त्यभेदापन्नं द्रव्यं प्रतीयते।

अन्यथा=क्रियासाधनशक्तिमात्राभिधाने अर्थग्रहणमफलं स्यात्। धातुनैव प्रागुक्तरीत्या क्रियासाधनशक्तिलाभादिति॥ ५८४॥

यदि च साधनशब्देन शक्तिमत्र विवक्षितं स्यात्, तदा--

**अनङ्गीकृतसत्त्वं तु यदि गृह्येत साधनम् ।**
**विभक्तिभिर्न योगः स्याद् यथैव तसिलादिषु ॥ ५८५ ॥**

अनुपात्ताधारे साधनमात्रे गृह्यमाणे ततस्तत्रेत्यादाविवात्यन्तप्राधान्यायाः शक्तेः शक्त्यन्तरायोगाद् यथायथं विभक्तयो न स्युः सर्वाः । समयादेकवचनमेव स्यात् । ततश्चासर्वविभक्तित्वे अव्ययसंज्ञा प्रसज्येतेति लिङ्गसंख्यायोगो विरुध्येत । अर्थग्रहणसामर्थ्यात् तु गुणीकृतक्रियासाधनं द्रव्यं प्राधान्येनोपसर्गाणां वाच्यमत्रानुगम्यत इति वत्यन्तस्य सत्त्ववचनतायां यथायथं क्रियासमन्वये सर्वविभक्तियोगादव्ययसंज्ञाभावे उद्वतो निवत इत्यादिबहुवचनान्तप्रयोगोपपत्तिः । 'एकार्थे शब्दान्यत्वाद् दृष्टं लिङ्गान्यत्वम्'इति च लिङ्गान्तरयोगो न विरुध्यते ॥ ५८५ ॥

---

यदि तु साधनशब्देनात्र==प्रागुद्धृते भाष्ये साधनशक्तिमात्रं विवक्षितं स्यात्, तदा वत्यन्तस्य विभक्तियोगाभावरूपं दोषमाह—अनङ्गीकृतसत्त्वं त्विति ।

अस्यार्थः—यदि तु प्रागुक्ते भाष्ये साधनपदेन आश्रयतया अनङ्गीकृतसत्त्वम्==अस्वीकृतद्रव्यम्, साधनम्=साधनशक्तिः गृह्येत, तदा यथैव तसिलादिषु विभक्त्यर्थरूपसत्त्वार्थाभिधायिषु विभक्तिभिर्न योगः स्यात् । विभक्त्यर्थसाधनशक्तिषु साधनशक्त्यन्तराभावेन साधनशक्त्यभिधायिषु तसिलादिषु साधनशक्त्यभिधायिविभक्तियोगानुपपत्तिरिति ।

अयं भावः—भाष्ये साधनपदेनात्र अनुपात्ताधारे साधनशक्तिमात्रे गृह्यमाणे ततः तत्र इत्यादाविव अत्यन्तप्राधान्यायाः साधनशक्तेः शक्त्यन्तरायोगाद् यथायथं कर्तृत्वकर्मत्वादिरूपसाधनशक्तिवाचिकाः सर्वा विभक्तयो न स्युः ।

किन्तु एकवचनमुत्सर्गतः करिष्यते इति समयात्=सिद्धान्ताद् एकवचनमेव स्यात् । ततश्चासर्वविभक्तिकत्वे वत्यन्तस्याव्ययसंज्ञा प्रसज्येतेति तस्य दृश्यमानो लिङ्गसंख्यायोगो विरुध्येत । अर्थग्रहणसामर्थ्यात्तु गुणीकृतक्रियासाधनशक्तिकं द्रव्यमुपसर्गाणां प्रायेण वाच्यमत्रानुगम्यत इत्येवं वत्यन्तस्य सत्त्ववचनतायां स्थितायां यथायथं तत्तत्साधनयोग्यक्रियासमन्वये सर्वविभक्तियोगादव्ययसंज्ञाया अभावे 'उद्वतो निवत' इत्यादिबहुवचनान्तप्रयोगोपपत्तिः । एकार्थे शब्दान्यत्वाद् दृष्टं लिङ्गान्यत्वमिति चात्र लिङ्गान्तरयोगो न विरुध्यते ।

तथा हि—एकमात्रार्थे भिन्नयोः स्त्रीदारशब्दयोर्दर्शनात् स्त्रीत्वपुंस्त्वरूपं लिङ्गान्यत्वं दृष्टमिति । एकत्रार्थे उद्गतानि इत्यत्र नपुंसकत्वम्, 'उद्वतः' इत्यत्र पुंस्त्वमिति लिङ्गभेदः शब्दभेदान्न विरुध्यत इति ॥ ५८५ ॥

नन्वेवमपि स्वरादिषु वतेः पाठात् प्राप्तमव्ययत्वमित्यत आह--

**पाठाद् यैरविभक्तित्वं वत्यन्तेष्वनुगम्यते ।**
**तेषामुद्वत् इत्यत्र वक्तव्या सविभक्तिता ॥ ५८६ ॥**

अविभक्तित्वं विभक्त्यदर्शनं तन्निबन्धनमव्ययसंज्ञा कथ्यते। तथा च स्वरादिपाठादव्ययत्वेऽविभक्तित्वं विभक्त्यदर्शनमिति सामर्थ्यात् तन्निबन्धनाव्ययसंज्ञापाठाद् यैरङ्गीक्रियते तेषां मते, उद्वत इत्यत्राव्ययत्वाल्लोपे प्राप्ते सविभक्तिता वक्तव्या प्रतिपाद्या ।

तथा ह्यर्थग्रहणसामर्थ्यादव्ययत्वं न भवति । अन्वर्थसंज्ञा हि साऽलिङ्गसंख्यत्वेऽवतिष्ठते। अत्र च साधनस्य द्रव्यस्य ग्रहणात् सत्त्ववचनत्वात् तदभाव इत्यर्थः ॥ ५८६ ॥

---

नन्वेवमपि=वत्यन्तस्य प्रागुक्तरीत्या सत्त्वाभिधायित्वेन यथायथं योग्यक्रियासमन्वये सति सर्वविभक्तिकत्वादव्ययत्वाभावेऽपि स्वरादिषु वतेः पाठादव्ययत्वं प्राप्तमित्याशङ्क्याह—पाठाद् यैरविभक्तित्वमिति ।

अस्यार्थः—यैर्वैयाकरणैः स्वरादिषु वतेः पाठाद् वत्यन्तेषु अविभक्तित्वम्=विभक्तिदर्शनाभावस्तन्निबन्धनम् अव्ययसंज्ञाऽनुगम्यते=स्वीक्रियते, तेषां मते 'उद्वतः' इत्यत्र सविभक्तिता वचनं विनाऽनुपपद्यमाना वक्तव्या भवति इति अपूर्ववचनकल्पने तेषां गौरवम्, अतोऽव्ययसंज्ञायाः सर्वेषु लिङ्गेषु सर्वासु विभक्तिषु सर्वेषु वचनेषु च यन्न व्येति तदव्ययमित्येवमन्वर्थत्वाद् अलिङ्गासंख्यत्व एवाव्ययसंज्ञेति 'उद्वतः' इत्यादौ सविभक्तिता उपपाद्या इति । वतेः स्वरादिषु पाठो न कार्यः । 'उद्वतः' इत्यादौ सविभक्तिता अव्ययसंज्ञाया अन्वर्थत्वादुपपादिता भविष्यति । 'पितृवदधीते' इत्यत्र क्रियाया असत्त्वरूपतयाऽव्ययसंज्ञाया अन्वर्थत्वादेवाव्ययत्वम् ।

'मथुरावत् स्रुघ्ने प्राकारः' इत्यत्रापि इवार्थसादृश्यस्यासत्त्वभूतत्वेनालिङ्गा संख्यत्वादेवान्वर्थसंज्ञा विज्ञानादव्ययत्वसिद्धिरिति निष्कर्षः ।

अयं भावः—विभक्त्यदर्शनम्, तन्निबन्धनम्=विभक्त्यदर्शननिमित्तम् अव्ययसंज्ञा कारिकायामविभक्तित्वं कथ्यते । तथा च वतेः स्वरादिषु पाठादव्ययत्वेऽविभक्तित्वं=विभक्त्यदर्शनमिति सामर्थ्यात् तन्निमित्तमव्ययसंज्ञा स्वरादिषु वतेः पाठाद् यैरङ्गीक्रियते तेषां मते, 'उद्वतः' इत्यत्र पाठेनाव्ययत्वाद् विभक्तिलोपे प्राप्ते सविभक्तिता वक्तव्या प्रतिपाद्या भवति ।

तथाहि—"उपसर्गाच्छन्दसि धात्वर्थे" ( पा० ५।१।११८ ) इत्यत्रार्थग्रहणसामर्थ्याद् धात्वर्थपदेन धात्वर्थक्रियासाधनशक्तिमद्द्रव्याभिधानात् 'उद्वतः' इत्यत्राव्ययत्वं न भवति। अव्ययसंज्ञाया अन्वर्थत्वेनालिङ्गासंख्यार्थाभिधायिन एवाव्ययत्वात् । 'उद्वतः' इत्यत्र तु लिङ्गसंख्यावद् द्रव्याभिधायित्वेनाव्ययत्वाप्रसक्तेरिति । अन्वर्थसंज्ञा हि सा=अव्ययसंज्ञा अलिङ्गासंख्यत्वे सत्येव तदाश्रयेऽवतिष्ठते ।

अत्र च='उद्वतः' इत्यत्र च 'उपसर्गाच्छन्दसि धात्वर्थे" ( पा० ५।१।११८ ) इत्यत्र धात्वर्थपदेन प्रागुक्तरीत्या क्रियासाधनस्य द्रव्यस्य ग्रहणात् सत्त्ववचनत्वात् लिङ्गसंख्यायोगित्वेन तदभावः=अव्यसंज्ञाया अभाव इति ॥ ५८६ ॥

तदेवं वतिः परीक्षितः। तत्प्रसङ्गेन तत्रत्यमन्यदपि विचार्यते—वाक्यकारः पपाठ—'स्त्रीपुंसाभ्यां वत्युपसंख्यानम्' इति। "स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्" (पा०४।१।८७) इत्यवधिविशेषोपादानेन प्राग् भवनात् प्रकृतिविशेषादस्मान्नञ्स्नञावुप दिश्यमानावपत्यादिष्वर्थेषु सिद्ध्यर्थं वतिरत्रोपसंख्येयः। तत्र वतीति वतिसहचरित-स्यार्थस्याधिकरणत्वेन निर्देशः।

यद्वा वतौ विधीयमाने स्त्रीपुंसाभ्यामप्यसौ विधेय इत्यर्थः। भावलक्षणे सप्तमीयम्। एतस्य वार्तिकस्य भाष्ये प्रत्याख्यानमुक्तम्—'आचार्यप्रवृत्तिर्ज्ञापयति न वत्यर्थे नञ्स्नञौ भवत इति। यदयं स्त्रियाः पुंवदिति निर्देशं करोति'इति।

एतद् व्याचष्टे—

**वत्यर्थं नावगाहेते पुंवदित्यस्य दर्शनात्।**
**नञ्स्नञावपवादस्य बाधकं तन्निपातनम्॥ ५८७॥**

---

तदेवं वतिसामान्यं परीक्षितम्। तत्प्रसङ्गेन तत्रत्यम् = वत्यर्थसमानाधिकरणम् अन्यदपि विचार्यते। वार्त्तिककारः पपाठ—'स्त्रीपुंसाभ्यां वत्युपसंख्यानम्' इति। तत्र वत्शब्दात् सप्तम्येक-वचने वतीति वतिसहचरितस्यार्थस्याधिकरणत्वेन निर्देशः।

यद्वा तथैव निर्देशे वतौ विधीयमाने स्त्रीपुंसाभ्यामप्यसौ = वतिः विधेय इत्यर्थः। "यस्य च भावेन भावलक्षणम्"(पा० २।३।३७)इति सूत्रेण भावलक्षणे सप्तमीयम्। 'स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् (पा०४।१।८७)इत्यवधिविशेषोपादानेन भवनात् प्राक् = 'धान्यानां भवने क्षेत्रे' इत्यतः प्राक् प्रकृतिविशेषादस्मात् स्त्रीपुंसान्यतररूपाद् यथायथं नञ्स्नञौ उपदिश्यमानौ अपत्यादिष्वर्थेषु उत्सर्ग-प्रत्ययान् अणादीन् बाधित्वा यथा भवतः, तथा वत्यर्थेऽपि वतिं बाधित्वा तौ स्यातामिति स्त्रीवत्, पुंवद् इति सिद्ध्यर्थं वतिरत्र = "स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्" (पा० ४।१।८७) इति सूत्रे उपसंख्येयः।

भाष्ये एतस्य वार्त्तिकस्य प्रत्याख्यानमुक्तम्—"आचार्यप्रवृत्तिर्ज्ञापयति न वत्यर्थे नञ्स्नञौ भवतः" इति। यदयं स्त्रियाः पुंवदिति निर्देशं करोति" इति।

एतद् भाष्यं व्याचष्टे–वत्यर्थं नावगाहेते इति।

अस्यार्थः—नञ्स्नञौ वत्यर्थं नावगाहेते = वत्यर्थविषये न भवतः, पुंवदित्यस्य = 'स्त्रियाः पुंवत्'इत्यादौ पुंवदित्यस्य प्रयोगस्य दर्शनात्।

ननु सौत्रप्रयोगदर्शनाद् वतिर्भवतु अधिकारेण तु नञ्स्नञौ अपि स्यातामित्यभ्युपगमे किं बाधकमित्याशङ्क्याह—अपवादस्य बाधकं तन्निपातनमिति। तन्निपातनम् = 'स्त्रियाः पुंवदि'ति वतिनिपातनम् अपवादयोर्नञ्स्नञोर्बाधकमित्यर्थं इति।

"स्त्रियाः पुंवद्" (पा० ६।३।३४) इत्युच्चारणाद् वत्यर्थादुत्कर्षो नञ्स्नञोर्ज्ञायते। यदि ह्येतौ वत्यर्थमवगाहेयाताम्, अपवादेन निवर्तितो वतिर्न श्रूयेत। श्रुतस्तु नूनमेतावेतमर्थमुत्क्रामतः, येनानयोर्विषये उत्सर्गः श्रूयत इति ज्ञापयति।

ननु च पुंवदिति निर्देशाद् वतिरप्यस्तु, यथाप्राप्तौ च नञ्स्नञावपि वत्यर्थेऽधिकारेण प्रतिपादितसंनिधानौ भवेतामित्याशङ्क्योक्तं 'बाधकं तन्निपातनमि'ति ॥५८७॥

कथमस्य बाधकत्वमित्येतदेव व्यक्तयति—

**एवमुत्क्रामतो नूनं वत्यर्थं नञ्स्नञाविति।**
**तयोः प्रवृत्तावुत्सर्गो बाधनान्नोपपद्यते ॥ ५८८ ॥**

अपवादविषये प्रवृत्तिरुत्सर्गस्योपलभ्यमानान्यथानुपपत्त्यापवादमपावर्तयति ततः। अन्यथा सत्येवापवादशत्रावयमुत्सर्गो वराकस्तत्र कथं प्रवर्तेतेति बाधकत्वनिश्चयोऽस्य। अप्राप्त्यनुमानं हि बाधा।

तत्र यथापवादः स्वरूपनिर्वृत्तौ ससंरम्भोऽपि सामान्यविधेः स्वविषयेऽप्राप्तिं सूचयति, तथा निपातनमात्मस्वरूपप्रतिलम्भव्यापृतमपि यथाप्राप्तबाधने पर्यवस्यति, तथा सर्वादिवार्त्तिके निपातनमप्येवंजातीयकमिति बाधकानि निपातनानि व्यवस्थापितानि। अतश्च वत्यर्थे पौंस्नमित्यादिप्रयोगोऽसाधुः ॥ ५८८ ॥

---

अयं भावः—स्त्रियाः पुंवद्' इत्युच्चारणाद् वत्यर्थादुत्कर्षः=उत्कर्षणम्, वत्यर्थे तयोरभाव इति यावद्, नञ्स्नञोर्ज्ञायते। यदि ह्येतौ वत्यर्थमवगाहेयाताम्,तदाऽपवादेन निर्वर्तितो वतिर्न श्रूयेत। श्रुतस्तु नूनमेतावेतमर्थम्=वत्यर्थमुत्क्रामतो येनानयोर्विषये उत्सर्गो वतिः श्रूयते इति ज्ञापयति।

ननु च पुंवदिति निर्देशाद् वतिरप्यस्तु, यथाप्राप्तं च नञ्स्नञावपि वत्यर्थेऽधिकारेण प्रापितसंनिधानौ भवेतामित्याशङ्क्योक्तम्—अपवादस्य बाधकं तन्निपातनमिति ॥ ५८७ ॥

कथं पुंवदिति वतिनिपातनस्य बाधकत्वमित्येतदेव व्यक्तं करोति—एवमुत्क्रामतो नूनमिति।

अस्यार्थः—एवं नञ्स्नञावित्येतौ नूनं वत्यर्थमुत्क्रम्यैव भवतः, न तु वत्यर्थे। यतः=तयोः प्रवृत्तौ उत्सर्गो वतिः "तेन तुल्यम्"(पा० ५।१।११६)इति, "तत्र तस्येव"(पा० ५।१।११६) इति वा विहितः ताभ्यामपवादभूताभ्यां बाधनान्नोपपद्यते इति तयोर्बाधनार्थं निपातनं पुंवदिति।

अयं भावः—अपवादविषये उत्सर्गस्य प्रवृत्तिरुपलभ्यमानाऽन्यथाऽनुपपत्त्याऽपवादमुत्सर्गान्निवर्तयति। अन्यथा जाग्रत्येव निर्बाधेऽपवादशत्रौ प्रबलेऽयमुत्सर्गो वतिर्वराकोऽपवादविषये कथं प्रवर्तेत इत्युत्सर्गस्यापवादबाधकत्वनिश्चयः। पुंवदिति निर्देशरूपेण निपातनेन वत्यपवादयोर्नञ्स्नञोरप्रात्यनुमानं हि तयोर्बाधा।

तत्र यथापवादः शब्दस्वरूपनिर्वृत्तौ ससंरम्भोऽपि सामान्यशास्त्रस्य=उत्सर्गशास्त्रस्य स्वविषयेऽप्राप्तिं सूचयति। तथा निपातनमात्मस्वरूपप्रतिलम्भव्यापृतमपि, यथा प्राप्तबाधने पर्यवस्यति, तथा सर्वादिवार्त्तिके निपातनमित्येवंजातीयकमिति उक्त्या निपातनानि बाधकानि व्यवस्थापितानि। अतश्च वत्यर्थे पौस्नमित्यादिप्रयोगोऽसाधुरिति ॥ ५८८ ॥

'एवमपि स्त्रीवदिति न सिध्यति' इति चोदयित्वा 'योगापेक्षं ज्ञापकम्' इति भाष्यम्। तद् विवृणोति—

**नञ्स्नञौ विहितौ येन स योगो नावगाहते।**
**वतिकरणं तद्धि लिङ्गमेवं समर्थ्यते ॥ ५८९ ॥**

सामान्यतो दृष्टमिदं लिङ्गमनुमानं ज्ञापकम्। तथाहि—"स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्" (४।१।८७) इति यो योगः स वत्यर्थं नाक्रामतीत्यवंव्यापारमिदं लिङ्गमुपपाद्यते। वतिप्रकरणमिति। "तेन तुल्यं"-(पा०५।१।११५), "तत्र तस्येव"(पा०५।१।११६) "तदर्हम्" (पा० ५।१।११७) इति सूत्रत्रयविहितेऽपि वतावर्थे नञ्स्नञावुत्क्रामत इत्यर्थः।

तथा चैतान् योगानपेक्षत इति योगापेक्षं तज्ज्ञापकं सूत्रम्। ततश्च वत्यर्थे नञ्स्नञोरभावात् स्त्रीवदित्यपि सिध्यति, विशेषनिरपेक्षस्य लिङ्गस्य ज्ञापकत्वत इति सिद्धम् ॥ ५८९ ॥

---

एवमपि=निपातनेन पुंवदित्यस्य प्रागुक्तरीत्या सिद्धावपि स्त्रीवदिति न सिध्यति इति चोदयित्वा—"योगापेक्षं ज्ञापकम्" इति भाष्यम्। तत्र "योगापेक्षम्" इत्यस्य सूत्रापेक्षमित्यर्थः। न तु प्रयोगापेक्षं ज्ञापकम्। पुंवदिति ज्ञापकस्य प्रयोगापेक्षत्वे पुंवदित्येव सिध्येत्, न तु स्त्रीवदिति। तद्भाष्यं विवृणोति—नञ्स्नञौ विहितौ येनेति।

अस्यार्थः=येन योगेन—"स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्" (पा० ४।१।८७) इति सूत्रेण नञ्स्नञौ विहितौ स योगो वतिप्रकरणम्="तेन तुल्यम् क्रिया चेद् वतिः" (पा०५।१।११५), "तत्र तस्येव" (पा० ५।१।११६), "तदर्हम्" (पा० ५।१।११७) इति सूत्रत्रयरूपं नावगाहते=न स्वबाध्यतया विषयीकरोति। तद्धि=पुंवदिति निर्देशरूपं हि, लिङ्गम्=नञ्स्नञोर्वत्यर्थाविषयकत्वे ज्ञापकम्। एवं ज्ञापकस्य योगापेक्षत्वमाश्रित्य नञ्स्नञोर्वत्यर्थाविषयकत्वेन, समर्थ्यते=स्त्रीवदिति प्रयोगोपपादकतया उपपाद्यते इति।

अयं भावः—सामान्यतो दृष्टमिदं लिङ्गमनुमानं ज्ञापकम्। अनुमानाकारश्च=स्त्रीपुंसाभ्यां नञ्स्नञौ भवनादिति योगः, वत्यर्थं नावगाहते, तद्विषये वतिघटितनिर्देशदर्शनात्, पुंवदित्यत्र यथेति। तथा हि—"स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्" (पा० ४।१।८७) इति यो योगः स वत्यर्थं नाक्रामति=न स्वलक्ष्यतया विषयीकरोति इत्येवं व्यापारकमिदं लिङ्गमुपपाद्यते वतिप्रकरणमिति। "तेन तुल्यम्" (पा० ५।१।११५), तत्र तस्येव (पा० ५।१।११६), तदर्हम्" (पा० ५।१।११६) इति सूत्रत्रयविहितेऽपि वतौ अर्थे नञ्स्नञावुत्क्रामतः=उत्क्रम्य भवतः, वत्यर्थविषये न भवत इत्यर्थः।

तथा चैतान् त्रीन् योगान् अपेक्षते इति योगापेक्षं तज्ज्ञापकं स्त्रियाः पुंवदिति वत्यन्तघटितं सूत्रम्। ततश्च=ज्ञापकस्य योगापेक्षत्वाच्च वत्यर्थे नञ्स्नञोरभावात् स्त्रीवदित्यपि सिध्यति, प्रकृतिप्रत्ययविशेषनिरपेक्षस्य पुंवदिति लिङ्गस्य ज्ञापकत्वादिति सिद्धमिति ॥ ५८९ ॥

तदेवमुपमानप्रसङ्गायातो वतिर्विचारितः। इदमिदानीमुपमानविचारे परीक्षणीयम्। बहूनामुपमेयानामुपमानं यदैकमुपादीयते, तदा किमुपमेयभेदमनुवर्तते तत्। अथाभिन्नमेवोपकाराय प्रभवतीति संशीतावाह—

**अभेदेनोपमानस्य भिन्नार्थोपनिपातिता।**
**ऊहस्तथोपमानानामङ्गवन्नोपलभ्यते ॥ ५९० ॥**

इह प्रधानानुग्रहाय गुणाः प्रयुज्यमाना यथानुग्रहो भवति प्रधानस्य, तथैवात्मरूपमनुवर्तन्त इति न्यायः। एकत्वेनैव तु स्वधर्मेण युक्तं शक्नोत्युपमानमुपमेयमनेकमुपकर्तुमिति किमनुरोधाद् भेदमवलम्बेत।

अत एव विकृतावुपमेयभेदेऽपि प्रकृतिगतमेव वचनमभिन्नार्थावेदकमुपमानमित्यूहो यथोपमेयं वचनभेदो न दृश्यते।

तद्यथा–अङ्गनाम्नामूहाभावोऽङ्गिभेदादेव, निर्ज्ञातभेदत्वात्, संख्यान्तरपरिणामस्य कृतकृत्यत्वादिति सम्बन्धाबाधनमेवात्र। तथा चोहविदामाम्नायः—

---

तदेवमुपमानप्रसङ्गायातो वतिः कात्स्न्येन विचारितः। इदमिदानीमुपमानविचारे परीक्षणीयम्। वहुषु उपमानेषु सत्सु यदैकमुपमानमुपादीयते, तदा किमुपमानमुपमेयभेदमनुवर्तते= उपमेयभेदप्रयुक्तं स्वभेदमनुभवति, अथाभिन्नमेवोपमानमुपमेयानां बहूनामुपकाराय प्रभवति इति संशीतौ=संशये आह—अभेदेनोपमानस्येति।

अस्यार्थः—अभेदेनेति वैशिष्ट्ये प्रकृत्यादित्वात् तृतीया। अभेदविशिष्टस्याभिन्नस्य उपमानस्य भिन्नार्थोपनिपातिता=भिन्नेषु उपमेयरूपेष्वर्थेषु उपकाराय निपातिता निपतनम्=संबन्ध उपलभ्यते। तथा उपमानानामुपमेयोपकारायोहः=लिङ्गान्तरसंख्यान्तरप्राप्तिरूपो विपरिणामोऽङ्गवद् नोपलभ्यते। अङ्गनाम्नां यथोहाभावः, तथोपमानानामपि ऊहाभाव इति निष्कर्ष इति।

अयं भावः—इह=शाब्दे व्यवहारे प्रधानानुग्रहाय गुणाः प्रयुज्यमाना यथा प्रधानस्यानुग्रहो भवति, तथैवात्मरूपमनुवर्तन्ते इति न्यायः। एकत्वेनैव तु स्वधर्मेण युक्तमुपमानमनेकमप्युपमेयमुपकर्तुं शक्नोतीति कस्यानुरोधाद् भेदमालम्बेत। अत एव=एकत्वेनैव स्वधर्मेण युक्तस्योपमानस्यानेकोपमेयोपकारकत्वादेव द्विपशुके विकृतियागे 'प्रकृतिवद् विकृतिः कर्तव्ये'ति अतिदेशवचनादुपमेयपशुभेदेऽपि प्रकृतियागे श्रुतम्=उर इत्येकवचनमेवाङ्गनाम्नि प्रकृतियागगतं विकृतावपि, अभिन्नार्थवेदकमेवोपमानमिति। यथोपमेयं वचनभेदरूप ऊहो न दृश्यते। तद् यथा—"यत्पशुर्मायुमकृतो रीवा" इत्यादिके मन्त्रे एकपशुकप्रकृतियागगते उर आदीनामङ्गनाम्नां द्विपशुके विकृतियागे संख्यान्तरपरिणामलक्षणस्य ऊहस्याभावः। पशुरूपाङ्गिभेदादेव अङ्गानामपि उरआदीनां निर्ज्ञातभेदत्वात् संख्यान्तरपरिणामस्य कृतकृत्यत्वात्=संख्यान्तरपरिणामकृत्यस्याङ्गभेदनिर्ज्ञानस्य कृतत्वादिति अङ्गाङ्गिनोर्विषमवचनयोरपि संबन्धाबाधनम्, अत्र=विकृतियागे द्विपशुके। तथा चोहविदामाम्नायः=आम्नायतुल्यं तथ्यवचनम्—

अङ्गानि जातिनामानि उपमा इन्द्रियाणि च ।
एतानि नोहं गच्छन्ति अद्ध्रिगौ (अद्विगौ) विषमं हि तत् ॥ इति ।

तत्रोहोपात्तमेव दृष्टान्तदार्ष्टान्तिकमुदाह्रियते । अङ्गानामनूहो यथा—'यत्पशु-र्मायुमकृतोरो वा पद्भिराहतान्निर्मा तस्मादेनसः प्रमोचयतु' ( तै० सं० ३।१।४९ ) इत्यत्रैकपशुके प्रकृतियागे उर इत्येकवचनमङ्गनाम । द्विपशुकेऽपि विकृतियागे अस्योहाभावात् पशू इत्याहंसातामिति चास्यैव विपरिणामः, न पुनरुरसी इति विपरिणम्यते । अङ्गिभेदादेवाङ्गानां संख्याभेदस्यावधारणादिति चात्र न्यायः ।

एवं बहुपशुकेऽपि विकृतियागे पशव आहंसतेत्यूह्यते, नोरांसीति । तद्वदुप-मानानामनूहो यथा—'कश्यपे वासां अच्छिद्रे श्रोणी कवषोरूस्रेकपर्णे'त्यादि । अभेदे-

---

अङ्गानि जातिनामानि उपमा इन्द्रियाणि च ।
एतानि नोहं गच्छन्ति अद्विगौ विषमं हि तत् ॥ इति ।

अस्यार्थः—अङ्गानि=अङ्गनामानि, उर आदीनि प्रागुदाहृतानि । जातिनामानि—वेदा यथार्थवचसः प्रमाणमिति । अत्र जातिनाम्नो वेदशब्दस्य नैकवचनान्तप्रमाणशब्दानुरोधाद् विभक्त्यन्तरविपरिणामलक्षण ऊहः । उपमाः=उपमानानि, यथा—"रुद्र इवैतौ गोविकर्ताक्षवापौ" इत्यादिके मन्त्रे । अत्रोपमानस्योपमेययोर्गोविकर्ताक्षवापयोश्च वचनवैषम्यम् । इन्द्रियाणि च यथा—"अनन्तं वै मनोऽनन्ता विश्वेदेवा अनन्तमेव तेन लोकं जयति" इत्युपनिषत्सु श्रूयते ।

अत्र=उपमेयस्य मनसो वृत्तिबाहुल्यप्रयुक्तेन अनन्तत्वगुणेन अनन्ता विश्वेदेवा उपमानम् । अत्र अन्तरिन्द्रियस्य मनसो नोपमानानुरोधेनोहः । नाप्युपमानपदे उपमेयानुरोधेनात्रोहः । एतानि चत्वारि अङ्गादीनि ऊहं न गच्छन्ति । तत्र हेतुमाह—अद्विगाविति ।

अस्यार्थः—हि=यतः, अद्विगौ=द्विगुसमासादन्यत्र, तत्=अङ्गादिषु चतुर्षु वचनं विषमम्=अङ्गयादिभ्यो विलक्षणम्, एव इष्यते=उपलभ्यते वा इत्यध्याहार्यम् । द्विगुसमासे तु संख्यापूर्वपदे 'पञ्चगवधनः' इत्यादौ वचनसाम्यमेव । तथाहि—'पञ्च गावो धनं यस्य' इति द्विगुघटिते त्रिपदे बहुव्रीहौ घटके द्विगुवाक्ये संख्यावाचकपदसन्निधानाद् नियतं वचनसाम्यमेवेति न धनपदानुरोधेन जातिवाचिनि गोपदे एकवचनान्तत्वेनोह इति ।

अयं भावः—तत्रोहोपात्तमेव=ऊहप्रतिपादकग्रन्थोपात्तमेव दृष्टान्तदार्ष्टान्तिकमुदाह्रियते । अङ्गानामनूहः=ऊहाभावः।यथा—"यत्पशुर्मायुमकृतोरो वा पद्भिराहतान्निर्मा तस्मादेनसःप्रमोचयतु" इत्यत्रैकपशुके प्रकृतियागे उर इत्येकवचनमङ्गनाम । द्विपशुकेऽपि विकृतियागे उर इत्यस्योहाभावात्, पशू इति, आहंसाताम् इति चास्यैव विभक्तिविपरिणामो न पुनरुरसी इति विपरिणम्यते पशुरूपाङ्गिभेदादेवाङ्गानामुर आदीनां संख्याभेदस्य विकृतावधारणादिति चात्र न्यायः=युक्तिः ।

एवं बहुपशुकेऽपि विकृतियागे पशव आहंसतेत्यूह्यते, नोरांसि इति । तद्वदुपमानाना-मनूहो यथा—"कश्यपे वासां अच्छिद्रे श्रोणीकवषोरूस्रेकपर्णेत्यादि"। अत्राभेदेनैवोपमातुं शक्तेरुपमान-

नैवोपमातुं शक्तेरुपमानवचनानां कश्यपकवषस्त्रेकाणां कच्छपमत्स्यजातीयकरवीर-वाचिनां यथोपमेयलिङ्गसंख्यान्तरविपरिणामो न भवति ॥ ५९० ॥

एवमूहाभावो न्यायविदां प्रसिद्धोऽत्राभेदेनोपमानस्य संवादक उक्तः । संवाद-कान्तरमप्याह—

---

वचनानां कश्यपकवषस्त्रेकाणां कच्छपमत्स्यजातीयकरवीरवाचिनां यथोपमेयं लिङ्गसंख्यान्तरविपरि-णामो न भवति, किन्तु स्वलिङ्गसंख्ये एव भवत इति ।

इदं पद्यं मया जातिनामानि इति पाठं हेलाराजीये यथावस्थितमादृत्य अध्रिगौ इत्यत्र च स्वमत्या अद्रिगौ इति पाठं प्रकल्प्य व्याख्यातम्, स च मत्कल्पितः पाठो लोकवेदसाधारणत्वादपेक्षणीय एव ।

इदन्तु पद्यं तन्त्रवार्त्तिके "रक्षोहागमलध्वसंदेहाः प्रयोजनम्" (म०भा०पस्पश०) इति भाष्य-वार्त्तिकोक्तोहरूपव्याकरणप्रयोजनखण्डनावसरे उद्धृतम् । अपि च व्याकरणेनोहकरणमशक्यमेवेति मन्वानैस्तट्टीकान्यायसुधाकारैरप्युक्तम्—

अङ्गानि ज्ञातिनामानि उपमा चेन्द्रियाणि च ।
एतानि नोहं गच्छन्ति अध्रिगौ विषमं हि तत् ॥ इति ।

अत्र अध्रिगुशब्देन "दैव्याः शमितार आरभध्वम्" इत्यादिः पशुविशसनप्रैषमन्त्रोऽभिधीयते, अध्रिगुशब्दवत्वात् । अस्मिन् मन्त्रे अङ्गानि पशोरङ्गवाचकानि पदानि ऊहं न गच्छन्ति ।

यथा—"उदीचीनान् अस्य पदो निधत्तात्" इत्यस्मिन् मन्त्रे एकस्मिन् पशौ, द्वयोर्वा पश्वोः पद इति द्वितीयाया बहुवचनान्तमेव । ज्ञातिनामानि=ज्ञातिवाचकाः शब्दाःमातृ इत्यादयः तेषामूहो न भवति ।

यथा—"अन्वेनं मातामन्यताम् अनु पिता" इत्यादिषु मन्त्रेषु मातृपितृशब्दयोरूहो न भवति, सर्वथा एकवचनान्त एव द्वयोः पश्वोः त्रिषु वा पशुषु सत्स्वपि । उपमा=उपमानं वाचकस्यापि तत्रोहो न भवति ।

यथा—"श्येनमस्य वृक्षः कृणुतात्" इति । अत्र श्येनमिति एकवचनान्त एव शब्दो द्वयोः पश्वोः त्रिषु वा प्रयुज्यते । इन्द्रियाणि=इन्द्रियवाचकाः शब्दा अपि ऊहं न प्राप्नुवन्ति ।

यथा—"सूर्यमस्य चक्षुर्गमयतात्" इत्यस्मिन् मन्त्रे द्वयोः पश्वो त्रिषु वा पशुषु चक्षुरिति एकवचनान्तमेव प्रयुज्यते ऊहो न भवति । हि=यतः, तद् विषमम्=अन्यैरूहविषयैर्वैषम्यम्, विशिष्टं तत् ।

यथा यज्ञपतिशब्दः पारार्थ्येनोहविषयो न भवति, तथैवैतेऽपि शब्दाः पारार्थ्येनोहं न प्राप्नुवन्ति । एवंप्रकारेण कस्योहो भवति; कस्य वा न भवतीत्यादिकं ज्ञानं न व्याकरणेन कर्तुं शक्यत इति—न्यायसुधा ॥ ५९० ॥

एवमङ्गादिषु ऊहाभावो न्यायविदां प्रसिद्धोऽत्र - उपमेयानेकत्वे अभेदेनोपमानस्य संवादक उक्तः । संवादकान्तरमप्याह—गावेधुके चरौ दृष्टेति ।

**गावेधुके चरौ दृष्टा गोविकर्ताक्षवापयोः ।**
**पशू रुद्र इव ह्येतावित्येकवचनश्रुतिः ॥ ५९१ ॥**

'रुद्र इवैतौ गोविकर्ताक्षवापौ पशू अभिमन्येते' इति वेदे श्रूयते। तथाहि— गवेधुना तृणजातिविशेषेण संस्कृते चरौ प्रकृते गोविकर्ताक्षवापयोर्विशसित्रोरियमुपमा 'रुद्र इवैतौ विशसितारौ गोविकर्ताक्षवापौ'। गा विकृन्ततीति गोविकर्तः, अक्षान् वपतीत्यक्षवापः, तन्नामानौ पशूनां विशसितारौ। तौ चोपमेयावेकवचनान्तेन रुद्रशब्देनोपमानेनात्र दृष्टौ।

तथा चैकवचनश्रुतिरियं रुद्र इति दृष्टास्मिन्नाम्नाय इत्यस्मादप्यामाम्नायादुपमानम् 'उपात्तैकसंख्यमेवानेकमप्युपमेयमुपसंस्करोति' इति निश्चीयते ॥ ५९१ ॥

यदि पुनरुपमेयभेदेनोपमानं भिद्येत, तदा—

**उपमानस्य भेदाच्च बहुषु स्यादञो विधिः ।**
**कश्यपा इति लोपः स्यात् तथा प्रतिकृतिष्वपि ॥ ५९२ ॥**

---

अस्यार्थः—गवेधुना=तृणजातिविशेषेण संस्कृतश्चरुर्गावेधुकः, 'संस्कृतम्' (पा० ४।४।३) इति सूत्रेण गवेधोष्ठक्। "इसुसुक्तान्तात् कः" (पा० ३।५।५१) इति ठस्य कः। "कति च" (पा० ७।२।११८) इति आदिवृद्धिः। गावे धुके चरौ प्रकृते गोविकर्ताक्षवापयोरुपमेययोरुपमानस्य रुद्रस्य प्रतिपादिकायाम्—रुद इव एतौ गोविकर्ताक्षवापौ पशू अभिमन्येते इत्यत्र श्रुतौ हि उपमेययोः पश्वोर्द्वित्वेऽपि उपमाने रुद्रे एकवचनश्रुतिर्दृष्टा। तया गम्यते, उपमानं नोपमेयानुरोधेन ऊहं गच्छति इति।

अयं भावः—"रुद्र इवैतौ गोविकर्ताक्षवापौ पशू अभिमन्येते" इति वेदे श्रूयते। तथाहि— गवेधुना तृणजातिविशेषेण संस्कृते चरौ प्रकृते गोविकर्ताक्षवापयोर्विशसित्रोः=पशुघातकयोः इयमुपमा रुद्र इवैतौ विशसितारौ गोविकर्ताक्षवापौ। गा विकृन्तति इति गोविकर्ता। 'कर्मण्यण्' (पा० ३।२।१)। अक्षान् वपति इत्यक्षवापः। अत्रापि कर्मण्यण्, तन्नामानौ पशूनां विशसितरौ। तौ चैकवचनान्तेन रुद्रशब्देनोपमानेनात्र उपमेयौ दृष्टौ। तथा च रुद्र इवेत्युपमाने एकवचनश्रुतिरियं दृष्टाऽस्मिन् आम्नाये इत्यस्मादप्याम्नामादुपमानमुपात्तैकसंख्यमेव अनेकमपि उपमेयमुपसंस्करोति इति निश्चीयत इति ॥ ४९१ ॥

यदि पुनरुपमेयभेदेनोपमानं भिद्येत तदा दोषमाह— उपमानस्य भेदाच्चेति।

अस्यार्थः—उपमेयभेदेन एकस्यापि उपमानस्य भेदाच्च बहुषु उपमानेषु जातेषु अञो विधिः स्यात्, तस्य च 'यञञोश्च' इति लुक् स्यात्। तथा च एकस्य प्रतिकृतिबहुत्वे कश्यपा इति प्रयोगः स्यात्, इष्यते तु काश्यपाः इति। तदेतदाह—काश्यपा इति लोपः स्यादिति। 'काश्यपाः' इत्यत्र अञो लोपः स्यात्, तथा प्रतिकृतिष्वपि 'लुम् मनुष्ये' इति कनो लुपि देवर्षित्वाद् देवत्वे तु देवपथादित्वाद् 'जीविकार्थे चापण्ये' इति कनो लुपि "कश्यपाः" इति रूपं स्यादिति।

"यञञोश्च" (पा० २।४।६४) इति बहुषु लुगुच्यते । तत्र चोद्यते–बैदस्य बैदयोर्वा-पत्यानि बहूनि माणवका बिदा इत्यत्राञ् यो बहुष्वित्यर्थे व्याख्यायमाने बहुषु लुङ् न प्राप्नोति । अञो बैदस्य बैदयोरित्येकद्वयोरुत्पत्तेः ।

अत उक्तम्–'मा भूदेवम् । अञन्तं यद् बहुष्वित्येवं भविष्यति' । तत उक्तम्–'नैवं शक्यम् । इहापि स्यात् । काश्यपप्रतिकृतयः काश्यपा' इति । कश्यपस्यापत्यं काश्यपः बिदाद्यञ् । काश्यप इव प्रतिकृतयः काश्यपा इति "इवे प्रतिकृतौ" ( पा० ५।३।९६ ) इत्युत्पन्नस्य कनो देवपथादित्वात् "जीविकार्थे चापण्ये" (पा० ५।३।९९) इति लुपि कृते प्रतिकृतिबहुत्वेऽञन्तस्य वर्तमानत्वादञन्तं बहुष्विति लुक् स्यात् । तथा च कश्यपा इति प्रतिकृतिषु साधुः स्यात् । न चेष्यते । काश्यपा इत्येवेष्यत इति अञ् यो बहुष्विति स्थापितम् । बैदस्यापत्यानि बिदा इत्यत्र तु 'एकवचनद्विवचनान्तस्य प्रवृत्तौ बहुषु लोपो यूनी'त्युक्तत्वाद् अदोषः ।

यदि चात्रोपमेयभेदादुपमानभेदः, तदा प्रतिकृतीनामुपमेयानां बहुत्वादुपमानं काश्यपोऽपि भिन्न इति बहुष्वेवायमञ् स्यात् । तथा च अञ्यो बहुषु इत्येवमप्यत्र लुक् प्रसज्येतेति भाष्यविरोधः । काश्यपा इति प्रतिकृतिषु चानिष्टप्रयोगप्रसङ्गः । तस्मादुप-मेयभेदेऽपि नोपमानं भिद्यते ॥ ५९२ ॥

---

अयं भावः–बहुषु अपत्येषु—'यञञोश्च' इति । लुगुच्यते तत्र चोद्यते=आक्षिप्यते । बैदस्य, बैदोर्वा बहून्यपत्यानि माणवका बिदा इत्यत्राञ् यो बहुषु इत्यर्थे व्याख्यायमाने बहुषु लुङ् न प्राप्नोति । बैदस्य, बैदयोः, इत्यत्राञ एकद्वयोरुत्पत्तेः । अत उक्तम्—मा भूदेवम् । अञन्तं यद् बहुषु इत्येवं भविष्यति । तत उक्तम्—नैवं शक्यं इहापि स्यात् । काश्यपप्रतिकृतयः "काश्यपाः' इति । कश्यपस्यापत्यं काश्यपः, बिदादित्वादञ् । काश्यप इव प्रतिकृतयः काश्यपा इत्यत्र "इवे प्रतिकृतौ" (पा० ५।३।९६) इति विहितस्य कनो देवपथादित्वाद् 'जीविकार्थे चापण्ये' इति लुपि कृते प्रतिकृतिबहुत्वेऽञन्तस्य वर्तमानत्वादञन्तं बहुष्विति लुक् स्यात् । तथा च बहुषु प्रतिकृतिषु कश्यपा इति साधुः स्यात् ।

न चेष्यते । काश्यपा इत्येवेष्यते इति अञ् यो बहुषु इति पक्षः स्थापितः । 'बैदस्यापत्यानि बिदाः' इत्यत्र तु "एकवचनद्विवचनान्तस्य प्रवृत्तौ बहुषु लोपो यूनि" इत्युक्तत्वाद् अदोषः= अञ् यो बहुषु इति लक्षणे अव्याप्तिरूपस्य दोषस्याभावः । अस्य वार्त्तिकस्यार्थः । 'बैदस्य बैदयोर्वा पत्यानि बिदाः' इत्यत्र एकवचनद्विवचनान्तस्य यूनि युवापत्ये बहुषु प्रवृत्तौ अञो लोपो वक्तव्यः इति ।

यदि चात्रोपमेयभेदादुपमानभेदः, तदा प्रतिकृतीनामुपमेयानां बहुत्वादुपमानं काश्यपोऽपि भिन्न इति बहुष्वेवायमञ् स्यात् । तथा च अञ् यो बहुषु इत्येवमप्यत्र लुक् प्रसज्येतेति प्रकृतभाष्य-विरोधः । बह्वीषु प्रतिकृतिषु कश्यपा इत्यनिष्टप्रयोगप्रसङ्गश्च । तस्मादुपमेयभेदेऽपि नोपमानं भिद्यते इति ॥ ५९२ ॥

नन्वेवं काश्यप इव प्रतिकृतय इति विहितस्य प्रत्ययस्य लुपि युक्तवद्भावादेकवचनमेव स्यादित्याह--

**एवं तु युक्तवद्भावादत्रैकवचनं भवेत्।**

एवमित्युपमेयभेदेऽप्यजहदेकसंख्याकस्योपमानस्य प्रवृत्तौ प्रतिकृतिबहुत्वेऽप्येकवचनमतिदेशादनिष्टमापद्येत।

अत्र परिहारमुत्प्रेक्षितमाह--

**लुम्मनुष्ये तथोक्तं स्याल्लिङ्गस्यैकस्य सिद्धये ॥ ५९३ ॥**

'लिङ्गसिद्ध्यर्थं लुम्मनुष्ये' इति वार्त्तिके लिङ्गग्रहणात् केवलाद् वचनमत्र प्रकरणेऽतिदेशान्न भवतीत्यवसीयते। अन्यथा लिङ्गवचनसिद्ध्यर्थमित्येव ब्रूयात्। तस्माल्लिङ्गस्यैकस्य सिद्ध्यर्थमेवमभिधानं स्यात् संभाव्यत इत्यभिधेयाश्रयमेव वचनं भवति। चञ्चेव मनुष्यः, मनुष्यौ चञ्चे, मनुष्याश्चञ्चा इति मनुष्यसंख्यैव। लिङ्गं तु चञ्चाश्रयम्। एवं काश्यपा इत्यत्रापि पुंल्लिङ्गमतिदेशाद्, वचनं तु प्रतिकृतिगतमेव ॥ ५९३ ॥

---

नन्वेवं काश्यप इव प्रतिकृतय इति विग्रहे विहितस्य कन् प्रत्ययस्य लुपि युक्तवद्भावादेकवचनमेव स्यात् काश्यप इति, इत्याह—एवं तु युक्तवद्भावादिति।

अस्यार्थः—एवन्तु उपमेयभेदेऽपि अजहदेकसंख्याकस्य=अत्यक्तस्वगतैकत्वसंख्याकस्य उपमानस्य प्रवृत्तौ तु, अत्र=काश्यप इव प्रतिकृतय इत्यत्र प्रतिकृतिबहुत्वे, कनो लुपि युक्तवद्भावादेकवचनं भवेत्=प्रकृतिवल्लिङ्गवचनातिदेशादनिष्टमेकवचनमापद्यत इति।

अत्र स्वोत्प्रेक्षितं परिहारमाह—लुम्मनुष्ये इति।

अस्यार्थः—मनुष्ये कनो लुपि एकस्य=केवलस्य, लिङ्गस्य प्रकृतिवदतिदेशसिद्धये, लुम्मनुष्ये=लिङ्गसिद्धयर्थं 'लुम्मनुष्ये' इत्यत्र, तथा=वचनं विहाय लिङ्गसिद्धयर्थमित्येवम्, उक्तं स्यात्=उक्तमिति संभाव्यते। अन्यथा लिङ्गवचनसिद्धयर्थमित्येवं ब्रूयादिति।

अयं भावः—लिङ्गसिद्धयर्थं 'लुम्मनुष्ये' इति वार्त्तिके लिङ्गग्रहणात् केवलाद् अत्र प्रकरणे=कन्-लुप्-प्रकरणे लुपि युक्तवदित्यतिदेशात् प्रकृतिवद् वचनं न भवतीत्यवसीयते। अन्यथा लिङ्गवचनसिद्धयर्थं 'लुम्मनुष्ये' इत्येवं ब्रूयात्। तस्माल्लिङ्गस्यैकस्य=केवलस्य अतिदेशेन प्रकृतिवत् सिद्धयर्थमेवमभिधानं स्यात्=संभाव्यते इति। अत्र प्रकरणेऽभिधेयाश्रयमेव वचनं भवति, न तु अतिदेशेन प्रकृत्याश्रयम्। चञ्चेव मनुष्यौ=मनुष्यौ चञ्चे, मनुष्याश्चञ्चा इति प्रत्ययान्ता मिधेयमनुष्यसंख्यैव वचनप्रयोजिका, न तु प्रकृत्यर्थचञ्चागता एकत्वसंख्या। लिङ्गन्तु चञ्चाश्रयम्, न त्वभिधेयाश्रयम्। एवं काश्यपा इत्यत्रापि=काश्यप इव प्रतिकृतय इत्यर्थे काश्यपा इत्यत्रापि प्रकृतिवदतिदेशात् पुंल्लिङ्गम्, वचनं तु प्रतिकृतिरूपाभिधेयगतमेवेति ॥ ५९३ ॥

ननु चाविशेषेण "लुपि युक्तवद् व्यक्तिवचने" (पा० १।२।५१) इत्युक्ते कथं वार्त्तिके लिङ्गमात्रपाठादत्र वचनमपाक्रियते ? अतिदेशप्राप्तमपि चामनुष्यलुप्येव वार्त्तिकप्रामाण्यादस्तु । तत्रापि "हरीतक्यादिषु व्यक्तिः" (पा० १।२।५२) इति वचनात् सिद्धिरिति काश्यपा इत्यत्र कथं वचनं युक्तवद्भावान्न स्यादित्याशङ्क्य परिहारान्तरं वक्तुमाह--

**उपमेयेषु भिन्नेषु किञ्चिदेकं प्रवर्तते ।**
**प्रत्ययस्य विधौ तत्र नित्यं युक्तवदिष्यते ॥ ५९४ ॥**

नानाभूतेषु परिच्छेद्येषु प्रतिकृतिरूपेष्वभिन्नं वा कन उत्पत्तिनिमित्तमुपमानमत्र व्याप्रियते, प्रत्युपमेयं वा भिन्नमिति द्वौ पक्षौ स्तः । तत्राभिन्नस्य व्यापारे प्रतिकृतिबहुत्वे "लुपि युक्तवद्" (पा०१।२।५१) इति युक्तवद्भावो नियत एव प्रवर्तते । तथा चेष्यत एवेति न काचिदनिष्टापत्तिः ॥ ५९४ ॥

यदा पुनरुपमानं भेदेनोपमेयं प्रति वर्तते, तदा काश्यपा इति सिद्धिरित्याह—

**यदा प्रत्युपमेयं तु तदेकैकमवस्थितम् ।**
**तदा बाह्यार्थभेदेन तद्धितान्तं प्रचीयते ॥ ५९५ ॥**

---

ननु चाविशेषेण=लुम्मनुष्या लुम्मनुष्यसाधारण्येन "लुपि युक्तवद् व्यक्तिवचने" (पा० १।२।५१) इत्युक्ते कथं लिङ्गसिद्धयर्थं 'लुम्मनुष्ये' इति वार्त्तिके लिङ्गमात्रपाठादत्र=लुम्मनुष्यविषये वचनमपाक्रियते=निरस्यते । उक्तातिदेशप्राप्तमपि च लिङ्गवचनं 'लुम्मनुष्ये' इति वार्त्तिकप्रामाण्यादमनुष्यलुप्येवास्तु । तत्रापि=मनुष्यलुप्यपि पाठेनाकृतिगणत्वेन वा हरीतक्यादित्वमाश्रित्य 'हरीतक्यादिषु व्यक्तिः' इति वचनात् लिङ्गसिद्धिरस्तु इति काश्यप इव प्रतिकृतयः काश्यपा इत्यत्र देवर्षित्वेन देवत्वादमनुष्यलुब्विषये युक्तवद्भावात् प्राप्तं वचनं कथं न स्यादित्याशङ्क्य परिहारान्तरमाह—उपमेयेषु भिन्नेषु इति ।

अस्यार्थः—यत्र भिन्नेषु उपमेयेषु=सादृश्येन परिच्छेद्येषु किञ्चिदेकमुपमानं=सादृश्येन परिच्छेदकं प्रवर्तते, तत्र सादृश्यबोधकस्य कन्प्रत्ययस्य लोपविधौ सति प्रतिकृतिबहुत्वे नित्यं युक्तवद् लिङ्गवचनातिदेशः 'लुपि युक्तवद्व्यक्तिवचने' इति विहित इष्यते । तथा चेष्यत एव प्रतिकृतिबहुत्वे तत्र काश्यप इत्येकवचनान्तप्रयोग इति ।

अयं भावः—नानाभूतेषु=भिन्नेषु सादृश्येन परिच्छेद्येषु उपमेयेषु प्रतिकृतिरूपेषु अभिन्नं वा कन्प्रत्ययस्योत्पत्तिनिमित्तमुपमानमत्र=उपमेयपरिच्छेदक्रियायां व्याप्रियते, प्रत्युपमेयं वा भिन्नमिति संशयप्रयोजकौ द्वौ पक्षौ स्तः । तत्र भिन्नेषु उपमेयेषु अभिन्नस्योपमानस्य परिच्छेदानुरूपे व्यापारेऽभ्युपगम्यमाने प्रतिकृतिबहुत्वे 'लुपि युक्तवद्' इति युक्तवद्भावो नियत एव=नियमत एव प्रवर्तते । तथा चात्र प्रतिकृतिबहुत्वे इष्यत एव युक्तवल्लिङ्गवचनातिदेश इति । तत्र काश्यप इत्येकवचनान्तरूपसिद्धौ न काचिदनिष्टापत्तिरिति ॥ ५९४ ॥

यदा पुनरुपमानं भेदेनोपमेयं प्रति सादृश्येन परिच्छेदकतया वर्तते, तदा काश्यपा इति प्रतिकृतिबहुत्व एव रूपसिद्धिरित्याह—यदा प्रत्युपमेयं तु इति ।

उपमेयभेदे प्रत्येकमुपमानं यदा परिच्छेदाय प्रवर्तते, तदा प्राथमकल्पिकेऽर्थे भेदो नास्ति। तथा च काश्यपस्य प्रतिकृतिः काश्यपः। एवं द्वितीयोऽपि काश्यपः, तृतीयोऽपि काश्यप इति प्रत्येकमभिसंबन्धान्नानात्वमत्र नास्ति। केवलमेतत् तद्धितान्तं लुप्तप्रतिकृतिप्रत्ययं शब्दरूपं प्रचीयते प्रचयमनेकत्वमापद्यते।

तथाहि--सरूपाणामेकशेषवशेन काश्यपश्च काश्यपश्च काश्यपश्च काश्यपा इति बहुत्वेन संबध्यते।

न चेदानीमतिदेशशास्त्रस्य "लुपि युक्तवद्" (पा० १।२।५१) इत्यस्य व्यापारोऽस्ति, वृत्तत्वात् तद्व्यापारस्य।

यदा तु काश्यप इवायं प्रतिकृतिसमूह इति प्रथममेव प्रत्ययस्तदास्य व्यापारः। तदा हि युक्तस्य संख्याभेदोऽस्ति तन्निबन्धनम्। इदानीं तु प्रतिकृतीनां प्रचय इत्यन्योऽयं बाह्यार्थभेदनिबन्धनः संख्याभेदो न वर्तते॥ ५९५॥

---

अस्यार्थः—यदा तु तद्=उपमानम् एकैकम्=प्रत्युपमेयं सादृश्येन परिच्छेदकतया व्यवस्थितम्, तदा बाह्यार्थभेदेन=कनुप्रकृत्यर्थवहिर्भूतप्रतिकृतिरूपप्रत्ययार्थभेदेन काश्यप इति तद्धितान्तं प्रचीयते=प्रचयं गच्छति। ततश्च काश्यपश्च, काश्यपश्च, काश्यपश्चेति एकशेषे 'काश्यपाः' इति रूपसिद्धिः। न चात्र युक्तवद्भावस्य प्राप्तिः। प्रकृत्यर्थप्रत्ययार्थयोः संख्याभेदाभावादिति।

अयं भावः—उपमेयभेदे सति प्रत्येकमुपमानं यदा उपमेयस्य प्रत्येकं परिच्छेदाय प्रवर्तते, तदा प्राथमकल्पिकेऽर्थे=एकशेषात् प्राक् प्रतीयमानेऽर्थे स्वरूपभेदो नास्ति। तथा च 'कश्यपस्य गोत्रापत्यं काश्यपः' तस्य प्रतिकृतिः 'काश्यपः'। एवं द्वितीयोऽपि काश्यपः, तृतीयोऽपि 'काश्यपः' इति प्रकृत्यर्थस्य प्रत्येकं प्रत्ययार्थेन प्रतिकृत्या सहाभिसंबन्धाद्, अत्र प्रत्ययार्थस्य नानात्वं नास्ति। केवलमेतत् तद्धितान्तं लुप्तप्रतिकृत्यर्थप्रत्ययं शब्दरूपं प्रचीयते=प्रचयमनेकत्वमापद्यते।

तथाहि—सरूपाणामेकशेषवशेन काश्यपश्च, काश्यपश्च, काश्यपश्च=काश्यपा इति बहुत्वेन संबध्यते।

न चेदानीं "लुपि युक्तवद् व्यक्तिवचने" इत्यतिदेशशास्त्रस्यात्र व्यापारोऽस्ति, एकशेषात् प्रागेव तस्य व्यापारस्य वृत्तत्वात्=समाप्तत्वात्।

यदा तु काश्यप इवायं प्रतिकृतिसमूह इति एकशेषात् प्रथममेव उद्भूतावयवभेदे प्रतिकृतिसमूहे प्रत्ययः, तदाऽस्य=लुपि युक्तवदित्यतिदेशस्य व्यापारः, प्रकृत्यर्थप्रत्ययार्थयोः संख्याभेदात्।

तदा हि युक्तस्य=प्रकृत्यर्थस्य प्रत्ययार्थापेक्षया संख्याभेदोऽस्ति तन्निबन्धनम्=अतिदेशशास्त्रप्रवृत्तौ निमित्तम्। तदानीं तद्धितान्तस्य प्रचयः एकशेषप्रवृत्तौ निमित्तभूत उक्तः, इदानीं तु प्रतिकृतीनां प्रचय इत्यन्योऽयं प्रतिकृतिषु बाह्यार्थभेदनिबन्धनः=प्रतिकृतिसमूहरूपप्रकृत्यर्थबहिर्भूतप्रत्ययार्थभेदनिबन्धनः, प्रतिकृतिषु प्रकृत्यर्थापेक्षया संख्याभेदो युक्तवदतिदेशप्रवृत्तौ निमित्तभूतो न निवर्तत इत्यस्ति अस्यातिदेशशास्त्रविषयतेति॥ ५९५॥

ननु चैवमपि लुबर्थ एवायं प्रचीयमान इति युक्तवद्भावः कस्मान्न भवतीत्याशङ्क्य निदर्शनद्वारेण व्युत्पादयति--

यथा समूहप्रचये द्विगूनां भिन्नसंख्यता ।
पञ्चपूल्यादिषु तथा सुबन्तप्रचये भवेत् ॥ ५९६ ॥

पञ्चपूलाः समाहृताः पञ्चपूलीति "द्विगुरेकवचनम्" ( पा० २।४।१ ) इति कृते एकवद्भावे, पञ्चपूली च पञ्चपूली च पञ्चपूली चेत्येकशेषे पञ्चपूल्य इति बहुत्वे पुनरेकवद्भावः कस्मान्न भवतीति चोद्ये 'न किन्त्वन्यस्यैकशेषशब्दस्येदं बहुत्वम्, वान्यस्यानेकत्वात्'इत्युत्तरमुक्तम्। अयं हि न द्विगुरनेकार्थाभिधायी, किन्त्वन्यस्यैकशेषशब्दस्येदं बहुत्वम् । द्विग्वर्थस्य ह्येकवद्भाव आरब्धः । अकृते चैकशेषेऽर्थान्तरानपेक्षस्य द्विगोरेव योऽर्थस्तत्रैकवद्भावः ।

स एव हि द्विग्वर्थो न्यायः । कृते त्वेकशेषे द्विग्वर्थसमुदायस्य प्रचितस्य द्विग्वर्थादन्यत्वादन्तरङ्गे प्राथमकल्पिके द्विग्वर्थे चरितार्थत्वादेकवद्भावस्य पुनरप्राप्तिः ।

---

ननु एवमपि=प्रचयैकशेषाभ्यां काश्यपा इति प्रतिकृतिबहुत्वे बहुवचनान्तप्रयोगस्योपपत्तावपि लुबर्थक एवायं प्रचीयमानस्तद्धितान्तशब्द इति युक्तवद्भावः कस्मान्न भवति इत्याशङ्क्य निदर्शनद्वारेण=दृष्टान्तद्वारेण व्युत्पादयति=पूर्वकारिकोक्तमर्थं ग्राहयति—यथा समूहप्रचय इति ।

अस्यार्थः—पञ्चपूलाः समाहृताः पञ्चपूली इत्यत्र "द्विगुरेकवचनम्" इति सूत्रेणैकवद्भावे कृते पञ्चपूली च पञ्चपूली च पञ्चपूली चेति विग्रहे एकशेषे पञ्चपूल्यादिषु यथा समूहप्रचये भिन्नसंख्यता प्राथमकल्पिकादर्थाद् एकत्वसंख्यावतः पञ्चपूलसमाहाररूपात् पञ्चपूलीरूपस्य समूहस्य प्रचये बहुत्वसंख्यावत्तास्ति, तथा सुबन्तप्रचये—काश्यपा इति प्रतिकृत्यर्थकानां कनूलुबन्तानां सुबन्तानां शब्दानां प्रचये प्रकृत्यर्थगतसंख्यापेक्षया भिन्नसंख्यता भवेदिति ।

अयं भावः—पञ्चपूलाः समाहृताः 'पञ्चपूली' इत्यत्र द्विगुरेकवचनमिति सूत्रेणैकवद्भावे कृते 'पञ्चपूली च, पञ्चपूली च, पञ्चपूली चेत्येकशेषे 'पञ्चपूल्यः' इति बहुत्वे पुनरेकवद्भावः कस्मान्न भवति इति प्रश्ने संजाते "न वाऽन्यस्यानेकत्वात्" इति उत्तरमुक्तम् ।

अस्यार्थः—न वा एष दोषः, कुतः ? अन्यस्य एकशेषे कृते शिष्यमाणस्य पञ्चपूलीशब्दस्य द्विग्वपेक्षयाऽन्यस्यानेकत्वात्=अनेकार्थकत्वादिति । अयं हि एकशेषविषयः पञ्चपूलीशब्दो न द्विगुरनेकार्थाभिधायी, किन्त्वन्यस्यैकशेषशब्दस्य वाच्यमिदं बहुत्वम् । द्विग्वर्थस्य हि बहुत्वस्यैकवद्भाव आरब्धः । अकृते चैकशेषेऽर्थान्तरानपेक्षस्य द्विगोरेव यो बहुत्वरूपोऽर्थस्तत्रैकवद्भावः ।

स एव हि=तदेव हि अर्थान्तरानपेक्षं बहुत्वं द्विग्वर्थो न्याय्यः । कृते त्वेकशेषे दिग्वर्थभूतस्य समुदायस्य द्विग्वर्थसमुदायाभ्यामन्याभ्यां साहित्येन प्रचितस्य=वृद्धिगतस्य द्विग्वर्थादन्यत्वादन्तरङ्गे प्राथमकल्पिके दिग्वर्थे चरितार्थत्वादेकशेषगोचरे प्रचिते द्विग्वर्थे पश्चादुपस्थितिके बहिरङ्गे एकवद्भावस्य

एवमिह लुपः सोऽर्थः, यो लुबन्तादेव प्रतीयतेऽन्यानपेक्षादित्येकशेषे कृते शब्दान्तरत्वादन्तरङ्गे चरितार्थो युक्तवद्भावो बहिरङ्गेऽत्र प्रचयबहुत्वे न प्रवर्तते।।५९६।।

तदत्र दृष्टान्तोऽयमसदृश इत्याह—

**प्रचये भिद्यमाने तु संख्या पूलेषु भिद्यते।**
**अर्थभेदो लुबन्तेषु नैवं कश्चन दृश्यते॥ ५९७॥**

पञ्च पूलाः समाहृताः पञ्चपूलीति योऽर्थो द्विगोरवधार्यते, नासावेव पञ्चपूल्य इति प्रचयविवक्षायामेकशेषे कृते। पूर्वत्र हि पञ्चसंख्यावच्छिन्नोऽर्थः।

---

पुनरप्राप्तिः। एवमिह=काश्यपशब्दे कनूलुबन्ते लुपः सोऽर्थो यो लुबन्तादेवान्यानपेक्षात् प्रतीयते इत्येकशेषे कृते शिष्यमाणस्य कनूलुबन्तापेक्षया शब्दान्तरत्वात् अन्तरङ्गे चरितार्थो युक्तवद्भावो बहिरङ्गेऽत्र प्रचयप्रयुक्ते बहुत्वे न प्रवर्तते इति॥ ५९६॥

तदयमत्रैतत्संदर्भनिर्गलितार्थः। अभिन्नमुपमानं बह्वीषु प्रतिकृतिषु सादृश्येन परिच्छेदाय व्याप्रियते इत्येकः पक्षः। तत्र पक्षे काश्यप इव प्रतिकृतयः—काश्यप इति कनो लुपि नित्यं युक्तवद्भाव इष्यते। भिन्नमुपमानं प्रत्येकमुपमेयेषु सादृश्येन परिच्छेदाय व्याप्रियते इत्यपरः पक्षः। तत्र काश्यप इव प्रतिकृतिः काश्यपः, काश्यपश्च काश्यपश्च काश्यपश्च—काश्यपाः प्रतिकृतय इत्येकशेषेण प्रयोग इष्यते। तत्र युक्तवद्भावस्तु न भवति, कनूलुबन्तापेक्षया एकशेषशब्दस्य अर्थभेदेन शब्दान्तरत्वात्।

तथाहि—प्राथमकल्पिके कनूलुबन्ते एका काश्यपसदृशी प्रतिकृतिरुच्यते। तदेकशेषे तु प्रचयबहुत्वे बह्वचः काश्यपसदृश्यः प्रतिकृतय इति। किञ्चान्तरङ्गे प्राथमकल्पिके कनूलुबन्ते चरितार्थो युक्तवद्भावः पश्चादुपस्थितिके बहिरङ्गे एकशेषगोचरे न प्रवर्तत इति। तत्र दृष्टान्तः पञ्चपूल्य इति। अत्र हि प्राथमकल्पिके द्विगौ पञ्चपूली इत्यत्र द्विगुरेकवचनमित्येकवद्भावो भवति। पञ्चपूल्य इत्येकशेषे तु न भवति। अत्रापि प्राथमिककल्पे द्विगौ एकवद्भावस्य प्रवृत्तौ अन्तरङ्गत्वं हेतुः। तदेकशेषविषये तदप्रवृत्तौ तु बहिरङ्गत्वं शब्दान्तरत्वञ्चेति। तत् तस्माद्, वक्ष्यमाणाद् हेतोः अत्र=कृतैकशेषे काश्यपा इत्यत्र अयं दृष्टान्तः=पञ्चपूल्य इति दृष्टान्तोऽसदृश इति दृष्टान्तदार्ष्टान्तिकयोरुक्तयोरसादृश्यमुपपादयन्नाह—प्रचये भिद्यमाने तु इति।

अस्यार्थः—पञ्चपूली, पञ्चपूल्यौ, पञ्चपूल्य इत्यत्र समूहप्रचये यथायथम् एकत्वद्वित्वबहुत्वसमानाधिकरणत्रित्वसंख्याभिर्भिद्यमाने तु सति पूलेषु संख्या भिद्यते। तथाहि—प्राथमकल्पिके द्विगौ पञ्चत्वसंख्यावच्छिन्नोऽर्थः प्रतीयते। त्रयाणामेकशेषे तु पञ्चदशत्वसंख्यावच्छिन्नः। द्वयोरेकशेषे तु दशत्वसंख्यावच्छिन्नोऽर्थ इति। एवं काश्यपा इति कनूलुबन्तेषु कश्चनार्थभेदो न दृश्यते।

तथाहि—य एव लुबन्तवाच्यः प्रतिकृतिरूपोऽर्थः स एव एकशेषप्रयुक्ते प्रचये बहुत्वमापद्यते नान्य इति।

अयं भावः—पञ्चपूलाः समाहृताः पञ्चपूलीति योऽर्थो द्विगोरवधार्यते, नासावेव पञ्चपूल्य इति समूहप्रचयविवक्षायामेकशेषे कृते। एकशेषात् पूर्वत्र हि पञ्चत्वसंख्यावच्छिन्नोऽर्थः

एकशेषे तु पञ्चदशसंख्यावच्छिन्नः। द्वयोरेकशेषे तु पञ्चपूल्याविति दशसंख्यावच्छिन्नः। तस्माद् द्वित्वबहुत्वादीनां प्रचये भिद्यमाने द्विग्वर्थसंख्याया अन्यैव संख्या जायते।

तथा च नायं द्विग्वर्थ इति शक्यते वक्तुम्। पञ्चसंख्यावच्छिन्नसमाह्रियमाणार्थवाचकत्वादेव द्विगोरिति युक्तोऽत्र 'न वान्यस्यानेकत्वात्'इतिपरिहारः।

इह तु लुबन्तविषये न कश्चनार्थस्य भेदः। य एव ह्यर्थः प्रत्येकमुपमानसंबन्धे प्रचयविवक्षायामेकशेषे कृते, स एवैकस्याप्युपमानस्य बहुषूपमेयेषु संबन्धे प्रथमत एव बहुवचनस्य प्रवृत्तौ। तथा चार्थभेदाभावादत्र प्रचयार्थोऽपि लुबर्थः शक्यते वक्तुमिति तत्र वचनातिदेशः स्यादेव। ननु चास्त्येवात्रार्थभेदः।

तथाहि—प्रत्येकं प्रतिकृतीनामुपमानसंबन्धे सत्येकशेषेण बहुवचनान्तप्रयोगे प्रतिकृतेरेकैकस्याः काश्यप उपमानत्वेन प्रतीयते। अभिन्नस्य तूपमानस्य बहुषूपमेयेषु संबन्धे प्रतिकृतिसमूहस्यैकः काश्यपः प्रतीयेतोपमानमिति प्रतिकृतीनां परिच्छेद्यत्वाविशेषेऽप्यस्ति भेदः। सत्यमेतावानस्ति विशेषः। किन्तु लुबन्तस्यार्थानपगमाल्लुपा संबन्धित्वेन प्रचयोऽप्यर्थोऽवच्छेदमर्हत्येव।

---

प्रतीयते। त्रयाणामेकशेषे तु पञ्चदशत्वसंख्यावच्छिन्नः। द्वयोरेकशेषे तु पञ्चपूल्याविति दशत्वसंख्यावच्छिन्नः। तस्माद् द्विग्वर्थसंख्यापेक्षया एकशेषे द्वित्वबहुत्वादीनां प्रचये भिद्यमाने द्विग्वर्थसंख्याया अन्यैव एकशेषे संख्या उपजायते।

तथा चैकशेषशब्दार्थो द्विग्वर्थ इति न शक्यते वक्तुम्,द्विगोः पञ्चत्वसंख्यावच्छिन्नसमाह्रियमाणार्थस्यैव वाचकत्वात्,एकशेषशब्दस्य तु तदन्यसंख्यावच्छिन्नसमाह्रियमाणार्थवाचकत्वादिति युक्तोऽत्र "न वाऽन्यस्यानेकत्वात्" इति परिहारः।

इह तु=काश्यपा इत्यत्रैकशेषे तु लुबन्तविषये न कश्चनार्थस्य भेदः। य एव ह्यर्थः प्रत्येकमुपमानसंबन्धे प्रचयविवक्षायामेकशेषे कृते, स एवैकस्याप्युपमानस्य बहुषु उपमेयेषु संबन्धे प्रथमत एव उपमेयसामानाधिकरण्याद् बहुवचनस्य प्रवृत्तौ। तथा चार्थभेदाभावादत्र=काश्यप इव प्रतिकृतयः काश्यपा इत्यत्र प्रचयार्थोऽपि लुबर्थः शक्यते वक्तुमिति तत्र युक्तवद्वचनेन वचनातिदेशः स्यादेव।

ननु चास्त्येवात्र=कन्लुबन्तविषये प्रचये अर्थभेदः।

तथाहि—उपमेयभूतानां प्रतिकृतीनां प्रत्येकमुपमानसंबन्धे सति एकशेषेण काश्यपा इति बहुवचनान्तप्रयोगे एकैकस्याः प्रतिकृतेः काश्यप उपमानत्वेन प्रतीयते। अभिन्नस्य तूपमानस्य बहुषूपमेयभूतासु प्रतिकृतिषु संबन्धे सति प्रतिकृतिसमूहस्यैकः काश्यप उपमानं प्रतीयेत इति प्रतिकृतीनां सादृश्येनोपमानपरिच्छेद्यत्वाऽविशेषेऽपि अयमस्ति भेदः=विशेष इति चेत्, सत्यमेतावानस्ति विशेषः। किन्तु एकशेषेऽपि लुबन्तस्यार्थानपगमात् प्रचयोऽप्यर्थो लुबन्तार्थसंबन्धित्वेन लुपाऽवच्छेदमर्हत्येव।

तथा हि य एव लुवन्तवाच्यः प्रतिकृतिरूपोऽर्थः स एव प्रचये बहुत्वमापद्यते, नान्यः। किञ्च काश्यप इव काश्यप इत्यत्र प्रयोजनाभावादतिदेशो न प्रवर्तते, द्वयोरपि प्रकृतिप्रत्ययार्थयोरेकार्थत्वात्।

तथा च प्रचयविवक्षायामेव युक्तवद्भावेन कृत्यम्। काश्यप इव प्रतिकृतय इत्यत्रापि हि प्रतिकृतीनामुपमेयानामेकशेषादेव बहुत्वमवधार्यत इति बहिरङ्ग एवार्थे संभवति युक्तवद्भावः प्रवर्ततैव। तस्मात् प्रकारान्तरेणात्र काश्यपा इत्यस्य सिद्धिर्वक्तव्या। न त्वेकशेषेणाप्यत्र सिद्धिः॥ ५९७॥

तत् प्रकारान्तरमाह—

**येषूपमेयवचनः शब्दोऽन्यो न प्रयुज्यते।**
**उपमानस्य तत्रान्यैः संख्याया भेद इष्यते॥ ५९८॥**

येषु लुबन्तेषु उपमेयवचनः परिच्छेद्यभूतप्रतिकृत्यर्थः शब्दो लुबन्तादन्यो नोच्चार्यते, तत्रोपमानस्य काश्यपस्य संख्याभेद इष्यते, भिन्नमत्रोपमानं प्रवर्तत इत्यर्थः।

तथा ह्युपमेयवचनस्य शब्दस्योपादाने तत एव बहुत्वावगतेरुपमानमभिन्नमेवोपमेयोपकाराय प्रभवति।

---

तथाहि—य एव लुबन्तवाच्यः प्रतिकृतिरूपोऽर्थः स एव प्रचये सति बहुत्वमापद्यते नान्यः। किञ्च काश्यप इव प्रतिकृतिः काश्यप इत्यत्र अतिदेशं विनाऽपि दृष्टस्य वचनस्य सिद्धया प्रयोजनाभावादतिदेशो न प्रवर्तते, द्वयोरपि प्रकृतिप्रत्ययार्थयोरभिन्नार्थरूपत्वात्। तथा च लुबन्तार्थप्रतिकृतिप्रचयविवक्षायामेव युक्तवद्भावेन कृत्यम्=युक्तवद्भावस्य प्रयोजनम्। काश्यप इव प्रतिकृतय इत्यत्रापि हि प्रतिकृतीनामुपमेयानामेकशेषादेव बहुत्वमवधार्यत इति बहिरङ्ग एव संभवति=संभविनि अर्थे युक्तवद्भावः प्रवर्ततैव। तस्मात् प्रकारान्तरेण=एकशेषादन्येन प्रकारेण अत्र=काश्यप इव प्रतिकृतय इत्यत्र विग्रहे 'काश्यपाः' इत्यस्य सिद्धिर्वक्तव्या, न त्वेकशेषेणाप्यत्र=उक्तविग्रहे काश्यपा इत्यस्य सिद्धिः संभवतीति॥ ५९७॥

तत्प्रकारान्तरमाह—येषूपमेयवचन इति।

अस्यार्थः—येषु लुबन्तेषु प्रयुक्तेषु, उपमेयवचनः=परिच्छेद्यभूतप्रतिकृतिरूपार्थवाची शब्दो लुबन्तादन्यो न प्रयुज्यते, तत्र काश्यप इत्युक्ते संदेहः स्यात्—किमेकस्याः प्रतिकृतेरिदमुपमानम् अथवाऽनेकस्या इति। अनेकस्या उपमानत्वेऽपि युक्तवद्भावेन काश्यपशब्दस्यैकवचनान्तत्वोपपत्तेः। तत्र संदेहनिराकरणार्थम्=उपमानस्य संख्याया भेदः=भेदसमानाधिकरणं बहुत्वमुपक्रम एव अन्यैर्वैयाकरणैरिष्यते—काश्यपाः प्रतिकृतय इति।

अयं भावः—येषु लुबन्तेषु प्रयुक्तेषु सत्सु उपमेयवचनः उपमेयभूतसादृश्यपरिच्छेद्यप्रतिकृतिरूपार्थाभिधायी लुबन्तादन्यः शब्दो न प्रयुज्यते=नोच्चार्यते, तत्रोपमानस्य काश्यपस्य संख्याया भेदः=भेदसमानाधिकरणं बहुत्वमिष्यते। भिन्नं तत्रोपमानं प्रवर्तते, नाभिन्नम्।

तथाहि—काश्यप इव देवदत्तयज्ञदत्तविष्णुमित्रा इमाः प्रतिकृतय इत्युपमेयशब्दस्य बहुवचनान्तस्योपादाने तत एव=उपात्तकनुलुबन्तान्यबहुवचनान्तोपमेयशब्दादेव बहुत्वावगतेरुपमानमभिन्नमेवोपमेयोपकाराय प्रभवति इति युक्तस्तत्रैकवद्भावः।

तद्यथा काश्यप इव देवदत्तयज्ञदत्तविष्णुमित्रा इमाः प्रतिकृतय इत्यादौ। यदा तूपमेयवाची शब्दो न प्रयुज्यते, तदा काश्यप इत्युक्ते सन्देहः, किमेकस्याः प्रतिकृतेरिदमुपमानमुतानेकस्या इति। अनेकस्या ह्युपमाने युक्तवद्भावेन काश्यपशब्दस्यैकवचनान्तस्योपपत्तेः। तस्मादत्रोपमेयभेदपरिच्छेदायोपक्रम एव काश्यप आत्मभेदमुपमानभूतः प्रतिपद्यत इति काश्यपाः प्रतिकृतय इति सिद्धम्। अन्यैरिति चात्र वचनं मतान्तरस्य वक्ष्यमाणत्वात्॥ ५९८॥

अत्रैवार्थे निदर्शनमाह—

**यथा गुडतिलादीनां प्रयोगादेकसंख्यता।**
**पाकादेरप्रयोगे तु भिन्नसंख्याभिधीयते॥ ५९९॥**

गुडतिलतण्डुलानां पाकः; ताम्रः पलाशेषु बभूव राग इत्यादौ पाक्यादिबहुत्वादेवावधृतनानात्वः पाकादिरेकत्वेनैव निर्दिश्यते। यदा तु पाक्यभेदावधारणनिमित्तः स्वाश्रयभेदावधारणनिमित्तश्च शब्दान्तरप्रयोगो नास्ति, तदा पाको

---

यदा तूपमेयवाची शब्दो न प्रयुज्यते, तदा काश्यप इत्युक्ते संदेहः स्यात्, किमेकस्याः प्रतिकृतेरिदमुपमानमुतानेकस्या इति। अनेकस्या अपि हि प्रतिकृतेरुपमाने युक्तवद्भावेन काश्यपशब्दस्यैकवचनान्तस्योपपत्तेः। तस्मादत्र=कन्लुबन्तादन्यस्योपमेयवचनस्य शब्दस्याप्रयोगस्थले सादृश्येनोपमेयपरिच्छेदाय उपक्रम एव=कन्लुबन्तानामेकशेषात् प्रागेव उपमानभूतः काश्यप आत्मभेदं प्रतिपद्यते इति काश्यपाः प्रतिकृतय इति सिद्धम्। अन्यैरिति चात्र वचनं मतान्तरस्य वक्ष्यमाणत्वादुपपद्यत इति॥ ५९८॥

अत्रैवार्थे=काश्यप इत्युक्ते जायमानस्य—किमेकस्याः प्रतिकृतेरिदमुपमानमथानेकस्या इति संदेहस्यापाकरणाय उपक्रम एव काश्यपा इति बहुवचनान्तस्य प्रयोग इत्यत्रैवार्थे निदर्शनमाह—यथा गुडतिलादीनामिति।

अस्यार्थः—यथा गुडतिलादीनां प्रयोगात्—'गुडतिलतण्डुलानां पाकः' इत्यत्र गुडतिलादीनां प्रयोगात् 'ताम्रः पलाशेषु बभूव रागः' इत्यत्र बहुवचनान्तस्य पलाशशब्दस्य प्रयोगात् पाकरागादेरेकसंख्यता दृश्यते। तेषामप्रयोगे तु किमेकाधारगतः पाको रागो वा, अथानेकाधारगत इत्यस्य संदेहस्यापाकरणाय 'अयं पाकः, इमौ पाकौ, इमे पाकाः' इति भिन्नसंख्याऽभिधीयते, तथा कन्लुबन्तादन्यस्योपमेयवचनस्य शब्दस्याप्रयोगे काश्यप इत्युक्ते संदेहः स्यात्—किमेकस्याः प्रतिकृतेरिदमुपमानमुतानेकस्या इति। एतस्य संदेहस्यापाकरणाय उपक्रम एव 'काश्यपाः' इति बहुवचनान्तप्रयोग इति वक्ष्यत इति।

अयं भावः—'गुडतिलतण्डुलानां पाकः', 'ताम्रः पलाशेषु बभूव रागः' इत्यादौ पाक्यरञ्जनीयादिबहुत्वादेव पाकरागादेर्नानात्वावधारणात् पूर्वोक्तसंदेहाभावात् पाकरागादिरेकत्वेनैव निर्देष्टुं शक्यते, निर्दिश्यते च। बहुत्वेन तु प्रकारान्तरेणावधारणाद् न पुनर्निर्दिश्यते।

यदा तु पाक्यरञ्जनीयादिभेदावधारणहेतुः स्वाश्रयभेदावधारणहेतुश्च शब्दान्तरप्रयोगो नास्ति, तदा पाको राग इत्युक्ते संदेहः स्यात्, किमेकपाक्यद्रव्यगतोऽयं पाकोऽथानेकपाक्यगतः,

राग इत्युक्ते सन्देहः, किमेकपाक्यद्रव्यगतोऽयं पाकोऽथानेकाधार इति निश्चयप्रतिपत्त्यर्थं पाकौ पाकाः, रागौ रागा इत्यनेकसंख्यायुक्त एवार्थः प्रतिनिर्दिश्यते।।५९९।।

एवमिहापीति दार्ष्टान्तिके योजयितुमाह—

यः संबन्धिगतो भेदः स प्रयोगे प्रतीयते ।
संबन्धिनामतो भेद उपमेये न गम्यते ।। ६०० ।।

यः स्वतो न भिद्यते, अपि तु संबन्धिभेदाद् भेदमवलम्बते, स संबन्धिवचनस्य प्रयोगे भेदप्रतीतिमासादयति पदार्थः। तद्यथा—गुडादीनां प्रयोगे पाकादिः। अप्रयोगे तु संबन्धिवचनस्य यथा पाकादेर्विशेषो नावधार्यते, तथा प्रतिकृतिवचनस्याप्रयोगे तद्वतो भेदो विशेष उपमेये परिच्छेद्ये नावधार्यत इति तदर्थमुपात्तभेदमेवोपमानं प्रवर्तते। तथा च भिन्नेनोपमानेनोपमेयस्य भेद आवेद्यत इत्यर्थः।। ६०० ।।

एतदेव निगमयति—

---

तथा किमेकाधारगतोऽयं रागोऽथानेकाधारगत इति। तत्र निश्चयप्रतिपत्त्यर्थं संदेहापाकरणाय च 'पाकौ, पाकाः, रागौ, रागाः' इत्यनेकत्वसंख्यायुक्त एवार्थः प्रतिनिर्दिश्यते इति ।। ५९९ ।।

एवमिहापि=यथा प्रागुक्तसंदेहापाकरणार्थं पाका इति बहुवचनान्तप्रयोगस्तथा प्रागुक्तसंदेहापाकरणार्थमेव प्रकृते 'काश्यपाः' इति कन्लुबन्तस्य बहुवचनान्तस्य काश्यपशब्दस्य प्रयोगः इति दार्ष्टान्तिकं योजयितुमाह—यः संबन्धिगतो भेद इति।

अस्यार्थः—य एकसंबन्धिगतो भेदः स संबन्धिनां प्रयोगे इतरत्र प्रतीयत इति गुडतिलतण्डुलानां पाक इत्यादौ दृष्टम्, अतः प्रतिकृतिवचनस्याप्रयोगे काश्यप इति कन्लुबन्ते उपमेये परिच्छेद्ये प्रतिकृतिगतो भेदो न गम्यते=न प्रतीयते इति काश्यपा इति भिन्नमेवोपमानं प्रवर्तत इति।

अयं भावः—यः पदार्थः स्वतो न भिद्यते, अपि तु संबन्धिभेदाद् भेदमापद्यते, स संबन्धिवचनस्य प्रयोगे स्वस्मिन् भेदमापादयति=अनुभवति। तद्यथा—गुडादीनां प्रयोगे पाकादिः प्रागुदाहृतः संबन्धिवचनस्याप्रयोगे तु यथा पाकादेर्विशेषो नावधार्यते, तथा प्रतिकृतिवचनस्य शब्दस्याप्रयोगे तद्गतो भेदो विशेष उपमेये परिच्छेद्ये काश्यप इत्यत्र कन्लुबन्ते नावधार्यत इति तदवधारणार्थम् काश्यपा इति उपक्रम एवोपात्तभेदमेवोपमानं प्रवर्तते। तथा च 'काश्यपाः' इत्यत्र उपमेयवचनाप्रयोगे स्वतो भिन्नेनोपमानेन उपमेयस्य भेद आवेद्यत इति ।। ६०० ।।

**तस्मात् सामान्यशब्दत्वप्रसङ्गविनिवृत्तये ।**
**उपमेयगतो भेद उपमानेषु दृश्यते ॥ ६०१ ॥**

काश्यप इत्युक्तेऽपत्यं गोत्रं प्रतीयते, न नियमेन प्रतिकृतिः। सत्यामपि वोपमानसंबन्धप्रतिपत्तावेकानेकसाधारणस्योपमेयस्यावगमात् सामान्यशब्दत्वमुच्यते। ततश्च तन्निवारणायोपमेयाश्रयभेदप्रतिपत्त्यर्थं प्रधानानुयायित्वाद् गुणानामुपमानमवलम्बते भेदम् ॥ ६०१ ॥

उपक्रम एव यदा तर्ह्युपमेयवचनस्य प्रयोगस्तदा गतार्थत्वाद् बहुत्वस्याप्रयोग इत्याशङ्क्यान्यैरिति वचनान्मतान्तरं यदत्र सूचितम्, तदुपक्रमते वक्तुम्—

**उपमानं समस्तानामभिन्नं श्रूयते क्वचित् ।**
**भिन्नानामुपमेयानामेकैकं वोपमीयते ॥ ६०२ ॥**

---

एतदेव=प्रतिकृतिवचनस्याप्रयोगे तद्गतो भेद उपमेये=परिच्छेद्ये नावधार्यत इति तदर्थमुपात्तभेदमेवोपमानं प्रवर्तत इत्येतदेव निगमयति=उपसंहरति—तस्मात् सामान्यशब्दत्वेति ।

अस्यार्थः–तस्मात्=प्रतिकृतिवचनस्याप्रयोगे तद्गतस्य भेदस्य परिच्छेद्ये=उपमेयेऽप्रतीयमानत्वात्, काश्यप इत्युक्तेऽपत्यप्रतिकृत्योरुभयोः प्रतीत्या एकवचनान्तस्य काश्यपशब्दस्यापत्यप्रतिकृतिसाधारणस्यैकानेकसाधारणस्य च सामान्यशब्दत्वप्रसङ्गविनिवृत्तये काश्यपा इति बहुवचनान्तप्रयोगः, तेन उपमेयगतो भेद उपमानेषु दृश्यत इति ।

अयं भावः—काश्यप इत्युक्ते कश्यपस्य गोत्रापत्यं प्रतीयते, काश्यप इव प्रतिकृतिरिति प्रतीतिर्जायमानाऽपि नियमेन न जायते। सत्यामपि वा उपमानसंबन्धप्रतिपत्तौ=सत्यामपि वा कदाचित् प्रतिकृतौ उपमानसंबन्धप्रतिपत्तौ एकानेकसाधारणस्योपमेयस्यावगमात् सामान्यशब्दत्वमुच्यते। ततश्च तन्निवारणाय=सामान्यशब्दत्वप्रसङ्गनिवारणाय उपमेयाश्रयस्य भेदस्य उपमाने प्रतिपत्त्यर्थं काश्यपा इति बहुवचनान्तप्रयोगः। तेन गुणानां प्रधानानुयायित्वात् कन्लुबन्ते विशेष्यतया प्रधानीभूतोपमेयगतं भेदं तत्र विशेषणतया गुणीभूतमुपमानं कश्यपापत्यरूपं कर्तृ अवलम्बत इति स्थितमिति ॥ ६०१ ॥

नन्वेवं यदा तर्हि उपक्रम एव उपमेयवचनस्य प्रयोगः इमाः प्रतिकृतयः काश्यपा इति, तदा तेनैव गतार्थत्वात्=उपक्रमोपात्तोपमेयवचनशब्देनैव बहुत्वस्योक्तत्वाद् उपमानवचनपदोत्तरं बहुत्वस्य=बहुत्ववाचकस्य बहुवचनस्य अप्रयोगः प्राप्त इत्याशङ्क्य—"येषूपमेयवचनः" इति प्रागुक्तकारिकायाम्—अन्यैरिति वचनाद् यदत्र=कन्लुबन्तस्य प्रयोगविषये मतान्तरं सूचितं तद्वक्तुमुपक्रमते—उपमानं समस्तानामिति ।

इह कदाचित् समुदितानामेकमुपमानमुपमेयानाम्, कदाचित् तु नानाभूतानां प्रत्येकमुपमानप्रवृत्तिरिति द्वैतम् ॥ ६०२ ॥

पूर्वत्र पक्षे निदर्शनमाह—

**यथा गरुड इत्येतद् व्यूहापेक्षं प्रयुज्यते ।**
**एकेन यत्र सादृश्यं वैनतेयेन हस्तिनाम् ॥ ६०३ ॥**

गजानां सन्निवेशविशेषो गरुडेनोपमीयते, गरुड इवेमे हस्तिन इति। एवमश्वानां रचनाविशेषो मकरेण, मकर इवेमे वाजिन इति। तथा श्येन इवेमा इष्टका इति। एवञ्चायं गरुडव्यूहादिसंनिवेशविशेषो रचनाभेदः सैनिकादेः परिकल्पितः शक्यते वैनतेयादिनोपमातुम्, यद्येकत्वचनान्त एव गरुडशब्दः प्रयुज्यते।

तथा हि—गरुडाकृतयो गजा गम्यन्त इति संस्थानविशेषो गरुडेन परिच्छिन्नो भवतीति सम्बन्धिभेदादत्र भेदो न भवति। न हि गरुडस्योपमेया गजाः सम्बन्धिनः, अपि तु तद्व्यूहः।

यदा तु गरुडा इवेमे हस्तिनः, मकरा इवेमे वाजिन इति बहुवचनप्रयोगः, तदा प्रत्येकं हस्तिनामश्वानां चोपमेयत्वं प्रतीयेत। तथा च शीघ्रजवत्वादिना

---

अस्यार्थः—इह क्वचित् समस्तानामुपमेयानामभिन्नम्=एकम्, उपमानं श्रूयते। वा=अथवा, भिन्नानामुपमेयानामेकैकमुपमीयते=उपमानं क्रियते इति द्वौ पक्षाविति।

अयं भावः—इह कदाचित् समुदितानामुपमेयानामेकमुपमानम्, कदाचित्तु नानाभुतानामसंहतानामुपमेयानां प्रत्येकमुपमानप्रवृत्तिरिति द्वैतम्=संशय अस्याः कारिकाया दर्शनेन जायते इति ॥ ६०२ ॥

उक्ते पक्षद्वये पूर्वत्र पक्षे निदर्शनमाह—यथा गरुड इत्येतदिति।

अस्यार्थः—यत्र एकेन वैनतेयेन=गरुडेन बहूनां हस्तिनां सादृश्यम्, तत्र यथा 'गरुड इवेमे हस्तिनः' इति एतद् व्यूहापेक्षम्=हस्तिसमूहसंस्थानविशेषापेक्षम्, उपमाने एकवचनं प्रयुज्यते। अत्र समुदितानां गजानां गरुड उपमानमिति।

अयं भावः—गजानां संनिवेशविशेषो गरुडेनोपमीयते, 'गरुड इवेमे गजाः' इति। एवमश्वानां मकराकारेण रचनाविशेषो मकरेणोपमीयते, 'मकर इवेमे वाजिनः' इति। तथा 'श्येन इवेमा इष्टकाश्रिताः' इति। एवञ्चायं गरुडव्यूहादेः संनिवेशविशेषाः सैनिकादे रचनाभेदः परिकल्पितो वैनतेयादिनोपमातुं शक्यते, यद्येकवचनान्त एव गरुडशब्दः प्रयुज्यते।

तथा हि—'गरुडाकृतयो गजाः' अत्र वाक्ये गरुडशब्देन कनुलुबन्तेन गम्यन्ते इति एवं संस्थानविशेषो गरुडेन परिच्छिन्नो भवति इति संबन्धिभेदादत्र भेदो न भवति। न हि गरुडस्योपमेया गजाः संबन्धिनः, असादृश्यात्, अपि तु व्यूहः, सादृश्यात्, स तु एक एवेति।

यदा तु गरुडा इवेमे हस्तिनः, मकरा इवेमे वाजिन इति बहुवचनान्तप्रयोगः स्यात्, तदा प्रत्येकं हस्तिनामश्वानाञ्चोपमेयत्वं प्रतीयेत। तथा च शीघ्रजवत्वादिना सादृश्येन प्रत्येकं

सादृश्येनोपमानत्वमवगम्येत, न तु व्यूहः परिमेयोऽवधार्येत ॥ ६०३ ॥

एवमिहापि—

**एकस्यापि प्रतीयेत भिन्ना प्रतिकृतिः सह।**
**काश्यपस्येति तेनायं प्रत्येकमवतिष्ठते ॥ ६०४ ॥**

यदि काश्यप इवेमाः प्रतिकृतयः काश्यप इत्येकवचनान्तमुपमानं प्रयुज्यते, तदा गरुडस्येव हस्तिनो व्यूहेन तुल्याः, काश्यपस्य नानाभूता प्रतिकृतिः केनचित् सन्निवेशादिना धर्मेण सह तुल्या विज्ञायेत। न तु प्रत्येकमुपमानं गम्येत। सहशब्दस्तुल्यार्थः। तद्योगे काश्यपस्येति षष्ठी। तस्मात् प्रत्येकमुपमानभावप्रतिपत्त्यर्थमत्र काश्यपशब्दः प्रत्युपमेयं भेदेनैवावतिष्ठते। पूर्वत्र दर्शने उपमेयशब्दस्याप्रयोगे उपमेयभेदावगमायोपमानं पारार्थ्यादात्मभेदं प्रतिपद्यत इत्युक्तम्।

इह पुनः सत्युपमेयशब्दप्रयोगे भेदेनोपमानस्य दृष्टत्वात् प्रत्युपमेयमेकैकमुपमानमिति प्रतिपत्त्यर्थमुपक्रम एव भेदमुपमानमुपादत्त इति दर्शनभेदः ॥ ६०४ ॥

---

गरुडानां मकराणाञ्चोपमानत्वमवगम्येत, न तु व्यूहः उपमेयतया परिमेयः=परिच्छेद्यः अवधार्येत इति ॥ ६०३ ॥

एवमिहापि—गरुड इवेमे हस्तिन इतिवत् काश्यप इव प्रतिकृतय इत्यत्रापि एकस्यापि काश्यपस्य नानाभूता प्रतिकृतिः केनचित् संस्थानविशेषादिना धर्मेण तुल्या प्रतीयेतेत्याह—एकस्यापि प्रतीयेतेति।

अस्यार्थः—'गरुड इवेमे हस्तिनः' इत्यत्रेव एकस्यापि काश्यपस्य भिन्ना नानाभूता प्रतिकृतिः, सह=संस्थानविशेषादिना धर्मेण तुल्या प्रतीयेत, काश्यप इवेमाः प्रतिकृतयः 'काश्यपः' इत्यत्र विज्ञायेत, तेन तादृशविज्ञानस्यानिष्टत्वेन, अयम्=प्रतिकृतीनाम् उपमानभूतः काश्यपः, प्रत्येकं प्रत्युपमेयम्, उपमानभावप्रतिपत्त्यर्थमत्र भेदेनैवावतिष्ठते 'काश्यपा' इति।

अयं भावः—यदि 'काश्यप इवेमाः प्रतिकृतयः' काश्यप इत्येकवचनान्तमुपमानं प्रयुज्यते, तदा गरुडस्येव व्यूहेन धर्मेण हस्तिनः काश्यपस्य नानाभूता प्रतिकृतिः केनचित् सन्निवेशविशेषादिना=संस्थानविशेषादिना धर्मेण सह तुल्या विज्ञायेत, न तु प्रत्येकमुपमानं गम्येत। सहशब्दस्तुल्यार्थे, तद्योगे काश्यपस्येति षष्ठी। "तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम्" (पा० २।३।७२) इति तृतीयाविधानस्य वैकल्पिकत्वात्। तस्मात् प्रत्येकमुपमानभावप्रतिपत्त्यर्थम्=उपमानभावप्राप्त्यर्थम् अत्र=काश्यप इव प्रतिकृतय इत्यत्र बहुवचनान्तः काश्यपशब्दः प्रत्युपमेयं भेदेनैवावतिष्ठते। पूर्वत्र दर्शने उपमेयशब्दस्याप्रयोगे काश्यपशब्दस्यैव कर्तृलुबन्तस्य प्रयोगे उपमेयभेदावगमाय उपमानमुपक्रमे एकवचनान्तं प्रयुक्तमपि पारार्थ्यादात्मभेदं पश्चात् तन्त्रावृत्त्यादिना प्रतिपद्यते इत्युक्तम्।

इह तु उपमेयशब्दप्रयोगे सति भेदेनोपमानस्य दृष्टत्वात् प्रत्युपमेयमेकैकमुपमानमिति प्रतिपत्त्यर्थमुपक्रम एव बहुवचनान्ततया प्रयुक्तमुपमानं भेदमुपादत्ते इति दर्शनभेद इति ॥ ६०४ ॥

इदानीमेकेन समुदितानामुपमाने निदर्शनान्तरं प्रसिद्धतरमाह—

**मेघाः शैल इवेत्युक्ते समस्तानां प्रतीयते ।**
**सादृश्यं गिरिणैकेन प्रत्येकं तेन भिद्यते ।। ६०५ ।।**

शैल इवामी बलाहका महापरिमाणा, नानाविधरागविच्छुरितानेकसंस्थानशिखरत्वादिति पर्वतेनैकेन बलाहकानामुपमीयमानत्वे समुदितानां गिरितुल्यत्वमवधार्यते, न तु प्रत्येकम् । न ह्येकैको मेघः पर्वतसदृशोऽनेकवर्णविच्छुरितानेकसंस्थानशिखरत्वादिपर्वतसाधारणधर्माभावादेकैकस्य । समुदितानामेव हि तथाभावः । यत एवमेकवचनान्तमुपमानमनेकस्य समुदितस्य स्यात्, न प्रत्येकम् । तेन कारणेन सत्युपमेयशब्दप्रयोगे सम्बन्धिन उपमेयस्य समुदितस्यैकस्याभावात् सम्बन्धिभेदानिश्चयात् पाकादिवदुपमानस्यातोऽनवधारणात् प्रत्येकमुपमानसम्बन्धप्रतीत्यर्थमिदं काश्यपलक्षणमुपमानमुपक्रम एवात्मभेदं प्रतिपद्यत इत्यर्थः ।

तदेवं विवक्षितार्थप्रतीत्यर्थं काश्यपा इति बहुवचनप्रयोगोऽवस्थापितः ।

---

इदानीमेकेन समुदितानामुपमाने प्रसिद्धतरमन्यन्निदर्शनमाह—मेघाः शैल इवेति ।

अस्यार्थः—मेघाः शैल इवेत्युक्ते समस्तानां मेघानामेकेन गिरिणा सादृश्यं प्रतीयते, तेन कारणेन सत्युपमेयशब्दप्रयोगे उपमानसंबन्धिन एकस्य समुदितस्य उपमेयस्य काश्यप इवामी प्रतिकृतय इत्यत्राभावात् प्रत्येकमुपमानसंबन्धप्रतीत्यर्थमिदं काश्यपलक्षणमुपमानमुपक्रम एव बहुवचनान्ततया प्रयुक्तं भिद्यते=आत्मभेदं प्रतिपद्यत इति ।

अयं भावः—शैल इवामी बलाहकाः=मेघाः महापरिमाणा नानाविधरागविच्छुरितानेकसंस्थानशिखरत्वादिति रीत्या एकेन पर्वतेन मेघानामुपमीयमानत्वे समुदितानां तेषां गिरितुल्यत्वमवधार्यते, न तु प्रत्येकं तद् विज्ञायते । न ह्येकैको मेघः पर्वतसदृशः, एकैकस्यानेकवर्णविच्छुरितानेकसंस्थानशिखरत्वादिरूपपर्वतसाधारणधर्माभावात्, समुदितानामेव हि तेषां तथाभावः=तथाविधसाधारणधर्मयोगः । यत एवम्=समुदितानामेवोपमानसाधारणधर्मयोगे एकवचनान्तमुपमानमनेकस्य समुदितस्य स्यात्, न तु प्रत्येकम् । तेन कारणेन सत्युपमेयशब्दप्रयोगे काश्यप इवेमाः प्रतिकृतय इत्यत्र एकस्य उपमानसंबन्धिनः समुदितस्य उपमेयस्याभावाद् एकवचनान्तकाश्यपशब्दप्रयोगेण चोपमानरूपसंबन्धिभेदानिश्चयात् पाकादिवत्=गुडतिलतण्डुलानां पाक इत्यादिष्विव, अतः=काश्यप इवेमाः प्रतिकृतय इत्यत्र प्रयुक्तादेकवचनान्तकाश्यपपदाद् उपमानस्य काश्यपस्य भिन्नस्यानवधारणात् प्रत्येकं प्रतिकृतिषु उपमेयासु उपमानसंबन्धप्रतीत्यर्थमिदं काश्यपरूपमुपमानमुपक्रम एव=उपमेयसंबन्धात् प्रागेव बहुवचनान्ततया प्रयुक्तं सद् आत्मभेदं प्रतिपद्यते ।

तदेवं विवक्षितार्थं प्रतीत्यर्थम्=प्रत्युपमेयमुपमानसंबन्धप्रतीत्यर्थं काश्यपा इति बहुवचनान्तप्रयोगोऽवस्थापितः ।

नन्वेवमुपक्रम एव भेदप्रतिपत्तेरञो बहुपूत्पत्तिः स्यादित्यञो बहुष्वित्येवं लुगत्र प्राप्नोति। नैष दोषः। अञेकत्व एव ह्यर्थ उत्पद्यते। तथा च युक्तवद्भावादेकवचनं प्राप्तमित्येकशेषेण बहुवचनं समर्थितम्। तत्रापि च युक्तवद्भावस्याप्राप्तिमाशङ्क्योपमेयभेदप्रतिपत्त्यर्थं बहुवचनमिदं समर्थितम्।

तथा च विवक्षितार्थप्रतिपादनानुरोधाद् युक्तवद्भावायातं वचनमत्र बाध्यते। एतमव च न्यायं गर्भीकृत्य 'हरीतक्यादिषु व्यक्तिः' इत्युक्तमितीदमपि तत्रैव द्रष्टव्यम्। अञन्तं यद् बहुष्वित्यपि चाश्रीयमाणेऽत्र लुगप्रसङ्गो भाष्येऽभिहितः।

तथा हि-"यञञोश्च"(पा० २।४।६४) इत्यत्र "यस्कादिभ्यो गोत्रे"(पा० २।४।६३) इत्यतो गोत्रग्रहणानुवृत्तेर्लौकिकस्य चापत्यलक्षणस्य तत्र गोत्रस्य ग्रहणादञन्तं यद् बहुषु गोत्रमित्याश्रयणात् प्रतिकृतिबहुत्वस्य गोत्रबहुत्वाभावाल्लुगविषयोऽयम्।

इत्थं च कृत्वा बैदस्य बैदयोर्वा अपत्यानि बहूनि बिदा इत्यत्राप्यञन्तस्य गोत्रबहुत्वे वर्तमानत्वादनेनैव लुक् सिद्ध इति एकवचनद्विवचनान्तस्य च (एकवचनान्ताञन्तस्य द्विवचनान्ताञन्तस्य च) प्रवृत्तौ यूनीत्येतदनारब्धव्यमिति भाष्ये सिद्धान्तोऽवस्थापितः। लौकिकस्य हि गोत्रस्य "यञोश्च" (पा० २।४।६४) इत्यत्र ग्रहणाद् युवापि गोत्रमिति। गतमेतत्॥ ६०५॥

---

नन्वेवमुपक्रम एव भेदप्रतिपत्तेरञो बहुपूत्पत्तिः स्यादिति "अञो बहुषु" इत्येवं लुगत्र प्राप्नोति। नैष दोषः। एकत्व एव ह्यर्थे अनुत्पद्यते। तथा च तदन्तात् प्रतिकृत्यर्थके कनि तल्लुपि च युक्तवद्भावादेकवचनं प्राप्तमित्येकशेषेण बहुवचनं समर्थितम्। तत्रापि च युक्तवद्भावस्य प्राप्तिमाशङ्क्य उपमेयभेदप्रतिपत्त्यर्थं बहुवचनमिदम्=काश्यपा इति बहुवचनं समर्थितम्।

तथा च विवक्षितार्थप्रतिपादनानुरोधाद्=विवक्षितस्यार्थस्य प्रत्युपमेयमुपमाने संबन्धरूपस्य प्रतिपादनानुरोधाद् युक्तवद्भावप्राप्तमेकवचनमत्र=कन्लुबन्तस्यैकशेषविषये बाध्यते। एतमेव च यायम्=एतामेव युक्तिम् गर्भीकृत्य "हरीतक्यादिषु व्यक्तिः" (वा० ३४६) इति सूत्रमुक्तमितीदमपि तत्रैव द्रष्टव्यम्। अत एव हरीतक्याः फलानि हरीतक्य इति सिद्धम्। अञन्तं यद् बहुषु तदञो लुगित्येवमपि चाश्रीयमाणेऽत्र='काश्यपाः' इत्यत्र लुगप्रसङ्गो भाष्येऽभिहितः।

तथाहि—'यञञोश्च' इत्यत्र 'यस्कादिभ्यो गोत्रे' इत्यतो गोत्रग्रहणानुवृत्तेरपत्याधिकाराद् तत्र लौकिकस्य चापत्यलक्षणस्य गोत्रस्य ग्रहणाद् अञन्तं यद् बहुषु गोत्रमित्याश्रयणात् प्रतिकृतिबहुत्वस्य गोत्रबहुत्वाभावाद्‌लुगविषयोऽयम्, काश्यप इव प्रतिकृतयः काश्यपा इति।

इत्थं च कृत्वा बैदस्य बैदयोर्वा अपत्यानि बहूनि बिदा इत्यत्राप्यञन्तस्य गोत्रबहुत्वे वर्तमानत्वादनेनैव लुक् सिद्ध इति एकवचनान्ताञन्तस्य द्विवचनान्ताञन्तस्य च बहुषु अपत्येषु प्रवृत्तौ यूनि लुगित्येतदनारब्धव्यमिति भाष्ये सिद्धान्तोऽवस्थापितः। लौकिकस्य हि गोत्रस्य अपत्यरूपस्य 'यञञोश्चे' इत्यत्र ग्रहणाद् युवापि अपत्यत्वाविशेषाद् गोत्रमिति। गतमेतत्=उपमानविषयकं परीक्षणं समाप्तमिति॥ ६०५॥

इदानीमुपमानप्रसङ्गेन "समासाच्च तद्विषयात्" (पा०५।३।१०६) इत्ययमिवार्थ-विषयश्छविधिर्विचार्यते। तत्र 'तदित्यनेन किं प्रतिनिर्दिश्यते' इति भाष्यम्। सर्व-नाम्नां प्रधानपरामर्शः समुचितः। समासश्चात्राप्रधानम्, प्रत्ययप्रकृतित्वेन गुणभावाद् इवार्थोऽपि छविधौ गुणभावादप्रधानम् इत्यन्यस्यासम्भवात् कस्य परामर्श इति प्रश्नः।

अत्रोत्तरं छप्रत्यय इति। स एव हि विधेयत्वात् प्रधानं सर्वनामसम्बन्धयोग्य इत्याशयः।

अनन्तरमुक्तम्–'कथं समासो नाम छविषयः स्यात्'इति। भवेत् प्राधान्याच्छ-प्रत्ययस्य परामर्शः, किन्त्वर्थस्यासङ्गतिः।

तथा हि—छप्रत्ययो विषये यस्य तस्मात् समासाच्छप्रत्ययो भवतीत्यर्थः सम्पद्यते। समासस्य कथं छप्रत्ययो विषयः स्यात्। न हि शब्दः शब्दस्य विषयो भवति। अर्थ एव हि शब्दस्याभिधेयो विषयो न्याय्यः। शब्दस्त्वनुकरणस्य प्रत्याय्यो भवेद् विषयः। न च समासस्यानुकरणम्, छ एव हि तथा स्यात्।

अथात्रायमाशयः—अनन्यत्रभावो विषयार्थ इति छप्रत्ययादन्यत्र यस्य समासस्याभावः, स छविषयः समास इति। एतदप्ययुक्तमित्याह—

**छापेक्षा तद्विषयता विधेयत्वान्न गम्यते।**
**काकतालीयमित्यत्र प्रसिद्धं ह्युपलक्षणम्॥ ६०६॥**

---

इदानीमुपमानप्रसङ्गेन "समासाच्च तद्विषयात्" (५।३।१०६) इत्ययमिवार्थविषयश्छ-विधिर्विचार्यते। तत्र "तदित्यनेन किं प्रतिनिर्दिश्यते" इति भाष्यम्। सर्वनाम्ना हि प्रधानपरामर्शः समुचितः। समासश्चात्राप्रधानम्, विधेयप्रत्ययस्थप्रकृतित्वेन गुणभावात्। इवार्थोऽपि छविधौ गुणभावादप्रधानमिति अन्यस्यासंभवात् कस्य परामर्श इति प्रश्नः।

अत्रोत्तरम्—"छप्रत्ययः" इति। स एव हि विधेयत्वात् प्रधानं सर्वनामपरामर्शयोग्य इति। अनन्तरं तत्रैवोक्तम्—"कथं समासो नाम छविषयः स्यात्" इति।

अस्यार्थः—छप्रत्ययो विषयो वाच्यो यस्य स छविषय इति। भवेद् विधेयत्वेन प्राधान्या-च्छप्रत्ययस्य तदिति सर्वनाम्ना परामर्शः। किन्त्वेवं सति तद्विषयादित्यस्य सूत्रघटकपदस्यार्था-संगतिः।

तथाहि—छप्रत्ययो विषयो वाच्यो यस्य तस्मात् समासात् छप्रत्ययो भवतीत्यर्थः संपद्यते। समासस्य च कथं छप्रत्ययो विषयः स्यात्। नहि शब्दः शब्दस्य विषयो भवति। अर्थ एव हि शब्दस्याभिधेयो वाच्यो विषयो न्याय्यः। शब्दस्त्वनुकरणस्य प्रत्याय्यो भवेत् तस्य विषयः। न च समासश्छस्यानुकरणम्। छ एव हि तथा स्यात्=छस्यानुकरणं स्यात्।

अथात्रायमाशयः—"अनन्यत्रभावो विषयार्थः" इति। छप्रत्ययादन्यत्र यस्य समासस्या-भावः स छविषयः समास इति, एतदप्ययुक्तमित्याह—छापेक्षा तद्विषयता इति।

यः समासश्छप्रत्ययादन्यत्र न भवति, ततश्छो भवतीत्येवं छप्रत्ययापेक्षं समासस्य तद्विषयत्वं न घटते। काकतालीयमित्यत्र व्युत्पद्यते। यस्माद् यन्निर्ज्ञातम्, तदन्यस्य ज्ञप्तिहेतुरुपपद्यते। छप्रत्ययोऽनेनैवेदम्प्रथमतया विधेय इत्यप्रसिद्धममुमुपाश्रित्य विशेषणं कथमेतद्विषयतया प्रकृतिभूतः समासोऽवच्छेत्तुं पार्यत।

यदि हि छप्रत्ययो लक्षणान्तरेण लब्धात्मरूपो भवेत्, तदा तत्र नियतत्वं प्रकृतेः समासस्यावधार्य प्रत्ययविध्यर्थमुपादानं युज्यते। न तु लक्षणान्तरेण छो विहितः। इदमेव ह्युत्पत्तिवाक्यमस्य। तथा च प्राक् छविधेः समासस्य छविषयत्वमसिद्धं कथमनूद्यते।

अथ भाव्यवस्थाश्रयेण छविषयत्वं समर्थ्यते, तदा किमनेनोक्तेन। यस्मात् समासाच्छो विधास्यते, स चेच्छविषयो भवति, तस्माच्छप्रत्ययो भवतीत्येवमर्थे

---

अस्यार्थः—काकतालीयमित्यत्र छापेक्षा तद्विषयता, यः समासश्छप्रत्ययादन्यत्र न भवति, ततश्छो भवति इत्येवं छप्रत्ययापेक्षं समासस्य तद्विषयत्वम्, छप्रत्ययस्य 'समासाच्च तद्विषयाद्' इति सूत्रेणैव विधेयत्वादितः पूर्वमप्रसिद्धत्वाद् न गम्यते=न विज्ञायते। हि=यतः, प्रसिद्धमुपलक्षणम्=अप्रसिद्धस्य विशेष्यस्य ज्ञप्तिहेतुर्विशेषणं भवति, नाप्रसिद्धम्। छप्रत्ययस्तु अनेनैव विधेयत्वादितः पूर्वमसिद्ध इति तद्घटितं तदपेक्षं च तद्विषयत्वं कथं छप्रत्ययप्रकृतेः समासस्य विशेषणं स्यादिति। कारिकायां प्रकृतायामुपलक्षणपदं ज्ञप्तिहेतुपरम्, उपलक्ष्यते इतरव्यावृत्ततया विज्ञायते वस्तु येन तदुपलक्षणमिति व्युत्पत्तेः। तेन उपाध्युपलक्षणविशेषणानां त्रयाणामपि संग्रहः। एषां भेदस्तु अन्यत्र प्रदर्शितः, नेह विस्तरभयात् प्रतन्यते इति।

अयं भावः—यः समासश्छप्रत्ययादन्यत्र न भवति, ततश्छप्रत्ययो भवति, इत्येवं छप्रत्ययापेक्षं समासस्य तद्विषयत्वं=छप्रत्ययविषयत्वम् न घटते=नोपपद्यते। काकतालीयमिति—"समासाच्च तद्विषयाद्" (पा० ५।३।१०६) इति सूत्रोदाहरणे एतत्कारिकार्थो व्युत्पाद्यते=ग्राह्यते। हि=यस्मात्, यन्निर्ज्ञातम्=प्रसिद्धं तदन्यस्यानिर्ज्ञातस्य ज्ञप्तिहेतुरुपपद्यते। छप्रत्ययोऽनेनैव सूत्रेणेदं प्रथमतया विधेय इति इतः पूर्वमप्रसिद्धममुं=तद्विषयत्वरूपविशेषणघटकत्वाद् विशेषणमुपाश्रित्य कथमेतत् सूत्रविषयतया प्रकृतिभूतः समासोऽवच्छेत्तुम्=परिच्छेत्तुं पार्यते।

यदि हि छप्रत्ययो लक्षणान्तरेण=अन्येन सूत्रेण लब्धस्वरूपो भवेत्, तदा तत्र नियतत्वम्=नियमेन स्थितत्वं छप्रत्ययप्रकृतिरूपस्य समासस्यावधार्यसूत्रे तद्विषयत्वेन तस्योपादानं युज्यते। किन्तु न लक्षणान्तरेण=सूत्रान्तरेण छो विहितः। "समासाच्च तद्विषयात्" (पा० ५।३।१०६) इति सूत्रमेव हि अस्य=छप्रत्ययस्य उत्पत्तिवाक्यम्=विधिवाक्यम्। तथा च छविधेः प्राक् समासस्य छविषयत्वमसिद्धं कथमनूद्यते।

अथ भाव्यवस्थाश्रयेण यस्माद् समासाच्छप्रत्ययो विधास्यते स चेच्छविषयो भवति, तस्माच्छप्रत्ययो भवतीत्येवं समासस्य छविषयत्वं समर्थ्यते, तदा किमनेनोक्तेन=एतदुक्तेः किं फलम्। यत एवमर्थे विज्ञायमाने न कश्चित् प्रकृतेरुपकारोऽभिहितो भवति। छप्रकृतेः समासस्य

विज्ञायमाने न कश्चित् प्रकृतेरुपकारोऽभिहितो भवति। छप्रकृतेः समासस्य छविषयत्वाव्यभिचारादन्यस्य निवर्तनीयस्य सिद्धस्याभावात् ॥ ६०६ ॥

ननु च भाव्यवस्थाश्रयेण विशेषणस्यास्ति प्रयोजनम्। तथाहि—छविषयत्वेन समासस्य विशेषणे विषयार्थस्यानन्यत्रभावरूपत्वाच्छप्रत्ययादन्यत्राप्रयोगः समासस्यास्य ख्यापितो भवतीत्याशङ्क्याह—

**राजाश्वादिश्च विषयः स्यादन्यो वेत्यनिश्चितम्।**
**तेन छस्य विधानात् प्राग् व्यपदेशो न विद्यते॥ ६०७ ॥**

तद्विषयादित्यनेन छविषयः समासोऽविशेषेणोपादीयमानः सर्वो राजाश्वादिप्रसिद्धो विधास्यमानछप्रकृतित्वादेव छविषयोऽन्यो वा प्रकारान्तरेण सम्भाव्यमानश्छविषयो गृह्येतेत्येतावन्नावधारितम्। येन प्रसिद्धस्य निश्चितच्छविषयत्वप्रणालिकया साधुत्वं ज्ञाप्येत समासस्य। प्रकारान्तरेण हि छविषयत्वानुपपत्तेश्छप्रत्ययप्रकृतित्वादेव समासस्य तद्विषयत्वम्।

इत्थञ्च सर्वस्यैव समासस्य प्रकृतित्वोपपत्तौ किमनेन विशेषणेन व्यवच्छिद्येत।

---

छविषयत्वाव्यभिचाराद् अन्यस्य=समासातिरिक्तस्य तद्विषयत्वरूपविशेषणेन निवर्तनीयस्य सिद्धस्याभावात् तद्विषयत्वस्य समासविशेषणत्वायोगात्। संभवव्यभिचाराभ्यां स्याद् विशेषणमर्थवदित्यभियुक्तोक्तेरिति ॥ ६०६ ॥

ननु च भाव्यवस्थासमाश्रयणेन समासे तद्विषयत्वविशेषणस्यास्ति प्रयोजनम्। तथाहि—समासस्य छविषयत्वेन विशेषणे विषयपदार्थस्यात्रानन्यत्रभावरूपत्वात् समासस्यास्य छप्रत्ययप्रकृतिभूतस्य छप्रत्ययादन्यत्राप्रयोगः ख्यापितो भवति इत्याशङ्क्याह—राजाश्वादिश्चेति।

अस्यार्थः—'समासाच्च तद्विषयात्' (पा० ५।२।१०६) इत्यत्र तद्विषयादित्यनेन छविषयः समासोऽविशेषेणोपादीयमानः सर्वो राजाश्वादिः प्रसिद्धो विधास्यमानः छप्रकृतित्वादेव छविषयः, संभाव्यमानः छविषये गृह्येतेत्यनिश्चितम्=संदिग्धम्, तेन हेतुना तद्विषयत्वरूपस्य विशेषणस्य अन्यो वा प्रकारान्तरेण संदिग्धत्वेन छस्य विधानात् प्राक् तद्विषयत्वेन विशेषणेन समासस्य व्यपदेशो नोपपत्तियुक्तो विद्यते, निर्धारितस्यैव विशेषणत्वसंभवादिति।

अयं भावः—समासाच्च तद्विषयादिति सूत्रे तद्विषयादित्यनेन छविषयः समासोऽविशेषेण=सामान्येन उपादीयमानः सर्वो राजाश्वादिः प्रसिद्धो विधास्यमानस्य छस्य प्रकृतित्वादेव छविषयः, अन्यो वा प्रकारान्तरेण संभाव्यमानः काकतालादिश्छविषयो गृह्येतेत्येतावन्नावधारितम्=न निर्णीतम्, येन प्रसिद्धस्य राजाश्वादिसमासस्य निश्चितच्छविषयत्वप्रणालिकया विशेषणरूपया ततश्छप्रत्ययान्तस्य साधुत्वं ज्ञाप्येत। छप्रत्ययप्रकृतेः समासस्य प्रकारान्तरेण=छप्रत्ययप्रकृतित्वरूपात् प्रकारादन्येन प्रकारेण हि च्छविषयत्वानुपपत्तेश्छप्रत्ययप्रकृतित्वादेव समासस्य तद्विषयत्वम्।

इत्थञ्च सर्वस्यैव समासस्य प्रकृतित्वोपपत्तौ=छप्रत्ययप्रकृतित्वेन तद्विषयत्वोपपत्तौ किमनेन विशेषणेन=तद्विषयत्वरूपेण विशेषणेन कः समासो व्यवच्छिद्येत, व्यभिचाराभावात्।

न च सर्वस्य समासस्य छप्रत्ययादन्यत्रासाधुत्वमेव ज्ञाप्यते, अनिष्टेः। न चानिष्टार्था शास्त्रप्रक्लृप्तिर्न्याय्या। तदित्यस्य तु परामर्शनीयमन्यत् कल्प्यताम्। तस्माच्छविधेः पूर्वं नियतस्य समासस्य प्रसिद्धतद्विषयस्याभावाच्छविषयादिति विशेषणं न युक्तम्। सिद्धे हि प्रत्यये कार्यान्तरे तेन विशेषणं प्रकृतिरूपस्य दृष्टम्। तद्यथा—"षष्ठ्यतसर्थप्रत्ययेन" ( पा० २।३।३० ) इति।

न तु स्वयमलब्धात्मलाभः स्वनिमित्तस्यैव विशेषणं युक्तम्। स्वज्ञानेनान्यधीहेतुः सिद्धे ह्यर्थे ज्ञापको भवति। तदेवं प्रधानप्रत्यवमर्शासम्भवे सर्वनाम्ना छविधौ निमित्तभूतः प्रत्ययार्थो गुणभूतोऽपि प्रत्यवमृश्यते इवार्थः। सोऽपि ह्यत्र प्रकृतत्वात् संनिहित इत्युक्तम् "एवं तर्हि इवार्थः प्रतिनिर्दिश्यते" इति। इवार्थश्चात्र प्रत्ययवाच्य इति कथं प्रकृतिभूतः समासस्तद्विषयः स्यादिति सर्वनामप्रत्यवमर्शसामर्थ्यादिवार्थस्यात्र द्वौ व्यापारौ सम्पद्येते। तेनैकेन व्यापारेणेवार्थः समासस्यावच्छेदकोऽपरेण प्रत्ययवाच्यो जायते। इवार्थविषयात् समासादिवार्थे छ इत्यर्थः।

---

न च सर्वस्य समासस्य छप्रत्ययादन्यत्रासाधुत्वमेव ज्ञाप्यते, अनिष्टत्वात्। न चानिष्टार्था शास्त्रप्रक्लृप्तिः=शास्त्रस्य प्रवृत्तिर्न्याय्या। तदित्यस्य सर्वनाम्नस्तु परामर्शनीयं छप्रत्ययादन्यद् बुद्धिस्थमिवार्थरूपं सादृश्यं कल्प्यताम्। तस्माच्छविधानात् प्राङ्नियतस्य=छप्रत्ययप्रकृतित्वेन निर्धारितस्य समासस्य प्रसिद्धस्य तद्विषयस्याभावात् छविषयादिति समासविशेषणं न युक्तम्। सिद्धे हि प्रत्यये कार्यान्तरे विधीयेत, तेन=प्रत्ययेन प्रकृतिरूपस्य विशेषणं दृष्टम्। तद् यथा—"षष्ठ्यतसर्थप्रत्ययेन" इति।

अत्र हि—षष्ठ्यां विधेयायामतसर्थप्रत्ययः स्वप्रकृतेर्विशेषणम्।

न तु स्वयमलब्धात्मलाभः=अप्राप्तस्वरूपं स्वं स्वनिमित्तस्यैव प्रकृतिरूपस्य विशेषणं युक्तम्। सिद्धे हि सत्यर्थे विशेषणरूपे स्वज्ञानेन अन्यधीहेतुः=विशेष्यधीहेतुः विशेषणरूपो ज्ञापको भवति। तदेवं विधेयतया प्रधानरूपस्य छस्य प्रत्यवमर्शासंभवे छविधौ निमित्तभूतः प्रत्ययार्थो गुणभूतोऽपि इवार्थः सर्वनाम्ना प्रत्यवमृश्यते। सोऽपि हि=इवार्थोऽपि हि समासाच्च तद्विषयादित्यत्र प्रकरणप्राप्तत्वाद् बुद्धौ संनिहित इत्युक्तम्=इत्यभिप्रेत्योक्तं भाष्ये—"एवं तर्हि इवार्थः प्रतिनिर्दिश्यते" इति। इवार्थश्चात्र=काकतालीयमित्यादौ छप्रत्ययवाच्य इति कथं प्रकृतिभूतः समासस्तद्विषयः स्यात्=स इवार्थो विषये वाच्यो यस्येति व्युत्पत्त्या तद्वाची स्यादिति सर्वनाम्ना तच्छब्देन प्रत्यवमर्शसामर्थ्यादिवार्थे शब्दस्य अत्र=भाष्ये तन्त्रादिना द्वौ व्यापारौ संपद्येते। तेनैकेन व्यापारेणेवार्थः समासस्यावच्छेदकः=विशेषणम्, अपरेण तु व्यापारेण छप्रत्ययवाच्यो जायते। तथा च "समासाच्च तद्विषयाद्" ( पा० ५।३।१०६ ) इति सूत्रस्य—'इवार्थविषयात् समासादिवार्थे छप्रत्ययः' इत्यर्थः।

अत्रैतमभिप्रायऽयमबुद्ध्वा चोदितम्—'समासेनोक्तार्थत्वात् तद्धितो न प्राप्नोति' इति। एकस्यैवार्थस्य व्यापारभेदाभावात् समासविशेषणत्वे समासवाच्यत्वाच्छप्रत्ययो न स्यात्। न ह्यभिधानमन्तरेण समासस्य विषयभावमुपगन्तुमर्हतीवार्थ इत्यर्थः।

अथ वचनादभिहितेऽपीवार्थे प्रत्ययः, यथा तद्धितार्थे द्विगुरिति वचनाद् द्विगुतद्धितयोः साधारणोऽर्थः, तदा शस्त्रीश्यामादेरपि समासादिवार्थाभिधायकाच्छप्रत्ययः स्यात्। अत्र परिहारोऽभिहितो 'द्वाविवार्थावि'ति। सर्वनामप्रत्यवमर्शोन्यथानुपपत्त्या व्यापारभेद इवार्थस्येत्यभिप्रायः पूर्वमेव निर्णीतः॥ ६०७॥

कौ द्वावत्रेवार्थावित्याह—

**द्वयोरिवार्थयोरत्र निमित्तत्वं प्रतीयते।**
**एकेनावयवो युक्तः प्रत्ययोऽन्येन युज्यते॥ ६०८॥**

'काकतालीयम्, अजाकृपाणीयम्' इत्यत्र द्वाविवार्थौ गम्येते। तयोरेकेन समासैकदेशः पूर्वपदमुत्तरपदं च सम्बद्धमिति तमिवार्थं प्रत्याययन् समासो भवतीवार्थविषयः। तद्धितान्तशब्दापेक्षया वा प्रकृतिभूतः समास एवात्रावयवः।

---

अत्र भाष्ये एतमभिप्रायमबुद्ध्वा चोदितं भाष्ये—"समासेनोक्तार्थत्वात्तद्धितो न प्राप्नोति" इति। एकस्येवार्थशब्दस्य व्यापारभेदाभावात् समासविशेषणत्वे इवार्थस्य समासवाच्यत्वात् तत्र छप्रत्ययो न स्यात्। न हि समास्येवार्थेऽभिधानमन्तरेण समासस्य विषयभावमुपगन्तुमर्हेति इवार्थ इत्येतद्भाष्यार्थः।

यदि तु "समासाच्च तद्विषयाद्" (पा० ५।३।१०६) इति वचनसामर्थ्यात् समासेनाभिहितेऽपीवार्थे छप्रत्यय इत्युच्यते, यथा "तद्धितार्थोत्तरपदसमाहारे च' (पा० २।१।५१) इत्यत्र तद्धितार्थे द्विगुरिति वचनाद् द्विगुतद्धितयोः साधारणः=समानः अर्थः, तदा 'शस्त्रीश्यामा' इत्यादेरपि समासादिवार्थाभिधायकाच्छप्रत्ययः स्यादिति चोदितेऽत्र परिहारोऽभिहितो भाष्ये—"द्वाविवार्थौ" इति। समासाच्च तद्विषयादित्यत्र तच्छब्दरूपसर्वनामप्रत्यवमर्शात्यथानुपपत्त्या तन्त्रादिना अत्र भाष्ये इवार्थशब्दस्य व्यापारभेद इति प्रकृतभाष्यस्याभिप्रायः पूर्वमेव। एवं तर्हि इवार्थः प्रतिनिर्दिश्यते" इति भाष्यव्याख्यानावसरे निर्णीत इति॥ ६०७॥

कौ द्वावत्रेवार्थौ इत्याह—द्वयोरिवार्थयोरिति।

अस्यार्थः—अत्र 'काकतालीयम्, अजाकृपाणीयम्' इत्यत्र द्वयोरिवार्थयोर्यथायथं समासे छप्रत्यये च निमित्तत्वं प्रतीयते।

तथाहि—एकेनेवार्थेन समासवाच्येन अवयवः=समासैकदेशः पूर्वपदमुत्तरपदञ्च युक्तम्, अन्येन तु इवार्थेन छप्रत्ययो युज्यत इति।

अयं भावः—'काकतालीयम्, अजाकृपाणीयम्' इत्यत्र समासप्रत्ययाभ्यां यथायथं द्वाविवार्थौ प्रतीयेते। तयोरेकेन समासैकदेशः पूर्वपदरूप उत्तरपदरूपश्च संबद्ध इति तमिवार्थं प्रत्याययन्=बोधयन् समासो भवति इवार्थविषयः।

सोऽपि च स्वावयवद्वारेणेवार्थेन युज्यते, न तु साक्षाद्। अपरेणेवार्थेन वाच्येन छप्रत्ययः सम्बध्यते। शस्त्रीश्यामेत्यत्र पुनः प्रसिद्धश्यामगुणया यथा शस्त्र्या देवदत्ता उपमीयते, तथान्यापीति देवदत्ताख्येनोपमेयेनोपमानस्याप्रयोजनत्वाद् एक इवार्थः ॥ ६०८ ॥

तत्र येनेवार्थेनावयवो युज्यते, तमाह—

**चैत्रस्य तत्रागमनं काकस्यागमनं यथा।**
**दस्योरभिनिपातस्तु तालस्य पतनं यथा ॥ ६०९ ॥**

काकतालीयमित्यत्र काकस्यागमनमुपमानम्, चैत्रागमनमुपमेयम्। तथा तालपतनमुपमानम्, दस्युसमागमः पुनरुपमेयः। अतर्कितोपनतत्वमुभयत्रापि समानो धर्मः। तदयं समासवाच्य इत्यर्थः ॥ ६०९ ॥

प्रत्ययवाच्यमप्याह—

**संनिपाते तयोर्यान्या क्रिया तत्रोपजायते।**
**वधादिरुपमेयेऽर्थे तया छविधिरिष्यते ॥ ६१० ॥**

---

अथवा काकतालीयादिरूपतद्धितान्तशब्दापेक्षया प्रकृतिभूतः समास एवात्र कारिकायामवयवशब्देन गृह्यते। सोऽपि च पूर्वपदोत्तरपदरूपस्वावयवद्वारेण इवार्थेन युज्यते, न तु साक्षात्। अपरेणेवार्थेन वाच्येन छप्रत्ययः संबध्यते 'शस्त्रीश्यामा' इत्यत्र तु प्रसिद्धश्यामगुणया शस्त्र्या यथा देवदत्ता उपमीयते, तथाऽन्यापि इति देवदत्ताख्येन उपमेयेन उपमानस्य चरितार्थत्वेनाप्रयोजनत्वात्=द्वितीयार्थप्रयोजनाभावादेक एवेवार्थ इति ॥ ६०८ ॥

तत्र='काकतालीयः' इत्यादौ येनेवार्थेन समासावयवो युज्यते तमाह—चैत्रस्य तत्रागमनमिति।

अस्यार्थः—यथा तालस्याधस्तात्काकस्यागमनम्, तथा चैत्रस्य तत्रागमनम्, यथा तु तत्र यदा तालस्य पतनम्, तथा तत्र तदा दस्योरभिनिपात इति।

अयं भावः—'काकतालीयम्' इत्यत्र काकस्यागमनमुपमानम्, चैत्रस्य तत्रागमनमुपमेयम्, यथा—तदा तत्र तालपतनमुपमानम्, तदैव तत्र दस्योरागमनमुपमेयम्। अतर्कितोपनतत्वम्=संभावनां विना प्राप्तत्वम्। उभयत्रापि=द्वयोरिवार्थयोः साधारणो धर्मः। तदयमिवार्थः समासवाच्य इति ॥ ६०९ ॥

छप्रत्ययवाच्यमपि इवार्थमाह—सन्निपाते तयोरिति।

काकतालयोः समागमे सति या अपरा तत्समागमनिमित्ता वधोऽङ्गभङ्गः स्फोट इत्यादिका क्रिया जायते, तया य उपमेयः परिच्छेद्यश्चैत्रवधादिलक्षणोऽर्थस्तत्रोपमानोपमेयसम्बद्धे द्वितीये इवार्थे वाच्ये सूत्रेण छप्रत्ययो विधीयते ॥ ६१० ॥

ननु च काकगमनेन चैत्रागमनं बाह्यमुपमीयत इति तत् प्रति तस्य गुणभावः। तालपतनेन च दस्युसमागम उपमीयत इति तत्र गुणभावः। ततश्च काकतालयोरन्योन्यसम्बन्धाभावादसति सामर्थ्ये समासः कथम्? अनेनैव छविधिना ज्ञापकेनात्र समासो भाष्येऽवस्थापित इति चेत्, तथापि 'सुप् सुपा' इत्यस्यैव व्यापारो भाष्ये गमित इति कथमसामर्थ्ये तत्प्रवृत्तिः। भवतु वा समासः। किन्त्वसमन्विताभ्यामवयवार्थाभ्यां समुदायार्थस्यानुपजनात् केन प्रकृत्यर्थेन प्रत्ययार्थो विशेष्येतेत्याशङ्क्याह—

क्रियायां समवेतायां द्रव्यशब्दोऽवतिष्ठते।
पातागमनयोः काकतालशब्दौ तथा स्थितौ ॥ ६११ ॥

---

अस्यार्थः—तयोः=काकतालयोः संनिपाते=समागमे सति, अन्या=अपरा, बधादिः=बधाङ्गभङ्गस्फोटादिः, तत्समागमनिमित्ता क्रिया तत्रोपजायते, तया उपमेये परिच्छेद्ये चैत्रवधादिरूपे समासार्थापेक्षया द्वितीये इवार्थे "समासाच्च तद्विषयात्" (पा० ५।३।१०६) इति सूत्रेण छप्रत्ययविधिरिष्यते इति।

अयं भावः—काकतालयोरतर्किते समागमे सति या अपरा तत्समागमनिमित्ता=काकतालसमागमहेतुका बधाङ्गभङ्गस्फोटादिका क्रिया तत्रोपजायते, तया क्रियया य उपमेयः परिच्छेद्यश्चैत्रबधादिरूपोऽर्थः, तत्र समासार्थोपमानोपमेयसंबद्धे द्वितीये इवार्थे वाच्ये "समासाच्च तद्विषयात्" इति सूत्रेण छप्रत्ययो विधीयते इति ॥ ६१० ॥

ननु काकागमनेन चैत्रागमनं समासघटककाकपदार्थाद् बाह्यमुपमीयते इति तत् प्रति तस्य गुणभावः। तालपतने च तत्र दस्युसमागम उपमीयते इति तत्र तस्य गुणभावः। ततश्च काकतालपदार्थयोः परस्परं संबन्धाभावात् सामर्थ्येऽसति कथं समासः? अनेनैव="समासाच्च तद्विषयात्" (पा० ५।३।१०६) इति सूत्रणैव छविधिना ज्ञापकेनात्र समासो भाष्येऽवस्थापित इति चेत्, तथापि "सुप् सुपा" (पा० २।१।४) इति सूत्रस्यैवात्र समासविधिरूपो व्यापारो भाष्ये गमितः=दर्शित इति कथमसामर्थ्ये सति तस्यापि प्रवृत्तिः? भवतु वा कथञ्चिदुक्तज्ञापकादेव समासः।

किन्तु प्रागुक्तरीत्या परस्परमसमन्विताभ्यामवयवार्थाभ्यां समुदायार्थस्यानुपजननात्=अनुत्पादनात् कथं प्रकृत्यर्थेन उपमानभूतेन प्रत्ययार्थः=उपमेयभूतो विशेष्येतेत्याशङ्क्याह—क्रियायां समवेतायामिति।

दध्योदनो गुडधाना इत्यादौ यथा द्रव्याणां सिद्धस्वभावानां परस्पर-सम्बन्धाभावात् तदन्यथानुपपत्त्योपसेकादिक्रियायामात्माश्रितायां द्रव्यशब्दो दध्यादिर्वर्तते, तथात्र काकतालशब्दौ समवेते व्यापारे वर्तेते। ततश्च काकागमनं काकशब्दवाच्यम्, तालपतनं तालशब्दवाच्यमित्यस्ति परस्परमसम्बन्धः। प्रतिपादिता च ब्राह्मणवदधीत इत्यादौ ब्राह्मणादेरन्यत्र द्रव्यशब्दस्यापि क्रियायां वृत्तिविषये वृत्तिः।

ततश्चायमत्रार्थः–काकागमनमिवातर्कितोपसम्प्राप्तमिदं तालपतनम्, तालपतनमिव चातर्कितोपसम्प्राप्तमिदं काकागमनमिति परस्परोपमानेन पूर्वोत्तरपदार्थयोः समन्वयोपपत्तौ प्रत्ययार्थविशेषणतोपपत्तिः। काकागमनतालपतनयोर्हि समन्वयोपपत्तौ

---

अस्यार्थः—यथा 'दध्योदनः; गुडधाना' इत्यादौ यथायथं स्वसमवेतायां क्रियायामुपसेचनरूपायां मिश्रणरूपायाञ्च द्रव्यशब्दो दधिगुडादिर्वृत्त्यावतिष्ठते तथा—'काकतालीयम्' इत्यत्र काकतालशब्दौ पातागमनयोः=काकागमनतालपतनयोर्लक्षणया स्थितौ इत्यक्षरयोजना।

अयं भावः—यथा 'दध्योदनः, गुडधाना' इत्यादौ सिद्धस्वभावानां द्रव्याणां परस्परं संबन्धाभावाद् असामर्थ्येन समासानुपपत्तौ तदन्यथानुपपत्त्योपसेकमिश्रणादिक्रियायां यथायथं स्वसमवेतायां द्रव्यशब्दो दध्यादिर्वर्तते, तथाऽत्र='काकतालीयम्' इत्यत्र काकतालशब्दौ स्वसमवेते व्यापारे यथायथं काकागमनरूपे तालपतनरूपे च वर्तेते। ततश्च काकागमनं काकशब्दवाच्यम्, तालपतनं तालशब्दवाच्यम् इत्यस्ति काकतालशब्दयोः परस्परमभिसंबन्ध इत्यत्र सामर्थ्यात् समासोपपत्तिः। प्रतिपादिता च ब्राह्मणवदधीते इत्यादौ अन्यत्र=वृत्तेरितरत्र द्रव्यशब्दस्यापि ब्राह्मणादेर्वृत्तिविषये क्रियायां वृत्तिः=तद्धितरूपवृत्तिविषये क्रियायां शक्तिः।

ततश्चायमत्रार्थोऽभिप्रेतः। काकागमनमिवातर्कितोपसंप्राप्तमिदं तालपतनम्, तालपतनमिव चातर्कितोपसंप्राप्तमिदं काकागमनमिति पूर्वोत्तरपदार्थयोः परस्परमुपमानोपमेयभावेन समन्वयोपपत्तौ तन्मूलकसामर्थ्यमूलकसमासोपपत्तौ च समासार्थस्य काकगमनतालपतनरूपपूर्वपदार्थोत्तरपदार्थरूपोपमानोपमेयदेवदत्तागमनदस्यूपनिपातस्य प्रयोजकत्वेन, काकागमनतालपतनप्रयुक्तकाकवधस्य च उपमानत्वेन छप्रत्ययार्थदेवदत्तवधरूपोपमेयविशेषणत्वोपपत्तिः।

तथाहि—काकागमनतालपतनयोरेवं परस्परं समन्वयोपपत्तौ ताभ्यामुपमानाभ्यां देवदत्तागमनदस्यूपनिपातयोरुपमेयत्वात् तस्मिन्निवार्थे वाच्ये समासस्योपपत्तौ तद्वधात्=काकवधाद् उपमानाद् देवदत्तवधे उपमेये छप्रत्ययप्रवृत्तिरिति।

तदयमत्र निष्कर्षः—'काकतालीयम्' इत्यत्र काकपदस्य काकागमने तालपदस्य च तालपतने वृत्तिः। उभयोश्च परस्परमुपमानोपमेयभावः। तथा चैवं परस्परं समन्वये सामर्थ्योपपत्त्या समासः।

ताभ्यां देवदत्तागमनदस्यूपनिपातयोरुपमेयत्वात् तत्रैवार्थे वाच्ये समासस्योपपत्तौ तद्वधाद् देवदत्तवधे उपमेये छप्रत्ययप्रवृत्तिः ॥ ६११ ॥

ननु चोपक्रम एवाशङ्कितोपनतेन तालकृतेन काकवधादिना देवदत्तवधादिर्दस्युकृतः किमिति नोपमीयते । तथाहि—काकगमनतालपतनयोर्गौण्या वृत्त्या काकतालशब्दयोरत्र वृत्तिः परिकल्पयितुं नोपयुज्यत इति किं काकगमनतालपतनयोरत्रान्योन्योपमानेनेत्यत आह—

**यदन्वाख्यायकं वाक्यं तदेवं परिकल्प्यते ।**
**प्रयोगवाक्यं यल्लोके तदेवं न प्रयुज्यते ॥ ६१२ ॥**

इह प्रकृतिप्रत्ययविभागवशेनान्वाख्यानमिति प्रक्रियावाक्यमनेन प्रकारेण समन्वितार्थपदं सम्पाद्यते । काकगमनमिव तालपतनम्, तालपतनमिव काकागमनमित्यन्योन्योपमानेन हि प्रक्रियायाम् अन्वाख्यानोपायभूतमिदं वाक्यम्, न त्वेतल्लोके

---

किञ्च काकागमनतालपतनाभ्यामुपमानाभ्यां देवदत्तागमनदस्यूपनिपातौ उपमीयेते, तौ च उपमेयभूतौ समासार्थः । किञ्च, काकागमनतालपतनयुक्तः काकवधोऽपि समासार्थः, स च छप्रत्ययार्थे उपमेयभूते देवदत्तवधे उपमानभूत इति ॥ ६११ ॥

ननु च 'काकतालीयम्' इत्यत्र काकतालेति समासपदस्य तालकृते काकवधे शक्तिः, स च दस्युकृते देवदत्तवधे उपमेये छप्रत्ययार्थे उपमानम्, तथा चैवम् उपक्रम एव अतर्कितोपनतेन तालकृतेन काकवधादिना दस्युकृतो देवदत्तवधादिः किमिति नोपमीयते । तथाहि—अत्र = 'काकतालीयम्' इत्यत्र काकतालशब्दयोर्गौण्या वृत्त्या काकागमनतालपतनयोर्वृत्तिः परिकल्पयितुं नोपयुज्यते इति किं काकागमनतालपतनयोः परस्परमुपमानोपमेयभावेनेत्यत आह—यदन्वाख्यायकं वाक्यमिति ।

अस्यार्थः—यत् प्रकृतिप्रत्ययविभागवशेन शब्दसाधुत्वान्वाख्यायकं वाक्यं तद् एवम्—काकागमनमिव तालपतनम्, तालपतनमिव काकागमनमित्यन्योऽन्योपमानेन प्रक्रियायां परिकल्प्यते ।

यत्तु लोके प्रयोगवाक्यम्—प्रयुज्यमानं वाक्यम्, तद् एवं न प्रयुज्यते—काकागमनमिव तालपतनम्, तालपतनमिव काकागमनमिति ।

अयं भावः—इह = व्याकरणे प्रकृतिप्रत्ययविभागवशेनान्वाख्यानम् = शब्दानां साधुत्वानुशासनं भवति इति 'काकतालीयम्' इत्यत्र अनेन प्रकारेण = काकागमनमिव तालपतनम्, तालपतनमिव काकागमनम् इत्यनेन प्रकारेण परस्परं समन्वितार्थपदं संपाद्यते ।

अन्यथाऽत्र सामर्थ्याभावेन काकतालपदयोः समासः छप्रत्ययप्रकृतिभूतो न स्यात् । काकागमनमिव तालपतनम्, तालपतनमिव काकागमनम् इति परस्परमुपमानोपमेयभावेन हि प्रक्रियादशायां प्रकृतशब्दसाधुत्वानुशासनोपायभूतमिदं वाक्यम्, न त्वेतद् वाक्यं लोके प्रयुज्यते ।

प्रयुज्यते। अन्यथा वधेनैव तालकर्तृकेण काकः सम्बध्येत, न तालेन, यदि नेदमुपरच्येत प्रक्रियावाक्यम्। स्थितलक्षणार्थप्रत्यायकं तु प्रयोगवाक्यं लौकिकं नैवम्भूतम्।

न हि छप्रत्ययमन्तरेण काकतालशब्दो वाक्यस्वभावो लोके प्रयुज्यते। केवलं काकतालीयमित्यस्य लौकिकस्य शब्दस्यान्वाख्यानोपायपरिकल्पनेयम्। यथासमन्वयं हि परिकल्पनमित्यनुगुणतरोऽयमुपायः ॥ ६१२ ॥

तदाह—

ययोरतर्किता प्राप्तिर्दृश्यते काकतालवत्।
तयोः समासप्रकृतेर्वृत्तिरभ्युपगम्यते ॥ ६१३ ॥

यथा काकतालयोरनाशङ्कितोपस्थितयोर्वधादिनिमित्तः सम्बन्धः, तथा ययोर्दस्युदेवदत्तयोर्दृश्यते, तयोः सम्बन्धोपाधिकयोस्तत्समागम इववाच्ये समासलक्षणा या प्रकृतिस्तस्याः सकाशाच्छस्य प्रत्ययस्य वृत्तिः प्रतिज्ञायते।

---

अन्यथा यदि इदं प्रक्रियावाक्यं पदयोः परस्परं समन्वितार्थत्वसंपादकं नोपरच्येत, तदा तालकर्तृकेण वधेनैवाशब्देन काकागमनतालपतनरूपसमासार्थसामर्थ्यलभ्येन काकः संबध्येत, न तालेन। स्थितलक्षणार्थप्रत्यायकन्तु=विशिष्टार्थप्रत्यायकं तु काकतालीयमिति पदस्थानीयं प्रयोगवाक्यं लौकिकं नैवंभूतम्, न काकतालेत्येवंरूपम्। नहि छप्रत्ययं विना काकतालशब्दो वाक्यस्वभावो लोके प्रयुज्यते। केवलं काकतालीयम् इत्यस्य लौकिकस्य शब्दस्य साधुत्वान्नाख्यानोपायपरिकल्पनेयं क्रियते, काकागमनमिव तालपतनम्, तालपतनमिव काकागमनमिति।

यथा समन्वयं हि=पदयोः परस्परं समन्वयानुसारेणैव हि प्रक्रियावाक्यपरिकल्पनं भवतीति काकतालीयमिति शब्दस्वरूपसिद्धेरनुगुणतरः=अनुकूलतरः अयमुपायः=पदार्थयोः परस्परमुपमानोपमेयभावकल्पनेन पदयोः परस्परं समन्वितार्थत्वसंपादनरूप उपाय इति ॥ ६१२ ॥

तदाह=काकतालीयमित्यादौ इवार्थद्वये यथायथं समासरूपं छप्रत्ययरूपं च विधेयद्वयमाह—ययोरतर्किता प्राप्तिरिति।

अस्यार्थः—ययोर्दस्युदेवदत्तयोः काकतालवत्=यथा काकतालयोरतर्कितोपनतयोर्वधादिनिमित्तिका प्राप्तिः संबन्धः, तथा बधादिनिमित्तकः संबन्धस्तयोः समागमे इववाच्ये या समासरूपा छप्रत्ययप्रकृतिस्तस्याः छप्रत्ययरूपा तद्धितवृत्तिरभ्युपगम्यते इति।

अयं भावः—यथा काकतालयोरनाशङ्कितोपस्थितयोः=अतर्कितोपनतयोः वधादि निमित्तकः संबन्धः—स्वप्रयोज्यहननकर्मत्वरूपः, स्वनिष्ठकर्मत्वनिरूपकहननक्रियाप्रयोजकत्वकर्तृत्वोभयरूपः, तथा ययोर्दस्युदेवदत्तयोर्दृश्यते, तयोः संबन्धोपाधिकयोः=दस्युकर्तृकहननक्रियाकर्मत्व, देवदत्तनिष्ठकर्मतानिरूपकहननक्रियाकर्तृत्वरूपसंबन्धात्मकविशेषणविशिष्टयोः प्रतिपादिका या समासलक्षणाप्रकृतिः तस्याः सकाशात् जातस्य छस्य प्रत्ययस्य वृत्तिः प्रतिज्ञायते तत्समागमे इव वाच्ये।

तदेवं काकतालद्वयसम्बन्धोपाधिः प्रकृत्यर्थो विभज्यते। उपमेये तु वधादौ छप्रत्ययः, तद्विषयैव च नियमेनेयं प्रकृतिरित्यन्यत्रास्याः साधुत्वाभावः। इदमेव च वस्तुभाष्ये विस्तरेण प्रदर्शितम् ॥ ६१३ ॥

कस्मिन्नर्थे वृत्तिरभ्युपगम्यत इत्याह—

**काकस्य तालेन यथा वधो यस्य तु दस्युना।**
**तत्र चित्रीकृतेऽन्यस्मिन्नुपमेये छ इष्यते ॥ ६१४ ॥**

काकतालसमागमसमो दस्युदेवदत्तसमागम एकः समासार्थ इवार्थः पूर्वं दर्शितः। अयं त्वपरः प्रत्ययवाच्योऽत्र प्रदर्श्यते यदिहान्यस्मिन्निति। यथा यदृच्छयोपरि निपतता तालेन यदृच्छागतस्य काकस्य वधो वृत्तः, तथाऽशङ्कितोपनिपतता दस्युना असम्प्रधारितोपस्थितस्य देवदत्तस्य वध इत्येवमद्भुतरूपतां प्राप्ते परिच्छेद्येऽर्थे छप्रत्ययः। काकतालसम्प्राप्तिनिमित्तोपजनितक्रियाविशेषोपमितेऽन्यस्मिन् क्रियाविशेषे छविधिरित्यर्थः।

तेन यथा तालेन काको यदृच्छया हतः, तथा यदपरमसमीहितमाश्चर्यभूतं जायते, तत् काकतालीयमुच्यत इत्यर्थः। गतमेतत् ॥ ६१४ ॥

---

तदेवं काकतालद्वयसंबन्धोपाधिकः प्रकृत्यर्थः काकतालसमागमसदृशदस्युदेवदत्तसमागम-रूपः प्रकृत्यर्थविशिष्टात्प्रत्ययार्थाद् विभज्यते। उपमेये तु काकवधसदृशे देवदत्तवधे छप्रत्ययः, तद्विषयैव च नियमेनेयं छप्रत्ययप्रकृतिः समासरूपेति छप्रत्ययादन्यत्रास्याः=समासरूपायाः प्रकृतेः साधुत्वाभावः। इदमेव च वस्तु भाष्ये विस्तरेण प्रदर्शितमिति ॥ ६१३ ॥

कस्मिन्निवार्थे छप्रत्ययरूपा वृत्तिरभ्युपगम्यते इत्याह—काकस्य तालेनेति।

अस्यार्थः—यथा काकस्य अतर्कितोपनतेन तालेन वधः, तथा तु यस्य देवदत्तादेर्दस्युना अतर्कितोपनतेन वध इत्येवं चित्रीकृतेऽद्भुतरूपतां प्राप्ते उपमानेन परिच्छेद्ये उपमेयेऽर्थे देवदत्तवधरूपे छप्रत्यय इष्यत इति।

अयं भावः—काकतालसमागमसमो दस्युदेवदत्तसमागम एक इवार्थः पूर्वदर्शितः। अयं त्वपरः छप्रत्ययवाच्य इवार्थोऽत्र प्रदर्श्यते, यदिह कारिकायामन्यस्मिन्निति पदं तेन। यथा यदृच्छयोपरि निपतता, न तु कस्यचिद् दण्डताडनादिना, तालेन, यदृच्छयाऽऽगतस्य काकस्य वधो वृत्तः, तथाऽशङ्कितोपनिपतता=अकल्पितोपनिपातेन दस्युना असंप्रधारितोपस्थितस्य=अनुत्प्रेक्षितागमनस्य देवदत्तस्य वध इत्येवमद्भुतरूपतां प्राप्ते उपमानेन काकवधेन परिच्छेद्ये देवदत्तवधरूपे उपमेयेऽर्थे छप्रत्ययः। काकतालसंप्राप्तिरूपनिमित्तोपजनितकाकवधरूपक्रियाविशेषोपमितेऽन्यस्मिन् क्रिया-विशेषे दस्यूपनिपातरूपनिमित्तोपजनिते देवदत्तवधरूपे छविधिरित्यर्थः।

तेन यथा तालेन काको यदृच्छया हतस्तथा यदपरमसमीहितम्=अनिष्टम् आश्चर्यभूतं जायते, तत्काकतालीयमुच्यते इत्यर्थः। गतमेतत्=छविधिविचारो गतः=समाप्त इति ॥ ६१४ ॥

उपमानप्रसङ्गेनेवार्थप्रस्तावाच्छविधिवदन्यदप्यत्र विचार्यते। तथाहि—"स्थूलादिभ्यः प्रकारवचने कन्"( पा ५।४।३) इत्यत्र सादृश्यं प्रकारार्थः। तत्र 'चञ्चद्बृहतोरुपसंख्यानम्' इत्युक्तम्। चञ्चत्सदृशश्चञ्चत्को बृहत्कः। कस्यैतदभिधानमित्याह—

चञ्चत्प्रकारश्चञ्चत्को बृहत्क इति चापरे।
मणिमण्डूकखद्योतान् सादृश्येन प्रचक्षते ॥ ६१५ ॥

प्रकारोऽत्र सादृश्यमिति चञ्चत्प्रकारो बृहत्प्रकारश्चञ्चत्को बृहत्क इति मणिप्रभृतीनामन्यतमस्याभिधानमाचार्या मन्यन्ते। अपर इत्याचार्याणामभिन्नमतानां निर्देशः ॥ ६१५ ॥

कीदृशमत्र मण्यादिसादृश्यमित्याह—

तत्रोन्मेषनिमेषाभ्यां खद्योत उपमीयते।
श्वासप्रबन्धैर्मण्डूकः स्पन्दमानप्रभो मणिः ॥ ६१६ ॥

---

उपमानप्रसङ्गेनोपक्रान्तेन मध्ये इवार्थप्रसङ्गाद् यथा छविधिरितः प्राग् विचारितः, तथा इवार्थप्रसङ्गादेवान्यदपि कन् प्रत्ययार्थप्रकारस्वरूपं वस्तु अत्राधुना विचार्यते।

तथा हि—"स्थूलादिभ्यः प्रकारवचने कन्" ( पा० ५।४।३ ) इति सूत्रे सादृश्यं प्रकारपदार्थः। तत्र "चञ्चद्बृहतोरुपसंख्यानम्" ( वा० ५१२ ) इत्युक्तम्। चञ्चत् सदृशश्चञ्चत्कः—बृहत्सदृशो बृहत्क इति। एतत्=चञ्चत्कबृहत्कादिकं कस्यार्थस्याभिधानम्=वाचकम् इति जिज्ञासायामाह—चञ्चत् प्रकारश्चञ्चत्क इति।

अस्यार्थः—अपरे आचार्याः चञ्चत्प्रकारश्चञ्चत्क इति, बृहत्प्रकारो बृहत्क इति च=इत्यादयः शब्दाः 'मणिमण्डूकखद्योतान्' अग्रिमपद्ये वक्ष्यमाणरीत्या सादृश्येन प्रचक्षते इति मन्यन्त इति।

अयं भावः—प्रकारोऽत्र=प्रकारवचने कन् इति सूत्रे सादृश्यमिति चञ्चत्प्रकारश्चञ्चत्क इति, बृहत्प्रकारो बृहत्क इत्यादयः शब्दा मणिमण्डूकखद्योतानामन्यतमस्याभिधानमिति आचार्या मन्यन्ते। अपरे इत्याचार्याणामभिन्नमतानां निर्देशः, न त्वत्र भिन्नमता अपि आचार्याः केचन सन्ति बोधयितुमयं निर्देश इति ॥ ६१५ ॥

कीदृशमत्र मण्यादिसादृश्यम्=अत्र—चञ्चत्के, कीदृशम्=किंधर्मप्रयुक्तम्, मण्यादिषु=मणिमण्डूकखद्योतेषु, चञ्चत्प्रतियोगिकं सादृश्यम् इति प्राप्ते आह—तत्रोन्मेषनिमेषाभ्यामिति।

अस्यार्थः—तत्र=मणिमण्डूकखद्योतेषु, खद्योतः स्वप्रभया उन्मेषनिमेषाभ्याम्=उन्मीलननिमीलनक्रियाभ्यां हेतुभूताभ्याम्, चञ्चता उपमीयते, चञ्चन्निव खद्योतश्चञ्चत्क इति। श्वासप्रबन्धैरुच्छूनशरीरतया चञ्चता मण्डूक उपमीयते। चञ्चन्निव चञ्चत्को मण्डूक इति। उन्मेषनिमेषाभ्यां स्पन्दमानप्रभो मणिश्चञ्चता उपमीयते। चञ्चत्को मणिरिति।

अचलन्नपि खद्योतः स्वप्रभाच्छुरितश्चलन्निवावधार्यमाणश्चञ्चत्कशब्दवाच्यः।

तथा हि—स्वप्रभोन्मीलनर्निमीलनक्रियाभेदात् स्पन्दमान इव लक्ष्यते। तथानवरतप्रवर्तमानोच्छ्वासवशोच्छूनशरीरतया चलितशरीर इवावधार्यमाणो भेकश्चञ्चत्काभिधानविषयभावमुपैति। एवमविच्छिन्नोद्गमदीप्यमानरश्मिचक्रवालचलितमूर्तिरिव मणिश्चञ्चत्कः॥ ६१६॥

बृहत्के कः प्रकारार्थ इत्याह—

**प्रविकासिप्रभोऽल्पोऽपि महान् य उपलभ्यते।**
**बृहत्क इति तत्रैष मणौ शब्दः प्रयुज्यते॥ ६१७॥**

परिकृशोऽपि मणिः सर्वतः प्रसर्पिप्रभाजालवशेन स्थूलतरमूर्तिरवधार्यमाणो बृहत्सदृशो बृहत्क इत्यभिधीयते॥ ६१७॥

प्रसङ्गेन प्रकारस्वरूपं दर्शनभेदेन विचारयति—

**सादृश्यमेव सर्वत्र प्रकारः कैश्चिदिष्यते।**
**भेदेऽपि तु प्रकाराख्या कैश्चिदभ्युपगम्यते॥ ६१८॥**

"प्रकारवचने थाल्" (पा० ४।३।२३) "प्रकारे गुणवचनस्य" (पा० ८।१।१२)

---

अयं भावः—अचलन्नपि खद्योतः स्वप्रभाच्छुरितः=स्वप्रभया व्याप्तः चलन्निवावधार्यमाणः=प्रतीयमानः चञ्चत्कशब्दवाच्यः।

तथाहि—खद्योतः स्वप्रभोन्मीलननिमीलनक्रियाभेदात् स्पन्दमान इव लक्ष्यते=प्रतीयते। तथा पटुरटनकालेऽनवरतप्रवर्तमानोच्छ्वासवशादुच्छूनशरीरतया=भेकश्चलितशरीर इवावधार्यमाणश्चञ्चत्काभिधानविषयभावम्=चञ्चत्कशब्दवाच्यताम् उपैति=उपयाति प्राप्नोति। एवमविच्छिन्नेन उद्गमेन दीप्यमानं यद् रश्मिचक्रवालं तेन चलितमूर्तिरिव मणिश्चञ्चत्क इत्युच्यत इति॥ ६१६॥

वृहत्के कः प्रकारपदार्थः इत्याह—प्रविकासिप्रभोऽल्पोऽपि इति।

अस्यार्थः—योऽल्पोऽपि मणिः प्रविकाशिप्रभः=प्रसर्पिप्रभाजालः सन् महान् उपलभ्यते, तत्र मणौ वृहत्क इत्येष शब्दो वृहन्निवेति व्युत्पत्त्या प्रयुज्यत इति।

अयं भावः—स्वभावतः परिकृशोऽपि मणिः प्रसर्पिणा प्रभाजालेन स्थूलतरमूर्तिरवधार्यमाणः=प्रतीयमानः वृहन्निव वृहत्क इत्यभिधीयत इति॥ ६१७॥

चञ्चत्कवृहत्कयोः प्रकारार्थविचारप्रसङ्गेन सर्वत्र प्रकारपदार्थस्वरूपं दर्शनभेदेन विचारयति—सादृश्यमेव सर्वत्रेति।

अस्यार्थः—कैश्चित् सर्वत्र=सर्वेषु प्रकारपदघटितेषु सूत्रेषु वार्त्तिकेषु च सादृश्यमेव प्रकार इष्यते। कैश्चित्तु=सर्वत्र सादृश्ये भेदेऽपि प्रकाराख्या=प्रकारशब्दः अभ्युपगम्यत इति।

अयं भावः—"प्रकारवचने थाल्" (पा० ५।३।२३) "प्रकारे गुणवचनस्य"

"स्थूलादिभ्यः प्रकारवचने कन्" ( पा० ५।४।३ ) इत्यादौ सर्वत्र शास्त्रे सादृश्यमेव प्रकारशब्दार्थः ।

तथाहि—यथा तथेति तुल्यत्वमेव द्योत्यते। पटुजातीय इति तु जातीयरा सदृशः प्राधान्येनाभिधीयते। पटुपटुरिति द्विर्वचनेन सादृश्यमेव तद्वति गुणभूतं द्योत्यते। एवं स्थूलप्रकारः स्थूलक इति ।

कैश्चित् तु भेदेऽपि प्रकाराख्येष्यते। अत्रापि सर्वत्रेति यथा तथेति भेद एव वाच्यः। स एव समानः सादृश्यहेतुरिति तदप्यर्थाद् गम्यते। एवं पटुपटुः स्थूलक इत्यत्रापि।

इत्थञ्च भेदसादृश्ययोः सर्वत्र प्रतीतावेकोऽभिधेयोऽपरः सामर्थ्यगम्य इति मतभेदेन प्रकारो विभज्यते। पशुप्रकारो देवदत्त इत्यत्र सामान्यविशेषभावायोगात् सामान्यमेव प्रकारः। तद्गर्भादपि पशुर्देवदत्त इत्यभेदाभिधानात् कार्यात् तद्धेतु-सादृश्यमेव गम्यते, न तु प्रयोगद्वयेऽप्यत्र भेदोऽवसीयते। ब्राह्मणप्रकारा माठरादय इति तु सामान्यस्य विशेषेऽन्वयाद् भेदेनाप्रतीतौ सादृश्यासम्भवे भेदः प्रकार इत्याहुः ॥ ६१८ ॥

---

( पा० ८।१।१२ ) "स्थूलादिभ्यः प्रकारवचने कन्" ( पा० ५।४।३ ) इत्यादौ सर्वत्र शास्त्रे सादृश्यमेव प्रकारशब्दार्थः ।

तथाहि—यथा तथेति थाल्प्रत्ययेन तुल्यत्वरूपं=सादृश्यरूपं सादृश्यमेव द्योत्यते=उच्यते। पटुजातीय इत्यत्र तु "प्रकारवचने जातीयर्" ( पा० ५।३।६७ ) इति सूत्रविहितेन जातीयरा प्रत्ययेन सदृशरूपोऽर्थः सादृश्यनिरूपितेन प्रकृत्यर्थनिरूपितेन च प्राधान्येनाभिधीयते। 'प्रकारे गुणवचनस्ये'ति सूत्रविहितेन पटुपटुरिति द्विर्वचनेन सादृश्यमेव तद्वति गुणभूतं द्योत्यते। एवं स्थूलप्रकारः स्थूलकं इत्यत्र "स्थूलादिभ्यः प्रकारवचने कन्" ( पा० ५।४।३ ) इति सूत्रविहितेन कन्प्रत्ययेन सदृशरूपोऽर्थ उच्यते, सादृश्यं वा तद्वति गुणभूतमुच्यते ।

कैश्चित्तु सादृश्ये भेदेऽपि उभयत्र प्रकाराख्या=प्रकारशब्द इष्यते। अत्रापि सर्वत्रेति संबध्यते। यथा तथेति भेद एव=विशेष एव वाच्यः। स एव सादृश्ये ज्ञापकहेतुः सर्वत्र समान इति सर्वत्र भेदस्य वाच्यत्वेऽपि सादृश्यमप्यर्थात् सर्वत्र गम्यते। एवं पटुपटुः स्थूलक इत्यत्रापि।

इत्थञ्च भेदसादृश्ययोः सर्वत्र प्रतीतावेकोऽभिधेयोऽपरः सामर्थ्यगम्य इति मतभेदेन प्रकारः पदार्थो विभज्यते। पशुप्रकारो देवदत्त इत्यत्र पशुदेवदत्तयोर्जातिभेदेन परस्परं सामान्यविशेष-भावायोगात् पशुनिष्ठसामान्यमेव प्रकारपदार्थः, तथा च पशुत्वरूपसामान्यरूपप्रकारवान् देवदत्त इति तदर्थः। प्रकारोऽत्र विशेषणम्, तद्गर्भादपि=सामान्यगर्भादपि पशुर्देवदत्त इत्यभेदाभिधानात् सादृश्यकार्यात् तद्धेतु=अभेदाभिधानहेतु पशुदेवदत्तयोः सादृश्यमेव गम्यते, न तु पशुप्रकारो देवदत्तः, पशुर्देवदत्त इति प्रयोगद्वयेऽपि अत्र भेदोऽवसीयते। ब्राह्मणप्रकारा माठरादय इति तु सामान्यस्य विशेषेऽन्वयाद् भेदेनाप्रतीतौ सादृश्यासंभवे भेदप्रतीत्यभ्युपगमेन भेदः प्रकार इत्याहु-रिति॥ ६१८ ॥

अस्तु सादृश्यं भेदः प्रकारो वा। इदं तु विचार्यते—"किं सर्वनामबहुभ्यः प्रकारवचने विधीयमानस्थाल् प्रातिपदिकसामान्याद् विहितस्य जातीयरो बाधकः। तथा च किञ्जातीय इति न सिध्येत्। प्रकारस्य च थालैवाभिव्यक्तौ तथाजातीय इति कथं प्रयोग इत्यत आह—

**प्रकारवचनः कश्चित् प्रकारवति संस्थितः।**
**प्रकारमात्रे वर्तित्वा कश्चित् तद् व्यतिवर्तते ॥ ६१९ ॥**

कश्चिदिति जातीयर् कंश्च प्रत्ययो द्विर्वचनं च। अत्र हि प्रत्यये स्वभावाद् गुणभूतस्य प्रकारस्याभिधानमिति प्रकारवानेव प्राधान्येनोच्यते। अत एवं-प्रकार उच्यते यस्मिन् स प्रकारवचनस्तस्मिन् प्रातिपदिकादयं प्रत्यय इति प्रकारवति भवति। थाल् पुनः प्रकारमात्र एव, न तद्वति। किन्तु प्रकारे वृत्तिमनुभूय तद्वति जातीयर्सहितो वर्तत इति सामर्थ्यादवसेयम्, न तु शुक्लादिवत् तद्वति वृत्तिस्थालन्तस्येह दृश्यते।

---

अस्तु सादृश्यं भेदोऽपि वा सर्वत्र प्रकारपदार्थः। इदन्तु विचार्यते—किं सर्वनामबहुभ्यः प्रकारवचने विधीयमानस्थाल् प्रत्ययः प्रातिपदिकसामान्याद् विहितस्य जातीयरो बाधकः। तथा च किंजातीय इति न सिध्येत्। प्रकारस्य च थालैवाभिव्यक्तौ तथा जातीय इति कथं प्रयोगः, उक्तार्थानामप्रयोग इति न्यायाद् इत्यत आह—प्रकारवचनः कश्चिदिति।

अस्यार्थः—कश्चित् = जातीयर्, कन् प्रत्ययः, द्विर्वचनञ्चात्र कश्चिदित्यस्यार्थः। प्रकारवचनः = स्वभावाद् गुणभूतस्य प्रकारस्य वाचकः, किन्तु प्राधान्येन प्रकारवति संस्थितः = प्राधान्येन प्रकारवतो वाचकः।

कश्चित्तु = थाल् प्रत्ययस्तु प्रकारमात्रे वर्तित्वा = तत्र वृत्तिमनुभूय, तत् = प्रकारमात्रवृत्तित्वम् व्यतिवर्तते = अतिक्रामति। थालप्रत्ययः प्रकारमात्रे एव वर्तते, न तद्वति। किन्तु प्रकारे वृत्तिमनुभूयजातीयर्सहितस्तद्वति वर्तते इति तथाजातीय इति प्रयोगोपपत्तिः। किंजातीय इति प्रयोगस्तु का जातिरस्य इति विग्रहे "जात्यन्ताच्छ बन्धुनि" ( पा० ५।४।९ ) इति सूत्रेण उपपादनीय इति।

अयं भावः—कश्चिदिति जातीयर्; कन् च प्रत्ययः, द्विर्वचनञ्च गृह्यते। अत्र हि प्रत्यये गुणभूतस्य प्रकारस्य स्वभावादभिधानमिति प्राधान्येन प्रकारवानेवोच्यते। अत एव प्रकारोच्यते यस्मिन् = यदर्थनिष्ठः प्रकार उच्यते स प्रकारवचनोऽर्थः तस्मिन् वर्तमानात् प्रातिपदिकाद् अयम् = जातीयरादिः प्रत्यय इति प्रकारवति अयं प्रत्ययो भवति। थाल् प्रत्ययस्तु प्रकारमात्र एव भवति, न तद्वति। किन्तु जातीयर्प्रत्ययसहितः थालप्रत्ययः प्रकारे वृत्तिमनुभूय प्रकारवति वर्तते इति सामर्थ्यादवसेयम्, न तु शुक्लादिवत् थालन्तस्य तद्वति वृत्तिः शाब्दे व्यवहारे दृश्यते।

एवञ्च भिन्नविषयत्वाद् बाध्यबाधकभावश्च न भवति। तथाजातीय इति च प्रयोगो भवति। यथा देवदत्तस्तथा यज्ञदत्त इत्यत्रापि न थालन्त एव प्रकारवन्तमभिधत्ते, अपि तु क्रियायां वाक्यस्यास्य परिसमाप्तेर्वर्तते दृश्यते वेत्यादिका यासावपेक्षिता क्रिया, तत्र करणभावमापन्नः प्रकार एव प्रतीयते। येन प्रकारेण देवदत्तो वर्तते, तेन प्रकारेण यज्ञदत्तोऽपीत्यर्थः।

अतश्च क्रियासंबध्यमानः करणतयात्र प्रकारः प्रकारवति षष्ठीनिमित्तं व्यतिरेकं नापादयति। न तु तद्वदभिधानं षष्ठ्यभावादनुममेयम्, अन्यथासिद्धेः षष्ठ्यभावस्य॥ ६१९॥

यदि तर्हि थालः सादृश्यं प्रकारार्थस्तदा यथार्थेऽव्ययीभावमुक्त्वा किमर्थं पुनः सादृश्येऽन्वाख्यायत इत्याह—

सादृश्यग्रहणं सूत्रे सदृशस्योपलक्षणम्।
तुल्ययोरव्ययीभावे सहशब्दोऽभिधायकः॥ ६२०॥
वीप्सासादृश्ययोर्वृत्तिर्या यथार्थाभिधायिनः।
स चायमव्ययीभावे भेदो भेदेन दर्शितः॥ ६२१॥

"अव्ययं विभक्ति" (२।१।६) इत्यादौ सूत्रे सादृश्यग्रहणेन धर्मी सदृशो लक्ष्यते। धर्मो ह्यव्यभिचारात् स्वाश्रयमुपलक्षयितुं पर्याप्त एव। तथा च सदृशः सख्या

---

एवञ्च थाल्जातीयरोर्भिन्नविषयत्वाद् बाध्यबाधकभावोऽपि न भवति। तथा जातीय इति प्रयोगश्च भवति। 'यथा देवदत्तस्तथा यज्ञदत्तः' इत्यत्रापि थाल्प्रत्ययान्तो नैव प्रकारवन्तमभिधत्ते, अपि तु क्रियायां वाक्यस्यास्य = यथा देवदत्तस्तथा यज्ञदत्त इति वाक्यस्य परिसमाप्तेर्वर्तते दृश्यते वा इत्यादिका याऽसावपेक्षिता क्रिया तत्र करणभावमापन्नः प्रकार एव प्रतीयते, न तु तद्वान्। येन प्रकारेण देवदत्तो वर्तते तेन प्रकारेण यज्ञदत्तोऽपि इत्यर्थः।

अतश्चात्र करणतया क्रियया सह संबध्यमानः प्रकारः प्रकारवति देवदत्तादौ षष्ठी निमित्तं व्यतिरेकं नापादयति, तेन सह तस्यासंबन्धात्। न तु षष्ठ्यभावात् थाल्प्रत्ययेन प्रकारवदभिधानमुन्नेयम्, षष्ठ्यभावस्य अन्यथा=प्रागुक्तरीत्या प्रकारान्तरेण सिद्धेरिति।। ६१९॥

यदि तर्हि थालः सादृश्यरूपः प्रकारोऽर्थः, तदा यथार्थेऽव्ययीभावमुक्त्वा किमर्थं पुनः सादृश्येऽव्ययीभावोऽन्वाख्यायते इत्याह—सादृश्यग्रहणं सूत्रे इति।

अस्यार्थः—"अव्ययं विभक्ति०" (पा० २।१।६) इत्यादौ सूत्रे सादृश्यग्रहणं सदृशस्योपलक्षणम्। सादृश्यरूपो धर्मो हि अव्यभिचारात् स्वाश्रयं लक्षयितुं समर्थ एव। पूर्वैर्वृत्तिकारैर्व्याडिप्रभृतिभिः संग्रहादौ ग्रन्थे उदाहृते सदृशः सख्या ससखि इत्यव्ययीभावे हि सहशब्दस्तुल्य-

ससखीति सदृशयोरव्ययीभावे सहशब्दो वाचको न सादृश्यमात्रस्येति सामर्थ्यादत्र सूत्रे धर्मिणो धर्मः सदृशस्योपलक्षणम् ।

वृत्तिकारैर्हि पूर्वैरुदाहरणमिदमत्रोक्तमिति तदाश्रयेण सहशब्दोऽभिधायको वाचकः सदृशाख्यस्य धर्मिण उच्यते । एवञ्च यदव्ययमभिधायकं सदृशार्थस्य, तस्य सादृश्यग्रहणेन समासः कथ्यते । सत्त्वभूतार्थाभिधायित्वेऽपि चास्य वचनाद् "अव्ययीभावश्च" (पा० १।१।४१) इत्यस्मादव्ययत्वम् , यथा स्वरादीनाम् ।

यत् पुनरव्ययं यथार्थाभिधायि समासभाक्त्वेन निर्दिष्टम् , तस्य वीप्सायां सादृश्ये च वृत्तिर्धर्ममात्रे न धर्मिणि । प्रत्यर्थम् , अनुरूपमिति । "यथाऽसादृश्ये" ( पा० २।१।७ ) इति प्रतिषेधाद् यथाशब्दः सादृश्यवचनो न समस्यते । थालन्तप्रतिरूपको वा यथाशब्दो वीप्सावचनो निपातः समस्यत एव । वीप्सा च यथार्थो भेदः ।

---

योरभिधायकः सदृशयोर्धर्मिणोर्न तु सादृश्यस्य धर्मस्य । या चात्रैव सूत्रे यथार्थाभिधायिनोऽव्ययस्याव्ययीभावरूपा वृत्तिर्निर्दिष्टा सा वीप्सासादृश्ययोर्धर्मयोरेव वर्तमानस्य, न तु सदृशे धर्मिणि वर्तमानस्य । स चाव्ययमव्ययीभावे सादृश्यपदार्थे यथार्थे च जायमाने भेदो=विशेषो भेदेन प्रकृतसूत्रे पृथक्पदप्रणयनेन सूत्रकृता दर्शित इति ।

अयं भावः—"अव्ययं विभक्ति०" ( पा० २।१।१६ ) इत्यादौ सूत्रे सादृश्यग्रहणेन तद्धर्मी सदृशो लक्ष्यते । धर्मो हि आश्रयाव्यभिचारात्स्वाश्रयं लक्षयितुं पर्याप्त एव । तथा च सदृशः सख्या ससखि इत्यव्ययीभावे सहशब्दः सदृशयोर्वाचकः, न सादृश्यमात्रस्येति अत्र सूत्रे="अव्ययं विभक्ति०" ( पा० २।१।१६ ) इति सूत्रे सादृश्यरूपो धर्मः सामर्थ्यात् सदृशस्य धर्मिण उपलक्षणम्=लक्षणया बोधकम् ।

पूर्वैर्वृत्तिकारैर्हि सदृशः सख्या ससखि इतीदमुदाहरणमत्र सादृश्येऽव्ययीभावस्योक्तमिति तदाश्रयेण=पूर्ववृत्तिकारोक्तैतादृशोदाहरणाश्रयेण अलौकिकप्रक्रियावाक्ये सहशब्दोऽभिधायको वाचकः सदृशाख्यस्य धर्मिण उच्यते । एवञ्च यदव्ययं सदृशार्थस्याभिधायकं तस्य सादृश्यग्रहणेन ग्रहणे समासः कथ्यते । अस्य=ससखि इति समासस्य सत्त्वभूतार्थाभिधायित्वेऽपि अव्ययीभावश्चेत्यस्माद् वचनाद् अव्ययत्वम्, यथा स्वराद्यव्ययानाम् ।

यत्पुनरव्ययं चतुर्विधयथार्थाभिधायि समासभाक्त्वेन निर्दिष्टं प्रकृतसूत्रे तस्य वीक्षायां सादृश्ये च वृत्तिर्धर्ममात्रे, न धर्मिणि तदाश्रये । प्रत्ययर्थमिति वीप्सायाम्, अनुरूपमिति सादृश्ये समासः । 'यथाऽसादृश्ये' इति प्रतिषेधाद् यथाशब्दः सादृश्यवचनो न समस्यते । थालन्तप्रतिरूपको वा=तु यथाशब्दो वीप्सावचनो निपातः समस्यत एव । यथार्थो=यथापदार्थः वीप्सा च भेदः=विशेष एव ।

तथा हि प्रत्यर्थमित्यत्रार्थसामान्यस्य क्रियाया व्याप्यमानताविशेषः प्रतिना प्रकाश्यत इति साकल्येन पदार्थानां क्रियया समन्वयो वीप्सासामान्यस्य भेदको विशेषः प्रकारो भवति यथार्थः।

तदेवं यथार्थे सादृश्यमात्रेऽव्ययीभावः स्यादिति तद्वति सादृश्यग्रहणेन पुनर्विधीयत इत्ययं विशेषः पृथक् प्रणयनादेव धर्मधर्मिणोरत्राभिमतः ॥ ६२० ॥ ॥ ६२१ ॥

प्रकारान्तरमत्रैवाह—

**सादृश्यं योग्यता कैश्चिदनावभ्युपगम्यते ।**
**यत् तु मूर्तिगतं साम्यं तत् सहेनाभिधीयते ॥ ६२२ ॥**

अनावनुशब्दविषये या योग्यता तेनानुशब्देन द्योत्या, तदेव सादृश्यं यथार्थ इति समासस्तत्र। अनुरूपं सुरूपो वहतीति। रूपेण तुल्यो हारकटकादिना वेषोऽन्यो वा कश्चिच्छोभातिशयहेतुत्वात् तं सुरूपो धारयतीत्यर्थः।

इत्थञ्च कृत्वात्र गुणस्य रूपस्य सादृश्ये यथार्थेऽव्ययीभावः। योग्यतालक्षणो हि यथार्थः सादृश्यमात्रगुणविषयः।

---

तथाहि—प्रत्यर्थं शब्दाभिनिवेश इत्यत्र अर्थसामान्यस्य क्रियायाः=अर्थसामान्यकर्मिकाया अभिनिवेशक्रियाया व्याप्यमानता विशेषः प्रतिना प्रकाश्यत इति पदार्थानां साकल्येन क्रियया सह समन्वयो वीप्सा, सा च सामान्यस्य भेदको विशेषः प्रकारो भवति यथार्थः=यथापदार्थः। तदेवं यथार्थे सादृश्यमात्रेऽव्ययीभावः स्यात् इति तद्वति। सादृश्यग्रहणेन पुनर्विधीयते इत्ययं विशेषः सादृश्ये यथार्थे च धर्मधर्मिणोः पृथक् समासप्रणयनादेवात्राभिमत इति ॥ ६२० ॥ ६२१ ॥

अत्रैव=सादृश्ययथार्थयोरव्ययीभावविषय एव प्रकारान्तरमाह—सादृश्यं योग्यतेति।

अस्यार्थः—अनौ=द्योत्यतया अनुशब्दविषयेऽर्थे या अनुशब्देन द्योत्या योग्यता तदेव सादृश्यं यथार्थं इति समासस्तत्र। अनुरूपमिति। इति कैश्चिदभ्युपगम्यते, अत्र गुणस्य रूपस्य सादृश्ये यथार्थेऽव्ययीभावः।

यत्तु मूर्तिगतम्=वस्तुनिष्ठम्, अवयवसंनिवेशादिप्रयुक्तं साम्यम्=सादृश्यं द्रव्यनिष्ठं तत् सदृशार्थकेन सहशब्देन ससखि इत्यत्र अभिधीयत इति।

अयं भावः—अनौ=द्योत्यतयाऽनुशब्दविषयेऽर्थे या योग्यता, तेन=समासघटकेन अनुशब्देन द्योत्या, तदेव सादृश्यं यथार्थ इति समासस्तत्र। अनुरूपं सुरूपो वहति इति। रूपेण सौन्दर्येण तुल्यो हारकटकादिना कृतो वेषोऽन्यो वा कश्चिच्छोभातिशयहेतुत्वात्तं सुरूपो धारयति इत्यर्थः।

इत्थञ्च कृत्वाऽत्र गुणस्य रूपस्य सादृश्ये यथार्थेऽव्ययीभावः। योग्यता लक्षणो हि यथार्थः सादृश्यमात्रं गुणविषयः।

यत्तु मूर्तिगतं वस्तुनिष्ठमवयवसंनिवेशादिना सादृश्यं द्रव्यविषयम्, तत् ससखीत्यत्र सहशब्देनाख्यायते। तथाहि सादृश्यं सख्या ससखि, न तु सदृश इति।

एवं द्रव्यगतत्वेन भिन्नं सादृश्यं सूत्री सादृश्यशब्देनोपादीयते, यथाशब्देन तु योग्यताख्यं गुणगतत्वेनेति भिन्नंविषयतैव समासयोः।

यदा तु योग्यता वीप्सा सादृश्यं च यथार्थ इति भेदेन निर्देशादनुरूपं सुरूपो वहतीत्यत्र सादृश्यादन्यैव योग्यताशब्दार्थो यद्योग्यं रूपस्य शोभाकारित्वेन यदुचितं तदनुरूपमिति, तदा पूर्व एव धर्मधर्मिभेदः पृथगुपादाने हेतुर्वाच्यः॥ ६२२॥

सादृश्यमेव सर्वत्र प्रकार इति यदुक्तम्, तदव्यापकम्। तथा हीत्थंभावे कमण्डलुना च्छात्रमित्यत्र मनुष्यतासामान्यस्य छात्रादिर्विशेष इति भेदोऽत्र प्रकारो न सादृश्यम्, अपरस्य भेदवतोऽनपेक्षणादित्येतत् समर्थयितुमाह—

**इत्थंभावेऽपि सादृश्यं बुद्ध्यवस्थानिबन्धनम्।**
**ग्रहणे भेदमात्रास्य तत्रान्यैवाभिधीयते॥ ६२३॥**

---

यत्तु मूर्तिगतं वस्तुनिष्ठमवयवसंनिवेशादिप्रयुक्तं सादृश्यं द्रव्यविषयम्, तत् ससखि इत्यत्र सहपदेनाख्यायते। तथाहि—सादृश्यं सख्या ससखि, न तु सदृशः सख्या इति।

एवं द्रव्यगतत्वेन भिन्नं सादृश्यं प्रकृतसूत्रे सादृश्यशब्देनोपादीयते, अत्रैव सूत्रे, यथाशब्देन तु योग्यतारूपं तद्गुणगतत्वेनेति भिन्नविषयतैव सादृश्ये यथार्थे च जायमानयोः समासयोः।

यदा तु योग्यता, वीप्सा, सादृश्यञ्च यथार्थ इति योग्यतासादृश्ययोर्यथार्थपदव्याख्यानावसरे भाष्यादौ भेदेन निर्देशाद् अनुरूपं सुरूपो वहति इत्यत्र सादृश्यादन्यैव योग्यताऽनुशब्दार्थो रूपस्य यद् योग्यम्, शोभाकारित्वेन यदुचितं तदनुरूपमिति, तदा पूर्ववर्णित एव धर्मधर्मिभेदः सूत्रे सादृश्ययथार्थयोः पृथगुपादाने हेतुर्वाच्य इति॥ ६२२॥

'सादृश्यमेव सर्वत्र प्रकारः' इति यदुक्तम्, तदव्यापकम्=अव्याप्तिरूपलक्षणदोषग्रस्तम्। तथाहि—इत्थंभावे=कस्यचित् प्रकारस्य प्राप्तिरूपे तृतीयार्थे कमण्डलुना 'छात्रं पश्य' इत्यत्र मनुष्यत्वरूपस्य सामान्यस्य छात्रादिर्विशेष इति भेदः=विशेषः। अत्र प्रकारः, न सादृश्यम्, अपरस्य भेदवतः=विशेषवतः सादृश्यप्रतियोगिनोऽनपेक्षणाद् इत्येतत् समर्थयितुम्=इत्थंभावविषयेऽपि सादृश्यरूपं प्रकारम् इति समर्थयितुमआह—इत्थंभावेऽपि इति।

अस्यार्थः—इत्थंभावेऽपि बुद्ध्यवस्थानिबन्धनम्=एकस्यापि पूर्वापरबुद्ध्यवस्थाप्रयुक्तभेदप्रयुक्तम् सादृश्यमस्ति, यतोऽस्य सादृश्यस्य इत्थंभावविषयेऽपि ग्रहणे ज्ञाने भेदमात्रा=एकस्यापि बुद्ध्यवस्थाभेदप्रयुक्तो भेदरूपोंऽशः, अन्यैव अभिधीयते। ततश्च बाह्यार्थे सादृश्यस्य ज्ञानानुकार एव व्यवस्थापक इति स एव प्रकार इति तद्व्यवस्थाप्यं सादृश्यमपि प्रकार उपपद्यते इत्थंभावविषयेऽपि।

तथा चायमत्र निष्कर्षः—पूर्वं कमण्डलुना उपलक्षितश्छात्रो दृष्टः, इदानीमपि कमण्डलुनोपलक्षितश्छात्रो दृश्यते इति कमण्डलुरूपसाधारणधर्मरूपप्रकारप्रयुक्तमत्र सादृश्यमिति सर्वत्र सादृश्यमेव प्रकार इति।

अङ्गदी कुण्डलीत्यादिना पूर्वमीदृशो देवदत्त इति बुद्धिप्रकल्पितसारूप्योपादानादत्रापीत्थंभावे ग्रहणे प्रत्यये भेदमात्रा कथ्यते। बाह्यवस्तुन उपरागाद् भेदलेशो न तत्त्वतो भेदः। ततश्च ज्ञानानुकारो बहिरर्थस्य व्यवस्थापकत्वात् प्रकार इति सादृश्यमप्यत्र प्रकार उपपद्यते।

एवं पञ्चधा भुङ्क्ते, त्रेधाधीते इत्यादावपि "संख्याया विधार्थे धा" (पा० ५।३।४२) इति ग्रहणनिर्भासस्य बाह्यानुकारित्वेन सादृश्यं प्रकारार्थ उपपाद्यः। सङ्कल्पितभेदसदृशस्य क्रियाविशेषस्य हि निर्वर्तनमत्र॥ ६२३॥

तदेतदागमोपबृंहितं शोभत इत्यागमरुचिरुपासितवृद्धतामुपदर्शयन् सर्वत्र प्रकारार्थः सादृश्यमित्यत्र भाष्यकारमतं संवादकमाह—

**गौर्वाहीक इति द्वित्वे सादृश्यं प्रत्युदाहृतम्।**
**शुक्लादौ सति निष्पन्ने वाहीको न द्विरुच्यते॥ ६२४॥ इति।**

"प्रकारे गुणवचनस्य" (पा० ८।१।१२) इत्यत्र द्विर्वचनविधौ गुणवचनग्रहणस्य

---

अयं भावः—'अङ्गदी, कुण्डली' इत्यादिना पूर्वमीदृशो देवदत्त इति वाक्येन पूर्वंप्रकल्पित सारूप्योपादानात्=पूर्वं प्रकल्पितेन देवदत्तेन सह इदानींतनबुद्धिगोचरस्य देवदत्तस्य सादृश्य ग्रहणाद् अत्रापि='कमण्डलुना छात्रं पश्य' इत्यत्रापि इत्थंभावविषयके ग्रहणे प्रत्यये एकस्यापि भेदमात्रा=बुद्ध्यवस्थाभेदप्रयुक्तो भेदलेशः कथ्यते। एकस्यापि बाह्यवस्तुनो बुद्ध्यवस्थाभेदोपरागाद् भेदलेशो न तत्त्वतो भेदः। ततश्च बहिरर्थस्य पूर्वापरज्ञानानुकारो भेदसादृश्ययोर्व्यवस्थापकत्वात् प्रकार इति तद् व्यवस्थाप्यं सादृश्यमप्यत्र=इत्थंभावविषये प्रकार उपपद्यते।

एवम् 'पञ्चधा भुङ्क्ते, त्रेधाऽधीते' इत्यादावपि "संख्याया विधार्थे धा" इति प्रकारार्थे विहितस्य धाप्रत्ययस्य ग्रहणरूपस्य निर्भासस्य बाह्यार्थानुकारित्वेन सादृश्यं प्रकारार्थ उपपाद्यः। सङ्कल्पितभेदसदृशस्य=प्राक् संकल्पितभेदवत् क्रियाविशेषेण सदृशस्य भुज्यादिक्रियाविशेषस्य हि पञ्चधा त्रिधा निर्वर्तनमत्रेति क्रियाभेदात् सादृश्योपपत्तिरिति॥ ६२३॥

तदेतत्=सर्वत्र सादृश्यं प्रकारपदार्थ इत्येतद् आगमोपबृंहितम्=संप्रदायेन परिपोषितं शोभते इत्यागमरुचिः=संप्रदायप्रदर्शने रुचिमान् श्रीहरिः स्वस्य उपासितवृद्धतामुपदर्शयन् सर्वत्र सादृश्यं प्रकारार्थ इत्यत्र भाष्यकारमतं संवादकमाह—गौर्वाहीक इति द्वित्वे इति।

अस्यार्थः—"प्रकारे गुणवचनस्य" (पा० ८।१।१२) इति सूत्रे गुणवचनग्रहणाभावे 'गौर्वाहीकः' इत्यत्र गोशब्दस्य द्वित्वे आपाद्ये वाहीके गोसादृश्यं प्रत्युदाहृतम्=गोशब्दरूपस्य प्रत्युदाहरणस्य गोचरीकृतम्। 'प्रकारे गुणवचनस्य' इत्यत्र गुणवचनग्रहणाभावे 'गौर्वाहीकः' इत्यत्र गोशब्दस्यापि सादृश्यरूपप्रकारार्थकत्वाद् द्वित्वं स्यादिति तद्भाष्याशयः।

अयं भावः—'प्रकारे गुणवचनस्य' इत्यत्र पदद्वित्वविधायके सूत्रे गुणवचनग्रहणस्य प्रत्युदा-

प्रत्युदाहरणम्—'अग्निर्माणवकः, गौर्वाहीकः' इति भाष्येऽभिहितम्। यदि च प्रकारः सादृश्यम्, तत एतदुपपद्यते। गोसादृश्याद्धि वाहीको गौः। अग्निसादृश्याच्च माणवकोऽग्निः। न तु सामान्यस्य गोत्वस्याग्नित्वस्य चायं विशेषो भेदः। तदनेन द्विर्वचनविधेरन्यत्रापि प्रकारः सादृश्यमिति सूचितं भवति, द्विर्वचनाभावेऽपि तस्यैव प्रदर्शनात्।

ननु च गवादिशब्दो गुणनिमित्ताभेदाध्यवसायादेव वाहीकादौ प्रयुक्त इति कथं न गुणवचन इत्याशङ्क्याह—शुक्लादौ सति निष्पन्ने वाहीको न द्विरुच्यत इति।

परिसमाप्तरूपगुणवचने शुक्लादौ प्रसिद्धे सम्भवति वाहीके वाहीकाभिधायी गोशब्दो न द्विष्प्रयुज्यत इत्यर्थः। इतिर्ग्रन्थसमाप्तौ, शुक्लादिशब्दो हि गुणे तद्वति समारोपितगुणसम्बन्धे वर्तमानो गुणवचन एव। गोशब्दस्तु वाहीक एव तथा, न जातौ। अत एव गुणमुक्तवान् गुणवचन इत्यभिधीयते। गोशब्दस्तु वाहीके वर्तमानो न गुणमुक्तवान्, पूर्वं जातौ प्रवृत्तेः।

इत्थञ्च कृत्वा 'प्रकृत्यर्थविशेषणत्वात् सिद्धम्' इत्युक्तम्।

---

हरणम्—'अग्निर्माणवकः, गौर्वाहीकः' इति भाष्येऽभिहितम्। यदि च प्रकारः सादृश्यं न स्यात्, तदा नैतदुपपद्येत, तस्य तत्त्व एव हि तदुपपत्तिः। गोसादृश्याद्धि वाहीको गौरिति। अग्निसादृश्याच्च माणवकोऽग्निरिति। न तु सामान्यस्य गोत्वस्य अग्नित्वस्य चायम्=अग्निरूपो गोरूपश्च यथायथं विशेषो भेदः। तदनेन प्रत्युदाहरणदानेन द्विर्वचनविधेरन्यत्रापि प्रकारः सादृश्यमिति सूचितं भवति। अत्र प्रत्युदाहरणे द्विर्वचनाभावेऽपि तस्यैव=सादृश्यस्यैव प्रकारपदार्थत्वेन प्रदर्शनात्।

ननु च गवादिशब्दो जाड्यादिगुणनिमित्तकगवाद्यभेदाध्यारोपादेव वाहीकादौ प्रयुक्त इति कथं न गुणवचन इति सूत्रे गुणवचनग्रहणसत्त्वेऽपि कथं न तस्य द्वित्वम् इत्याशङ्क्याह—शुक्लादौ सति निष्पन्ने इति।

अस्यार्थः—निष्पन्ने=सिद्धार्थाभिधायिनि गुणवचने शुक्लादौ शब्दे संभवति सति गोसादृश्येन गवाभेदाध्यारोपात् स्वतोऽसिद्धजाड्यादिगुणाधायी वाहीकः=वाहीकार्थवाचको गोशब्दो न द्विरुच्यत इति।

अयं भावः—परिसमाप्तरूपगुणवचने=स्वस्मिन् परिसमाप्तस्वरूपस्य गुणस्य वाचके शुक्लादौ प्रसिद्धे गुणवचनशब्दे संभवति सति वाहीको वाहीकार्थाभिधायी गोशब्दो न द्विष्प्रयुज्यत इत्यर्थः। शुक्लादिशब्दो हि शुक्लादौ गुणे समारोपितगुणसंबन्धे तद्वति पटादौ च वर्तमानो गुणवचन एव। गोशब्दस्तु वाहीके प्रयुक्त एव तथा=जाड्यादिगुणवचनः, न तु गोत्वजातौ प्रयुक्तस्तथा। अत एव गुणमुक्तवान् गुणवचन इत्यभिधीयते सूत्रे। गोशब्दस्तु वाहीके वर्तमानो न जाड्यादिकं गुणमुक्तवान्, पूर्वं जातौ प्रवृत्तेः।

इत्थञ्च कृत्वा "प्रकृत्यर्थविशेषणत्वात् सिद्धम्" इत्युक्तम्।

अस्यार्थः—गुणवचनत्वस्य प्रकृतिविशेषणत्वेन गुणस्याभेदेन प्रकृत्यर्थविशेषणत्वाद् 'गौर्वाहीकः' इत्यत्र गोशब्दस्याद्विर्वचनं सिद्धमिति।

द्विर्वचनकारणत्वात् प्रकृतिर्द्विवचनस्यात्र स्थानी कथ्यते। तदर्थो गुणवचनस्येत्यनेन विशेष्यते, न तु प्रकारार्थः।

तथा चाह—'प्रकारे सर्वेषां गुणवचनत्वात् सर्वप्रसङ्गः' इति। द्रव्यवाचिनामपि गवादीनां वाहीकादौ गुणनिमित्तसादृश्यवशेन प्रवृत्तेः प्रकारे गुणवचनत्वस्येवेति किं विशेषणेन व्यावर्त्येत।

तस्माद् गुणवचनग्रहणसामर्थ्याद् गुणवचनो यः शब्दो निर्ज्ञातस्तस्य प्रकारे सादृश्ये द्योत्ये द्विर्वचनमिति नास्त्यतिप्रसङ्ग इति गुणोपसर्जनद्रव्यवाचिनः शुक्लादेरेव द्विर्वचनं गुणमात्रवाचिनश्चेति 'शुक्लशुक्लः पटः, शुक्लशुक्लं रूपम्, पटुपटुः' इतीष्टं सिद्धम्।

तदेवं संसर्गावस्थः पदार्थो वाक्यार्थादपोद्धृत्य पदविभागपूर्वकं समीक्षित इति परिसमाप्तोऽर्थद्वारकः पदविचार इति शुभम्॥ ६२४॥

इति भूतिराजतनयहेलाराजकृते प्रकीर्णक-
प्रकाशे वृत्तिसमुद्देशश्चतुर्दशः॥
समाप्तं चेदं पदकाण्डम्।

---

द्विर्वचनकर्मत्वेन द्विर्वचनकारणत्वात् प्रकृतिर्द्विर्वचनस्यात्रस्थानी कथ्यते। तदर्थः=प्रकृत्यर्थः गुणवचनस्येत्यनेन प्रकृतिं द्वारीकृत्य विशेष्यते, न तु प्रकारार्थो गुणवचनस्य विशेषणम्। प्रकारे हि= सादृश्ये हि सर्वं एव शब्दो गुणवचनः।

तथा चाह भाष्यकारः—"प्रकारे सर्वेषां गुणवचनत्वात् सर्वप्रसङ्गः" इति। सर्वप्रसङ्ग इत्यस्य सर्वस्य शब्दस्य द्विर्वचनप्रसङ्ग इत्यर्थः। द्रव्यवाचिनामपि गवादीनां वाहीकादौ गुणनिमित्तकसादृश्यवशेन प्रवृत्तेः प्रकारे=सादृश्ये गुणवचनत्वमस्त्येवेति किं प्रकारे गुणवचनस्येति विशेषणेन व्यावर्त्येत।

तस्माद् गुणवचनग्रहणसामर्थ्याद् गुणप्रवृत्तिनिमित्तकत्वेन गुणवचनो यः शब्दो निर्ज्ञातस्तस्य द्विर्वचनं प्रकारे सादृश्ये द्योत्ये इति 'गौर्वाहीकः' इत्यादौ नास्त्यतिप्रसङ्गो द्विर्वचनस्येति गुणोपसर्जनद्रव्यवाचिनो गुणमात्रवाचिनश्च शुक्लादिशब्दस्येव द्विर्वचनमिति 'शुक्लशुक्लः पटः, शुक्लशुक्लं रूपम्, पटुपटुः' इतीष्टं सिद्धम्। अस्यां कारिकायाम् इतिशब्दो ग्रन्थसमाप्तौ।

तदेवं वाक्यार्थघटकः संसर्गावस्थः पदार्थो वाक्यार्थादपोद्धृत्य पदविभागपूर्वकं समीक्षित इति परिसमाप्तोऽर्थद्वारकः पदविचार इति शुभम्॥ ६२४॥

मुक्तापीड इति प्रसिद्धिमगमत् कश्मीरदेशे नृपः
श्रीमान् ख्यातयशा बभूव नृपतेस्तस्य प्रभावानुगः।
मन्त्री लक्षण इत्युदारचरितस्तस्यान्ववाये भवो
हेलाराज इमं प्रकाशमकरोच्छ्रीभूतिराजात्मजः ॥ १ ॥

तमोध्वंसः सूर्यादिभिरिह कृतो यद्यपि भुवि
प्रदीपः साफल्यं क्वचिदपि तथाप्यत्र विषये।
प्रयात्येव प्रायो जगति खलु भावाः कृतधियां
न शक्या निह्नोतुं स्फुरदभिनवस्फाररुचिराः ॥ २ ॥

निराकाङ्क्षेण वपुषा गता विश्वजनीनताम्।
तृतीया वागवस्थेयं प्रतिष्ठामुपयात्वितः ॥ ३ ॥

त्रैलोक्यगामिनी येन त्रिकाण्डी त्रिपदीकृता।
तस्मै समस्तविद्याश्रीकान्ताय हरये नमः ॥ ४ ॥

सूक्तिश्रियः स्फुटा एता जयन्ति जगतां गुरोः।
हरेर्भाष्याब्धिपीयूषच्छटाच्छुरितविग्रहाः ॥ ५ ॥

समाप्तोऽयं प्रकीर्णकप्रकाशः।

## शुभं भूयात्

---

ध्यायं ध्यायं मातृपादाब्जयुग्मं स्मारं स्मारं तत्क्रियाश्चाप्युदाराः ।
पातं पातं भर्तृवाक्यप्रपाते तीर्णं दैवादद्य क्षीर्णं मनो मे ॥ १ ॥

इन्दुवह्निगगनाक्षिवत्सरे वैक्रमे धवलपक्षगे विधौ ।
चैत्रमासि शिवयोः प्रसादतः पूर्तिमापदियमक्षियुक्तिथौ ॥ २ ॥

वाराणस्यां समारब्धा व्यश्नुवाना दिशो दश ।
वर्षैः षोडशभिः पूर्णा तस्यामेवेयमञ्जसा ॥ ३ ॥

पदे पदे मे स्खलितं जरसा विप्लुतस्य यत् ।
तरसा तत्समाधातुं सज्जीभवत सज्जनाः ॥ ४ ॥

काश्याः प्राग्दिशि भूमिदेवकुलजैः छातेति संज्ञामितः,
ग्रामश्चैत्यसरः सरित्सुरगृहैर्ग्रामाग्रणीर्गोपुरैः ।
भास्वद्भारतवर्षशीर्षबलियामूर्धानमुन्नामयन् ,
गङ्गामानसजाजलैरुभयतः संपूतसस्यस्थलः ॥ ५ ॥

तस्मिन् कुञ्जमणिर्द्विजः समभवद् विद्वद्वराग्रेसरः ,
येनावर्धितपःश्रुतादिविदितं पाराशराणां कुलम् ।
तस्मिन् चित्रधरो धिया श्रुतिधरो विद्याधरो विद्यया ,
जातो योऽजनभक्तिसंभृतमनाः संमानितो भूतले ॥ ६ ॥

रामटहलपदवित्तो विदुषां पदवीममुञ्चत्कः ।
तत्तोकपदमुपेतः साकेतेशोऽपि तोषितो येन ॥ ७ ॥

तत्सूनुभावमेतः काशीनाथो यथार्थनामासौ ।
यद्यशसा धवलयता वर्णानामेकता विहिता ॥ ८ ॥

हरिनाथस्तत्तनयो विद्यागुणगौरवेण विख्यातः ।
ज्यायानस्मि कनीयान् वयसा विद्यातपोभ्याञ्च ॥ ९ ॥

यदलम्भि किमपि पुण्यं दुस्तरसुनिबन्धवर्धिमग्नानाम् ।
श्रीमर्तृहरिगवीनामतिजरतीनां समुद्धरणात् ॥ १० ॥

तदहं महेशपत्नीपादद्वन्द्वे समर्पयन् कुतुकात् ।
याचे मेऽयं प्रबन्धः प्रसरतु यावत् स्थितो भानुः ॥ ११ ॥

सुभद्रां मातरञ्चैव स्मरामि मनसा मुहुः ।
यस्याः कृपोपदेशाभ्यामहमेतां गतिं गतः ॥ १२ ॥

काशीनाथं च पितरं स्मरामि मनसा मुहुः ।
वरदानेन यस्याहमेतां गतिमुपागतः ॥ १३ ॥

पत्नीद्वयं स्मराम्यद्य बच्चीकेसरिकाभिधम् ।
ययोः शुश्रूषयाऽद्यहमेतां गतिमुपागतः ॥ १४ ॥

रमानाथं भवनाथं सोमनाथं तृतीयकम् ।
मुक्तिनाथं नरेन्द्रादिनाथञ्चैव तु पञ्चमम् ॥ १५ ॥

अविमुक्तादिनाथञ्च षट् सुतान् प्राप्य शोभनान् ।
मातृपादप्रसादेन मोदमानोऽस्मि सांप्रतम् ॥ १६ ॥

एतद् याचे परामम्बां संततिस्तवसंश्रवात् ।
संततेरनुवित्तिर्मे भूयाद् यावद् स्थिरा धरा ॥ १७ ॥

विद्यावंशो जनेर्वंश उभयञ्चैधतामिदम् ।
देवद्विजगुरुप्राज्ञकृपापाङ्गावलोकनात् ॥ १८ ॥

इति श्रीब्रह्मीभूतकाशीनाथतनयसौभद्रेयरघुनाथशर्मकृतौ प्रकीर्णतत्प्रकाशव्याख्याम्बाकर्त्र्यां वृत्तिसमुद्देशश्चतुर्दशः ।

समाप्तञ्चेदं पदकाण्डम् ।

॥ शुभं भवतु ॥

समाप्तोऽयं ग्रन्थः

# अकारादिश्लोकानुक्रमणिका

## प्रकाशसहितवाक्यपदीयवृत्तिसमुद्देशे

# उद्धरणश्लोकानुक्रमणिका





## वाक्यपदीयवृत्तिसमुद्देशे

# स्मृतवाक्यानुक्रमणिका

